प्रतिपद्यंते, भेदाश्च पर्याया एवेति, अथवा नामस्थापनाद्रव्याणि भावमङ्गलस्यैवाङ्गानि, तत्परिणामकारणत्वात्, तथा च मङ्गलाद्यभिधानं सिद्धार्थाभिधानं चोपश्रुत्य अर्हत्प्रतिमास्थापनां च दृष्ट्वा भूतयतिभावं भव्ययतिशरीरं चोपलभ्य प्रायः सम्यग्दर्शनादिभावमङ्गलपरिणामो जायते, इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः—तत्र नोआगमतोऽर्हन्नमस्कारादि भावमङ्गलमुक्तं, अथवा नोआगमतो भावमङ्गलं नन्दी, तत्र नन्दनं नन्दी, नन्दन्त्यनयेति वा भव्यप्राणिन इति नन्दी, असावपि च मङ्गलवन्नामादिचतुर्भेदभिन्ना अवगन्तव्येति, तत्र नामस्थापने पूर्ववत्, द्रव्यनन्दी द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तो, नोआगमतस्तु ज्ञशरीरभव्यशरीरोभयव्यतिरिक्ता च द्रव्यनन्दी द्वादशप्रकारस्तूर्यसंघातः 'भंभा मुकुंद मद्दल कडंब झल्लरि हुडुक्क कंसाला । काहलि तलिमा वंसो, संखो पणवो य बारसमो ॥ १ ॥' तथा भावनन्द्यपि द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता †उपयुक्तः, नोआगमतः पञ्चप्रकारं ज्ञानं, तच्चेदम्—

आभिणिबोहियनाणं सुयनाणं चेव ओहिनाणं च । तह मणपज्जवनाणं केवलनाणं च पंचमयं ॥ १ ॥

१ जानीते २ निक्षेपचतुष्कस्य भिन्नभिन्नाधिकरणतामाश्रित्याह ३ अथवा ४ भावमङ्गलनिदानत्वात् ५ आदिना ज्ञाननिर्जरादिग्रह ६ विशेषनाम्ना कारणतायै, आदिना जिनेन्द्रादि ७ सम्यग्दर्शनादे प्रबलकारणत्वात्, शय्यम्भवादिवत् ८ 'इमेण सरीरसमुस्सएण जिणदिट्ठेण भावेण आवस्सएत्ति पय सेभकाले सिक्खिस्सइ न ताव सिक्खति' इति अनुयोगद्वारवचनात् ९ ज्ञात्वा दृष्ट्वा वा १० क्लिष्टस्याभावात् ११ ज्ञानचारित्रोपयोगग्रह १२ 'कयपचनमुक्कारस्स विन्ति सामाइयाइय विहिणा' इतिवचनात्सूत्रापेक्ष, १३ अनुयोगापेक्षं, नन्द्यनुयोगस्यैकदेशत्वाद् १४ कर्तृतामापन्ना १५ 'दव्वे तूरसमुदओ' इति वचनात्, क्रियाविशिष्ट इत्यध्याहार्यमन्यथा नामनन्दीत्वापत्ते *तिलिमा १–४ †तदुपयुक्त १–३–४

व्याख्या—अर्थाभिमुखो नियतो बोधः अभिनिबोधः, अभिनिबोध एव आभिनिबोधिकं, विनयादिपाठात् अभिनिबोधशब्दस्य "विनयादिभ्यष्ठग्" (पा० ५.४-३४) इत्यनेन स्वार्थ एव ठक्प्रत्ययो, यथा विनय एव वैनयिकमिति अभिनिबोधे वा भवं तेन वा निर्वृत्तं तन्मयं तत्प्रयोजनं वाअथवा*ऽभिनिबुध्यते तद् इत्याभिनिबोधिकं, अवग्रहादिरूपं मतिज्ञानमेव, तस्य स्वसंविदितरूपत्वात्, भेदोपचारादित्यर्थः, अभिनिबुध्यते वाऽनेनेत्याभिनिबोधिकं, तदावरणकर्मक्षयोपशम इति भावार्थः, अभिनिबुध्यते अस्मादिति वाऽऽभिनिबोधिकं, तदावरणकर्मक्षयोपशम एव, अभिनिबुध्यतेऽस्मिन्निति वा क्षयोपशम इत्याभिनिबोधिकं, आत्मैव वाऽभिनिबोधोपयोगपरिणामानन्यत्वाद् अभिनिबुध्यत इत्याभिनिबोधिकं, आभिनिबोधिकं च तज्ज्ञानं चेति समासः । तथा श्रूयत इति श्रुतं शब्द एव, भावश्रुतकारणत्वादिति भावार्थः, अथवा श्रूयतेऽनेनेति श्रुतं, तदावरणक्षयोपशम इत्यर्थः, श्रूयतेऽस्मादिति वा श्रुतं, तदावरणक्षयोपशम एव, श्रूयतेऽस्मिन्निति वा क्षयोपशम इति श्रुतं, शृणोतीति वाऽऽत्मैव तदुपयोगानन्यत्वात्, श्रुतं च तज्ज्ञानं चेति समासः,चशब्दस्त्वनयोरेवं तुल्यकक्षतोद्भावनार्थः, स्वाम्यादिसाम्यात्, कथम् ?, य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्य "जत्थ मइनाणं तत्थ सुयणाण"

१ पदार्थनान्तरीयक २ नियतविषय, ननु द्विचन्द्रादिवत् ३ प्रकाश्यप्रकाशकोभयरूपत्वादित्यर्थ, प्राक् प्रकाशकम् ४ एकत्वात् कर्तृकर्मैक्यात् ५ 'भावाकर्त्रो' इत्यभिनिबोधशब्दनिष्पत्तौ प्राग्वदाभिनिबोधिकशब्दनिष्पत्तिः, कर्तरि तु लिहादित्वादच्, ६ बहुलवचनात् कर्मादिष्वपि क्तो नपुंसके, प्राभृतञ्चो द्रव्यमिति भव्यमाहेतिवचनाच्छ्राभृताद्वा निष्पत्तिरेवमन्यत्राप्यूह्यम् ७ ज्ञानद्वयानन्तर चस्य पाठात् ८ तुल्यपक्षतोद्बोधनाय * कृदन्तव्युत्पत्तये, उपसर्गोऽत्र विशेषकौ धातो † प्रकाशकमतौ + भिन्नत्वाशङ्कापनोदाय ‡ ०कर्म० १–४

मिति वचनात्, तथा यावान्मतिज्ञानस्य स्थितिकालस्तावानेवेतरस्य, प्रवाहापेक्षया अतीतानागतवर्त्तमानः सर्व एव, अप्रतिपतितैकजीवापेक्षया च षट्षष्टिसागरोपमाण्यधिकानीति, उक्तं च भाष्यकारेण "दोवारे विजयाइसु गयस्स तिण्णच्चुए अहव ताइं । अइरेगं नरभविअं णाणाजीवाण सव्वद्धं ॥ १ ॥" यथा च मतिज्ञानं क्षयोपशमहेतुकं, तथा श्रुतज्ञानमपि, यथा च मतिज्ञानमादेशतः सर्वद्रव्यादिविषयम्, एवं श्रुतज्ञानमपि, यथा च मतिज्ञानं परोक्षम्, एवं श्रुतज्ञानमपि इति, एवकारस्त्ववधारणार्थः, परोक्षत्वमनयोरेवावधारयति, आभिनिबोधिकश्रुतज्ञाने एव परोक्षे इति भावार्थः । तथा अवधीयतेऽनेन इत्यवधिः, अवधीयते इति अधोऽधो विस्तृतं परिच्छिद्यते, मर्यादया वेति, अवधिज्ञानावरणक्षयोपशम एव, तदुपयोगहेतुत्वादित्यर्थः, अवधीयतेऽस्मादिति वेति अवधिः, तदावरणीयक्षयोपशम एव, अवधीयतेऽस्मिन्निति वेत्यवधिः, भावार्थः पूर्ववदेव, अवधानं वाऽवधिः, विषयपरिच्छेदनमित्यर्थः, अवधिश्चासौ ज्ञानं च अवधिज्ञानं, चशब्दः खल्वनन्तरोक्तज्ञानद्वयसाधर्म्यप्रदर्शनार्थः, स्थित्यादिसाधर्म्यात्, कथम् ?, यावान्मतिश्रुतस्थितिकालः प्रवाहापेक्षया अप्रतिपतितैकसत्त्वाधारापेक्षया च, तावानेवावधेरपि, अतः स्थितिसाधर्म्यात्,

१ एकेन्द्रियादिषु क्षयोपशमसद्भावाद्वयो सज्ञासद्भावाच्च श्रुतसत्ता (वि० १०२ प्रभृतिके), सम्यग्ज्ञानापेक्षया २ श्रीमता जिनभद्रगणिक्षमाश्रमणेन ३ द्वौ वारौ विजयादिषु गतस्य त्रीन् वारान् अच्युतेऽथवा तानि (षट्षष्टिसागरोपमाणि) अतिरिक्त नरभविक (अप्रतिपतितैकजीवापेक्षया) नानाजीवानां सर्वाद्ध (वि० ४३६) ४ ओघादेशात्सूत्रादेशाद्वा ५ आदिना क्षेत्रकालभावग्रह ६ द्रव्येन्द्रियमनोनिष्पाद्यत्वात् ७ दर्शनरूपबोध[illegible]च्छेदाय ८ रूपिद्रव्यात्मिकया ९ क्षयोपशमस्याभावरूपत्वेनेदम् आत्मस्वरूप ज्ञानमित्युक्तमिदम् * तदावरण० १–४

यथा मतिश्रुते विपर्ययज्ञाने भवतः, एवमिदमपि मिथ्यादृष्टेर्विभङ्गज्ञानं भवतीति विपर्ययसाधर्म्यात्, य एव च मतिश्रुतयोः स्वामी स एव चावधेरपि भवतीति स्वामिसाधर्म्यात्, विभङ्गज्ञानिनः त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपज्ज्ञानत्रयं संभवतीति लाभसाधर्म्याच्च । तथा मनःपर्यवज्ञानं, अयं भावार्थः—†परिः सर्वतो भावे, अवनं अवः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः पर्यवनं वा पर्यव इति, मनसि मनसो वा पर्यवो मनःपर्यवः, सर्वतस्तत्परिच्छेद इत्यर्थः, स एव ज्ञानं मनःपर्यवज्ञानं, अथवा मनसः पर्याया मनःपर्यायाः, पर्याया भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यनर्थान्तरं, तेषु ज्ञानं मनःपर्यायज्ञानं, तेषां वा सम्बन्धि ज्ञानं मनःपर्यायज्ञानं, इदं चार्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिसंज्ञिमनोगतद्रव्यालम्बनमेवेति, तथाशब्दोऽवधिज्ञानसारूप्यप्रदर्शनार्थः, कथम्?, छद्मस्थस्वामिसाधर्म्यात्, तथा पुद्गलमात्रालम्बनत्वसाम्यात्, तथा क्षायोपशमिकभावसाम्यात्, तथा प्रत्यक्षत्वसाम्याच्चेति । केवलमसहायं मत्यादिज्ञाननिरपेक्षं, शुद्धं वा केवलं, तदावरणकर्ममलकलङ्काङ्करहितं, सकलं वा केवलं, तत्प्रथमतयैव अशेषतदावरणाभावतः संपूर्णोत्पत्तेः, असाधारणं वा केवलं, अनन्यसदृशमितिहृदयं, ज्ञेयानन्तत्वाद् अनन्तं वा केवलं, यथावस्थिताशेषभूतभवद्भाविभावस्वभावावभासीति भावना, केवलं च तज्ज्ञानं चेति समासः, चशब्दस्तूक्तसमुच्चयार्थः, केवलज्ञानं च पञ्चमकमिति, अथवाऽनन्त-

१ विषयसप्तमी २ सम्बन्धे षष्ठी ३ विना दर्शनं ज्ञानेनानेन विशेषोपयोग इति, विशुद्धतराणि वा मनोद्रव्याणि जानात्यनेनेति ज्ञापनाय वा ४ अल्पपि द्रव्यालम्बनव्यवच्छेदाय मात्रेति ५ "जीवो अक्खो अत्थव्वावणभोयणगुणण्णिओ जेण । त पइ वट्टइ नाणं, ज पच्चक्खं तय तिविहं" (वि० ८९) इति ६ अपेक्षाऽत्र सहावस्थानरूपा ७ मत्यादीना स्वावरणोपेतत्वात्, अङ्को लक्ष्म. ८ उत्पत्तिसमय एव ९ न तारतम्यवत् न्यूनं वा कदापि. १० अन्यस्य कस्यापि रूप्यरूपिसूक्ष्मदूरेतरादिपदार्थाग्राहकत्वात् ११ आधारापेक्षयाऽसंख्येयत्वेऽपि * ०यसभवतो † परि

रानिहितज्ञानसारूप्यप्रदर्शक एव, अप्रमत्तभावयतिस्वामिसाधर्म्यात् विपर्ययाभावयुक्तत्वाच्चेति गाथासमासार्थः ॥

आह—मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति, † उच्यते, उत्पन्नाविनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानं, श्रुतज्ञानं तु त्रिकालविषयं उत्पन्नविनष्टानुत्पन्नार्थग्राहकमिति, भेदकृतो वा विशेषः, यस्मादवग्रहाद्यष्टाविंशतिभेदभिन्नं मतिज्ञानं, तथाऽङ्गानङ्गादिभेदभिन्नं च श्रुतमिति, अथवाऽऽत्मप्रकाशकं मतिज्ञानं, स्वपरप्रकाशकं च श्रुतमित्यलं प्रसङ्गेन, गमनिकामात्रमेवैतदिति । अत्राह—एषां ज्ञानानामित्थं क्रमोपन्यासे किं प्रयोजनं इति, उच्यते, परोक्षत्वादिसाधर्म्यान्मतिश्रुतसद्भावे च शेषज्ञानसंभवात् आदावेव मतिश्रुतोपन्यासः, मतिज्ञानस्य पूर्वं किमिति चेत्, उच्यते, मतिपूर्वकत्वात् श्रुतस्येति, मतिपूर्वकत्वं चास्य "श्रुतं मतिपूर्वम्" (०द्व्यनेकद्वादशभेदम् श्रीतत्त्वार्थे अ० १ सू० २०) इति वचनात्, तत्र प्रायो मतिश्रुतपूर्वकत्वात्प्रत्यक्षत्वसाधर्म्याच्च ज्ञानत्रयोपन्यास इति, तत्रापि कालविपर्ययादिसाम्यान्मतिश्रुतोपन्यासानन्तरमेवावधेरुपन्यास इति, तदनन्तरं च छाद्मस्थिकादिसाधर्म्यान्मनःपर्यायज्ञानस्य, तदनन्तरं भावमुनिस्वाम्यादिसाधर्म्यात्सर्वोत्तमत्वाच्च केवलस्येति गाथार्थः ॥ १ ॥

साम्प्रतं 'यथोद्देशं निर्देशः' इति न्यायाद् ज्ञानपञ्चकादावुद्दिष्टस्य आभिनिबोधिकज्ञानस्य स्वरूपमभिधीयते—तच्चाभि-

१-न शेषज्ञानानामित्यर्थ २ मत्यादीनामपि तेन स्वरूपनिरूपणात् ३ सक्षेपविवरणरूपत्वात् ४ भावश्रुतस्य ५ मिथ्यादृष्टेरवधिज्ञानावाप्तौ न प्राङ् मतिश्रुते स्त इति प्राय इति । ६ ज्ञानत्रयोपन्यासे ७ लाभाविग्रह ८ पुद्गलावलम्बनत्वादिः ९ विपर्ययाभावत्वादि † अत्रोच्यते ।

निबोधिकज्ञानं द्विधा, श्रुतनिश्रितमश्रुतनिश्रितं च, यत्पूर्वमेव +कृतश्रुतोपकारं इदानीं पुनस्तदनपेक्षमेवानुप्रवर्त्तते तद् अवग्रहादिलक्षणं श्रुतनिश्रितमिति । यत्पुनः पूर्वं तदपरिकर्मितमतेः क्षयोपशमपटीयस्त्वात् औत्पत्तिक्यादिलक्षणं उपजायते तदश्रुतनिश्रितमिति । आह—"तिवग्गसुत्तत्थगहियपेयाला' इति वचनात् तत्रापि किञ्चित् श्रुतोपकारादेव जायते, तत्कथमश्रुतनिश्रितमिति, उच्यते, अवग्रहादीनां श्रुतनिश्रिताभिधानाद् औत्पत्तिक्यादिचतुष्टयेऽपि च अवग्रहादिसद्भावात् यथायोगमश्रुतनिश्रितत्वमवसेयं, न तु सर्वमेवेति, अयमत्र भावार्थः—श्रुतकृतोपकारनिरपेक्षं यदौत्पत्तिक्यादि तदश्रुतनिश्रितं, प्रातिभमितिहृदयं, वैनयिकीं विहायेत्यर्थः, बुद्धिसाम्याच्च तस्या अपि निर्युक्तौ उपन्यासोऽविरुद्ध इत्यलं प्रसङ्गेन । तत्र श्रुतनिश्रितमतिज्ञानस्वरूपप्रदर्शनायाह—

**उग्गह ईहाऽवाओ य धारणा एव हुंति चत्तारि । आभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥ २ ॥**

व्याख्या—तत्र सामान्यार्थस्याशेषविशेषनिरपेक्षानिर्देश्यस्य रूपादेरवग्रहणं अवग्रहः, तदर्थविशेषालोचनं ईहा, तथा प्रक्रान्तार्थविशेषनिश्चयोऽवायः, चशब्दः पृथक् पृथक् अवग्रहादिस्वरूपस्वातन्त्र्यप्रदर्शनार्थः, अवग्रहादीनां ईहादयः

१ औत्पत्तिक्यादिविषयकवस्तुसम्बन्धिपरिकर्म न श्रुतकृतमिति । २ परिकर्म विना ३ "प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता" सैव प्रातिभ, न त्वत्र श्रुतकेवलातिरिक्त सामर्थ्ययोगजन्य प्रातिभम् ४ सकृच्छ्रुतनिश्रितत्वात् त्याग, बाहुल्यापेक्षया तदननुसरण त्वश्रुतनिश्रितत्व, यद्वा पूर्वमशिक्षितशास्त्रार्थस्याश्रुतनिश्रितत्व वैनयिकी त्वन्यथेति हान, विमर्शप्राधान्याच्च बुद्धिचतुष्टयान्तर्भाव. + श्रुतकृतो०

पर्याया न भवन्तीत्युक्तं भवति, अवगतार्थविशेषधरणं धारणा, एवकारः *क्रमप्रदर्शनार्थः, 'एवं' अनेनैव क्रमेण भवन्ति, चत्वारि, आभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदा विकल्पा अंशा इत्यनर्थान्तरं, त एव वस्तूनि भेदवस्तूनि, कथम् ?, यतो नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यत इति । अथवा काक्वा नीयते—एवं भवन्ति चत्वार्याभिनिबोधिकज्ञानस्य भेदवस्तूनि ?, 'समासेन' संक्षेपेण अविशिष्टावग्रहादिभावस्वरूपापेक्षया, न तु विस्तरत इति, विस्तरतोऽष्टाविंशतिभेदभिन्नत्वात्तस्येति गाथार्थः ॥२॥ इदानीमनन्तरोपन्यस्तानामवग्रहादीनां स्वरूपप्रतिपिपादयिषयेदमाह—

**अत्थाणं ओगहणंमि उग्गहो तह वियारणे ईहा । ववसायंमि अवाओ धरणंमि †य धारणं बिंति ॥ ३ ॥**

व्याख्या—तत्र अर्यन्ते इत्यर्थाः, अर्यन्ते गम्यन्ते परिच्छिद्यन्त इतियावत्, ते च रूपादयः, तेषां अर्थाना, प्रथमं दर्शनानन्तरं ग्रहणं अवग्रहणं ‡ अवग्रहं ब्रुवत इतियोगः । आह—वस्तुनः सामान्यविशेषात्मकतयाऽविशिष्टत्वात् किमिति प्रथमं दर्शनं न ज्ञानमिति, उच्यते, तस्य प्रबलावरणत्वात्, दर्शनस्य चाल्पावरणत्वादिति । स च द्विधा—व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यञ्जनावग्रहपूर्वकत्वादर्थावग्रहस्य प्रथमं व्यञ्जनावग्रहः प्रतिपाद्यत इति । तत्र व्यञ्जनावग्रह इति कः शब्दार्थः ?, उच्यते, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्च उपकरणेन्द्रियं शब्दादिपरिणतद्रव्यसंघातो वा, ततश्च व्यञ्जनेन उपकरणेन्द्रियेण शब्दादिपरिणतद्रव्याणां च व्यञ्जनानां अवग्रहो

1 ( अत्थाण ओगहण, उग्गह तह वियालण ईह । ववसाय च अवाय, धरण पुण धारण बिंति ॥ ३ ॥ ) * क्रमप्रदर्शनार्थः † धरणं पुण ‡ ग्रहण अवग्रह

व्यञ्जनावग्रह इति । अयं च नयनमनोवर्जेन्द्रियाणामवसेय इति, न तु नयनमनसोः, अप्राप्तकारित्वात्, अप्राप्तकारित्वं चानयोः "पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु" इत्यत्र वक्ष्यामः । तथा च व्यञ्जनावग्रहचरमसमयोपात्तशब्दाद्यर्थावग्रहणलक्षणोऽर्थावग्रहः, सामान्यमात्रानिर्देश्यग्रहणमेकसामयिकमिति भावार्थः । 'तथा' इत्यानन्तर्ये 'विचारणं' पर्यालोचनं अर्थानामित्यनुवर्त्तते, ईहनमीहा तां, ब्रुवत इति संबन्धः । एतदुक्तं भवति— अवग्रहादुत्तीर्णः अवायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागाभिमुखश्च प्रायो मधुरत्वादयः शङ्खशब्दधर्मा अत्र घटन्ते न खरकर्कशनिष्ठुरतादयः शार्ङ्गशब्दधर्मा इति मतिविशेष ईहेति । विशिष्टोऽवसायो व्यवसायः, निर्णयो निश्चयोऽवगम इत्यनर्थान्तरं, तं व्यवसायं च, अर्थानामिति वर्त्तते, अवायं ब्रुवत इति संसर्गः, एतदुक्तं भवति—शाङ्ख एवायं शार्ङ्ग एव वा इत्यवधारणात्मकः प्रत्ययोऽवाय इति, चशब्द एवकारार्थः, स चावधारणे, व्यवसायमेवावायं ब्रुवत इति भावार्थः । धृतिर्धरणं, अर्थानामिति वर्त्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिस्मृतिवासनारूपं तद्धरणं पुनर्धारणां ब्रुवते, पुनःशब्दोऽप्येवकारार्थः, स चावधारणे, धरणमेव धारणां ब्रुवत इति, अनेन शास्त्रपारतन्त्र्यमाह, इत्थं तीर्थकरगणधरा ब्रुवत इति । एवं शब्दमधिकृत्य श्रोत्रेन्द्रियनिबन्धना † अवग्रहादयः प्रतिपादिताः, शेषेन्द्रियनिबन्धना अपि रूपादिगोचराः स्थाणुपुरुष–कुष्ठोत्पल–संभृतकरिल्लमांस–सर्पोत्पलनालादौ इत्थमेव द्रष्टव्याः, एवं मनसोऽपि स्वप्ने शब्दादिविषया अवग्रहादयोऽवसेया इति, अन्यत्र चेन्द्रियव्यापाराभावेऽभिमन्यमानस्येति । ततश्च व्यञ्जनावग्रहश्चतुर्विधः,

1 गाथा० ५ 2 चक्षुरादीनां क्रमशो दृष्टान्तदर्शनात् कोष्टपुटाख्यो गन्धद्रव्यविशेषः 3 स्वप्नात् * ग्प्राप्यकारित्वात् ५ ६ † ०ञ्जनावग्र०

तस्य नयनमनोवर्जेन्द्रियसंभवात्, अर्थावग्रहस्तु षोढा, तस्य सर्वेन्द्रियसंभवात् । एवमीहादयोऽपि प्रत्येकं षड्प्रकारा एवेति* । एवं संकलिताः सर्व एव अष्टाविंशतिर्मतिभेदा अवगन्तव्या इति । अन्ये त्वेवं पठन्ति—'अत्थाणं उग्गहणंमि †उग्गहो' तत्र अर्थानामवग्रहणे सति अवग्रहो नाम मतिभेद इत्येवं ब्रुवते, एवं ईहादिष्वपि योज्यं, भावार्थस्तु पूर्ववदिति । अथवा प्राकृतशैल्या 'अर्थवशाद्विभक्तिपरिणाम' इति यथाऽऽचाराङ्गे—"अगणिं च खलु पुट्ठा एगे संघायमावज्जंति" इत्यत्र अग्निना च स्पृष्टाः, अथवा स्पृष्टशब्दः पतितवाची, ततश्चायमर्थः—अग्नौ च पतिता 'एके' शलभादयः 'संघातमापद्यन्ते' अन्योऽन्यगात्रसंकोचमासादयन्तीत्यर्थः, तस्मात् अग्निसमारम्भोऽनेकसत्त्वव्यापत्तिहेतुः इत्यतो न कार्य. इत्यादिविचारे द्वितीया तृतीयार्थे सप्तम्यर्थे च व्याख्यातेति । एवमत्रापि सप्तमी प्रथमार्थे द्रष्टव्येति गाथार्थः ॥ ३ ॥ इदानीमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

**†उग्गह इक्कं समयं ईहावाया ‡ मुहुत्तमद्धं तु । कालमसंखं संखं च धारणा होइ णायव्वा ॥ ४ ॥**

व्याख्या—तत्र अभिहितलक्षणोऽर्थावग्रहो जघन्यो नैश्चयिकः, स खलु एकं समयं भवतीति संबन्धः, तत्र कालः

1 नोइन्द्रियस्यापि ग्रहणमुपलक्षणात्, अन्यथा न स्युर्भेदा षट्, इन्द्रियत्व चाभिप्रेतमत्र तस्याभ्यन्तरनिर्वृत्यन्वितत्वात् 2 ज्ञायतेऽनेन आचाराङ्गव्याख्या श्रीमतां कालात्याक्तनीति 3 अर्थावग्रहो द्विधा जघन्य उत्कृष्टश्च, आद्यो नैश्चयिक एवेतर साव्यवहारिक इति जघन्यो नैश्चयिक इति प्रोचु, व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति न्यायात् *एवेत्यर्थ, सक० † उवग्गहो *उग्गहु ( नि० ३ ) ‡ मुहुत्तमन्त तु ( वृ० )

परमनिकृष्टः समयोऽभिधीयते, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणाद् जरत्पट्टशाटिकापाटनदृष्टान्ताच्च अवसेयः, तथा सांव्यवहारिकार्थावग्रहव्यञ्जनावग्रहौ तु पृथक् पृथग् अन्तर्मुहूर्त्तमात्रं कालं भवत इति [1] विज्ञातव्यौ । ईहा चावायश्च ईहावायौ, प्राकृतशैल्या बहुवचनं, उक्तं च—"दुवयणे बहुवयणं छट्ठीविहत्तीएँ [‡]भण्णइ चउत्थी । जह हत्था तह पाया, णमोऽत्थु देवाहिदेवाणं [2] ॥१॥" तावीहावायौ मुहूर्तार्धं ज्ञातव्यौ भवत*, तत्र मुहूर्त्तशब्देन घटिकाद्वयपरिमाणः कालोऽभिधीयते, तस्यार्धं तु मुहूर्त्तार्धं, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?—व्यवहारापेक्षया एतद् मुहूर्त्तार्धमुक्तं, तत्त्वतस्तु अन्तर्मुहूर्त्तमवसेयमिति । अन्ये त्वेवं पठन्ति 'मुहुत्तमन्तं तु' मुहूर्त्तान्तस्तु द्वे पदे, अयमर्थः—अन्तर्मध्यकरणे, तुशब्द एवकारार्थः, स चावधारणे, एतदुक्तं भवति—ईहावायौ मुहूर्त्तान्तः, भिन्नं मुहूर्त्तं ज्ञानव्यौ भवतः, अन्तर्मुहूर्त्तमेवेत्यर्थः । कलनं कालः तं कालं, न विद्यते संख्या इयन्तः पक्षमासर्त्वयनसंवत्सरादय इत्येवंभूता यस्यासावसंख्यः, पल्योपमादिलक्षण इत्यर्थः, तं कालमसंख्यं, तथा संख्यायत इति संख्यः, इयन्तः पक्षमासर्त्वयनादय इत्येवं संख्याप्रमित इत्यर्थः, तं संख्यं च, चशब्दात् अन्तर्मुहूर्त्तं च, धारणा अभिहितलक्षणा भवति ज्ञातव्या, अयमत्र भावार्थः—अवायोत्तरकालं अविच्युतिरूपा—अन्तर्मुहूर्त्तं भवति, एवं स्मृतिरूपाऽपि, वासनारूपा तु तदावरणक्षयोपशमाख्या स्मृतिधारणाया बीजभूता संख्येयवर्षायुषा सत्त्वानां संख्येयं कालं असंख्येयवर्षायुषा पल्योपमादि[3]जीविनां चासंख्येयमिति गाथार्थः ॥ ४ ॥

१ भाष्यकारादिव्याख्यानात् २ बहुवचन द्विवचने षष्ठीविभक्तौ भण्यते चतुर्थी । यथा हस्तौ तथा पादौ नमोऽस्तु देवाधिदेवेभ्य । ३ "अद्धाजोगुक्कोसे" इत्यादिवचनादपवर्त्तनासंभवात्तदहितानामसंख्येयायुषामितिदर्शनाय पल्योपमेत्यादि *जीर्वत्० ५–६ † ज्ञातव्यौ १–२–३–४ ५ बहुवयणेण दुवयण १–२–३–४ ‡ भण्णए ५–६

इत्थमवग्रहादीनां स्वरूपमभिधाय इदानीं श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतां प्रतिपिपादयिषुराह—

पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ ५ ॥

व्याख्या—आह—ननु व्यञ्जनावग्रहनिरूपणाद्वारेण श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयता प्रतिपादितैव, किमर्थं पुनरयं प्रयास इति, उच्यते, तत्र प्रक्रान्तगाथा व्याख्यानद्वारेण प्रतिपादिता, साम्प्रतं तु सूत्रतः प्रतिपाद्यत इत्यदोषः । तत्र 'स्पृष्टं' इत्यालिङ्गितं, तनौ रेणुवत्, शृणोति गृह्णाति उपलभत इति पर्यायाः, कम् ?—शब्द्यतेऽनेनेति शब्दः तं शब्दप्रायोग्यं द्रव्यसंघातं, इदमत्र हृदयम्—तस्य सूक्ष्मत्वात् भावुकत्वात् प्रचुरद्रव्यरूपत्वात् श्रोत्रेन्द्रियस्य चान्येन्द्रियगणात्प्रायः [1] पटुतरत्वात् स्पृष्टमात्रमेव शब्दद्रव्यनिवहं गृह्णाति । रूप्यत इति रूपं तद्रूपं पुनः, पश्यति गृह्णाति उपलभत इत्येकोऽर्थः, अस्पृष्टमनालिङ्गितं गन्धादिवन्न संबद्धमित्यर्थः, तुशब्दस्त्वेवकारार्थः, स चावधारणे, रूपं पुनः पश्यति अस्पृष्टमेव, चक्षुषः अप्राप्तकारित्वादिति भावार्थः, पुनःशब्दो विशेषणार्थः, किं विशिनष्टि ?—अस्पृष्टमपि योग्यदेशावस्थितं, न पुनरयोग्यदेशावस्थितं अमरलोकादि । गन्ध्यते घ्रायत इति गन्धस्तं, रस्यत इति रसस्तं च, स्पृश्यत इति स्पर्शस्तं च, चशब्दौ पूरणार्थौ, 'बद्धस्पृष्टं' इति बद्धमाश्लिष्टं [*]नवशरावे तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः, स्पृष्टं पूर्ववत्, प्राकृतशैल्या चेत्थमुपन्यासो 'बद्धपुट्ठं' ति, अर्थतस्तु स्पृष्टं च बद्धं च स्पृष्टबद्धं । आह—यद्बद्धं गन्धादि तत् स्पृष्टं भवत्येव, अस्पृष्टस्य

१ चक्षुर्मनसोरसत्यपि व्यञ्जनावग्रहेऽर्थावग्रहसद्भावादस्त्येव पटुतरतेति प्राय इति २ स्पर्शाभावे बन्धाभावसत्त्वेऽपि स्पष्टत्वार्थमेतत्, घ्राणादीन्द्रियेभ्यो निपुणताख्यानाय वा * नासीदम् १–२–३–४

बन्धायोगात्, ततश्च स्पृष्टशब्दोच्चारणं गतार्थत्वादनर्थकमिति, उच्यते, सर्वश्रोतृसाधारणत्वाच्छास्त्रारम्भस्यायमदोष इति । त्रिप्रकाराश्च श्रोतारो भवन्ति—केचिद् उद्घाटितज्ञाः, केचित् मध्यमबुद्धयः, तथाऽन्ये प्रपञ्चितज्ञा इति, तत्र प्रपञ्चितज्ञानां अनुग्रहाय गम्यमानस्याप्यभिधानमदोषायैव, अथवा विशेषणसमासाङ्गीकरणाददोषः, स्पृष्टं च तद्बद्धं च स्पृष्टबद्धं, तत्र स्पृष्टं गन्धादि विशेष्यं, बद्धमिति च विशेषणं । आह—एवमपि स्पृष्टग्रहणमतिरिच्यते, यस्माद्यद्बद्धं न तत्स्पृष्टत्वव्यभिचारि, उभयपदव्यभिचारे च विशेषणविशेष्यभावो दृष्टो यथा नीलोत्पलमिति, न चेह उभयपदव्यभिचार*, अत्रोच्यते, नैष दोषः, यस्मादेकपदव्यभिचारेऽपि विशेषणविशेष्यभावो दृष्टो, यथा अब्द्रव्यं पृथिवी द्रव्यमिति, भावना—अब् द्रव्यमेव, न द्रव्यत्वं व्यभिचरति, द्रव्यं पुनरब् [1]चानब् [†]चेति व्यभिचारि, अथ च विशेषणविशेष्यभाव इति । प्रकृतभावार्थस्त्वयम्—आलिङ्गितानन्तरमात्मप्रदेशै[2]रागृहीतं गन्धादि बादरत्वाद् अभावुकत्वात् अल्पद्रव्यरूपत्वात् घ्राणादीनां चापटुत्वात् गृह्णाति निश्चिनोति घ्राणेन्द्रियादिगण इत्येवं व्यागृणीयात् प्रतिपादयेदितियावत् ।

आह—भवतोक्त योग्यदेशावस्थितमेव रूपं पश्यति, न पुनरयोग्यदेशावस्थितमिति, तत्र कियान् पुनश्चक्षुषो योग्यविषयः ?, कियतो वा देशादागतं श्रोत्रादि शब्दादि गृह्णातीति, उच्यते, श्रोत्रं तावच्छब्दं जघन्यतः खल्वङ्गुलासंख्येयमात्राद्देशात्, उत्कृष्टतस्तु द्वादशभ्यो योजनेभ्य इति, चक्षुरिन्द्रियमपि रूपं जघन्येनाङ्गुलसंख्येयभागमात्रावस्थितं पश्यति, उत्कृष्टतस्तु योजनशतसहस्राभ्यधिकव्यवस्थितं इति, घ्राणरसनस्पर्शनानि तु जघन्येनाङ्गुलासंख्येयभागमात्रा-

१ श्रोत्रापेक्षयाऽपि २ पुन शब्देन विशेषितेऽस्पृष्टत्वे या भणितिस्तदपेक्षया प्राक् प्रश्न., समग्रगाथापेक्षया विषयक्षेत्रपरिमाणज्ञानार्थश्च द्वितीय इति
* वा † चेति

देशादागतं गन्धादिकं गृह्णन्ति, उत्कृष्टतस्तु नवभ्यो योजनेभ्य इति। आत्माङ्गुलनिष्पन्नं चेह योजनं ग्राह्यमिति। आह—उक्तप्रमाणं विषयमुल्लङ्घ्य कस्माच्चक्षुरादीनि रूपादिकमर्थं न गृह्णन्तीति, उच्यते, सामर्थ्याभावात्, द्वादशभ्यो नवभ्यश्च योजनेभ्यः परतः समागतानां शब्दादिद्रव्याणां तथाविधपरिणामाभावाच्च, मनसस्तु न क्षेत्रतो विषयपरिमाणमस्ति, पुद्गलमात्रनिबन्धनाभावात्, इह यत् पुद्गलमात्रनिबन्धनियतं न भवति, न तस्य विषयपरिमाणमस्ति, यथा केवलज्ञानस्य, यस्य च विषयपरिमाणमस्ति, तत्पुद्गलमात्रनिबन्धनियतं दृष्टं, यथाऽवधिज्ञानं मनःपर्यायज्ञानं वेति गाथासमासार्थः ॥

साम्प्रतं यदुक्तमासीत् यथा "नयनमनसोरप्राप्तकारित्वं 'पुट्ठं सुणेइ सद्दं' इत्यत्र वक्ष्यामः, तदुच्यते, नयनं योग्यदेशावस्थिताप्राप्तविषयपरिच्छेदकं, प्राप्तिनिबन्धनतत्कृतानुग्रहोपघातशून्यत्वात्, मनोवत्, स्पर्शनेन्द्रियं विपक्ष इति। आह—जलघृतवनस्पत्यालोकनेष्वनुग्रहसद्भावात् सूर्याद्यालोकनेषु चोपघातसद्भावात् असिद्धो हेतुः, मनसोऽपि प्राप्तविषयपरिच्छेदकत्वात्साध्यविकलो दृष्टान्तः, तथा च लोके वक्तारो भवन्ति—"अमुत्र मे गतं मनः" इति, अत्रोच्यते, प्राप्तिनिबन्धनाख्यहेतुविशेषणार्थनिराकृतत्वाद् अस्याक्षेपस्येत्यदोषः। किं च—यदि हि प्राप्तिनिबन्धनौ विषयकृतावनुग्रहोपघातौ स्यातां, एवं तर्हि अग्निशूल†जलाद्यालोकनेषु दाहभे‡दक्लेदादयः स्युरिति। किं च—प्राप्तविषयपरिच्छेदकत्वे सति अक्षिअञ्जनमलशलाकादिकमपि गृह्णीयात्। आह—नायना मरीचयो निर्गत्य तमर्थं गृह्णन्ति, ततश्च तेषां तैजसत्वात्

१ सर्वेन्द्रियापेक्षया. २ प्राप्यकारीन्द्रियचतुष्कापेक्षया ३ क्षेत्रेति ४ विषयेति ५ विप्रकृष्टे कस्मिंश्चिन्निर्दिश्यमाने स्थले इति. ६ नयनमरीचीनामेव निर्गमात् चक्षुषश्चानिर्गमात् * निबन्धन १-२-३-४ + निबन्धन १-२-३-४ † जलशूला. ‡ क्लेदभेदा.

सूक्ष्मत्वाज्ज्वानलादिसंपर्के सत्यपि दाहाद्यभाव इति, अत्रोच्यते, प्राक् प्रतिज्ञातयोरनुग्रहोपघातयोरप्यभावप्रसङ्गाद् अयुक्तमेतत्, तदस्तित्वस्य उपपत्त्या ग्रहीतुमशक्यत्वाच्च। व्यवहितार्थानुपलब्ध्या तदस्तित्वावसाय इति चेत्, न, तत्रापि तदुपलब्धौ क्षयोपशमाभावात् व्यवहितार्थानुपलब्धिसिद्धेः, आगममात्रमेवैतत् इति चेत्, न, युक्तिरप्यस्ति, आवरणाभावेऽपि परमाण्वादौ दर्शनाभावः, स च तद्विधक्षयोपशमकृतः, यच्चोक्तं—'साध्यविकलो दृष्टान्त' इति, तदप्ययुक्तं, ज्ञेयमनसोः संपर्काभावात्, अन्यथा हि सलिलकर्पूरादिचिन्तनादनुगृह्येत, वह्निशस्त्रादिचिन्तनाच्चोपहन्येत, न चानुगृह्यते उपहन्यते +वेति। आह—मनसोऽनिष्टविषयचिन्तनातिशोकात् दौर्बल्यं आर्त्तध्या†नादुरोऽभिघातश्च उपलभ्यते, तथेष्टविषयचिन्तनात्प्रमोदः, तस्मात्प्राप्तकारिता तस्येति, एतदप्ययुक्तं, द्रव्यमनसा अनिष्टेष्टपुद्गलोपचयलक्षणेन सकर्मकस्य जन्तोरनिष्टेष्टाहारेणेवोपघातानुग्रहकरणात्कथं प्रा‡प्तविषयतेति। किं च—द्रव्यमनो वा बहिः निःसरेत्, मनःपरिणामपरिणतं जीवाख्यं भावमनो वा ?, न तावद्भावमनः, तस्य शरीरमात्रत्वात्, सर्वगतत्वे च नित्यत्वात् वन्धमोक्षाद्यभावप्रसङ्गः। अथ द्रव्यमनः, तदप्ययुक्तं, यस्मान्निर्गतमपि सत् अकिञ्चित्करं तत्, अज्ञत्वात्, उपलवत्। आह—करणत्वाद्द्रव्यमनसस्तेन प्रदीपेनेव प्रकाशितमर्थमात्मा गृह्णातीत्युच्यते, न, यस्मात् शरीरस्थेनैवानेन जानीते, न वहिर्गतेन, अन्तःकरणत्वात्, ¶इह यदात्म-

१ सुवर्णादीना भेदादिभावात् तैजसत्वेऽपि आह—सूक्ष्मत्वाच्चेति २ शूलजलादि ३ प्राप्तिनिबन्धनेत्यादिहेतोरसिद्धतोद्भावने ४ नायनमरीचीना ५ अयुक्तमेतदिति सटङ्क ६ शरीरप्रमाणत्वात् विहाय तत्र तदवस्थानमित्यर्थ ७ आकाशादिवत् ८ यमनियनोच्छेदप्रसङ्ग ९ द्रव्यमनसा * त्रमेतत् ४ + वेति † अति० १-२-३ अर्त्ति० ४ ‡ प्रासि० ५-८ § श्ररेत् ५-६ ¶ नास्तीदम् ५-९

नोऽन्तःकरणं स तेन शरीरस्थेनैव उपलभते, यथा स्पर्शनेन, प्रदीपस्तु नान्तःकरणमात्मनः, तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यलं विस्तरेण, प्रकृतं प्रस्तुम इति गाथार्थः ॥ ५ ॥

किं च प्रकृतं ?, स्पृष्टं श्रृणोति शब्दमित्यादि, अत्र किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि गृह्णाति ? उत अन्यान्येव तद्भावितानि ? आहोस्विन्मिश्राणि इति चोदकाभिप्रायमाशङ्क्य, न तावत्केवलानि, तेषां वासकत्वात्, तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किन्तु मिश्राणि तद्वासितानि वा गृह्णाति इत्यमुमर्थमभिधित्सुराह—

**भासासमसेढीओ, सद्दं जं सुणइ मीसयं सुणई। वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥ ६ ॥**

व्याख्या—भाष्यत इति भाषा, वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्युदासार्थं, इह श्रेणयः क्षेत्रप्रदेशपङ्क्तयोऽभिधीयन्ते, ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते, यासूत्सृष्टा सती भाषाऽऽद्यसमय एव लोकान्तमनुधावतीति, ता इतो भाषासमश्रेणीतः, इतो गतः प्राप्तः स्थित इत्यनर्थान्तरम्, एतदुक्तं भवति—भाषासमश्रेणिव्यवस्थित इति। शब्द्यतेऽनेनेति शब्दः—भाषात्वेन परिणतः पुद्गलराशिस्तं शब्दं 'यं' पुरुषाश्वादिसंबन्धिनं श्रृणोति गृह्णात्युपलभत इति पर्यायाः, यत्तदोर्नित्यसंबन्धात्तं मिश्रं श्रृणोति, एतदुक्तं भवति—व्युत्सृष्टद्रव्यभावितापान्तरालस्थशब्दद्रव्यमिश्रमिति। विश्रेणिं पुनः इत इति वर्त्तते, ततश्चायमर्थो भवति—विश्रेणिव्यवस्थितः पुनः श्रोता 'शब्दं' इति, पुनः शब्दग्रहणं पराघातवासितद्रव्याणामपि तथाविधशब्दपरिणाम-

१ भाषावर्गणाद्रव्येति

ख्यापनार्थं, शृणोति 'नियमात्' नियमेन पराघाते सति यानि शब्दद्रव्याणि तत्पराघातवासितानि तान्येव, न पुनरुत्सृष्टानीति भावार्थः । कुतः ?—तेषामनुश्रेणिगमनात् प्रतिघाताभावाच्च, अथवा विश्रेणिस्थित एव विश्रेणिनिसृष्टानि, पदेऽपि पदावयवप्रयोगदर्शनात् 'भीमसेनः सेनः सत्यभामा भामा' इतिगाथार्थः ॥ ६ ॥ केन पुनर्योगेन एषां शब्दद्रव्याणां ग्रहणमुत्सर्गो वा कथं चेत्येतदाशङ्क्य गुरुराह—

गिण्हइ य काइएणं, निस्सरइ तह वाइएण जोएणं । एगन्तरं च गिण्हइ, णिसिरइ एगंतरं चेव ॥ ७ ॥

व्याख्या—तत्र कायेन निर्वृत्तः कायिकः तेन कायिकेन योगेन, योगो व्यापारः कर्म क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याणि गृह्णाति, चशब्दस्त्वेवकारार्थः, स चावधारणे, तस्य च व्यवहितः संबन्धः, गृह्णाति कायिकेनैव, निसृजत्युत्सृजति मुञ्चतीति पर्यायाः, तथेत्यानन्तर्यार्थः, उक्तिर्वाक् तया निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन । कथं गृह्णाति निसृजतीति वा ? किमनुसमयं उत अन्यथेत्याशङ्कासंभवे सति शिष्यानुग्रहार्थमाह—एकान्तरमेव गृह्णाति, निसृजति एकान्तरं चैव, अयमत्र भावार्थः—प्रतिसमयं गृह्णाति मुञ्चति चेति, कथम् ?, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं, पुरुषाद्वा पुरुषोऽनन्तरोऽपि सन्निति, एवमेकैकस्मात्समयाद् एकैक एव एकान्तरोऽनन्तरसमय एवेत्यर्थः । अयं गाथासमुदायार्थः । अत्र कश्चिदाह—ननु कायिकेनैव गृह्णातीत्येतद् युक्तं, तस्यात्मव्यापाररूपत्वात्, निसृजति तु कथं वाचिकेन ?, को

१ 'से लुग्वा' इति सूत्रेण पूर्वलोपस्य वा लोपात् पदावयवप्रयोगेण सम्पूर्णपदोपस्थिता मधुरबोध, एव च समस्तस्य [illegible]

वाऽयं वाग्योग इति । किं वागेव व्यापारापन्ना आहोस्वित् तद्विसर्गहेतुः कायसंरम्भ इति ?, यदि पूर्वो विकल्पः, स खल्वयुक्तः, तस्या योगत्वानुपपत्तेः, तथा च न वाक्केवला जीवव्यापारः, तस्याः पुद्गलमात्रपरिणामरूपत्वात्, रसादिवत्, योगश्चात्मनः शरीरवतो व्यापार इति, न च तया भाषया निसृज्यते, किन्तु सैव निसृज्यत इत्युक्तं, अथ द्वितीयः पक्षः, ततः स कायव्यापार एवेतिकृत्वा कायिकेनैव निसृजतीत्यापन्नं, अनिष्टं चैतत् इति, अत्रोच्यते, न, अभिप्रायापरिज्ञानात् । इह तनुयोगविशेष एव वाग्योगो मनोयोगश्चेति, कायव्यापारशून्यस्य सिद्धवत् तदभावप्रसङ्गात्, ततश्चात्मनः शरीरव्यापारे सति येन शब्दद्रव्योपादानं करोति स कायिकः, येन तु कायसंरम्भेण तान्येव मुञ्चति स वाचिक इति, तथा येन मनोद्रव्याणि मन्यते स मानस इति, कायव्यापार एवायं व्यवहारार्थं त्रिधा विभक्त इत्यतोऽदोषः । तथा 'एकान्तरं च गृह्णाति, निसृजत्येकान्तरं चैव' इत्यत्र केचिदेकैकव्यवहितं एकान्तरमिति मन्यन्ते, तेषां च विच्छिन्नरत्नावलीकल्पो ध्वनिरापद्यते, सूत्रविरोधश्च, यत उक्तं—"अणुसमयमविरहियं निरन्तरं गिण्हइ" त्ति । आह—यत्पुनरिदमुक्तं "संतरं निसरति, नो निरंतरं, एगेणं समएणं गिण्हति, एगेणं णिसरती"त्यादि, तत्कथं नीयते ?, उच्यते, इह ग्रहणापेक्षया निसर्गः सान्तरोऽभिहित, एतदुक्तं भवति—यथा आदिसमयादारभ्य प्रतिसमयं ग्रहणं, नैवं निसर्ग इति, यस्मादाद्यसमये नास्तीति, ग्रहणमपि निसर्गापेक्षया सान्तरमापद्यत इति चेत्, न, तस्य स्वतन्त्रत्वात्, निसर्गस्य च ग्रहणपरतन्त्रत्वात्, यतो नागृहीतं निसृ-

१ शब्दद्रव्यसंहतिरूपा भाषा २ इतिहेतो ३ व्यापारविशेषेण ४ समयस्य सूक्ष्मतमत्वेन आह—सूत्रेत्यादि ५ व्याख्यायमानं इत्यर्थं, अवग्रहणात्र विरुद्धसमयत्वात् ६ पूर्वमगृहीतत्वात् गृहीतानां च द्वितीयसमये निसर्गात् ७ गृहीतानां विना निसर्गं ग्रहणाभावात् सान्तरता यथा तथा निसर्गे च ग्रहणाद्ग्रहणस्यापि सान्तरतेत्यर्थे ८ ग्रहणस्य—पूर्वसमयेऽनिसर्गेऽपि ग्रहणादित्यर्थे, निसर्जनं तु गृहीतानामेवेति मन्य पारतन्त्र्य

ज्यत इति, अतः पूर्वपूर्वग्रहणसमयापेक्षया सान्तरव्यपदेश इति । तथा एकेन समयेन गृह्णाति एकेन निसृजति, किमुक्तं भवति ?—ग्रहणसमयानन्तरेण सर्वाण्येव तत्समयगृहीतानि निसृजतीति । अथवा एकसमयेन गृह्णात्येव, आद्येन, न निसृजति, तथा एकेन निसृजत्येव, चरमेण, न गृह्णाति, अपान्तरालसमयेषु तु ग्रहणनिसर्गावधर्मौ इत्यतोऽविरोध इति । आह—ग्रहणनिसर्गप्रयत्नौ आत्मनः परस्परविरोधिनौ एकस्मिन्समये कथं स्यातामिति, अत्रोच्यते, नायं दोषः, एकसमये कर्मादाननिसर्गक्रियावत् तथोत्पादव्ययक्रियावत् तथाऽङ्गुल्याकाशदेशसंयोगविभागक्रियावच्च क्रियाद्वयस्वभावोपपत्तेरिति गाथार्थः ॥ ७ ॥

यदुक्तं—'गृह्णाति कायिकेन' इत्यादि, तत्र कायिको योगः पञ्चप्रकारः, औदारिकवैक्रियाहारकतैजसकार्मणभेदभिन्नत्वात्तस्य, ततश्च किं पञ्चप्रकारेणापि कायिकेन गृह्णाति आहोस्विदन्यथा इत्याशङ्कासंभवे सति तदपनोदायेदमाह—

तिविहंमि सरीरंमि, जीवपएसा हवन्ति जीवस्स । जेहि उ गिण्हइ गहणं, तो भासइ भासओ भासं ॥ ८ ॥

व्याख्या—'त्रिविधे' त्रिप्रकारे, शीर्यत इति शरीरं तस्मिन्, औदारिकादीनामन्यतम इत्यर्थः, जीवतीति जीवः तस्य प्रदेशाः जीवप्रदेशाः, भवन्ति, एतावत्युच्यमाने 'भिक्षोः पात्रं' इत्यादौ षष्ठ्या भेदेऽपि दर्शनात् मा भूद् भिन्नप्रदेशत-

१ निसर्गात् २ समयेन ३ प्रागिति ४ अर्थापत्तितो ज्ञेयौ, अन्यथाऽऽद्यान्त्यसमयग्रहणनिसर्गावधारणानुपपत्तेः ५ मनोवाक्काययोगानामात्मव्यापाररूपत्वात्, आत्मनश्चैकत्वात्, एकसमये परस्परविरुद्धक्रियाकरणानुपपत्तिरित्यर्थः । ६ यावदन्तिमं गुणस्थानं तावदेव बन्धः कर्मणो, तद्विपाकवेदतश्च निसर्गः तेषामनुसमयं, आगमोपपन्ने च तस्मिन्नविरोधो यथा तथाऽत्रापीत्यर्थे, * प्रदर्शनात्

याऽप्रदेशात्मसंप्रत्यय इत्यत आह—जीवस्य आत्मभूता भवन्ति, ततश्चानेन निष्प्रदेशजीववादिनिराकरणमाह, सति निष्प्रदेशत्वे करचरणोरुग्रीवाद्यवयवसंसर्गाभावः, तदेकत्वापत्तेः, कथम्?—करादिसंयुक्तजीवप्रदेशस्य उत्तमाङ्गादिसंबद्धात्मप्रदेशेभ्यो भेदाभेदविकल्पानुपपत्तेरिति । यैः किं करोतीत्याह—'यैस्तु गृह्णाति' तुशब्दो विशेषणार्थः, किं विशिनष्टि?—न सर्वदैव गृह्णाति, किन्तु तत्परिणामे सति, किं?—गृह्यत इति ग्रहणं, ग्रहणमिति "कृत्यल्युटो बहुलं" (पा०३-३-११३) इतिवचनात्कर्मकारकं, शब्दद्रव्यनिवहमित्यर्थः, 'ततो' गृहीत्वा 'भाषते' वक्ति, भाषत इति भाषकः क्रियाऽऽविष्ट इत्यर्थः, अनेन निष्क्रियात्मवादव्यवच्छेदमाह, सति तस्मिन्निष्क्रियत्वात् अप्रच्युतानुत्पन्नस्थिरैकरूपत्वाद्भाषणाभावप्रसङ्गः, काम्?—भाष्यत इति भाषा तां भाषां। आह—'ततो भाषते भाषक' इत्यनेनैव गतार्थत्वाद्भाषाग्रहणमतिरिच्यते इति, न, अभिप्रायापरिज्ञानात्, इह भाष्यमाणैव भाषोच्यते, न पूर्वं नापि पश्चाद्, इत्यस्यार्थस्य ख्यापनाय भाषाग्रहणमदुष्टमेवेति गाथार्थः ॥८॥

यदुक्तं—'त्रिविधे शरीरे' इत्यादि, तत्र न ज्ञायते कतमत् त्रैविध्यमिति, अतस्तदभिधातुकाम आह—

**ओरालियवेउव्विय आहारो गिण्हई मुयइ भासं । सच्चं मोसं सच्चामोसं च असच्चमोसं च ॥ ९ ॥**

---

१ अभेदषष्ठ्या तत्रस्था प्रदेशा जीवाभिन्ना, एतदेव च जीवस्येत्युच्चारणे फल, अन्यथा 'जीवप्रदेशा' इत्यनेन तत्रद्वार्थावगमात् २ नैयायिकवैशेषिकादय, तन्मते हि नित्य निरवयवमेव, सावयवत्वे हि कार्यत्वापत्त्या अनित्यत्वापत्ति, घटादीनामिव । ३ करचरणादयो हि सावयवा इत्युभयसमत, आत्मा च ते प्रत्यवयवमेव सयुज्यते, सयोगश्च स्यात्तदा यदि स्यादात्मा सावयव, प्रतिप्रदेश च सयोगवान्, ततो निष्प्रदेशे करचरणाद्यवयवसयोगो न स्यादात्मन, ससर्गे हि निष्प्रदेशस्यात्मन करादिभि, करादीनामपि निष्प्रदेशैकात्मन प्रत्यवयवेन ससर्गात्स्वरूपापत्त्या निष्प्रदेशत्वेनैकत्वापत्ति ४ भेदे सावयवत्वात्प्रतिज्ञातहानि, अभेदे भिन्नावयवसयोगानुपपत्तेस्तदेकतरेण सात्मकता न सर्वैरित्यनिष्टे ५ जीवप्रदेशे ६ भाषणपरिणामे ७ निष्क्रिय आत्मनि

व्याख्या—तत्र औदारिकवानौदारिकः, इहौदारिकशब्देनाभेदोपचाराद् मतुब्लोपाद्वा औदारिकशरीरिणो ग्रहणमिति, एवं वैक्रियवान्वैक्रियः, आहारकवानाहारक इति । असौ औदारिकादिः, 'गृह्णाति' आदत्ते 'मुञ्चति' निसृजति च, भाष्यत इति भाषा तां भाषां, शब्दप्रायोग्यतया तद्भावपरिणतद्रव्यसंहतिमित्यर्थः। किंविशिष्टामित्याह—सतां हिता सत्या, सन्तो मुनयस्तदुपकारिणी सत्येति, अथवा सन्तो मूलोत्तरगुणास्तदनुपघातिनी सत्या, अथवा सन्तः पदार्था जीवादयः तद्धिता तत्प्रत्यायनफला जनपदसत्यादिभेदा सत्येति, तां सत्यां, सत्याया विपरीतरूपा क्रोधाश्रितादिभेदा मृषेति तां, तथा तदुभयस्वभावा वस्त्वेकदेशप्रत्यायनफला उत्पन्नमिश्रादिभेदा सत्यामृषेति तां, तथा तिसृष्वप्यनधिकृता शब्दमात्रस्वभावाऽऽमन्त्रण्यादिभेदा असत्यामृषेति तां च, चशब्दः समुच्चयार्थः, आसां च स्वरूपमुदाहरणयुक्तानां सूत्रादवसेयमिति गाथार्थः ॥९॥

आह—'औदारिकादिः गृह्णाति मुञ्चति च भाषां' इत्युक्तं, सा हि मुक्ता उत्कृष्टतः कियत्क्षेत्रं व्याप्नोतीति, उच्यते,

---

१ प्रज्ञापनाया, यतस्तत्र भाषालक्षण पदमेकादशं "जणवय १ सम्मय २ ठवणा ३ नामे ४ रूवे ५ पडुच्च ६ सच्चे य । ववहार ७ भाव ८ जोगे ९ दसमे ओवम्मसच्चे १० य ॥ १ ॥ कोहे १ माणे २ माया ३ लोभे ४ पेज्जे ५ तहेव दोसे ६ य । हासे ७ भए ८ य खाइय ९ उवघाइयणिस्सिया १० दस ॥ २ ॥ आमंतणी १ आणवणी २ जायणी ३ तह पुच्छणी ४ य पण्णवणी ५ । पच्चक्खाणी ६ भासा, भासा इच्छाणुलोमा ७ य ॥ ३ ॥ अणभिग्गहिया भासा ८, भासा अ अभिग्गहमि ९ बोद्धव्वा । ससयकरणी भासा १० वोगड ११ अव्वोगडा १२ चेव ॥ ४ ॥ इति सत्यासत्यासत्यामृषास्वरूपं, सत्यमृषा तु 'उप्पण्णमीसिया १ विगयमीसिया २ उप्पण्णविगयमीसिआ ३ जीवमिस्सिया ४ अजीवमिस्सिआ ५ जीवाजीवमिस्सिआ ६ अणतमिस्सिआ ७ परित्तमिस्सिआ ८ अद्धामिस्सिआ ९ अद्धद्धामीसिआ १०

समस्तमेव लोकमिति, आह—यद्येवं 'कइ०' त्तिगाहा, अयं सूत्रतोऽभिसंबन्धः, अथवाऽर्थतः प्रतिपाद्यते, आह—द्वादशभ्यो योजनेभ्यः परतो न शृणोति शब्दं, मन्दपरिणामत्वात्तद्द्रव्याणामित्युक्तं, तत्र किं परतोऽपि द्रव्याणामागतिरस्ति?, यथा च विषयाभ्यन्तरे नैरन्तर्येण तद्वासनासामर्थ्यं, एवं बहिरप्यस्ति उत नेति, उच्यते, अस्ति, केषाञ्चित् कृत्स्नलोकव्याप्तेः, आह—यद्येवं —

**कइहि समएहि लोगो, भासाइ निरन्तरं तु होइ फुडो । लोगस्स य कइभागे, कइभागो होइ भासाए ॥ १० ॥**

व्याख्या—'कतिभिः समयैः' 'लोकः' लोक्यत इति लोकः चतुर्दशरज्ज्वात्मकः क्षेत्रलोकः परिगृह्यते, भाषया निरन्तरमेव भवति स्पृष्टः व्याप्तः पूर्ण इत्यनर्थान्तरं, लोकस्य च कतिभागे कतिभागो भवति भाषायाः?, ॥१०॥ अत्रोच्यते—

**चउहि समएहि लोगो, भासाइ निरंतरं तु होइ फुडो । लोगस्स य चरमंते, चरमंतो होइ भासाए ॥ ११ ॥**

व्याख्या—चतुर्भिः समयैर्लोको भाषया निरन्तरमेव भवति स्पृष्टः, आह—किं सर्वयैव भाषया उत विशिष्टयैवेति, उच्यते, विशिष्टया, कथम्?—इह कश्चिन्मन्दप्रयत्नो वक्ता भवति, स ह्यभिन्नान्येव शब्दद्रव्याणि विसृजति, तानि च

---

१ पूर्वसूत्रे 'ओरालियवेउव्विये' त्यादिप्रतिपादनात्, २ 'भासासमसेढीओ' इत्यादौ श्रोत्रेन्द्रियादीना द्वादशयोजनादिरूपस्य विषयस्य प्रतिपादनात् वृत्तिकृता ३ मन्दपरिणामलक्षण विशेषहेतु श्रुत्वा द्रव्यगतौ प्रश्न ४ द्वादशसु योजनेषु ५ विषयकथनात् शब्दद्रव्याणां वासकत्वात् वास्यै पूर्णत्वाच्च लोकस्येति वा ६ श्रोत्रेन्द्रियाग्राह्यत्वेऽनुमानज्ञापनाय केषाञ्चिदित्यादि ७ शब्दद्रव्याणा केषाञ्चिल्लोकव्याप्तिप्रतिपत्तौ ८ न तु पञ्चास्तिकायरूपो द्रव्यक्षेत्रादिरूपो वा ९ परमाणो सप्तप्रदेशा यथा स्पर्शना तथा नात्रेत्यनर्थान्तरदर्शन * सर्वयैव १-३-५-६

विसृष्टानि असंख्येयात्मकत्वात् परिस्थूलत्वाच्च भिद्यन्ते, भिद्यमानानि च संख्येयानि योजनानि गत्वा शब्दपरिणामत्यागमेव कुर्वन्ति, कश्चित्तु महाप्रयत्नः, स खलु आदाननिसर्गप्रयत्नाभ्यां भित्त्वैव विसृजति, तानि च सूक्ष्मत्वादानन्त्याच्च अनन्तगुणवृद्ध्या वर्धमानानि षट्सु दिक्षु लोकान्तमाप्नुवन्ति, अन्यानि च तत्पराघातवासितानि वासनाविशेषात् समस्तं लोकमापूरयन्ति, इह च चतुःसमयग्रहणात् त्रिपञ्चसमयग्रहणमपि द्रष्टव्यं, तुलादिमध्यग्रहणवत्, तत्र कथं पुनस्त्रिभिः समयैः लोको भाषया निरन्तरमेव भवति स्पृष्ट इति ?, उच्यते, लोकमध्यस्थवक्तृमुक्तानि, यस्मात्तानि प्रथमसमय एव षट्सु दिक्षु लोकान्तमनुधावन्ति, जीवसूक्ष्मपुद्गलयोः 'अनुश्रेणि गतिः' (तत्त्वार्थ० अ० २ सूत्र २७) इति वचनात्, द्वितीयसमये तु त एव हि षट् दण्डाश्चतुर्दिशमेकैकशो विवर्धमानाः षट् मन्थानो भवन्ति, तृतीयसमये तु पृथक् पृथक् तदन्तरालपूरणात् पूर्णो भवति लोक इति, एवं त्रिभिः समयैर्भाषया लोकः स्पृष्टो भवति, यदा तु लोकान्तस्थितो वा भाषको वक्ति, चतसृणां दिशामन्यतमस्यां दिशि नाड्या बहिर्व्यवस्थितस्तदा चतुर्भिः समयैरापूरयत इति, कथम् ?, एकसमयेन अन्तर्नाडीमनुप्रविशति, त्रयोऽन्ये पूर्ववद्द्रष्टव्याः यदा तु विदिग्व्यवस्थितो वक्ति, तदा पुद्गलानामनुश्रेणिगमनात् समयद्वयेनान्तर्नाडीमनुप्रविशति, शेषसमयत्रयं पूर्ववद्द्रष्टव्यमित्येवं पञ्चभिः समयैरापूर्यत इति । अन्ये तु जैनस-

---

१ असंख्येयाः स्कन्धा न तु परमाणवोऽसंख्येयाः २ तीव्रमन्दप्रयत्नकृतविशेषापेक्षया. ३ शब्दमेतेन समान्ते गतिप्रवृत्तिशिथिलत्वात्, अन्यार्थाभावश्च नरलोकलीला तराणामिव न तथेति चानुमीयते ४ तथाविधाऽल्पादेय अकुशलत्वामावप्रभावाद्वा बहिर्गतोऽपि न शेषपरावर्त इति ५ व्याख्यातृविदिशश्च, अन्यथा ह्यवकाशाभावात् * ६ पूर्वगाथा १-२-५-६. + सर्वा गा १-२-१-४

मुद्घातगत्या लोकापूरणमिच्छन्ति, तेषां चाद्यसमये भाषायाः खलु ऊर्ध्वाधोगमनात् शेषदिक्षु ना मिश्रशब्दश्रवणसंभवः, उक्तं चाविशेषेण—"भासासमसेढीओ, सद्दं जं सुणइ मीसयं सुणइ" (६) त्ति । अथ मतं—'व्याख्यानतोऽर्थप्रतिपत्तिः' इति न्यायाद्दण्ड एव मिश्रश्रवणं भविष्यति, न शेषदिक्ष्विति, ततश्चादोष इति, अत्रोच्यते, एवमपि त्रिभिः समयैर्लोकापूरणमापद्यते, न चतुःसमयसंभवोऽस्ति, कथम् ?—प्रथमसमयानन्तरमेव शेषदिक्षु पराघातद्रव्यसद्भावात् द्वितीयसमय एव मन्थानसिद्धेः, तृतीये च तदन्तरालापूरणात् इति । आह—जैनसमुद्घातवच्चतुर्भिरेवापूरणं भविष्यतीति को दोष इति, अत्रोच्यते, न, सिद्धान्तापरिज्ञानात्, इह जैनसमुद्घाते स्वरूपेणापूरणात्, न तत्र पराघातद्रव्यसंभवोऽस्ति, सकर्मकजीवव्यापारत्वात्तस्य, ततश्च कपाटनिर्वृत्तिरेव तत्र द्वितीयसमय इति, शब्दद्रव्याणां त्वनुश्रेणिगमनात्पराघातद्रव्यान्तरवासकस्वभावत्वाच्च द्वितीयसमय एव मन्थानापत्तिरिति, अचित्तमहास्कन्धोऽपि वैश्रसिकत्वात् पराघाताभावाच्च चतुर्भिरेव पूरयति, न चैवं शब्द इति, सर्वत्रानुश्रेणिगमनात्, इत्यलमतिविस्तरेण, गमनिकामात्रमेवैतत् प्रस्तुतमिति । यदुक्तं 'लोकस्य च कतिभागे कतिभागो भवति भाषायाः' इति, तत्रेदमुच्यते—'लोकस्य च' क्षेत्रगणितमपेक्ष्य 'चरमान्ते' असंख्येयभागे 'चरमान्तः' असंख्येयभागो भवति 'भाषायाः' समग्रलोकव्यापिन्याः इति गाथार्थः ॥ ११ ॥

---

१ केवलिसमुद्घातमर्यादया २ ऊर्ध्वाधोदण्डभागस्थितश्रोतृ श्रुतेर्मिश्रशब्दस्य, चतुरङ्गुलादिमानो दण्डो वक्त्रानुमानेन ३ शब्दद्रव्यसंभवः ४ समुद्घातस्य ५ वैश्रसिकत्वाभावात्तस्य पराघात (वास) द्रव्याभावरहितत्वाच्च ६ ऊर्ध्वाधोदण्डभवनानन्तरं चतसृषु दिक्षु अनुश्रेणि गमनात् मन्थानसंपत्तिरित्यर्थः ७ क्षेत्रस्य आकाशस्य गणितं लोकप्रदेशद्वारा गणनामसंख्येयस्य † नेदम् १ श्रवणार्थं० * गा ४ स्वभावाच्च ४

'तत्त्व-भेद-पर्यायैर्व्याख्या' इति न्यायात् तत्त्वतो भेदतश्च मतिज्ञानस्वरूपमभिधाय इदानीं नानादेशजविनेयगणसुखप्रतिपत्तये तत्पर्यायशब्दान् अभिधित्सुराह—

**ईहा अपोह वीमंसा, मग्गणा य गवेसणा । सण्णा सई मई पण्णा, सव्वं आभिणिबोहियं ॥ १२ ॥**

व्याख्या—'ईह चेष्टायां' ईहनमीहा सतामर्थानां अन्वयिनां व्यतिरेकिणां च पर्यालोचना इतियावत्, अपोहनं अपोहः निश्चय इत्यर्थः, विमर्शनं विमर्शः ईहाया उत्तरः, प्रायः शिरःकण्डूयनादयः पुरुषधर्मा घटन्ते इति सम्प्रत्ययो विमर्शः, तथा अन्वयधर्मान्वेषणा मार्गणा, चशब्दः समुच्चयार्थः, व्यतिरेकधर्मालोचना गवेषणा, तथा संज्ञानं संज्ञा, व्यञ्जनावग्रहोत्तरकालभावी मतिविशेष इत्यर्थः, स्मरणं स्मृतिः, पूर्वानुभूतार्थालम्बनः प्रत्ययः, मननं मतिः—कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिरिति, तथा प्रज्ञानं प्रज्ञा—विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिरित्यर्थः, सर्वमिदं 'आभिनिबोधिकं' मतिज्ञानमित्यर्थः, एवं किञ्चिद्भेदाद्भेदः प्रदर्शितः, तत्त्वतस्तु मतिवाचकाः सर्व एवैते पर्यायशब्दा इति गाथार्थः ॥ १२ ॥

तत्त्वभेदपर्यायैर्मतिज्ञानस्वरूपं व्याख्यायेदानीं नवभिरनुयोगद्वारैः पुनस्तद्रूपनिरूपणायेदमाह—

**संतपय परूवणया दव्वपमाणं च खित्त फुसणा य । कालो अ अंतरं भाग, भावे अप्पाबहुं चेव ॥ १३ ॥**
**गइ इंदिए य काए, जोए वेए कसाय लेसासु । सम्मत्तनाणदंसणसंजयउवओगे आहारे[13] ॥ १४ ॥**

---

१ "अत्थाण ओग्गहण" (गाथा ३) "उग्गह ईहावाओ य" (गाथा २) भेददर्शनद्वारा भेदलक्षणाख्यानद्वारा च + ०लक्खनम० २-१-४

भासग[14] परित्ते[15] पज्जत्ते[16] सुहुमे[17] सण्णी[18] य होइ भवे[19] चरिमे[20] ।आभिणिबोहिअनाणं,मग्गिज्जइ एसु ठाणेसु॥१५॥

व्याख्या—सच्च तत्पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणं तस्य भावः सत्पदप्ररूपणता गत्यादिभिर्द्वारैराभिनिबोधिकस्य कर्त्तव्येति, अथवा सद्विषयं पदं सत्पदं, शेषं पूर्ववत्, आह—किमसत्पदस्यापि प्ररूपणा क्रियते ? येनेदमुच्यते 'सत्पदप्ररूपणेति,' क्रियत इत्याह खरविषाणादेरसत्पदस्यापीति, तस्मात् सद्ग्रहणमिति, अथवा सन्ति च तानि पदानि च सत्पदानि गत्यादीनि तैः प्ररूपणं सत्पदप्ररूपणं मतेरिति । तथा 'द्रव्यप्रमाणं' इति जीवद्रव्यप्रमाणं वक्तव्यं, एतदुक्तं भवति—एकस्मिन् समये कियन्तो मतिज्ञानं प्रतिपद्यन्त इति, सर्वे वा कियन्त इति, चः समुच्चये, 'क्षेत्रं' इति क्षेत्रं वक्तव्यं, कियति क्षेत्रे मतिज्ञानं संभवति, 'स्पर्शना च' वक्तव्या, कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति, आह—क्षेत्रस्य स्पर्शनायाश्च कः प्रतिविशेषः ?, उच्यते, यत्रावगाहस्तत् क्षेत्रं, स्पर्शना तु तद्बाह्यतोऽपि भवति, अयं विशेष इति, चशब्दः पूर्ववत्, कालश्च वक्तव्यः, स्थित्यादिकालः, अन्तरं च वक्तव्यं प्रतिपत्त्यादाविति, भागो वक्तव्यः, मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्त्तन्त इति, तथा भावो वक्तव्यः, कस्मिन् भावे मतिज्ञानिन इति, अल्पबहुत्वं च वक्तव्यं, आह—भागद्वारादेवायमर्थोऽवगतः, ततश्चालमनेनेति, न, अभिप्रायापरिज्ञानात्, इह मतिज्ञानिनामेव पूर्वप्रतिपन्नप्रतिपद्यमानकापेक्षया अल्प-

१ पूर्वं हि पदस्य मत्त्व अत्र तु वाच्यस्येति न सभयव्यभिचाराभावेन विशेषणानर्थक्य २ असदर्थविषयस्य ३ वाच्यविचारणाप्रक्रमात् ४ मतेर्गुणत्वात जीवाभिन्नत्वाच्च. ५ जीवद्रव्यप्रमाणस्याप्रासङ्गिकत्वापत्ते ६ अभेदोपचारात्तद्वान् ७ अपिनाऽवगाढक्षेत्रसमुच्चयः ८ आदिना प्रतिपत्तिकाल सुषमादि ९ आदिना प्रतिपद्यमानतायां, प्राक्तनाशोत्तरोत्पादान्तराल प्रतिपत्त्यन्तराल, तच्चान्तर्मुहूर्त्तादि वक्ष्यमाण, उभयो प्रतिपाद्यमानयोर्द्वितीय, विरहकालोऽत्र समयादि * स्यादि काल १.

बहुत्वं वक्तव्यमिति समुदायार्थः । इदानीं प्रागुपन्यस्तगाथाद्वयेनाभिनिबोधिकस्य सत्पदप्ररूपणाद्वारावयवार्थः प्रतिपाद्यते, कथम् ?, अन्विष्यते 'आभिनिबोधिकज्ञानं किमस्ति नास्तीति,' अस्ति, यद्यस्ति क्व तत् ?, तत्र 'गताविति' गतिमङ्गीकृत्यालोच्यते, सा गतिश्चतुर्विधा—नारकतिर्यङ्नरामरभेदभिन्ना, तत्र चतुष्प्रकारायामपि गतौ आभिनिबोधिकज्ञानस्य पूर्वप्रतिपन्ना नियमतो विद्यन्ते, प्रतिपद्यमानास्तु विवक्षितकाले भाज्याः, कदाचिद्भवन्ति कदाचिन्नेति, तत्र प्रतिपद्यमाना अभिधीयन्ते ते ये तत्प्रथमतयाऽऽभिनिबोधिकं प्रतिपद्यन्ते, प्रथमसमय एव, शेषसमयेषु तु पूर्वप्रतिपन्ना एव भवन्ति १ । तथा 'इन्द्रियद्वारे' इन्द्रियाण्यङ्गीकृत्य मृग्यते, तत्र पञ्चेन्द्रियाः पूर्वप्रतिपन्नाः नियमतः सन्ति, प्रतिपद्यमानास्तु विकल्पनीया इति, द्वित्रिचतुरिन्द्रियास्तु पूर्वप्रतिपन्नाः संभवन्ति, न तु प्रतिपद्यमानाः, एकेन्द्रियास्तु उभयविकलाः २ । तथा 'काय इति' कायमङ्गीकृत्य विचार्यते, तत्र त्रसकाये पूर्वप्रतिपन्ना नियमतो विद्यन्ते, इतरे तु भाज्याः, शेषकायेषु च पृथिव्यादिषु उभयाभाव इति ३ । तथा 'योग इति' त्रिषु योगेषु समुदितेषु पञ्चेन्द्रियवद्वक्तव्यं, मनोरहितवाग्योगेषु विकलेन्द्रियवत्, केवलकाययोगे तूभयाभाव इति* ४ । तथा 'वेद इति' त्रिष्वपि वेदेषु विवक्षितकाले पूर्वप्रतिपन्ना अवश्यमेव सन्ति, इतरे

१ ज्ञानाद्यावतिदेशसुगमत्वाय तिसृणां सहोपन्यास, यद्वा 'आभिणियोहियनाण मग्गिज्जइ एसु ठाणेसु' त्तिवचनात् तिसृणां गाथानामेकवाक्यतेति सहोपन्यास २ द्वारगाथयो द्वारेषु विंशतौ ३ छद्मस्थप्ररूपकापेक्षया चेद, सर्वज्ञानां तु निश्चिते एव प्रतिपद्यमानतेतरे ४ विवक्षितलब्ध्युपयोगस्थित्यपेक्षया, न त्वपूर्वावाप्त्यपेक्षया ५ स्थित्यपेक्षया ६ लब्धिपर्याप्तानां, करणापर्याप्तावस्थाया भवान्तरासादितसासादनसम्यक्त्वसद्भावसंभवात् ७ सहचरितेषु, प्रत्येकस्याग्रे वक्ष्यमाणत्वात् ८ विकलेषु सासादनाभ्युपगमेऽपि एकेन्द्रियेष्वनभ्युपगमात्तस्य * नेद ५–६

तु भाज्या इति ५ । तथा 'कषाय इति द्वारं' कषायाः क्रोधमानमायालोभाख्याः प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदभिन्ना इति, तत्राद्येषु अनन्तानुबन्धेषु क्रोधादिषूभयाभाव इति, शेषेषु तु पञ्चेन्द्रियवद् योज्यम् ६ । तथा 'लेश्यासु' चिन्त्यते, तत्र श्लेषयन्त्यात्मानमष्टविधेन कर्मणा इति लेश्याः—कायाद्यन्यतमयोगवतः कृष्णादिद्रव्यसंबन्धादात्मनः परिणामा इत्यर्थः, तत्रोपरितनीषु तिसृषु लेश्यासु पञ्चेन्द्रियवद्योजनीयं इति, आद्यासु तु पूर्वप्रतिपन्नाः संभवन्ति, नत्वितर इति ७ । तथा 'सम्यक्त्वद्वारं' सम्यग्दृष्टिः किं पूर्वप्रतिपन्नः किं वा प्रतिपद्यमानक इति, अत्र व्यवहारनिश्चयाभ्या विचार इति, तत्र व्यवहारनय आह—सम्यग्दृष्टिः पूर्वप्रतिपन्नो न प्रतिपद्यमानकः आभि+निबोधिकज्ञानलाभस्य, सम्यग्दर्शनमतिश्रुताना युगपल्लाभात्, आभिनिबोधिकप्रतिपत्त्यनवस्थाप्रसङ्गाच्च । निश्चयनयस्त्वाह—सम्यग्दृष्टिः पूर्वप्रतिपन्नः प्रतिपद्यमानश्च आभिनिबोधिकज्ञान†लाभस्य, सम्यग्दर्शनसहायत्वात्, क्रियाकालनिष्ठाकालयोरभेदात्, भेदे च क्रियाऽभावाविशेषात् पूर्ववद्वस्तु‡नोऽनुत्पत्तिप्रसङ्गात्, न चेत्थं तत्प्रतिपत्त्यनवस्थेति ८ । तथा 'ज्ञानद्वारं' तत्र ज्ञानं पञ्चप्रकारं, मतिश्रुतावधिमनःपर्यायकेवलभेदभिन्नं इति, अत्रापि व्यवहारनिश्चयनयाभ्यां विचार इति, तत्र व्यवहारनयमतं—मतिश्रुतावधिमनःपर्यायज्ञानिनः पूर्वप्रतिपन्ना न तु प्रतिपद्यमानका इति, मत्यादिलाभस्य सम्यग्दर्शनसहचरितत्वात्, केवली तु न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, तस्य क्षायोपशमिकज्ञानातीतत्वात्, तथा मत्यज्ञानश्रुताज्ञानविभङ्गज्ञान-

१ सास्वादनकालस्याल्पत्वादविवक्षेति मलधारिपादा २ शेषाणां पूर्वप्रतिपन्नत्वात् प्रतिपद्यमानत्वे भजना, पूर्वमवाप्याधुना तदुपयोगे तल्लब्धौ वा वर्त्तमाना अत्र प्रतिपन्नत्वेन ग्राह्या नतु प्रतिपद्य य उज्झितवन्तस्ते * बन्धिषु ४ + नेद १–३ † कलाभस्य १–३–५–६ ‡ वद्वस्तुतो० ५–६

वन्तस्तु विवक्षितकाले प्रतिपद्यमाना भवन्ति, न तु पूर्वप्रतिपन्ना इति । निश्चयनयमतं तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमाना अपि सम्यग्दर्शनसहचरितत्वात् मत्यादिलाभस्य संभवन्तीति, क्रियाकालनिष्ठाकालयोरभेदात्, मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव, न प्रतिपद्यमानकाः, तस्य चँ भावयतेरेवोत्पत्तेः, केवलिनां तूभयाभाव इति । मत्याद्यज्ञानवन्तस्तु न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकाः, प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात्, क्रियाकालनिष्ठाकालयोश्चाभेदात्, अज्ञानभावे च प्रतिपत्तिक्रियाऽभावात् ९ । इदानीं 'दर्शनद्वारं', तद्दर्शनं चतुर्विधं, चक्षुरचक्षुरवधिकेवलभेदभिन्नं, तत्र चक्षुर्दर्शनिनः अचक्षुर्दर्शनिनश्चँ,किमुक्तं भवँति ?–दर्शनलब्धिसम्पन्ना न तु दर्शनोपयोगिन इति 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स उप्पँज्जइ' इति वचनात्, पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विवक्षितकाले भाज्याः. अवधिदर्शनिनँस्तु पूर्वप्रतिपन्ना एवँ, न तु प्रतिपद्यमानकाँः, केवलदर्शनिनस्तूभयविकलाँ इति १० । 'संयत इति द्वारं', संयतः पूर्वप्रतिपन्नो न प्रतिपद्यमान इति ११ । 'उपयोगद्वारं' स च द्विधा–साकारोऽनाकारश्च, तत्र साकारोपयोगिनः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विवक्षितकाले भाज्या इति, अनाकारो-

---

१ विशेषेति २ ज्ञानज्ञानिनोरभेदात आभिनिबोधिकज्ञानवन्त इति बोध्यम् ३ साकारानाकारयो उपयोगयौगपद्याभावात् किम्वित्यादि ४ एतदुपयोगवन्त , न चाद्दताऽत एव लब्धिचिन्ता पूर्ववत् ५ इष्टावधारणार्थत्वादेवकारस्य 'प्रतिपद्यमानाना निषेधार्थेव , ननु मिथ्यात्ववता अवधिदर्शनव्यवच्छेदाय, यद्वा तद्वन्तु तद्वतामवश्यभावात् ६ साकारोपयोगोपयुक्तानामेव मतिज्ञानम्योत्पत्ते. ७ 'नट्ठम्मि उ छाउमत्थिए नाणे' इति सिद्धान्तमङ्गीकृत्य * नास्तीदम् ५–६ + उपपद्यन्ते १–२–३–५–६

पयोगिनस्तु पूर्वप्रतिपन्ना एव न प्रतिपद्यमानकाः । १२ अधुना 'आहारकद्वार', आहारकाः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विकल्पनीया विवक्षितकाल इति, अनाहारकास्तु अपान्तरालगतौं पूर्वप्रतिपन्नाः संभवन्ति, न तु प्रतिपद्यमानका इति १३ । तथा 'भाषक इति द्वारं', तत्र भाषालब्धिसंपन्ना भाषकाः, ते* भाषमाणा अभाषमाणा वा पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विवक्षितकाले भजनीया इति, तल्लब्धिशून्याश्चोभयविकला इति १४ । 'परीत्त इति द्वारं', तत्र परीत्ताः प्रत्येकशरीरिण', ते पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विवक्षितकाले भाज्या इति, साधारणास्तु उभयविकला इति १५ । 'पर्याप्तक इति द्वारं', तत्र पञ्चिराहारादिपर्याप्तिभिर्ये पर्याप्तास्ते पर्याप्तकाः, ते पूर्वप्रतिपन्ना नियमतो विद्यन्ते, विवक्षितकाले प्रतिपद्यमानास्तु भजनीया इति, अपर्याप्तकास्तु षट्पर्याप्त्यपेक्षया पूर्वप्रतिपन्नाः संभवन्ति, न त्वितरे १६ । 'सूक्ष्म इति द्वारं', तत्र सूक्ष्माः खलूभयविकलाः, बादरास्तु पूर्वप्रतिपन्ना नियमतः सन्ति, इतरे तु विवक्षितकाले भाज्या इति १७ । तथा 'संज्ञिद्वारं' तत्रेह दीर्घकालिक्युपदेशेन संज्ञिनः प्रतिगृह्यन्ते, ते च बादरवद्वक्तव्याः, असंज्ञिनस्तु पूर्वप्रतिपन्नाः संभवन्ति, न त्वितर इति १८ । 'भव इति द्वारं', तत्र भवसिद्धिकाः संज्ञिवद्वक्तव्याः, अभवसिद्धिकास्तूभयशून्या इति १९ । 'चरम इति द्वारं', चरमो भवो भविष्यति यस्यासौ अभेदोपचाराच्चरम इँति, तत्र इत्थंभूताः चरमाः पूर्वप्रतिपन्ना नियमतः सन्ति, इतरे तु भाज्याः, अचरमास्तूभयविकलाः, उत्तरार्धं तु व्याख्या-

---

१ नजिपञ्चेन्द्रियाणा पण्णां पर्याप्तीनां सम्भवात् , तत्र चावश्यभावात्तस्य २ प्रतिपद्यमानका ३ भव्या इत्यर्थ ४ जातिभव्यव्यवच्छेद फल द्वारपार्थक्यस्य ५ 'आभिणिबोहियनाण मग्गिज्जइ एसु ठाणेसु' त्ति तृतीयगाथोत्तरार्धलक्षण ॰ तेषां २

तमेव । कृता सत्पदप्ररूपणेति, साम्प्रतं आभिनिबोधिकजीवद्रव्यप्रमाणमुच्यते—तत्र प्रतिपत्तिमङ्गीकृत्य विवक्षितकाले कदाचिद् भवन्ति कदाचिन्नेति, यदि भवन्ति जघन्यत एको द्वौ त्रयो वा, उत्कृष्टतस्तु क्षेत्रपल्योपमासंख्येयभागप्रदेशराशितुल्या इति, पूर्वप्रतिपन्नास्तु जघन्यतः क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिपरिमाणा एव, उत्कृष्टतस्तु एभ्यो विशेषाधिका इति । उक्तं द्रव्यप्रमाणं, इदानीं 'क्षेत्रद्वारं', तत्र नानाजीवान् एकजीवं चाङ्गीकृत्य क्षेत्रमुच्यते, तत्र सर्व एवाभिनिबोधिकज्ञानिनो लोकस्य असंख्येयभागे वर्त्तन्ते, एकजीवस्तु ईलिकागत्या गच्छन्नूर्ध्वं अनुत्तरसुरेषु सप्तसु चतुर्दशभागेषु वर्त्तते, तेभ्यो वाऽऽगच्छन्निति, अधस्तु षष्ठीं पृथ्वीं गच्छँस्ततो वा प्रत्यागच्छन् पञ्चसु सप्तभागेषु इति, नातः परमधः क्षेत्रमस्ति, यस्मात् सम्यग्दृष्टेः अधः सप्तमनरकगमनं प्रतिषिद्धमिति, आह—अधः सप्तमनरकपृथिव्यामपि सम्यग्दर्शनलाभस्य प्रतिपादितत्वात् आगच्छतः पञ्चसप्तभागाधिकक्षेत्रसंभव इति, अत्रोच्यते, एतदप्ययुक्तं, सप्तमनरकात् सम्यग्दृष्टेरागमनस्याप्यभावात्, कथम् ?, यस्मात् तत उद्धृतास्तिर्यक्ष्वेवागच्छन्तीति प्रतिपादितं, अमरनारकाश्च सम्यग्दृष्टयो मनुष्येष्वेव, इत्यलं प्रसङ्गेन प्रकृतं प्रस्तुमः । 'स्पर्शनाद्वारं' इदानीं, इह यत्रावगाहस्तत् क्षेत्रमुच्यते, स्पर्शना तु

---

१ यद्यपि द्वादशयोजनान्यलोकमुत्तन्ति तथापि न्यूनता तावती न विवक्षिताऽग्रात्पेति २ अधोलोकस्य सप्त भागान् कृत्वेदमुक्त, पूर्वं चतुर्दश लोकभागा अत्र त्वधोलोकभागा इत्यत्र विवक्षैव मात, भाष्यकारादिभिस्तत्रापि पञ्च चतुर्दशभागा प्रत्यपादिषत ३ सिद्धान्तकर्मग्रन्थोभयमतेनापि वान्तसम्यक्त्वानामेव सप्तमनरकगमनाभ्युपगमात् ४ गमनविषयशङ्काया अयुक्तता अपिना, यद्वा तत्क्षेत्रगमनायोग्यता सम्यग्दृष्टेरागमनायोग्यता चेति ध्वनयितु ५ अधिकक्षेत्रस्य परिमृशोऽपिना * एतेभ्यो २–४ सु तेभ्यो १

ततोऽतिरिक्ता अवगन्तव्या, यथेह परमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा च स्पर्शनेति। तथा 'कालद्वारं', तत्रोपयोगमङ्गीकृत्य एकस्यानेकेषां चान्तर्मुहूर्त्तमात्र एव कालो भवति जघन्यत उत्कृष्टतश्च, तथा तल्लब्धिमङ्गीकृत्य एकस्य जघन्येनान्तर्मुहूर्त्तमेव, उत्कृष्टतस्तु षट्षष्टिसागरोपमाण्यधिकानीति, वारद्वयं विजयादिषु गतस्य अच्युते वा वारत्रयमिति, नरभवकालाऽभ्यधिक इति, तत ऊर्ध्वमप्रच्युतेनापवर्गप्राप्तिरेव भवतीति भावार्थः, नानाजीवापेक्षया तु सर्वकाल एवेति, न यस्मादाभिनिबोधिकलब्धिमच्छून्यो लोक इति। इदानीं 'अन्तरद्वारं', तत्रैकजीवमङ्गीकृत्य आभिनिबोधिकस्यान्तरं जघन्येनान्तर्मुहूर्त्तं, कथम्?, इह कस्यचित् सम्यक्त्वं प्रतिपन्नस्य पुनस्तत्परित्यागे सति पुनस्तदावरणकर्मक्षयोपशमाद् अन्तर्मुहूर्त्तमात्रेणैव प्रतिपद्यमानस्येति, उत्कृष्टतस्तु आशातनाप्रचुरस्य परित्यागे सति अपार्धपुद्गलपरावर्त्त इति, उक्तं च—"तित्थगरपवयणसुयं, आयरियं गणहरं महिड्ढीयं। आसादिंतो बहुसो, अणंतसंसारिओ होई॥१॥" तथा नानाजीवानपेक्ष्य अन्तराऽभाव इति। 'भाग इति द्वारं' तत्र मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानन्तभागे वर्त्तन्ते इति। 'भावद्वारं' इदानीं, तत्र मतिज्ञानिनः क्षायोपशमिके भावे वर्त्तन्ते, मत्यादिज्ञानचतुष्टयस्य क्षायोपशमिकत्वात्। तथा 'अल्पबहुत्वद्वारं', तत्राभिनिबोधिकज्ञानिना प्रतिपद्यमानपूर्वप्रतिपन्नापेक्षया अल्पबहुत्वविभागोऽयमिति, तत्र सद्भावे सति सर्वस्तोकाः प्रतिपद्यमा-

१ अधिकेति २ चत्वारो दिक्षु(?)सरका द्वावूर्ध्वाधोदिक्कौ एकश्चावगाहस्थानमिति सप्तप्रदेशा स्पर्शना ३ 'अनेकाभिनिबोधिकजीवानामपीदमेवोपयोगकालमान, केवलमिदमन्तर्मुहूर्त्तमपि बृहत्तरमवसेय' इति विशेषावश्यकवृत्तौ ४ तीर्थंकर प्रवचन श्रुत आचार्य गणधर महर्द्धिकम् (आमर्शौषध्यादिलब्धिमन्त)। आशातयन् बहुश अनन्तससारिको भवति ॥ १ ॥ ५ भागद्वारात्पार्थक्यज्ञापनाय * घारा० १-२-३-४-६ + आसादेंतो २-४

नकाः, पूर्वप्रतिपन्नास्तु जघन्यपदिनस्तेभ्योऽसंख्येयगुणाः, तथोत्कृष्टपदिनस्तु एतेभ्योऽपि विशेषाधिका इति गाथावयवार्थः॥ १५ ॥ साम्प्रतं यथाव्यावर्णितमतिभेदसंख्याप्रदर्शनद्वारेणोपसंहारमाह—

**आभिणिबोहियनाणे, अट्ठावीसइ हवन्ति पयडीओ।**

अस्य गमनिका—'आभिनिबोधिकज्ञाने अष्टाविंशतिः भवन्ति प्रकृतयः' प्रकृतयो भेदा इत्यनर्थान्तरं, कथम्?, इह व्यञ्जनावग्रहः चतुर्विधः, तस्य मनोनयनवर्जेन्द्रियसंभवात्, अर्थावग्रहस्तु षोढा, तस्य सर्वेन्द्रियेषु संभवात्, एवं ईहावायधारणा अपि प्रत्येकं षड्भेदा एव मन्तव्या इति, एवं संकलिता अष्टाविंशतिर्भेदा भवन्ति। आह—प्राग् अवग्रहादिनिरूपणायां 'अत्थाणं उग्गहणं' इत्यादावेताः प्रकृतयः प्रदर्शिता एव, किमिति पुनः प्रदर्श्यन्ते?, उच्यते, तत्र सूत्रे संख्यानियमेन नोक्ताः, इह तु संख्यानियमेन प्रतिपादनादविरोध इति। इदं च मतिज्ञानं चतुर्विधं—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः सामान्यादेशेन मतिज्ञानी सर्वद्रव्याणि धर्मास्तिकायादीनि जानीते, न विशेषादे-

१ गाथार्धस्य उपसहारवाक्यस्य वा २ सक्षिप्ता विवृति ३ प्राग्वन् मनस इन्द्रियता ४ गाथा (३) ५ तृतीयगाथारूपे ६ अवग्रहादीना सख्याभेद प्रत्येक विधाय न प्रतिपादिता, व्यञ्जनार्थाभ्यामवग्रहस्य अर्थावग्रहेहावायधारणाना च यथावदिन्द्रियादिभेदेन सूत्रे प्रतिपादनाभावात् ७ 'आदेसोत्ति पगारो ओघादेसेण सव्वदव्वाइ'ति (४०३) विशेषावश्यकवचनात् द्रव्यसामान्येन ८ न सर्वैर्विशेषैरित्यर्थ, कियता पुन पर्यायाणामधिगमात्
* नयनमनो १-२-४-५

शत इति, एव क्षेत्रतो लोकालोकं, कालतः सर्वकालं, भावतस्तु औदयिकादीन् पञ्च भावानिति, सर्वभावानां चानन्तभागमिति। उक्तं मतिज्ञानं, इदानीं अवसरप्राप्तं श्रुतज्ञानं प्रतिपिपादयिषुराह—

**सुयणाणे पयडीओ, वित्थरओ आवि वोच्छामि॥ १६॥**

व्याख्या—श्रुतज्ञानं पूर्वं व्युत्पादितं तस्मिन्, प्रकृतयो भेदा अंशा इति पर्यायाः, ताः, 'विस्तरतः' प्रपञ्चेन, चशब्दात् संक्षेपतश्च, अपिशब्दः संभावने, अवधिप्रकृतीश्च 'वक्ष्ये' अभिधास्ये॥ १६॥ इदानीं ता एव श्रुतप्रकृतीः प्रदर्शयन्नाह—

**पत्तेयमक्खराइं, अक्खरसंजोग जत्तिआ लोए। एवइया पयडीओ, सुयनाणे हुंति णायव्वा॥ १७॥**

व्याख्या—एकमेकं प्रति प्रत्येकं, अक्षराण्यकारादीनि अनेकभेदानि, यथा अकारः सानुनासिको निरनुनासिकश्च, पुनरेकैकस्त्रिधा—ह्रस्व दीर्घः प्लुतश्च, पुनरेकैकस्त्रिधैव—उदात्तः अनुदात्तः स्वरितश्च, इत्येवमकारः अष्टादशभेदः, इत्येवमन्येष्वपि इकारादिषु यथासंभवं भेदजालं वक्तव्यमिति। तथा अक्षराणां संयोगाः अक्षरसंयोगाः संयोगाश्च द्व्यादयः यावन्तो लोके

१ धर्मास्तिकायादीनामाधार आद्योऽन्य इतरथा २ अतीतानागतवर्त्तमानरूपम् ३ क्षेत्रादिष्वपि सामान्यादेशेनेत्यनुवर्त्तनीय, 'भावओ ण आभिणिबोहिअनाणी आएसेण सव्वे भावे जाणइ'त्ति श्रीनन्दीसूत्रगत वाक्यमालम्ब्येदम् ४ सर्वभाववोधेन सर्वज्ञत्वापत्तिर्या तद्वारणाय, 'मतिश्रुतयोर्निबन्ध सर्वद्रव्येष्वसर्वपर्यायेषु' इति तत्त्वार्थे अ० १ सूत्रम् २७ आलम्ब्येद, सर्वपर्यायाणामनन्तभाग बुध्यते मतिज्ञानी, ज्ञानज्ञानिनो कथञ्चिदभेदादेव ज्ञानिद्वारा ज्ञानभेदानां कथन ५ लृवर्णे दीर्घाभाव सन्ध्यक्षराणा ह्रस्वाभाव व्यञ्जनानां ह्रस्वाद्यभाव चापेक्ष्य. * पूर्वव्युत्पादित १-२-४-५ + नेदम् २-४
‡ अक्षरसयोगा अ० १.

यथा घटपट[+] इति[†] 'व्याघ्रहस्ती[§]' इत्येवमादयः एते[¶] चानन्ता इति, तत्रापि एकैकः अनन्तपर्यायः, स्वपरपर्यायापेक्षया इति। आह—संख्येयानां अकारादीनां कथं पुनरनन्ताः संयोगा इति, अत्रोच्यते. अभिधेयस्य पुद्गलास्तिकायादेरनन्तत्वात् भिन्न[¶]त्वाच्च, अभिधेयभेदे च अभिधानभेदसिद्ध्या अनन्तसंयोगसिद्धिरिति, अभिधेयभेदानन्त्यं च यथा—परमाणुः, द्विप्रदेशिको, यावद् अनन्तप्रदेशिक इत्यादि, तथैकत्रापि च अनेकाभिधानप्रवृत्तेः अभिधेयधर्मभे[S]दा यथा—परमाणुः, निरंशो, निष्प्रदेशः, निर्भेदः, निरवयव इत्यादि, न चैते सर्वथैकाभिधेयवाचका ध्वनय इति, सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वात्, इत्येवं सर्वद्रव्यपर्यायेषु आयोजनीयमिति, तथा च सूत्रेऽप्युक्तं—"अणंता गमा अणंता पज्जवा" अमुमेवार्थं चेतस्यारोप्याह—'एतावत्यः' इयत्परिमाणाः प्रवृत्तिनिमित्तत्वात् इत्येवं सर्वप्रकृतयः श्रुतज्ञाने भवन्ति ज्ञातव्या

१ मलयगिरीयाया वृत्तौ 'घट' पट इत्यादि व्याघ्र स्त्रीत्येवमादि' इति । अत्राद्य उदाहरणे स्वरान्तरित संयोगः द्वितीयस्तु स्वरानन्तरित इति दृष्टान्तद्वय २ सयोगा ३ सयोग' ४ 'जे लभइ केवलो से सवण्णसहिओ य पज्जवेऽपारो । ते तस्स सपज्जाया, सेसा परपज्जवा सव्वे ॥ ४७८ ॥ चायसरजायविसेसणाइणा तस्स जमुवउज्जति । सधणमिवासवद्ध, भवन्ति तो पज्जवा तस्स ॥ ४८० ॥ इति ( विशेषावश्यकवचनात् ) ५ द्विपञ्चाशतः. ६ पदार्थशब्देन जगत्त्रयाभिधानवदभिन्नत्वे संयोगबहुत्वाभावादाह ७ अन्यथा अभिधेयस्वरूपाख्यानानुपपत्ते, अनेकार्थस्थले सापेक्षिकस्थलेऽपि च न म भिन्नान्यभिधानानि ८ विशिष्टैकशब्देनानेकाभिधेयाभिधानविचारमाश्रित्य, एकस्मिन्नपि वा वाच्येऽनन्ताभिधानाभ्युपगमनार्थैकत्रेत्यादि ९ सूक्ष्मत्वसूक्ष्मायोगित्वापरपरमाणुसंयोगहीनत्वाविनाशित्वावयवानारब्धत्वादिना प्रवृत्ति शब्दानामेषामत्र १० इह गमा अर्थगमा गृह्यन्ते, अर्थगमा नामार्थपरिच्छेदास्ते चानन्ता इति नन्दीवृत्तौ + घट पट १-२-४-५ † इत्यादि २-४ ‡ व्याघ्रो १ § व्याघ्र स्त्री ४. ¶ विभिन्नत्वात् २-४-५. S धर्मभेदो १-२-३-४

इति गाथार्थः ॥ १७ ॥ इदानीं सामान्यतयोपदर्शितानां अनन्तानां श्रुतज्ञानप्रकृतीनां यथावद्भेदेन प्रतिपादनसामर्थ्यं आत्मनः खलु अपश्यन्नाह—

**कत्तो मे वण्णेउं, सत्ती सुयणाणसव्वपयडीओ ?। चउदसविहनिक्खेवं, सुयनाणे आवि वोच्छामि ॥ १८ ॥**

व्याख्या—कुतो ?, नैव प्रतिपादयितुं, 'मे' मम 'वर्णयितुं' प्रतिपादयितुं 'शक्तिः' सामर्थ्यं, काः ?—प्रकृतीः, तत्र प्रकृतयो भेदाः, सर्वाश्च ताः प्रकृतयश्च सर्वप्रकृतयः, श्रुतज्ञानस्य सर्वप्रकृतयः श्रुतज्ञानसर्वप्रकृतय इति समासः, ताः कुतो मे वर्णयितुं शक्तिः ?, कथं न शक्तिः ?, इह ये श्रुतग्रन्थानुसारिणो मतिविशेषास्तेऽपि श्रुतमिति प्रतिपादिताः, उक्तं च—"तेऽविय मईविसेसे, सुयणाणब्भंतरे जाण" ताँश्चोत्कृष्टतः श्रुतधरोऽपि अभिलाप्यानपि सर्वान् न भाषते, तेषामनन्तत्वात् आयुषः परिमितत्वात् वाचः क्रमवृत्तित्वाच्चेति, अतोऽशक्तिः, ततः 'चतुर्दशविधनिक्षेपं' निक्षेपणं निक्षेपो—नामादिविन्यासः, चतुर्दशविधश्चासौ निक्षेपश्चेति विग्रहस्तं 'श्रुतज्ञाने' श्रुतज्ञानविषयं, चशब्दात् श्रुताज्ञानविषयं च, अपिशब्दात् उभयविषयं च, तत्र श्रुतज्ञाने सम्यक्श्रुते, श्रुताज्ञाने असंज्ञिमिथ्याश्रुते, उभयश्रुते दर्शनविशेषपरिग्रहात् अक्षरानक्षरश्रुते इति, 'वक्ष्ये' अभिधास्ये इति गाथार्थः ॥ १८ ॥ साम्प्रतं चतुर्दशविधश्रुतनिक्षेपस्वरूपोपदर्शनायाह—

१ ( विशेषावश्यके १४३ ) तानपि च मतिविशेषान् श्रुतज्ञानाभ्यन्तरे जानीहि २ असंज्ञिना वक्ष्यमाणत्वेऽपि नियमाभावात्संज्ञिनां सम्यक्श्रुतस्य न तद्ग्रहण ३ एकस्य परस्परविरुद्धधर्माश्रयत्वाभावादाह—दर्शनेत्यादि, दर्शनशब्दश्चात्र श्रद्धानार्थे ४ नामस्थापनाद्रव्याणामनादर' अप्रधानत्वादिनाऽग्रे वक्ष्यमाणत्वाद्वा, श्रुतस्कन्धे भावश्रुते ये भेदाश्चतुर्दश तदपेक्षया चात्र चतुर्दशविधनिक्षेपेति, अधिकारायतरणिकैषेति च स्वरूपेति, अक्षरसंज्ञ्यादिद्वाराणां च नात एव पृथक् सूत्राणि. + नास्तीद १-२-४-५ * चतुर्दशनिक्षेप० २

**अक्खर सण्णी सम्मं, साईयं खलु सपज्जवसिअं च। गमियं अंगपविट्ठं, सत्तवि एए सपडिवक्खा ॥ १९ ॥**

व्याख्या—तत्र 'अक्षरश्रुतद्वारं' इह 'सूचनात्सूत्रं' इतिकृत्वा सर्वद्वारेषु श्रुतशब्दो द्रष्टव्य इति। तत्र अक्षरमिति, किमुक्तं भवति ?—'क्षर संचलने' न क्षरतीत्यक्षरं, तच्च ज्ञानं चेतनेत्यर्थः. न यस्मादिदमनुपयोगेऽपि प्रच्यवत[+] इति भावार्थः. इत्यभू[†]तभावाक्षर[‡]कारणत्वाद् अकारादिकमप्यक्षरमभिधीयते, अथवा अर्थान् क्षरति न च क्षीयते इत्यक्षरं, तच्च समासतस्त्रिविधं, तद्यथा—संज्ञाक्षरं व्यञ्जनाक्षरं लब्ध्यक्षरं चेति, संज्ञाक्षरं तत्र अक्षराकारविशेषः, यथा घटिकासंस्थानो धकारः, कुरु[§]ण्टिकासंस्थानश्चकार इत्यादि, तच्च ब्राह्म्यादिलिपीविधानादनेकविधं। तथा व्यञ्जनाक्षरं, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, व्यञ्जनं च तदक्षरं चेति व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणं अकारादि हकारान्तं, अर्थाभिव्यञ्जकत्वाच्छब्दस्य, तथा योऽक्षरोपलम्भः तत् लब्ध्यक्षरं, तच्च ज्ञानं इन्द्रियमनोनिमित्तं श्रुतग्रन्थानुसारि तदाव[¶]रणक्षयोपशमो वा। अत्र च संज्ञाक्षरं व्यञ्जनाक्षरं च द्रव्याक्षरमुक्तं, श्रुतज्ञानाख्यभावाक्षरकारणत्वात्, लब्ध्यक्षरं तु भावाक्षरं. विज्ञानात्मकत्वादिति। तत्र अक्षरश्रुतमिति अक्षरात्मकं श्रुतं अक्षरश्रुतं, द्रव्याक्षराण्यधिकृत्य, अथवा अक्षरं च तत् श्रुतं च अक्षरश्रुतं, भावाक्षरमङ्गीकृत्य ॥ १९ ॥ उक्तमक्षरश्रुतं, इदानीमनक्षरश्रुतस्वरूपाभिधित्सयाह—

१ भाष्यमाणशब्दस्यैव व्यञ्जनाक्षरत्वादाह—अर्थाभीत्यादि, प्रत्येकं विभिन्नाक्षराणामर्थाभिव्यञ्जकत्वाभावात् २ लब्ध्यक्षराणि संज्ञाव्यञ्जनोभयरूपाण्याश्रित्य ३ न क्षरतीत्यादिव्युत्पत्त्या चेतनामाश्रित्य + प्रच्यवतीति. २-४ † इत्थभूतो ३ ‡ भावार्थ० २-४ § कुरण्टिस० १-२-४ कुरण्टिकास० २ ¶ वरणकर्म० १-२-३-४

ऊससिअं नीससिअं, निच्छूढं खासिअं च छीअं च । णीसिंघियमणुसारं, अणक्खरं छेलियाईअं ॥ २० ॥

व्याख्या—उच्छ्वसनं उच्छ्वसितं, भावे निष्ठाप्रत्ययः, तथा निःश्वसनं निःश्वसितं, निष्ठीवनं निष्ठ्यूतं, काशनं काशितं चशब्दः समुच्चयार्थः, क्षवणं क्षुतं, चशब्दः समुच्चयार्थ एव, अस्य च व्यवहितः संबन्धः, कथम् ? सेण्टितं चानक्षरश्रुतमिति वक्ष्यामः, निःसिङ्घनं निःसिङ्घितं, अनुस्वारवदनुस्वारं, †अनक्षरमपि यदनुस्वारवदुच्चार्यते हुङ्कारकरणादिवत् तत् 'अनक्षरमिति' एतदुच्छ्वसितादि अनक्षरश्रुतमिति, सेण्टनं सेण्टितं तत्सेण्टितं च अनक्षरश्रुतमिति । इह चोच्छ्वसितादि द्रव्यश्रुतमात्रं, ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं,तस्य तद्भावेन परिणतत्वात् । आह—यद्येवं किमित्युपयुक्तस्य चेष्टापि श्रुतं नोच्यते, ?येनोच्छ्वसिताद्येवोच्यते इति, अत्रोच्यते, रूढ्या, अथवा श्रूयत इति श्रुतं, अन्वर्थसंज्ञामधिकृत्य उच्छ्वसिताद्येव श्रुतमुच्यते, न चेष्टा, तदभावादिति, अनुस्वारादयस्तु अर्थगमकत्वादेव श्रुतमिति गाथार्थः ॥२०॥

उक्तमनक्षरश्रुतद्वारं, इदानीं 'संज्ञिद्वारं' तत्र संज्ञीति कः शब्दार्थः !, संज्ञानं संज्ञा, संज्ञाऽस्यास्तीति संज्ञी, स च त्रिविधः—दीर्घकालिकहेतुवाददृष्टिवादोपदेशाद्, यथा नन्द्यध्ययने तथैव द्रष्टव्यः, ततश्च संज्ञिनः श्रुतं संज्ञिश्रुतं,

१ आदिना सीत्कारपूत्काराद्याः २ घटपटादिपदवाच्यवाचकभावतया न परिणामीति मात्रग्रहण ३ सूचकत्वात ४ करचरणादिक्रियाया अपि विवक्षितार्थ सूचकत्वादाह ५ श्रुतोपयुक्तस्य ६ श्रवणव्यवहाररूपया शास्त्रशलोकप्रसिद्धया. ७ रूढौ विशेषाग्रहे आह—अथवेत्यादि ८ निरर्थकार्थशून्यनिरासेन ९ श्रवणलक्षणान्वर्थस्याभावात् १० आदिना सेण्टितमीत्काराद्या, उच्छ्वसितादीनामव्यक्तत्वाद् अनक्षरत्वमनुस्वारादीनां वर्णावयवत्वाद्विशेषदर्शनाय चेदम ११ यथोत्तरविशुद्धक्रमोल्लङ्घनेन ज्ञापितमाह 'सण्णित्ति असण्णित्ति य, सव्वसुए कालिओवएसेण' ( वि० ५२६ ) १२ ( नन्दीवृत्ति. ३८१ प० ) १३ दीर्घकालिकीसंज्ञया. • णीसंघिय० + २-३-४ नि सङ्घन १-४ † अक्षरमपि श्रुतज्ञानो०

तथा असंज्ञिनः श्रुतं असंज्ञिश्रुतमिति । तथा 'सम्यक्श्रुतं' अङ्गानङ्गप्रविष्टं आचारावश्यकादि । तथा 'मिथ्याश्रुतं' पुराणरामायणभारतादि, सर्वमेव वा दर्शनपरिग्रहविशेषात् सम्यक्श्रुतमितरद्वा इति । तथा 'साद्यमनाद्यं सपर्यवसितमपर्यवसितं च' †नयानुसारतोऽवसेयं, तत्र द्रव्यास्तिकनयादेशाद् अनाद्यपर्यवसितं च, नित्यत्वात्, अस्तिकायवत् । पर्यायास्तिकनयादेशात् ‡सादि सपर्यवसितं च, अनित्यत्वात्, नारकादिपर्यायवत् । अथवा द्रव्यादिचतुष्टयात् साद्यनाद्यादि अवगन्तव्यं, यथा नन्द्यध्ययने इति, खलुशब्द एवकारार्थः, स चावधारणे, तस्य च व्यवहितः संबन्धः, सप्तैव 'एते' श्रुतपक्षाः सप्रतिपक्षाः, न पक्षान्तरमस्ति, सतोऽत्रैवान्तर्भावात् । तथा गमा अस्य विद्यन्ते इति गमिकं, तच्च प्रायोवृत्त्या दृष्टिवादः । तथा गाथाद्यसमानग्रन्थं अगमिकं, तच्च प्रायः कालिकं । तथा अङ्गप्रविष्टं गणधरकृतं आचारादि, अनङ्गप्रविष्टं तु स्थविरकृतं आवश्यकादि, गाथाशेषमवधारणप्रयोगं दर्शयता व्याख्यातमेवेति गाथार्थः ॥ २० ॥ सत्पदप्ररूप-

१ स्वाभाविकसम्यक्त्वेतरत्वासम्भवादाह, अभ्यपूर्वचतुष्कं दशमस्य चरमभागश्च त्याज्य एव 'चउद्दसपुव्विस्स सम्मसुय अभिण्णदसपुव्विस्स सम्मसुय' तिनन्दीवचनात् २ सम्यग्मिथ्यादर्शनवजीवस्वीकारेण भेदात्. ३ सम्यग्दर्शनिनाम् ४ श्रुतवतो जीवद्रव्यस्य नित्यत्वात्, मुख्यमेव चासौ मनुते. ५ पर्यायाणां प्रतिक्षण क्षयभावात्, पर्यायमात्रावेक्षी चासौ ६ ( नन्दीवृत्तिः १९४ प० ) एकपुरुषभरतादिक्षेत्रोत्सर्पिण्यवसर्पिणीजिनभाषितभावप्ररूपणा आश्रित्य सादिसपर्यवसित नानापुरुषमहाविदेहनोऽउत्सर्पिण्यवसर्पिणीक्षायोपशमिकानाश्रित्य त्वन्यथा. ७ पर्यायाद्यैः ८ किञ्चिद्विशेषतो भूयो भूयस्तस्यैव सूत्रस्योच्चारणं गमः ९ 'स्थविरास्तु भद्रबाहुस्वाम्यादयस्तत्कृतमावश्यकनिर्युक्त्यादिकमनङ्गप्रविष्ट' ( विशेषा० ५५० वृत्तौ ) १० 'सत्तवि एए सपडिवक्खा' इत्येकाशीतिगाथासत्कं ११ खलुशब्दव्याख्याने, अपितु समानामपि प्रतिपक्षग्रहार्थं स्फुट एव * मिथ्यात्वश्रुतं २ + तु ३ † ०नुसारितो० ३-४ ‡ साद्यं २-३-४-५

णादि मतिज्ञानवदायोज्यं । प्रतिपादितं श्रुतज्ञानमर्थतः, साम्प्रतं विषयद्वारेण निरूप्यते, तच्चतुर्विधं—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः श्रुतज्ञानी सर्वद्रव्याणि जानीते न तु पश्यति, एवं क्षेत्रादिष्वपि द्रष्टव्यं । इदं पुनः श्रुतज्ञानं सर्वातिशयरत्नसमुद्रकल्पं, तथा प्रायो गुर्वायत्तत्वात् पराधीनं यतः अतः विनेयानुग्रहार्थं यो यथा चास्य लाभः तं तथा दर्शयन्नाह—

आगमसत्थग्गहणं, जं बुद्धिगुणेहि अट्ठहिं †दिट्ठं । बिंति सुयनाणलंभं, तं पुव्वविसारया धीरा ॥ २१ ॥

व्याख्या—आगमनं आगमः, आङः अभिविधिमर्यादार्थत्वाद् अभिविधिना मर्यादया वा गमः-परिच्छेद आगमः, स च केवलमत्यवधिमनःपर्यायलक्षणोऽपि भवति अतस्तद्व्यवच्छित्त्यर्थमाह—शिष्यतेऽनेनेति शास्त्रं-श्रुतं, आगमग्रहणं तु पण्डितन्त्रादिकुशास्त्रव्यवच्छेदार्थं, तेषामनागमत्वात्, सम्यक्परिच्छेदात्मकत्वाभावादित्यर्थः, शास्त्रतया च रूढत्वात्, ततश्च आगमश्चासौ शास्त्रं च आगमशास्त्रं तस्य ग्रहणमिति समासः, गृहीतिर्ग्रहणं, यद्बुद्धिगुणैः वक्ष्यमाणलक्षणैः करणभूतैः अष्टभिः, दृष्टं, ब्रुवते, श्रुतज्ञानस्य लाभः श्रुतज्ञानलाभस्तं, तदेव ग्रहणं, ब्रुवते, के ?, पूर्वेषु विशारदाः पूर्वविशारदाः, विशारदा विपश्चितः, ‡धीरा व्रतानुपालने स्थिरा इत्यय गाथार्थः ॥ २१ ॥ बुद्धिगुणैरष्टभिरित्युक्तं, ते चामी—

सुस्सूसइ पडिपुच्छइ, सुणेइ गिण्हइ य ईहए ¶यावि । तत्तो अपोहए §या, धारेइ करेइ वा सम्मं ॥ २२ ॥

व्याख्या—विनययुक्तो गुरुमुखात् श्रोतुमिच्छति $शुश्रूषति, ‖पुनः पृच्छति प्रतिपृच्छति तच्छ्रुतमशङ्कितं करोतीति भा-

१ तत्स्वरूपतद्भेदस्वरूपसत्प्ररूपणादिद्वारातिदेशव्याख्यानेन * प्ररूप्यते २-३ + चास्य २ † ०हि विदिट्ठं १-२-४-५ ‡ धीरा ३ ¶ आवि ३ § वा १-२-४-५ $ शुश्रूषते ५ ‖ पुन पुन ३-४

वार्थः, पुनः कथितं तच्छृणोति, श्रुत्वा गृह्णाति, गृहीत्वा चेहते पर्यालोचयति किमिदमित्थं उत अन्यथेति, चशब्दः समुच्चयार्थः, अपिशब्दात् पर्यालोचयन् किञ्चित् स्वबुद्ध्याऽपि उत्प्रेक्षते, 'ततः' तदनन्तरं 'अपोहते च' एवमेतत् यदादिष्टमाचार्येणेति, पुनस्तमर्थमागृहीतं धारयति, करोति च सम्यक् तदुक्तमनुष्ठानमिति, तदुक्तानुष्ठानमपि च श्रुतप्राप्तिहेतुर्भवत्येव, तदावरणकर्मक्षयोपशमादिनिमित्तत्वात्तस्येति । अथवा यद्यदाज्ञापयति गुरुः तत्तत् सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषति, पूर्वसंदिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः तत् सम्यक् शृणोति, शेषं पूर्ववदिति गाथार्थः ॥ २२ ॥ बुद्धिगुणा व्याख्याताः, तत्र +शुश्रूषतीत्युक्तं, इदानीं श्रवणविधिप्रतिपादनायाह—

मूअं हुंकारं वा, †बाढकारपडिपुच्छवीमंसा । तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥ २३ ॥

व्याख्या—'मूकमिति' मूकं शृणुयात्, एतदुक्तं भवति—प्रथमश्रवणे संयतगात्रः तूष्णीं खल्वासीत, तथा द्वितीये हुङ्कारं च दद्यात्, वन्दनं कुर्यादित्यर्थः, तृतीये‡ ¶बाढंकारं कुर्यात्, √बाढमेवमेतत् नान्यथेति, चतुर्थश्रवणे तु गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात् कथमेतदिति, पञ्चमे तु मीमांसां कुर्यात्, मातुमिच्छा मीमांसा प्रमाणजिज्ञासेतियावत्, ततः षष्ठे श्रवणे तदुत्तरोत्तरगुणप्रसङ्गः पा=रगमनं चास्य भवति, परिनिष्ठा सप्तमे श्रवणे भवति, एतदुक्तं भवति—गुरुवदनुभाषत एव सप्तमश्रवण इत्ययं गाथार्थः॥२३॥एवं तावच्छ्रवणविधिरुक्तः,इदानीं व्याख्यानविधिमभिधित्सुराह—

सुत्तत्थो खलु पढमो,बीओ ×निज्जुत्तिमीसओ भणिओ । तइओ य निरवसेसो,एस विही भणिअ अणुओगे॥२४॥

* तत्तत २-३-५ + शुश्रूषते ५ शुश्रूषत इत्युक्त ५ † बाढकार० १-२-४ ‡ बाढकार १-२ ¶ बाढकरं ४ √ ०मेवैतत् ५ = प्रसङ्गपारगमनं × मीसीओ

व्याख्या—सूत्रस्यार्थः सूत्रार्थः सूत्रार्थ एव केवलः प्रतिपाद्यते यस्मिन्ननुयोगे असौ सूत्रार्थ इत्युच्यते, सूत्रार्थमात्रप्रतिपादनप्रधानो वा सूत्रार्थः, खलुशब्दस्त्वेवकारार्थः, स चावधारणे, एतदुक्तं भवति—गुरुणा सूत्रार्थमात्राभिधानलक्षण एव प्रथमोऽनुयोगः *कार्यः, मा भूत् प्राथमिकविनेयानां मतिसंमोहः, 'द्वितीयः' अनुयोगः सूत्रस्पर्शिकनिर्युक्तिमिश्रकः कार्य इत्येवंभूतो भणितो जिनैश्चतुर्दशपूर्वधरैश्च 'तृतीयश्च निरवशेषः' प्रसक्तानुप्रसक्तमप्युच्यते यस्मिन् स एवंलक्षणो निरवशेषः, कार्य इति, स 'एष' उक्तलक्षणो विधानं विधिः प्रकार इत्यर्थः, भणितः प्रतिपादितः जिनादिभिः, क ?, सूत्रस्य निजेन अभिधेयेन सार्धं अनुकूलो योगः अनुयोगः †सूत्रव्याख्यानमित्यर्थः, तस्मिन्ननुयोगेऽनुयोगविषय इति, अयं गाथार्थः ॥ २४ ॥ समाप्तं श्रुतज्ञानम् ॥ उक्तप्रकारेण श्रुतज्ञानस्वरूपमभिहितं, साम्प्रतं प्रागभिहितप्रस्तावमवधिज्ञानमुपदर्शयन्नाह—

संखाईआओ खलु, ओहीनाणस्स सव्वपयडीओ । काओ भवपच्चइया, खओवसमिआओ काओऽवि ॥२५॥

व्याख्या—संख्यानं संख्या तामतीताः संख्यातीता असंख्येया इत्यर्थः, तथा संख्यातीतमनन्तमपि भवति, ततश्चानन्ता अपि, तथा च खलुशब्दो विशेषणार्थः, किं विशिनष्टि ?—क्षेत्रकालाख्यप्रमेयापेक्षयैव संख्यातीताः, द्रव्यभावाख्य-

१ उपोद्घातनिक्षेपनिर्युक्त्योः कथञ्चिदपि चित्प्रतिपादनसंभवात् २ नूतनशिष्याणां अपरिचितज्ञानां बालानां ३ टीकाचूर्ण्यादिरूपः, प्रथमे संहितापदलक्षणः मध्ये पदार्थपदविग्रहचालनाप्रत्यवस्थानादिरूपः तृतीयस्मिंस्तु अर्थापत्तिप्रभृतिगम्य इत्यर्थः ४ सर्वश्रुतप्रतिव्याख्यानाशक्यत्वेन चतुर्दशविधनिक्षेपवर्णनप्रतिज्ञातरूपेण ५ स्थित्यादिसाधर्म्यरूपः ६ संख्यानमपेक्ष्य सामान्ये वा नपुंसकं ७ सतोरप्यनन्तयोरनयोरवधिज्ञानविषयापेक्षयाऽद° * कर्त्तव्य + ०स्पर्शक०२-४-५ † सूत्रार्थव्या० १ सूत्रान्वा० २-४-५

ज्ञेयापेक्षया चानन्ता इति, 'अवधिज्ञानस्य' प्राग्निरूपितशब्दार्थस्य, सर्वाश्च ताः प्रकृतयश्च सर्वप्रकृतयः, प्रकृतयो भेदा अंशा इति पर्याया, एतदुक्तं भवति—यस्मादवधेः लोकक्षेत्रासंख्येयभागादारभ्य प्रदेशवृद्ध्या असंख्येयलोकपरिमाणं उत्कृष्टं आलम्बनतया क्षेत्रमुक्तं, कालश्चावलिकाऽसंख्येयभागादारभ्य समयवृद्ध्या खल्वसंख्येयोत्सर्पिण्यवसर्पिणीप्रमाण उक्तः, ज्ञेयभेदाच्च ज्ञानभेद इत्यतः संख्यातीताः तत्प्रकृतयः इति, तथा तैजसवाग्द्रव्यापान्तरालवर्त्त्यनन्तप्रदेशकाद् द्रव्यादारभ्य विचित्रवृद्ध्या सर्वमूर्त्तद्रव्याणि उत्कृष्टं विषयपरिमाणमुक्तं, प्रतिवस्तुगतासंख्येयपर्यायविषयमानं च इति, अतः †पुद्गलास्तिकायं तत्पर्यायांश्चाङ्गीकृत्य ज्ञेयभेदेन ‡ज्ञानभेदादनन्ताः प्रकृतय इति, आसां च मध्ये 'काश्चन' अन्यतमाः 'भवप्रत्यया' भवन्ति अस्मिन् कर्मवशवर्त्तिनः प्राणिन इति भवः, स च नारकादिलक्षणः, स एव प्रत्ययः—कारणं यासां ताः भवप्रत्ययाः, पक्षिणां गगनगमनवत्, ताश्च नारकामराणामेव, तथा गुणपरिणामप्रत्ययाः क्षयोपशमनिर्वृत्ताः क्षायोपशमिकाः काश्चन, ताश्च तिर्यङ्नराणामिति । आह—क्षायोपशमिके भावेऽवधिज्ञानं प्रतिपादितं, नारकादिभवश्च औदयिकः, स कथं तासां प्रत्ययो भवतीति, अत्रोच्यते, ता अपि क्षयोपशमनिबन्धना एव, किं तु असावेव क्षयोपशमः तस्मि-

१ लोकशब्देन पञ्चास्तिकायस्य क्षेत्रशब्देन चानन्ताकाशस्य बोधसंभवादुक्तं लोकक्षेत्रेति लोक एवारम्भाद्वा २ एतावतो लोकक्षेत्रस्यासंभवादुक्तं क्षेत्रेति सामान्येन, सामर्थ्यापेक्षं चेदं, न तु तावति क्षेत्रे दृश्यं, विहाय लोकं जीवपुद्गलयोरनवस्थानात्, फलं तु लोके सूक्ष्मसूक्ष्मतरार्थज्ञानं ३ उत्कर्षतः प्रतिद्रव्यमसंख्येयान्, न तु कदाचनाप्यनन्तान् 'नाणन्ते पेच्छइ कयाइ' त्ति भाष्योक्तेः, जघन्यतस्तु संख्येयानसंख्येयांश्च प्रतिद्रव्यं जानाति, परं वक्ष्यमाणत्वाद्विना नोक्तं ४ भवप्रत्ययावधिप्रकृतयः * ०वर्तिनोऽनन्त० ५ + प्रदेशिकाद् १-३-५ † कार्यास्त०५० ‡ ०भेदे च १-२-४-५.

नारकामरभवे सति अवश्यं भवतीतिकृत्वा भवप्रत्ययास्ता इति गाथार्थः ॥ २५ ॥ साम्प्रतं सामान्यरूपतया उद्दिष्टानां अवधिप्रकृतीनां वाचः क्रमवर्त्तित्वाद् आयुषश्चाल्पत्वात् यथावद्भेदेन प्रतिपादनसामर्थ्यमात्मनोऽपश्यन्नाह सूत्रकारः—

**कत्तो मे वण्णेउं, सत्ती ओहिस्स सव्वपयडीओ ? । चउदसविहनिक्खेवं, इड्डीपत्ते य वोच्छामि ॥ २६ ॥**

व्याख्या—कुतो ? 'मे' मम, वर्णयितुं शक्तिः अवधेः सर्वप्रकृतीः?, आयुषः परिमितत्वाद् वाचः क्रमवृत्तित्वाच्च, तथापि विनेयगणानुग्रहार्थं, चतुर्दशविधश्चासौ निक्षेपश्चेति समासः, तं अवधेः संबन्धिनं, आमर्षौषध्यादिलक्षणा प्राप्ता ऋद्धिर्यैस्ते प्राप्तर्धयः तांश्च, इह गाथाभङ्गभयाद्व्यत्ययः, अन्यथा निष्ठान्तस्य पूर्वनिपात एव भवति बहुव्रीहाविति, चशब्दः समुच्चयार्थः, 'वक्ष्ये' अभिधास्य इति गाथार्थः ॥ २६ ॥ यदुक्तं 'चतुर्दशविधनिक्षेपं वक्ष्ये' इति, तं प्रतिपादयंस्तावद्द्वारगाथाद्वयमाह—

**ओही १ खित्तपरिमाणे, २ संठाणे ३ आणुगामिए ४ । अवट्ठिए ५ चले ६ तिव्वमन्द ७ पडिवाउप्पयाइ ८ अ ॥२७॥**
**नाण ९ दंसण १० विब्भंगे ११, देसे १२ खित्ते १३ गई १४ इअ । इड्ढीपत्ताणुओगे य, एमेआ पडिवत्तिओ ॥२८॥**

व्याख्या—तत्र अवध्यादीनि गतिपर्यन्तानि चतुर्दश द्वाराणि, ऋद्धिस्तु चसमुच्चितत्वात् पञ्चदशं । अन्ये त्वाचार्या अवधिरित्येतत्पदं परित्यज्य आनुगामुकमनानुगामुकरहितं अर्थतोऽभिगृह्य चतुर्दश द्वाराणि व्याचक्षते, यस्मात् नावधिः प्रकृतिः, किं तर्हि ?, अवधेरेव प्रकृतयः चिन्त्यन्ते, यतश्च प्रकृतीनामेव चतुर्दशधा निक्षेप उक्त इति । पक्षद्वयेऽपि अवि-

१ कारणकारणे कारणत्वोपचारात, प्रयोजन तु तद्द्वयनान्तरीयकताज्ञापनं, अन्यथासिद्धत्वं त्ववश्यक्लृप्तत्वान्नात्र २ सत्ताईआओ खलु ओहीनाणस्स सव्वपयडीओ' त्ति पूर्वार्धेन ३ षड्विंशतितमगाथाया 'चउद्दसविहनिक्खेव इड्डीपत्ते य' इत्यत्र चशब्दोक्तसमुच्चयार्थस्त्वाद्यशब्दसमुच्चयम * गए ४ + इआ

रोध इति । तत्र 'अवधिरिति' अवधेर्नामादिभेदभिन्नस्य स्वरूपमभिधातव्यं, तथा अवधिशब्दो द्विरावर्त्यते इति व्याख्यातमिति । तथा 'क्षेत्रपरिमाण' इति क्षेत्रपरिमाणविषयोऽवधिर्वक्तव्यः, एवं संस्थानविषय इति । अथवा 'अर्थाद्विभक्तिपरिणाम' इति द्वितीयैवेयं, ततश्च अवधेर्जघन्यमध्यमोत्कृष्टभेदभिन्नं क्षेत्रप्रमाणं वक्तव्यं । तथा संस्थानमवधेर्वक्तव्यम् । 'आनुगामुक इति द्वारं' अनुगमनशील आनुगामुकः, सविपक्षोऽवधिर्वक्तव्यः, एकारान्तः शब्दः प्रथमान्त इतिकृत्वा, यथा 'कयरे आगच्छइ' ( उत्तरा० अ० १२ गा० ६ ) इत्यादि । तथा अवस्थितोऽवधिर्वक्तव्यः, द्रव्यादिषु कियन्तं कालं अप्रतिपतितः सन्नुपयोगतो लब्धितश्चावस्थितो भवति । तथा चलोऽवधिर्वक्तव्यः, चलोऽनवस्थितः, स च वर्धमानः क्षीयमाणो वा भवति । तथा 'तीव्रमन्दाविति द्वारं' तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः, तत्र तीव्रो विशुद्धः, मन्दश्चाविशुद्धः, तीव्रमन्दस्तूभयप्रकृतिरिति । 'प्रतिपातोत्पादाविति द्वारं' एककाले द्रव्याद्यपेक्षया प्रतिपातोत्पादाववधेर्वक्तव्यौ ॥ २७ ॥ द्वितीयगाथाव्याख्या—तथा 'ज्ञानदर्शनविभङ्गा' वक्तव्याः, किमत्र ज्ञानं ? किं वा दर्शनं ? को वा विभङ्गः ? परस्परतश्चामीषां अल्पबहुत्वं चिन्त्यमिति । तथा 'देशद्वारं' कस्य देशविषयः सर्वविषयो वाऽवधिर्भवतीति वक्तव्यम् । 'क्षेत्रद्वारं' क्षेत्रविषयोऽवधिर्वक्तव्यः, संबद्धासंबद्धसंख्येया संख्येयापान्तराललक्षणक्षेत्रावधिद्वारेणेत्यर्थः । 'गतिरिति च' अत्र इतिशब्द आद्यर्थे द्रष्टव्यः, ततश्च गत्यादि च द्वारजालमवधौ वक्तव्यमिति । तथा प्राप्तर्द्ध्यनुयोगश्च कर्त्तव्यः, अनु-

१ तत्रावध्यादीनीत्यत्र व्याख्यातमर्थत, ततश्चाग्रेतनेषु अवधिपदयोजना, टिप्पनके अन्ये त्वाचार्या इत्यत्रेतिव्याख्यात, अत्र वाऽऽवृत्तिस्तथा च प्रथमान्तता प्रकृतित्वे क्षेत्रपरिमाणादौ योज्यतयेति च २ प्रतिपत्तिरित्यर्थ, अन्यमतापेक्षयाऽद, व्याख्यान घात तन्मतसत्क * अर्थवशात् ५–६

योगोऽन्वाख्यानं, एवमनेन प्रकारेण 'एता' अनन्तरोक्ताः 'प्रतिपत्तयः' प्रतिपादनानि, प्रतिपत्तयः परिच्छित्तय इत्यथः, ततश्चावधिप्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय इत्युच्यन्त इति गाथाद्वयसमुदायार्थः ॥ २८ ॥ साम्प्रतमनन्तरोक्तद्वारगाथाद्वयाद्यद्वारव्याचिख्यासयेदमाह—

**नामं ठवणादविए, खित्ते काले भवे य भावे य । एसो खलु निक्खेवो ओहिस्सा होइ सत्तविहो ॥ २९ ॥**

व्याख्या—तत्र नाम पूर्वं निरूपितं, नाम च तदवधिश्च नामावधिः, यस्यावधिरिति नाम क्रियते, यथा मर्यादायाः । तथा स्थापना चासाववधिश्च स्थापनावधिः, अक्षादिविन्यासः । अथवा अवधिरेव च यदभिधानं वचनपर्यायः स नामावधिः, स्थापनावधिर्यः खलु आकारविशेषः तत्तद्द्रव्यक्षेत्रस्वामिनामिति । तथा द्रव्येऽवधिर्द्रव्यावधिः, द्रव्यालम्बन इत्यर्थः । अथवाऽयं एकारान्तः शब्दः प्रथमान्त इतिकृत्वा द्रव्यमेवावधिर्द्रव्यावधिः, भावावधिकारणं द्रव्यमित्यर्थः, यद्वोत्पद्यमानस्योपकारकं शरीरादि तदवधिकारणत्वाद् द्रव्यावधिः । तथा क्षेत्रेऽवधिः क्षेत्रावधिः, अथवा यत्र क्षेत्रेऽवधिरुत्पद्यते तदेवावधेः कारणत्वात् क्षेत्रावधिः, प्रतिपाद्यते वा । तथा कालेऽवधिः, कालावधिः अथवा यस्मिन् काले अवधिरुत्पद्यते कथ्यते वा स कालावधिः, भवनं भवः, स च नारकादिलक्षणः, तस्मिन् भवेऽवधिर्भवावधिः । भावः क्षायोपशमिकादिः द्रव्यपर्यायो वा, तस्मिन्नवधिः भावावधिः, चशब्दौ समुच्चयार्थौ, 'एषः' अनन्तरव्यावर्णितः, खलुशब्दः एवका-

१ अवधिर्यत्र क्षेत्रे व्याख्यायते स क्षेत्रावधिरित्यर्थ * अवधेरेव १–५ + तद्द्र० १–२–३ † भावावधे का० ५ ‡ ०वध्यधिकरणत्वात् ८ एव.

रार्थः, स चावधारणे, एष एव, नान्यः, निक्षेपणं निक्षेपः, अवधेर्भवति 'सप्तविधः' सप्तप्रकार इति गाथार्थः ॥ २९ ॥ इदानीं *क्षेत्रपरिमाणाख्यद्वितीयद्वारावयवार्थाभिधित्सयाऽऽह—

**जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स । ओगाहणा जहण्णा, ओहीखित्तं जहण्णं तु ॥ ३० ॥**

व्याख्या—तत्र क्षेत्रपरिमाणं जघन्यमध्यमोत्कृष्टभेदभिन्नं भवति, यतश्च प्रायो जघन्यमादौ अतस्तदेव तावत्प्रतिपाद्यते—'यावती' यत्परिमाणा, त्रीन्समयान् आहारयतीति त्रिसमयाहारकस्तस्य, सूक्ष्मनामकर्मोदयात् सूक्ष्मः तस्य, पनकश्चासौ जीवश्च पनकजीवः वनस्पतिविशेष इत्यर्थः, तस्य, अवगाहन्ति यस्यां प्राणिनः सा अवगाहना तनुरित्यर्थः, 'जघन्या' सर्वस्तोका, अवधेः क्षेत्रं अवधिक्षेत्रं, 'जघन्यं' सर्वस्तोकं, तुशब्द एवकारार्थः, स चावधारणे, तस्य चैवं प्रयोगः—अवधेः क्षेत्रं जघन्यमेतावदेवेति गाथाक्षरार्थः । अत्र च संप्रदायसमधिगम्योऽयमर्थः—

**योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्मः, पनकत्वेनेह स ग्राह्यः ॥ १ ॥**
**संहृत्य चाद्यसमये, स ह्या[१]यामं करोति च प्रतरम् । संख्यातीताख्याङ्गुलविभागबाहुल्यमानं तु ॥ २ ॥**
**स्वकतनुपृथुत्वमात्रं, दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये, संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥**
**संख्यातीताख्याङ्गुलविभागविष्कम्भमाननिर्दिष्टाम् । निजतनुपृथुत्वदैर्घ्यां, तृतीयसमये तु संहृत्य ॥ ४ ॥**

१ आयामस्तु प्रमाण स्वादित्युक्तेर्बाहल्यस्वरूपप्रमाणसकोचइति तथाचाङ्गुलासंख्यभागबाहल्योक्तिर्न विरोधापहा २ तिर्यक् ३ ऊर्ध्वाध० ४ दैर्घ्यरूप० विस्तृति पृथुत्व *०भिधित्सुराह २-४ + यावत्परि० † ०बाहल्य० ‡ दीर्घा ४-५-६

**उत्पद्यते च पनकः, स्वदेहदेशे स सूक्ष्मपरिणामः । समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥**
**तावज्जघन्यमवधेरालम्बनवस्तुभाजनं क्षेत्रम् । इदमित्थमेव मुनिगणसुसंप्रदायात् समवसेयम् ॥ ६ ॥ पञ्चभिः कुलकम्**

अत्र कश्चिदाह—किमिति महामत्स्यः ? किं वा तस्य तृतीयसमये निजदेहदेशे समुत्पादः ? त्रिसमयाहारकत्वं वा कल्प्यत इति ?, अत्रोच्यते, स एव हि महामत्स्यः त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति, नान्यः, प्रथमद्वितीयसमययोश्च अतिसूक्ष्मः चतुर्थादिषु चातिस्थूरः त्रिसमयाहारक एव च तद्योग्य इत्यतस्तद्ग्रहणमिति । अन्ये तु व्याचक्षते—त्रिसमयाहारक इति, आयामविष्कम्भसंहारसमयद्वयं सूचिसंहरणोत्पादसमयश्चेत्येते त्रयः समयाः, विग्रहाभावाच्चाहारक एतेषु, इत्यत उत्पादसमय एव त्रिसमयाहारकः सूक्ष्मः पनकजीवो जघन्यावगाहनश्च, अतस्तत्प्रमाणं जघन्यमवधिक्षेत्रमिति, एतच्चायुक्तं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयायोगात्, त्रिसमयाहारकत्वाख्यविशेषणानुपपत्तिप्रसङ्गात् इति, अलं प्रसङ्गेनेति गाथार्थः ॥ ३० ॥ एवं तावत् जघन्यमवधिक्षेत्रमुक्तं, इदानीं उत्कृष्टमभिधातुकाम आह—

**सव्वबहुअगणिजीवा, निरन्तरं जत्तियं भरिज्जंसु । खित्तं सव्वदिसागं, परमोही खित्त निद्दिट्ठो ॥ ३१ ॥**

व्याख्या—सर्वेभ्यो विवक्षितकालावस्थायिभ्योऽनलजीवेभ्य एव बहवः सर्वबहवः, न भूतभविष्यद्भ्यः, नापि शेषजीवेभ्यः, कुतः ?, असंभवात्, अग्नयश्च ते जीवाश्च अग्निजीवाः, सर्वबहवश्च तेऽग्निजीवाश्च सर्वबह्वग्निजीवाः, 'निरन्तरं' इति क्रिया-

* भरिज्जसु १-४-५

विशेषणं 'यावत्' यावत्परिमाणं 'भृतवन्तो' व्याप्तवन्तः 'क्षेत्रं' आकाशं, एतदुक्तं भवति—नैरन्तर्येण विशिष्ट[१]सूचीरचनया यावत् भृतवन्त इति । भूतकालनिर्देशश्च अजितस्वामिकाल एव प्रायः सर्वबहवोऽनलजीवा भवन्ति अस्यामवसर्पिण्यां इत्यस्यार्थस्य ख्यापनार्थः, इदं चानन्तरोदितविशेषणं क्षेत्रमेकदिक्कमपि भवति, अत आह—'सर्वदिक्कं' अनेन सूचीपरिभ्रमणप्रमितमेवाह, परमश्चासाववधिश्च परमावधिः, 'क्षेत्रं' अनन्तरव्यावर्णितं प्रभूतानलजीवमितमङ्गीकृत्य निर्दिष्टः क्षेत्रनिर्दिष्टः, प्रतिपादितो गणधरादिभिरिति, ततश्च [२]पर्यायेण परमावधेरेतावत्क्षेत्रमित्युक्तं भवति । अथवा[३] सर्वबह्वग्निजीवा निरन्तरं यावद् भृतवन्तः क्षेत्रं सर्वदिक्कं एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमङ्गीकृत्य निर्दिष्टो, भावार्थस्तु पूर्ववदेव, अयमक्षरार्थः । इदानीं साम्प्रदायिकः प्रतिपाद्यते—तत्र सर्वबह्वग्निजीवा बादराः प्रायोऽजितस्वामितीर्थकरकाले भवन्ति, तदारम्भकपुरु[४]षबाहुल्यात्, सूक्ष्मा[५]श्चोत्कृष्टपदिनस्तत्रै[६]वावरुध्यन्ते, ततश्च सर्वबहवो भवन्ति । तेषां च स्वबुद्ध्या षोढाऽवस्थानं कल्प्यते—एकैकक्षेत्रप्रदेश एकैकजीवा[७]वगाहनया सर्वतश्चतुरस्रो घनः प्रथमं, स एव जीवः स्वावगाहनया द्वितीयं, एवं प्रतरोऽपि द्विभेदः, श्रेण्यपि द्विभेदा, तत्र आद्याः पञ्च प्रकारा अनादेशाः, क्षेत्रस्याल्पत्वात् कञ्चित्समयविरोधाच्च, षष्ठः प्रकारस्तु सूत्रादेश इति, ततश्चासौ श्रेणी अवधिज्ञानिनः सर्वासु दिक्षु शरीर-

१ अग्निशरीरावगाहनारचनया २ रूपान्तरेण ३ अत्र पक्षे अनलजीवमितक्षेत्रस्थितद्रव्यपरिच्छेदशक्ति ४ मनुष्यार्थपर पुरुषपदं ५ अनन्तानन्तास्ववसर्पिणीषु कस्मिंश्चिदेव द्वितीयतीर्थंकरकाले एते, तदानींतना एवोत्कृष्टा बादरा ग्राह्या, ६ बादरजीवमाने क्षिप्यन्त इति ७ एकैकस्मिन्प्रदेशे एकैकजीवस्थापने ऽल्पं, ८ शरीरद्वारेणयं ९ असंख्याकाशप्रदेशानन्तरेणावगाहनाऽभावात् इति मलधारिहेमचन्द्रपादाः ।

पर्यन्तेन भ्राम्यते, सा च असंख्येयान् अलोके लोकमात्रान् क्षेत्रविभागान् व्याप्नोति, एतावदवधिक्षेत्रं उत्कृष्टमिति, सामर्थ्यमङ्गीकृत्यैवं प्ररूप्यते, एतावति क्षेत्रे यदि द्रष्टव्यं भवति तदा पश्यति न त्वलोके द्रष्टव्यमस्ति इति गाथार्थः ॥३१॥ एवं तावज्जघन्यमुत्कृष्टं चावधिक्षेत्रमभिहितं, इदानीं विमध्यमप्रतिपिपादयिषया एतावत्क्षेत्रोपलम्भे चैतावत्कालोपलम्भः, तथा एतावत्कालोपलम्भे चैतावत्क्षेत्रोपलम्भ इत्यस्यार्थस्य प्रदर्शनाय चेदं गाथाचतुष्टयं जगाद शास्त्रकारः—

**अंगुलमावलियाणं, भागमसंखिज्ज दोसु संखिज्जा । अंगुलमावलिअंतो, आवलिआ अंगुलपुहुत्तं ॥ ३२ ॥**
**हत्थंमि मुहुत्तन्तो, दिवसंतो गाउयंमि बोद्धव्वो । जोयण दिवसपुहुत्तं, पक्खन्तो पण्णवीसाओ ॥ ३३ ॥**
**भरहंमि अद्धमासो, जंबूदीवंमि साहिओ मासो । वासं च मणुअलोए, वासपुहुत्तं च रुयगंमि ॥ ३४ ॥**
**संखिज्जंमि उ काले, दीवसमुद्दावि हुंति संखिज्जा । कालंमि असंखिज्जे, दीवसमुद्दा उ भइयव्वा ॥ ३५ ॥**

प्रथमगाथाव्याख्या—'अङ्गुलं' क्षेत्राधिकारात् प्रमाणाङ्गुलं गृह्यते, अवध्यधिकाराच्च उच्छ्रयाङ्गुलमित्येके, 'आवलिका' असंख्येयसमयसंघातोपलक्षितः कालः, उक्तं च—"असंखिज्जाणं समयाणं समुदयसमितिसमागमेणं सा एगा आवलियत्ति वुच्चति' अङ्गुलं चावलिका च अङ्गुलावलिके तयोरङ्गुलावलिकयोः, 'भागं' अंशं असंख्येयं पश्यति अवधिज्ञानी, एतदुक्तं भवति-क्षेत्रमङ्गुलासंख्येयभागमात्रं पश्यन् कालतः आवलिकाया असंख्येयमेव भागं पश्यत्यतीतमनागतं चेति, क्षेत्रकालदर्शनं

१ रूपिविषयत्वादवधेरलोके च तादृशद्रव्याभावादसभवाभिधानतादोषनिराकरणायाह २ लोके तु सूक्ष्मसूक्ष्मतरादिवस्तुदर्शनेन सामर्थ्यवृद्धि ( विशेषावश्यके गाथा ६०६ ) ३ म्वापेक्षितजघन्यमध्यमोत्कृष्टत्वात् ४ असंख्येयाना समयाना समुदयसमितिसमागमेन सैकाऽऽवलिकेत्युच्यते ( अनुयोगद्वारवृत्ति ४३० प० ) ५ क्षेत्रकालयोररूपित्वादवधेश्च रूपिविषयत्वादाह

चोपचारेणोच्यते, अन्यथा हि क्षेत्रेऽव्यवस्थितानि दर्शनयोग्यानि द्रव्याणि तत्पर्यायांश्च विवक्षितकालान्तरवर्त्तिनः पश्यति, न तु क्षेत्रकालौ, मूर्त्तद्रव्यालम्बनत्वात्तस्येति । एवं सर्वत्र भावना द्रष्टव्या, क्रिया च गाथाचतुष्टयेऽप्यध्याहार्या, तथा 'द्वयोः' अङ्गुलावलिकयोः संख्येयौ भागौ पश्यति, अङ्गुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः संख्येयमेव भागं पश्यतीत्यर्थः, तथा अङ्गुलं पश्यन् क्षेत्रतः आवलिकान्तः पश्यति, भिन्नामावलिकामित्यर्थः, तथा कालतः आवलिकां पश्यन् क्षेत्रतोऽङ्गुलपृथक्त्वं पश्यति, पृथक्त्वं हि द्विप्रभृतिरा नवभ्यः इति प्रथमगाथार्थः ॥ ३२ ॥ द्वितीयगाथाव्याख्या—'हस्ते' इति हस्तविषयः क्षेत्रतोऽवधिः कालतो मुहूर्त्तान्तः पश्यति, भिन्नं मुहूर्त्तमित्यर्थः, अवध्यवधिमतोरभेदोपचाराद् अवधिः पश्यतीत्युच्यते, तथा कालतो 'दिवसान्तो' भिन्नं दिवसं पश्यन् क्षेत्रतो 'गव्यूतं' इति गव्यूतविषयो वोद्धव्यः, तथा योजनविषयः क्षेत्रतोऽवधिः कालतो दिवसपृथक्त्वं पश्यति, तथा, 'पक्षान्तो' भिन्नं पक्षं पश्यन् कालतः क्षेत्रतः पञ्चविंशति योजनानि पश्यतीति द्वितीयगाथार्थः ॥३३॥ तृतीयगाथा व्याख्यायते—'भरते' इति भरतक्षेत्रविषये अवधौ कालतो ऽर्धमास उक्तः, एवं जम्बूद्वीपविषये चावधौ साधिको मासः, वर्षं च मनुष्यलोकविषयेऽवधौ इति, मनुष्यलोकः खल्वर्धतृतीयद्वीपसमुद्रपरिमाणः, वर्षपृथक्त्वं च

१ उपचाराभावेऽनिष्टता दर्शयति इत तस्येतीत्यन्तेन २ विवक्षितेति ३ विवक्षितक्षेत्रस्थितद्रव्यपर्यायान्, कालज्ञाव्याख्यानायेदम् ४ अवधे प्रत्यक्षत्वात् न साक्षात्पश्यतीति ५ न्यूना समयादिना ६ अन्यत्र द्वितीयान्त पदमिति कर्मतोपपत्ति, अत्र तु सप्तम्यन्तत्वाद्धस्तप्रमाणक्षेत्रस्थितद्रव्यदर्शनममर्थोऽत्र निर्ग्राह्य इत्युपचारहेतु, अत्रेऽपीदृशे स्थले ७ अर्धमासशब्दस्य प्रथमान्तत्वात् नात्रोपचारेण व्याख्यानं हस्त इत्यत्रेव, किन्तु सतिसप्तम्यन्ततया ८ आ मानुषोत्तरात्, मनुष्याणा गमागमेऽपि रुचकादिषु न ते तज्जन्मादिस्थान * पक्षान्त १-२

रुचकाख्यबाह्यद्वीपविषयेऽवधाववगन्तव्यमिति तृतीयगाथार्थः॥३४॥चतुर्थगाथा व्याख्यायते—संख्यायत इति संख्येयः,स च संवत्सरलक्षणोऽपि भवति, तुशब्दो विशेषणार्थः, किं विशिनष्टि?—संख्येयो वर्षसहस्रात्परतोऽभिगृह्यते इति, तस्मिन् संख्येये, 'काले' कलनं कालः तस्मिन् काले अवधिगोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया,द्वीपाश्च समुद्राश्च द्वीपसमुद्रा अपि भवन्ति संख्येयाः, अपिशब्दान्महानेकोऽपि तदेकदेशोऽपीति, तथा काले असंख्येये पल्योपमादिलक्षणेऽवधिविषये सति, तस्यैव असंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेद्यतया द्वीपसमुद्राश्च 'भक्तव्या' विकल्पयितव्याः, कदाचिदसंख्येया एव, यदा इह कस्यचिन्मनुष्यस्य असंख्येयद्वीपसमुद्रविषयोऽवधिरुत्पद्यते इति, कदाचिन्महान्तः संख्येयाः कदाचिद् एकः, कदाचिदेकदेशः स्वयम्भूरमणतिर्यश्चोऽवधेः विज्ञेयः स्वयम्भूरमणविपर्यमनुष्यबाह्यावधेर्वा, योजनापेक्षया च सर्वपक्षेषु असंख्येयमेव क्षेत्रमिति गाथार्थः ॥३५॥ एवं तावत् परिस्थूरन्यायमङ्गीकृत्य क्षेत्रवृद्ध्या कालवृद्धिरनियता कालवृद्ध्या च क्षेत्रवृद्धिः प्रतिपादिता, साम्प्रतं द्रव्यक्षेत्रकालभावापेक्षया यद्वृद्धौ यस्य वृद्धिर्भवति यस्य वा न भवति अमुमर्थमभिधित्सुराह—

**काले चउण्ह वुड्ढी, कालो भइयव्वु खित्तवुड्ढीए । वुड्ढीइ दव्वपज्जव, भइयव्वा खित्तकाला उ ॥ ३६ ॥**

१ अनुयोगद्वारसूत्राभिप्रायेणैकादशे तच्चूर्ण्यभिप्रायेण तु त्रयोदशे २ यावत् शीर्षप्रहेलिकेति ज्ञेय, अत एव संख्यायत इति संख्येय इति व्युत्पत्ति, सव्यवहार्या च तावत्येव संख्या ३ अभ्यन्तरावध्यपेक्षया ४ तिर्यग्लोकमध्यभागगता ५ असंख्येययोजनविस्तृत ६ स्वयम्भूरमणादे ७ अतिविस्तृतत्वात्तस्य ८ आत्मन्यसबद्धत्वात् ९ न द्वीपसमुद्रापेक्षयेति १० नियतेति शेष, क्षेत्रस्य प्रदेशानुसारेण वृद्धौ कालस्य न समयानुसारेण वृद्धि, अङ्गुलमात्रे नभ खण्डेऽसंख्येयोत्सर्पिण्यवसर्पिणीभावात्, अत्र तु न विरोध इति नियता वृद्धि, अत एव परिस्थूरेति प्राग्विमध्यमेति च भणने सगति, यथावत्तया क्षेत्रकालवृद्धिग्राह्यभावात् चतुर्णा समप्रमाणमाश्रित्येति वा * तमर्थं० ५-६ + भइयव्व ४

व्याख्या—'काले' अवधिज्ञानगोचरे, वर्धमान इति गम्यते, 'चतुर्णां' द्रव्यादीनां वृद्धिर्भवति, सामान्याभिधानात्, कालस्तु 'भक्तव्यः' विकल्पयितव्यः, क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिः तस्यां क्षेत्रवृद्धौ सत्यां, कदाचिद्वर्धते कदाचिन्नेति, कुतः ?- क्षेत्रस्य सूक्ष्मत्वात् कालस्य च परिस्थूरत्वादिति, द्रव्यपर्यायौ तु वर्धेते, सप्तम्यन्तता चास्य "ए होति अयारन्ते, पयंमि विइयाए बहुसु पुंलिङ्गे । तइयाइसु छट्ठीसत्तमीण एगंमि महिलत्थे ॥ १ ॥" अस्माल्लक्षणात् सिध्यति, एवमन्यत्रापि प्राकृतशैल्या इष्टविभक्त्यन्तता पदानामवगन्तव्येति, तथा वृद्धौ च द्रव्यं च पर्यायश्च द्रव्यपर्यायौ तयोः वृद्धौ सत्यां 'भक्तव्यौ' विकल्पनीयौ क्षेत्रकालावेव, तुशब्दस्य एवकारार्थत्वात्, कदाचिदनयोर्वृद्धिर्भवति कदाचिन्नेति, द्रव्यपर्याययोः सकाशात् परिस्थूरत्वात् क्षेत्रकालयोरिति भावार्थः, द्रव्यवृद्धौ तु पर्याया वर्द्धन्त एव, पर्यायवृद्धौ च द्रव्यं भाज्यं, द्रव्यात् पर्यायाणां सूक्ष्मतरत्वात् अक्रमवर्त्तिनामपि च वृद्धिसंभवात् कालवृद्ध्यभावो भावनीय इति गाथार्थः ॥ ३६ ॥ अत्र कश्चिदाह—जघन्यमध्यमोत्कृष्टभेदभिन्नयोः अवधिज्ञानसंबन्धिनोः क्षेत्रकालयोः अङ्गुलावलिकाऽसंख्येयभागोप-

१ देवदत्ते भुक्ते सर्वं कुटुम्ब भुक्तमितिवत्, अन्यथा त्रयाणामित्यभिधेय स्यात्, कालवृद्ध्यनुसारेण द्रव्यादिवृद्धिदर्शनाय चैवमभिधान स्यात् २ भजधातुर्हि सिद्धान्ते विकल्पार्थेऽपि भजनेत्यादिवत् ३ अवधिगोचरस्य ४ तृतीयैकवचनादिव्यवच्छेदार्थम् ५ एत् भवति अकारान्ते पदे द्वितीयायां बहुषु पुल्लिङ्गे। तृतीयादिषु षष्ठीसप्तम्योरेकस्मिन् महिलार्थे ( पुल्लिङ्गे द्वितीयाबहुवचनान्ते पदे अकारान्तस्यैत् भवति, स्त्रीलिङ्गे च तृतीयादिषु षष्ठीसप्तम्योश्चैकवचने एकारो भवति सर्वत्र ) ६ गाथारूपात् सूत्रात् ७ रीत्या ८ लुप्तविभक्त्यन्तता मूले ९ द्रव्यपर्याययो सवेधाय १० स्पर्शरसादीना तत्पर्यायाणा चैकगुणादीना, गुणाना पर्यायत्वात्तायुक्त्मक्रमवर्त्तिपर्यायत्व, नयौ चात एव द्रव्यपर्यायार्थिकावेव ११ पर्यायवृद्धौ न कालवृद्धिरिति समर्थनाय १२ अगुल आवलियाणमित्यादिना द्वीवसमुद्दा उ भइयव्वा इत्यन्तेन त्रिमध्यमत्वेन प्रतिपादितयो * सिद्धेत्येव०

लक्षितयोः परस्परतः प्रदेशसमयसंख्यया परिस्थूरसूक्ष्मत्वे सति कियता भागेन हीनाधिकत्वमिति, अत्रोच्यते, सर्वत्र प्रतियोगिनि खल्वावलिकाऽसंख्येयभागादेः कालाद् असंख्येयगुणं क्षेत्रं, कुत एतत् ?, अत आह—

**सुहुमो य होइ कालो, तत्तो सुहुमयरं हवइ खित्तं । अङ्गुलसेढीमित्ते, ओसप्पिणीओ असंखेज्जा ॥ ३७ ॥**

व्याख्या—'सूक्ष्मः' श्लक्ष्णश्च भवति कालः, यस्माद् उत्पलपत्रशतभेदे समयाः प्रतिपत्रमसंख्येयाः प्रतिपादिताः, तथापि 'ततः' कालात्, सूक्ष्मतरं भवति क्षेत्रं, कुतः ?, यस्मात् अङ्गुलश्रेणिमात्रे क्षेत्रे प्रदेशपरिमाणं प्रतिप्रदेशं समयगणनया अवसर्पिण्यः असंख्येयाः, तीर्थकृद्भिः प्रतिपादिताः, एतदुक्तं भवति—अङ्गुलश्रेणिमात्रे क्षेत्रे प्रदेशाग्रं असंख्येयावसर्पिणीसमयराशिपरिमाणमिति गाथार्थः ॥ ३७ ॥ उक्तमवधेर्जघन्यादिभेदभिन्नं क्षेत्रपरिमाणं, क्षेत्रं चावधिगोचरद्रव्याधारद्वारेणैवावधेरिति व्यपदिश्यते, अतः क्षेत्रस्य द्रव्यावधिकत्वात् तदभिधानानन्तरमेव अवधिपरिच्छेदयोग्यद्रव्याभिधित्सयाऽऽह—

**तेआभासादव्वाण, अन्तरा इत्थ लहइ पट्ठवओ । गुरुलहुअअगुरुलहुअं, तंपि अ तेणेव निट्ठाइ ॥ ३८ ॥**

व्याख्या—अवधिश्च जघन्यमध्यमोत्कृष्टभेदभिन्नः, तत्र तावज्जघन्यावधिपरिच्छेदयोग्यमेवादावभिधीयते—तैजसं च भाषा च तैजसभाषे तयोर्द्रव्याणि तैजसभाषाद्रव्याणि तेषामिति समासः, 'अन्तरात्' इति 'अर्थाद्विभक्तिपरिणामः'

१ त्रिभेदस्य २ चकारो वाक्यभेदक्रमोपदर्शनार्थं ( इति मलयगिरिपादा ) ३ वक्ष्यमाणमसंख्येयावसर्पिणीमानम् ४ एकप्रमाणाङ्गुलमात्रे श्रेणिरूपे नभःखण्डे ( नन्दीवृत्ति १६६ प० ) ५ प्रदेशसंख्यान ६ साक्षाद्दर्शनाभावादुपचारेणेत्यर्थ ७ मर्यादार्थोऽवधि ८ द्रव्यमिति * अन्तरे ५-६

अन्तरे, अथवा 'अन्तरे' इति पाठान्तरमेव, एतदुक्त भवति—तैजसवाग्द्रव्याणामन्तर इत्यन्तराले अत्रे तदयोग्यमन्यदेव द्रव्यं 'लभते' पश्यति, कोऽसावित्यत आह—'प्रस्थापकः' प्रस्थापको नाम अवधिज्ञानप्रारम्भकः, किंविशिष्टं तदिति, अत आह—'गुरुलघ्वगुरुलघु' गुरु च लघु च गुरुलघु तथा न गुरुलघु अगुरुलघु, एतदुक्तं भवति—गुरुलघुपर्यायोपेतं गुरुलघु अगुरुलघुपर्यायोपेतं चागुरुलघु इति । तत्र यत्तैजसद्रव्यासन्नं तद्गुरुलघु, यत्पुनर्भाषाद्रव्यासन्नं तदगुरुलघु, 'तदपि च' अवधिज्ञानं प्रच्यवमानं सत्पुनः तेनैव द्रव्येणोपलब्धेन सता निष्ठां याति, प्रच्यवतीत्यर्थः । तत्र अपिशब्दात् यत्प्रतिपाति तत्रायं क्रमो, न पुनरवधिज्ञानं प्रतिपात्येव भवतीत्यर्थः, चशब्दस्त्वेवकारार्थः, स चावधारणे, तस्य चैवं प्रयोगः—तदेवावधिज्ञानमेवं प्रच्यवते, न शेषज्ञानानीति गाथार्थः ॥ ३८ ॥ आह—कियत्प्रदेशं तद् द्रव्यं, यत् तैजसभाषाद्रव्याणामपान्तरालवर्त्ति जघन्यावधिप्रमेयमित्याशङ्क्य तद्धि परमाण्वादिक्रमोपचयाद् औदारिकादिवर्गणानुक्रमतः प्रतिपाद्यमिति, अतस्तत्स्वरूपाभिधित्सया गाथाद्वयमाह—

**ओरालविउव्वाहारतेअभासाणपाणमणकम्मे । अह दव्ववग्गणाणं, कमो विवज्जासओ खित्ते ॥ ३९ ॥**

**कम्मोवरिं धुवेयरसुण्णेयरवग्गणा अणंताओ । चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥ ४० ॥**

प्रथमगाथाव्याख्या—आह—औदारिकादिशरीरप्रायोग्यद्रव्यवर्गणाः किमर्थं प्ररूप्यन्ते इति, उच्यते, विनेयानामव्यामोहार्थं,

१ मध्यार्थोऽत्रान्तर २ मध्यभागे तैजसभाषयो ३ तैजसभाषयो ४ समुच्चयाय ५ हीयमानम् ६ अवधि ७ तैजसभाषाऽयोग्यद्रव्यान्तरदर्शनानन्तरमच्युतिरूपेण ८ मत्यादीनि * प्रच्यवत इत्यर्थः २-५ + ०णुपाण०

तथा चोदाहरणमत्र—इह भरतक्षेत्रे मगधाजनपदे प्रभूतगोमण्डलस्वामी कुचिकर्णो नाम धनपतिरभूत्, स च तासां गवांमतिबाहुल्यात् सहस्रादिसंख्यामितानां पृथक् पृथगनुपालनार्थं प्रभूतान् गोपांश्चके, तेऽपि च परस्परसंमिलितासु तासु गोष्वात्मीयाः सम्यगजानानाः सन्तोऽकलहयन्, तांश्च परस्परतो विवदमानानुपलभ्य असौ तेषामव्यामोहार्थं अधिकरेणाव्यवच्छित्तये च रक्तशुक्लकृष्णकर्बुरादिभेदभिन्नानां गवां प्रतिगोपं विभिन्ना वर्गणाः खल्ववस्थापितवान् इत्येष दृष्टान्तः, अयमर्थोपनयः—इह गोपपतिकल्पस्तीर्थकृत् गोपकल्पेभ्यः शिष्येभ्यो गोरूपसदृशं पुद्गलास्तिकायं परमाण्वादिवर्गणाविभागेन निरूपितवानिति अलं प्रसङ्गेन, पदार्थः प्रतिपाद्यते—तत्र औदारिकग्रहणाद् औदारिकशरीरग्रहणयोग्या वर्गणाः परिगृहीताः, ताश्चैवमवगन्तव्याः—इह वर्गणाः सामान्यतश्चतुर्विधा भवन्ति, तद्यथा—द्रव्यतः क्षेत्रतः कालतः भावतश्च, तत्र द्रव्यत एकप्रदेशिकानां यावदनन्तप्रदेशिकानां, क्षेत्रत एकप्रदेशावगाढानां यावदसंख्येयप्रदेशावगाढानां, कालत एकसमयस्थितीनां यावदसंख्येयसमयस्थितीनां, भावतस्तावत् परिस्थूरन्यायमङ्गीकृत्य कृष्णानां यावत् शुक्लानां ५ सुरभिगन्धानां दुरभिगन्धानां च २, तिक्तरसानां यावन्मधुररसानां ५, मृदूनां यावद्रूक्षाणां ८ गुरुलघूनामगुरुलघूनां च, एवमेता द्रव्यवर्गणाद्या वर्गणाश्चतुर्विधा भवन्ति, प्रकृतोपयोगः प्रदर्श्यते—तत्र परमाणूनामेका वर्गणा, एवं द्विप्रदेशिकानामप्येका, एवमेकैकपरमाणुवृद्ध्या संख्येयप्रदेशिकानां संख्येया वर्गणा असंख्येयप्रदेशिकानां चासंख्येयाः ततोऽनन्त-

---

१ गा २ कलह. ३ समुदायान् ४ कुचिकर्णधनपति. ५ गोरूपाणि धेनव ६ अवयवे समुदायोपचारात् प्रकरणाद्वा ७ परमाणूनामपि प्रकृष्टदेशत्वान् ८ लोकाकाशेऽवगाहनात् तस्य चैतावत्प्रमाणत्वात्. ९ अनन्तसमयान् यावदवस्थानाभावात् ११ स्वस्वस्थान एकगुणादिनाऽनन्तभेदवत्त्वात् प्रत्येक * द्वित्रि०

प्रदेशिकानां अनन्ताः खल्वग्रहणयोग्या विलङ्घ्य ततश्च विशिष्टपरिणामयुक्ता औदारिकशरीरग्रहणयोग्याः खल्वनन्ता एवेति, ता अपि चोल्लङ्घ्य प्रदेशवृद्ध्या प्रवर्धमानास्ततस्तस्यैवाग्रहणयोग्या अनन्ता इति, ताश्च प्रभूतद्रव्यनिर्वृत्तत्वात् सूक्ष्मपरिणामोपेतत्वाच्च औदारिकस्याग्रहणयोग्या इति, वैक्रियस्यापि चाल्पपरमाणुनिर्वृत्तत्वाद् बादरपरिणामयुक्तत्वाच्चाग्रहणयोग्या एव ता इति, पुनः प्रदेशवृद्ध्या प्रवर्धमानाः खल्वनन्ता एवोल्लङ्घ्य तथापरिणामयुक्ता वैक्रियग्रहणयोग्या भवन्ति, ता अपि च प्रदेशवृद्ध्या प्रवर्धमाना अनन्ता एवेति तावद् यावद् एकादिप्रचुरपरमाणुनिर्वृत्तत्वात् सूक्ष्मपरिणाम|युक्तत्वाच्च वैक्रियस्याग्रहणयोग्या भवन्ति, एवं प्रदेशवृद्ध्या प्रवर्धमानाः खल्वग्रहणयोग्या अप्यनन्ता एवेति, ताश्चाहारकस्य अल्पपरमाणुनिर्वृत्तत्वाद् बादरपरिणामोपेतत्वाच्च अग्रहणयोग्या एवेति, एवमाहारकस्य तैजसस्य भाषायाः ‡आनापानयोर्मनसः कर्मणश्च अयोग्ययोग्यायोग्यानां वर्गणानां प्रदेशवृद्ध्युपेतानामनन्तानां त्रयं त्रयमायोजनीयं। आह—कथं पुनरिदं एकैकस्यौदारिकादेस्त्रयं त्रयं गम्यत इति, उच्यते. तैजसभाषाद्रव्यान्तरवर्त्युभयायोग्यद्रव्यावधिगोचराभिधानात्। 'अथ' अयं द्रव्यवर्गणानां क्रमः, तत्र वर्गणा वर्गो राशिरिति पर्यायाः, तथा 'विपर्यासतो' विपर्यासेन 'क्षेत्रे' इति क्षेत्रविषयो वर्गणाक्रमो वेदितव्यः, एतदुक्तं भवति—एकप्रदेशावगाहिनां परमाणूनां स्कन्धानां चैका वर्गणा, तथा द्विप्रदेशावगाहिनां स्कन्धानामेव द्वितीया वर्गणा, एवमेकैकप्रदेशवृद्ध्या संख्येयप्रदेशावगाहिनां §संख्येया असंख्येयप्रदे-

---

१ द्वितीयाबहुवचन, एताश्चौदारिकस्यैवायोग्या इति २ औदारिकपरिणमनयोग्यतारूपेति ३ औदारिकशरीरतया परिणमनीया * वर्धमाना २-४ + अतिप्रचुर० | ०युक्तत्वात् ‡ आनपानयो ५ § तथा स० ४-५-६

शावगाहिनां चासंख्येयाः, ताश्च प्रदेशप्रदेशोत्तराः खल्वसंख्येया विलङ्घ्य कर्मणो योग्यानामसंख्येया वर्गणा भवन्ति, पुनः प्रदेशवृद्ध्या तस्यैवायोग्यानां असंख्येया इति, अयोग्यत्वं चाल्पपरमाणुनिर्वृत्तत्वात् प्रभूतप्रदेशावगाहित्वाच्च, मनोद्रव्यादीनामप्येवमेवायोग्ययोग्यायोग्यलक्षणं त्रयं त्रयमायोजनीयमिति। एवं सर्वत्र भावना कार्या, 'परं परं सूक्ष्मं' 'प्रदेशतोऽसंख्येयगुणं' (प्राक्तैजसात्) इति (तत्त्वार्थे अ० २ सूत्रे ३८-३९) वचनात्, कालतो भावतश्च वर्गणा दिग्मात्रतो दर्शिता एवेति गाथार्थः॥ ३९॥ द्वितीयगाथाव्याख्या—तत्रानन्तरगाथायां कर्मद्रव्यवर्गणाः प्रतिपादिताः, साम्प्रतं प्रदेशोत्तरवृद्ध्या तदग्रहणप्रायोग्याः प्रदर्श्यन्ते—क्रियत इति कर्म, कर्मण उपरि कर्मोपरि, ध्रुवेति—ध्रुववर्गणा अनन्ता भवन्ति, ध्रुववर्गणा इति ध्रुवा नित्याः सर्वकालावस्थायिन्य इति भावार्थः, 'इतरा' इति प्रदेशवृद्ध्या ततोऽनन्ता एवाध्रुववर्गणा अनन्ता भवन्ति, 'अध्रुवा' इति अशाश्वत्यः, कदाचिन्न सन्त्यपीत्यर्थः, ततः 'शून्या' इति सूचनात्सूत्रमितिकृत्वा शून्यान्तरवर्गणाः परिगृह्यन्ते, शून्यान्यन्तराणि यासां ताः शून्यान्तराः शून्यान्तराश्च ता वर्गणाश्चेति समासः, एतदुक्तं भवति—एकोत्तरवृद्ध्या व्यवहितान्तरा इति, ता अपि चानन्ता एव, तथा 'इतरेति' इतरग्रहणादशून्यान्तराः परिगृह्यन्ते, न शून्यानि अन्तराणि यासां ता अशून्यान्तराः, अशून्यान्तराश्च ता वर्गणाश्चेति विग्रहः, अशून्यान्तरवर्गणा अव्यवहितान्तरा इत्यर्थः, ता अपि च प्रदेशोत्तरवृद्ध्या खल्वनन्ता एव भवन्ति, ततः 'चतुरिति' चतस्रः ध्रुवाश्च

---

१ द्वयोरभिधान प्रसङ्गात् २ अष्टानां वर्गणानाम॰त्वे तद्भावात् ३ सूत्र सूचनादिति सूत्रलक्षणात् ४ तस्यास्त्रुटिसम्भवे सत्येव भिन्नवर्गणारम्भ, अन्यथा किञ्चिद्वर्णादिपरिणामवैचित्र्य तदारम्भे कारणम्

ता अनन्तराश्च ध्रुवानन्तराः प्रदेशोत्तरा एव वर्गणा भवन्ति, ततः 'तनुवर्गणाश्च' तनुवर्गणा इति, किमुक्तं भवति ?—भेदाभेदपरिणामाभ्यामौदारिकादियोग्यताऽभिमुखा इति, अथवा मिश्राचित्तस्कन्धद्वययोग्यास्ताश्चतस्र एव भवन्ति, ततो 'मिश्र' इति मिश्रस्कन्धो भवति, सूक्ष्म एवेषद्बादरपरिणामाभिमुखो मिश्रः, 'तथा' इति आनन्तर्ये 'अचित्त' इति अचित्तमहास्कन्धः, स च विश्रसापरिणामविशेषात् केवलिसमुद्घातगत्या लोकमापूरयन्नुपसंहरंश्च भवतीति । आह—अचित्तत्वाव्यभिचारात्तस्याचित्तविशेषणानर्थक्यमिति, न, केवलिसमुद्घातसचित्तकर्मपुद्गललोकव्यापिमहास्कन्धव्यवच्छेदपरत्वात् विशेषणस्येति, अयमेव सर्वोत्कृष्टप्रदेश इति केचिद् व्याचक्षते, न चैतदुपपत्तिक्षमं, यस्मादुत्कृष्टप्रदेशोऽवगाहनास्थितिभ्यां असंख्येयभागहीनादिभेदाद् चतुःस्थानपतित उक्तः, तथा चोक्तं—"उक्कोसपएसिआणं भंते ! केवइआ पज्जवा पण्णत्ता ?, गोयमा ! अणन्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! उक्कोसपएसिए उक्कोसपएसिअस्स दव्वट्ठयाए तुल्ले, पएसट्ठयाएवि तुल्ले, ओगाहणट्ठयाए चउट्ठाणवडिए, ठिईएवि ४, वण्णरसगन्ध अट्ठहि अ फासेहि छट्ठाणवडिए" । अयं पुनस्तुल्य एव, अष्टस्पर्शश्चासौ पठ्यते, चतुःस्पर्शश्च अयमिति, अतोऽन्येऽपि सन्तीति प्रतिपत्तव्यं, इत्यलं प्रसङ्गेनेति गाथार्थः ॥४०॥

---

१ केवलिसमुद्घातावसरे प्रतिप्रदेश आत्मगृहीतत्वात् सचित्तता कर्मपुद्गलानां, चतुर्थसमयापेक्षया लोकव्यापकता, निस्संबद्धत्वाभावान्महास्कन्धता २ अचित्तमहास्कन्ध ३ सख्येयभागासख्येयगुणसख्येयगुणम्ह ४ उत्कृष्टप्रदेशिकानां भदन्त ! कियन्तः पर्यवाः प्रज्ञप्ता ?, गौतम ! अनन्ता , तत्केनार्थेन भदन्त ! एव मुच्यते ?, गौतम ! उत्कृष्टप्रदेशिक उत्कृष्टप्रदेशिकस्य द्रव्यार्थतया तुल्यः प्रदेशार्थतयापि तुल्य अवगाहनया चतु स्थानपतित स्थित्याऽपि, वर्णरसगन्धैरष्टभि. स्पर्शैश्च षट्स्थानपतित ५ वर्गणात्वात् परैस्तथाविधैरचित्तमहास्कन्धै' अवगाहनास्थितिभ्यां. ६ उत्कृष्टप्रदेशिक. ७ अचित्तमहास्कन्ध ८ महान्त स्कन्धा

प्राक् 'तैजसभाषाद्रव्याणामन्तराले गुरुलघ्वगुरुलघु च जघन्यावधिप्रमेयं द्रव्यं' इत्युक्तं, नौदारिकादिद्रव्याणि, साम्प्रतमौदारिकादीनां द्रव्याणां यानि गुरुलघूनि यानि चागुरुलघूनि तानि दर्शयन्नाह—

ओरालिअवेउव्विअआहारगतेअ गुरुलहू दव्वा । कम्मगमणभासाई, एआइं अगुरुलहुआइं ॥ ४१ ॥

व्याख्या—पदार्थस्तु औदारिकवैक्रियाहारकतैजसद्रव्याणि गुरुलघूनि, तथा कार्मणमनोभाषादिद्रव्याणि च अगुरुलघूनि निश्चयनयापेक्षयेति गाथार्थः ॥ ४१ ॥ वक्ष्यमाणगाथाद्वयसंबन्धः—पूर्वं क्षेत्रकालयोरवधिज्ञानसंबन्धिनोः केवलयोः अङ्गुलावलिकाऽसंख्येयादिविभागकल्पनया परस्परोपनिबन्ध उक्तः, साम्प्रतं तयोरेवोक्तलक्षणेन द्रव्येण सह परस्परोपनिबन्धमुपदर्शयन्नाह—

संखिज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो । संखिज्ज कम्मदव्वे, लोए थोवूणगं पलियं ॥ ४२ ॥

तेयाकम्मसरीरे, तेआदव्वे अ भासदव्वे अ । बोद्धव्वमसंखिज्जा, दीवसमुद्दा य कालो अ ॥ ४३ ॥

प्रथमगाथाव्याख्या—संख्यायत इति संख्येयः, मनसः संबन्धि योग्यं वा द्रव्यं मनोद्रव्यं तस्मिन् मनोद्रव्ये इति मनोद्रव्यपरिच्छेदके अवधौ, क्षेत्रतः संख्येयो लोकभागः, कालतोऽपि संख्येय एव, 'पलियस्स' पल्योपमस्य

---

१ तानि गुरुलघूनि अगुरुलघूनि चेति नोक्तमित्यर्थः । २ ग्रहणयोग्यतैजसेभ्यश्चतुःस्पर्शा इति कर्मप्रकृत्यादिषु, अग्रहणान्तरिता ग्रहणयोग्या वर्गणा इति च मत तेषां, प्राग्ग्रहणयोग्या पश्चात्परा. । अत्र तूभयाग्रहणयोग्या मध्ये तत एव तैजसासन्नानि गुरुलघूनि इतराणीतरथेत्युक्ति. ३ एतन्मते एकान्तगुरलघुद्रव्याभावात , व्यवहारनयापेक्षमेव गुरु लेष्टु लघु दीप उभय वायुरनुभय व्योमेत्यादि. ४ परस्परोपलम्भदर्शनेन वृद्धिद्वारा. ५ परिणत तथात्वेन ६ आकाशस्थित * नास्तीदम् ३

'बोद्धव्यो' विज्ञेयः, प्रमेयत्वेनेति, एतदुक्तं भवति—अवधिज्ञानी मनोद्रव्यं पश्यन् क्षेत्रतो लोकस्य संख्येयभागं कालतश्च पल्योपमस्य जानीते इति, तथा संख्येया लोकपल्योपमभागाः 'कर्मद्रव्ये' इति कर्मद्रव्यपरिच्छेदकेऽवधौ प्रमेयत्वेन बोद्धव्या इति वर्त्तते, अयं भावार्थः—कर्मद्रव्यं पश्यन् लोकपल्योपमयोः पृथक् पृथक् संख्येयान् भागान् जानीते, 'लोके' इति चतुर्दशरज्ज्वात्मकलोकविषयेऽवधौ क्षेत्रतः कालतः स्तोकन्यूनं पल्योपमं प्रमेयत्वेन बोद्धव्यं इति वर्त्तते, इदमत्र हृदयं—समस्तं लोकं पश्यन् क्षेत्रतः कालतः देशोनं पल्योपमं पश्यति, द्रव्योपनिबन्धनक्षेत्रकालाधिकारे प्रक्रान्ते केवलयोर्लोकपल्योपमक्षेत्रकालयोर्ग्रहणं अनर्थकमिति चेत्, न, इहापि सामर्थ्यप्रापितत्वाद् द्रव्योपनिबन्धनस्य, अत एव च तदुपर्यपि ध्रुववर्गणादि द्रव्यं पश्यतः क्षेत्रकालवृद्धिरनुमेयेति गाथार्थः ॥ ४२ ॥ द्वितीयगाथाव्याख्या—तेजोमयं तैजसं, शरीरशब्दः प्रत्येकमभिसंबध्यते, 'तैजसशरीरे' तैजसशरीरविषयेऽवधौ क्षेत्रतोऽसंख्येया द्वीपसमुद्राः प्रमेयत्वेन बोद्धव्या इति, कालश्च असंख्येय एव, मिथ्यादर्शनादिभिः क्रियत इति कर्म—ज्ञानावरणीयादि तेन निर्वृत्तं तन्मयं वा कार्मणं, शीर्यते इति शरीरं, कार्मणं च तच्छरीरं चेति विग्रहः तस्मिन्नपि तैजसवद्वक्तव्यं, एवं तैजसद्रव्यविषये चावधौ भाषाद्रव्यविषये च क्षेत्रतो 'बोद्धव्या' विज्ञेयाः, संख्यायन्त इति संख्येया न संख्येया असंख्येयाः, द्वीपाश्च समुद्राश्च

---

१ पूर्वं क्षेत्रकालयोर्वृद्धिव्यासिर्दर्शिता परं द्रव्येण तां दर्शनाय प्रक्रान्त प्रकरणं २ द्रव्यव्याप्ते , क्षेत्रकालवृद्धौ द्रव्याणां अवश्य वृद्धेः सामर्थ्यप्रापण, काले चउण्ह वुड्ढीत्यनेन निर्णीता च सा प्राक्, ३ सामर्थ्यप्रापितत्वात्, द्रव्यपरिच्छेदवृद्धे' क्षेत्रकालवृद्धिनियम , सफल च द्रव्योपनिबन्धप्रकरणमेव ४ नहानि विशेषोऽसख्येयगतोऽग्रे अत्र चासख्येयेत्यादिना. * स्तोकान्यून १-५-६ + ०पनिबन्धेन ५-६

द्वीपसमुद्राः, प्रमेयत्वेनेति, कालश्चासंख्येय एव, स च पल्योपमासंख्येयभागसमुदायमानो विज्ञेय इति, (ग्रन्थाग्रम् १०००)। अत्र चासंख्येयत्वे सत्यपि यथायोगं द्वीपाद्यल्पबहुत्व सूक्ष्मेतरद्रव्यद्वारेण विज्ञेयमिति। आह–एवं सति 'तेयाभासादव्वाण अन्तरा एत्थ लहइ पट्ठवओ' (गाथा ३८) इत्याद्युक्तं तस्य च तैजसभाषान्तरालद्रव्यदर्शिनोऽप्यङ्गुलावलिकाऽसंख्येयभागादि क्षेत्रकालप्रमाणमुक्तं तद्विरुध्यते, तैजसभाषाद्रव्ययोरसंख्येयक्षेत्रकालाभिधानात्, न, प्रारम्भकस्योभयायोग्यद्रव्यग्रहणात्, द्रव्याणां च विचित्रपरिणामत्वाद् यथोक्तं क्षेत्रकालप्रमाणमविरुद्धमेव, अल्पद्रव्याणि वाऽधिकृत्य तदुक्तं, प्रचुरतैजसभाषाद्रव्याणि पुनरङ्गीकृत्येदं, अलं विस्तरेणेति गाथार्थः ॥ ४३ ॥ आह—जघन्यावधिप्रमेयं प्रतिपादयता गुरुलघु अगुरुलघु वा द्रव्यं पश्यतीत्युक्तं, न सर्वमेवं, विमध्यमावधिप्रमेयमपि चाङ्गुलावलिकासंख्येयभागाद्यभिधानात् न सर्वद्रव्यरूपं, तत्रस्थानामेव दर्शनात्, अत उत्कृष्टावधेरपि किमसर्वद्रव्यरूपमेवालम्बनं आहोस्विन्नेति, इत्यत्रोच्यते—

**एगपएसोगाढं परमोही लहइ कम्मगसरीरं। लहइ य अगुरुयलघुअं, तेयसरीरे भवपुहुत्तं ॥ ४४ ॥**

व्याख्या—प्रकृष्टो देशः प्रदेशः एकश्चासौ प्रदेशश्चैकप्रदेशः तस्मिन् अवगाढं, अवगाढमिति व्यवस्थितं, एकप्रदेशावगाढं परमाणुद्व्यणुकादि द्रव्यं, परमश्चासाववधिश्च परमावधिः उत्कृष्टावधिरित्यर्थः, 'लभते' पश्यति, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तं, तथा कार्मणशरीरं च लभते, आह–परमाणुद्व्यणुकादि द्रव्यमनुक्तं कथं गम्यते तदालम्बनत्वेनेति, ततश्चोपात्तमेव कार्मणमिदं भविष्यति, न, तस्यैकप्रदेशावगाहित्वानुपपत्तेः, 'लभते चागुरुलघु' चशब्दात् गुरुलघु, जात्यपेक्षं चैकवचनं, अन्यथा हि सर्वाणि सर्वप्रदेशावगाढानि द्रव्याणि पश्यतीत्युक्तं भवति, तथा तैजसशरीरद्रव्यविषये अवधौ कालतो भवपृथक्त्वं परिच्छेद्यतयाऽवगन्तव्यमिति, एतदुक्तं भवति—यस्तैजसशरीरं पश्यति स कालतो भवपृथक्त्वं पश्यति इति, इह च य एव हि प्राक् तैजसं पश्यतः असंख्येयः काल उक्तः, स एव भवपृथक्त्वेन विशेष्यत इति। आह–नन्वेकप्रदेशावगाढस्यातिसूक्ष्मत्वात् तस्य च परिच्छेद्यतयाऽभिहितत्वात् कार्मणशरीरादीनामपि दर्शनं गम्यत एवेत्यतः तदुपन्यासवैयर्थ्यं, तथैकप्रदेशावगाढमित्यपि न वक्तव्यं, 'रूवगयं लभइ सव्वं' इत्यस्य वक्ष्यमाणत्वादिति, अत्रोच्यते, न सूक्ष्मं पश्यतीति नियमतो बादरमपि द्रष्टव्यं, बादरं वा पश्यता सूक्ष्ममिति, यस्मादुत्पत्तौ अगुरुलघु पश्यन्नपि न गुरुलघु उपलभते, घटादि वा अतिस्थूरमपि, तथा मनोद्रव्यविदस्तेष्वेव दर्शनं नान्येष्वतिस्थूरेष्वपि, एवं विज्ञानविषयवैचित्र्यसंभवे सति संशयापनोदार्थमेकप्रदेशावगाहिग्रहणे सत्यपि शेषविशेषोपदर्शनमदोषायैवेति। अथवा एकप्रदेशावगाहिग्रहणात् परमाण्वादिग्रहणं कार्मणं यावत्, तदुत्तरेषां चागुरुलघ्वभिधानात्, चशब्दात् गुरुलघूनां चौदारिकादीनामित्येवं सर्वपुद्गलविशेषविषयत्वमाविष्कृतं भवति, तथा चास्यैव नियमार्थं 'रूपगतं लभते सर्वं' इत्येतद् वक्ष्यमाणलक्षणमदुष्टमेवेति, एतदेव हि सर्वं रूपगतं, नान्यद् इति, अलं प्रसङ्गेनेति गाथार्थः ॥ ४४ ॥ एवं परमावधेर्द्रव्यमङ्गीकृत्य विषय उक्तः, साम्प्रतं क्षेत्रकालावधिकृत्योपदर्शयन्नाह—

**परमोहि असंखिज्जा, लोगमित्ता समा असंखिज्जा। रूवगयं लहइ सव्वं, खित्तोवमिअं अगणिजीवा ॥ ४५ ॥**

व्याख्या—परमश्चासाववधिश्च परमावधिः, अवध्यवधिमतोरभेदोपचाराद् असौ परमावधिः क्षेत्रतः 'असंख्येयानि लोकमात्राणि, खण्डानीति गम्यते, लभत इति संबन्धः, कालतस्तु 'समाः' उत्सर्पिण्यवसर्पिणीरसंख्येया एव लभते, तथा द्रव्यतो 'रूपगतं' मूर्त्तद्रव्यजातमित्यर्थः, 'लभते' पश्यति 'सर्वं' परमाण्वादिभेदभिन्नं पुद्गलास्तिकायमेवेति, भावतस्तु वक्ष्यमाणांस्तत्पर्यायान् इति। यदुक्तं 'असंख्येयानि लोकमात्राणि खण्डानि परमावधिः पश्यतीति' तत्क्षेत्रनियमना-

---

१ तैजसद्रव्येभ्य कार्मणानि सूक्ष्माणि, अबद्धेभ्यस्तैजसकार्मणेभ्यो बद्धानि स्थूलानि ततः पृथग् वचन. २ तथा च नासंख्यक्षेत्रकालपरिच्छेदप्रसङ्ग ३ सूक्ष्मेतरद्वारेण प्रसङ्गापादने आह—द्रव्येत्यादि, उभयायोग्यद्रव्येभ्य तैजसभाषाद्रव्याणां यथायथं सूक्ष्मस्थूलत्वात् वैचित्र्यपर्यन्तानुधावनम् ४ परिस्थूरव्याघातकाले चतुर्णां वृद्धिरित्युक्तेश्च व्याघातापत्तावाह–अल्पेत्यादि, तथा च स्तोकन्यूनतेजोभाषाद्रव्यग्रहणशक्तावेतावत्कालपरिज्ञानमिति तत्त्व ५ रूपिद्रव्य ६ प्रमेय ७ असंख्यातद्वीपोदधिसकललोकेऽप्यवधौ तत्रस्थितानां रूपिणां दर्शनात् ८ सामस्त्येन, अन्यथाधिकप्रदेशावगाढानामप्येकावगाहनाऽस्त्येव * पल्योपमस० ४ + अत्रोच्यते ७–४. † अगुरुलहुअ १–६

१ आकाशप्रदेशेषु हि स्वभाव एष यद् यावदनन्ताणुकोऽपि स्कन्धोऽन्ये च तत्र मान्ति स्कन्धाः,. २ आपेक्षिकपरमत्वव्यवच्छेदाय, जघन्यस्यापि लघ्वपेक्षया परमत्वाद्वृद्ध्यपेक्षया परमावधदर्शनाय ३ एकप्रदेशावगाढद्रव्यदर्शनसमुच्चयाय ४ विशेष्यतया ५ विशिष्य परमाणुद्व्यणुकादेरनिर्देशात्. ६ एकप्रदेशादि ७ जीवेन परिणामिताः कर्मवर्गणापुद्गलाः नासंख्येयानन्तरेण प्रदेशान्, जीवावगाहाभावात्, इत्येकप्रदेशावगाढाः. ८ अगुरुलघुदर्शनेऽपि गुरुलघुदर्शननियमाभावाद् चशब्देनाक्षेपः ९ 'आतिश्च पुद्गललक्षणा, कार्मणान्तानामभिहितत्वात्' ध्रुववर्गणादिकागुरुलघुद्रव्यापेक्षयेत्यर्थः. १० धर्माधर्माकाशजीवानामपि अगुरुलघुत्वात् ११ पल्योपमासंख्येयभागरूपः १२ स्थूलत्वात् १३ अभेतनगाथायां.

१ अवधि २ अगुरुलघ्वारम्भकापेक्षया ३ घटादीनां गुरुलघुत्वादपि ४ मनःपर्यायज्ञानिन. ५ मनोद्रव्येषु ६ ज्ञान ७ घटादिषु ८ द्वितीयप्रश्नसमाधानाय ९ ध्रुववर्गणादीनामचित्तमहास्कन्धान्तानां १० ग्रहण ११ आदिना वैक्रियाहारकतैजसग्रह १२ विशेषा भेदाः प्रकाराः १३ परमावधे १४ विषयस्य १५ पूर्वेण सिद्धत्वात् १६ पूर्वगाथादर्शितमेकप्रदेशावगाढादि

याह—उपमानं उपमितं, भावे निष्ठाप्रत्ययः, क्षेत्रस्योपमितं क्षेत्रोपमितं, एतदुक्तं भवति—उत्कृष्टावधिक्षेत्रोपमानं, 'अग्निजीवाः' प्रागभिहिता एवेति, आह—'रूपगतं लभते सर्वं' इत्येतदनन्तरगाथायामर्थतोऽभिहितत्वात् किमर्थं पुनरुक्तमिति, अत्रोच्यते, उक्तः परिहारः, अथवा अनन्तरगाथायां 'एकप्रदेशावगाढं' इत्यादि परमावधेर्द्रव्यपरिमाणमुक्तं, इह तु 'रूपगतं लभते सर्वं' इति क्षेत्रकालद्वयविशेषणं, एतदुक्तं भवति—रूपिद्रव्यानुगतं लोकमात्रासंख्येयखण्डोत्सर्पिण्यवसर्पिणीलक्षणं क्षेत्रकालद्वयं लभते, न केवलं, अरूपित्वात्तस्य, रूपिद्रव्यनिबन्धनत्वाच्चावधिज्ञानस्येति गाथार्थः ॥ ४५ ॥ एवं तावत् पुरुषानधिकृत्य क्षायोपशमिकः खलु अनेकप्रकारोऽवधिरुक्तः, साम्प्रतं तिरश्चोऽधिकृत्य प्रतिपिपादयिषुराह—

**आहारतेयलंभो, उक्कोसेणं तिरिक्खजोणीसु । गाउय जहण्णमोही, नरएसु उ जोयणुक्कोसो ॥ ४६ ॥**

व्याख्या—तत्राहारतेजोग्रहणाद् औदारिकवैक्रियाहारकतेजोद्रव्याणि गृह्यन्ते, ततश्चाहारश्च तेजश्च आहारतेजसी तयोर्लाभ इति समासः, लाभः प्राप्तिः परिच्छित्तिरित्यनर्थान्तरं, इदमत्र हृदयं—तिर्यग्योनिषु योनियोनिमतामभेदोपचारात् तिर्यग्योनिकसत्त्वविषयो योऽवधिः तस्य द्रव्यतः खलु आहारतेजोद्रव्यपरिच्छेद उत्कृष्टत उक्तः, इत्थं द्रव्यानुसारेणैव क्षेत्रकालभावाः परिच्छेद्यतया विज्ञेया इति । इदानीं भवप्रत्ययावधिस्वरूपमुच्यते, स च सुरनारकाणामेव भवति,

१ उत्तर २ नासादन्यत्र रूपगतमिति नियमनायेत्येवरूपः ३ विधिनियमयोर्विधिरेव ज्यायान् इति न्यायमपेक्ष्य विधेर्यलीयस्त्वाख्यानायाह—अथवे त्यादि ४ अरूपित्वात् रूपिविषयश्चावधिरिति च निर्णीतमनेकश ५ क्षेत्रकालद्वयस्य ६ मनुष्यान्, इत्थं, परमोहि नाणविओ, केवलमतोमुहुत्तमित्तेणेति ( वि० ६८९ ) वचनात् परमावधेरा अन्तर्मुहूर्त्तात्केवलोत्पत्ति, केवल च नरगतावेव ७ चारित्रनपआदिगुणहेतुत्वात * य २–४–५

तत्र प्रथममल्प इतिकृत्वा नारकाणां प्रतिपाद्यत इति, अत आह—क्षेत्रतो 'गव्यूतं' परिच्छिनत्ति जघन्येनावधिः, क्व ?- नरान् कायन्तीति नरकाः, कै गै रै शब्दे इतिधातुपाठात् नरान् शब्दयन्तीत्यर्थः, इह च नरका आश्रयाः, आश्रयाश्रयिणोरभेदोपचारात्, नरकेषु तु योजनमुत्कृष्ट इत्याह, एतदुक्तं भवति—नारकाधारो योऽवधिः असौ उत्कृष्टो योजनं परिच्छिनत्ति क्षेत्रत', इत्थं क्षेत्रानुसारेण द्रव्यादयस्तु अवसेया इति गाथार्थः ॥ ४६ ॥ एवं नारकजातिमधिकृत्य जघन्येतरभेदोऽवधिः प्रतिपादितः, साम्प्रतं रत्नप्रभादिपृथिव्यपेक्षया उत्कृष्टेतरभेदमभिधित्सुराह—

**चत्तारि गाउयाइं, अद्धुट्ठाइं तिगाउया चेव । अड्डाइज्जा दुण्णि य, दिवड्ढमेगं च निरएसु ॥ ४७ ॥**

व्याख्या—तत्र नरका इति नारकालयाः, ते च सप्तपृथिव्याधारत्वेन सप्तधा भिद्यन्ते, तत्र रत्नप्रभाद्याधारनरकेषु यथासंख्यमुत्कृष्टेतरभेदभिन्नावधेः क्षेत्रपरिमाणमिदं—'नरकेषु' इति सामर्थ्यात् तन्निवासिनो नारकाः परिगृह्यन्ते, तत्र रत्नप्रभाधारनरके उत्कृष्टावधिक्षेत्रं चत्वारि गव्यूतानि, जघन्यावधेरर्धचतुर्थानि, अर्धं चतुर्थस्य येषु तान्यर्धचतुर्थानि, एवं शर्कराप्रभाधारनरके परमावधिक्षेत्रमानं अर्धचतुर्थानि, इतरावधिक्षेत्रमानं तु त्रिगव्यूतं, त्रीणि गव्यूतानि त्रिगव्यूतं, एवं

१ आधारभेदादाधेयभेदात् सप्त पृथिव्य आधारो येषां ते तथा तत्त्वेनेति समास २ तात्स्थ्यात्तद्व्यपदेश इतिन्यायात ३ व्यधिकरणबहुव्रीहेरपि दर्शनात् अन्यथाऽर्धचत्वारीतिभावात ४ उत्कृष्टेति ५ जघन्येति * तिगाउय + नरएसु † अद्धुट्ठाईयाइं जहण्णय अद्धगाउयताइं । ज गाउअंति भणिअं तपिअ उक्कोसगजहण्ण ॥ १ ॥ [ भाष्यगाथाऽव्याख्याता च ]

सर्वत्र योज्यं यावन्महातमःप्रभाधारनरके उत्कृष्टावधिक्षेत्रं गव्यूतं, जघन्यावधिक्षेत्रं चार्धगव्यूतमिति, रत्नप्रभाधारनरक इत्यादौ जात्यपेक्षमेकवचनं, अनिर्दिष्टस्यापि नवरं पदार्थगमनिका, अर्धं तृतीयस्य अर्धतृतीयानि, द्वे च, अधिकमर्धं यस्मिन् तद् अध्यर्धम् । आह—कुतः पुनरिदं ?, सामान्येन प्रतिपृथिव्याधारनरकं उत्कृष्टमवधिक्षेत्रमुक्तं 'चत्वारि गव्यूतानि' इत्यादि, अर्धगव्यूतोनं जघन्यमित्यवसीयते ?, उच्यते, सूत्रात्, तथा चोक्तं—"रयणप्पभापुढविनेरइयाणं भंते ! केवइयं खित्तं ओहिणा जाणंति पासंति ?, गोयमा ! जहण्णेणं अद्धुट्ठाइं गाउयाइं उक्कोसेणं चत्तारि, एवं जाव महातमपुढविनेरइयाणं ? गोयमा ! जहण्णेणं अद्धगाउयं उक्कोसेणं गाउयं", आह—यद्येवं 'गाऊ जहण्णमोही णरएसु तु' ( ४६ ) इत्येतद्व्याहन्यते, अत्रोच्यते, उत्कृष्टजघन्यापेक्षया तदभिधानाददोषः, इदमत्र हृदयम्—उत्कृष्टानामेव सप्तानामपि रत्नप्रभाद्यवधीनां गव्यूतक्षेत्रपरिच्छित्तिकृत् अवधिर्जघन्य इत्यलं प्रसङ्गेनेति गाथार्थः ॥ ४७ ॥ एवं नारकसंबन्धिनो भवप्रत्ययावधेः स्वरूपमभिधायेदानीं विबुधसंबन्धिनः प्रतिपिपादयिषुरिदं गाथात्रयं जगाद—

**सक्कीसाणा पढमं, दुच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग, सुक्कसहस्सारय चउत्थीं ॥ ४८ ॥**

१ नरकेष्वितिपदव्याख्याने स्वनिरूपितपदे २ तद्वृत्तिधर्मवत्तामपेक्ष्येति ३ आश्रियेति शेष ४ स्वस्वोत्कृष्टापेक्षया ५ रत्नप्रभापृथ्वीनैरयिका भदन्त ! कियत् क्षेत्रमवधिना जानन्ति पश्यन्ति ?, गौतम ! जघन्येनार्धतृतीयानि गव्यूतानि उत्कृष्टेन चत्वारि, एव यावन्महातम प्रभापृथ्वीनैरयिकाणां ? गौतम ! जघन्येनार्धगव्यूत उत्कृष्टेन गव्यूत ६ विरुध्यते इति ७ विशेषण भवेत्यादे, तच्च देवसबन्धिव्यवच्छेदाय ८ भवप्रत्ययावधे स्वरूपमिति * परमावधे + अतिदिष्ट० † नारक ‡ ण पुच्छा § गाउयत ¶ गाउय० ‖ स गव्यू० $ त्रितय

**आणयपाणयकप्पे, देवा पासंति पंचमिं पुढवीं। तं चेव आरणच्चुय ओहीनाणेण पासंति ॥ ४९ ॥**

**छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला। संभिण्णलोगनालिं, पासंति अणुत्तरा देवा ॥ ५० ॥**

तत्र प्रथमगाथाव्याख्या–शक्रश्चेशानश्च शक्रेशानौ तत्र 'शक्रेशानाविति' शक्रेशानोपलक्षिताः सौधर्मेशानकल्पनिवासिनो देवा. सामानिकादयः परिगृह्यन्ते, ते ह्यवधिना प्रथमां रत्नप्रभाभिधानां पृथिवीं 'पश्यन्ति' इति क्रियां द्वितीयगाथायां वक्ष्यति, तथा 'द्वितीयां च' पृथिवीमित्यनुवर्त्तते, 'सनत्कुमारमाहेन्द्राविति' सनत्कुमारमाहेन्द्रदेवाधिपोपलक्षिताः तत्कल्पनिवासिनस्त्रिदशा एव सामानिकादयो गृह्यन्ते, ते हि द्वितीयां पृथिवीमवधिना पश्यन्ति, तथा तृतीयां च पृथिवीं ब्रह्मलोकलान्तकदेवेशोपलक्षिताः तत्कल्पनिवासिनो विबुधाः सामानिकादयः पश्यन्ति, तथा शुक्रसहस्रारसुरनाथोपलक्षिताः खल्वन्येऽपि तत्कल्पनिवासिनो देवाश्चतुर्थीं पृथिवीं पश्यन्तीति गाथार्थः ॥ ४८ ॥ द्वितीयगाथा व्याख्यायते–आनतप्राणतयोः कल्पयोः संबन्धिनो देवाः पश्यन्ति पञ्चमीं पृथ्वीं, तामेव आरणाच्युतयोः सम्बन्धिनो देवा अवधिज्ञानेन पश्यन्ति, स्वरूपकथनमेवेदं, विमलतरां बहुतरां चेति गाथार्थः ॥४९॥ तृतीयगाथा व्याख्यायते—लोकपुरुषग्रीवास्थाने भवानि ग्रैवेयकानि(णि) विमानानि,तत्र अधस्त्यमध्यमग्रैवेयकनिवासिनो देवा अधस्त्यमध्यमग्रैवेयकाः,ते हि षष्ठीं पृथिवीं तमोऽभिधानामवधिना पश्यन्तीति योगः, तथा सप्तमीं च पृथिवीमुपरितनग्रैवेयकनिवासिन इति, तथा 'संभिन्नलोकनाडीं' चतुर्दशरज्ज्वात्मिकां कन्यकाचोलकसंस्थानामवधिना पश्यन्ति, अनुत्तरविमानवासिनोऽनुत्तराः, तत्र एके-

१ इन्द्राणां कल्पेनोक्तेः २ व्यवच्छेद्याभावात् पूर्वयोरेता यावद्दर्शनोक्तेश्च ३ प्रतिपादनं यन्नेदेन तत्फल * पुढविं + आघ० † आघ०

न्द्रियादयोऽपि भवन्ति तद्व्यवच्छेदार्थमाह—'देवाः'। एवं क्षेत्रानुसारतो द्रव्यादयोऽप्यवसेयाः इति गाथार्थः ॥ ५० ॥ एवमधो वैमानिकावधिक्षेत्रप्रमाणं प्रतिपाद्य साम्प्रतं तिर्यगूर्ध्वं च तदेवं दर्शयन्नाह—

**एएसिमसंखिज्जा, तिरियं दीवा य सागरा चेव। बहुअअरं उवरिमगा, उड्ढं सगकप्पथूभाई ॥ ५१ ॥**

व्याख्या—'एतेषां' शक्रादीनां, संख्यायन्त इति संख्येयाः न संख्येया असंख्येयाः, तिर्यग्, द्वीपाश्च–जम्बूद्वीपादयः, सागराश्च लवणसागरादयः क्षेत्रतोऽवधिपरिच्छेद्यतया अवसेयाः इति वाक्यशेषः, तथा उक्तलक्षणात्—असंख्येयद्वीपोदधिमानात् क्षेत्रात् बहुतरं, उपरिमा एव उपरिमका उपर्युपरिवासिनो देवाः, खल्ववधिना क्षेत्रं पश्यन्तीति वाक्यशेषः, तथा ऊर्ध्वं स्वकल्पस्तूपाद्येव यावत् क्षेत्रं पश्यन्ति, आदिशब्दाद् ध्वजादिपरिग्रहः इति गाथार्थः ॥ ५१ ॥ इत्थं वैमानिकानां अवधिक्षेत्रमानमभिधाय इदानीं सामान्यतो देवानां प्रतिपादयन्नाह—

**संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे। तेण परमसंखेज्जा, जहण्णयं पंचवीसं तु ॥ ५२ ॥**

व्याख्या—संख्येयानि च तानि योजनानि चेति विग्रहः, खलुशब्दस्त्वेवकारार्थः, स चावधारणे, अस्य चोभयथा संबन्धमुपदर्शयिष्यामः 'देवानां' 'अर्धसागरे' इति अर्धसागरोपमे न्यूने आयुषि सति संख्येययोजनान्येव अवधिक्षेत्रमिति। अर्धसागरोपमन्यून एव आयुषि सति, 'ततः परं' अर्धसागरोपमादावायुषि सति असंख्येयानि योजनानि अवधिक्षेत्रं

१ प्रमाणमवधे २ शक्राद्युपरक्षितानां तत्तत्कल्पवासिसामानिकादीनामित्युक्तमेव प्राक् * उड्ढं च सकप्प० + पण्णवीस

वैमानिकवर्जदेवानां सामान्यत इति। विशेषतस्तु ऊर्ध्वमधस्तिर्यक् च संस्थानविशेषादवसेयमिति। तथा जघन्यकमवधिक्षेत्रं देवानामिति वर्त्तते, 'पञ्चविंशतिः' तुशब्दस्यैवकारार्थत्वात् पञ्चविंशतिरेव योजनानि, एतच्च दशवर्षसहस्रस्थितीनामवसेयं, भवनपतिव्यन्तराणामिति, ज्योतिष्काणा त्वसंख्येयस्थितित्वात् संख्येययोजनान्येव जघन्येतरभेदमवधिक्षेत्रमवसेयमिति, वैमानिकानां तु जघन्यमङ्गुलासंख्येयभागमात्रमवधिक्षेत्रं, तच्चोपपातकाले परभवसंबन्धिनमेवावधिमधिकृत्येति, उत्कृष्टमुक्तमेव 'संभिण्णलोगनालिं, पासंति अणुत्तरा देवा' (५१) इत्यलमतिविस्तरेणेति गाथार्थः ॥ ५२ ॥ साम्प्रतमयमेवावधिः येषां सर्वोत्कृष्टादिभेदभिन्नो भवति, तान्प्रदर्शयन्नाह—

**उक्कोसो मणुएसुं, मणुस्सतिरिएसु† य जहण्णो य। उक्कोस लोगमित्तो, पडिवाइ‡ परं अपडिवाई ॥ ५३ ॥**

व्याख्या—द्रव्यतः क्षेत्रतः कालतो भावतश्चोत्कृष्टोऽवधिः मनुष्येषु एव, नामरादिषु, तथा मनुष्याश्च तिर्यञ्चश्च मनुष्यतिर्यञ्चः तेषु मनुष्यतिर्यक्षु च जघन्यः, चशब्द एवकारार्थः, तस्य चैवं प्रयोगः—मनुष्यतिर्यक्ष्वेव जघन्यो, न नारकसुरेषु, तत्र उत्कृष्टो लोकमात्र एव अवधिः, प्रतिपतितुं शीलमस्येति प्रतिपाती, ततः परमप्रतिपात्येव, लोकमात्रादावधि-

१ प्राक् प्रतिपादितत्वाद्वैमानिकानामवधेर्नात्र तदधिकार २ तत्र चतुर्णामपि निकायानां, तत्र वैमानिकानां, पृथगभिधानाभावात् ३ द्वितीयपादात् ४ तेषां जघन्येतरस्थित्योरर्धसागरोपमात् न्यूनत्वात ५ तथा च देवाना सर्वजघन्यावधिनिषेधेऽपि न क्षति, भवप्रत्ययावधे पश्चाद्भावात्, तस्य चोक्तमानत्वात ६ वैमानिकावधिषु अनुत्तरोपपातिकावधेरेवोत्कृष्टत्वात् केवलमेतन्निर्दिष्ट ७ भवगुणप्रत्ययसाधारणोऽवधिरिति ८ सभिण्णलोगनाडिं पासति अणुत्तरा देव इति सूत्रेण सव्वबहुअगणिजीवा इत्यनेन च * कृत्स + तान्दर्श० † तेरिच्छिएसु य जहण्णो ‡ पडिवाई ¶ जघन्यत.

द्वितीयगाथाव्याख्या—इह लब्धितोऽवस्थानं चिन्त्यते—अद्धा—अवधिलब्धिकालः, अत्र अद्धायाः—कालतोऽवस्थानं अवधेर्लब्धिमङ्गीकृत्य तत्र चान्यत्र क्षेत्रादौ 'षट्षष्टिसागरा' इति षट्षष्टिसागरोपमाणि, तुशब्दस्य विशेषणार्थत्वात् मनागधिकानि 'कालेनेति' कालतः उत्कृष्टमेवेदं कालतोऽवस्थानमिति । जघन्यमवस्थानमाह—तत्र द्रव्यादावप्येकः समयो जघन्येनावस्थानमिति, तत्र मनुष्यतिरश्चोऽधिकृत्य सप्रतिपातोपयोगतोऽविरुद्धमेव, देवनारकाणामपि चरमसमयसम्यक्त्वप्रतिपत्तौ सत्या विभङ्गस्यैवावधिरूपापत्तेः, तदनन्तरं च्यवनाच्चाविरोध इति गाथार्थः ॥ ५८ ॥ एवं तावदवस्थितद्वारमभिधाय इदानीं चलद्वाराभिधित्सयाऽऽह—

**वुड्ढी वा हाणी वा, चउव्विहा होइ खित्तकालाणं । दव्वेसु होइ दुविहा, छव्विह पुण पज्जवे होइ ॥ ५९ ॥**

व्याख्या—तत्र चलो ह्यवधिः वर्धमानः क्षीयमाणो वा भवति, सा च वृद्धिर्हानिर्वा चतुर्विधा भवति क्षेत्रकालयोः, तथा चाभ्यधायि परमगुरुणा—"असंखेज्जभागवुड्ढी वा संखेज्जभागवुड्ढी वा संखेज्जगुणवुड्ढी वा असंखेज्जगुणवुड्ढी वा," एवं हानिरपि, न तु अनन्तभागवृद्धिरनन्तगुणवृद्धिर्वा, एवं हानिरपि, क्षेत्रकालयोरनन्तयोरदर्शनात्, तथा द्रव्येषु भवति द्विधा वृद्धिर्हानिर्वा, कथम् ?—अनन्तभागवृद्धिर्वा अनन्तगुणवृद्धिर्वा, एवं हानिरपि, द्रव्यानन्त्यादिति भावार्थः। तथा षड्विधा 'पर्याये' इति जात्यपेक्षमेकवचनं पर्यायेषु भवति, वृद्धिर्वा हानिर्वेति वर्त्तते, पर्यायानन्त्यात्, कथम् ?—अनन्तभागवृद्धिः असंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिः असंख्येयगुणवृद्धिः अनन्तगुणवृद्धिरिति, एवं हानिरपि । आह—क्षेत्रस्यासंख्येयभागादिवृद्धौ तदाधेयद्रव्याणामपि तन्निबन्धनत्वादसंख्येयभागादिवृद्धिरेवास्तु, तथा द्रव्यस्यानन्तभागादिवृद्धौ सत्यां तत्पर्यायाणामपि अनन्तभागादिवृद्धिरिति षट्स्थानकमनुपपन्नमिति, अत्रोच्यते, सामान्यन्यायमङ्गीकृत्य इदमित्थमेव, यदा क्षेत्रानुवृत्त्या पुद्गलाः परिसंख्यायन्ते, पुद्गलानुवृत्त्या च तत्पर्यायाः, न चात्रैवं, कथम् ?—यस्मात्स्वक्षेत्रादनन्तगुणाः पुद्गलाः, तेभ्योऽपि पर्याया इति, अतो यस्य यथैवोक्ता वृद्धिर्हानिर्वा तस्य तथैवाविरुद्धेति, प्रतिनियतविषयत्वात्, विचित्रावधिनिबन्धनाच्चेति गाथार्थः॥५९॥ एवं तावच्चलद्वारं व्याख्यातम् , इदानीं तीव्रमन्दद्वारावयवार्थं व्याचिख्यासुरिदमाह—

१ न केवलं काल इत्यपिशब्दार्थं, आदिना आधारादिग्रह गुणपर्यायग्रहो वा २ गुणत उत्पन्नेऽपि जघन्येन समयान्तरे प्रतिपातात् मरणेन ३ अनन्तरसमय इत्यर्थ ४ असख्येयभागवृद्धिर्वा सख्येयभागवृद्धिर्वा सख्येयगुणवृद्धिर्वा असख्येयगुणवृद्धिर्वा (प्रज्ञापनायां) * तत्र० + अन्यत्र च । ०तोपयोगत्वे ‡ द्विविधा

**फड्डा य असंखिज्जा, संखेज्जा यावि एगजीवस्स । एक्कप्फड्डुवओगे, नियमा सव्वत्थ उवउत्तो ॥ ६० ॥**

**फड्डा य आणुगामी, अणाणुगामी य मीसगा चेव । पडिवाइ अपडिवाई, मीसो य मणुस्सतेरिच्छे ॥ ६१ ॥**

प्रथमगाथाव्याख्या—इह फड्डुकानि अवधिज्ञाननिर्गमद्वाराणि अथवा गवाक्षजालादिव्यवहितप्रदीपप्रभाफड्डुकानीव फड्डुकानि, तानि चासंख्येयानि संख्येयानि चैकजीवस्य, तत्रैकफड्डुकोपयोगे सति नियमात् 'सर्वत्र' सर्वैः फड्डुकैरुपयुक्तो भवन्ति, एकोपयोगत्वाज्जीवस्य लोचनद्वयोपयोगवत् , प्रकाशमयत्वाद्वा प्रदीपोपयोगवदिति । आह—तीव्रमन्दद्वारं प्रक्रान्तं

१ अनन्तभागगुणवृद्धिहानी द्रव्ये, पर्यायेषु षट्स्थानगा वृद्धिर्हानिर्वा २ द्वाभ्यां नेत्राभ्या निरीक्षते नरो युगपत् , न चानेकोपयोगता, तद्वदत्राप्यनेकस्पर्धकैरुपयोगेऽप्येकदा नानेकोपयोगता, एकनेत्रोपयोगे च उपयोगो द्वयोरेव, युगपदुपयुज्यमानत्वात् ३ उपयोग कार्यं, न च दीप एकया दिशा प्रकाशयति केवल, किं तु सर्वाभि * स्वपर्याया + फड्डाइ । ०युक्तो भवति

विहाय फड्डुकावधिस्वरूपं प्रतिपादयतः प्रक्रमविरोध इति, अत्रोच्यते, प्रायोऽनुगामुकाप्रतिपातिलक्षणौ फड्डुकौ तीव्रौ, तथेतरौ मन्दौ, उभयस्वभावता च मिश्रस्येति गाथार्थः ॥ ६० ॥ द्वितीयगाथाव्याख्या—फड्डुकानि—पूर्वोक्तानि, तानि च अनुगमनशीलानि आनुगामुकानि, एतद्विपरीतानि* अनानुगामुकानि, उभयस्वरूपाणि मिश्रकाणि च, एवकारः अवधारणे, तान्येकैकशः प्रतिपतनशीलानि प्रतिपातीनि, एवमप्रतिपातीनि मिश्रकाणि च भवन्ति, तानि च मनुष्यतिर्यक्षु योऽवधिस्तस्मिन्नेव भवन्तीति । आह—आनुगामुकाप्रतिपातिफड्डुकयोः कः प्रतिविशेषः ?, अनानुगामुकप्रतिपातिफड्डुकयोर्वेति, अत्रोच्यते, अप्रतिपात्यानुगामुकमेव, आनुगामुकं तु प्रतिपात्यप्रतिपाति च भवतीति शेषः । तथा प्रतिपतत्येव प्रतिपाति, प्रतिपतितमपि च सत् पुनर्देशान्तरे जायत एवं, नेत्थमनानुगामुकमिति गाथार्थः ॥ ६१ ॥ व्याख्यातं तीव्रमन्दद्वारं, इदानीं प्रतिपातोत्पादद्वारं विवृण्वन् गाथाद्वयमाह—

**बाहिरलंभे भज्जो, दव्वे खित्ते य कालभावे य । उप्पा पडिवाओऽविय, तं उभयं एगसमएणं ॥ ६२ ॥**

**अब्भिंतरलद्धीए, उ तदुभयं नत्थि एगसमएणं । उप्पा पडिवाओऽविय, एगयरो एगसमएणं ॥ ६३ ॥**

प्रथमगाथाव्याख्या—तत्र द्रष्टुर्बहिर्योऽवधिस्तस्यैव एकस्या दिशि अनेकासु वा विच्छिन्नः स बाह्यः तस्य लाभो

१ विशेषस्पर्धकसद्भावे तीव्रत्वमवधेरितरथा चेतरत् मध्यमे च मिश्रतेति कारण तीव्रादे स्पर्धकान्येवेति तद्दर्शने न प्रक्रमविरोध इत्यर्थ २ असंख्येयानां सख्येयानां वोत्पन्नाना स्पर्धकानामवस्थानात् क्षेत्रान्तरेऽपि ३ आनुगामुकादीनि ४ आ कैवल्याहे भवक्षयात् स्थानापेक्षया भवान्तरेऽवस्थानमाश्रित्य च ५ प्रतिपातिनोऽप्यानुगामुकत्वदर्शनायेदम् ६ स्पर्धकरूपकारणाभिधानद्वारेण ७ अनुक्तसमुच्चयार्थत्वात् परिमण्डलाकारोऽपि * तद्विपरीतानि च + विशेष । तदुभय चेग०

बाह्यलाभः, अवधिः प्रक्रमात् गम्यते, अस्मिन् बाह्यलाभे सति—बाह्यावधिप्राप्तौ सत्यां 'भाज्यो' विकल्पनीयः, कोऽसौ?—उत्पादः प्रतिपात तदुभयगुणश्च एकसमयेनेति सम्बन्धः, किंविषय इति ?, आह—'द्रव्य' इति द्रव्यविषयः, एवं क्षेत्रकालभावविषय इति, अपिचशब्दाः पूरणसमुच्चयार्थाः । अयं भावार्थः—एकस्मिन् समये द्रव्यादौ विषये बाह्यावधेः कदाचिदुत्पादो भवति कदाचिद्व्ययः कदाचिदुभयं, दावानलदृष्टान्तेन, यथा हि दावानलः खल्वेककाल एवैकतो दीप्यतेऽन्यतश्च ध्वंसत इति, तथा अवधिरपि एकदेशे जायते अन्यत्र प्रच्यवत इति गाथार्थः ॥ ६२ ॥ द्वितीयगाथाव्याख्या—इह द्रष्टुः सर्वतः संबद्धः प्रदीपप्रभानिकरवदवधिरभ्यन्तरोऽभिधीयते तस्य लब्धिरभ्यन्तरलब्धिः तस्यामभ्यन्तरलब्धौ तु सत्यां अभ्यन्तरावधिप्राप्तावित्यर्थः । तुशब्दो विशेषणार्थः, किं विशिनष्टि ?—तच्च तदुभयं च तदुभयं, उत्पातप्रतिपातोभयं नास्त्येकसमयेन, 'द्रव्यादौ विषये' इत्यनुवर्त्तते, किं तर्हि ?—उत्पादः प्रतिपातो वा एकतर एव एकसमयेन, अपिशब्दस्यैवकारार्थत्वात् । अयं भावार्थः—प्रदीपस्येवोत्पाद एव प्रतिपातो वा एकसमयेन भवति अभ्यन्तरावधेर्न तूभयं, अप्रदेशावधित्वादेव, न ह्येकस्य एकपर्यायेणोत्पादव्ययौ युगपत्स्यातां अङ्गुल्याकुञ्चनप्रसारणवदिति गाथार्थः ॥ ६३ ॥ प्रतिपादितं प्रतिपातोत्पादद्वारं, इदानीं यदुक्तं 'संखेज्ज मणोदव्वे, भागो लोगपलियस्स' ( ४२ ) इत्यादि, तत्र द्रव्यादित्रयस्य परस्परोपनिबन्ध उक्तः, इदानीं द्रव्यपर्याययोः प्रसङ्गत एवोत्पादप्रतिपाताधिकारे प्रतिपादयन्नाह—

१ सख्येयो मनोद्रव्यविषयेऽवधौ भागो लोकपल्योपमयोः * अवधे + तस्मिन् † गुणश्च ‡ ० विभा० § ०त्पाद प्रति० ¶ समयेनैव

दव्वाओ असंखिज्जे, संखेज्जे आवि पज्जवे लहइ । दो पज्जवे दुगुणिए, लहइ य एगाउ दव्वाउ ॥ ६४ ॥

व्याख्या—परमाण्वादिद्रव्यमेकं पश्यन् द्रव्यात्सकाशात् तत्पर्यायान् उत्कृष्टतोऽसंख्येयान् संख्येयाँश्चापि मध्यमतो लभते प्राप्नोति पश्यतीत्यनर्थान्तरं, तथा जघन्यतस्तु द्वौ पर्यायौ द्विगुणितौ 'लभते च' पश्यति च एकस्माद् द्रव्यात्, एतदुक्तं भवति—वर्णगन्धरसस्पर्शानेव प्रतिद्रव्यं पश्यति, न त्वनन्तान्, सामान्यतस्तु द्रव्यानन्तत्वादेव अनन्तान् पश्यतीति गाथार्थः ॥ ६४ ॥ साम्प्रतं युगपज्ज्ञानदर्शनविभङ्गद्वारावयवार्थाभिधित्सयाऽऽह—

सागारमणागारा, ओहिविभंगा जहण्णगा तुल्ला । उवरिमगेवेज्जेसु उ, परेण ओही असंखिज्जो ॥ ६५ ॥

व्याख्या—तत्र यो विशेषग्राहकः स साकारः, स च ज्ञानमित्युच्यते, यः पुनः सामान्यग्राहकोऽवधिर्विभङ्गो वा सोऽनाकारः, स च दर्शनं गीयते, तत्र साकारानाकाराववधिविभङ्गौ जघन्यकौ तुल्यावेव भवतः, सम्यग्दृष्टेरवधि, मिथ्यादृष्टेस्तु स एव विभङ्गः, लोकपुरुषग्रीवासंस्थानीयानि ग्रैवेयकाणि विमानानि, उपरिमाणि च तानि ग्रैवेयकाणि चेति समासः, तुशब्दोऽपिशब्दस्यार्थे द्रष्टव्यः, भवनपतिदेवेभ्यः खल्वारभ्य उपरिमग्रैवेयकेष्वपि अयमेव न्यायो यदुत—साकारानाकारौ अवधिविभङ्गौ जघन्यादारभ्य तुल्याविति, न तूत्कृष्टौ, ततः 'परेण' इति परतः अवधिरेव भवति, मिथ्या-

१ प्रतिद्रव्य एकस्मिन्वा नानन्तानित्यर्थ २ क्षेत्रकालरूपौ विषयावधिकृत्य परस्परतस्तुल्ये न तु द्रव्यभावविषयौ ( इति मलयगिरिपादा आवश्यकवृत्तौ ) ' रांखिज्जा + असखिज्जा † असखिज्जा ‡ जघन्यकौ

दृष्टीनां तत्रोपपाताभावात्, स च क्षेत्रतः असंख्येयो भवति, योजनापेक्षयेति गाथार्थः ॥ ६५ ॥ इदानीं देशद्वारावयवार्थं प्रचिकटयिपुरिदमाह—

णेरइयदेवतित्थंकरा य ओहिस्सऽबाहिरा हुंति । पासंति सव्वओ खलु, सेसा देसेण पासंति ॥ ६६ ॥

व्याख्या—'नारकाः' प्राग्निरूपितशब्दार्थाः देवा अपि तीर्थकरणशीलास्तीर्थकराः, नारकाश्च देवाश्च तीर्थकराश्चेति विग्रहः, चशब्द एवकारार्थः, स चावधारणे, अस्य च व्यवहितः सम्बन्ध इति दर्शयिष्यामः, एते नारकादयः 'अवधेः' अवधिज्ञानस्य न बाह्या अबाह्या भवन्ति, इदमत्र हृदयं—अवध्युपलब्धस्य क्षेत्रस्यान्तर्वर्तन्ते, सर्वतोऽवभासकत्वात्, प्रदीपवत्, ततश्चार्थादबाह्यावधय एव भवन्ति, नैषां बाह्यावधिर्भवतीत्यर्थः । तथा पश्यन्ति 'सर्वतः' सर्वासु दिक्षु विदिक्षु च, खलुशब्दोऽप्येवकारार्थः, स चावधारण एव, सर्वास्वेव दिग्विदिक्ष्विति, सर्वत एवेत्यर्थः । आह—अवधेरबाह्या भवन्तीत्यस्मादेव पश्यन्ति सर्वत इत्यस्य सिद्धत्वात् 'पश्यन्ति सर्वतः' इत्येतदतिरिच्यते इति, अत्रोच्यते, नैतदेवं, अवधेरबाह्यत्वे सत्यपि अभ्यन्तरावधित्वे सत्यपीतिभावः, न सर्वे सर्वतः पश्यन्ति, दिगन्तरालादर्शनात्, अवधेर्विचित्रत्वाद्, अतो नातिरिच्यत इति, 'शेषाः' तिर्यङ्नरा 'देशेन' इत्येकदेशेन पश्यन्ति, अत्रेष्टतोऽवधारणविधिः शेषा एव देशतः पश्यन्ति, न तु शेषा देशत एवेति गाथार्थः ॥ अथवा अन्यथा व्याख्यायते—नारकदेवतीर्थकरा अवधेरबाह्या भवन्तीति, किमुक्तं भवति ?—नियतावधय एव भवन्ति, नियमेनैषामवधिर्भवतीत्यर्थः, अतः संशयः—किं ते तेन

*अत्रेष्टितो० + ०तीर्थकरा

सर्वतः पश्यन्ति आहोस्विद्देशत इति, अतस्तद्व्यवच्छेदार्थमाह—पश्यन्ति सर्वत एव । आह—यद्येवं 'पश्यन्ति सर्वतः' इत्येतावदेवास्तु, अवधेरबाह्या भवन्तीति नियतावधित्वख्यापनार्थमनर्थकं, न, नियतावधित्वस्यैव विशेषणार्थत्वादस्य, अवधेरबाह्या भवन्तीति सदाऽवधिज्ञानवन्तो भवन्तीतिज्ञापनार्थत्वाददुष्टं । आह—ननु नारकदेवानां भवप्रत्ययावधिग्रहणात् तीर्थकृतामपि प्रसिद्धतरपारभविकावधिसमन्वागमादेव नियतावधित्वं सिद्धमिति, अत्रोच्यते, नियतावधित्वे सिद्धेऽपि न सर्वकालावस्थायित्वसिद्धिरित्यतस्तत्प्रदर्शनार्थमवधेरबाह्या भवन्तीति सदाऽवधिज्ञानवन्तो भवन्तीति ज्ञापनार्थत्वाददुष्टं । आह—यद्येवं तीर्थकृतां सर्वकालावस्थायित्वं विरुध्यत इति, न, तेषां केवलोत्पत्तावपि वस्तुतस्तत्परिच्छेदस्य [१]निष्ठत्वात्, केवलेन सुतरां संपूर्णानन्तधर्मकवस्तुपरिच्छित्तेः, छद्मस्थकालस्य वा विवक्षितत्वाददोष इति, अलं विस्तरेण, शेषं पूर्ववदिति गाथार्थः ॥ ६६ ॥ एवं देशद्वारावयवार्थमभिधायेदानीं क्षेत्रद्वारं [†]विवृवूर्पुराह—

**संखिज्जमसंखिज्जो, पुरिसमबाहाइ खित्तओ ओही । संबद्धमसंबद्धो, लोगमलोगे य संबद्धो ॥ ६७ ॥**

व्याख्या—तत्र संबद्धश्चासंबद्धश्च अवधिर्भवति, किमुक्तं भवति ?—कश्चिद् द्रष्टरि संबद्धो भवति, प्रदीपप्रभावत्, [‡]कश्चिच्च असंबद्धो भवति, [¶] विप्रकृष्टतमोव्याकुलदेशप्रदीपदर्शनवत् । तत्र यस्तावदसंबद्धः असौ संख्येयः असंख्येयो वा । पूर्णः सुखदुःखानामिति पुरुषः, पुरि शयनाद्वा पुरुष इति । पुरुषादबाधा, अबाधनमबाधा अन्तरालमित्यर्थः,

* ०ति, किमुक्तं भवति ?-सदाऽवधेरबाह्या भवन्ति नियतावधय इत्यर्थः । आह + ०त्साप्यनपायाद् † विवरीपु० ‡ कश्चित्त्वस० ¶ अतिविप्र

पुरुषस्याबाधा पुरुषाबाधा तया पुरुषाबाधया हेतुभूतया सह वा क्षेत्रतः अवधिर्भवति, अयं भावार्थः—असंबद्धोऽवधिः क्षेत्रतः संख्येयो भवति असंख्येयो वा, योजनापेक्षयेति, एवं संबद्धोऽपि । एवमवधिः स्वतन्त्रः पर्यालोचितः, इदानीमबाधया चिन्त्यते—अत्र चतुर्भङ्गिका, तत्र संख्येयमन्तरं संख्येयोऽवधिः, संख्येयमन्तरं असंख्येयोऽवधिः, असंख्येयमन्तरं संख्येयोऽवधिः, असंख्येयमन्तरमसंख्येयोऽवधिरिति चत्वारोऽपि विकल्पाः संभवन्ति, संबद्धे तु विकल्पाभावः । तथा 'लोके' चतुर्दशरज्ज्वात्मके पञ्चास्तिकायवति, 'अलोके च' केवलाकाशास्तिकाये, चशब्दः समुच्चयार्थः, लोके अलोके च संबद्धः, कथम् ?—पुरुषे संबद्धो लोके च—लोकप्रमाणावधिः, पुरुषे न लोके—देशतोऽभ्यन्तरावधिः, न पुरुषे लोके—शून्यो भङ्गः, न लोके न पुरुषे—बाह्यावधिः, इयं भावना—लोकाभ्यन्तरः पुरुषे संबद्धोऽसंबद्धो वा भवति, यस्तु लोके संबद्धः स नियमात्पुरुषे संबद्ध इति, अतो भङ्गचतुष्टयं तृतीयभङ्गशून्यमिति, अलोकसंबद्धस्त्वात्मसंबद्ध एव भवतीति गाथार्थः ॥ ६७ ॥ इदानीं गतिद्वारावयवार्थप्रतिपिपादयिषयाऽऽह—

**गइनेरइयाईया, हिट्ठा जह वण्णिया तहेव इहं । इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥ ६८ ॥**

व्याख्या—तत्र गत्युपलक्षिताः सर्वे एवेन्द्रियादयो द्वारविशेषाः परिगृह्यन्ते, ततश्च ये गत्यादयः सत्पदप्ररूपणाविषयः द्रव्यप्रमाणादयश्च, ते यथा अधस्तान्मतिश्रुतयोः 'वर्णिताः' उपदिष्टाः तथैवेहापि द्रष्टव्या इति, विशेषस्त्वयम्—इह ये मतिं प्रतिपद्यन्ते तेऽवधिमपि, किन्त्ववेदकास्तथा अकषायिणोऽप्यवधेः प्रतिपद्यमानका भवन्ति क्षपकश्रेण्य-

* नेदं प्रत्यन्तरे

न्तर्गताः सन्त इति, तथा मनःपर्यायज्ञानिनश्च तथा अनाहारका अपर्याप्तकाश्च पूर्वसम्यग्दृष्टयः सुरनारका अप्यपान्तरालगत्यादाविति, शक्तिमधिकृत्येति भावार्थः । पूर्वप्रतिपन्नास्तु त एव ये मतेः विकलेन्द्रियासंज्ञिशून्या इति, उक्तमवधिज्ञानमिति । तत्र अवधिज्ञानी उत्कृष्टतो द्रव्यतः सर्वमूर्तद्रव्याणि जानाति पश्यति, क्षेत्रतस्त्वादेशेनासंख्येयं क्षेत्रं, एवं कालमपि, भावतस्त्वनन्तान् भावानिति । तत्र ऋद्धिविशेष 'एषः' अवधिः 'व्यावर्ण्यते' गीयते अतः तत्सामान्यात शेषर्द्धयोऽपि वर्ण्यन्त इति गाथार्थः ॥ ६८ ॥ तत्र शेषर्द्धिविशेषस्वरूपप्रतिपादनायाह—

**आमोसहि विप्पोसहि खेलोसहि जल्लमोसही चेव । संभिन्नसो[†]उज्जुमइ, सव्वोसहि चेव [‡]बोद्धव्वो ॥ ६९ ॥**
**चारणआसीविस केवली य मणनाणिणो य पुव्वधरा । अरहंत चक्कवट्टी, बलदेवा वासुदेवा य ॥ ७० ॥**

प्रथमगाथाव्याख्या—आमर्शनमामर्शः संस्पर्शनमित्यर्थः, स एवौषधिर्यस्यासावामर्शौषधिः—साधुरेव संस्पर्शनमात्रादेव व्याध्यपनयनसमर्थ इत्यर्थः, लब्धिलब्धिमतोरभेदात् स एवामर्शलब्धिरिति, एवं विट्खेलजल्लेष्वपि योजना कर्त्त-

१ अवध्युत्पादमन्तरेणैतदुत्पादान्मन पर्यायज्ञानिनोऽवधे प्रतिपद्यमानका २ प्राच्यनरतिर्यग्भवान्त्यसमयादनन्तर सुरनारकायुरुदयादेव व्यपदेश 'य अप्रतिपतितसम्यक्त्वास्तिर्यग्मनुष्येभ्यो देवनारका जायन्ते ते' इतिहेमचन्द्रपादा ३ विकलेन्द्रियाणा असंज्ञिनां च सास्वादनसम्यक्त्वान्मतिश्रुतयो पूर्वप्रतिपन्नता स्यात्, परमवधेस्तु न ४ उपचारेण ५ रोगापनयनबुद्धेतिम०श्रीहेमचन्द्रपादा ६ मूत्रपुरीषयोरवयवो विप्रुडुच्यते, अन्ये त्वाहु –विड् उच्चार प्रेति प्रश्रवणमिति, म० श्रीहेमचन्द्रपादा ( विप्रुडौषधि ) * विकल्पे वि० + ०ओसही † सो य उज्जु० सोउ उज्जु ‡ बोद्धव्वा

व्येति, तत्र 'विड्' उच्चारः 'खेलः' श्लेष्मा 'जल्लो' मल इति, भावार्थः पूर्ववत्, सुगन्धाश्चैते भवन्ति । तथा यः सर्वतः शृणोति स संभिन्नश्रोता, अथवा श्रोतांसि इन्द्रियाणि संभिन्नान्येकैकशः सर्वविषयैरस्य परस्परतो वेति संभिन्नश्रोताः, संभिन्नान् वा परस्परतो लक्षणतोऽभिधानतश्च सुबहूनपि शब्दान् शृणोति संभिन्नश्रोता, एवं संभिन्नश्रोतृत्वमपि लब्धिरेव । तथा ऋज्वी मतिः ऋजुमतिः सामान्यग्राहिकेत्यर्थः, मनःपर्यायज्ञानविशेषः, अयमपि च लब्धिविशेष एव, लब्धिलब्धिमतोश्चाभेदात् ऋजुमतिः साधुरेव । तथा सर्व एव विण्मूत्रकेशनखादयो विशेषाः खल्वौषधयो यस्य, व्याध्युपशमहेतव इत्यर्थः, असौ सर्वौषधिश्च, एवमेते ऋद्धिविशेषा बोद्धव्या इति गाथार्थः ॥ ६९ ॥ द्वितीयगाथाव्याख्या—अतिशयचरणाच्चारणाः, अतिशयगमनादित्यर्थः, ते च द्विभेदाः—विद्याचारणा जङ्घाचारणाश्च, तत्र जङ्घाचारणः शक्तितः किल रुचकवरद्वीपगमनशक्तिमान् भवति, स च किलैकोत्पातेनैव रुचकवरद्वीपं गच्छति, आगच्छंश्चोत्पातद्वयेनागच्छति, प्रथमेन नन्दीश्वरं द्वितीयेन यतो गतः, एवमूर्ध्वमपि एकोत्पातेनैवाचलेन्द्रमूर्ध्नि स्थित पाण्डुकवनं गच्छति, आगच्छंश्चोत्पातद्वयेनागच्छति, प्रथमेन नन्दनवनं द्वितीयेन यतो गतः । विद्याचारणस्तु नन्दीश्वरद्वीपगमनशक्तिमान् भवति, स † त्वेकोत्पातेन मानुषोत्तरं गच्छति, द्वितीयेन नन्दीश्वरं, तृतीयेन त्वेकेनैवाऽऽगच्छति

१ चकाराद्विडादीनां व्याध्यपनयनसाहचर्यं २ विडादय ३ सर्वैरेव शरीरदेशैरिति म० श्रीहेमचन्द्रपादा ४ सर्वाणीन्द्रियाणि सर्वविषयान् प्रत्येक विदन्ति ५ परस्पर श्रोत्रचक्षुषी रूपशब्दविषयौ वित्तो यथैवमन्येष्वपि परस्परविषयज्ञान ६ द्वादशयोजनचक्रवर्तिकटकस्य युगपद् ब्रुवाणस्य तत्तूर्यसघातस्य वा युगपदास्फाल्यमानस्य ७ जङ्घाभ्याम् ८ सूत्रानुसारेणैकादश चूर्ण्यनुसारेण तु त्रयोदश, तत्र अरुणावासशङ्खवरयोरधिकयोर्दर्शनात् * ०चलादि० + पाण्डक० | तत्रको०

यतो गतः, एवमूर्ध्वमपि व्यत्ययो वक्तव्य इति । अन्ये तु शक्तित एव रुचकवरादिद्वीपगमनयोर्गोचरतया व्याचक्षत इति । तथा आस्यो–दंष्ट्राः तासु विषमेषामस्तीति आसीविषाः, ते च द्विप्रकारा भवन्ति–जातितः कर्मतश्च, तत्र जातितो वृश्चिकमण्डूकोरगमनुष्यजातयः, कर्मतस्तु तिर्यग्योनयः मनुष्या देवाश्चासहस्रारादिति, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणतः खल्वाशीविषा भवन्ति, देवा ‡ अपि तच्छक्तियुक्ता भवन्ति, शापप्रदानेनैव व्यापादयन्तीत्यर्थः । तथा केवलिनश्च प्रसिद्धा एव । तथा मनोज्ञानिनो विपुलमनःपर्यायज्ञानिनः परिगृह्यन्ते । पूर्वाणि धारयन्तीति पूर्वधराः, दशचतुर्दशपूर्वविदः । अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः तीर्थकरा इत्यर्थः । 'चक्रवर्तिनः' चतुर्दशरत्नाधिपाः षट्खण्डभरतेश्वराः । 'बलदेवाः' प्रसिद्धा एव । 'वासुदेवाः' सप्तरत्नाधिपा अर्धभरतप्रभव इत्यर्थः । एते हि सर्व एव चारणादयो लब्धिविशेषा वर्त्तन्ते इति गाथार्थः ॥ ७० ॥ इह वासुदेवत्वं चक्रवर्तित्वं तीर्थकरत्वं च ऋद्धयः प्रतिपादिताः, तत्र तदतिशयप्रतिपादनायेदं गाथापञ्चकं जगाद निर्युक्तिकारः—

सोलस रायसहस्सा सव्वबलेणं तु संकलनिबद्धं । अंछंति वासुदेवं § अगडतडंमी ठियं संतं ॥ ७१ ॥
घित्तूण संकलं सो वामगहत्थेण अंछमाणाणं । भुंजिज्ज व लिंपिज्ज व महुमहणं ते न चायंति ॥ ७२ ॥
दोसोला बत्तीसा, सव्वबलेणं तु संकलनिबद्धं । अंछंति चक्कवट्टिं, अगडतडंमी ¶ ठियं संतं ॥ ७३ ॥

१ एविधतो ये आसीविषलब्धिमन्त पञ्चेन्द्रियतिर्यगादयस्ते, देवा पर्याप्तावस्थाया शापादिना व्यापादने समर्था अपि देवभवप्रत्ययिकात्वात्तद्विवक्षितमिति अपर्याप्तावस्थायामेवैतद्व्यपदेशो देवानाम् * मेषामिति + ०श्च सह० † ०ष्ठानतो वा० ‡ अपि च § ०तलमि ¶ तलमि.

घित्तूण संकलं सो, वामगहत्थेण अंछमाणाणं । भुंजिज्ज व लिंपिज्ज व, चक्कहरं ते न चायंति ॥ ७४ ॥
जं केसवस्स उ बलं, तं दुगुणं होइ चक्कवट्टिस्स । तत्तो बला बलवगा, अपरिमियबला जिणवरिंदा ॥ ७५ ॥

आसां गमनिका—इह वीर्यान्तरायकर्मक्षयोपशमविशेषाद्बलातिशयो वासुदेवस्य संप्रदर्श्यते–षोडश राजसहस्राणि 'सर्वबलेन' हस्त्यश्वरथपदातिसंकुलेन सह शृङ्खलानिबद्धं 'अंछंति' देशीवचनात् आकर्षन्ति वासुदेवं 'अगडतटे' कूपतटे स्थित सन्तं, ततश्च गृहीत्वा शृङ्खलामसौ वामहस्तेन 'अंछमाणाणं' ति आकर्षतां भुञ्जीत विलिम्पेत वा अवज्ञया हृष्टः सन्, मधुमथनं ते न शक्नुवन्ति, आक्रष्टुमिति वाक्यशेषः । चक्रवर्तिनस्त्विदं बलं–द्वौ षोडशकौ, द्वात्रिंशदित्येतावति वाच्ये द्वौ षोडशकावित्यभिधानं चक्रवर्तिनो वासुदेवाद् द्विगुणर्द्धिख्यापनार्थं, राजसहस्राणीति गम्यते, सर्वबलेन सह शृङ्खलानिबद्धं आकर्षन्ति चक्रवर्तिनं अगडतटे स्थितं सन्त गृहीत्वा शृङ्खलामसौ वामहस्तेन आकर्षतां भुञ्जीत विलिम्पेत वा, चक्रधरं ते न शक्नुवन्ति आक्रष्टुमिति वाक्यशेषः । यत् केशवस्य तु बलं तद्द्विगुणं भवति चक्रवर्तिनः, 'ततः' शेषलोकबलाद् 'बला' बलदेवा बलवन्तः, तथा निरवशेषवीर्यान्तरायक्षयाद् अपरिमितं बलं येषां तेऽपरिमितबलाः, क एते ?—जिनवरेन्द्राः, अथवा ततः—चक्रवर्तिबलाद् बलवन्तो जिनवरेन्द्राः, कियता बलेनेति, आह–अपरिमितबला इति । एता हि कर्मोदयक्षयक्षयोपशमसव्यपेक्षाः प्राणिनां लब्धयोऽवसेया इति । ७१–७२–७३–७४ ७५

१ अपरिमितेन बलेन बलवन्त इतिभाव (इतिमलयगिरिपादा) ^ वाच्य० + अछमाणाणति आ० † वाच्य०

इदानीं मनःपर्यायज्ञानं, लब्धिनिरूपणायां तत् सामान्यतो व्यपदिष्टमपि विषयस्वाम्यादिविशेषोपदर्शनाय ज्ञानपञ्चक्रमायातमभिधित्सुराह—

**मणपज्जवनाणं पुण जणमणपरिचिन्तियत्थपायडणं । माणुसखित्तनिबद्धं गुणपच्चइयं चरित्तवओ ॥ ७६ ॥**

व्याख्या—' मनःपर्यायज्ञानं ' प्राक्निरूपितशब्दार्थं, पुनःशब्दो विशेषणार्थः, इदं हि रूपिनिबन्धनक्षायोपशमिकप्रत्यक्षादि[1]साम्येऽपि सति अवधिज्ञानात् स्वाम्यादिभेदेन[2] विशिष्टमिति स्वरूपतः प्रतिपादयन्नाह—जायन्त इति जना[3]:, तेषां मनांसि जनमनांसि, जनमनोभिः परिचिन्तितः जनमनःपरिचिन्तितः जनमनःपरिचिन्तितश्चासावर्थश्चेति समासः, तं प्रकट यति प्रकाशयति जनमनःपरिचिन्तितार्थप्रकटनं, मानुषक्षेत्रं—अर्धतृतीयद्वीपसमुद्रपरिमाणं तन्निबद्धं, न तद्बहिर्व्यवस्थितप्राणिमनःपरिचिन्तितार्थविषयं प्रवर्त्तत इत्यर्थः । गुणाः—क्षान्त्यादयः त एव प्रत्ययाः—कारणानि यस्य तद्गुणप्रत्ययं, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवत एवेदं भवति, एतदुक्तं भवति—अप्रमत्तसंयतस्य आमर्शौषध्यादिऋद्धिप्राप्तस्यैवेति गाथार्थः ॥७६॥ इदं द्रव्यादिभिर्निरूप्यते—तत्र द्रव्यतो मनःपर्यायज्ञानी अर्धतृतीयद्वीपसमुद्रान्तर्गतप्राणिमनोभावपरिणतद्रव्याणि जानाति पश्यति च, अवधिज्ञानसंपन्नमनःपर्यायज्ञानिनमधिकृत्यैवं, अन्यथा जानात्येव न पश्यति, अथवा यतः साकारं तदतो ज्ञानं यतश्च पश्यति तेन अतो दर्शनमिति, एवं सूत्रे संभवमधिकृत्योक्तमिति, अन्यथा चक्षुरचक्षुरवधिकेवलदर्शनं तत्रोक्तं चतुर्धा विरुध्यते, क्षेत्रतः अर्धतृतीयेष्वेव द्वीपसमुद्रेषु, कालतस्तु पल्योपमासंख्येयभागं

१ आदिना छद्मस्थस्वामिसाधर्म्यम्  २ भेदवदित्यर्थ  ३ योगरूढतया नरा एव स्यु, पर संज्ञिपञ्चेन्द्रियग्रहणायैव व्युत्पादनं. * ०पागडण

एष्यमतीतं वा कालं जानाति, भावतस्तु मनोद्रव्यपर्यायान् अनन्तानिति, तत्र साक्षान्मनोद्रव्यपर्यायानेव पश्यति, बाह्याँस्तु तद्विषयभावापन्नाननुमानतो विजानाति, कुतः ?, मनसो मूर्त्तामूर्त्तद्रव्यालम्बनत्वात्, छद्मस्थस्य चामूर्त्तदर्शनविरोधादिति । सत्पदप्ररूपणादयस्तु अवधिज्ञानवदवगन्तव्याः । नानात्वं चानाहारकापर्याप्तकौ प्रतिपद्यमानौ न भवतः, नापीतरौ ॥ उक्तं मनःपर्यायज्ञानं, इदानीमवसरप्राप्तं केवलज्ञानं प्रतिपादयन्नाह—

**अह सव्वदव्वपरिणामभावविण्णत्तिकारणमणंतं । सासयमप्पडिवाइ एगविहं केवलंनाणं ॥ ७७ ॥**

व्याख्या—इह मनःपर्यायज्ञानानन्तरं सूत्रक्रमोद्देशतः शुद्धितो लाभतश्च प्राक् केवलज्ञानमुपन्यस्तं, अतस्तदर्थोपदर्शनार्थमथशब्द इति, उक्तं च—" अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेषु " । सर्वाणि च तानि द्रव्याणि च सर्वद्रव्याणि—जीवादिलक्षणानि तेषां परिणामाः—प्रयोगविस्रसोभयजन्या उत्पादादयः सर्वद्रव्यपरिणामाः तेषां भावः सत्ता स्वलक्षणमित्यनर्थान्तरं तस्य विशेषेण ज्ञपनं विज्ञप्तिः, विज्ञानं वा विज्ञप्तिः—परिच्छित्तिः, तत्र भेदोपचारात्, तस्या विज्ञप्तेः कारणं विज्ञप्तिकारणं, अत एव सर्वद्रव्यक्षेत्रकालभावविषयं तत्, क्षेत्रादीनामपि द्रव्यत्वात्, तच्च ज्ञेयानन्तत्वादनन्तं, शश्वद्भवतीति शाश्वतं, तच्च व्यवहारनयादेशादुपचारतः प्रतिपात्यपि भवति, अत आह—प्रतिपतनशीलं प्रतिपाति न प्रतिपाति अप्रतिपाति, सदाऽवस्थितमित्यर्थः । आह—अप्रतिपात्येतावदेवास्तु, शाश्वतमित्येतदयुक्तं, न

१ भतक्षाद्यर्थोऽयमथशब्द  * केवल नाण. + ज्ञापन.

अप्रतिपातिनोऽप्यवधिज्ञानस्य शाश्वतत्वानुपपत्तेः, तस्मादुभयमपि युक्तमिति । ' एकविधं ' एकप्रकारं, आवरणाभावात् क्षयस्यैकरूपत्वात्, 'केवलं ' मत्यादिनिरपेक्षं ' ज्ञानं ' संवेदनं, केवलं च तत् ज्ञानं चेति समास इति गाथार्थः ॥ ७७ ॥

इह तीर्थकृत् समुपजातकेवलः सत्त्वानुग्रहार्थं देशनां करोति, तीर्थकरनामकर्मोदयात्, ततश्च ध्वनेः श्रुतरूपत्वात् तस्य च भावश्रुतपूर्वकत्वात् श्रुतज्ञानसंभवादनिष्टापत्तिरिति मा भून्मतिमोहोऽव्युत्पन्नबुद्धीनामित्यतस्तद्विनिवृत्त्यर्थमाह—

**केवलणाणेणत्थे णाउं जे तत्थ पण्णवणजोगे । ते भासइ तित्थयरो वयजोग सुयं हवइ सेसं ॥ ७८ ॥**

व्याख्या—इह तीर्थकरः केवलज्ञानेन ' अर्थान् ' धर्मास्तिकायादीन् मूर्त्तामूर्त्तान् अभिलाप्यानभिलाप्यान् ' ज्ञात्वा ' विनिश्चित्य, केवलज्ञानेनैव ज्ञात्वा न तु श्रुतज्ञानेन, तस्य क्षायोपशमिकत्वात्, केवलिनश्च तदभावात्, सर्वशुद्धौ देशशुद्ध्यभावादित्यर्थः । ये ' तत्र ' तेषामर्थाना मध्ये, प्रज्ञापनं प्रज्ञापना तस्या योग्याः प्रज्ञापनायोग्याः ' तान् भाषते ' तानेव वक्ति नेतरानिति, प्रज्ञापनीयानपि न सर्वानेव भाषते, अनन्तत्वात्, आयुषः परिमितत्वात्, वाचः क्रमवर्त्तित्वाच्च, किं तर्हि ?, योग्यानेव गृहीतृशक्त्यपेक्षया यो हि यावता योग्य इति । तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, नामकर्मोदयनिबन्धनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च श्रुतं भवति शेषं, शेषमित्यप्रधानं, एतदुक्त भवति—श्रोतॄणां श्रुतग्रन्थानुसारिभावश्रुतज्ञाननिबन्धनत्वाच्छेषमप्रधानं द्रव्यश्रुतमित्यर्थः । अन्ये त्वेवं पठन्ति—' वयजोगसुयं हवइ तेसिं ' स वाग्योगः श्रुतं भवति ' तेषां ' श्रोतॄणां, भावश्रुतकारणत्वादित्यभिप्रायः । अथवा ' वाग्योगश्रुतं ' द्रव्यश्रुतमेवेति गाथार्थः ॥ ७८ ॥

सत्पदप्ररूपणायां च गतिमङ्गीकृत्य सिद्धगतौ मनुष्यगतौ च, इन्द्रियद्वारमधिकृत्य नोइन्द्रियातीन्द्रियेषु, एवं त्रसकायाकाययोः सयोगायोगयोः अवेदकेषु अकषायिषु शुक्ललेश्यालेश्ययोः सम्यग्दृष्टिषु केवलज्ञानिषु केवलदर्शिषु संयतनोसंयतयोः साकारानाकारोपयोगयोः आहारकानाहारकयोः भाषकाभाषकयोः परीत्तनोपरीत्तयोः पर्याप्तनोपर्याप्तयोः बादरनोबादरयोः, संज्ञिषु नोसंज्ञिषु, भव्यनोभव्ययोः, मोक्षप्राप्तिं प्रति भवस्थकेवलिनो भव्यता, चरमाचरमयोः, चरमः–केवली अचरमः–सिद्धः भवान्तरप्राप्त्यभावात्, केवलं द्रष्टव्यमिति । पूर्वप्रतिपन्नप्रतिपद्यमानयोजना च स्वबुद्ध्या कर्त्तव्येति । 'द्रव्यप्रमाणं' तु प्रतिपद्यमानानधिकृत्य उत्कृष्टतोऽष्टशतं, पूर्वप्रतिपन्नाः केवलिनस्तु अनन्ताः, 'क्षेत्रं' जघन्यतो लोकस्यासंख्येयभागः, उत्कृष्टतो लोक एव, केवलिसमुद्घातमधिकृत्य, एवं स्पर्शनाऽपि, 'कालतः' साद्यमपर्यन्तं, 'अन्तरं' नास्त्येव, प्रतिपाताभावात्, 'भागद्वारं' मतिज्ञानवद् द्रष्टव्यं, 'भाव' इति क्षायिके भावे 'अल्पबहुत्वं' मतिज्ञानवदेव । उक्तं केवलज्ञानं, तदभिधानाच्च नन्दी, तदभिधानान्मङ्गलमिति । एवं तावन्मङ्गलस्वरूपाभिधानद्वारेण ज्ञानपञ्चकमुक्तं, इह तु प्रकृते श्रुतज्ञानेनाधिकारः, तथा च निर्युक्तिकारेणाभ्यधायि—

इत्थं पुण अहिगारो सुयनाणेणं जओ सुएणं तु । सेसाणमप्पणोऽविअ अणुओगु पईवदिट्ठन्तो ॥ ७९ ॥

गमनिका—अत्र पुनः प्रकृते अधिकारः श्रुतज्ञानेन, यतः श्रुतेनैव 'शेषाणां' मत्यादिज्ञानानां आत्मनोऽपि च 'अनुयोगः' अन्वाख्यानं, क्रियत इति वाक्यशेषः, स्वपरप्रकाशकत्वात्तस्य, प्रदीपदृष्टान्तश्चात्र द्रष्टव्य इति गाथार्थः ॥ ७९ ॥

इति [†]पीठिकाविवरणं समाप्तम्.

१ संयतानां नोसंयतासंयतानां चेति ( वि० ) * दर्शनिषु + एत्थ † आवश्यके पी०

साम्प्रतं मङ्गलसाध्यः प्रकृतोऽनुयोगः प्रदर्श्यत इति, स च स्वपरप्रकाशकत्वात् गुर्वायत्तत्वाच्च श्रुतज्ञानस्येति, तथा चोक्तं—'अत्र पुनरधिकार' श्रुतज्ञानेनेत्यादि' । आह—नन्वावश्यकस्यानुयोगः प्रकृत एव, पुनः श्रुतज्ञानस्येत्ययुक्तमिति. अत्रोच्यते, आवश्यकस्य श्रुतान्तर्गतत्वप्रदर्शनार्थत्वाददोषः । आह—यद्यावश्यकस्यानुयोगः, तदावश्यकं किमङ्गमङ्गानि? श्रुतस्कन्धः श्रुतस्कन्धाः? अध्ययनमध्ययनानि? उद्देशक उद्देशका' इति, अत्रोच्यते, आवश्यकं श्रुतस्कन्धस्तथाऽध्ययनानि च, शेषास्त्वनादेशा विकल्पा इति । आह—ननु नन्दीव्याख्याने अङ्गानङ्गप्रविष्टश्रुतनिरूपणायामनङ्गताऽस्याभिहितैव, ततश्च किमङ्गमङ्गानीत्याद्याशङ्कानुपपत्तिरिति, अत्रोच्यते, तद्व्याख्याऽनियमप्रदर्शनार्थत्वाददोषः, नावश्यं शास्त्रादौ नन्द्यध्ययनार्थकथनं कर्त्तव्यं, अकृते चाशङ्का [†]संभवति । आह—मङ्गलार्थं शास्त्रादावश्यमेव नन्द्यभिधानात् [‡]कथमनियम इति, अत्रोच्यते, ज्ञानाभिधानमात्रस्यैव मङ्गलत्वात् नावश्यमवयवार्थाभिधानं कर्त्तव्यमिति, तदकरणे चाशङ्का [§]भवति । किं च—आवश्यकव्याख्यानारम्भे शास्त्रान्तरव्याख्यानारम्भोऽयुक्त एव, शास्त्रान्तरं च नन्दी, पृथक् श्रुतस्कन्धत्वात् । आह—यद्येवमिह आवश्यकश्रुतस्कन्धानुयोगारम्भे किमिति तदनुयोगं इति, उच्यते, शिष्यानुग्रहार्थं

१ एकोनाशीतिगाथाव्याख्याने, २ ज्ञानपञ्चकनिरूपकप्रकरणतया नन्द्यध्ययनस्यात् ३ अङ्गमङ्गानि किमित्याद्यास्मीया ४ नोआगमतो भावमङ्गलं हि नन्दी यत ५ मूलसूत्रापेक्षया नन्दीव्याख्यानाऽनियमप्रदर्शनाय पक्षान्तर–किञ्चेत्यादि ६ तस्य ज्ञानपञ्चकनिरूपणनिपुणप्रकरणस्यानुयोग * आवश्यका० + ०ध्ययनानि० † भवति ‡ ० मप्रदर्शनार्थत्वाददोष इति, § ०शङ्कासंभव इति

न त्वयं नियम इत्यपवादप्रदर्शनार्थं वा, एतदुक्तं भवति—कदाचित्पुरुषाद्यपेक्षया उत्क्रमेणापि अन्यारम्भेऽपि[३] चान्यद् व्याख्यायत इति, अलं प्रसङ्गेन, तत्र शास्त्राभिधानं 'आवश्यकश्रुतस्कन्धः', तद्भेदाश्च अध्ययनानि यतः तस्माद् आवश्यकं निक्षेप्तव्यं श्रुतं स्कन्धश्चेति । किं च–किमिदं शास्त्राभिधानं प्रदीपाभिधानवद् यथार्थं आहोश्वित् पलाशाभिधानवद् अयथार्थं उत डित्थाद्यभिधानवद् अनर्थकमेवेति परीक्ष्यं, यदि च यथार्थं ततस्तदुपादेयं, तत्रैव समुदायार्थपरिसमाप्तेरित्यतः शास्त्राभिधानमेव तावदालोच्यत इति । तत्र 'आवश्यकं' इति कः शब्दार्थः?, अवश्यं कर्त्तव्यमावश्यकं, अथवा गुणानामावश्यमात्मानं करोतीत्यावश्यकं, यथा अन्तं करोतीत्यन्तकः, अथवा 'वस निवासे' इति गुणशून्यमात्मानमावासयति गुणैरित्यावासकं, गुणसान्निध्यमात्मनः करोतीति भावार्थः । इदं च मङ्गलवन्नामादिचतुर्भेदभिन्नं, इदं च प्रपञ्चतः सूत्रादेवसेयमिति, उद्देशस्तु तदनुसारेणैव शिष्यानुग्रहायाभिधीयते इति, तत्र नामस्थापने सुज्ञाने एव, द्रव्यावश्यकं द्विधा–आगमतो नोआगमतश्च, तत्रागमतो ज्ञाताऽनुपयुक्तः 'अनुपयोगो द्रव्य' मितिकृत्वा, नोआगमतो द्रव्यावश्यकं त्रिविधं—ज्ञशरीरं भव्यशरीरं ज्ञशरीरभव्यशरीरव्यतिरिक्तं च, तदपि त्रिविधं—लौकिकलोकोत्तरकुप्रावच-

१ आवश्यकव्याख्यानारम्भे शास्त्रान्तरव्याख्यानारम्भोऽयुक्त इत्यस्योपदर्शितस्य नियमस्यापवाद इति २ प्राक् नन्दी पश्चादावश्यकमित्यादिकं क्रमं परित्यज्य, अपिना क्रमोऽपि पुरुषाद्यपेक्षया एव ३ आरब्धस्यापि पुरुषाद्यपेक्षयैव व्याख्येति दर्शनायापि चेति ४ समप्रशास्त्रवाच्यार्थपरिज्ञानेति ५ अनुयोगद्वाररूपात् तत्रावश्यकनिक्षेपाणां सुविस्तृततयाऽभिहितत्वात् ६ संक्षेपेण स्वरूपाभिधानरूपोऽत्रोद्देश ७ ज्ञशरीरभव्यशरीरव्यतिरिक्त परामर्शनीय तच्छब्देन, मलयगिर्या * ०पुरुषाद्यपे० + आहोस्वित्

निकभेदभिन्नं यथाऽनुयोगद्वारेषु, नवरं लोकोत्तरेणात्राधिकारः, तच्च ज्ञानादिश्रमणगुणमुक्तयोगस्य प्रतिक्रमणं भावशून्यत्वाद् अभिप्रेतफलाभावाच्च, एत्थं उदाहरणं—वसंतपुरं नगरं, तत्थ गच्छो अगीतत्थसंविग्गो विहरति, तत्थ य एगो संविग्गो समणगुणमुक्कजोगी, सो दिवसदेवसियं उदउल्लादिअणेसणाओ पडिगाहेत्ता महया संवेगेणं आलोएइ, तस्स पुण गणी अगीयत्थत्तणओ पायच्छित्तं देंतो भणति 'अहो इमो धम्मसद्धिओ साहू !, सुहं पडिसेविउं, दुक्खं आलोएउं, *एवं णाम एस आलोएइ अगूहंतो, अतो असढत्तणओ सुद्धोत्ति' +एयं च दट्ठूण अण्णे अगीयत्थसमणा पसंसंति, चिंतेंति य-णवरं आलोएयव्वं णत्थित्थ किंची पडिसेविएणं ति। अण्णदा कदाई गीयत्थे संविग्गो विहरमाणो आगओ, सो †तं दिवसदेवसियं अविहिं दट्ठूण उदाहरणं दाएति—गिरिणगरे णगरे रयणवाणियओ रत्तरयणाणं घरं भरेऊणं पलीवेइ, तं

1 अत्रोदाहरणं-वसन्तपुर नगर, तत्र गच्छोऽगीतार्थसंविग्नो विहरति, तत्र चैकः संविग्न मुक्तश्रमणगुणयोग, स दिवसदैवसिक उदकार्द्राद्यनेषणा प्रतिगृह्य महता संवेगेनालोचयति, तस्य पुनराचार्य' अगीतार्थत्वात प्रायश्चित्त ददत भणति 'अहो अयं धर्मश्रद्धिक (त) साधु' सुख प्रतिसेवितु दुष्करमालोचितुं एव नामैष आलोचयति अगूहयन्, अत अशठत्वाद् शुद्ध इति, एतद् दृष्ट्वाऽन्येऽगीतार्थश्रमणा प्रशंसन्ति, चिन्तयन्ति च परं-आलोचयितव्य नास्त्यत्र किञ्चित्प्रतिसेवितेनेति। तत्र अन्यदा कदाचित् गीतार्थ संविग्न विहरन् आगत, स त दिवसदैवसिकमविधिं दृष्ट्वोदाहरण दर्शयति-गिरिणगरे नगरे रत्नवणिग् रत्नरत्न गृह भृत्वा प्रदीपयति, तद्दृष्ट्वा सर्वलोक प्रशंसति--अहो अय धन्यो भगवन्तमग्निं तर्पयति, अन्यदा कदाचित् तेन प्रदीपित, वातश्च प्रबलो जात, सर्वं नगर दग्ध, पश्चाद्राज्ञा प्रतिहतो निर्विषयश्च कृतः। अन्यत्रापि नगरे * एय एवं + एव च † ण.

पासित्ता सव्वलोगो पसंसति—अहो इमो धण्णो भगवन्तं अग्गिं तप्पेति, अण्णया कयाई तेण पलीवितं, वाओ य पबलो जाओ, सव्वं णगरं दड्ढं, पच्छा रण्णा पडिहणिओ ‡णिव्विसओ य कओ। अण्णहिंपि णगरे एगो एवं चेव करेइ, सो राइणा सुओ जहा एवं करेइत्ति, सो सव्वस्सहरणो काऊण विसज्जिओ, अडवीए कीस ण पलीवेसि ?। जहा तेण वाणिअगेण अवसेसावि दड्ढा, एवं तुमंपि एतं पसंसित्ता एते साहुणो सव्वे परिच्चयसि, जाहे न ठाति ताहे साहुणो भणिआ—एस महाणिद्धम्मो अगीयत्थो अलं एयस्स आणाए, जदि एयस्स णिग्गहो न कीरइ, तो अण्णेवि विणस्संति। इदानीं भावावश्यकं, तदपि द्विविधमेव—आगमतो नोआगमतश्च, तत्रागमतो भावावश्यकं ज्ञाता उपयुक्तः, तदुपयोगानन्यत्वात्, अथवाऽऽवश्यकार्थोपयोगपरिणाम एवेति। नोआगमतस्तु ज्ञानक्रियोभयपरिणामो भावावश्यकं, उपयुक्तस्य क्रियेति भावार्थः, मिश्रवचनश्च नोशब्दः, इदमपि च लौकिकादित्रिविधं सूत्रादवसेयं, इह तु लोकोत्तरेणाधिकार इति। उक्तमावश्यकं, अस्य चामूनि अव्यामोहार्थमेकार्थिकानि द्रष्टव्यानि—

1 एक एवमेव करोति, स राज्ञा श्रुतो यथा एव करोतीति, स हृतसर्वस्व (सर्वस्वहरण) कृत्वा विसृष्ट. अटव्यां कथ (कुत) न प्रदीपयसि ?। यथा तेन वणिजा अवशेषा अपि दग्धा एव त्वमपि एतं प्रशस्य एतान् सर्वान् साधून् परित्यजसि, यदा न तिष्ठति (विरमति) तदा साधवो भणिता—एष महानिर्धर्मा अगीतार्थ, अलमेतस्याज्ञया, यदि एतस्य निग्रहो न क्रियतेऽतोऽन्येऽपि विनङ्क्ष्यन्ति 2 आवश्यकपदार्थज्ञस्तज्जनितसंवेगविशुद्धिमान् परिणामस्तत्र चोपयुक्त (अनु० ७३) ‡ निण्णयरो. * एव पससतो + परिचयसि

[1]आवस्सयं १ अवस्सकरणिज्जं २ धुव ३ णिग्गहो ४ विसोही ५ य। अज्झयणछक्क ६ वग्गो ७णाओ ८ आराहणा ९ मग्गो १०॥१॥
समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अहोणिसिस्स य तम्हा आवस्सयं नाम ॥ २ ॥

एवं श्रुतस्कन्धयोरपि निक्षेपश्चतुर्विध एव द्रष्टव्यः, यथाऽनुयोगद्वारेषु, स्थानाशून्यार्थं तु किञ्चिदुच्यते—इह नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतं पुस्तकपत्रकन्यस्तं, अथवा सूत्रं[2] मण्डजादि[3], भावश्रुतं †त्वागमतो ज्ञाता उपयुक्तः, नोआगमतस्त्विदमेवावश्यकं, नोशब्दस्य देशवचनत्वात्। ‡एवं नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यस्कन्धः सचेतनादिः, तत्र सचित्तो द्विपदादिः अचित्तो द्विप्रदेशिकादिः मिश्रः § सेनादिदेशादिरिति, तथा भावस्कन्धस्त्वागमतस्तदर्थोपयोगपरिणाम एव, नोआगमतस्त्वावश्यकश्रुतस्कन्ध एवेति, नोशब्दस्य देशवचनत्वात्, अथवा ज्ञानक्रियागुणसमूहात्मकः सामायिकादीनामध्ययनानां समावेशात्, ज्ञानदर्शनक्रियोपयोग इत्यर्थः, नोशब्दस्तु मिश्र-

1 आवश्यकमवश्यकरणीय ध्रुव निग्रहो विशोधिश्च। अध्ययनषट्क वर्गो न्याय आराधना मार्ग ॥१॥ श्रमणेन श्रावकेण चावश्यकर्त्तव्य भवति यस्मात्। अन्ते (न्त) अहर्निशस्य (अह्नो निश) च, तस्मादावश्यक नाम ॥ २ ॥ 2 श्रुतपर्यायत्वात्सूत्रनिर्देशोऽत्र प्राकृतत्वात्, सुयशब्देन सूत्रमपि सूत्रकृतोऽङ्गस्य सुयगडेतिवत् 3 आदिना बोण्डजकीटजवालजवल्कजग्रह' 4 प्रस्तुतत्वादन्यथा सर्वमपि श्रुतमेव, आगमे तु पदमात्रज्ञानोपयोगान्निश्चता 5 सेणाइदेसाई ८९९—सेनाया हस्त्यश्वरथपदातिखड्गकुन्ताद्यात्मक पाश्चात्यमध्यमाग्रदेशरूपो मिश्रस्कन्ध (विशे० ८९९ गाथावृत्तौ) सेणाए अग्गिमे खंधे सेणाए मज्झिमे खंधे सेणाए पच्छिमे खंधे (अनु० १०२) प्रथमादिपदाद्ग्रामनगरादिग्रह द्वितीयादिना देशद्वयादिग्रह * अवस्स करण + अहोणिसिस्स † आगमतो. ‡ नास्तीदम् § सेनादिर्देशादि०

वचनः। सर्वपदैकवाँच्यता सामायिकादिश्रुतविशेषाणां षण्णां स्कन्धः श्रुतस्कन्धः,आवश्यकं च तत् श्रुतस्कन्धश्चेति समासः। आह—किमिदं आवश्यकं षडध्ययनात्मकमिति,अत्रोच्यते,षडर्थाधिकारात्मकत्वात्,ते चामी सामायिकादीनां यथायोगमवसेया इति—सावज्जजोगविरई १ उक्कित्तण २ गुणवओ य पडिवत्ती ३। खलियस्स निंदण ४ वणतिगिच्छ॑ '' गुणधारणा ६ चेव ॥१॥ अस्या व्याख्या—अवद्यं पापं, युज्यन्त इति योगाः व्यापाराः, सहावद्येन वर्त्तन्त इति सावद्याः, सावद्याश्च ते योगाश्चेति समासः, तेषां विरमणं विरतिः सामायिकार्थाधिकार इति १ उत्कीर्त्तनमुत्कीर्त्तना, तत्र गुणोत्कीर्त्तना अर्हतां चतुर्विंशतिस्तवस्य २। गुणा ज्ञानादयः मूलोत्तराख्याँ वा, तेऽस्य विद्यन्त इति गुणवान् तस्य गुणवतः प्रतिपत्तिर्वन्दना-ध्ययनस्य ३। चशब्दः समुच्चये, ' स्खलितस्येति ' श्रुतशीलस्खलितस्य निन्दना प्रतिक्रमणस्य ४। तथा चारित्रात्मनो व्रणचिकित्सा—अपराधव्रणसंरोहणं कायोत्सर्गस्य ५। अपगतप्रतीतिचारेतरोपचितकर्मविशरणार्थमनशनादिगुणसंधारणा प्रत्याख्यानस्य ६ इत्यर्थाधिकाराः। एषां च प्रत्यध्ययनमर्थाधिकारद्वारँ एवावसरः प्रवेतव्यः, इह तु प्रसङ्गतः स्कन्धो-

१ सबन्धषष्ठी, तेन परिभाषिता शास्त्राऽभ्युपेत्याकरणरूपा विरतिरत्र, न तु पेयपलाभावरूपा निवृत्तिरूपा वा २ अर्थाधिकार इति वर्त्तते ३ व्यवहार-गुर्वपेक्षया ४ वन्दनकप्रदानादिपूजाविशेषरूपा ५ पुष्टालम्बनेऽगुणवतोऽपि प्रतिपत्ति' वर्त्तव्येति द्रष्टव्यं ( मलयगिरिपादा , अनु० वृत्तौ च ११ ) इति वचनादनुक्तसमुच्चयार्थो इत्यर्थ ६ पञ्चविधाचारवैरपगता येऽतिचारास्तदितरैरतिचारैः ७ आनुपूर्वीनामप्रमाणवक्तव्यतार्थाधिकारसमवतारूपशास्त्रीयोपक्रमा-न्तर्गते पञ्चमद्वारे * चायता + षण्णामधिकारा० † चिगिच्छ०

षदर्शनद्वारेणोक्ता इति। इदानीं अध्ययनन्यासप्रस्तावः, तं चानुयोगद्वारक्रमायातं प्रत्यध्ययनं ओघनिष्पन्ननिक्षेपे' लाघवार्थं वक्ष्यामः। एष आवश्यकस्य समुदायार्थः, इदानीमवयवार्थप्रदर्शनाय एकैकमध्ययनं वक्ष्यामः, तत्र प्रथममध्ययनं सामायिकं समभावलक्षणत्वात्, चतुर्विंशतिस्तवादीनां च तद्भेदत्वात् प्राथम्यमस्येति। अस्य च महापुरस्येव चत्वार्यनुयोगद्वाराणि भवन्ति। अनुयोगद्वाराणीति कः शब्दार्थः ?,अनुयोगोऽध्ययनार्थः,द्वाराणि तत्प्रवेशमुखानीति, यथा हि अकृतद्वारं नगर-मनगरमेव भवति, कृतैकद्वारमपि च दुरधिगमं कार्यातिपत्तये च, कृतचतुर्मूलद्वारं प्रतिद्वारानुगतं सुखाधिगमं कार्यान-तिपत्तये च, एवं सामायिकपुरमपि अर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति, एकद्वारानुगतमपि च दुरधिगमं भवति, सप्रभेदचतुर्द्वारानुगतं तु सुखाधिगमं इत्यतः फलवान् द्वारोपन्यासः। तानि च अमूनि—उपक्रमो १ निक्षेपो २-ऽनुगमो ३ नय ४ इति। तत्र शास्त्रस्य उपक्रमणं उपक्रम्यतेऽनेनास्मादस्मिन्निति वा उपक्रमः, शास्त्रस्य न्यासदेशानयन-मित्यर्थः। तथा निक्षेपणं निक्षिप्यतेऽनेनास्मादस्मिन्निति वा निक्षेपः न्यासः,स्थापनेति पर्यायाः। एवमनुगमनं † अनुगमः

१ नामनिष्पन्ननिक्षेपे चेति ( मलयगिरिपादा ) २ प्रत्यध्ययन कार्यः, लाघवार्थमिह सामायिकाध्ययने इति मलधारिपादानामभिप्रायः ३ सावज्जजोग-विरईत्यादिना प्रतिपादित , षण्णामपि अर्थाधिकाराणां प्रतिपादनात् ४ विना समभावमितरगुणानवस्थानात् तत्सद्भाव एव परगुणोत्पत्तेः प्राथम्यमस्येत्यर्थ ५ सामायिकस्य ज्ञानदर्शनचारित्रभेदभिन्नतया चतुर्विंशत्यादेश्च सम्यक्त्वादिसामायिकरूपत्वात् सामायिकभेदव्याख्यान ६ सामायिकाध्ययनस्य ७ प्रतिपादन-प्रकारा ८ गुरुवाग्योग ९ विनीतविनेयविनय १० शुश्रूषा ११ गुरुवाग्योगादीना सर्वकारकवाच्यत्वेऽप्यविरोध * ०प्रतिपादनाय + तद्द्वारो० † नासीदम्

अनुगम्यते वाऽनेनास्मादस्मिन्निति वाऽनुगमः, सूत्रस्यानुकूलः परिच्छेद इत्यर्थः। एवं नयनं नीयते वाऽनेनास्मादस्मि-न्निति वा नयः, वस्तुनः पर्यायाणां संभवतोऽधिगम इत्यर्थः। आह—एषामुपक्रमादिद्वाराणां किमित्येवं क्रम इति, अत्रो-च्यते, न ह्यनुपक्रान्तं सद् असमीपीभूतं निक्षिप्यते, न चानिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयै-र्विचार्यते इत्यतोऽयमेव क्रम इति। तत्रोपक्रमो द्विविधः—शास्त्रीय इतरश्च, तत्र इतरः षट्प्रकारः, नामस्थापनाद्रव्यक्षेत्र-कालभावभेदभिन्न इति,तत्र नामस्थापने सुज्ञाने,द्रव्योपक्रमो द्विविधः—आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तश्च, स च त्रिविधः—सचित्ताचित्तमिश्रद्रव्योपक्रम इति, तत्र सचित्तद्रव्योपक्रमः द्विपदचतुष्पदापदोपाधिभेदभिन्नः, पुनरेकैको द्विविधः—परिकर्मणि वस्तुविनाशे च, तत्र परिकर्म—द्रव्यस्य गुणविशेषपरि-णामकरणं तस्मिन्सति, तद्यथा—घृताद्युपभोगेन पुरुषस्य वर्णादिकरणमिति, अथवा कर्णस्कन्धवर्धनादिक्रियेति, अन्ये तु शास्त्रगन्धर्वनृत्यादिकलासंपादनमपि द्रव्योपक्रमं व्याचक्षते, इदं पुनरसाधु, विज्ञानविशेषात्मकत्वात् शास्त्रादिपरि-ज्ञानस्य, तस्य च भावत्वादिति, किन्तु आत्मद्रव्यसंस्कारविवक्षापेक्षया शरीरवर्णादिकरणवत् स्यादपीति। एवं शुकसा-रिकादीनां शिक्षागुणविशेषकरणं, तथा चतुष्पदानां हस्त्यादीनां, अपदानां च वृक्षादीनां वृक्षायुर्वेदोपदेशाद् वार्धक्यादि-

१ सम्यङ् पर्यायैर्वस्तु नयति, यद्वा बहुधा वस्तुन पर्यायाणां संभवात् विवक्षितपर्यायेण नयनं, आद्ये पर्यायाणां सत्ताया ज्ञानं यथायथ, द्वितीये त्वि(?) पर्यायाणां मध्ये संभवत' पर्यायानामिलेति ज्ञेय, तथा चाद्ये सबन्धे षष्ठी पञ्चम्या तत्सुथ, द्वितीये सप्तमी चाविभाग इति षष्ठी, गम्यपप इति पञ्चम्यास्तत्सुथ * शास्त्रस्य

गुणापादनमिति, आह—यस्त्वयं कालान्तरभाव्युपक्रम्यते यथा तरोर्वार्धक्यादि तत्र परिकर्मणि द्रव्योपक्रमता युक्ता, वर्णकरणकलादिसंपादनस्य तु कालान्तरेऽपि विवक्षितहेतुजालमन्तरेणानुपपत्तेः कथं परिकर्मणि द्रव्योपक्रमतेति, अत्रोच्यते, विवक्षितहेतुजालमन्तरेणानुपपत्तेरित्यसिद्धं, कथं ?, वर्णस्य तावन्नामकर्मविपाकित्वात् स्वयमपि भावात्, कलादीनां च क्षायोपशमिकत्वात्, तस्य च कालान्तरेऽपि स्वयमपि संभवात्, विभ्रमविलासादीनां च युवावस्थायां दर्शनात् ( ग्रन्थाग्रम् १५०० ) । तथा वस्तुविनाशे च पुरुषादीनां खड्गादिभिर्विनाश एवोपक्रम्यते इति, आह—परिकर्मवस्तुविनाशोपक्रमयोरभेद एव, उभयत्रापि पूर्वरूपपरित्यागेनोत्तरावस्थापत्तेरिति, अत्रोच्यते, परिकर्मोपक्रमजनितोत्तररूपापत्तावपि अविशेषेण प्रायेणास्य प्रत्यभिज्ञानादिदर्शनात् वस्तुविनाशोपक्रमसंपादितोत्तरधर्मरूपे तु वस्तुन्यदर्शनात् विशेषसिद्धिरिति. अथवैकत्र विनाशस्यैव विवक्षितत्वाददोषः । एवमचित्तद्रव्योपक्रमः पद्मरागमणेः क्षारमृत्पुटपाकादिना वैमल्यापादनविनाशादीति । मिश्रद्रव्योपक्रमस्तु कटकादिविभूषितपुरुषादिद्रव्यस्यैवेति । विवक्षातश्च कारकयोजना द्रष्टव्या—द्रव्यस्य द्रव्येण द्रव्यात् द्रव्ये वोपक्रमो द्रव्योपक्रम इति । तथा क्षेत्रस्योपक्रमः क्षेत्रोपक्रमः, आह—क्षेत्रममूर्त्तं नित्यं च, अतस्तस्य कथं करणविनाशाविति, उच्यते, तद्व्यवस्थितद्रव्यकरणविनाशभावादुपचारतः खल्वदोषः, तथा च तात्स्थ्यात्तद्व्यपदेशो युक्त एव, मञ्चाः क्रोशन्तीति यथा । तथा कालस्य वर्त्तनादिरूपत्वात् द्रव्यपर्यायरूपत्वात् द्रव्योपक्रम एवोपचारात् कालोपक्रम इति. चन्द्रोपरागादिपरिज्ञानलक्षणो वा । भावोपक्रमो द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता उपयुक्तः, नोआगमतस्तु प्रशस्तोऽप्रशस्तश्चेति, तत्राप्रशस्तो डोण्डिणिगणिकाऽमात्यादीनां, एत्थोदाहरणाणि—एग नगरे एगा मरुगिणी, सा चिंतेति—कहं धूयाओ सुहियाओ होज्जत्ति, ताए जेट्ठिया धूआ सिक्खाविआ जहा वरं इंतं मत्थए पण्हियाए आहणिज्जसि, ताए आहतो, सो तुट्ठो, पादं मद्दिउमारद्धो, णहु दुक्खाविअत्ति, तीए मायाए कहियं, ताए भण्णति—जं करेहि तं करेहि, ण ‡ एस तुज्झ किंची अवरज्झइत्ति । बीया सिक्खविआ, तीएवि आहतो, सो झिंखित्ता उवसंतो, सा भणति—तुमंपि वीसत्था विहराहि, णवरं झिंखणओ एसुत्ति । § तईया सिक्खविआ, तीएवि आहतो, सो रुट्ठो, तेण दढं पिट्टिता धाडिया य, ¶ तं अकुलपुत्ती जा एवं करेसि, तीए मायाए कथितं, पच्छा कहवि अणुगमिओ, एस अम्ह कुलधम्मोत्ति, धूआ य भणिआ जहा देवतस्स √ तस्स तहा वट्टिज्जासि, मा छड्डेहित्ति ॥ एगम्मि नगरे चउसट्ठिकलाकुसला गणिया, तीए परभावोवक्कमणनिमित्तं रतिघरंमि सव्वाओ पगईओ णियणियवावारं करेमाणीओ आलिहावियाओ, तत्थ य जो जो ‖वड्ढइमाई, सो सो नियगसिप्पं पसंसति, णाय-

---

१ अत्रोदाहरणानि—एकस्मिन्नगरे एका ब्राह्मणी सा चिन्तयति—कथं दुहितरः सुखिता भवेयुरिति, तया ज्येष्ठा दुहिता शिक्षिता यथा वरमायान्तं मस्तके पार्ष्णिना आहन्याः, तयाऽऽहतः, स तुष्टः, पादं मर्दयितुमारब्धः नैव दुःखितेति, तया मात्रे कथितं, तया भण्यते—यत्कुरु ( चिकीर्षसि ) तत्कुरु नैष तव ( त्वयि ) किञ्चिदपराध्यति इति । द्वितीया शिक्षिता, तयाऽप्याहतः स खिङ्खित्वा ( प्रभाष्य ) उपशान्तः, सा भणति—त्वमपि विश्रब्धा विहर, परं खिङ्खणकः ( प्रभाषकः ) एष इति । तृतीया शिक्षिता, तयाऽप्याहतः, स रुष्टः, तेन दृढं पिट्टिता निर्धाटिता च, त्वमकुलपुत्री यैवं करोषि, तया मात्रे कथितं, पश्चात् कथमपि अनुनीतः, एष अस्माकं कुलधर्म इति, दुहिता च भणिता यथा देवतस्य तथा तस्य वर्तेथाः, मा त्याक्षीत् इति ॥ एकस्मिन्नगरे चतुष्षष्टिकलाकुशला गणिका, तया परभावोपक्रमणनिमित्तं रतिगृहे सर्वाः प्रकृतयो निजनिजव्यापारं कुर्वत्य आलेखिताः, तत्र च यो यो वर्धक्यादिः, स स निजकं शिल्पं प्रशंसति,

* बम्भिणी + किह † तयाहतो ‡ एयस्स § तत्तिआ ¶ ०पुत्तिया √ तहा एयस्स ‖ एइ व०

भावो य सुअणुयत्तो भवइ, अणुयत्तिओ य उवयारं गाहिओ खद्धं खद्धं दव्वजातं वियरेइत्ति एसवि अपसत्थो भावोवक्कमो ॥ एगंमि णगरे † कोई राया अस्सवाहणियाए सहामच्चेणं निग्गओ, तत्थ ‡ से आसेण वच्चन्तेण खलिणे काईया वोसिरिआ, खिल्लरं बद्धं, तं च पुढवीए थिरत्तणओ तहट्ठियं चेव रण्णा पडिनियत्तमाणेण सुइरं निज्झाइयं, चिंतियं च णेण—इह तलागं सोहणं हवइत्ति, न उण वुत्तं, अमच्चेण इंगियागारकुसलेण रायाणमणापुच्छिय महासरं खणाविअं चेव, पालीए आरामा से पवरा कया, तेणं कालेणं ¶ रण्णा पुणरवि अस्सवाहणिआए गच्छतेण दिट्ठं, भणियं च णेण—केण √इमं खणाविअं? अमच्चेण भणिअं—राय! तुब्भेहिं चेव, कहिं विअ ?, अवलोयणाए, × अहियपरितुट्ठेणं =संवड्ढणा कया । एसवि § अप्पसत्थभावोवक्कमोत्ति ॥ उक्तः अप्रशस्तः, इदानीं प्रशस्त उच्यते—तत्र श्रुतादिनिमित्तं आचार्यभावोपक्रमः प्रशस्त इति, आह—व्याख्याङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकमिति, न, तस्यापि व्याख्याङ्ग-

---

१ ज्ञातभावश्च स्वनुवर्त्तनीयो भवति, अनुवृत्तश्च उपचारं ग्राहितः प्रचुरं प्रचुरं द्रव्यजातं वितरतीति एषोऽपि चाप्रशस्तो भावोपक्रमः ॥ एकस्मिन्नगरे कश्चिद्राजाऽश्ववाहनिकया सहामात्येन निर्गतः, तत्र तस्याश्वेन व्रजता विषमभूमौ कायिकी ( प्रश्रवणं ) व्युत्सृष्टा, पल्वलं बद्धं ( जातं ), तच्च पृथव्याः स्थिरत्वात् तथास्थितमेव राज्ञा प्रतिनिवर्त्तमानेन सुचिरं निध्यातं, चिन्तितं चानेन, इह तटाकः शोभनो भवति इति, न पुनरुक्तं, अमात्येन इङ्गिताकारकुशलेन राजानमनापृच्छ्य महासरः खानितमेव, पाल्यां आरामास्तस्य प्रवराः कृताः, तस्मिन्काले पुनरप्यश्ववाहनिकया गच्छता दृष्टं, भणितं चानेन केनेदं खानितं, अमात्येन भणितं, राजन्! युष्माभिः, कथमेव, अवलोकनया, अधिकपरितुष्टेन संवर्धना कृता, एषोऽप्यप्रशस्तभावोपक्रम इति । + एसोवि † कोवि ‡ य ¶ तेण समएण √ एय × कहिए = संवड्ढणा § ०अप्पसत्थो भा०

त्वात्, उक्तं च—"गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि । तस्माद्गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥ १ ॥" तथा च भाष्यकारेणाप्यभ्यधायि—"गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं । जेण पुण सुप्पसण्णं होइ तयं तं तहा कज्जं ॥ १ ॥ आगारिंगियकुसलं जदि सेयं वायसं वए पुज्जा । तहवि य सिं नवि कूडे विरहंमि य कारणं पुच्छे ॥ २ ॥ णिवपुच्छिएण भणिओ गुरुणा गंगा कओमुही वहइ ? । संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥ ३ ॥' " इत्यादि । आह—यद्येवं गुरुभावोपक्रम एवाभिधातव्यो न शेषाः, निष्प्रयोजनत्वात्, न, गुरुचित्तप्रसादनार्थमेव तेषामुपयोगित्वात्, तथा च देशकालावपेक्ष्य परिकर्मनाशौ द्रव्याणां उदकौदनादीनां आहारादिकार्येषु कुर्वन् विनेयो गुरोरतिरतिं चेत इति । अथवोपक्रमस्य साम्यात् प्रकृते निरुपयोगिनोऽपि अन्यत्र उपयोक्ष्यन्त इत्युपन्यस्तत्वाददोष इत्यलं विस्तरेण । उक्त इतरः, इदानीं शास्त्रीय उच्यते—असावपि षड्विध एव, तद्यथा—आनुपूर्वी १ नाम २ प्रमाणं ३ वक्तव्यता ४ अर्थाधिकारः ५ समवतार ६ इति । तत्रानुपूर्वी नामस्थापनाद्रव्यक्षेत्रकालगणनोत्कीर्तनसंस्थानसामाचारीभावभेदभिन्ना दशप्रकारा, तत्रां यथासंभवतः समवतारणीयमिदं, विशेषतस्तूत्कीर्तनगणनानुपूर्व्योरिय इति, उत्कीर्तना—संशब्दना यथा—सामायिकं

१ गुरुचित्तायत्तानि, व्याख्यानाङ्गानि येन सर्वाणि । येन पुनः सुप्रसन्नं भवति तत् तथा कार्यम् । १ । आकारेङ्गितकुशलं यदि श्वेतं वायसं वदेयुः पूज्याः । तथापि च तस्य ( वचनं ) नैव कूटयेत्, विरहे च कारणं पृच्छेत् । २ । नृपपृष्टेन भणितो गुरुणा गङ्गा कुतोमुखी वहति ? । संपादितवान् शिष्यो यथा तथा सर्वत्र कार्यम् । ३ । विशेषावश्यके गाथा ९३१–९३३–९३४ ) २ द्रव्यानुपूर्वमाः सचित्ताचित्तादयुपक्रमा वा ( क्षेत्रभ्योऽपादेरक्षेत्रमाश्रित्य कालस्य मुहूर्तादेः शिष्यदीक्षादौ घटिकादिना विशे० ) * ०कुसला + समाचारी । यथासंभवं

चतुर्विंशतिस्तव इत्यादि, गणनं परिसंख्यानं—एकं द्वे त्रीणि चत्वारीत्यादि, सा च गणनानुपूर्वी त्रिप्रकारा पूर्वपश्चादनानुपूर्वीभेदभिन्ना, तत्र सामायिकं पूर्वानुपूर्व्या प्रथमं, पश्चानुपूर्व्या षष्ठं, अनानुपूर्व्या त्वनियतं क्वचित्प्रथमं क्वचिद्द्वितीयं इत्यादि । तत्रानानुपूर्वीणामयं करणोपायः—एकाद्येकोत्तरा विवक्षितपदानां स्थापना क्रियते, तत्र पदत्रयस्यापनेन तावत्संक्षेपतः प्रदर्श्यते—सामायिकं चतुर्विंशतिस्तवः वन्दनाध्ययनमिति । अत्र 'पुव्वाणुपुव्वि हेट्ठा, समयाभेएण

१ २ ३ ३११

कुण जहाजेट्ठं । उवरिमतुल्लं पुरओ नसेज्ज पुव्वक्कमो सेसे ॥१॥ जहितंमि उनिक्खित्ते पुरओ सो चेव अंकविण्णासो । सो होइ समयभेदो वज्जेयव्वो पयत्तेणं ॥ २ ॥ भावना क्षुण्णत्वान्न प्रतन्यते, नवरमागतंत्रयाणामेतेषां षड्भङ्गा भवन्ति, अतश्चतस्रः खल्वनानुपूर्व्य इति । षण्णां तु पदानां सप्तविंशत्युत्तराणि भङ्गकशतानि, अत्रापि सप्तशताष्टादशोत्तराणि अनानुपूर्व्य इति । इदानीं नाम—प्रतिवस्तु नमनान्नाम, तच्चैकादि दशान्तं यथाऽनुयोगद्वारेषु तथा च वक्तव्यं, षड्नाम्नि त्ववतारः, तत्र षड् भावा औदयिकादयो निरूप्यन्ते, तत्र क्षायोपशमिक एव सर्वश्रुतावतारः, तस्य क्षायोपशमिकत्वादिति । तथा प्रमाणं—द्रव्यादि प्रमीयतेऽनेनेति प्रमाणं, तच्च प्रमेयभेदादेव चतूरूपं, तद्यथा—द्रव्यप्रमाणं १ क्षेत्रप्रमाणं २ कालप्रमाणं ३ भावप्रमाणं च ४, तत्र सामायिकं भावात्मकत्वाद् भावप्रमाणविषयं, तच्च भावप्रमाणं त्रिधा—गुणनय-

१ पूर्वानुपूर्वी ( आदौ ) अधः समया ( सकेता ) भेदेन कुरु यथाज्येष्ठम् । उपरितुल्य पुरतः न्यसेत् पूर्वे ( पूर्वानुपूर्वी ) क्रमः शेषे ( पश्चात् ) । १ । यस्मिन्निक्षिप्ते पुरतः स एव अङ्कविन्यासः । स भवति समयभेदः वर्जयितव्यः प्रयत्नेन । २ । ( अनुयोगद्वारेषु ) • ०आमानवनाम कर० + सेसो । षट्पदानामन्योऽन्याभ्यासेन

संख्याभेदभिन्नं, तत्र गुणप्रमाणमपि द्विधा—जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र जीवादपृथग्भूतत्वात् सामायिकस्य जीवगुणप्रमाणे समवतारः, तदपि ज्ञानदर्शनचारित्रभेदभिन्नं, तत्र बोधात्मकत्वात्सामायिकस्य ज्ञानगुणप्रमाणे समवतारः, तदपि प्रत्यक्षानुमानोपमानागमभेदभिन्नं, तत्र सामायिकस्य प्रायः परोपदेशसव्यपेक्षत्वादागमे समवतारः, स च लौकिकलोकोत्तरसूत्रार्थोभयात्मानन्तरपरम्पराभेदभिन्न इति, तत्र सामायिकस्य परमर्षिप्रणीतगणिपिटकान्तर्गतत्वात् लोकोत्तरे समवतारः, सूत्रार्थरूपत्वाच्च तदुभय इति, तथेदं गौतमादीनां सूत्रत आत्मागमः, तच्छिष्याणां जम्बूस्वामिप्रभृतीनां अनन्तरागमः, प्रशिष्याणां तु प्रभवादीनां परम्परागम इति, एवमर्थतोऽर्हतामात्मागमः गणधराणामनन्तरागमः तच्छिष्याणां तु परम्परागम इति । नयप्रमाणे तु मूढनयत्वात्तस्य नाधुनाऽवतार इति, वक्ष्यति च—"मूढणइयं सुयं कालियं तु' इत्यादि संख्या नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमाणभावभेदभिन्ना, यथाऽनुयोगद्वारेषु तथा वक्तव्या, तत्रोत्कालिकादिश्रुतपरिमाणसंख्यायां समवतारः, तत्र सूत्रतः सामायिकं परिमितपरिमाणं, अर्थतोऽनन्तपर्यायत्वादपरिमितपरिमाणमिति । इदानीं वक्तव्यता—सा च त्रिविधा—स्वसमयवक्तव्यता १ परसमयवक्तव्यता २ उभयसमयवक्तव्यता ३ चेति । स्वसमयः—स्वसिद्धान्तः, वक्तव्यता—पदार्थविचारः, तत्र स्वसमयवक्तव्यताया-

१ नामस्थापनाद्रव्यौपम्यपरिमाणज्ञानगणनभावभेदात् अनुयोगेषु तत्सूत्रम्—से किं तं संखप्पमाणे ? संख० अट्ठविहे पण्णत्ते, तंजहा—नामसंखा ठवणासंखा दव्वसंखा ओवम्मसंखा परिमाणसंखा जाणणासंखा गणणासंखा भावसंखा— इह संख्याशब्देन सङ्ख्याशङ्खयोर्ग्रहणं तत्र्य प्राकृतमधिकृत्य ( अनु० ५४१ )
* ०म्पर० + ०लिकश्रु०

मस्य समवतारः. एवं परोभयसमयप्रतिपादकाध्ययनानामपि, यतः सर्वमेव सम्यग्दृष्टिपरिगृहीतं परसमयसंबन्ध्यपि सम्यक्श्रुतमेव, तस्य स्वसमयोपकार*कत्वादिति । इदानीमर्थाधिकारः, स चाध्ययनसमुदायार्थः, स्वसमयवक्तव्यतैकदेशः, स च सर्वसावद्ययोगविरतिरूपः । इदानीं समवतारः, स च लाघवार्थं प्रनिद्वारं समवतारणाद्वारेण प्रदर्शित एव । उक्त उपक्रमः, इदानीं निक्षेपः, स च त्रिधा—ओघनिप्पन्नो १ नामनिष्पन्नः २ सूत्रालापकनिष्पन्नश्चेति ३ । तत्र ओघो नाम यत् सामान्यं शास्त्राभिधानं, तच्चेह चतुर्विधमध्ययनादि, पुनः प्रत्येकं नामादिचतुर्भेदमनुयोगद्वारानुसारतः प्रपञ्चेनाभिधाय भावाध्ययनाक्षीणादिषु सामायिकमायोज्यं । नामनिष्पन्ने निक्षेपे सामायिकं, तच्च नामादिचतुर्विधं, इदं च निरुक्तिद्वारे सूत्रस्पर्शिकनिर्युक्तौ च प्रपञ्चेन वक्ष्यामः, आह—यदि तदिह नाम अवसरप्राप्तं किमिति निरुक्त्यादावस्य स्वरूपप्रतिपादनं, तत्र चेत्स्वरूपाभिधानमस्य हन्त इहोपन्यासः किमिति, अत्रोच्यते, इह निक्षेपद्वारे निक्षेपमात्रस्यैवावसरः, निरुक्तौ तु तदन्वाख्यानस्येति, आह—इत्थमपि निरुक्तिद्वारे एव सामायिकव्याख्यानतः किं पुनः सूत्रेऽभिधीयते इति, उच्यते, तत्र हि सूत्रालापकव्याख्यानं, न तु नाम्नः, निरुक्तौ तु निक्षेपद्वारन्यस्तं सामायिकमित्यध्ययनाभिधानं निरूप्यते, अलं † प्रपञ्चेन, उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकनिष्पन्नस्य निक्षेपस्यावसरः, स च प्राप्तलक्षणोऽपि न निक्षिप्यते, कस्मात् ?, सूत्राभावात्, असति च सूत्रे कस्यालापकनिक्षेप इति, अतोऽस्ति इतः तृतीय-

१ आदिनाऽक्षीणायक्षपणाग्रहण 'अज्झयण अक्खीण आओ झवणा य पत्तेय' ति वचनात् २ उपोद्घातनिर्युक्तौ ३ इत पर *०कारित्वात् + सावद्य० † प्रसङ्गेन

मनुयोगद्वारमनुगमाख्यं, तत्रैव निक्षेप्स्यामः । आह—यदि प्राप्तावसरोऽप्यसाविह न निक्षिप्यते किमित्युपन्यस्यते इति, उच्यते, निक्षेपसामान्यात् इह प्रदर्श्यत एव, न तु प्रतन्यते इति । इदानीमनुगमावसरः, स च द्विधा—निर्युक्त्यनुगमः सूत्रानुगमश्च, निर्युक्त्यनुगमस्त्रिप्रकारः, तद्यथा—निक्षेपनिर्युक्त्यनुगम उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति, तत्र निक्षेपनिर्युक्त्यनुगमोऽनुगत एव, यदधो नामादिन्यासान्वाख्यानमुक्तमिति । इदानीमुपोद्घातनिर्युक्त्यनुगमप्रस्तावः, स च उद्देशादिद्वारलक्षण इति, अस्य च महार्थत्वान्मा भूद्विघ्न इति आरम्भे मङ्गलमुच्यते । आह—ननु मङ्गलं प्रागेवोक्तं, भूयः किं तेन ?, अथ कृतमङ्गलैरपि पुनरभिधीयते, इत्थं तर्हि प्रतिद्वारं प्रत्यध्ययनं प्रतिसूत्रं च वक्तव्यमिति । अत्राह कश्चित्—मङ्गलं हि शास्त्रस्यादौ मध्येऽवसाने चेति प्रतिपादितं, तत्रादिमङ्गलमुक्तं, इदानीं मध्यमङ्गलमुच्यते, तन्न, अनारब्ध एव शास्त्रे कुतो मध्यावकाश इति, स्यादेतत्, चतुरनुयोगद्वारात्मकं यतः शास्त्रं, अतोऽनुयोगद्वारद्वये व्यतिक्रान्ते मध्यमङ्गलं, अत एव चानुयोगद्वाराणां शास्त्राङ्गतेति, नन्वेवमपि इदं शास्त्रमध्यं न भवति, अध्ययनमध्यत्वात्, शास्त्रमध्ये च मध्यमङ्गलावसर इति, तस्माद् यत्किञ्चिदेतत्, ततश्चायं स्थितपक्षः—इह यदादौ मङ्गलं प्रतिपादितं तदावश्यकादिमङ्गलं, इदं तु नावश्यकमात्रस्य, सर्वानुयोगोपोद्घातनिर्युक्तित्वात् प्रक्रान्तोपोद्घातस्य, वक्ष्यति च—" आवस्सगस्स दसकालियस्स तह उत्तरज्झमायारे । † सूयगडे निज्जुत्ती, वोच्छामि तहा दसाणं

१ आवश्यकसामायिकादीनां न्यासाख्यानात् निक्षेपस्थाने नाम्ना कीर्त्तनमत्र तु व्याख्यानमिति २ आवश्यकस्य दशवैकालिकस्य तथा उत्तराध्याय आचारे । सूत्रकृते निर्युक्तिं वक्ष्यामि तथा दशाश्रुतस्कन्धस्य च । १ * नन्वित्थमपि + स्थितिपक्ष स्थित पक्ष † सुत्तगडे ‡ निज्जुत्तिं

च ॥ १ ॥" इत्यादि, तथा " सेसेसुवि अज्झयणेसु, होइ एसेव निज्जुत्ती " चतुर्विंशतिस्तवादिष्विति वक्ष्यति, अतो महार्थत्वात् कथञ्चित् शास्त्रान्तरत्वाच्चास्यारम्भे मङ्गलोपन्यासो युक्त एवेति, आह—सामायिकान्वाख्यानेऽधिकृते को हि दशवैकालिकादीनां प्रस्ताव इति, अत्रोच्यते, उपोद्घातसामान्यात्, यतस्तेषामपि प्रायः खल्वयमेवोपोद्घात इति, अलं † प्रपञ्चेन । तच्चेदं मङ्गलम्—

तित्थयरे भगवंते, अणुत्तरपरक्कमे अमियनाणी । तिण्णे सुगइगइगए, सिद्धिपहपदेसए वंदे ॥ ८० ॥

गमनिका—तीर्थकरणशीलास्तीर्थकराः तान् वन्दे इति योगः, तत्र 'तॄ प्लवनतरणयोः' इत्यस्य 'पातॄतुदिवचिसिचिरिचिभ्यस्थक्' ( उणादौ पा० २-१७२ ) इति ‡ थक्प्रत्ययेऽनुबन्धलोपे च कृते 'ऋत इद्धातोः' (पा० ७-१-१००) इति इत्वे रपरत्वे हलि चेति दीर्घत्वे परगमे च तीर्थं इति स्थिते 'डुकृञ् करणे' इत्यस्य 'चरेष्टः' ( पा० ३-२-१६ ) इत्यस्मात् सूत्रात् टप्रत्ययाधिकारेऽनुवर्त्तमाने 'कृञो हेतुताच्छील्यानुलोम्येषु' ( पा० ३-२-२० ) इतिटप्रत्ययेऽनुबन्धलोपे च कृते गुणे रपरत्वे परगमने च तीर्थकर इति भवति । तत्र तीर्यतेऽनेनेति तीर्थं, तच्च नामादिचतुर्भेदभिन्नं, तत्र नोआगमतो द्रव्यतीर्थं नद्यादीनां समो भूभागोऽनपायश्च, तत्सिद्धौ तरिता तरणं तरणीयं च सिद्धं पुरुषबाहूडुपनद्यादि, द्रव्यता चास्येत्थं तीर्णस्यापि पुनस्तरणीयभावात्, अनैकान्तिकत्वात्, स्नानविवक्षाया च बाह्यमलापनयनात् आन्तरस्य

१ शेषेष्वपि अध्ययनेषु भवत्येषैव निर्युक्ति ( निर्युक्तौ ) २ अनात्यन्तिकत्वात् * ०ष्वपि + ०रत्वाच्चास्या० † प्रसङ्गेन ‡ ०प्रत्ययोऽनु०

प्राणातिपातादिकारणपूर्वकत्वात्, तस्य च तद्विनिवृत्तिमन्तरेणोत्पत्तिनिरोधाभावात्, प्रागुपात्तस्य च विशिष्टक्रियाभ्यपेक्षाध्यवसायजन्यस्य तत्प्रत्यनीकक्रियासहगताध्यवसायतः क्षयोपपत्तेः, तत्क्षयाभावे च भावतो भवतरणानुपपत्तेरिति। भावतीर्थं तु नोआगमतः संघः, सम्यग्दर्शनादिपरिणामानन्यत्वात्, यत उक्तं—"तित्थं भंते! तित्थं? तित्थकरे तित्थं?, गोयमा! अरिहा ताव नियमा तित्थयरे, तित्थं पुण चाउवण्णो समणसंघो, पढमगणहरो वा"। तरिता तु तद्विशेष एव साधुः, तथा सम्यग्दर्शनादित्रयं करणभावापन्नं तरणं, तरणीयो भवोदधिरिति। अथवा—पङ्कदाहपिपासानामपहारं करोति यत्। तद्धर्मसाधनं तथ्यं, तीर्थमित्युच्यते बुधैः ॥ १ ॥ पङ्कस्तावत् पापं, दाहः कषायाः, पिपासा विषयेच्छा, एतेषामपहरणसमर्थं यदित्यर्थः, अथवा सुखावतारं सुखोत्तारं १ सुखावतारं दुरुत्तारं २ दुःखावतारं सुखोत्तारं ३ दुःखावतारं दुरुत्तारं ४ मिति द्रव्यभावतीर्थं द्रष्टव्यं, तच्च सरजस्कशाक्यबोटिकसाधुसंबन्धि विज्ञेयं, अलं प्रसङ्गेन। तथा भगः—समग्रैश्वर्यादिलक्षणः, उक्तं च—"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १ ॥" ततश्च समग्रैश्वर्यादिभगयोगाद्भगवन्तोऽर्हन्त इति तान् भगवतः। आह—तीर्थकरा-

१ आन्तरस्य २ आभ्यन्तरमलस्य ३ प्राणातिपातादिकाः ४ मिथ्यात्वादिलक्षण० ५ सम्यग्दर्शनानुसारिणी ६ आन्तरकर्ममलक्षयाभावे ७ तत्त्वाः भगसारणा० ८ तत्थाइमय सरकप्पाण ॥ १०४० ॥ तावनियाण बीय विसयसुदकुसरणभावणाधणिओ। तइय च बोडियाणं चरिमं जइण मिवकरं तु ॥१०४१॥ (विशे०) ९ तीर्थं भदन्त! तीर्थं तीर्थकरस्तीर्थम्?, गौतम! अर्हन् तावन्नियमात्तीर्थंकरः तीर्थं पुनः चतुर्वर्णः श्रमणसङ्घः प्रथमगणधरो वा। १० शैवाः ११ दिगम्बरा १२ जैनसाधव १३ अभिषङ्गा * तत्क्षयाभावतो० + भवता † ०मितीर्थं.

नित्यनेनैव 'भगवत' इत्यस्य गतार्थत्वात् तीर्थकृतामुक्तलक्षणभगाव्यभिचारात् नार्थोऽनेनेति, न, नयमतान्तरावलम्बिपरिकल्पिततीर्थकरतिरस्कारपरत्वादस्येति, तथा च न तेऽविकलभगवन्त', तान् भगवतो, वन्द इति क्रिया सर्वत्र योज्या। तथा परे—शत्रवः, ते च क्रोधाद्याः, आक्रमणमाक्रमः—पराजयः तदुच्छेद इतियावत्, परेषामाक्रमः पराक्रमः, सोऽनुत्तरः—अनन्यसदृशो येषां ते तथाविधाः। आह—ये खलु ऐश्वर्यादिभगवन्तः तेऽनुत्तरपराक्रमा एव, तमन्तरेण विवक्षितभगयोगाभावात्, ततश्च 'अनुत्तरपराक्रमान्' इत्येतदतिरिच्यते इति, अत्रोच्यते, अनादिशुद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरनयवादनिराकरणार्थत्वाद् न दोषः, तथा चानुत्तरपराक्रमत्वमन्तरेणैव कैश्चित् हिरण्यगर्भादीनामनादिविवक्षितभगयोगोऽभ्युपगम्यत इति, उक्तं च—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥" इत्यादि, अकर्त्रात्मवादव्यवच्छेदार्थं वा। अमितं—अपरिमितं ज्ञेयानन्तत्वात् केवलं, अमितं ज्ञानं एषामित्यमितज्ञानिनः। आह—येऽनुत्तरपराक्रमास्तेऽमितज्ञानिन एव नियमेन, क्रोधादिपरिक्षयोत्तरकालभावित्वाद् अमितज्ञानस्येति, उच्यते, सत्यमेतत्, किं तु क्लेशक्षयेऽप्यमितज्ञानानभ्युपगमप्रधाननयवादनिरासार्थत्वाद् उपन्यास इति, तथा चाहुरेके—" सर्वं पश्यतु वा मा वा, इष्टमर्थं तु पश्यतु। कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते? ॥ १ ॥ इत्यादि", स्वसिद्धान्तप्रसिद्धच्छद्मस्थवीतरागव्यवच्छेदार्थं वा। तथा तरन्ति स्म भवार्णवमिति तीर्णास्तान् तीर्णान्, तीर्त्वा च भवौघं 'सुगतिगतिगतान्' तत्र सर्वज्ञत्वात्सर्वदर्शित्वाच्च निरुपमसुखभागिनः सुगतयः—सिद्धाः, तेषां

१ अविकलभगवत इति * ०सिद्धेश्च० ↑ दिक्षयो०

गतिः सुगतिगतिः, अनेन तिर्यङ्नरनारकामरगतिव्यवच्छेदेन पञ्चमीमोक्षगतिमाह, तां गताः—प्राप्ताः तान्, अनेन चावाप्ताणिमाद्यष्टविधैश्वर्यस्वेच्छाविलसनशीलपुरुषतीर्णत्वप्रतिपादनपरनयवादव्यवच्छेदमाह, तथा च केचिदाहुः—"अणिमाद्यष्टविधं प्राप्यैश्वर्यं कृतिनः सदा। मोदन्ते सर्वभावज्ञास्तीर्णाः परमदुस्तरम् ॥ १ ॥ इत्यादि" तथा सिद्धेः तस्या एव सुगतेः पन्थाः सिद्धिपथः तस्य प्रधाना देशकाः तद्बीजभूतसामायिकादिप्रतिपादकत्वात् प्रदेशकाः, अनेन त्वनवद्यानेकसत्त्वोपकारकतीर्थकरनामकर्मविपाकपरिणामवत् तत्स्वरूपमेवाह, तान् 'वन्दे' अभिवादये इति गाथार्थः ॥८०॥
एवं तावदविशेषेण ऋषभादीनां मङ्गलार्थं वन्दनमुक्तं, इदानीं आसन्नोपकारित्वात् वर्तमानतीर्थाधिपतेः अखिलश्रुतज्ञानार्थप्रदर्शकस्य वर्धमानस्वामिनो वन्दनमाह—

**वंदामि महाभागं, महामुणिं महायसं महावीरं। अमरनररायमहिअं, तित्थयरमिमस्स तित्थस्स ॥८१॥**

व्याख्या—तत्र वन्दामीत्यादि दीपकं अशेषोत्तरपदानुयायि द्रष्टव्यं। तत्र भागः—अचिन्त्या शक्तिः, महान् भागोऽस्येति महाभागः तं, तथा मनुते मन्यते वा जगतस्त्रिकालावस्थामिति मुनि' सर्वज्ञत्वात्, महाँश्चासौ मुनिश्च महामुनिः तं, त्रैलोक्यव्यापित्वात् महद्यशोऽस्येति महायशाः तं, 'महावीरं' इत्यभिधानं, अथवा 'शूर वीर विक्रान्तौ' इति कषायादिशत्रुजयान्महाविक्रान्तो महावीरः, अत्यन्तानुरक्तकेवलामलश्रिया विराजत इति वा वीरः, उक्तं च—"विदारयति यत्कर्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥ १ ॥' अमराश्च नराश्च अमरनरास्तेषां राजानः

१ महस्य महोपकारक च वन्दे ( विशे० वृत्तौ ) * कर + अनन्यानुरक्त०

इन्द्रचक्रवर्त्तिप्रभृतयः तैर्महितः–पूजितः तं तीर्थकरं 'अस्य' वर्त्तमानकालावस्थायिनः तीर्थस्य इति गाथार्थः ॥ ८१ ॥ एवं तावदर्थवक्तुर्मङ्गलार्थं वन्दनमभिहितं, इदानीं सूत्रकर्त्तृप्रभृतीनामपि पूज्यत्वात् वन्दनमाह—

**इक्कारसवि गणहरे पवायए पवयणस्स वंदामि। सव्वं गणहरवंसं वायगवंसं पवयणं च ॥ ८२ ॥**

व्याख्या—'एकादश' इति संख्यावाचकः शब्दः, 'अपिः' समुच्चये, अनुत्तरज्ञानदर्शनादिधर्मगणं धारयन्तीति गणधरास्तान्, प्रकर्षेण प्रधाना आदौ वा वाचकाः प्रवाचकाः तान्, कस्य ?–'प्रवचनस्य' आगमस्येत्यर्थः, किं ?–वंदामि, एवं तावन्मूलगणधरवन्दनं, तथा 'सर्वं' निरवशेषं, गणधराः–आचार्यास्तेषां वंशः–प्रवाहस्तं, तथा वाचका–उपाध्यायास्तेषां वंशस्तं, तथा 'प्रवचनं च' आगमं च, वन्द इति योगः। आह—इह वंशद्वयस्य प्रवचनस्य च कथं वन्द्यतेति, उच्यते, यथा अर्थवक्ता अर्हन् वन्द्यः, सूत्रवक्तारश्च गणधराः, एवं यैरिदमर्थसूत्ररूपं प्रवचनं आचार्योपाध्यायैरानीतं, तद्वंशोऽप्यानयनद्वारेणोपकारित्वात् वन्द्य एवेति, प्रवचनं तु साक्षाद्वृत्त्यैवोपकारित्वादेव वन्द्यमिति गाथार्थः ॥ ८२ ॥ इदानीं प्रकृतमुपदर्शयन्नाह—

**ते वंदिऊण सिरसा अत्थपुहुत्तस्स तेहिं कहियस्स। सुयनाणस्स भगवओ निज्जुत्तिं कित्तइस्सामि ॥ ८३ ॥**

व्याख्या—'तान्' अनन्तरोक्तान् तीर्थकरादीन् 'वन्दित्वा' प्रणम्य 'शिरसा' उत्तमाङ्गेन, किम् ?–निर्युक्तिं कीर्त्तयिष्ये, कस्य ?–'अर्थपृथक्त्वस्य' तत्र श्रुताभिधेयोऽर्थः तस्मात् सूत्रं पृथक् तद्भावः पृथक्त्वं च अर्थश्च पृथक्त्वं चेति एकवद्भावः, अर्थेन वा पृथु अर्थपृथु तद्भावः अर्थपृथुत्वं श्रुतविशेषणमेव तस्य, 'तैः' तीर्थकरगणधरादिभिः 'कथितस्य' प्रतिपादितस्य, कस्य ?–श्रुतज्ञानस्य भगवतः, स्वरूपाभिधानमेतत्, सूत्रार्थयोः परस्परं निर्योजनं निर्युक्तिः तां 'कीर्त्तयिष्ये' प्रतिपादयिष्ये इति गाथार्थः ॥ ८३ ॥ आह—किमशेषश्रुतज्ञानस्य ?, न, किं तर्हि ?, श्रुतविशेषाणामावश्यकादीनामिति, अत एवाह—

१ चान्द्रे णिज ब्भपपदभावात् २ तदेव पृथक्त्वमिति विशे० मलयगिरीयायां च. * वन्दे

**आवस्सगस्स दसकालिअस्स तह उत्तरज्झमायारे। सूयगडे निज्जुत्तिं वुच्छामि तहा दसाणं च ॥ ८४ ॥**
**कप्पस्स य निज्जुत्तिं ववहारस्सेव परमणिउणस्स। सूरिअपण्णत्तीए वुच्छं इसिभासिआणं च ॥ ८५ ॥**
**एतेसिं निज्जुत्तिं वुच्छामि अहं जिणोवएसेणं। आहरणहेउकारणपयनिवहमिणं समासेणं ॥ ८६ ॥**

आसां गमनिका—आवश्यकस्य दशवैकालिकस्य तथोत्तराध्ययनाचारयोः समुदायशब्दानामवयवे वृत्तिदर्शनाद् यथा भीमसेनः सेन इति उत्तराध्य इति उत्तराध्ययनमवसेयं, अथवाऽध्ययनमध्यायः, उत्तराध्यायाचारयोः, सूत्रकृतविषयां निर्युक्तिं वक्ष्ये, तथा दशानां च संबन्धिनीमिति गाथार्थः ॥ ८४ ॥ तथा कल्पस्य च निर्युक्तिं व्यवहारस्य च परमनिपुणस्य, तत्र परमग्रहणं मोक्षाङ्गत्वात् निपुणग्रहणं त्वव्यंसकत्वात्, तथा च न मन्वादिप्रणीतव्यवहारवद्ध्वंसकोऽयं, "सच्चपइण्णा खु ववहारा" इति वचनात्, तथा सूर्यप्रज्ञप्तेः वक्ष्ये, ऋषिभाषितानां च देवेन्द्रस्तवादीनां निर्युक्तिं, क्रियाभिधानं चानेकशः ग्रन्थान्तरविषयत्वात् समासव्यासरूपत्वाच्च शास्त्रारम्भस्य अदुष्टमेवेति गाथार्थः ॥ ८५ ॥ 'एतेषां' श्रुतविशेषाणां, निर्युक्तिं वक्ष्ये अहं जिनोपदेशेन, न तु स्वमनीषिकयैव, आहरणहेतुकारणपदनिवहां एतां समासेन, तत्र साध्यसाधनान्वयव्यतिरेकप्रदर्शनमाहरणं दृष्टान्त इतियावत्, साध्यधर्मान्वयव्यतिरेकलक्षणो हेतुः, हेतुमुल्लङ्घ्य प्रथमं दृष्टान्ताभिधानं न्यायप्रदर्शनार्थं–क्वचिद्धेतुमनभिधाय दृष्टान्त एवोच्यते इति, यथा गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायः, मत्स्यादीनां सलिलवत्, तथा क्वचिद्धेतुरेव केवलोऽभिधीयते, न दृष्टान्तः, यथा मदीयोऽयमश्वः विशिष्टचिह्नोपलब्ध्यन्यथानुपपत्तेः, तथा चाभ्यधायि निर्युक्तिकारेण—"जिणवयणं सिद्धं चेव भण्णई कत्थवी उदाहरणं। आसज्ज उ सोयारं हेऊवि कहंचिय भणेज्जा ॥ १ ॥ इत्यादि"। कारणमुपपत्तिमात्रं, यथा निरुपमसुखः सिद्धः, ज्ञानानाबाधप्रकर्षात्, नात्र आविद्वदङ्गनादिलोकप्रतीतः साध्यसाधनधर्मानुगतो दृष्टान्तोऽस्ति, तत्राहरणार्थाभिधायकं पदमाहरणपदं, एवमन्यत्रापि भावनीयं। आहरणं च हेतुश्च कारणं च आहरणहेतुकारणानि तेषां पदानि आहरणहेतुकारणपदानि तेषां निवहः–संघातो यस्यां निर्युक्तौ सा तथाविधा तां 'एतां' वक्ष्यमाणलक्षणां अथवा प्रस्तुतां 'समासेन' संक्षेपेणेति व्याख्यातं गाथात्रयमिति ॥ ८६ ॥ तत्र 'यथोद्देशस्तथा निर्देश' इति न्यायात् आदावधिकृताऽऽवश्यकाद्याध्ययनसामायिकाख्योपोद्घातनिर्युक्तिमभिधित्सुराह—

१ सत्राऽप्येषा श्रुतस्येति वि०.

**सामाइयनिज्जुत्तिं वुच्छं उवएसियं गुरुजणेणं। आयरियपरंपरएण आगयं आणुपुव्वीए ॥ ८७ ॥**

व्याख्या—सामायिकस्य निर्युक्तिः सामायिकनिर्युक्तिः तां 'वक्ष्ये' अभिधास्ये, उप–सामीप्येन देशिता उपदेशिता तां,

१ जिनवचन सिद्धमेव भण्यते कुत्रापि उदाहरणम्। आसाद्य तु श्रोतार हेतुमपि कचिद् भणेत् ॥ १ ॥ * कहिंवि + तया तत्रोदा० † द्ध्ययन०

केन ?–'गुरुजनेन' तीर्थकरगणधरलक्षणेन, पुनरुपदेशनकालादारभ्य आचार्यपारम्पर्येण आगतां, स च परम्परको द्विधा–द्रव्यतो भावतश्च, द्रव्यपरम्परक इष्टकानां पुरुषपारम्पर्येणानयनं, अत्र चासंमोहार्थं कथानकं गाथाविवरणसमाप्तौ वक्ष्यामः, भावपरम्परकस्त्वियमेव उपोद्घातनिर्युक्तिरेवं आचार्यपारम्पर्येणागतेति, कथम् ?, 'आनुपूर्व्या' परिपाट्या जम्बूस्वामिनः प्रभवेनानीता, ततोऽपि शय्यम्भवादिभिरिति, अथवा आचार्यपारम्पर्येण आगतां स्वगुरुभिरुपदेशितामिति। आह–द्रव्यस्य इष्टकालक्षणस्य युक्तं पारम्पर्येण आगमनं, भावस्य तु श्रुतपर्यायत्वात् वस्त्वन्तरसंक्रमणाभावात् पारम्पर्येणागमनानुपपत्तिरिति, न च तद्बीजभूतस्य अर्हद्गणधरशब्दस्यागमनमस्ति, तस्य श्रुत्यनन्तरमेवोपरमादिति, अत्रोच्यते, उपचाराददोषः, यथा कार्षापणाद् घृतमागतं घटादिभ्यो वा रूपादिविज्ञानमिति। एवमियमाचार्यपारम्पर्यहेतुत्वात् तत आगतेत्युच्यते, आगतेवागता, बोधवचनश्चायमागतशब्दो न गमिक्रियावचन इति, अलं विस्तरेण। दव्वपरंपरए इमं उदाहरणं–साकेयं णगरं, तस्स उत्तरपुरच्छिमे दिसिभागे सुरप्पिए नाम जक्खायतणे, सो य सुरप्पिओ जक्खो सन्निहियपाडिहेरो, सो वरिसे वरिसे चित्तिज्जइ, महो य से परमो कीरइ, सो य चित्तिओ समाणो तं चेव चित्तकरं मारेइ,

१ द्रव्यपरम्परके इदमुदाहरणम्–साकेतं नगर, तस्य उत्तरपौरस्त्ये (ईशानकोणे) दिग्भागे सुरप्रिय नाम यक्षायतनं, स च सुरप्रियो यक्षः (प्रतिमारूपः) सन्निहितप्रातिहार्य, स वर्षे वर्षे चित्र्यते, महश्च तस्य परमः क्रियते, स च चित्रितः सन् तमेव चित्रकर मारयति, * नेदम् (क्वचित्) + ०स दोषः † गति०.

अहं न चित्तिज्जइ तओ जणमारिं करेइ, ततो चित्तगरा सव्वे पलाइउमारद्धा, पच्छा रण्णा णायं, जदि सव्वे पलायंति, तो एस जक्खो अचित्तिज्जंतो अम्ह वहाए भविस्सइ, तेणं चित्तगरा एक्कसंकलितवद्धा पाडुहुएहिं कया, तेसिं णामाइं पत्तए लिहिऊण घडए छूढाणि, ततो वरिसे वरिसे जस्स णामं उट्ठाति, तेण चित्तेयव्वो, एवं कालो वच्चति। अण्णया कयाई कोसंबीओ चित्तगरदारओ घराओ पलाइओ तत्थागओ सिक्खगो, सो भमंतो साकेतस्स चित्तगरस्स घरं अल्लीणो, सोवि एगपुत्तगो थेरीपुत्तो, सो से तस्स मित्तो जातो, एवं तस्स तत्थ अच्छंतस्स अह तंमि वरिसे तस्स थेरीपुत्तस्स वारओ जातो, पच्छा सा थेरी बहुप्पगारं रुवति, तं रुवमाणीं थेरीं दट्ठूण कोसंबको भणति–किं अम्मो ! रुदसि ?, ताए सिट्ठं, सो भणति–मा रुयह, अहं एयं जक्खं चित्तिस्सामि, ताहे सा भणति–तुमं मे पुत्तो किं न भवसि ?, तोवि अहं चित्तेमि, अच्छह तुब्भे असोगाओ, ततो छट्ठभत्तं काऊण अहतं वत्थजुअलं परिहित्ता अट्ठगुणाए पोत्तीए मुहं बंधिऊण चोक्खेण पयत्तेण सुइभूएण णवएहिं कलसएहिं ण्हाणेत्ता णवएहिं कुच्चएहिं णवएहिं मल्लसंपुडेहिं अलेऽसेहिं वण्णेहिं च॥ चित्तेऊण पायव-

१ अथ न चित्र्यते तदा जनमारिं करोति, ततश्चित्रकरा सर्वे पलायितुमारब्धाः, पश्चाद्राज्ञा ज्ञात, यदि सर्वे पलायिष्यन्ते तर्हि एष यक्षोऽचित्र्यमाण अस्माकं वधाय भविष्यति, तेन चित्रकरा एकशृङ्खलाबद्धा प्रतिभूकं (पारितोषिकैः) कृता, तेषा नामानि पत्रके लिखित्वा घटे क्षिप्तानि, ततो वर्षे वर्षे यस्य नाम उत्तिष्ठते, तेन चित्रयितव्य, एव कालो गच्छति। अन्यदा कदाचित् कौशाम्बीकः चित्रकरदारक गृहात् पलायितः तत्रागत शिक्षकः (शिक्षितु), स भ्राम्यन् साकेतकस्य चित्रकरस्य गृहमालीनः, सोऽपि एकपुत्रक स्थविरापुत्र, सोऽथ तस्य मित्र जात, एव तस्मिंस्तिष्ठति अथ तस्मिन्वर्षे तस्य स्थविरापुत्रस्य वारको जात, पश्चात् सा स्थविरा बहुप्रकार रोदिति, तां रुदतीं दृष्ट्वा स्थविरां कौशाम्बीको भणति–किमम्ब ! रोदिषि? तया शिष्ट (वृत्तान्त), स भणति–मा रुदिहि अहमेत यक्ष चित्रयिष्यामि, तदा सा भणति–त्व मे पुत्र किं नासि, तथापि अह चित्रयामि, तिष्ठत यूयमशोकाः, तत षष्ठभक्त कृत्वाऽहत वस्त्रयुगल परिधायाष्टगुणया वस्त्रिकया मुख बद्ध्वा चोक्षेण प्रयत्नेन शुचीभूतेन नवै कलशै स्नपयित्वा नवैः कूर्चकैः नवैर्मल्लकसंपुटै अश्लेषैर्वर्णैश्च चित्रयित्वा पादप तितो भणति–* पाहुडएहिं प्र० + ०सिं मज्झेसिं † सागेयगस्स ‡ नासीत्वम् † सुहपोत्तीए ‡ ०ण पएण णव० ¶ मल्लयम० § अलेमसेहिं ॥ चित्तिओ चित्ते०

डिओ भणइ–खमह जं मए अवरद्धं ति ?, ततो तुट्ठो जक्खो भणति–वरेहि वरं, सो भणति–एऽयं चेव ममं वरं देहि, मा लोगं मारेह,॥ भणति–एतं ताव ठितमेव, जं तुमं न मारिओ, एवं अण्णेवि न मारेमि∫, अण्णं भण, जस्स एगदे* समवि पासे‡मि दुपयस्स वा चउप्पयस्स वा अपयस्स वा तस्स तदाणुरूवं Vरूवं णिव्वत्तेमि, एवं होउत्ति दिण्णो वरो, ततो सो लद्धवरो रण्णा सक्कारितो समाणो गओ कोसंबीं णयरिं, तत्थ य सयाणिओ नाम राया, सो अण्णया कयाई सुहासणगओ दूअं पुच्छइ–किं मम णत्थि ? जं अण्णराईण अत्थि, तेण भणिअं–चित्तसभा णत्थि, मणसा देवाणं वायाए पत्थिवाणं, तक्खणमेत्तमेव आणत्ता चित्तगरा, तेहिं सभाओवासा विभइत्ता पचित्तिता, तस्स वरदिण्णगस्स जो रण्णो अंतेपुरकिड्डापदेसो सो दिण्णो, तेणं तत्थ तदाणुरूवेसु णिम्मिएसु कदाइ मिगावतीए जालकिड्डगंतरेण पादंगुट्ठओ दिट्ठो, उवमाणेण णायं जहा मिगावती एसत्ति, तेण पादंगुट्ठगाणुसारेण देवीए रूवं णिव्वत्तिअं, तीसे चक्खुंमि उम्मिल्लिज्जंते

१ क्षमस्व यन्मयाऽपराद्धमिति, ततस्तुष्टो यक्षो भणति–वृणुष्व वर, स भणति–एतमेव मम वर देहि, मा लोक मारय (मीमर) इति, भणति–एतत्तावत्स्थितमेव, यन्न त्व मारित, एवमन्यानपि न मारयिष्यामि, अन्यद्भण, (स भणति–) यस्य एकमपि देश पश्यामि द्विपदस्य वा चतुष्पदस्य वा अपदस्य वा, तस्य तदनुरूप रूप निर्वर्त्तयामि, एव भवत्विति दत्तो वर, तत स लब्धवरो राज्ञा सत्कृत सन् गत कौशाम्बीं नगरीं, तत्र च शतानीको नाम राजा, सोऽन्यदा कदाचित् सुखासनगतो दूत पृच्छति–किं मम नास्ति यदन्येषा राज्ञामस्ति ?, तेन भणित–चित्रसभा नास्ति, 'मनसा देवानां, वाचा पार्थिवानां' (कार्यसिद्धि इति नियमात्) तत्क्षण एव आज्ञप्ताश्चित्रकृत, ते सभावकाशा विभज्य प्रचित्रिताः (चित्रितुमारब्धा) तस्मै दत्तवराय यो राज्ञोऽन्त पुरक्रीडाप्रदेश स दत्त, तेन तत्र (क्रीडाप्रदेशे) तदनुरूपेषु निर्मितेषु (रूपेषु) कदाचिन्मृगावत्या जालकटकान्तरे पादाङ्गुष्ठको दृष्ट, उपमानेन ज्ञात–यथा मृगावती एषेति, तेन पादाङ्गुष्ठकानुसारेण देव्या. रूप निर्वर्तित, तस्याश्चक्षुष्युन्मील्यमाने $ एव ॥ मारेहि ∫ मारेमो * एगपदे० ‡ पासामि V नेदम् ¦ वाया + समा सा. † कडग०

एगो मसिबिन्दू ऊरुयंतरे पडिओ, तेण फुसिओ, पुणोऽवि जातो, एवं तिन्नि वारा, पच्छा तेण णायं, एतेन एवं होयव्वमेव, ततो चित्तसभा निम्मि॥ता, राया चित्तसभं पलोएंतो तं पदेसं पत्तो जत्थ सा देवी, तं णिवण्णंतेण सो बिन्दू दिट्ठो, विरु¶ट्ठो, एतेण मम पत्ती धरिसियत्तिकाऊण वज्झो आणत्तो, चित्तगरसेणी उवट्ठिता, सामि ! एस वरल‡द्धोत्ति, ततो से खुज्जाए मुहं दाइयं, तेण तदाणुरूवं णिव्वत्तितं, तथावि तेण संडासओ छिंदाविओ चेव, णिव्विसओ य आणत्तो, सो पुणो जक्खस्स उववासेण ठितो, भणिओ य-वामेण चित्तिहिसि, सयाणियस्स पदोसं गतो, तेण चिंतियं-पज्जोओ एयस्स अप्पीतिं वहेज्जा, ततो णेण मिगावईए चित्तफलए रूवं चित्तेऊण, पज्जोयस्स उव§ट्ठविअं, तेण दिट्ठं, पुच्छिओ, सिट्ठं, तेण दूओ पयट्टितो, जदि मिया॥वई न पट्ठवेसि तो एमि, तेण असक्कारिओ णिद्धमणेण णिच्छूढो, तेण सिट्ठं, इमोवि तेण दूयवयणेण रुट्ठो, सव्वबलेण कोसंबिं एइ, तं आगच्छंतं सोउं सयाणिओ अप्पबलो अतिसारेण मओ, ताहे$

१ एको मषीबिन्दु ऊर्वन्तरे पतित , तेन स्पृष्ट (मृष्ट.), पुनरपि जात , एव त्रीन् वारान् , पश्चात् तेन ज्ञात, एतेनैव भवितव्यमेव, ततश्चित्रसभा निर्मिता, ततो राजा चित्रसभा प्रलोकयन् त प्रदेश प्राप्त., यत्र सा देवी (चित्रिता), तां निर्वर्णयता स बिन्दुर्दृष्टः, विरुष्टः, एतेन मम पत्नी धर्षितेतिकृत्वा वध्य आज्ञप्त , चित्रकृच्छ्रेणिरुपस्थिता, स्वामिन्! एष लब्धवर इति, ततस्तस्मै कुब्जाया मुख दर्शितं, तेन तदनुरूप निर्वर्त्तितं, तथापि तेन सदंशक. (अङ्गुष्ठतर्जन्योरग्र) छेदित एव, निर्विषयश्चाज्ञप्त , स पुनर्यक्षाय (यक्षमाराद्धुं) उपवासेन स्थित , भणितश्च-वामेन चित्रयिष्यसि, शतानीके प्रद्वेष गतः, तेन चिन्तित-प्रद्योत एतस्याप्रीतिं वहेत् (वोढु शक्त ), ततोऽनेन मृगावत्याश्चित्रफलके रूप चित्रयित्वा प्रद्योताय उपस्थापित, तेन दृष्ट, पृष्ट , शिष्ट, तेन दूत प्रवर्त्तित , यदि मृगावतीं न प्रस्थापयसि तर्ह्येमि (योद्धुमिति शेष ) तेन असत्कृत. निर्धमनेन निष्काशित , तेन शिष्ट, अयमपि तेन दूतवचनेन रुष्ट , सर्वबलेन कौशाम्बीमेति, तमागच्छन्त श्रुत्वा शतानीकोऽल्पबलोऽतीसारेण मृत , तदा ‡ निम्माता. ¶ त दट्ठूण रुट्ठो ‡ वरलद्धिओत्ति § उवट्ठित ॥ नेदम् $ ततो.

मिंगावईए चिन्तिअं—मा इमो बालो मम पुत्तो विणस्सिहिति, एस खरेणं न सक्कति, पच्छा दूतो पट्ठविओ, भणिओ-एस कुमारो बालो, अम्हेहिं गएहिं मा सामंतराइणा केणइ अण्णेणं पेल्लिज्जिहिइ, सो भणति—को ममं धारे॥माणे पेल्लिहिति, सा भणति—ओसीसए सप्पो, जोयणसए विज्जो किं करेहिति ?, तो णगरिं दढं करेहि, सो भणति-आमं करेमि, ताए भण्णति-उज्जेणिगाओ इट्टगाओ बलिआओ, ताहि कीरउ, आमंति, तस्स य चोद्दस राइणो वसवत्तिणो, तेणं तेसिं बंला ठविता, पुरिसपरंपरएण तेहिं आणिआओ इट्टगाओ, कयं णगरं दंढं, ताहे ताए भणति—इयाणिं धणा†स्स भरेहि णगरिं, ता‡ णेण भरिया, जा¶हे णगरी रोहगअसज्झा जाया, ताहे सा विसंवइया, चिन्तियं च णाए—धण्णा णं ते गामागरणगर जाव सण्णिवेसा, जत्थ सामी विहरति, पव्वएज्जामि जइ सामी एज्ज, ततो भगवं समोसढो, तत्थ सव्ववेरा पसमंति, मिगावती णिग्गता, धम्मे कहिज्जमाणे एगे पुरिसे एस सव्वण्णुत्ति काउं पच्छण्णं मणसा पुच्छति, ताहे

१ मृगावत्या चिन्तित-मैष बालो मम पुत्रो विनेशत्, एष खरेण न शक्यते (साधयितु), पश्चाद् दूत प्रस्थापित , भणित -एष कुमारो बाल॰, अस्मासु गतेषु मा सामन्तराजेन केनचिदन्येन प्रैरि, स भणति-को मया ध्रियमाणान् प्रेरयेत्, सा भणति-उच्छीर्षके सर्पो योजनशते वैद्य किं करिष्यति ? तत् नगरीं दृढा कुरु, स भणति-आममिति (ओमिति) करोमि, तया भण्यते-औज्जयिन्य इष्टका बलवत्य॰, ताभि करोतु, ओमिति, तस्य च चतुर्दश राजानो वशवर्त्तिन , तेन तेषा बलानि स्थापितानि, पुरुषपरम्परकेण तैरानीता इष्टका , कृत नगर दृढ, तदा तया भण्यते-इदानीं धनेन बिभृहि नगरीं, तदा तेन भृता, यदा नगरी रोधासाध्या जाता तदा सा विसंवदिता, चिन्तित च तया-धन्यास्ते ग्रामाकरनगराणि यावत् सन्निवेशा , यत्र स्वामी विहरति, प्रव्रजेय यदि स्वामी आयायात् (एयात्), ततो भगवान् समवसृत तत्र सर्ववैराणि प्रशाम्यन्ति, मृगावती निर्गता, धर्मे कथ्यमाने एक पुरुष एष सर्वज्ञ इतिकृत्वा प्रच्छन्न मनसा पृच्छति, तदा ॥ धरमाणे * ते सबला + नेदम् † धण्णस्स ‡ ततो ¶ जाव

सामिणा भणिओ-वायाए पुच्छ देवाणुपिआ !, $वरं बहवे सत्ता संबुज्झंतित्ति, एवम॥वि भणिते तेण भण्णति-भगवं ! जा सा सा सा ?, तत्थ भगवता आमंति भणितं, गोयमसामिणा भणिअं-किं एतेण जा सा सा सा इति भणितं ?, एत्थ तीसे उट्ठाणपरियावणिअं सव्वं भ॰गवं परिकहेति—तेणं कालेणं तेणं समएणं चंपानाम नयरी, तत्थेगो सुवण्णगारो $इत्थीलोलो, सो पंच पंच सुवण्णसयाणि दाऊण जा पहाणा कण्णा तं परिणेति, एवं तेणं पंचसया पिंडिता, एक्केक्काए तिलगचोद्दसगं अलंकारं करेइ, जद्दिवसं जाए समं भोगे भुंज∫इ तद्दिवसं देति अलंकारं, सेसकालं न देति, सो ईसालुओ तं घरं न कयाई मुयइ, नवा अण्णस्स अल्लि*यंतुं देति, सो अण्णदा मित्तपगते वाहितो, अणिच्छंतो बला णीओ जेमेउं, सो‡ तहिं गतोत्ति णाऊणं ताहि चिंतिअं-किं एतेणं अम्ह सुवण्णएणंति ?, अज्ज पतिरिक्कं ण्हामो समालभामो आविद्धामो अ, ण्हाआओ पइरिक्कमं*जितवयविहीए तिलयचोद्दसएणं अलंकारेण अलंकरेऊणं अद्दायं गहाय पेहमाणीओ चिट्ठंति, सो अ

१ स्वामिना भणित -वाचा पृच्छ देवानुप्रिय ! वर बहव सत्त्वा सबुध्यन्त इति, एवमपि भणिते तेन भण्यते-भगवन् ! या सा सा सा ?, तत्र भगवता आममिति (ओमिति) भणिते गौतमस्वामिना भणित-किमेतेन या सा सा सेति भणित ?, अत्र तस्या उत्थानपर्यापनिकं सर्वं भगवान् परिकथयति-तस्मिन्काले तस्मिन्समये चम्पानाम्नी नगरी, तत्रैक सुवर्णकार स्त्रीलोलुप , स पञ्च पञ्च सु (सौ) वर्णशतानि दत्त्वा या प्रधाना कन्या तां परिणयति, एव तेन पञ्चशती पिण्डिता, एकैकस्या तिलकचतुर्दशकान् अलङ्कारान् कारयति, यद्दिवसे यया सम भोगान् भुङ्क्ते (इति) तद्दिवसे ददाति अलङ्कारान्, शेषकाले न ददाति, स ईर्ष्यालुस्तत् गृह न कदाचित् मुञ्चति, नवाऽन्यस्य उपसर्तुं ददाति, सोऽन्यदा मित्रप्रकृते (जेमनादिप्रकरणे) व्याहृत अनिच्छन् बलान्नीतो जेमितु, स तत्र गत इति ज्ञात्वा ताभिश्चिन्तित-किमेतेनास्माक सुवर्णेनेति अद्य प्रतिरिक्त (यथेच्छ) स्नाम समालभाम परिदध्मश्च, स्नाता प्रतिरिक्तम॰ज्जनविधिना तिलकचतुर्दशकैरलङ्कारैरलङ्कृत्य आदर्शं गृहीत्वा प्रेक्षमाणास्तिष्ठन्ति, § णवर ॥ मविभणितो $ भणित $ अत्थि छोलो ∫ भुजइति॰ * अल्लिएउ ‡ सो य * ॰मज्जण॰

सो आगतो, तं दट्ठूण आसुरुत्तो, तेण एक्का गहिया, ताव पिट्टिया जाव मयत्ति, ता¹ अण्णाओ भणंति-एवं अम्हवि एक्के- क्का उ एएण हंतव्व*त्ति, तम्हा एयं एत्थेव अद्दागपुंजं करेमो, तत्थेगुणेहिं पंचहिं महिलासएहिं पंच एगूणाइं अद्दागसयाइं जमगसमगं पक्खित्ताइं, तत्थ सो अद्दागपुंजो जातो, पच्छा पुणोवि तासिं पच्छातावो जाओ-का गती अम्ह पतिमा- रियाणं भविस्सति ?, लोए अ उद्धंसणाओ सहेयव्वाओ, ताहे ताहिं घणकवाडनिरंतरं णिच्छिड्डाइं दाराइं ठवेऊण अग्गी दिण्णो सव्वओ समंतओ, तेण पच्छाणुतावेण साणुक्कोसयाए अ ताए अकामणिज्जराए मणूसेसूववण्णा पंचवि सया चोरा जाया, एगंमि पव्वए परिवसंति, सोवि कालगतो तिरिक्खेसूववण्णो, तत्थ जा सा पढमं मारिया, सा एक्कं भवं तिरिएसु पच्छा एगंमि बंभणकुले चेडो आयाओ, सो अ पंचवरिसो, सो अ सुवण्णकारो तिरिक्खेसु उववट्टिऊण तंमि कुले चेव

1 स च तत आगतः, सत् दृष्ट्वा क्रुद्ध, तेनैका गृहीता तावत्पिट्टिता यावन्मृतेति, तदाऽन्या भणन्ति-एव वयमपि एकैका एतेन हन्तव्येति, तस्माद् एनं अत्रैव आदर्शपुञ्ज कुर्मः, तत्रैकोनैः पञ्चभि महिलाशतै' एकोनानि पञ्चादर्शशतानि युगपत् प्रक्षिप्तानि, तत्र स आदर्शपुञ्जो जात , पश्चात्पुनरपि तासां पश्चात्तापो जातः-का गतिरस्माकं पतिमारिकाणां भविष्यति ?, लोके चावहेलना. सोढव्या', तदा ताभिर्घनकपाटनिरन्तर निश्छिद्राणि द्वाराणि स्थापयित्वा (स्थगयित्वा) अग्निर्दत्त' सर्वत समन्ततः, तेन पश्चात्तापेन सानुक्रोशतया च तयाऽकामनिर्जरया मनुष्येषूत्पन्नाः पञ्चापि शतानि चौरा जाताः, एकस्मिन् पर्वते परिवसन्ति, सोऽपि कालगत' तिर्यक्षूत्पन्न , तत्र या सा प्रथम मारिता सा एकस्मिन् भवे तिर्यक्षु पश्चात् एकस्मिन् ब्राह्मणकुले चेट आयात (उत्पन्नः), स च पञ्चवर्ष , स च सुवर्णकारः तिर्यग्भ्य उद्वृत्य तस्मिन् कुल एव + मिसमिसमाणो † तओ. ‡ अम्हेऽवि ¶ ०ओ गिह० § लोएवि

दारिया जाया, सो चेडो तीसे बालग्गाहो, सा य णिच्चमेव रोयति, तेण उदरपोप्पयं करेंतेणं कहवि सा जोणिद्दारे हत्थेण आहता, तहा ‖ववट्ठिता रोविउं, तेण णायं-लद्धो मए उवाओत्ति, एवं सो णिच्चकालं करेति, सो तेहिं मायपितीहिं णाओ, ताहे हणिऊणं धाडिओ, साविय पडुप्पण्णा चेव विद्दाया, सो य चेडो पलायमाणो चिरं णगरविणट्ठ§दुट्ठसीला- चारो जाओ, गतो एगं चोरपल्लिं, जत्थ ताणि एगूण☆गाणि पंच चोरसयाणि परिवसंति, सावि पइरिक्कं हिंडंती एगं गामं गता, सो गामो तेहिं चोरेहिं पेल्लितो, सा य णेहिं गहिया, सा तेहिं पंचहिवि चोरसएहिं परिभुत्ता, तेसिं चिंता जाया -अहो इमा वराई एत्तिआणं सहति, जइ अण्णा से बिइज्जिआ लभेज्जा तो से विस्सामो होज्जा, ततो तेहिं अण्णया कयाई तीसे बिइज्जिआ आणीआ, जद्दिवसं चेव आणीआ तद्दिवसं चेव सा तीसे छिड्डाइं मग्गइ, केण उवाएण मारेज्जा ?,

1 दारिका जाता, स चेटस्तस्या बालग्राहः, सा च नित्यमेव रोदिति, तेन उदरामर्दनं कुर्वता कथमपि सा योनिद्वारे हस्तेनाहता तथा अवस्थिता रोदनात् (रोदितुम्) तेन ज्ञात-लब्धो मयोपाय इति, एव स नित्यकालं करोति, स ताभ्यां मातापितृभ्यां ज्ञात तदा हत्वा निर्घाटित , सापि च प्रत्युत्पन्ना एव (योग्यवय स्थैव) विद्रुता, स च चेट पलायमान चिर नगरविनष्टदुष्टशीलाचारो जातो, गत एकां चौरपल्लीं, यत्र च तानि एकोनानि पञ्चशतानि चौराः परिवसन्ति, सापि प्रतिरिक्त हिण्डन्ती एक ग्राम गता, स ग्रामस्तैश्चौरै प्रेरितः (लुण्टितः), सा चैभिर्गृहीता, सा तै पञ्चभिरपि चौरशतै परिभुक्ता, तेषां चिन्ता जाता-अहो इय वराकी एतावतां सहते, यद्यन्याऽस्या द्वितीया लभ्येत तदाऽस्या विश्रामो भवेत्, ततस्तैरन्यदा कदाचित्तस्या द्वितीयाऽऽनीता, यद्दिवस एवानीता तद्दिवस एव तस्याश्छिद्राणि मार्गयति, केनोपायेन मार्येत, ‖ तह चेव. § ०दुट्ठविणट्ठ० ☆ ०णाणि.

ते¹ अण्णया कयाइ ओहाइया, ताए सा भणिआ, पेच्छ कूवे किंपि दीसइ, सा दट्ठुमारद्धा, ताए तत्थेव छूढा, ते आगता पुच्छंति, ताए भणाति अप्पणो महिलं कीस न सारेह ?, तेहिं णायं जहा एयाए मारिया, तओ तस्स बंभणचेडगस्स हिदए ठिअं जहा एसा मम पावकम्मा भगिणित्ति, सुव्वइ य भगवं महावीरो सव्वण्णू सव्वदरिसी, ततो एस समोसरणा पुच्छति । ताहे सामी भणति-सा चेव सा तव भगिणी, एत्थ संवेगमावन्नो सो पव्वइओ, ¶एवं सोऊण सव्वा सा परिसा पतणुरागसंजुत्ता जाया । ततो मिगावती देवी जेणेव समणे भगवं महावीरे तेणेव उवागच्छति, उवागच्छित्ता समणं भगवं महावीरं वंदित्ता एवं वयासी-जं णवरं पज्जोअं आपुच्छामि, ततो तुज्झ सगासे पव्वयामित्ति भणिऊण पज्जोअं आपुच्छति, ततो पज्जोओ तीसे महतीमहालियाए सदेवमणुयासुराए परिसाए लज्जाए ण तरति वारेउं, ताहे विसज्जेइ,

1 तेऽन्यदा कदाचिदुद्धाविताः, तया सा भणिता, पश्य कूपे किमपि दृश्यते, सा द्रष्टुमारब्धा, तया तत्रैव क्षिप्ता, ते आगता' पृच्छन्ति, तया भण्यन्ते-आत्मनो महेलां किं न रक्षत (सारयत) ?, तैर्ज्ञात-यथैतया मारिता, ततस्तस्य ब्राह्मणचेटकस्य हृदि स्थित-यथैषा मम पापकर्मा भगिनीति, श्रूयते च भगवान्महावीर सर्वज्ञ सर्वदर्शी, तत एष समवसरणात् पृच्छति । तदा स्वामी भणति-सैव सा तव भगिनी, अत्र संवेगमापन्न' स प्रव्रजितः, एवं श्रुत्वा सा परिषत् प्रतनुरागसंयुक्ता जाता, ततो मृगावती देवी यत्रैव श्रमणो भगवान् महावीर तत्रैवोपागच्छति, उपागत्य श्रमण भगवन्तं महावीरं वन्दित्वा एवमवादीत्-यत् पर प्रद्योतमापृच्छामि, ततस्तवसकाशे प्रव्रजामीति भणित्वा प्रद्योतमापृच्छति, ततः प्रद्योतस्तस्यामतिमहत्यां सदेवमनुजासुरायां पर्षदि लज्जया न शक्नोति वारयितुं, तस्मात्, विसर्जयति (व्यसृजत्), * ते य + एत्थ † सारवेह ‡ समोसरणे ¶ एत

ततो मिगावती पज्जोयस्स उदयणकुमारं णिक्खेवगणिक्खित्तं काऊण पव्वइआ, पज्जोअस्सवि अट्ठ अंगारवईपमुहाओ देवीओ पव्वइयाओ, ताणिवि पंच चोरसयाणि तेणं गंतूण संबोहियाणि, एतं पसंगेण भणिअं, एत्थ इट्ठगपरंपरएण अहियारो, एस दव्वपरंपरओ ॥ ८७ ॥ साम्प्रतं निर्युक्तिशब्दस्वरूपाभिधानायेदमाह—

**णिज्जुत्ता ते अत्था जं बद्धा तेण होइ णिज्जुत्ती । तहविय इच्छावेइ विभासिउं सुत्तपरिवाडी ॥ ८८ ॥**

व्याख्या—निश्चयेन सर्वाधिक्येन आदौ वा युक्ता निर्युक्ताः, अर्यन्त इत्यर्थाः जीवादयः श्रुतविषयाः, ते ह्यर्था निर्युक्ता एव सूत्रे, 'यद्' यस्मात् 'बद्धाः' सम्यग् अवस्थापिता योजिता इतियावत्, तेनेयं 'निर्युक्तिः' निर्युक्तानां युक्तिर्निर्युक्तयुक्तिरिति प्राप्ते युक्तशब्दस्य लोपः क्रियते, उष्ट्रमुखी कन्येति यथा, निर्युक्तार्थव्याख्या निर्युक्तिरितिहृदयं । आह—सूत्रे सम्यक् निर्युक्ता एवार्थाः पुनश्चेहैषां योजनं किमर्थं ?, उच्यते, सूत्रे† निर्युक्तानप्यर्थान् न सर्वे एवाशेषान् अवबुध्यन्ते यतः, अतः । तथापि च सूत्रे‡ निर्युक्तानपि सतः एपयति—इषु इच्छायामित्यस्य ण्यन्तस्य लट् इति तिप्-शप्-गुणायादेशेषु कृतेषु एपयति, विविधं भाषितुं विभाषितुं, का ?–'सूत्रपरिपाटी' सूत्रपद्धतिरिति, एतदुक्तं भवति—अप्रतिबुध्यमाने श्रोतरि गुरुं तदनुग्रहार्थं सूत्रपरिपाट्येव विभाषितुमेपयति—इच्छत इच्छत मां प्रतिपादयितुमित्थं प्रयोजयतीवेति, सूत्रपरिपाटीमिति पाठान्तरं§, शिष्य एव गुरुं सूत्रपद्धतिमनव||बुध्यमानः प्रवर्तयति—इच्छत इच्छत मम

१ ततो मृगावती प्रद्योत उदयनकुमारस्य निक्षेपनिक्षिप्त कृत्वा प्रव्रजिता, प्रद्योतस्याप्यष्टौ अङ्गारवतीप्रमुखाः देव्यः प्रव्रजिताः, तानि पञ्च चौरशतानि तेन गत्वा सबोधितानि । एतत् प्रसङ्गेन भणित, अत्र इष्टकापरम्परकेणाधिकार., एष द्रव्यपरम्परक ॥ २ अहवा सुयपरिवाडी सुओवएसोऽय ( वि० ) श्रुतस्य विधिरिति तद्वृत्ति.. * साध्वाधि० + ०त सूत्रे. † सूत्रनि० ‡ सूत्रेऽनि० ¶ नेदम्. § ०र वा. || ०मबुध्य०

व्याख्यातुं सूत्रपरिपाटीमिति, व्याख्या च निर्युक्तिरिति, अतः पुनर्योजनमित्थमदोपायैवेति, अलं विस्तरेण, गमनिकामात्रमेवैतदिति गाथार्थः ॥ ८८ ॥ यदुक्तं 'अर्थपृथक्त्वस्य तैः कथितस्येति' तीर्थकरगणधरैः, इदानीं तेषामेव शीलादिसंपत्समन्वितत्वप्रतिपादनायाह—

**तवनियमनाणरुक्खं आरूढो केवली अमियनाणी । तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए ॥ ८९ ॥**
**तं बुद्धिमएण पडेण गणहरा गिण्हिउं निरवसेसं । तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ॥ ९० ॥**

प्रथमगाथाव्याख्या—रूपकमिदं द्रष्टव्यं, तत्र वृक्षो द्विधा—द्रव्यतो भावतश्च, द्रव्यवृक्षः कल्पतरुः, यथा तमारुह्य कश्चित् तत्कुसुमाना गन्धादिगुणसमन्वितानां संचयं कृत्वा तदधोभागसेविनां पुरुषाणां तदारोहणासमर्थानां अनुकम्पया कुसुमानि विसृजति, तेऽपिच भूपातरजोगुण्डनभयात् विमलविस्तीर्णपटेषु प्रतीच्छन्ति, पुनर्यथोपयोगमुपभुञ्जानाः सुखमाप्नुवन्ति, एवं भाववृक्षेऽप्यायोज्यं । तपश्च नियमश्च ज्ञानं च तपोनियमज्ञानानि तान्येव वृक्षस्तं, तत्र अनशनादिबाह्याभ्यन्तरभेदभिन्नं तपः, नियमस्तु इन्द्रियनोइन्द्रियभेदभिन्नः, तत्र श्रोत्रादीनां संयमनमिन्द्रियनियमः क्रोधादीनां तु नोइन्द्रियनियम इति, ज्ञानं–केवलं संपूर्णं गृह्यते, इत्थंरूपं* वृक्षं आरूढः, तत्र ज्ञानस्य संपूर्णासंपूर्णरूपत्वात् संपूर्णताख्यापनायाह—संपूर्णं केवलं अस्यास्तीति केवली, असावपि चतुर्विधः—श्रुतसम्यक्त्वचारित्रक्षायिकज्ञानभेदात्, अथवा श्रुतावधिमनःपर्यायकेवलज्ञानभेदात्, अतः श्रुतादिकेवलव्यवच्छित्तये सर्वज्ञावरोधार्थमाह—अमितज्ञानी, 'ततो' वृक्षात्

* इत्थंभूत + ०बोधा०

मुञ्चति 'ज्ञानवृष्टिं' इति कारणे कार्योपचारात् शब्दवृष्टिं, किमर्थं ?–भव्याश्च ते जनाश्च भव्यजनाः तेषां विबोधनं तदर्थं तन्निमित्तमितियावत् । आह—कृतकृत्यस्य सतस्त†त्त्वकथनमनर्थकं, प्रयोजनविरहात्, सति च तस्मिन् कृतकृत्यत्वानुपपत्तेः, तथा सर्वज्ञत्वाद्वीतरागत्वाच्च भव्यानामेव विबोधनमनुपपन्नं, अभव्याविबोधने असर्वज्ञत्वावीतरागत्वप्रसङ्गादिति, अत्रोच्यते, प्रथमपक्षे तावत सर्वथा कृतकृत्यत्वं नाभ्युपगम्यते, भगवतः तीर्थकरनामकर्मविपाकानुभा‡वात्, तस्य च धर्मदेशनादिप्रकारेणैवानुभूतेः, द्वितीयपक्षे तु त्रैलोक्यगुरोर्धर्मदेशनक्रिया विभिन्नस्वभावेषु प्राणिषु तत्स्वाभाव्यात् विबोधाविबोधकारिणी पुरुषोलूककमलकुमुदादिषु आदित्यप्रकाशनक्रियावत्, उक्तं च वादिमुख्येन—त्वद्वाक्यतोऽपि केषाञ्चिदबोध इति मेऽद्भुतम् । भानोर्मरीचयः कस्य, नाम नालोकहेतवः ? ॥ १ ॥ न चाद्भुतमुलूकस्य, प्रकृत्या क्लिष्टचेतसः । स्वच्छा अपि तमस्त्वेन, भासन्ते भास्वतः कराः ॥ २ ॥ इत्यादि" यथा वा सुवैद्यः साध्यमसाध्यं व्याधिं चिकित्समानः प्रत्याचक्षाणश्च नातज्ज्ञः न च रागद्वेषवान्, एवं साध्यमसाध्यं भव्याभव्यकर्मरोगमपनयन्ननपनयंश्च भगवान्नातज्ज्ञो न च रागद्वेषवानिति अलं प्रसङ्गेनेति गाथार्थः ॥ ८९ ॥ द्वितीयगाथाव्याख्या—'तां' इति तां ज्ञानकुसुमवृष्टिं, बुद्धिमयेन–बुद्ध्यात्मकेन, बुद्धिरेवात्मा यस्यासौ बुद्ध्यात्मकस्तेन, केन ?–पटेन, 'गणधराः' प्रागुक्ताः 'ग्रहीतु' आदातुं 'निरवशेषां' संपूर्णां ज्ञानकुसुमवृष्टिं, बीजादिबुद्धित्वाद्गणधराणां, ततः किं कुर्वन्ति ?–भाषणानि भाषितानि, भावे निष्ठाप्रत्ययः, तीर्थकरस्य भाषितानि तीर्थकरभाषितानि इति समासः, कुसुमकल्पानि, ग्रथ्नन्ति विचित्रकुसुममालावत्, किमर्थमित्याह—प्रगतं प्रशस्तं प्रधानमादौ वा वचनं प्रवचनं—द्वादशाङ्गं गणिपिटकं तदर्थं, कथमिदं भवेदितियावत्, प्रवक्तीति

१ श्रीमद्भि सिद्धसेनदिवाकरपादैर्द्वात्रिंशिकायामिति प्रसिद्धि † ०स्तत्कथन० ‡ ०भावकत्वाच ०भवात्

त्रा प्रवचनं सङ्घस्तदर्थमिति गाथार्थः ॥ ९० ॥ प्रयोजनान्तरप्रतिपिपादयिषयेदमाह—

**घित्तुं च सुहं सुहगणणधारणा दाउं पुच्छिउं चेव । एएहिं कारणेहिं जीयंति कयं गणहरेहिं ॥ ९१ ॥**

व्याख्या—'ग्रहीतुं च' आदातुं च ग्रथितं सत्सूत्रीकृतं सुखं भवति अर्हद्वचनवृन्दं, कुसुमसंघातवत्, 'चः' समुच्चये, एतदुक्तं भवति—पदवाक्यप्रकरणाध्यायप्राभृतादिनियतक्रमस्थापितं जिनवचनं अयत्नेनोपादातुं शक्यते*, तथा गणनं च धारणा च गणनधारणे ते अपि सुखं भवतः ग्रथिते सति, तत्र गणनं—एतावदधीतं एतावच्चाध्येतव्यमिति, धारणा अप्रच्युतिः अविस्मृतिरित्यर्थः, तथा दातुं प्रष्टुं च, 'सुखं' इत्यनुवर्त्तते, 'चः' समुच्चय एव, एवकारस्य तु व्यवहितः संटङ्कः, ग्रहीतुं सुखमेव भवतीत्यर्थं योजनीयं, तत्र +दानं–शिष्येभ्यो निसर्गः, प्रश्नः—संशयापत्तौ असंशयार्थं विद्वत्सन्निधौ स्वविवक्षासूचकं वाक्यमिति, 'एभि' कारणैः' अनन्तरोक्तैर्हेतुभूतैः 'जीवितं' इति अव्यवच्छित्तिनयाभिप्रायतः सूत्रमेव 'जीयं'ति प्राकृतशैल्या 'कृतं' रचितं गणधरैः, अथवा जीतमिति अवश्यं गणधरैः कर्त्तव्यमेवेति, तन्नामकर्मोदयादिति गाथार्थः ॥ ९१ ॥ आह—तीर्थकरभापितान्येव सूत्रं, गणधरसूत्रीकरणे तु को विशेष इति, उच्यते, स हि भगवान् विशिष्टमतिसंपन्नगणधरापेक्षया प्रभूतार्थमर्थमात्रं स्वल्पमेव अभिधत्ते, न त्वितरजनसाधारणं ग्रन्थराशिमिति, अत *आह—

**अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं । सासणस्स हियट्टाए तओ सुत्तं+ पवत्तइ ॥ ९२ ॥**

गाथेयं प्रायो निगदसिद्धैव, चालना†प्रत्यवस्थानमात्रं त्वभिधीयते—कश्चिदाह—अर्थोऽनभिलाप्यः, तस्य अशब्द-

* शक्य + दातु * अत एवाह । एतदेवाह + तित्थ † चालन०.

रूपत्वात्, अतस्तं कथमसौ भाषत इति, उच्यते, शब्द एव अर्थप्रत्यायनकार्यत्वाद् उपचारतः खलु अर्थ इति, यथा आचारवचनत्वाद् आचार इत्यादि, 'निपुणं' सूक्ष्मं बह्वर्थं च, नियतगुणं वा निगुणं, सन्निहिताशेषसूत्रगुणमितियावत्, पाठान्तरं वा 'गणहरा निपुणा निगुणा वा' ॥ ९२ ॥ आह—शब्दमर्थप्रत्यायकं अर्हन् भाषते, न तु साक्षादर्थं, गणभृतोऽपिच शब्दात्मकमेव श्रुतं ग्रथ्नन्ति, कः खल्वत्र विशेष इति, उच्यते, गाथा‡संबन्धाभिधान एव विहितोत्तरत्वात् यत्किञ्चिदेतत् । आह—तत्पुनः सूत्रं किमादि किंपर्यन्तं कियत्परिमाणं को वाऽस्य सार इति, उच्यते—

**सामाइयमाईयं सुयनाणं जाव बिन्दुसाराओ । तस्सवि सारो चरणं सारो चरणस्स निव्वाणं ॥ ९३ ॥**

व्याख्या—सामायिकमादौ यस्य तत्सामायिकादि, श्रुतं च तज्ज्ञानं च श्रुतज्ञानं 'यावद्बिन्दुसाराद्' इति बिन्दुसारं यावत् बिन्दुसारपर्यन्तमित्यर्थः, यावच्छब्दादेव तु ह्यनेकद्वादशभेदं, 'तस्यापि' श्रुतज्ञानस्य 'सारः' फलं प्रधानतरं वा, चारश्चरणं भावे ल्युट्प्रत्ययः, चर्यते वा अनेनेति चरणं, परमपदं गम्यत इत्यर्थः, सारशब्दः प्रधानफलपर्यायो वर्त्तते, अपिशब्दात् सम्यक्त्वस्यापि सारश्चरणमेव, अथवा व्यवहितो योगः, तस्य श्रुतज्ञानस्य सारश्चरणमपि, अपिशब्दात् निर्वाणमपि, अन्यथा ज्ञानस्य निर्वाणहेतुत्वं न स्यात्, चरणस्यैव ज्ञानरहितस्यापि स्याद्, अनिष्टं चैतत्, 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः (तत्त्वार्थे अ० १ सू० १) इति वचनात्, इह त्वनन्तरफलत्वाच्चरणस्य तदुपलब्धिनिमित्तत्वाच्च श्रुतस्य निर्वाणहेतुत्वसामान्ये सत्यपि ज्ञानचरणयोर्गुणप्रधानभावादित्थमुपन्यास इति, अलं विस्तरेण, 'सारः' फलं 'चरणस्य'

१ अत्थप्पच्चायणफलमित्ति (विशे० ११२०) इति कार्यशब्दोऽत्र फलार्थकं २ शैलेश्यवस्थारूपचरणावाप्तेरनन्तरं मोक्षावाप्ते, क्षायिकज्ञानप्राप्तेरनन्तरं तु न, देशोनपूर्वकोटीविहरणादुत्कृष्टतो दर्शनं तु चतुर्थेऽपि, न च तदनन्तरमपि तदाप्ति ३ ज्ञानस्य फलं विरतिरिति पढमं नाणं तओ दया इत्यादिवचनात् ‡ गाथार्थसम्बन्धा०

संयमतपोरूपस्य, निर्वृतिर्निर्वाणं–अशेषकर्मरोगापगमेन जीवस्य स्वरूपेऽवस्थानं मुक्तिपदमितियावत्, इहापि नियमतः शैलेश्यवस्थानन्तरमेव निर्वाणभावात् क्षीणघनघातिकर्मचतुष्कस्यापि च निरतिशयज्ञानसमन्वितस्य तामन्तरेणाभावात्, अत उक्तं–सारश्चरणस्य निर्वाणं इति, अन्यथा हि तस्यामपि शैलेश्यवस्थायां क्षायिके ज्ञानदर्शने न न स्त इति, अत सम्यग्दर्शनादित्रयस्यापि समुदितस्य सतो निर्वाणहेतुत्वं न व्यस्तस्येति गाथार्थः ॥ ९३ ॥ तथा चाह निर्युक्तिकारः—

**सुअनाणंमिवि जीवो वट्टंतो सो न पाउणइ मोक्खं । जो तवसंजममइए जोए न चएइ वोढुं जे ॥ ९४ ॥**

गमनिका—'श्रुतज्ञाने अपि' इति अपिशब्दान्मत्यादिष्वपि जीवो वर्त्तमानः सन् न प्राप्नोति मोक्षमिति, अनेन प्रतिज्ञार्थः सूचितः, यः किंविशिष्ट इति, आह—यस्तपःसंयमात्मकान् योगान्न शक्नोति वोढुं इति, अनेन हेत्वर्थ इति, दृष्टान्तस्त्वभ्यूह्यो वक्ष्यति वा*, प्रयोगश्च–'न ज्ञानमेव ईप्सितार्थप्रापकं, सत्क्रियाविरहात्, स्वदेशप्राप्त्यभिलाषिगमनक्रियाशून्यमार्गज्ञज्ञानवत्, सौत्रो वा दृष्टान्तः मार्गज्ञनिर्यामकाधिष्ठितेप्सितदिक्संप्रापकपवनक्रियाशून्यपोतवत्, 'जे+' इति पादपूरणे, 'इंजेराः पादपूरणे' इति वचनात् ॥ ९४ ॥ तथा चाह—

**जह छेयलद्धनिज्जामओवि वाणियगइच्छियं भूमिं । वाएण विणा पोओ न चएइ महण्णवं तरिउं ॥ ९५ ॥**
**तह नाणलद्धनिज्जामओवि सिद्धिवसहिं न पाउणइ । निउणोवि जीवपोओ तवसंजममारुअविहूणो ॥ ९६ ॥**

* च + नेत परम् † ए०

व्याख्या—येन प्रकारेण यथा, 'छेको' दक्षः, लब्धः—प्राप्तो निर्यामको येन पोतेन स तथाविधः, अपिशब्दात् सुकर्णधाराधिष्ठितोऽपि, वणिज इष्टा वणिगिष्टा तां भूमिं, महार्णवं तरितुं वातेन विना पोतो न शक्नोति, प्राप्तुमिति वाक्यशेषः ॥ ९५ ॥ तथा श्रुतज्ञानमेव लब्धो निर्यामको येन—जीवपोतेनेति समासः, अपिशब्दात्सुनिपुणमतिज्ञानकर्णधाराधिष्ठितोऽपि, शेषं निगदसिद्धं, किन्तु 'निपुणोऽपि' पण्डितोऽपि, श्रुतज्ञानसामान्याभिधाने सत्यपि तदतिशयख्यापनार्थं निपुणग्रहणं, तस्मात् तपःसंयमानुष्ठाने खल्वप्रमादवता भवितव्यमिति गाथाद्वयार्थः ॥ ९६ ॥ तथा चेहौपदेशिकमेव गाथासूत्रमाह निर्युक्तिकारः—

**संसारसागराओ उब्बुड्डो मा पुणो निबुड्डिज्जा । चरणगुणविप्पहीणो वुड्डइ सुयहुंपि जाणंतो ॥ ९७ ॥**

पदार्थस्तु दृष्टान्ताभिधानद्वारेणोच्यते—यथा नाम कश्चित्कच्छपः प्रचुरतृणपत्रात्मकनिश्छिद्रपटलाच्छादितोदकान्धकारमहाह्रदान्तर्गतानेकजलचरक्षोभादिव्यसनव्यथितमानसः परिभ्रमन्कथञ्चिदेव पटलरन्ध्रमासाद्य विनिर्गत्य च ततः शरदि निशानाथकरस्पर्शसुखमनुभूय भूयोऽपि स्वबन्धुस्नेहाकृष्टचित्तः तेषामपि तपस्विनामदृष्टकल्याणानामहमिदं सुरलोककल्पं किमपि दर्शयामि इत्यवधार्य तत्रैव निमग्नः, अथ समामादितबन्धुः तद्रन्ध्रोपलब्ध्यर्थं पर्यटन् अपश्यंश्च कष्टतरं व्यसनमनुभवति स्म । एवमयमपि जीवकच्छपोऽनादिकर्मसन्तानपटलसमाच्छादितान्मिथ्यादर्शनादितमोऽनुगतात् विविधशारीरमानसाक्षिवेदनज्वरकुष्ठभगन्दरेष्टवियोगानिष्टसंप्रयोगादिदुःखजलचरानुगतात्, संसरणं संसारः, भावे घञ्प्रत्ययः, स एव सागरस्तस्मात, परिभ्रमन् कथञ्चिदेव मनुष्यभवसंवर्त्तनीयकर्मरन्ध्रमासाद्य मानुषत्वप्राप्त्या उन्मग्नः सन् जिनचन्द्रवचनकिरणावबोधमासाद्य दुष्प्रापोऽयमिति जानानः स्वजनस्नेहविषयातुरचित्ततया[*] मा पुनः कूर्मवत् तत्रैव[+] निमज्जेत् । आह—अज्ञानी कूर्मो निमज्जत्येव, इतरस्तु ज्ञानी हिताहितप्राप्तिपरिहारज्ञः कथं निमज्जति इति, उच्यते, चरणगुणैः विविधम्—अनेकधा प्रकर्षेण हीनः चरणगुणविप्रहीणः निमज्जति बह्वपि जानन्, अपिशब्दात् अल्पमपि, अथवा निश्चयनयदर्शनेन अज्ञ एवासौ, ज्ञानफलशून्यत्वात् इति, अलं विस्तरेणेति गाथार्थः ॥ ९७ ॥ प्रक्रान्तमेवार्थं समर्थयन्नाह—

**सुबहुंपि सुय[†]महीयं किं काही? चरणविप्प[‡]हीणस्स । अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥ ९८ ॥**

**अप्पंपि सुयमहीयं पयासयं होइ चरणजुत्तस्स । इक्कोवि जह पईवो सचक्खुअस्सा पयासेइ ॥ ९९ ॥**

गाथाद्वयमपि निगदसिद्धमेव, नवरं दीपानां शतसहस्राणि दीपशतसहस्राणि लक्षा इत्यर्थः, तेषां को[†]टी, अपिशब्दा[‡]द्वे अपि ॥ ९८–९९ ॥ आह—इत्थं सति चरणरहितानां ज्ञानसंपत् सुगतिफलापेक्षया निरर्थिका प्राप्नोति, उच्यते, इष्यत एव, अत आह—

**जहा खरो चंदणभारवाही, भारस्स भागी नहु चंदणस्स ।**
**एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सो[¶]ग्गईए ॥ १०० ॥**

गमनिका—यथा खरः चन्दनभारवाही भारस्य भागी न तु चन्दनस्य, एवमेव ज्ञानी चरणेन हीनः ज्ञानस्य भागी 'न तु'

* ०यातुरक्त० + ०त्रैव म्य † ०महियं ‡ ०मुक्कस्स. † कोट्यपि ‡ ०त्तद्वे अपि ¶ सुग्गईए

नेव 'सुगतेः' सिद्धिदयिताया इति गाथार्थः ॥ १०० ॥ इदानीं विनेयस्य मा भूदेकान्तेनैव ज्ञानेऽनादरः, क्रियायां च तच्छून्यायामपि पक्षपात इति, अतो द्वयोरपि केवलयोरिष्टफलासाधकत्वमुपदर्शयन्नाह—

**हयं नाणं कियाहीणं, हया अन्नाणओ किया । पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १०१ ॥**

इयं निगदसिद्धैव, णवरं उदाहरणं[1]—एगंमि महाणगरे पली[*]वणं संवुत्तं, तंमि[+] य अणाहा दुवे जणा—पंगलो[†] य अंध[‡]लो य, ते णगरलोए जलणसंभमुब्भंतलोयणे पलाय[¶]माणे पासंतो पंगुलओ गमणकिरियाऽभावाओ जाण[§]ओऽवि पलायणमग्गं कमागएण अग्गिणा दड्ढो, अंधोऽवि गमणकिरियाजुत्तो पलायणमग्गमजाणंतो तुरितं जलणंतेण गंतुं अगणिभरियाए खाणीए पडिऊण दड्ढो । एस दिट्ठंतो, अयमत्थोवणओ—एवं ना[‖]णीवि किरियारहि[§]तो न कम्मग्गिणो पलाइउं समत्थो, इतरोऽवि णाणरहियत्तणओ त्ति । अत्र प्रयोगौ भवतः—ज्ञानमेव विशिष्टफलसा[ʃ]धकं न भवति, सत्क्रियायोगशून्यत्वात्, नगरदाहे पङ्गुलोचनविज्ञानवद्, नापि क्रियैव विशिष्टफल[*]साधिका, संज्ञा[+]नसंटङ्करहितत्वात्, नगरदाह एव अन्धस्य पलायनक्रियावत् ॥ १०१ ॥ आह—एवं ज्ञानक्रिययोः समुदितयोरपि निर्वाणप्रसाधकसामर्थ्यानुपपत्तिः

१ परमुदाहरण–एकस्मिन् महानगरे प्रदीपन सवृत्त, तस्मिंश्च अनाथौ द्वौ जनौ–अन्ध पङ्गुश्च, तौ नगरलोकान् ज्वलनसम्भ्रमोद्भ्रान्तलोचनान् पलायमानान् पश्यन्तौ पङ्गु गमनक्रियाऽभावात् जानन्नपि पलायनमार्गं क्रमागतेनाग्निना दग्ध अन्धोऽपि गमनक्रियायुक्त पलायनमार्गमजानन् त्वरित ज्वलनान्तिके (ज्वलनमार्गेण) गत्वाऽग्निभृतायां खनौ (०भृतेऽवटे) पतित्वा दग्ध । एष दृष्टान्त, अयमर्थोपनय (०मर्थोपनय)–एव ज्ञान्यपि क्रियारहितो न कर्माग्ने पलायितु समर्थ, इतरोऽपि ज्ञानरहितत्वात् इति. * ०वणग + तम्मिवि † पगुलओ अंघलओ य ‡ अंधओ य ¶ ०माणे सते प० § जाणतोऽवि ‖ नाणी. § ०हितो तण असमत्थो ʃ ०प्रसाधकं * ०प्रसाधिका + सज्ज्ञान०

प्रसज्यते, प्रत्येकमभावात्, सिकतातैलवत्, अनिष्टं चैतदिति, अत्रोच्यते, समुदायसामर्थ्यं हि प्रत्यक्षसिद्धं, यतो ज्ञानक्रियाभ्यां कटादिकार्यमिद्धय उपलभ्यन्ते एव, न तु सिकतासु तैलं, न च दृष्टमपह्नोतुं शक्यते, एवमाभ्यामदृष्टकार्यसिद्धिरप्यविरुद्धैव, तस्माद्यत्किञ्चिदेतत् । तथा किञ्च—न सर्वथैवानयोः साधनत्वं नेष्यते, देशोपकारित्वात्, देशोपकारित्वमभ्युपगम्यत एव, यत आह—

संजोगसिद्धीइ फलं वयंति, नहु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥ १०२ ॥

व्याख्या—किंतु तदेव समुदायं समग्रत्वादिष्टफलसाधकं, केवलं तु विकलत्वात् इतरसापेक्षत्वादसाधकमिति, अतः केवलयोरसाधकत्वं प्रतिपादितमिति, अलं विस्तरेण, उक्तसंबन्धगाथाव्याख्यानं प्रकटार्थत्वान्न वितन्यते, नवरं 'समेत्य'-त्युक्तेऽपि 'तौ संप्रयुक्ता' विति पुनरभिधानमात्यन्तिकसंयोगोपदर्शनार्थमिति । ऍत्थं उदाहरणं—एगंमि रण्णे रायभएण णगराओ उव्वसिय लोगो ठितो, पुणोवि धाडिभयेण यं वहणाणि उज्झिअ पलाओ, तत्थ दुवे अणाहप्पाओ, अंधो पंगू य, उज्झिया, गयाए धाडीए लोगग्गिणा वातेण वणदवो लग्गो, ते य भीया, अंधो छुट्ट†कच्छो अग्गिंतेण पलायइ, पंगुणा

१ अत्रोदाहरण—एकस्मिन्नरण्ये राजभयेन नगरात् उद्रस्य (उद्रुत्य) लोकः स्थित, पुनरपि धाटिभयेन च वाहनानि उज्झित्वा पलायित, तत्र द्वावनाधारमानौ (०थप्रायौ), अन्ध पङ्गुश्च उज्झितौ, गताया धाट्यां लोकाग्निना वातेन वनदवो लग्न, तौ च भीतौ, अन्ध छुट्टकच्छोऽग्निमार्गेण पलायते पङ्गुना * एत्थ + पयहणाणि † छुट्टकत्थो

भणितं—अंध ! मा इतो णास णं, इतो चेव अग्गी, तेण भणितं—कुतो पुण गच्छामि ?, पंगुणा भणितं—अहंपि पुरतो अतिदूरे मग्गदेसँणाऽसमत्थो पंगू, ता मं खंधे करेहि, जेण अहिकंटकजलणादि अवाए परिहरावेंतो सुहं ते नगरं पावेमि, तेणं तहत्ति पडिवज्जिय अणुट्ठितं पंगुवयणं, गया य खेमेण दोवि णगरं ति । एस दिट्ठंतो, अयमत्थोवणओ—णाणकिरियाहिं सिद्धिपुर पाविजइत्ति । प्रयोगश्च—विशिष्टकारणसंयोगोऽभिलषितकार्यप्रसाधकः, सम्यक्क्रियोपलब्धिरूपत्वात्, अन्धपङ्ग्वोरिव नगरावाप्तिरिति । यः पुनरभिलषितफलसाधको न भवति, स सम्यक्क्रियोपलब्धिरू†पोऽपि न भवति, इष्ट‡गमनक्रियाविकलविघटितैकचक्ररथवदिति व्यतिरेकः ॥ १०२ ॥ आह—ज्ञानक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते ? किमविशेषेण शिविकोद्वाहकवद्, उत भिन्नस्वभावतया गमनक्रियायां नयनचरणादिव्रातवद् इति, अत्रोच्यते, भिन्नस्वभावतया, यत आह—

णाणं पयासगं सोहओ तवो संजमो य गुत्तिकरो । तिण्हंपि समाजोगे मोक्खो जिणसासणे भणिओ ॥ १०३ ॥

व्याख्या—तत्र कचवरसमन्वितमहागृहशोधनप्रदीपपुरुषादिव्यापारवद् इह जीवगृहकर्मकचवरभृतशोधनालम्बनो ज्ञानादीनां स्वभावभेदेन व्यापारोऽवसेय इति समुदायार्थः । तत्र ज्ञायतेऽनेनेति ज्ञानं, तच्च प्रकाशयतीति प्रकाशकं, तच्च ज्ञानं प्रकाशकत्वेनैवोपकुरुते, तत्स्वभावत्वात्, गृहमलापनयने प्रदीपवत्, क्रिया तु तपःसंयमरूपत्वाद् इत्थमुपकुरुते—

१ भणित—अन्ध ! मा इतो नेश, इत एवाग्नि, तेन भणित—कुत पुनर्गच्छामि,? पङ्गुना भणित—अहमपि पुरतोऽतिदूरे मार्गदेशनाऽसमर्थ पङ्गु, तत् मा स्कन्धे कुरु, येनाहिकण्टकादीन् अपायान् परिहारयन् सुख त्वां नगर प्रापयामि, तेन तथेति प्रतिपद्यानुष्ठित पङ्गुवचन, गतौ च क्षेमेण द्वावपि नगरमिति, एष दृष्टान्त, अयमत्रोपनय—ज्ञानक्रियाभ्यां सिद्धिपुर प्राप्यत इति * दसणा + ०वाहेरिति † ०रूपो. ‡ इह ग०

शोधयतीति शोधकं, किं तदिति, आह—तापयत्यनेकभवोपात्तमष्टविध कर्मेति तपः, तच्च शोधकत्वेनैवोपकुरुते, तत्स्वभावत्वाद्, गृहकचवरोज्झनक्रियया तच्छोधने कर्मकरपुरुषवत्, तथा संयमनं संयमः, भावे अप्प्रत्ययः, आश्रवद्वारविरमणमितियावत्, चशब्दः पृथग् ज्ञानादीनां प्रक्रान्तफलसिद्धौ भिन्नोपकारकर्तृत्वावधारणार्थः, गोपनं गुप्तिः, स्त्रियां क्तिन् (पा० ३-३-९४) आगन्तुककर्मकचवरनिरोध इतिहृदयं, गुप्तिकरणशीलो गुप्तिकरः, ततश्च संयमोऽपि अपूर्वकर्मकचवरागमनिरोधतयैवोपकुरुते, तत्स्वभावत्वात्, गृहशोधने पवनप्रेरितकचवरागमनिरोधेन वातायनादिस्थगनवत्, एवं त्रयाणामेव, अपिशब्दोऽवधारणार्थः, अथवा संभावने, किं संभावयति ?—'त्रयाणामपि' ज्ञानादीनां, किंविशिष्टानां ?—निश्चयतः क्षायिकाना, न तु क्षायिकोपशमिकानामिति, 'सँमायोगे' संयोगे 'मोक्षः' सर्वथाऽष्टविधकर्ममलवियोगलक्षणः, जिनानां शासनं जिनशासनं तस्मिन्, 'भणितः' उक्तः । आह—'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इत्यागमो विरुध्यते, सम्यग्दर्शनमन्तरेण उक्तलक्षणज्ञानादित्रयादेव मोक्षप्रतिपादनादिति, उच्यते, सम्यग्दर्शनस्य ज्ञानविशेषत्वाद् रुचिरूपत्वात् ज्ञानान्तर्भावाद् अदोष इति गाथार्थः ॥ १०३ ॥ इह यत् प्राक् निर्युक्तिकृताऽभ्यधायि 'श्रुतज्ञानेऽपि जीवो वर्त्तमानः सन्न प्राप्नोति मोक्षं' इत्यादि प्रतिज्ञागाथासूत्रं, तत्रैव सूत्रसूचितः खल्वयं हेतुरवगन्तव्यः, कुतः ?—तस्य क्षायोपशमिकत्वात्, अवधिज्ञानवत् इति, क्षायिकज्ञानाद्यवाप्तौ च मोक्षप्राप्तिरिति तत्त्वं, अतः श्रुतस्यैव क्षायोपशमिकत्वमुपदर्शयन्नाह—

१ ज्ञानविशेषत्वसाधनाय २ क्षायोपशमिकत्वरूप ३ श्रुतस्य अपिना गृहीतस्य मत्यादेश्च, अवधेस्तु दृष्टान्तत्वान्नात्र ग्रह ४ तथाच क्षायोपशमिके ज्ञानक्रिये क्षायिकज्ञानाद्यवाप्तिद्वारा मोक्षसाधनमिति ५ श्रुतज्ञाने वर्त्तमानस्य मोक्षानवाप्ते * सम्यग् योग समायोग तस्मिन् मो० + ०स्वरूपत्वात्.

**भावे खओवसमिए दुवालसंगंपि होइ सुयनाणं । केवलियनाणलंभो नन्नत्थ खए कसायाणं ॥ १०४ ॥**

व्याख्या—भवनं भावः तस्मिन्, स चौदयिकाद्यनेकभेदः, अत आह—'क्षायोपशमिके' द्वादश अङ्गानि यस्मिंस्तत् द्वादशाङ्गं भवति श्रुतज्ञानं, अपिशब्दाद् अङ्गबाह्यमपि, तथा मत्यादि[1]ज्ञानत्रयमपि, तथा सामायिकचतुष्टयमपि, तथा केवलस्य* भावः कैवल्यं घातिकर्मवियोग इत्यर्थः, तस्मिन् ज्ञानं कैवल्यज्ञानं, 'कैवल्ये सति' अनेन ज्ञानग्रहणेनाज्ञानिप्रकृतिमुक्तपुरुषप्रतिपादनपरनयमतव्यवच्छेदमाह, (ग्रन्थाग्रं २०००) तत्र 'बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते' इति वचनात् प्रकृतिमुक्तस्य च बुद्ध्यभावात् ज्ञानाभाव इति, तस्य लाभः-प्राप्तिः, कथं?—'कषायाणां' क्रोधादीनां क्षये सति 'नान्यत्र' नान्येन प्रकारेण, इह च छद्मस्थवीतरागावस्थायां कपायक्षये सत्यपि अक्षेपेण कैवल्यज्ञानाभावे ज्ञानावरणक्षयानन्तरं च भावेऽपि कषायक्षयग्रहणं वस्तुतो मोहनीयभेदकषायाणामत्र प्राधान्यख्यापनार्थमिति, कषायक्षय एव सति निर्वाणं भवति. तद्भावे त्रयाणामपि सम्यक्त्वादीनां क्षायिकत्वसिद्धेः । आह—एवं तर्हि यदादावुक्तं 'श्रुतज्ञानेऽपि जीवो वर्त्तमानः सन्न प्राप्नोति मोक्षं, यस्तपःसंयमात्मकयोगशून्यः' इति, तद्विशेषणमनर्थकं, श्रुते सति तपःसंयमात्मकयोगसहिष्णोरपि मोक्षाभावादिति, अत्रोच्यते, सत्यमेतत्, किंतु क्षायोपशमिकसम्यक्त्वश्रुतचारित्राणामपि समुदितानां क्षायिकसम्यक्त्वादि-

---

१ आदिनाऽवधिमनःपर्यवौ २ सम्यक्त्वश्रुतादि ३ वैशेषिकादीनां ज्ञानस्यात्मरूपत्वाभावात् तेऽत्र ग्राह्याः ४ सर्वकपायक्षये केवलज्ञानदर्शनचारित्राणि, क्षायिकसम्यक्त्वं तु देशकपायक्षयेऽपि भवति, तेनात्र तदा कषायक्षयस्य सामान्यत. परामर्श . * केवलभावः. + ०भावात्

निबन्धनत्वेन पारम्पर्येण मोक्षहेतुत्वाददोषः ॥ १०५ ॥ आह—इष्टमस्माभिः मोक्षकारणकारणं श्रुतादि, तस्यैव कथमलाभो लाभो वेति, अत्रोच्यते,

**अट्ठण्हं पयडीणं उक्कोसठिइइ वट्टमाणो उ । जीवो न लहइ सामाइयं चउण्हंपि एगयरं ॥ १०५ ॥**

**सत्तण्हं पयडीणं अब्भितरओ उ कोडिकोडीणं । काऊण सागराणं जइ लहइ चउण्हमण्णयरं ॥ १०६ ॥**

प्रथमगाथाव्याख्या—'अष्टानां' इति संख्या, कासां?—ज्ञानावरणीयादिकर्मप्रकृतीनां, उत्कृष्टा चासौ स्थितिश्चोत्कृष्टस्थितिः तस्यां 'वर्त्तमानो' भवन्* 'जीवः' आत्मा 'न लभते' न प्राप्नोति, किं तत्?—'सामायिकं' पूर्वव्याख्यातं, किंविशिष्टं?—'चतुर्णामपि' सम्यक्त्वश्रुतदेशविरतिसर्वविरतिरूपाणां 'एकतरम्' अन्यतमत् इतियावत्, अपिशब्दात् मत्यादि च, न केवलं न लभते, पूर्वप्रतिपन्नोऽपि न भवति, यतोऽवाप्तसम्यक्त्वो हि न पुनस्तत्परित्यागेऽपि ग्रन्थिमुल्लङ्घ्य उत्कृष्टस्थितीः कर्मप्रकृतीः बध्नाति, आयुष्कोत्कृष्टस्थितौ पुनर्वर्त्तमानः पूर्वप्रतिपन्नको भवति, अनुत्तरविमानोपपातकाले देवो, न तु प्रतिपद्यमानक इति, तुशब्दाज्जघन्यस्थितौ च वर्त्तमानः पूर्वप्रतिपन्नत्वान्न लभते, आयुष्कजघन्यस्थितौ च वर्त्तमानो न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, जघन्यायुष्कस्य क्षुल्लकभवग्रहणाधारत्वात्, तस्य च वनस्पतिषु भावात्, तत्र च पूर्वप्रतिपन्नप्रतिपद्यमानकाभावात्, प्रकृतीनां च उत्कृष्टेतरभेदभिन्ना खल्वियं स्थितिः—आदितस्तिसृणामन्तरायस्य च

---

१ मोक्षकारणस्य क्षायिकसम्यक्त्वादे' कारणमिति २ आदिना तपःसयमौ ३ सत्तार्थत्वात्सप्तमिति ४ आनुपूर्वीनामादिरूप उपक्रमे ५ मत्यादिज्ञानापेक्ष ६ सप्तानां * ०ढीए + श्रुतदेशसर्व० † एकतरत् ‡ तत्प्रकृ०.

त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः, त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य, इति, जघन्या तु द्वादश मुहूर्त्ता वेदनीयस्य, नामगोत्रयोरष्टौ, शेषाणामन्तर्मुहूर्त्तं (तत्त्वार्थे अ० ८ सूत्राणि १५-१६-१७-१८-१९-२०-२१) इति गाथार्थः ॥ १०५ ॥ आह—किमेता युगपदेव उत्कृष्टां स्थितिमासादयन्ति उत एकस्यां उत्कृष्टस्थितिरूपायां संजातायां अन्या अपि नियमतो भवन्ति आहोस्विदन्यथा वा वैचित्र्यमत्रेति, उच्यते अत्र विधिरिति, मोहनीयस्य उत्कृष्टस्थितौ शेषाणामपि षण्णामुत्कृष्टैव, आयुष्कप्रकृतेस्तु उत्कृष्टा वा मध्यमा वा, न तु जघन्येति, मोहनीयरहितानां तु शेषप्रकृतीनां अन्यतमाया उत्कृष्टस्थितेः सद्भावे मोहनीयस्य शेषाणां च उत्कृष्टा वा मध्यमा वा, न तु जघन्येति प्रासङ्गिकं[3]। द्वितीयगाथाव्याख्या—सप्तानामायुष्करहितानां कर्मप्रकृतीनां या पर्यन्तवर्तिनी स्थितिस्तामङ्गीकृत्य सागरोपमाणां कोटीकोटी तस्याः कोटीकोट्या अभ्यन्तरत एव, तुशब्दोऽवधारणार्थः, कृत्वाऽऽत्मानमिति गम्यते 'यदि लभते' यदि प्राप्नोति, चतुर्णां श्रुतसामायिकादीनामन्यतरत्, तत एव लभते नान्यथेति, पाठान्तरं वा 'कृत्वा सागरोपमाणा स्थितिं लभते चतुर्णामन्यतरत्' इत्यक्षरगमनिका । अवयवार्थोऽभिधीयते—सप्तानां प्रकृतीनां यदा पर्यन्तवर्त्तिनी सागरोपमकोटीकोटी पल्योपमासंख्येयभागहीना भवति, तदा घनरागद्वेषपरिणामोऽत्यन्तदुर्भेद्यदारुग्रन्थिवत् कर्मग्रन्थि

---

१ निषेकरूपेति २ प्रतिविधानं. ३ आहेत्यादित सवेधकथनरूप, प्रसङ्गस्तु पूर्वमुत्कृष्टस्थितौ सामायिकप्रतिषेधात् मध्यमायां तु लाभकथनात् ४ स्वस्वस्थितौ क्षीणायां या शेषा तिष्ठति सा * ०भेवेति + तत्र † ०तिसद्भावे ‡ ०न्तर एव

भवतीति, आह च भाष्यकारः—"गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व । जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥ इत्यादि" तस्मिन् भिन्ने सम्यक्त्वादिलाभ उपजायते, नान्यथेति, तद्भेदश्च मनोविघातपरिश्रमादिभिः दुस्साध्यो वर्त्तते, तथाहि—स जीवः कर्मरिपुमध्यगतः तं प्राप्य अतीव परिश्राम्यति, प्रभूतकर्मारातिसैन्याक्रान्तत्वेन संजातखेदत्वात्, संग्रामशिरसीव दुर्जयापाकृतानेकशत्रुनरनरेन्द्रभटवत् । अपरस्त्वाह—किं तेन भिन्नेन ? किं वा सम्यक्त्वादिनाऽवाप्तेन ?, यथाऽतिदीर्घा कर्मस्थितिः सम्यक्त्वादिगुणरहितेनैव क्षपिता, एवं कर्मशेषमपि गुणरहित एव क्षपयित्वा विवक्षितफलभाग् भवतु, अत्रोच्यते, स हि तस्यामवस्थायां वर्त्तमानोऽनासादितगुणान्तरो न शेषक्षपणया विशिष्टफलप्रसाधनायालं, चित्तविघातादिप्रचुरविघ्नत्वात् विशिष्टाप्राप्तपूर्वफलप्राप्त्यासन्नत्वात् प्रागभ्यस्तक्रियया तस्यावाप्तुमशक्यत्वाच्च, अनेकसंवत्सरानुपालिताचाम्लादिपुरश्चरणक्रियामादितगुणान्तरोत्तरसाहायक्रियारहितविद्यासाधकवत्, तथा चाह भाष्यकारः—"पाएण पुव्वसेवा परिमउई साहणंमि गुरुतरिआ । होति महाविज्जाए किरिया पायं सविग्घा य ॥ १ ॥ तह कम्मठितीखवणे परिमउई मोक्खसाहणे गरुई । इह दंसणादिकिरिया दुलभा पायं सविग्घा य ॥ २ ॥" । अथवा

१ ग्रन्थिरिति सुदुर्भेदः कर्कशघनरूढगूढग्रन्थिवत् । जीवस्य कर्मजनितो घनरागद्वेषपरिणामः ॥ १ ॥ (विशेषावश्यके गाथा ११९५). २ विद्यासाधकस्य बिभीषिकादिनेव मनःक्षोभः ३ प्रायेण पूर्वसेवा परिमृद्वी साधने गुरुतरा । भवति महाविद्यायाः क्रिया प्रायः सविघ्ना च ॥ १ ॥ तथा कर्मस्थितिक्षपणे परिमृद्वी मोक्षसाधने गुर्वी । इह दर्शनादिक्रिया दुर्लभा प्रायः सविघ्ना च ॥ २ ॥ (विशेषावश्यके गाथे ११९९-१२००) * मध्यं गत.. + तावती. † ०रान्तरसहा० ‡ ०हित०

यत एव बह्वी कर्मस्थितिरनेन उन्मूलिता, अत एवापचीयमानदोषस्य सम्यक्त्वादिगुणलाभः संजायते, निश्शेषकर्मपरिक्षये सिद्धत्ववत्, तत एव च मोक्ष इति, अतो न शेषमपि कर्म गुणरहित एवापाकृत्य मोक्षं प्रसाधयतीति स्थितम् । इदानीं सम्यक्त्वादिगुणप्राप्तिविधिरुच्यते— जीवा द्विधा भवन्ति—भव्याश्चाभव्याश्च, तत्र भव्यानां करणत्रयं भवति, करणमिति परिणामविशेषः, तद्यथा—यथाप्रवृत्तकरणं अपूर्वकरणं अनिवृत्तिकरणं च । तत्र यथैव प्रवृत्तं यथाप्रवृत्तं तच्चानादि, अप्राप्तपूर्वमपूर्वं, निवर्त्तनशीलं निवर्त्ति न निवर्त्ति अनिवर्त्ति, आ सम्यग्दर्शनलाभात् न निवर्त्तते, तत्राभव्यानां आद्यमेव भवति, तत्र यावद्ग्रन्थिस्थानं तावदाद्यं भवति, तमतिक्रामतो द्वितीयं, सम्यग्दर्शनलाभाभिमुखस्य तृतीयमिति ॥ १०६ ॥ इदानीं करणत्रयमङ्गीकृत्य सामायिकलाभदृष्टान्तानभिधित्सुराह—

**पल्लय १ गिरिसरिउवला २ पिवीलिया ३ पुरिस ४ पह ५ जरग्गहिया ६ ।**
**कुद्दव ७ जल ८ वत्थाणि ९ य सामाइयलाभदिट्ठन्ता ॥ १०७ ॥**

व्याख्या—तत्र पल्लकदृष्टान्तः—पल्लको लाटदेशे धान्यधाम भवति, तत्र यथा नाम कश्चिन्महति पल्ये धान्यं प्रक्षिपति स्वाल्पं स्वल्पतरं, प्रचुरं प्रचुरतरं त्वादत्ते, तच्च कालान्तरेण क्षीयते, एवं कर्मधान्यपल्ये जीवोऽनाभोगतः यथाप्रवृत्तकरणेन स्वल्पतरमुपचिन्वन् बहुतरमपचिन्वंश्च ग्रन्थिमासादयति, पुनस्तमतिक्रामतोऽपूर्वकरणं भवति, सम्यग्दर्शनलाभाभिमु-

१ कर्मक्षपणनिबन्धनस्याध्यवसायमात्रस्य सर्वदैव भावात् (इति विशे० १२०३ गाथावृत्तौ) २ सम्यक्त्वादिरूप० * उच्छेदिता + भेद † ०न्याधारो ‡ नेद. † भल्पमल्पतर ¶ अल्पतर०

खस्य तु अनिवर्त्तीति, एष पल्यकदृष्टान्तः । आह—अयं दृष्टान्त एवानुपपन्नः, यतः संसारिणो योगवतः प्रतिसमयं कर्मणश्चयापचयावुक्तौ, तत्र चासंयतस्य बहुतरस्य चयः अल्पतरस्य चापचयः, यत आगमः—"पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए णालिं । असंजए अविरए बहु बंधइ निज्जरइ थोवं ॥ १ ॥ पल्ले महतिमहल्ले कुंभं सोहेइ पक्खिवे णालिं । जे संजए पमत्ते बहु निज्जरइ बंधई थोवं ॥ २ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे न किंचि । जे संजए अपमत्ते बहु निज्जरे बंधइ न किंची ॥ ३ ॥" ततश्च एवं पूर्वमसंयतस्य मिथ्यादृष्टेः प्रभूततरबन्धकस्य कुतो ग्रन्थिदेशप्राप्तिरिति, अत्रोच्यते, ननु मुग्ध ! बाहुल्यमङ्गीकृत्य इदमुक्तं यदु—असंयतस्य बहुतरस्योपचयोऽल्पतरस्य चापचयः, अन्यथाऽनवरतप्रभूततरबन्धाङ्गीकरणे खल्वपचयानवस्थानात् अशेषकर्मपुद्गलानामेव ग्रहणं प्राप्नोति, अनिष्टं चैतत्, सम्यग्दर्शनादिप्राप्तिश्च अनुभवसिद्धा विरुध्यते, तस्मात् प्रायोवृत्तिगोचरमिदं पल्येत्यादि द्रष्टव्यमिति १ । कथं पुनरनाभोगतः प्रचुरतरकर्मक्षय इति आह—गिरेः सरिद् गिरिसरित् तस्या उपलाः—पाषाणाः गिरिसरिदुपलाः तद्वत्, एतदुक्तं भवति—यथा गिरिसरिदुपलाः परस्परसन्निघर्षेण उपयोगशून्या अपि विचित्राकृतयो जायन्ते, एवं यथाप्रवृत्तिकरणतो जीवास्तथाविधकर्मस्थितिविचित्ररूपाश्चित्रा इति २ । पिपीलिकाः—कीटिकाः, यथा तासां क्षितौ स्वभावगमनं

१ पल्येऽतिमहति कुम्भं प्रक्षिपति शोधयति नालिकाम् । असंयतोऽविरतः बहु बध्नाति निर्जरयति स्तोकम् ॥ १ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति नालिकाम् । य संयतः प्रमत्तः बहु निर्जरयति बध्नाति स्तोकम् ॥ २ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति न किञ्चित् । य संयतोऽप्रमत्त बहु निर्जरयति न बध्नाति किञ्चित् ॥ ३ ॥ २ अविरतिमिथ्यादृष्टि * पल्य० + एवमुक्ते सत्याह. † स्वल्पचया० ‡ ०तिविचित्र०

भवति १ तथा स्थाण्वारोहणं २ संजातपक्षाणां च तस्मादप्युत्पतनं ३ स्थाणुमूर्धनि चावस्थानं ४ कासाञ्चित् स्थाणुशिरसः प्रत्यवसर्पणं ५ एवमिहापि जीवानां कीटिकास्वभावगमनवत् यथाप्रवृत्तकरणं, स्थाण्वारोहणकल्पं त्वपूर्वकरणं, उत्पतनतुल्यं त्वनिवर्त्तिकरणमिति, स्थाणुपर्यन्तावस्थानसदृशं तु ग्रन्थ्यवस्थानमिति, स्थाणुशिरसः प्रत्यवसर्पणसमानं तु पुनः कर्मस्थितिवर्धनमिति ३। पुरुषदृष्टान्तो यथा—केचन त्रयः पुरुषा महानगरयियासया महाटवीं प्रपन्नाः, सुदीर्घमध्वानं अतिक्रामन्तः कालातिपातभीरवो भयस्थानमाढौकमानाः शीघ्रतरगतयो गच्छन्तः पुरस्तात् उभयतः समुत्खातकरवालपाणितस्करद्वयमालोक्य तत्रैकः प्रतीपमनुप्रयातः अपरस्तु ताभ्यामेव गृहीतः तथाऽपरस्तावतिक्रम्य इष्टं नगरमनुप्राप्त इति। एष दृष्टान्तोऽयमर्थोपनयः—एवमिह संसाराटव्यां पुरुषाः संसारिणस्त्रयः कल्प्यन्ते, पन्थाः कर्मस्थितिरतिदीर्घा, भयस्थानं तु ग्रन्थिदेशः, तस्करद्वयं पुना रागद्वेषौ, तत्र प्रतीपगामी यो यथाप्रवृत्तकरणेन ग्रन्थिदेशमासाद्य पुनरनिष्टपरिणामः सन् कर्मस्थितिमुत्कृष्टामासादयति, तस्करद्वयावरुद्धस्तु प्रबलरागद्वेषोदयो ग्रन्थिकसत्त्व इत्यर्थः, अभिलषितनगरमनुप्राप्तोऽपूर्वकरणतो रागद्वेषचौरौ अपाकृत्य अनिवर्त्तिकरणेनावाप्तसम्यग्दर्शन इति ४। आह—स हि सम्यग्दर्शनमुपदेशतो लभते उतानुपदेशत एवेति, अत्रोच्यते, उभयथापि लभते, कथम्?, पंथः परिभ्रष्टपुरुषत्रयवत्, यथा हि कश्चित् पथि परिभ्रष्टः उपदेशमन्तरेणैव परिभ्रमन् स्वयमेव पन्थानमासादयति, कश्चित्तु परोपदेशेन, अपरस्तु नासादयत्येव, एवमिहा-

१ स्थाणुकुभे (इति वि० १२१० गाथावृत्तौ) मूल कुसोऽङ्घ्रिनामकः इत्यमरः २ सर्वेऽप्येते तुभार्थाः, अन्यथा अपूर्वकरणकालात्प्राक्तनत्व विरुध्येत ३ गंठिम्मि सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो इति वचनात्. * पथपरि०(वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषः). + पथप०.

प्यत्यन्तापथनष्टसत्पथो जीवो यथाप्रवृत्तकरणतः संसाराटव्यां परिभ्रमन् कश्चिद्ग्रन्थिमासाद्य अपूर्वकरणेन च तमतिक्रम्य अनिवर्त्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादि निर्वाणपुरस्य पन्थानं लभते, कश्चित्परोपदेशात्, अपरस्तु प्रतीपगामी ग्रन्थिकसत्त्वो वा नैव लभते इति ५। इदानीं ज्वरदृष्टान्तो—यथा हि ज्वरः कश्चित् स्वयमेवापैति कश्चिद्भेषजोपयोगेन कश्चित्तु नैवापैति, एवमिह मिथ्यादर्शनमहाज्वरोऽपि कश्चित्स्वयमेवापैति कश्चित् अर्हद्वचनभेषजोपयोगात् अपरस्तु तदौषधोपयोगेऽपि नापैति, करणत्रययोजना स्वयमेव कार्या ६। कोद्रवदृष्टान्तः—यथा इह केषाञ्चित् कोद्रवाणां मदनभावः स्वयमेव कालान्तरतोऽपैति तथा केषाञ्चित् गोमयादिपरिकर्मतः तथा परेषां नापैति, एवं मिथ्यादर्शनभावोऽपि कश्चित्स्वयमेवापैति कश्चिदुपदेशपरिकर्मणा अपरस्तु नापैति, इह च भावार्थः—स हि जीवोऽपूर्वकरणेन मदनार्धशुद्धशुद्धकोद्रवानिव दर्शनं मिथ्यादर्शनसम्यग्मिथ्यादर्शनसम्यग्दर्शनभेदेन त्रिधा विभजति, ततोऽनिवर्त्तिकरणविशेषात्सम्यक्त्वं प्राप्नोति, एवं करणत्रययोगवतो भव्यस्य सम्यग्दर्शनप्राप्तिः, अभव्यस्यापि कस्यचिद् यथाप्रवृत्तकरणतो ग्रन्थिमासाद्य अर्हदादिविभूतिसंदर्शनतः प्रयोजनान्तरतो वा प्रवर्त्तमानस्य श्रुतसामायिकलाभो भवति, न शेषलाभ इति ७। इदानीं जलदृष्टान्तः—यथा हि जलं मलिनार्धशुद्धशुद्धभेदेन त्रिधा भवति, एवं दर्शनमपि मिथ्यादर्शनादिभेदेन अपूर्वकरणतस्त्रिधा करोतीति, भावार्थस्तु पूर्ववदेव ८। वस्त्रदृष्टान्तेऽप्यायोजनीयमिति गाथार्थः ९ ॥ १०७ ॥ प्रासङ्गिक-

१ अत्र पूर्वत्र च, परं न दृष्टान्तानुक्रमेण किंतु यथास्वरूपं २ दर्शनमोहनीयपुद्गलरूपं, मिथ्यात्वस्य सत्त्वेऽपि भागत्रयम्, शुद्धत्वावस्थानम आश्रित्य मिथ्यात्वस्य ३ आदिना गणभृदादिविभूत्यादिग्रहः, तत्त्व तु साकारकारणमेतदिति वृद्धौ ४ देवत्वनरेन्द्रत्वसौभाग्यरूपबलावाप्त्यादिग्रह *०न्तप्रनष्ट० +०तिदर्शन०

मुच्यते—एवं सम्यग्दर्शनलाभोत्तरकालमवशेषकर्मणः पल्योपमपृथक्त्वमितस्थितिपरिक्षयोत्तरकालं देशविरतिरवाप्यते, पुनः शेषायाः संख्येयेषु सागरोपमेषु स्थितेरपगतेषु सर्वविरतिरिति, पुनरवशेषस्थितेरपि संख्येयेष्वेव सागरोपमेषु क्षीणेषु उपशामकश्रेणी, अनेनैव न्यायेन क्षपकश्रेणीति, इयं च देशविरत्यादिप्राप्तिरेतावत्कालतो देवमनुष्येषु उत्पद्यमानस्य अप्रतिपतितसम्यक्त्वस्य नियमेनोत्कृष्टतो द्रष्टव्येति, अन्यथा अन्यतरश्रेणिरहितसम्यक्त्वादिगुणप्राप्तिरेकभवेनाप्यविरुद्धेति, उक्तं च भाष्यकारेण—"सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावओ होज्जा। चरणोवसमखयाणं सागर संखंतरा हुंति ॥ १ ॥ एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु। अण्णतरसेढिवज्जं एगभवेणं च सव्वाइं ॥ २ ॥" अभिहितं आनुषङ्गिकं, इदानीं यदुदयात् सम्यक्त्वसामायिकादिलाभो न भवति, संजातो वाऽपैति, तानिहावरणरूपान् कषायान् प्रतिपादयन्नाह—पढमिल्लु०। अथवा यदुक्तं 'कैवल्यज्ञानलाभो नान्यत्र कषायक्षयात्' इति, इदानीं ते कषायाः के? कियन्तः? को वा कस्य सम्यक्त्वादिसामायिकस्यावरणं? को वा खलु उपशमनादिक्रमः कस्य इत्यमुमर्थमभिधित्सुराह—

**पढमिल्लुयाण उदए नियमा संजोयणा कसायाणं। सम्मद्दंसणलंभं भवसिद्धीयावि न लहंति ॥ १०८ ॥**

१ देवभवेऽधिकस्थितावपि तावत्या स्थितेः सद्भावादुपचयेन न देशविरतिप्रसङ्ग इति प्रथमपञ्चाशकवृत्तौ २ सम्यक्त्वे तु लब्धे पल्योपमपृथक्त्वेन श्रावको भवेत। चरणोपशमक्षयेषु, सागराः संख्येया अन्तरं भवति ॥ १ ॥ एवमप्रतिपतिते सम्यक्त्वे देवमनुष्यजन्मसु। अन्यतरश्रेणिवर्जं एकभवेनापि सर्वाणि ॥ २ ॥ (विशे०१२२२-१२२३) ३ श्रुतसम्यक्त्वादिप्राप्तिहेतुतया प्रसङ्ग * नेदम् + उपशमश्रे० † तदिदानीं क०. ‡ ०पशमादि०

भवतीति, आह च भाष्यकारः—“गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व । जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥ इत्यादि” तस्मिन् भिन्ने सम्यक्त्वादिलाभ उपजायते, नान्यथेति, तद्भेदश्च मनोविघातपरिश्रमादिभिः दुस्साध्यो वर्त्तते, तथाहि—स जीवः कर्मरिपुमध्यंगतः तं प्राप्य अतीव परिश्राम्यति, प्रभूतकर्मारातिसैन्यान्तकृत्त्वेन संजातखेदत्वात्, संग्रामशिरसीव दुर्जयापाकृतानेकशत्रुनरनरेन्द्रभटवत् । अपरस्त्वाह—किं तेन भिन्नेन ? किं वा सम्यक्त्वादिनाऽवाप्तेन !, यथाऽतिदीर्घा कर्मस्थितिः सम्यक्त्वादिगुणरहितेनैव क्षपिता, एवं कर्मशेषमपि गुणरहित एव क्षपयित्वा विवक्षितफलभाग् भवतु, अत्रोच्यते, स हि तस्यामवस्थायां वर्त्तमानोऽनासादितगुणान्तरो न शेषक्षपणया विशिष्टफलप्रसाधनायालं, चित्तविघातादिप्रचुरविघ्नत्वात् विशिष्टाप्राप्तपूर्वफलप्राप्त्यासन्नत्वात् प्रागभ्यस्तक्रियया तस्यावाप्तुमशक्यत्वाच्च, अनेकसंवत्सरानुपालिताचाम्लादिपुरश्चरणक्रियामादितगुणान्तरोत्तरसाहायक्रियारहितविद्यासाधकवत्, तथा चाह भाष्यकारः—“पाएण पुव्वसेवा परिमउई साहणंमि गुरुतरिआ । होति महाविज्जाए किरिया पायं सविग्घा य ॥ १ ॥ तह कम्मठितीखवणे परिमउई मोक्खसाहणे गरुई । इह दंसणादिकिरिया दुलभा पायं सविग्घा य ॥ २ ॥” । अथवा

१ ग्रन्थिरिति सुदुर्भेदः कर्कशघनरूढगूढग्रन्थिवत् । जीवस्य कर्मजनितो घनरागद्वेषपरिणामः ॥ १ ॥ ( विशेषावश्यके गाथा ११९५ ). २ विद्यासाधकस्य विभीषिकादिनेव मनःक्षोभः ३ प्रायेण पूर्वसेवा परिमृद्वी साधने गुरुतरा । भवति महाविद्यायाः क्रिया प्रायः सविघ्ना च ॥ १ ॥ तथा कर्मस्थितिक्षपणे परिमृद्वी मोक्षसाधने गुर्वी । इह दर्शनादिक्रिया दुर्लभा प्रायः सविघ्ना च ॥ २ ॥ ( विशेषावश्यके गाथे ११९९–१२०० ) * मध्यं गतः. + तावती. † ०रान्तरसहा० ‡ ०हित०

यत एव बह्वी कर्मस्थितिरनेन उन्मूलिता, अत एवापचीयमानदोषस्य सम्यक्त्वादिगुणलाभः संजायते, निश्शेषकर्मपरिक्षये सिद्धत्ववत्, तत एव च मोक्ष इति, अतो न शेषमपि कर्म गुणरहित एवापाकृत्य मोक्षं प्रसाधयतीति स्थितम् । इदानीं सम्यक्त्वादिगुणप्राप्तिविधिरुच्यते— जीवा द्विधा भवन्ति—भव्याश्चाभव्याश्च, तत्र भव्यानां करणत्रयं भवति, करणमिति परिणामविशेषः, तद्यथा—यथाप्रवृत्तकरणं अपूर्वकरणं अनिवृत्तिकरणं च । तत्र यथैव प्रवृत्तं यथाप्रवृत्तं तथाऽनादि, अप्राप्तपूर्वमपूर्वं, निवर्त्तनशीलं निवर्त्ति न निवर्त्ति अनिवर्त्ति, आ सम्यग्दर्शनलाभात् न निवर्त्तते, तत्राभव्यानां आद्यमेव भवति, तत्र यावद्ग्रन्थिस्थानं तावदाद्यं भवति, तमतिक्रामतो द्वितीयं, सम्यग्दर्शनलाभाभिमुखस्य तृतीयमिति ॥ १०६ ॥ इदानीं करणत्रयमङ्गीकृत्य सामायिकलाभदृष्टान्तानभिधित्सुराह—

**पल्लय १ गिरिसरिउवला २ पिवीलिया ३ पुरिस ४ पह ५ जरग्गहिया ६ ।**
**कुद्दव ७ जल ८ वत्थाणि ९ य सामाइयलाभदिट्ठन्ता ॥ १०७ ॥**

व्याख्या—तत्र पल्लकदृष्टान्तः—पल्लको लाटदेशे धान्यधाम भवति, तत्र यथा नाम कश्चिन्महति पल्ये धान्यं प्रक्षिपति स्वाल्पं स्वल्पतरं, प्रचुरं प्रचुरतरं त्वादत्ते, तच्च कालान्तरेण क्षीयते, एवं कर्मधान्यपल्ये जीवोऽनाभोगतः यथाप्रवृत्तकरणेन स्वल्पतरमुपचिन्वन् बहुतरमपचिन्वंश्च ग्रन्थिमासादयति, पुनस्तमतिक्रामतोऽपूर्वकरणं भवति, सम्यग्दर्शनलाभाभिमु-

१ कर्मक्षपणनिबन्धनस्याध्यवसायमात्रस्य सर्वदैव भावात् ( इति विशे० १२०३ गाथावृत्तौ ) २ सम्यक्त्वादिरूप० * उच्छेदिता. + भेदं † ०न्याधारो ‡ नेद † अल्पमल्पतरं ¶ अल्पतर०

खस्य तु अनिवर्त्तीति, एष पल्यकदृष्टान्तः । आह—अयं दृष्टान्त एवानुपपन्नः, यतः संसारिणो योगवतः प्रतिसमयं कर्मणश्चयापचयावुक्तौ, तत्र चासंयतस्य बहुतरस्य चयः अल्पतरस्य चापचयः, यत आगमः—“पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए णालिं । असंजए अविरए बहु बंधइ निज्जरइ थोवं ॥ १ ॥ पल्ले महतिमहल्ले कुंभं सोहेइ पक्खिवे णालिं । जे संजए पमत्ते बहु निज्जरइ बंधई थोवं ॥ २ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे न किंचि । जे संजए अपमत्ते बहु निज्जरे बंधइ न किंची ॥ ३ ॥” ततश्च एवं पूर्वमसंयतस्य मिथ्यादृष्टेः प्रभूततरबन्धकस्य कुतो ग्रन्थिदेशप्राप्तिरिति, अत्रोच्यते, ननु मुग्ध ! बाहुल्यमङ्गीकृत्य इदमुक्तं यदु—असंयतस्य बहुतरस्योपचयोऽल्पतरस्य चापचयः, अन्यथाऽनवरतप्रभूततरबन्धाङ्गीकरणे खल्वपचयानवस्थानात् अशेषकर्मपुद्गलानामेव ग्रहणं प्राप्नोति, अनिष्टं चैतत्, सम्यग्दर्शनादिप्राप्तिश्च अनुभवसिद्धा विरुध्यते, तस्मात् प्रायोवृत्तिगोचरमिदं पल्येत्यादि द्रष्टव्यमिति १ । कथं पुनरनाभोगतः प्रचुरतरकर्मक्षय इति आह—गिरेः सरिद् गिरिसरित् तस्यां उपलाः—पाषाणाः गिरिसरिदुपलाः तद्वत्, एतदुक्तं भवति—यथा गिरिसरिदुपलाः परस्परसन्निघर्षेण उपयोगशून्या अपि विचित्राकृतयो जायन्ते, एवं यथाप्रवृत्तिकरणतो जीवास्तथाविधकर्मस्थितिविचित्ररूपाश्चित्रा इति २ । पिपीलिकाः—कीटिकाः, यथा तासां क्षितौ स्वभावगमनं

१ पल्येऽतिमहति कुम्भं प्रक्षिपति शोधयति नालिकाम् । असंयतोऽविरतः बहु बध्नाति निर्जरयति स्तोकम् ॥ १ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति नालिकाम् । यः संयतः प्रमत्तः बहु निर्जरयति बध्नाति स्तोकम् ॥ २ ॥ पल्येऽतिमहति कुम्भं शोधयति प्रक्षिपति न किञ्चित् । यः संयतोऽप्रमत्तः बहु निर्जरयति न बध्नाति किञ्चित् ॥ ३ ॥ २ अविरतिमिथ्यादृष्टि * पल्य० + पृथमुक्ते सत्याह. † स्वल्पचया० ‡ ०तिचित्र०

भवति १ तथा स्थाण्वारोहणं २ संजातपक्षाणां च तस्मादप्युत्पतनं ३ स्थाणुमूर्धनि चावस्थानं ४ कासाञ्चित् स्थाणुशिरसः प्रत्यवसर्पणं ५ एवमिहापि जीवानां कीटिकास्वभावगमनवत् यथाप्रवृत्तकरणं, स्थाण्वारोहणकल्पं त्वपूर्वकरणं, उत्पतनतुल्यं त्वनिवर्त्तिकरणमिति, स्थाणुपर्यन्तावस्थानसदृशं तु ग्रन्थ्यवस्थानमिति, स्थाणुशिरसः प्रत्यवसर्पणसमानं तु पुनः कर्मस्थितिवर्धनमिति ३ । पुरुषदृष्टान्तो यथा—केचन त्रयः पुरुषा महानगरयियासया महाटवीं प्रपन्नाः, सुदीर्घमध्वानं अतिक्रामन्तः कालातिपातभीरवो भयस्थानमाढौकमानाः शीघ्रतरगतयो गच्छन्तः पुरस्तात् उभयतः समुत्खातकरवालपाणितस्करद्वयमालोक्य तत्रैकः प्रतीपमनुप्रयातः अपरस्तु ताभ्यामेव गृहीतः तथाऽपरस्तावतिक्रम्य इष्टं नगरमनुप्राप्त इति। एष दृष्टान्तोऽयमर्थोपनयः—एवमिह संसाराटव्यां पुरुषाः संसारिणस्त्रयः कल्प्यन्ते, पन्थाः कर्मस्थितिरतिदीर्घा, भयस्थानं तु ग्रन्थिदेशः, तस्करद्वयं पुना रागद्वेषौ, तत्र प्रतीपगामी यो यथाप्रवृत्तकरणेन ग्रन्थिदेशमासाद्य पुनरनिष्टपरिणामः सन् कर्मस्थितिमुत्कृष्टामासादयति, तस्करद्वयावरुद्धस्तु प्रबलरागद्वेषोदयो ग्रन्थिकसत्त्व इत्यर्थः, अभिलषितनगरमनुप्राप्तोऽपूर्वकरणतो रागद्वेषचौरौ अपाकृत्य अनिवर्त्तिकरणेनावाप्तसम्यग्दर्शन इति ४ । आह—स हि सम्यग्दर्शनमुपदेशतो लभते उतानुपदेशत एवेति, अत्रोच्यते, उभयथापि लभते, कथम् ?, पथः परिभ्रष्टपुरुषत्रयवत्, यथा हि कश्चित् पथि परिभ्रष्टः उपदेशमन्तरेणैव परिभ्रमन् स्वयमेव पन्थानमासादयति, कश्चित्तु परोपदेशेन, अपरस्तु नासादयत्येव, एवमिहा-

१ स्थाणुवृक्षे ( इति वि० १२१० गाथावृत्तौ ) मूल कुक्षोऽङ्घ्रिनामकः इत्यमरः २ सर्वेऽप्येते कुमार्गा., अन्यथा अपूर्वकरणकालात्प्राक्तनत्व विरुध्येत ३ गठिम्मि सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व। जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो इति वचनात्. * पथपरि०( पाटः पथश्च मार्गश्चेति त्रिकाण्डशेषः ). + पथप०.

प्यत्यन्तापथनष्टसत्पथो जीवो यथाप्रवृत्तकरणतः संसाराटव्यां परिभ्रमन् कश्चिद्ग्रन्थिमासाद्य अपूर्वकरणेन च तमतिक्रम्य अनिवर्त्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादि निर्वाणपुरस्य पन्थानं लभते, कश्चित्परोपदेशात्, अपरस्तु प्रतीपगामी ग्रन्थिकसत्त्वो वा नैव लभते इति ५ । इदानीं ज्वरदृष्टान्तो—यथा हि ज्वरः कश्चित् स्वयमेवापैति कश्चिद्भेषजोपयोगेन कश्चित्तु नैवापैति, एवमिह मिथ्यादर्शनमहाज्वरोऽपि कश्चित्स्वयमेवापैति कश्चित् अर्हद्वचनभेषजोपयोगात् अपरस्तु तदोषधोपयोगेऽपि नापैति, करणत्रययोजना स्वयमेव कार्या ६ । कोद्रवदृष्टान्तः—यथा इह केषाञ्चित् कोद्रवाणा मदनभावः स्वयमेव कालान्तरतोऽपैति तथा केषाञ्चित् गोमयादिपरिकर्मतः तथा परेषां नापैति, एवं मिथ्यादर्शनभावोऽपि कश्चित्स्वयमेवापैति कश्चिदुपदेशपरिकर्मणा अपरस्तु नापैति, इह च भावार्थः—स हि जीवोऽपूर्वकरणेन मदनार्धशुद्धशुद्धकोद्रवानिव दर्शनं मिथ्यादर्शनसम्यग्मिथ्यादर्शनसम्यग्दर्शनभेदेन त्रिधा विभजति, ततोऽनिवर्त्तिकरणविशेषात्सम्यक्त्वं प्राप्नोति, एवं करणत्रययोगवतो भव्यस्य सम्यग्दर्शनप्राप्तिः, अभव्यस्यापि कस्यचिद् यथाप्रवृत्तकरणतो ग्रन्थिमासाद्य अर्हदादिविभूतिसंदर्शनतः प्रयोजनान्तरतो वा प्रवर्त्तमानस्य श्रुतसामायिकलाभो भवति, न शेषलाभ इति ७ । इदानीं जलदृष्टान्तः—यथा हि जलं मलिनार्धशुद्धशुद्धभेदेन त्रिधा भवति, एवं दर्शनमपि मिथ्यादर्शनादिभेदेन अपूर्वकरणतस्त्रिधा करोतीति, भावार्थस्तु पूर्ववदेव ८ । वस्त्रदृष्टान्तेऽप्यायोजनीयमिति गाथार्थः ९ ॥ १०७ ॥ प्रासङ्गिक-

१ अत्र पूर्वत्र च, परं न दृष्टान्तानुक्रमेण किंतु यथास्वरूपं २ दर्शनमोहनीयपुद्गलरूपं, मिथ्यात्वस्य सत्त्वेऽपि भागत्रयम्, शुद्धत्वावस्थानम् आश्रित्य मिथ्यात्वस्य ३ आदिना गणभृदादिविभूत्यादिग्रहः, तत्त्व तु सत्कारकारणमेवदिति बुद्धौ. ४ देवत्वनरेन्द्रत्वसौभाग्यरूपबलावाप्त्यादिग्रह *०न्तमनष्ट० +०तिदर्शन०

मुच्यते—एवं सम्यग्दर्शनलाभोत्तरकालमवशेषकर्मणः पल्योपमपृथक्त्वमि*तिस्थितिपरिक्षयोत्तरकालं देशविरतिरवाप्यते, पुनः शेषायाः संख्येयेषु सागरोपमेषु स्थितेरपगतेषु सर्वविरतिरिति, पुनरवशेषस्थितेरपि संख्येयेष्वेव सागरोपमेषु क्षीणेषु उपशमकश्रेणी, अनेनैव न्यायेन क्षपकश्रेणीति, इयं च देशविरत्यादिप्राप्तिरेतावत्कालतो देवमनुष्येषु उत्पद्यमानस्य अप्रतिपतितसम्यक्त्वस्य नियमेनोत्कृष्टतो द्रष्टव्येति, अन्यथा अन्यतरश्रेणिरहितसम्यक्त्वादिगुणप्राप्तिरेकभवेनाप्यविरुद्धेति, उक्तं च भाष्यकारेण—"सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावओ होज्जा । चरणोवसमखयाणं सागर संखंतरा हुंति ॥ १ ॥ एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु । अण्णतरसेढिवज्जं एगभवेणं च सव्वाइं ॥ २ ॥" अभिहितं आनुषङ्गिकं, इदानीं यदुदयात् सम्यक्त्वसामायिकादिलाभो न भवति, संजातो वाऽपैति, तानिहावरणरूपान् कषायान् प्रतिपादयन्नाह—पढमिल्लु० । अथवा यदुक्तं 'कैवल्यज्ञानलाभो नान्यत्र कषायक्षयात्' इति, इदानीं ते कषायाः के ? कियन्तः ? को वा कस्य सम्यक्त्वादिसामायिकस्यावरणं ? को वा खलु उपशमनादिक्रमः कस्य इत्यमुमर्थमभिधित्सुराह—

**पढमिल्लुयाण उदए नियमा संजोयणा कसायाणं । सम्मद्दंसणलंभं भवसिद्धीयावि न लहंति ॥ १०८ ॥**

१ देवभवेऽधिकस्थितावपि तावत्या स्थितेः सद्भावादुपचयेन न देशविरतिप्रसङ्ग इति प्रथमपञ्चाशकवृत्तौ २ सम्यक्त्वे तु लब्धे पल्योपमपृथक्त्वेन श्रावको भवेत् । चरणोपशमक्षयेषु, सागराः संख्येया अन्तरं भवति ॥ १ ॥ एवमप्रतिपतिते सम्यक्त्वे देवमनुष्यजन्मसु । अन्यतरश्रेणिवर्जं एकभवेनापि सर्वाणि ॥ २ ॥ ( विशे०१२२२–१२२३ ) ३ श्रुतसम्यक्त्वादिप्राप्तिहेतुतया प्रसङ्ग * नेदम् + उपशमश्रे० † तदिदानीं क०. ‡ ०पशमादि०

उत्तरगाथा अपि प्रायः कियत्योऽपि उक्तसंबन्धा एवेति, तत्र व्याख्या—प्रथमा एव प्रथमिल्लुकाः, देशीवचनतो जहा 'पढमिल्ला पढम घरा' इत्यादि, तेषां प्रथमिल्लुकानां—अनन्तानुबन्धिनां क्रोधादीनामित्युक्तं भवति, प्राथम्यं चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाद्वेति, उदयः—उदीरणावलिकागततत्पुद्गलोद्भूतसामर्थ्यता तस्मिन् उदये, किम् ?—'नियमात्' नियमेनेति, अस्य व्यवहितपदेन सार्धं संबन्धः, तं च दर्शयिष्यामः, इदानीं पुनः प्रथमिल्लुका एव विशिष्यन्ते—किंविशिष्टानां प्रथमिल्लुकानां ?—कर्मणा तत्फलभूतेन संसारेण वा संयोजयन्तीति संयोजनाः, संयोजनाश्च ते कषायाश्चेति विग्रहः तेषामुदये, किम् ?—नियमेन सम्यक्—अविपरीतं दर्शनं सम्यग्दर्शनं तस्य लाभः—प्राप्तिः सम्यग्दर्शनलाभः तं, भवे सिद्धिर्येषां ते भवसिद्धिकाः । आह—सर्वेषामेव भवे सति सिद्धिर्भवति ?, उच्यते, एवमेतत्, किंतु इह प्रकरणात् तद्भवो गृह्यते, तद्भवसिद्धिका अपि 'न लभन्ते' न प्राप्नुवन्ति, अपिशब्दात् अभव्यास्तु नैव, अथवा परीतसंसारिणोऽपि नैवेति गाथार्थः ॥ १०८ ॥

बिइयकसायाणुदए अपच्चक्खाणनामधेज्जाणं । सम्मद्दंसणलंभं विरयाविरइं न उ लहंति ॥ १०९ ॥

व्याख्या—'द्वितीया' इति देशविरतिलक्षणद्वितीयगुणघातित्वात् क्षपणक्रमाद्वा, 'कषाया' इति 'कष गतौ' इति कषशब्देन कर्माभिधीयते, भवो वा, कषस्य आया लाभाः प्राप्तयः कषायाः क्रोधादयः, द्वितीयाश्च ते कषायाश्चेति समासः, तेषां, 'उदयः' इति अस्य पूर्ववदर्थः, किंविशिष्टानां ?—'अप्रत्याख्याननामधेयानां' न विद्यते देशविरतिसर्वविरतिरूपं प्रत्याख्यानं येषु उदयप्राप्तेषु सत्सु ते अप्रत्याख्यानाः, सर्वनिषेधवचनोऽयं नञ् द्रष्टव्यः, अप्रत्याख्याना एव नामधेयं येषां ते तथाविधाः तेषामुदये सति, किम् ?—सम्यग्दर्शनलाभं, भव्या लभन्ते इति शेषः, अयं च वाक्यशेषो विरताविरतिविशेषणे तुशब्दसंसूचितो द्रष्टव्यः, तथा चाह—विरमणं विरतं तथा न विरतिः अविरतिः विरतं चाविरतिश्च यस्यां निवृत्तौ सा तथोच्यते, देशविरतिरित्यर्थः, ता विरताविरतिं न तु लभन्ते, तुशब्दात् सम्यग्दर्शनं तु लभन्ते इति गाथार्थः ॥ १०९ ॥

तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं । देसिक्कदेसविरइं चरित्तलंभं न उ लहंति ॥ ११० ॥

व्याख्या—सर्वविरतिलक्षणतृतीयगुणघातित्वात् क्षपणक्रमाद्वा तृतीयाः, 'कषायाः' पूर्ववत्, तृतीयाश्च ते कषायाश्चेति समासः, कषायाः क्रोधादय एव चत्वारस्तेषां 'उदय' इति पूर्ववत्, किंविशिष्टानां ?—आवृण्वन्तीत्यावरणाः, प्रत्याख्यानं सर्वविरतिलक्षणं तस्यावरणाः प्रत्याख्यानावरणाः प्रत्याख्यानावरणा एव नामधेयं येषां ते तथाविधास्तेषां । आह—नन्वप्रत्याख्याननामधेयानामुदये न प्रत्याख्यानमस्तीत्युक्तं, नञा प्रतिषिद्धत्वात्, इहापि च आवरणशब्देन प्रत्याख्यानप्रतिषेधात् क एषां प्रतिविशेष इति, उच्यते, तत्र नञ् सर्वनिषेधवचनो वर्त्तते, इह पुनः आङो मर्यादेषदर्थवचनत्वात् ईषन्मर्यादया वाऽऽवृण्वन्तीत्यावरणाः, ततश्च सर्वविरतिनिषेधार्थ एवायं वर्त्तते न देशविरतिनिषेधे खल्वावरणशब्द इति, तथा चाह—देशश्चैकदेशश्च देशैकदेशौ, तत्र देशः—स्थूरप्राणातिपातः, एकदेशः तस्यैव यथाद्दश्यवनस्पतिकायातिपातः, तयोः विरतिः—निवृत्तिः तां, लभन्ते इति वाक्यशेषः, अत्रापि वाक्यशेषः चारित्रविशेषणे तुशब्दाक्षिप्त एव द्रष्टव्यः, यत आह—'चारित्रं' इति 'चर गतिभक्षणयो' रिति, अस्य 'अर्त्तिलूधूसूखनिसहिचर इत्रः' (पा.३-२-१८४) इतीत्रप्रत्ययान्तस्य चरित्रमिति भवति, चरन्त्यनिन्दितमनेन इति चरित्रं क्षयोपशमरूपं तस्य भावश्चारित्रं, एतदुक्तं भवति—इहान्यजन्मोपात्ताष्टविधकर्मसंचयापचयाय चरणं चारित्रं, सर्वसावद्ययोगनिवृत्तिरूपा क्रियेत्यर्थः, तस्य लाभश्चारित्रलाभस्तं न तु लभन्ते. तुशब्दाद्देशैकदेशविरतिं तु लभन्त एवेति गाथार्थः ॥ ११० ॥ इदानीममुमेवार्थमुपसंहरन्नाह—

मूलगुणाणं लंभं न लहइ मूलगुणघाइणं उदए । उदए संजलणाणं न लहइ चरणं अहक्खायं ॥ १११ ॥

व्याख्या—मूलभूता गुणा मूलगुणा उत्तरगुणाधारा इत्यर्थः, ते च सम्यक्त्वमहाव्रताणुव्रतरूपाः तेषां मूलगुणानां लाभं 'न लभते' न प्राप्नोति, कदेति आह—मूलगुणान् घातयितुं शीलं येषां ते मूलगुणघातिनः तेषां मूलगुणघातिनां—अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानां द्वादशानां कषायाणामुदये, तथा ईषद् ज्वलनात् संज्वलनाः सपदि परीषहादिसंघातज्वलनाद्वा संज्वलनाः क्रोधादय एव चत्वारः कषायाः तेषां संज्वलनानामुदये न लभते चारश्चरणं, भावे ल्युट्प्रत्ययः, लब्धं वा त्यजति, किं सर्वम् ?—नेत्याह—यथैवाख्यातं यथाख्यातं इति अकषायं, सकषायं तु लभते एवेति ॥ १११ ॥ न च यथाख्यातचारित्रमात्रोपघातिन एव संज्वलनाः, किंतु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रदेशातिचारसिद्धेः, तथा चाह—

सव्वेविअ अइयारा संजलणाणं तु उदयओ हुंति । मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं ॥ ११२ ॥

व्याख्या—'सर्वे' आलोचनादिच्छेदपर्यन्तप्रायश्चित्तशोध्याः, अपिशब्दात् कियन्तोऽपिच, अतिचरणान्यतिचाराः चारित्रस्खलनाविशेषाः, संज्वलनानामेवोदयतो भवन्ति, तुशब्दस्य एवकारार्थत्वात् द्वादशानां पुनः कषायाणां उदयतः, किम् ?—मूलच्छेद्यं भवति, एवं पदयोगः कर्त्तव्यः, 'मूलेन' अष्टमप्रायश्चित्तेन 'छिद्यते' विदार्यते यद्दोषजातं तन्मूलच्छेद्यं,

अशेषचारित्रच्छेदकारीणि भावार्थः, पुनःशब्दस्तु प्रक्रान्तार्थविशेषणार्थ एवेति, 'भवति' संजायते 'द्वादशानां' अनन्तानुबन्धिप्रभृतीनां कषायाणां, उदयेनेति संबध्यते, अथवा मूलच्छेद्यं यथासंभवतः खल्वायोजनीयं, प्रत्याख्यानावरणकषायोदयतस्तावत् मूलच्छेद्यं-सर्वचारित्रविनाशः, एवमप्रत्याख्यानकषायानन्तानुबन्ध्युदयतस्तु देशविरतिसम्यक्त्वं मूलच्छेद्यं यथायोगमिति गाथार्थः ॥ ११२ ॥ यतश्चैवमतः—

**बारसविहे कसाए खइए उवसामिए व जोगेहिं । लब्भइ चरित्तलंभो तस्स विसेसा इमे पंच ॥ ११३ ॥**

व्याख्या—'द्वादशविधे' द्वादशप्रकारे अनन्तानुबन्ध्यादिभेदभिन्ने 'कषाये' क्रोधादिलक्षणे, 'क्षपिते सति' प्रशस्तयोगैः-निर्वाणहुतभुक्तुल्यतां नीते 'उपशमिते' भस्मच्छन्नाग्निकल्पतां प्रापिते, वाशब्दात् क्षयोपशमं वा-अर्धविध्यातानलोद्‌घट्टनममता नीते 'योगैः' मनोवाक्कायलक्षणैः प्रशस्तैर्हेतुभूतैरिति, किम्? लभ्यते चारित्रलाभः 'तस्य' चारित्रलाभस्य सामान्यस्य न तु द्वादशविधकषायक्षयादिजन्यस्यैवेति, 'विशेषा' भेदा 'एते' वक्ष्यमाणलक्षणाः 'पञ्च' पञ्चेति संख्या, (इति) गाथाक्षरार्थः ॥ ११३ ॥ अनन्तरगाथासूचितपञ्चचारित्रभेदप्रदर्शनायाह—

**सामाइयं च पढमं छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ ११४ ॥**

**तत्तो य अहक्खायं खायं सव्वंमि जीवलोगंमि । जं चरिऊण सुविहिआ वच्चंतयरामरं ठाणं ॥ ११५ ॥**

प्रथमगाथाव्याख्या—'सामायिकं' इति समानां-ज्ञानदर्शनचारित्राणां आयः-समायः, समाय एव सामायिकं, विनयादिपाठात् स्वार्थे ठक्, आह-समयशब्दस्तत्र पठ्यते, तत्कथं समाये प्रत्ययः?, उच्यते, 'एकदेशविकृतमनन्यवद्भवती' तिन्यायात्, तच्च सावद्ययोगविरतिरूपं, ततश्च सर्वमप्येतच्चारित्रं अविशेषतः सामायिकं, छेदादिविशेषैस्तु विशेष्यमाणं अर्थतः शब्दान्तरतश्च नानात्वं भजते, तत्र प्रथमं विशेषणाभावात् सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा-इत्वरं यावत्कथिकं च, तत्र स्वल्पकालमित्वरं, तच्च भरतैरवतेषु प्रथमपश्चिमतीर्थकरतीर्थेषु अनारोपितव्रतस्य शिक्षकस्य विज्ञेयमिति, यावत्कथिकं तु यावत्कथा आत्मनः तावत्कालं यावत्कथं यावत्कथमेव यावत्कथिकं आभवत्त्तीतियावत्, तच्च मध्यमविदेहतीर्थकरतीर्थान्तर्गतसाधूनामवमेयमिति, तेषामुपस्थापनाऽभावात्, अत्र प्रसङ्गतो मध्यमविदेहपुरिमपश्चिमतीर्थकरतीर्थवर्त्तिसाधुस्थितास्थितकल्पः प्रदर्श्यते—तत्र ग्रथान्तरे विवक्षितार्थप्रतिपादिकेयं गाथा—"आचेलक्कु १ द्देसिय २ सेज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥" अस्या गमनिका—चउसु ठिआ छसु अट्ठिआ, केषु चतुर्षु इति, आह—सिज्जायरपिंडे या चाउज्जामे य पुरिसजिट्ठे य । किइकम्मस्स य करणे चत्तारि अवट्ठिआ कप्पा ॥ १ ॥ नास्य चेलं विद्यते इत्यचेलकः तद्भावः अचेलकत्वं अचेलकत्वे स्थिताः, एतदुक्तं भवति-न वैदेहमध्यमतीर्थकरतीर्थसाधवः पुरिमपश्चिमतीर्थवर्त्तिसाधुवत् अचेलत्वे स्थिताः, कुतः?-तेषां ऋजुप्रज्ञत्वात् महाधनमूल्यविचित्रादिवस्त्राणामपि परिभोगात्, पुरिमपश्चिमतीर्थकरतीर्थवर्त्तिसाधूनां तु ऋजुवक्रजडत्वात् महाधनमूल्यादिवस्त्रापरिभोगाज्जीर्णादिपरिभोगाच्च अचेलकत्वमिति। आह-जीर्णादिवस्त्रसद्भावे, कथमचेलकत्वम्?, उच्यते, तेषां जीर्णत्वात् असारत्वात् अल्पत्वात् विशिष्टार्थक्रियाऽप्रसाधकत्वात् असत्त्वाविशेषात् इति, तथा चेत्थंभूतवस्त्रसद्भावेऽपि लोकेऽचेलकत्वव्यपदेशप्रवृत्तिर्दृश्यते, यथा-काचिदङ्गना जीर्णवस्त्रपरिधाना अन्याभावे सति तद्भावेऽपि च समर्पितसाटकं कुविन्दं तन्निष्पादनमन्थरं प्रति आह-'त्वर कोलिक ! नग्निकाऽहमिति' १ । तथा औद्देशिकेऽप्यस्थिता एव, कथम्?-इह पुरिमपश्चिमतीर्थकरसाधुं उद्दिश्य कृतमशनादि सर्वेषामकल्पनीयं, तेषां तु यमुद्दिश्य कृतं तस्यैवाकल्पनीयं न शेषाणामिति २ । तथा शय्यातरराजपिण्डद्वारम्,-पिण्डग्रहणमुभयत्र संबध्यते, तत्र शय्यातरपिण्डे स्थिता एव, शय्यातरपिण्डोहि यथा पुरिमपश्चिमतीर्थकरसाधूनां अकल्पनीयः, एवं मध्यमतीर्थकरसाधूनामपि ३। राजपिण्डे चास्थिताः, कथम्?-स हि पुरिमपश्चिमतीर्थकरसाधूनामग्राह्य एव, मध्यमानां तु दोषाभावात् गृह्यते ४। तथा कृतिकर्म वन्दनमाख्यायते, तत्रापि स्थिताः, कथम्? यथा पुरिमपश्चिमतीर्थकरसाधूनां प्रभूतकालप्रव्रजिता अपि संयत्यः पूर्वं वन्दनं कुर्वन्ति, एवं तेषामपि, यथा वा क्षुल्लका ज्येष्ठार्याणां कुर्वन्ति, एवं तेषामपि ५ । व्रतानि प्राणातिपातादिनिवृत्तिलक्षणानि तेष्वपि स्थिता एव, यथा पुरिमपश्चिमतीर्थकरसाधवः व्रतानुपालनं कुर्वन्ति, एवं तेऽपीति, आह-तेषां हि मैथुनविरतिवर्ज्यानि चत्वारि व्रतानि, ततश्च कथं स्थिता इति, उच्यते, तस्यापि परिग्रहेऽन्तर्भावात् स्थिता एव, तथाच नापरिगृहीता योषित् उपभोक्तुं पार्यते ६ । तथा ज्येष्ठेति-ज्येष्ठपदे स्थिता एव, किन्तु पुरिमपश्चिमतीर्थकरसाधूनां उपस्थापनया ज्येष्ठः, तेषां तु सामायिकारोपणेनेति ७ । तथा प्रतिक्रमणे अस्थिताः, पुरिमपश्चिमसाधूनां नियमेनोभयकालं प्रतिक्रमणं, तेषां तु अनियमः, दोषाभावे सर्वकालमप्यप्रतिक्रमणमिति ८ । तथा मासपर्युषणाकल्पद्वारं,-तत्र मासकल्पेऽप्यस्थिताः, कथम्?-पुरिमपश्चिमतीर्थकरसाधूनां नियमतो मासकल्पविहारः, मध्यमतीर्थकरसाधूनां तु दोषाभावे न विद्यते, एवं पर्युषणाकल्पोऽपि वक्तव्यः, एतदुक्तं भवति—तस्मिन्नपि अस्थिता एव ९-१०-इति समुदायार्थः, विस्तरार्थस्तु कल्पादवग-

न्तव्यः । अभिहितमानुषङ्गिकं, इदानीं प्रकृतमुच्यते—आह–पुरिमपश्चिमतीर्थकरसाधूनामपि यदित्वरं सामायिकं तत्रापि 'करोमि भदन्त ! सामायिकं यावज्जीवं' इतीत्वरस्याप्याभवग्रहणात् तस्यैव उपस्थापनायां परित्यागात् कथं न प्रतिज्ञा-लोप इति, अत्रोच्यते,–अतिचाराभावात्, तस्यैव सामान्यतः सावद्ययोगविनिवृत्तिरूपेणावस्थितस्य शुद्ध्यन्तरापादनेन संज्ञामात्रविशेषात् इति । चशब्दो वाक्यालङ्कारे, 'प्रथमं' आद्यं चारित्रमिति, इदानीं 'छेदोपस्थापनं' छेदश्चोपस्थापनं च यस्मिंस्तच्छेदोपस्थापनं, एतदुक्तं भवति—पूर्वपर्यायस्य छेदो महाव्रतेषु चोपस्थापनमात्मनो यत्र तच्छेदोपस्थापनं, तच्च सातिचारमनतिचारं च, तत्रानतिचारं यदित्वरसामायिकस्य शिक्षकस्य आरोप्यत इति, तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थात् वर्धमानस्वामितीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्ताविति, सातिचारं तु मूलगुणघातिनो यत् पुनर्व्रतो-च्चारणमिति, उक्तं छेदोपस्थापनं, इदानीं परिहारविशुद्धिकं–तत्र परिहरणं परिहारः–तपोविशेषः तेन विशुद्धिर्यस्मिंस्तत्प-रिहारविशुद्धिकं, तच्च द्विभेदं—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानकास्तदासेवकाः तदव्यतिरेकात् तदपि चारित्रं निर्विशमानकमिति, आसेवितविवक्षितचारित्रकायास्तु निर्विष्टकायाः त एव स्वार्थिकप्रत्ययोपादानात् निर्विष्टका-यिकाः तदव्यतिरेकाच्चारित्रमपि निर्विष्टकायिकमिति, इह च नवको गणो भवति, तत्र चत्वारः परिहारिका भवन्ति, अपरे तु तद्वैयावृत्यकराश्चत्वार एवानुपरिहारिकाः, एकस्तु कल्पस्थितो वाचनाचार्यो गुरुभूत इत्यर्थः, एतेषां च निर्विशमानका-नामयं परिहारः—परिहारियाण उ तवो जहण्ण मज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं । १ ।

१ परिहारिकाणां तु तपो जघन्य मध्यम तथैवोत्कृष्टम् । शीतोष्णवर्षाकाले भणित धीरैः प्रत्येकम् । १ ।

तत्थ जहण्णो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ । अट्ठममिहमुक्कोसो एत्तो सिसिरे पवक्खामि । २ । सिसिरे तु जह-ण्णादी छट्ठादी दसमचरिमगो होति । वासासु अट्ठमादी बारसपज्जंतगो णेओ । ३ । पारणगे आयामं पंचसु गहो दोसभिग्गहो भिक्खे । कप्पट्ठियादि पइदिण करेंति एमेव आयामं । ४ । एवं छम्मासतवं चरिउं परिहारिया अणुचरंति । अणुचरगे परिहारियपदट्ठिते जाव छम्मासा । ५ । कप्पट्ठितोवि एवं छम्मासतवं करेति सेसा उ । अणुपरिहारिगभावं वयंति कप्पट्ठिगत्तं च । ६ । एवेसो अट्ठारसमासपमाणो उ वण्णिओ कप्पो । संखेवओ विसेसा विसेससुत्ताओ णायव्वो । ७ । कप्पसमत्तीए तयं जिणकप्पं वा उविंति गच्छं वा । पडिवज्जमाणगा पुण जिणस्स पासे पवज्जंति । ८ । तित्थयरसमी-वासेवगस्स पासे व णो उ अण्णस्स । एतेसिं जं चरणं परिहारविसुद्धिगं तं तु । ९ । 'तथा' इत्यानन्तर्यार्थे, गाथाभङ्ग-भयाद्व्यवहितस्योपन्यासः, 'सूक्ष्मसंपरायं' इति संपर्येति एभिः–संसारमिति संपरायाः कषायाः, सूक्ष्मा लोभांशावशेषत्वात्

१ तत्र जघन्य ग्रीष्मे चतुर्थः षष्ठस्तु भवति मध्यमकम् । अष्टम इह उत्कृष्ट इत शिशिरे प्रवक्ष्यामि । २ । शिशिरे तु जघन्यादि षष्ठादि दशमचरमक भवति । वर्षासु अष्टमादि द्वादशपर्यन्तक ज्ञेयम् । ३ । पारणके आचामाम्ल पञ्चसु ग्रहः द्वयोरभिग्रहो भिक्षायाम् । कल्पस्थितादयः प्रतिदिन कुर्वन्ति एवमे-वाचामाम्लम् । ४ । एव षण्मासतप चरित्वा परिहारिका अनुचरन्ति । अनुचरकाः परिहारिकपदस्थिता यावत्षण्मासा । ५ । कल्पस्थितोऽपि एव षण्मासतप. करोति शेषास्तु अनुपरिहारिकभाव व्रजन्ति कल्पस्थितत्वं च । ६ । एवमेषोऽष्टादशमासप्रमाणस्तु वर्णितः कल्प । संक्षेपत विशेषतो विशेषसूत्राज्ज्ञातव्य । ७ । कल्पसमाप्तौ त जिनकल्प चोपयन्ति गच्छ वा । प्रतिपद्यमानका पुनर्जिनस्य पार्श्वे प्रपद्यन्ते । ८ । तीर्थंकरसमीपासेवकस्य पार्श्वे वा नत्वन्यस्य । एतेषां यच्चरण परिहारविशुद्धिकं तत्तु ॥ ९ ॥

संपराया यत्र तत् सूक्ष्मसंपरायं, तच्च द्विधा–विशुध्यमानकं संक्लिश्यमानकं च, तत्र विशुध्यमानकं क्षपकोपशमकश्रेणि-द्वयमारोहतो भवति, संक्लिश्यमानकं तूपशमश्रेणितः प्रच्यवमानस्येति, 'चः' समुच्चये इति गाथार्थः ॥ ११ ॥ द्वितीयगाथा-व्याख्या—'ततश्च' सूक्ष्मसंपरायानन्तरं यथैवाख्यातं यथाख्यातं अकषायचारित्रमिति यथा ख्यातं–प्रसिद्धं सर्वस्मिन् जीवलोके, तच्च छद्मस्थवीतरागस्य केवलिनश्च भवति, तत्र च छद्मस्थस्य उपशामकस्य क्षपकस्य वा, केवलिनस्तु सयोगि-नोऽयोगिनो चेति, शेषं निगदसिद्धं, नवरं मरणं मरः जरा च मरश्च जरामरौ तौ अविद्यमानौ यस्मिन् तदजरामर-मिति गाथार्थः ॥ ११५ ॥ तत्रैतेषां पञ्चानां चारित्राणां आद्यं चारित्रत्रयं क्षयोपशमलभ्यं चरमचारित्रद्वयं तूपशमक्षयल-भ्यमेव, तत्र तत्कर्मोपशमक्रमप्रदर्शनायाह—

अणदंसनपुंसित्थी वेयछक्कं च पुरुसवेयं च । दो दो एगन्तरिए सरिसे सरिसं उवसमेइ ॥ ११६ ॥

अथवा चरमचारित्रद्वयं श्रेण्यन्तर्भाविनस्तद्विनिर्गतस्य च भवति, अतः श्रेणिद्वयावसरः, तत्र उभयश्रेणिलाभे चादा-वुपशमश्रेणिर्भवतीत्यतस्तत्स्वरूपाभिधित्सयैवाह–अणदंस० । गाथाव्याख्या—तत्रोपशमश्रेणिप्रारम्भको भवत्यप्रमत्तसंयत एव, अन्ये तु प्रतिपादयन्ति–अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतम इति, श्रेणिपरिसमाप्तौ प्रमत्ताप्रमत्तसंयतानाम-न्यतमो भवति, स चैवमारभते–अण रणेति दण्डकधातुः अस्याच्प्रत्ययान्तस्य अण इति भवति, शब्दार्थस्तु अणन्तीत्यणाः, अणन्ति–शब्दयन्ति अविकलहेतुत्वेन असातवेद्यं नारकाद्यायुष्कं इत्यणाः–आद्याः क्रोधादयः, अथवा अनन्तानुबन्धिनः क्रोधादयः अनाः, समुदायशब्दानामवयवे वृत्तिदर्शनात् भीमसेनः सेन इति यथा, तत्रासौ प्रतिपन्नः प्रशस्तेष्वध्यवसाय-

स्थानेषु वर्त्तमानः प्रथमं युगपदन्तर्मुहूर्त्तमात्रेण कालेन अनन्तानुबन्धिनः क्रोधादीन् उपशमयति, एवं सर्वत्र युगपदुपशमककालोऽन्तर्मुहूर्त्तप्रमाण एव द्रष्टव्यः, ततो दर्शनं दर्शस्तं, दर्शनं त्रिविधं—मिथ्या सम्यग्मिथ्या सम्यग्दर्शनं युगपदेवेति, ततोऽनुदीर्णमपि नपुंसकवेदं युगपदेव यदि पुरुषः प्रारम्भकः, पश्चात्स्त्रीवेदमेककालमेवेति, ततो हास्यादिषट्कं—हास्यरत्यरतिशोकभयजुगुप्साषट्कं, पुनः पुरुषवेदं । अथ स्त्री प्रारम्भिका ततः प्रथमं नपुंसकवेदमुपशमयति पश्चात्पुरुषवेदं ततः षट्कं ततः स्त्रीवेदमिति । अथ नपुंसक एव प्रारम्भकः ततोऽसौ अनुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति पश्चात्पुरुषवेदं ततः षट्कं ततो नपुंसकवेदमिति, पुनः 'द्वौ द्वौ' क्रोधाद्यौ 'एकान्तरितौ' संज्वलनविशेषक्रोधाद्यन्तरितौ 'सदृशौ' तुल्यौ 'सदृशं' युगपदुपशमयति, एतदुक्तं भवति–अप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ सदृशौ क्रोधत्वेन युगपदुपशमयति, ततः संज्वलनं क्रोधमेकाकिनमेव, ततः अप्रत्याख्यानप्रत्याख्यानावरणमानौ युगपदेव ततः संज्वलनमानमिति, एवं मायाद्वयं सदृशं पुनः संज्वलनां मायां, एवं लोभद्वयमपि पुनः संज्वलनं लोभमिति, तं चोपशमयंस्त्रिधा करोति, द्वौ भागौ युगपदुपशमयति, तृतीयभागं संख्येयानि खण्डानि करोति, तान्यपि पृथक् पृथक् कालभेदेनोपशमयति, पुनः संख्येयखण्डानां चरमखण्डं असंख्येयानि खण्डानि करोति, सूक्ष्मसंपरायस्ततः समये समये एकैकं खण्डं उपशमयतीति, इह च दर्शनसप्तके उपशान्ते निवृत्तिबादरोऽभिधीयते, तत ऊर्ध्वमनिवृत्तिबादरो यावत् संख्येयान्तिमद्विचरमखण्डं । आह—संज्वलनादीनां युक्त इत्थमुपशमः, अनन्तानुबन्धिनां तु दर्शनप्रतिपत्तावेवोपशमितत्वान्न युज्यत इति, उच्यते, दर्शनप्रतिपत्तौ तेषां क्षयोपशमात् इह चोपशमादविरोध इति, आह–क्षयोपशमोपशमयोरेव कः प्रतिविशेषः ?, उच्यते, क्षयोपशमो ह्युदीर्णस्य क्षयः अनुदीर्णस्य च विपाकानुभवापेक्षया उपशमः, प्रदेशानुभवतस्तु उदयोऽस्त्येव, उपशमे तु प्रदेशानुभवोऽपि नास्तीति, उक्तं च भाष्यकारेण—"वेदेइ संतकम्मं खओवसमिएसु नाणुभावं सो । उवसंतकसाओ उण वेएइ न संतकम्मंपि ॥ १ ॥" आह—संयतस्यानन्तानुबन्धिनामुदयो निषिद्धस्तत् कथमुपशम इति, उच्यते, स ह्यनुभावकर्माङ्गीकृत्य न तु प्रदेशकर्मेति, तथा चोक्तमार्षे—"जीवे[2] णं भन्ते ! सयंकडं कम्मं वेदेइ ?, गोयमा ! अत्थेगइअं वेइए अत्थेगइअं नो वेएइ, से केणट्ठेणं ? भन्ते ! पुच्छा, गोयमा ! दुविहे कम्मे पण्णत्ते, तंजहा—पएसकम्मे अ अणुभावकम्मे अ, तत्थ णं जं तं पएसकम्मं तं नियमा वेएइ, तत्थ णं जं तं अणुभावकम्मं तं अत्थेगइअं वेएइ, अत्थे गइयं णो वेएइ" इत्यादि, ततश्च प्रदेशकर्मानुभावोदयस्येहोपशमो द्रष्टव्यः । आह–यद्येवं संयतस्य अनन्तानुबन्ध्युदयतः कथं दर्शनविघातो न भवति ?, उच्यते, प्रदेशकर्मणो मन्दानुभावत्वात्, तथा कस्यचिदनुभावकर्मानुभवोऽपि नात्यन्तमपकाराय भवन्नुपलभ्यते, यथा संपूर्णमत्यादिचतुर्ज्ञानिनः तदावरणोदय इत्यलं विस्तरेण ॥ ११६ ॥

---

१ वेदयति सत्कर्म क्षायोपशमिकेषु नानुभावं स । उपशान्तकषायः पुनर्वेदयति न सत्कर्मापि । १ । २ जीवो भदन्त ! स्वयकृतं कर्म वेदयति ! गौतम ! अस्त्येकक (किञ्चित्) वेदयति, अस्त्येकक न वेदयति, तत् केनार्थेन ? भदन्त ! पृच्छा, गौतम ! द्विविधं कर्म प्रज्ञप्तं, तद्यथा–प्रदेशकर्म अनुभावकर्म च, तत्र यत्तत् प्रदेशकर्म तत् नियमाद्वेदयति, तत्र यत् अनुभावकर्म तत् अस्त्येकक वेदयति, अस्त्येकक नो वेदयति

अत्र स्थापना उपशमश्रेणेः—इह च संख्येयलोभखण्डान्युपशमयन् बादरसंपरायः, चरमसंख्येयखण्डासंख्येयखण्डान्युपशमयन् सूक्ष्मसंपराय इति, तथा चाह निर्युक्तिकारः—

सूक्ष्म-
बादरक-
सं-लो-
अ-प्र लो-
स-मा
अ-प्र-मा
स-मा
अ-प्र-मा-
सक्रो-
अ प्र-को
पुरुष
हास्या
नपुं
स्त्री
दर्शन.
अन

लोभाणु वेअंतो जो खलु उवसामओ व खवगो वा ।
सो सुहुमसंपराओ अहखाया ऊणओ किंची ॥ ११७ ॥

गाथेयं गतार्थत्वात् न विव्रियते, नवरं यथाख्यातात् किञ्चिन्न्यून इति, ततः सूक्ष्मसंपरायाचस्थामन्तर्मुहूर्त्तमात्रकालमानामनुभूयोपशामकनिर्ग्रन्थो यथाख्यातचारित्रीभवति ॥ ११७ ॥ स च यदि बद्धायुः प्रतिपद्यते तदवस्थश्च म्रियते, ततो नियमतोऽनुत्तरविमानवासिषु उत्पद्यते, श्रेणिप्रच्युतस्य त्वनियमः, अथाबद्धायुः अतोऽन्तर्मुहूर्त्तमात्रं उपशामकनिर्ग्रन्थो भूत्वा नियमतः पुनरपि उदितकषायः कात्स्न्येन श्रेणिप्रतिलोममावर्तते, तथा चामुमेवार्थमभिधित्सुराह निर्युक्तिकारः—

उवसामं उवणीआ गुणमहया जिणचरित्तसरिसंपि ।
पडिवायंति कसाया किं पुण सेसे सरागत्थे ? ॥ ११८ ॥

व्याख्या—'उपशमः' शान्तावस्था तमुपशमं, अपिशब्दात् क्षयोपशममपि, उपनीताः गुणैर्महान् गुणमहान् तेन गुणमहता–उपशमकेन, किम् ?–प्रतिपातयन्ति कषायाः, संयमाद् भवे वा, कम् ?–जिनचारित्रतुल्यमपि उपशमकं, किं पुनः शेषान् सरागस्थानिति । यथेह भस्मच्छन्नानलः पवनाद्यासादितसहकारिका-

रणान्तरः पुनः स्वरूपमुपदर्शयति, एवमसावप्युदितकषायानलो जघन्यतस्तद्भव एव मुक्तिं लभते, उत्कृष्टतस्तु देशोनमर्धपुद्गलपरावर्त्तमपि संसारमनुबध्नातीति ॥ ११८ ॥ यतश्चैवं तीर्थकरोपदेशः अत औपदेशिकं गाथाद्वयमाह निर्युक्तिकारः—

जइ उवसंतकसाओ लहइ अणंतं पुणोऽवि पडिवायं। ण हु भे वीससियव्वं थेवे य कसायसेसंमि ॥ ११९ ॥

अणथोवं वणथोवं अग्गीथोवं कसायथोवं च । णहु भे वीससियव्वं थेवंपि हु तं बहुं होइ ॥ १२० ॥

प्रथमगाथा प्रकटार्थत्वान्न वितन्यते, द्वितीयगाथाव्याख्या–ऋणस्य स्तोकं ऋणस्तोकं तथाच स्वल्पादपि ऋणात् दासत्वं प्राप्ता वणिग्दुहितेति, उक्तं च भाष्यकारेण—"दासत्तं देइ अणं अचिरा मरणं वणो विसप्पंतो । सव्वस्स दाहमग्गी देंति कसाया भवमणंतं ॥ १ ॥" अपिचशब्दनिपातसाफल्यं पूर्वोक्तानुसारेण स्वबुद्ध्या वक्तव्यमिति गाथार्थः ॥ १२० ॥ इत्थमौपशमिकं चारित्रमुक्तं, इदानीं क्षायिकमुच्यते, अथवा सूक्ष्मसंपराययथाख्यातचारित्रद्वयं उपशमश्रेण्यङ्गीकरणेनोक्तं, इदानीं क्षपकश्रेण्यङ्गीकरणतः प्रतिपादयन्नाह—

अण मिच्छ मीस सम्मं अट्ठ नपुंसित्थीवेय छक्कं च । पुंवेयं च खवेइ कोहाइए य संजलणे ॥ १२१ ॥

व्याख्या—इह क्षपकश्रेणिप्रतिपत्ताऽसंयतादीनामन्यतमोऽत्यन्तविशुद्धपरिणामो भवति, स च उत्तमसंहननः, तत्र पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते, अपरे तु धर्मध्यानोपगत एवेति, प्रतिपत्तिक्रमश्चायम्—प्रथममन्तर्मुहूर्त्तेन अनन्तानुबन्धिनः क्रोधादीन् युगपत्क्षपयति, तदनन्तभागं तु मिथ्यात्वे प्रक्षिप्य ततो मिथ्यात्वं सहैव तदंशेन युगपत्

१ दासत्वं ददाति ऋणं अचिरान्मरणं व्रणो विसर्पन् । सर्वस्य दाहमग्निर्ददति कषाया भवमनन्तम् ॥ १ ॥ (विशेषावश्यकगाथा १३११)

क्षपयति, यथा हि अतिसंभृतो दावानलः खलु अर्धदग्धेन्धन एव इन्धनान्तरमासाद्य उभयमपि दहति, एवमसावपि क्षपकः तीव्रशुभपरिणामत्वात् सावशेषं अन्यत्र प्रक्षिप्य क्षपयति, एवं पुनः सम्यग्मिथ्यात्वं ततः सम्यक्त्वमिति, इह च यदि बद्धायुः प्रतिपद्यते अनन्तानुबन्धिक्षये च व्युपरमति, ततः कदाचित् मिथ्यादर्शनोदयतस्तानपि पुनरुपचिनोति, मिथ्यात्वे तद्बीजसंभवात्, क्षीणमिथ्यात्वस्तु नोपचिनोति, मूलाभावात्, तदवस्थश्च मृतोऽवश्यमेव त्रिदशेषु उत्पद्यते, क्षीणसप्तकोऽपि तदप्रतिपतितपरिणाम इति, प्रतिपतितपरिणामस्तु नानामतित्वात् सर्वगतिभाग् भवति, आह—मिथ्यादर्शनादिक्षये किमसौ अदर्शनो जायते उत नेति, उच्यते, सम्यग्दृष्टिरेवासौ, आह—ननु सम्यग्दर्शनपरिक्षये कुतः सम्यग्दृष्टित्वम् ?, उच्यते, निर्मदनीकृतकोद्रवकल्पा अपनीतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव सम्यग्दर्शनं, तत्परिक्षये च तत्त्वश्रद्धानलक्षणपरिणामाप्रतिपातात् प्रत्युत श्लक्ष्णाभ्रपटलापगमे चक्षुर्दर्शनवत् शुद्धतरोपपत्तेरिति अलं प्रपञ्चेन । स च यदि बद्धायुः प्रतिपद्यते ततो नियमात् सप्तके क्षीणे अवतिष्ठत एव, स च सम्यग्दर्शनमशेषमेव क्षपयति, अबद्धायुस्तु अनुपरत एव समस्तां श्रेणिं समापयति इति, स च स्वल्पसम्यग्दर्शनावशेष एव अप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं युगपत् आरभते ॥ १२१ ॥ एतेषां च मध्यभागं क्षपयन् एताः सप्तदश प्रकृतीः क्षपयति, तत्प्रतिपादकमिदं गाथाद्वयम्—

गइआणुपुव्वी दो दो जाइनामं च जाव चउरिंदी । आयावं उज्जोयं थावरनामं च सुहुमं च ॥ १२२ ॥

साहारणमपज्जत्तं निद्दानिद्दं च पयलपयलं च । थीणं खवेइ ताहे अवसेसं जं च अट्ठण्हं ॥ १२३ ॥

व्याख्या–गतिश्चानुपूर्वी च गत्यानुपूर्व्यौ 'दो दो' इति द्वे द्वे तन्नामनी, जातिनाम चेत्यस्मात् नामग्रहणं अभिसंबध्यते, एतदुक्तं भवति—नरकगतिनाम नरकानुपूर्वीनाम च, आनुपूर्वी–वृषभनासिकान्यस्तरज्जुसंस्थानीया, यया कर्मपुद्गलसंहत्या विशिष्टं स्थानं प्राप्यतेऽसौ, यथा वोर्ध्वोत्तमाङ्गाधश्चरणादिरूपो नियमतः शरीरविशेषो भवति साऽऽनुपूर्वीति, तथा तिर्यग्गतिनाम तिर्यगानुपूर्वीनाम च, एवं गत्यानुपूर्वीनामनी द्वे द्वे, तथा 'जातिनाम' एकेन्द्रियादिजातिनाम यावच्चतुरिन्द्रियाः, एतदुक्तं भवति–एकेन्द्रियजातिनाम द्वीन्द्रियजातिनाम एवं शेषयोजनाऽपि कार्येति । आह–एकेन्द्रियाद्यानुपूर्वीनाम कस्मान्नोच्यते, आचार्य आह–तस्य तिर्यगानुपूर्वीनामक्षपणप्रतिपादनेनोक्तार्थत्वात्, 'चः' समुच्चये, तथा 'आतपं' इति आतपनाम, यदुदयात् आतपवान् भवति, 'उद्योतं' इति उद्योतनाम, यदुदयादुद्योतवान् भवति, स्थावराः–पृथिव्यादयः तन्नाम च पूर्ववत्, 'सूक्ष्मं' इति सूक्ष्मनाम च, 'साधारणं' इति साधारणनाम, अनन्तवनस्पतिनामेत्यर्थः, 'अपर्याप्तं' इति अपर्याप्तकनाम, तथा निद्रानिद्रा च इत्यादि प्रकटार्थत्वान्न विव्रियते, नवरं स्त्याना चैतन्यऋद्धिर्यस्यां सा स्त्यानर्धिः, स्त्यानर्ध्युत्तरकालमवशेषं यदष्टानां कषायाणां तत् क्षपयति, सर्वमिदमन्तर्मुहूर्त्तमात्रेणेति, ततो नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यादिषट्कं, ततः पुरुषवेदं च खण्डत्रयं कृत्वा खण्डद्वयं युगपत् क्षपयति, तृतीयखण्डं तु संज्वलनक्रोधे प्रक्षिपति, पुरुषे प्रतिपत्तर्ययं क्रमः, नपुंसकादिप्रतिपत्तरि तु उपशमश्रेणिन्यायो वक्तव्यः, ततः क्रोधादींश्च संज्वलनान् प्रत्येकमन्तर्मुहूर्त्तमात्रकालेनोक्तेनैव न्यायेन क्षपयति, श्रेणिपरिसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमेव, अन्तर्मुहूर्त्तानामसंख्येयत्वात्, लोभचरमखण्डं तु संख्येयानि खण्डानि कृत्वा पृथक् पृथक् कालभेदेन क्षपयति, चरमखण्डं पुनरसंख्येयानि खण्डानि करोति, तान्यपि समये समये एकैकं क्षपयति, इह च क्षीणदर्शनसप्तको निवृत्तिबादर उच्यते, तत ऊर्ध्वमनिवृत्तिबादरो यावत्

चरमलोभखण्डमिति, तत ऊर्ध्वमसंख्येयखण्डानि क्षपयन् सूक्ष्मसंपरायो यावच्चरमलोभाणुक्षयः, तत ऊर्ध्वं यथाख्यात चारित्रीभवति ॥ १२३ ॥ स च महासमुद्रप्रतरणपरिश्रान्तवत् मोहसागरं तीर्त्वा विश्राम्यति, ततश्छद्मस्थवीतरागत्वद्वि-चरमसमययोः प्रथमे निद्रादि क्षपयति तथा चाह निर्युक्तिकारः—

**वीसमिऊण नियंठो दोहि उ समएहि केवले सेसे । पढमे निद्दं पयलं नामस्स इमाओ पयडीओ ॥ १२४ ॥**
**देवगइआणुपुव्वीविउव्विसंघयण पढमवज्जाइं । अन्नयरं संठाणं तित्थयराहारनामं च ॥ १२५ ॥**

अर्थस्तु प्रायः सुगमत्वात् न वितन्यते, नवरं वैकुर्विकं च संहननानि चेति समासः, तानि प्रथमसंहननवर्जानि क्षपयति, तानि च पड् भवन्ति, तथा चोक्तम्—"वज्जरिसहनारायं पढमं बिइयं च रिसहनारायं। णारायमद्धणाराय कीलिया तह य छेवट्ठं ॥ १ ॥" तथा अन्यतरसंस्थानं मुक्त्वा यस्मिन्व्यवस्थितः शेषाणि क्षपयति, तानि चामूनि—"चउरंसे णग्गोहे मंडले साति वामणे खुज्जे । हुंडेवि अ संठाणे जीवाणं छ मुणेयव्वा ॥ १ ॥ तुल्लं वित्थडबहुलं उस्सेहबहुं च मडहकोट्ठं च । हेट्ठिल्लकायमडहं सव्वत्थासंठियं हुंडं ॥ २ ॥" तथा तीर्थकरनाम आहारकनाम च क्षपयति, यद्यतीर्थकरः प्रतिपत्तेति, अथ तीर्थकरस्ततः खल्वाहारकनामैवेति, 'चः' समुच्चये ॥ १२४–१२५

**चरमे नाणावरणं पंचविहं दंसणं चउवियप्पं । पंचविहमंतरायं खवइत्ता केवली होइ ॥ १२६ ॥**

१ वज्रर्षभनाराच प्रथम द्वितीय च ऋषभनाराचम् । नाराचमर्धनाराच कीलिका तथैव सेवार्त्तम् ॥ १ ॥ २ चतुरस्र न्यग्रोध मण्डलं सादि वामन कुब्जम् । हुण्डमपि च सस्थानानि जीवानां पट् मुणितव्यानि ॥ १ ॥ तुल्य विस्तृतबाहल्याभ्या उत्सेधबहुल च मडभकोष्ठ च । अध कायमडभ सर्वत्रास-स्थित हुण्डम् ॥ २ ॥

गमनिका—चरमे समये ज्ञानावरणं पञ्चविधं मतिज्ञानावरणादि, दर्शनं चतुर्विकल्पं चक्षुर्दर्शनादि पञ्चविधमन्तरायं च दानलाभभोगोपभोगवीर्यान्तरायाख्यं क्षपयित्वा केवली भवतीति गाथार्थः ॥ १२६ ॥ ततः—

असंख्ये० लो० | स्थापना चेयम्.

| | |
|---|---|
| असंख्य० को० | ooo |
| लो० | o |
| माया० | o |
| मान० | o |
| स० को० | o |
| पु० | o |
| हास्यादि ६ | oooooo |
| स्त्री० | o |
| न० | o |
| अप्र० प्रत्या० | oooooooo |
| दर्शन० | ooo |
| अनन्ता० | oooo |

**संभिण्णं पासंतो लोगमलोगं च सव्वओ सव्वं ।**
**तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥ १२७ ॥**

व्याख्या—समेकीभावेन भिन्नं संभिन्नं, यथा बहिस्तथा मध्येऽपीत्यर्थः, अथवा संभिन्नमिति-द्रव्यं गृह्यते, कथम्?—कालभावौ हि तत्पर्यायौ, ताभ्यां समस्ताभ्यां समन्ताद्वा भिन्नं संभिन्नं 'पश्यन्' उपलभमानो, लोक्यत इति लोकः, केवलज्ञानभास्वतोपलभ्यत इति भावार्थः, अलोकोऽप्युपलभ्यत एव, तथापि धर्मादीनां वृत्तिर्द्रव्याणां यत्र स लोकः इति तं, अलोकं च इत्यनेन क्षेत्रं प्रतिपादितं भवति, द्रव्याद्येतावदेव विज्ञेयमिति, किमेकया दिशा?—नेत्याह—'सर्वतः' सर्वासु दिक्षु, तास्वपि किं कियदपि द्रव्यादि उत नेत्याह—'सर्वं' निरवशेषं, अमुमेवार्थं स्पष्टय न्नाह—तन्नास्ति किञ्चित् ज्ञेयं यन्न पश्यति 'भूतं' अतीतं, भवतीति भव्यं, वर्त्तमानमित्यर्थः, भावकर्मणो: प्राप्तयोः 'भव्यगेयेत्यादिनिपातनात्' ( भव्यगेयप्रवचनीयोपस्थापनीयजन्याप्लाव्यापात्या वा ( पा०३–४–६८ ) कर्त्तरि सिद्धं, 'भविष्यद्' भावि वा, 'चः' समुच्चये इति गाथार्थः ॥ १२७ ॥

इत्थं तावदुपोद्घातनिर्युक्तौ प्रस्तुतायां प्रसङ्गतो यदुक्तं—'तपोनियमज्ञानवृक्षमारूढः केवली' इति अयमसौ केवली निदर्शितः, एतस्मात् सामायिकादिश्रुतं आचार्यपारम्पर्येण आयातं, एतस्माच्च जिनप्रवचनप्रसूतिः, सर्वमिदं प्रासङ्गिकं निर्युक्तिसमुत्थानप्रसङ्गेनोक्तं, इदानीमपि केयं जिनप्रवचनोत्पत्तिः कियदभिधानं चेदं जिनप्रवचनं को वाऽस्य अभिधानविभाग इत्येतत् प्रासङ्गिकशेषं शेषद्वारसङ्ग्रहं वाऽभिधातुकाम आह—

**जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य । दारविही य नयविही वक्खाणविही य अणुओगो ॥ १२८ ॥**

व्याख्या—इह 'जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिकानि एकार्थिकविभागश्च' एतत् त्रितयमपि प्रसङ्गशेषं, द्वाराणां विधिः द्वारविधि, विधानं विधिः, स ह्युपोद्घातोऽभिधीयते, नयविधिस्तु चतुर्थं अनुयोगद्वारमिति, शिष्याचार्यपरीक्षाऽभिधानं तु व्याख्यानविधिरिति, अनुयोगस्तु सूत्रस्पर्शकनिर्युक्तिः सूत्रानुगमश्चेति समुच्चयार्थः । आह—चतुर्थमनुयोगद्वारं नयविधिमभिधाय पुनस्तृतीयानुयोगद्वाराख्यानुयोगाभिधानं किमर्थम्? उच्यते, नयानुगमयो: सहचरभावप्रदर्शनार्थं, तथाहि—नयानुगमौ प्रतिसूत्रं युगपद् अनुधावतः, नयमतशून्यस्य अनुगमस्याभावात्, अनुयोगद्वारचतुष्टयोपन्यासे तु नयानामन्तेऽभिधानं युगपद्वक्तुं अशक्यत्वात् । आह—चतुरनुयोगद्वारातिरिक्तव्याख्यानविधेरुपन्यासो अनर्थक:, न, अनुगमाङ्गत्वात्, व्याख्याऽङ्गत्वाचानुगमाङ्गता इत्यलं विस्तरेणेति गाथार्थः ॥ १२८ ॥ तत्र जिनप्रवचनोत्पत्तिर्निर्युक्तिसमुत्थानप्रसङ्गतोऽभिहिता, अर्हद्वचनत्वात् प्रवचनस्य, इदानीं प्रवचनैकार्थिकानि तद्विभागं च प्रदर्शयन्नाह—

**एगट्ठियाणि तिण्णि उ पवयण सुत्तं तहेव अत्थो अ । इक्किक्कस्स य इत्तो नामा एगट्ठिआ पंच ॥ १२९ ॥**

**सुय धम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा । सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥ १३० ॥**
**अणुओगो य नियोगो भास विभासा य वत्तियं चेव । अणुओगस्स उ एए नामा एगट्ठिआ पंच ॥ १३१ ॥**

प्रथमगाथाव्याख्या—एकोऽर्थो येषां तान्येकार्थिकानि, त्रीण्येव, प्रवचनं पूर्वव्याख्यातं, सूचनात् सूत्रं, अर्यत इत्यर्थः, 'चः' समुच्चये, इह च प्रवचनं सामान्यश्रुतज्ञानं, सूत्रार्थौ तु तद्विशेषाविति, आह—सूत्रार्थयोः प्रवचनेन सहैकार्थता युक्ता, तद्विशेषत्वात्, सूत्रार्थयोस्तु परस्परविभिन्नत्वात् न युज्यते, तथा च सूत्रं व्याख्येयं अर्थस्तु तद्व्याख्यानमिति, अथवा त्रयाणामप्येषा भिन्नार्थतैव युज्यते, प्रत्येकमेकार्थिकविभागसद्भावात्, अन्यथा एकार्थिकत्वे सति भेदेनैकार्थिकाभिधानमयुक्तमिति, अत्रोच्यते, यथा हि मुकुलविकसितयोः पद्मविशेषयोः संकोचविकासपर्यायभेदेऽपि कमलसामान्यतयाऽभेदः, एवं सूत्रार्थयोरपि प्रवचनापेक्षया परस्परतश्चेति, तथाहि—अविवृतं मुकुलतुल्यं सूत्रं, तदेव विवृतं प्रबोधितं विकचकल्पमर्थः, प्रवचनं चोभयमपीति, यथा चैषामेकार्थिकविभाग उपलभ्यते—कमलमरविन्दं पङ्कजमित्यादि पद्मैकार्थिकानि, तथा कुड्मलं वृन्दं संकुचितमित्यादि मुकुलैकार्थिकानि, तथा विकचं फुल्लं विबुद्धमित्यादि विकसितैकार्थिकानि, तथा प्रवचनसूत्रार्थानामपि पद्ममुकुलविकसितकल्पानामेकार्थिकविभागोऽविरुद्धः । अथवा अन्यथा व्याख्यायते—एकार्थिकानि त्रीण्येवाश्रित्य वक्तव्यानि, प्रवचनमेकार्थगोचरः तथा सूत्रमर्थश्चेति, शेषं पूर्ववत् । आह—द्वारगाथायां यदुक्तं 'प्रवचनैकार्थिकानि वक्तव्यानि' तद्व्याहन्यते, न, सामान्यविशेषरूपत्वात्प्रवचनस्य, सूत्रार्थयोरपि प्रवचनविशेषरूपत्वेन प्रवचनत्वोपपत्तेः । आह—यद्येवं विभागश्चेति द्वारोपन्यासानर्थक्यं, न, विभागश्चेति किमुक्तं भवति ? नाविशेषेणैकार्थिकानि वक्तव्यानि सामान्यविशेषरूपस्यापि प्रवचनस्य—पञ्चदशेति, किं तर्हि ?—विभागश्च वक्तव्यः, विशेषगोचराभिधानपर्यायाणां सामान्यगोचराभिधानपर्यायत्वानुपपत्तेः, न हि चूतसहकारादयो वृक्षादिशब्दपर्याया भवन्ति, लोके तथाऽदृष्टत्वाद् इति गाथार्थः ॥ १२९ ॥
द्वितीयगाथाव्याख्या—श्रुतस्य धर्मः—स्वभावः श्रुतधर्मः, बोधस्वभावत्वात् श्रुतस्य धर्मो बोधोऽभिधीयते, अथवा जीवपर्यायत्वात् श्रुतस्य श्रुतं च तद्धर्मश्चेति समासः, सुगतिधारणाद्वा श्रुतं धर्मोऽभिधीयते, 'तीर्थं' प्राङ्निरूपितशब्दार्थं, तच्च संघ इत्युक्तं, इह तु तदुपयोगानन्यत्वात् प्रवचनं तीर्थमुच्यते, तथा मृग्यते—शोध्यते अनेनात्मेति मार्गः, मार्गणं वा मार्गो, अन्वेषणं शिवस्येति, तथा प्रगतं अभिविधिना जीवादिषु पदार्थेषु वचनं प्रावचनं, प्रवचनं तु पूर्ववत् । उक्तः प्रवचनविभागः, इदानीं सूत्रविभागोऽभिधीयते—तत्र सूचनात् सूत्रं, तन्यतेऽनेनास्मादस्मिन्निति वा अर्थ इति तन्त्रं, तथा ग्रथ्यतेऽनेनास्मादस्मिन्निति वाऽर्थ इति ग्रन्थः, पठनं पाठः पठ्यते वा तदिति पाठः पठ्यते वाऽनेनास्मादस्मिन्निति वा अभिधेयमिति पाठः, व्यक्तीक्रियत इति भावार्थः, तथा शास्यतेऽनेनास्मादस्मिन्निति वा ज्ञेयमात्मनेति वा शास्त्रं, एकार्थिकानीति पुनरभिधानं सामान्यविशेषयोः कथञ्चिद्भेदख्यापनार्थमिति गाथार्थः ॥ १३० ॥
तृतीयगाथाव्याख्या—सूत्रस्यार्थेन अनुयोजनमनुयोगः, अथवा अभिधेयो व्यापारः सूत्रस्य योगः, अनुकूलोऽनुरूपो वा योगोऽनुयोगः, यथा घटशब्देन घटोऽभिधीयते, तथा नियतो निश्चितो वा योगो नियोगः, यथा घटशब्देन घट एवोच्यते न पटादिरिति, तथा भाषणात् भाषा, व्यक्तीकरणमित्यर्थः, यथा घटनात् घटः, चेष्टावानर्थो घट इति, विविधा भाषा विभाषा, पर्यायशब्दैः तत्स्वरूपकथनं, यथा घटः कुटः कुम्भ इति, वार्त्तिकं त्वशेषपर्यायकथनमिति शेषं सुबोधं, अयं गाथासमुदायार्थः, अवयवार्थं तु प्रतिद्वारं वक्ष्यति, तत्र प्रवचनादीनामविशेषेणैकार्थिकाभिधानप्रक्रमे सति एकार्थिकानुयोगादेर्भेदेनोपन्यासान्व्याख्यानं अर्थगरीयस्त्वख्यापनार्थं, उक्तं च—'सुत्तधरा अत्थधरो इत्यादि' ॥ १३१ ॥ तत्र अनुयोगाख्यप्रथमद्वारस्वरूपव्याचिख्यासयाऽऽह—

**णामं ठवणा दविए खित्ते काले य वयण भावे य । एसो अणुओगस्स उ णिक्खेवो होइ सत्तविहो ॥ १३२ ॥**

गमनिका—'नाम' प्राक् निरूपितं, तत्र नामानुयोगो—यस्य जीवादेरनुयोग इति नाम क्रियते, नाम्नो वा अनुयोगो नामानुयोगः, नामव्याख्येत्यर्थः, 'स्थापना' अक्षनिक्षेपादिरूपा, तत्र अनुयोगं कुर्वन् कश्चित् स्थाप्यते, स्थापनायामनुयोगः स्थापनानुयोग इति समासः, स्थापना चासौ अनुयोगश्चेति वा, 'द्रव्ये' इति द्रव्यविषयोऽनुयोगो द्रव्यानुयोगः, स च आगमनोआगमज्ञशरीरेतरव्यतिरिक्तः द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैः द्रव्ये द्रव्येषु वाऽनुयोगो द्रव्यानुयोगः, एवं क्षेत्रादिष्वपि षड्भेदयोजना कार्येति, तत्र द्रव्यानुयोगो द्विविधः—जीवद्रव्यानुयोगः अजीवद्रव्यानुयोगश्च, एकैकः स चतुर्धा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो जीव एकं द्रव्यं क्षेत्रतोऽसंख्येयप्रदेशावगाढः कालतोऽनाद्यपर्यवसितः भावतोऽनन्तज्ञानदर्शनचारित्राचारित्रदेशचारित्रअगुरुलघुपर्यायवान् इति, अजीवद्रव्याणि परमाण्वादीनि, तत्र परमाणुर्द्रव्यत एकं द्रव्यं क्षेत्रत एकप्रदेशावगाढः कालतो जघन्येन समयमेकं द्वौ वा उत्कृष्टतस्तु असंख्येया उत्सर्पिण्यवसर्पिण्यः, भावतस्तु एकरस एकवर्णः द्विस्पर्श एकगन्ध इति, एतेषां च स्वस्थानेऽनन्ता रसादिपर्याया एकगुणतिक्तादिभेदेन द्रष्टव्याः, एवं द्व्यणुकादीनामप्यनन्ताणुस्कन्धावसानानां स्वरूपं द्रष्टव्यं, उक्तो द्रव्यानुयोगः, इदानीं द्रव्याणां—स च जीवाजीवभेदभिन्नानां

अवसेयः, यथा प्रज्ञापनायां समुदितानां जीवानामजीवानां च विचारः, तथा चोक्तं—"[1]जीवपज्जवाणं भंते ! किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, एवं अजीवपज्जवाणं पुच्छा उत्तरं च दट्ठव्वं" अलं विस्तरेण । द्रव्येणानुयोगः प्रलेपाक्षादिना, द्रव्यैस्तैरेव अक्षादिभिः प्रभूतैरिति, द्रव्ये फलकादौ द्रव्येषु प्रभूतासु निषद्यासु अवस्थितोऽनुयोगं करोतीति । एवं क्षेत्रानुयोगेऽपि क्षेत्रस्य भरतक्षेत्रादेः क्षेत्राणां जम्बूद्वीपादीनां यथा द्वीपसागरप्रज्ञप्त्यामिति, क्षेत्रेण यथा पृथिवीकायादिसंख्याव्याख्यानं, उक्तं च "[2]जंबुद्दीवपमाणं, पुढविजिआणं तु पत्थयं काउं । एवं मविज्जमाणा हवंति लोगा असंखिज्जा ॥ १ ॥" क्षेत्रैरनुयोगो यथा "[3]बहुहिं दीवसमुद्देहिं पुढविजिआणमित्यादि" क्षेत्रे तिर्यग्लोकेऽनुयोगो भरतादौ वा क्षेत्रेषु अनुयोगः अर्धतृतीयेषु द्वीपसमुद्रेषु । कालस्य अनुयोगः समयादिप्ररूपणा, कालानां प्रभूतानां समयादीनां, कालेनानुयोगो यथा—बादरवायुकायिकानां वैक्रियशरीराण्यद्धापल्योपमस्य असंख्यभागमात्रेणापह्रियन्ते, कालैरनुयोगो यथा प्रत्युत्पन्नत्रसकायिका असंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते प्रतिसमयापहारेण, कालेऽनुयोगो द्वितीयपौरुष्यां, कालेषु अवसर्पिण्यां त्रिषु कालेषु—सुषमदुष्षमायां चरमभागे दुष्षमसुषमायां दुष्षमायां चेति, उत्सर्पिण्यां कालद्वये—दुष्षमसुषमायां सुषमदुष्षमायां च । वचनस्यानुयोगो यथा इत्थंभूतं एकवचनं, वचनानां द्विवचनबहुवचनानां षोडशानां वा, वचनेनानुयोगो यथा—कश्चिदाचार्यः साध्वादिभिरभ्यर्थित एकवचनेन करोति,

१ जीवपर्यवा भदन्त ! किं सङ्ख्येया असङ्ख्येया अनन्ता ?, गौतम ! नो सङ्ख्येया नो असङ्ख्येया अनन्ता, एवमजीवपर्यवाणां पृच्छा उत्तरं च द्रष्टव्यं ।
२ जम्बूद्वीपप्रमाणं पृथ्वीजीवानां तु प्रस्थकं कृत्वा । एवं मीयमाना भवन्ति लोका असङ्ख्येया ॥ १ ॥ ३ बहुभिर्द्वीपसमुद्रैः पृथ्वीजीवानां

वचनैः—स एव बहुभिः असकृद् अभ्यर्थितो वेति, वचनेऽनुयोगः क्षायोपशमिके, वचनेषु तेष्वेव बहुषु, अन्ये तु प्रतिपादयन्ति—वचनेषु नास्त्यनुयोगः, तस्य क्षायोपशमिकत्वात्, तस्य चैकत्वादिति भावार्थः । भावानुयोगो द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता उपयुक्तः, नोआगमत औदयिकादेरन्यतमस्येति, भावानां औदयिकादीनां, भावेन संग्रहादिना, उक्तं च—"[1]पंचहिं ठाणेहिं सुत्तं वाएज्जा, तंजहा—संगहट्ठयाए १ उवग्गहट्ठयाए २ निज्जरट्ठयाए ३ सुयपज्जवजातेणं ४ अव्वोच्छित्तीए ५" भावैरभिरेव समुदितैरनुयोगः, भावे क्षायोपशमिके, भावेषु आचारादिषु, अथवा प्रतिक्षणपरिणामत्वात् क्षयोपशमस्य भावेषु अनुयोगः, अथवा भावेषु नास्त्येव, क्षयोपशमस्यैकत्वात् । एतेषां च द्रव्याद्यनुयोगानां परस्परसमावेशः स्वबुद्ध्या वक्तव्यः, उक्तं च भाष्यकारेण—"दव्वे णियमा भावो ण विणा ते यावि खित्तकालेहिं (ग्रन्थाग्रम् २५००) खित्ते तिण्हवि भयणा काले भयणाए तीसुंपि ॥ १ ॥ इत्यादि" उक्तोऽनुयोगः, एतद्विपरीतस्तु अननुयोग इति गाथार्थः ॥ १३२ ॥ साम्प्रतं तत्प्रतिपादकदृष्टान्तान् प्रतिपादयन्नाह—

**वच्छगगोणी १ खुज्जा २ सज्झाए ३ चेव बहिरउल्लावो ४ । गामिल्लए ५ य वयणे सत्तेव य हुंति भावंमि ॥ १३३ ॥**

व्याख्या—तत्र प्रथममुदाहरणं द्रव्याननुयोगानुयोगयोः वत्सकगौरिति—[2]गोदोहओ जदि जं पाडलाए वच्छयं तं बहुलाए मुयइ बाहुलेरं वा पाडलाए मुयइ, ततो अणणुओगो भवति, तस्स य दुद्धकज्जस्स अपसिद्धी भवति, जदि पुण

१ पञ्चभिः स्थानैः सूत्रं वाचयेत्, तद्यथा—सङ्ग्रहार्थाय १ उपग्रहार्थाय २ निर्जरार्थाय ३ श्रुतपर्यायजातेन ४ अव्यवच्छित्त्या ५ । २ गोदोहको यदि यं पाटलाया वत्सं बहुलायै मुञ्चति, बाहुलेयं पाटलायै मुञ्चति, ततोऽननुयोगो भवति, तस्य च दुग्धकार्यस्य अप्रसिद्धिर्भवति, यदि पुनः

जं[1] जाए तं ताए मुयइ, तो अणुओगो, तस्स य दुद्धकज्जस्स पसिद्धी भवति । एवं इहावि जदि जीवलक्खणेण अजीवं परूवेइ अजीवलक्खणेण वा जीवं, तो अणणुओगो भवति । तं भाव अण्णहा गेण्हति, तेण अत्थो विसंवदति, अत्थेण विसंवयंतेण चरणं, चरणेण मोक्खो, मोक्खाभावे दिक्खा णिरत्थिआ । अह पुण जीवलक्खणेण जीवं परूवेइ, अजीवलक्खणेणं अजीवं, तो अणुओगो, तस्स य कज्जसिद्धी भवतित्ति, अविगलो अत्थावगमो, ततो चरणवुड्ढी, ततो मोक्खोत्ति । एस पढमदिट्ठंतो ॥ १ ॥

क्षेत्राननुयोगानुयोगयोः कुब्जोदाहरणम्—[2]पइट्ठाणे णगरे सालिवाहणो राया, सो वरिसे वरिसे भरुयच्छे नरवाहणं रोहेति, जाहे य वरिसारत्तो पत्तो ताहे सयं णगरं पडिजाति, एवं कालो वच्चति, अण्णया तेण रण्णा रोहएणं गएल्लएणं अत्थाणमंडवियाए णिच्छूढं, तस्स य पडिग्गहधारिणी खुज्जा, अपरिभोगा एसा भूमी, णूणं राया जातुकामो, तीसे य राउलओ जाणसालिओ परिचिओ, ताए तस्स सिट्ठं, सो पए जाणगाणि पमक्खित्ता पयट्टावियाणि य,

१ यो यस्यास्तस्यै मुञ्चति, ततोऽनुयोगः तस्य च दुग्धकार्यस्य प्रसिद्धिर्भवति । एवमिहापि यदि जीवलक्षणेन अजीवं प्ररूपयति, अजीवलक्षणेन वा जीवं ततोऽननुयोगो भवति, तं भावमन्यथा गृह्णाति, तेनार्थो विसंवदति, अर्थेन विसंवदता चारित्रं (विसंवदति), चरणेन मोक्षः, मोक्षाभावे दीक्षा निरर्थिका । अथ पुनर्जीवलक्षणेन जीवं प्ररूपयति, अजीवलक्षणेन अजीवं, ततोऽनुयोगः, तस्य च कार्यस्य सिद्धिर्भवति इति अविकलोऽर्थावगमस्ततश्चरणवृद्धिः, ततो मोक्ष इति, एष प्रथमदृष्टान्तः १ २ प्रतिष्ठाने नगरे शालिवाहनो राजा, स वर्षे वर्षे भृगुकच्छे नरवाहनं रुणद्धि, यदा च वर्षारात्रः प्राप्तो (भवेत्) तदा स्वकं नगरं प्रतियाति, एवं कालो व्रजति, अन्यदा तेन राज्ञा रोधकेन (रोद्धुं) गतेन आस्थानमण्डपिकायां निष्ठ्यूतं, तस्य च प्रतिग्रहधारिणी कुब्जा, अपरिभोगा एषा भूमिः, नूनं राजा यातुकामः, तस्याश्च राजकुलगो यानशालिकः परिचितः, तया तस्मै शिष्टं, स प्रगे यानानि प्रमार्ष्ट्य प्रवर्त्तितवान्

तं' दट्ठूण सेसओ खंधावारो पट्ठिओ, राया रहंमि एकल्लो· धूल्लादिभया गच्छिस्सामिति पए पयट्टो, जाव सव्वोऽवि खंधावारो पट्ठितओ दिट्ठो, राया चिंतेति–ण मया कस्सवि कथितं, कहमेतेहिं णायं?, गविट्ठं परंपरएण जाव खुज्जत्ति, खुज्जा पुच्छिता, ताए तह चेव अक्खायं, एस अणणुओगो, तीसे मंडवियाए खेत्त चेव चिन्तिज्जति, विवरीओ अणुओगो, एवं णिप्पदेसमेगन्तणिच्चमेगमागासं पडिवज्जावेंतस्स अणणुओगो, सप्पएसादि पुण पडिवज्जावेंतस्स अणुओगोत्ति ॥ २ ॥

कालाननुयोगानुयोगयोः स्वाध्यायोदाहरणं—ऐक्को साधू पादोसियं परियट्टंतो रहसेणं कालं ण याणति, सम्मद्दिट्ठिगा य देवया तं हितट्ठयाए बोधेति मिच्छादिट्ठियाए भएणं, सा तक्कस्स घडियं भरेउं महया महया सद्देणं घोसेति–महितं महितंति, सो तीसे कण्णरोडयं असहंतो भणति–अहो तक्कवेलत्ति, सा पडिभणति–जहा तुज्झं सज्झायवेलत्ति, ततो साहू उवउंजिऊण

१ त दृष्ट्वा शेष स्कन्धावार प्रस्थित, राजा रहसि एकको धूल्यादिभयात् गमिष्यामीति प्रगे प्रवृत्त (गन्तु), यावत् सर्वोऽपि स्कन्धावार प्रस्थितो दृष्ट, राजा चिन्तयति–न मया कस्मैचिदपि कथित, कथमेतैर्ज्ञातम्? गवेषित परम्परकेण यावत्कुब्जेति, कुब्जा पृष्टा, तया तथैवाख्यात, एषोऽननुयोग, तस्या मण्डपिकाया क्षेत्रमेव चिन्तयेदिति, विपरीतोऽनुयोग, एव निष्प्रदेशमेकान्तनित्यमेकमाकाश प्रतिपाद्यमानस्य अननुयोग, सप्रदेशादि पुन प्रतिपाद्यमानस्य अनुयोग इति। २ एकः साधु प्रादोषिक परिवर्तयन् रभसा काल न जानाति, सम्यग्दृष्टिका च देवता तं हितार्थाय बोधयति मिथ्यादृष्टिकाया भयेन सा तक्रस्य घटिकां भृत्वा महता महता शब्देन घोषयति–मथित मथितमिति, स तस्या कर्णरोटक (राटि) असहमानो भणति–अहो तक्रवेलेति, सा प्रतिभणति–यथा तव स्वाध्यायवेलेति, तत साधुरुपयुज्य

मिच्छामिदुक्कडं भणति, देवताए अणुसासिओ–मा पुणो एवं काहिसि, मा मिच्छद्दिट्ठियाए छलिहिज्जिसि, एस अणणुओगो, काले पढियव्वं तो अणुओगो भवति ॥ ३ ॥

इदानीं वचनविषयं दृष्टान्तद्वयमननुयोगानुयोगयोः प्रदर्श्यते–तत्र प्रथमं बधिरोल्लापोदाहरणम्—ऐगंमि गामे बहिरकुडुंबयं परिवसति, थेरो थेरी य, ताणं पुत्तो तस्स भज्जा, सो पुत्तो हलं वाहेति, पथिएहि पंथं पुच्छितो भणति–घरजायगा मज्झ एते बइल्ला, भज्जाए य से भत्तं आणीयं, तीसे कथेति जहा–बइल्ला सिंगिया, सा भणति–लोणितमलोणितं वा, माताए ते सिद्धयं, सासूए कहियं, सा भणति–थूलं वा वरडं वा वा थेरस्स पोत्तं होहिइ, थेरं सद्दावेइ, 'थेरो भणइ–पिउं ते जीएणं, एगंपि तिलं न खामि, एवं जदि एगवयणे परूवितव्वे दुवयणं परूवेति, दुवयणे वा एगवयणं तो अणणुओगो, अह तहेव परूवेति, अणुओगो ॥ ४ ॥

१ मिथ्या मे दुष्कृत भणति, देवतयाऽनुशिष्टः–मा पुनरेव कार्षी, मा मिथ्यादृष्टया चीच्छल, एषोऽननुयोग, काले पठितव्य तदाऽनुयोगो भवति। २ एकस्मिन् ग्रामे बधिरकुटुम्बक परिवसति, स्थविर. स्थविरा च, तयो पुत्र तस्य भार्या, स पुत्रो हल वाहयति, पथिकै पन्थान. पृष्टो भणति–गृहजातौ ममैतौ बलीवर्दौ, भार्यया च तस्य भक्तमानीत, तस्यै कथयति यथा–बलीवर्दौ शृङ्गितौ, सा भणति–लोणित (सलवण) अलोणित वा, मात्रा ते साधित श्वश्र्वै कथित, सा भणति–स्थूल वा रूक्ष वा स्थविरस्य पोतिका भविष्यति, स्थविर शब्दयति, स्थविरो भणति–पिबामि (शपथ) ते जीवित (तेन) एकमपि तिल न खादामि, एव यद्येकवचने प्ररूपयितव्ये द्विवचन प्ररूपयति द्विवचने वा एकवचन तदाऽननुयोग, अथ तथैव प्ररूपयति तदाऽनुयोग

ग्रामेयकोदाहरणं द्वितीयं वचन एव, प्रस्तुतानुयोगप्राधान्यख्यापनार्थमिति। एगंमिं नयरे एगा महिला, सा भत्तारे मए कट्ठादीणिवि ताव अक्कीयाणि, घोच्छामोत्ति अजीवमाणी खुड्डयं पुत्तं घेत्तुं गामे पवुत्था, सो दारओ वड्ढंतो मायरं पुच्छति–कहिं मम पिता?, मओ त्ति, सो केणं जीवितोइतो?, भणति–ओलग्गाए, तो भणइ–अहंपि ओलग्गामि, सा भणति–ण जाणिहिमि ओलग्गिउं, तो कहं ओलग्गिज्जइ?, भणिओ–विणयं करिज्जामि, केरिसो विणओ?, जोक्कारो कायव्वो णीयं चंकमियव्वं छदाणुवत्तिणा होयव्वं, सो णगरं पधाविओ, अंतरा णेण वाहा मिगाणं णिलुक्का दिट्ठा, वड्डेणं सद्देणं जोक्कारोत्ति भणितं, तेणं सद्देण मआ पलाणा, तेहि घेत्तुं पहतो, सब्भावो णेण कहिओ, भणितो तेहिं–जदा एरिसं पेच्छेज्जासि, तदा णिलुक्कतेहिं णीयं आगंतव्वं, ण य उल्लविज्जति, सणिअं वा, ततो णेण रयगा दिट्ठा, ततो णिलुक्कंतो सणिअं एति, तेसिं च रयगाणं पोत्ता हीरति, थाणयं वद्धं, रक्खंति, एस चोरोत्ति वंधिओ पिट्टिओ सब्भावे कहिए मुक्को,

१ एकस्मिन्नगरे एका महिला, सा भर्तरि मृते काष्ठादीन्यपि तावद्विक्रीतवती, गदिता स्म इति अजीवन्ती क्षुल्लक पुत्र गृहीत्वा ग्राम प्रोषिता, स दारको वर्धमान मातर पृच्छति–क्व मम पिता?, मृत इति, स केन जीविकायित। भणति–अवलगनया, ततो भणति–अहमपि अवलगामि, सा भणति–न जानासि अवलगितु, तत कथमवलग्यते?, भणित–विनय कुर्या, कीदृशो विनय?, जोत्कार (जयोत्कार) कर्तव्य नीचैर्गन्तव्य छन्दोऽनुवृत्तिना भवितव्य, स नगर प्रधावित, अन्तरा अनेन व्याधा मृगेभ्य (मृगान् ग्रहीतु) निलीना दृष्टा, बृहता शब्देन जोत्कार इति भणित, तेन शब्देन मृगा पलायिता, तैर्गृहीत्वा प्रहत, सद्भावोऽनेन कथित, भणितस्तै–यदेतादृश पश्येस्तदा निलीयमानेन गन्तव्य, न च उल्लाप्यते, शनै शनैर्वा, ततोऽनेन रजका दृष्टा, ततो निलीयमान शनै गच्छति, तेषा च रजकाना वस्त्राणि ह्रियन्ते, स्थान बद्ध, रक्षन्ति, एष चौर इति बद्ध पिट्टित सद्भावे कथिते मुक्त,

तेहिं[1] भणितं–सुद्धं भवतु, एगत्थ बीयाणि वाविज्जंति, तेण भणिअं–सुद्धं भवतु, तेहिवि पिट्टिओ, सब्भावे कहिए मुक्को, एरिसे–बहुं भवतु भंडं (डिं) भरेह एयस्स, अण्णत्थ मडयं णीणिज्जंतं दट्ठुं भणति–बहु भवतु एरिसं, तत्थवि हतो, सब्भावे कहिए मुक्को भणितो एरिसे वुच्चति–अच्चंतविओगो भवतु एरिसेणं, अण्णत्थ विवाहे भणइ–अच्चंतविओगो भवतु एरिसेणं, तत्थवि हतो, सब्भावे कहिए भणितो–एरिसे(सा)णं णिच्चं पिच्छया होह सासयं च भवतु एयं, अण्णत्थ णिअलबद्धयं दंडिअं दट्ठूण भणति–णिच्चं एयारिसाण पेच्छंतओ होहि, सासतं च ते भवतु, तत्थवि हतो सब्भावे कहिए मुक्को–एयाओ भे लहुं मोक्खो भवतु, एयं भणिज्जसि, अण्णत्थ मित्ते संघाडं करेंति, तत्थ भणति–एयाओ भे लहु मोक्खो भवतु, तत्थवि हतो सब्भावे कहिते मुक्को एगस्स दंडगकुलपुत्तगस्स अलीणो, तत्थ सेवंतो अच्छति। अण्णया दुब्भिक्खे तस्स कुलपुत्तगस्स अंबिलजवागू सिद्धेल्लिया, भज्जाए से सो भणति–जाहि महायणमज्झाओ सद्देहि जो भुंजति सीतला अजोग्गा,

१ तैर्भणित–शुद्धं भवतु, एकत्र बीजानि उप्यन्ते, तेन भणितं–शुद्धं भवतु, तैरपि पिट्टित, सद्भावे कथिते मुक्त', एतादृशे–बहु भवतु भाण्डानि भरन्तु एतेन, अन्यत्र मृतकं नीयमान दृष्ट्वा भणति–बहु भवत्वेतादृशं, तत्रापि हत., सद्भावे कथिते मुक्तो भणित एतादृश उच्यते–अत्यन्त वियोगो भवत्वीदृशेन, अन्यत्र विवाहे भणति–अत्यन्त वियोगो भवत्वीदृशेन, तत्रापि हत, सद्भावे कथिते भणित'–ईदृशानां नित्य प्रेक्षका भवत शाश्वत च भवत्वेतत्, अन्यत्र निगडबद्धं दण्डिकं दृष्ट्वा भणति–नित्यमेतादृशानां प्रेक्षको भव, शाश्वत च ते भवतु, तत्रापि हत सद्भावे कथिते मुक्त, एतस्मात् भवतां लघु मोक्षो भवतु, एतत भणे, अन्यत्र मित्राणि सघाटक कुर्वन्ति, तत्र भणति–एतस्मात् भवता लघु मोक्षो भवतु, तत्रापि हत सद्भावे कथिते मुक्त एक दण्डिककुलपुत्रमालीन, तत्र सेवमानस्तिष्ठति। अन्यदा दुर्भिक्षे तस्य कुलपुत्रकस्य अम्लयवागू सिद्धा, भार्यया तस्य स भणित –याहि महाजनमध्यात् शब्दय यत् भुङ्क्ते शीतलाऽयोग्या,

तेण गंतुं सो भणिओ–एहि किराइं सीतलीहोति अंबेल्ली, सो लज्जितो, घरंगएण अंबाडिओ, भणितो–एरिसे कज्जे णीअं कण्णे कहिज्जइ, अण्णया घरं पलित्तं, ताहे गंतुं सणिअं कण्णे कहेति, जाव सो तहिं अक्खाउं गतो ताव घरं सवं झामिअं, तत्थावि अंबाडिओ भणिओ य–एरिसे कज्जे नवि गम्मति अक्खायएहिं, अप्पणा चेव पाणीयाइं काउं गोरसंपि छुब्भइ जहा तहा विज्झाउत्ति, अण्णया धुवंतस्स गोभत्तं छूढं। एवं जो अण्णंमि कहेयवे अण्णं कहेइ ताहे अणणुओगो भवति, सम्मं कहिज्जमाणे अणुओगो भवति ॥ सप्तैव च भवन्ति 'भावे' भावविषये, अननुयोगानुयोगयोः प्रतिपादकानि सप्तोदाहरणानि भवन्तीति गाथार्थः ॥ १३३ ॥ तानि चामूनि—

सावगभज्जा १ सत्तवइए २ अ कुंकुणगदारए ३ नउले ४।
कमलामेला ५ संबस्स साहसं ६ सेणिए कोवो ७ ॥ १३४ ॥

१ तेन गत्वा स भणित, एहि किल शीतलीभवति रब्बा, स लज्जित, गृहगतेन तिरस्कृत, भणित –ईदृशे कार्ये नीचै कर्णयो कथ्यते, अन्यदा गृह प्रदीप्त, तदा गत्वा शनै कर्णयो कथयति, यावत्स तत्राऽऽख्यातु गतस्तावद्गृह सर्वं ध्मात, तत्रापि तिरस्कृतो भणितश्च–ईदृशे कार्ये नैव गम्यते आख्यायकेन, आत्मनैव पानीयादि कृत्वा गोरस (गोभक्तादि) अपि क्षिप्यते, यथा तथा विध्यायतीति, अन्यदा धूपयत (उपरि) गोभक्त (छगणादि) क्षिप्त। एष योऽन्यस्मिन् कथयितव्ये अन्यत् कथयति तदाऽननुयोगो भवति, सम्यक् कथ्यमाने अनुयोगो भवति।

व्याख्या—तत्र श्रावकभार्योदाहरणं—सावगेण णिययभज्जाए वयंसिया विउविया दिट्ठा, अज्झोववण्णो, दुब्बलो भवति, महिलाए पुच्छिते निब्बंधे कए सिट्ठं, ताए भणितं–आणेमि, तेहिं चेव वत्थाभरणेहिं अप्पाणं णेवत्थित्ता अंधयारे अलीणा, अच्छितो, पच्छा बिइयदिवसे अधितिं पगतो वयं खंडियंति, ताए साभिण्णाणं पत्तियावितो। एवं जो ससमयवत्तवयं परसमयवत्तवयं भणति, उदइयभावलक्खणेणं उवसमियलक्खणं परूवेति, ताहे अणणुओगो भवति, सम्मं परूविज्जमाणे अणुओगोत्ति १।

सप्तभिः पदैर्व्यवहरतीति साप्तपदिकः—सत्तपदिगो एगंमि पच्चंतगामे एगो ओलग्गयमणूसो, साधुमाहणादीणं न सुणेति, ण वा अलीणति, ण वा सेज्जं देति, मा मम धम्मं कहेहिन्ति, ताहे मा सदओ होहामित्ति। अण्णया कया तं गामं साहुणो आगता, पडिस्सयं मग्गति, ताहे गोट्ठिलएहि एसो न देतित्ति सोवि एतेहिं पवंचिओ होउत्ति तस्स घरं चिंधिअं, जहा एरिसो तारिसो सावगोत्ति तस्स घरं जाह, तं गता पुच्छंता, दिट्ठो, जाव ण चेव आढाति, तत्थेक्केण साहुणा

१ श्रावकेण निजभार्याया वयस्या वकिया (उद्भूतरूपा) दृष्टा, अध्युपपन्नो, दुर्बलो भवति, महेलया पृष्टे निर्बन्धे कृते शिष्ट, तया भणित–आनयामि, तैरेव वस्त्राभरणैरात्मान नेपथ्ययित्वा अन्धकारे आलीना, स्थित, पश्चाद्द्वितीयदिवसे अधृतिं प्रगत व्रत खण्डितमिति, तया साभिज्ञान प्रत्यायित। एव य स्वसमयवक्तव्यता परसमयवक्तव्यता भणति, औदयिकभावलक्षणेनौपशमिकलक्षण प्ररूपयति, तदाऽननुयोगो भवति, सम्यक् प्ररूप्यमाणे अनुयोग इति। २ साप्तपदिक एकस्मिन् प्रत्यन्तग्रामे एकोऽवलगकमनुष्य साधुब्राह्मणादीनां न शृणोति न वा सेवते (आलीनोति) न वा शय्या ददाति, मा मे धर्मं चीकथन् इति तदा मा सदयो भूवमिति। अन्यदा कदाचित् त ग्राम साधव आगता, प्रतिश्रय मार्गयन्ति, तदा गोष्ठीकैरेष न ददातीति सोऽप्येभि प्रवञ्चितो भवत्विति तस्य गृह दर्शित यथा–ईदृशस्तादृशो वा श्रावक इति तस्य गृह यात, तद् गता पृच्छन्त, दृष्टो यावन्नैवाद्रियते, तत्रैकेन साधुना

भणिअं–जदि वा ण चेव सो एसो अहवा पवंचिता मोत्ति, तं सोऊण पुच्छिता तेण, कथितं जहा ! अम्हं कधितं एरिसो तारिसो सावगोत्ति, सो भणति–अहो अकज्जं, ममं तात्र पवंचतु, ता किं साधुणो पवंचितंत्ति, ताहे मा सारत्ता तेसि होउत्ति भणति–देमि पडिस्सयं एक्काए ववत्थाए–जदि मम धम्मं ण कहेह, साहहिं कहियं–एवं होउत्ति, दिण्णं घरं, वरिसारत्ते वित्ते आपुच्छंतेहिं धम्मो कहिओ, तत्थ ण किंचि तरइ घेत्तुं मूलगुणउत्तरगुणाणं मधुमज्जमंसविरतिं वा, पच्छा सत्तपदिवयं दिण्णं–मारेउकामेणं जावइएणं कालेणं सत्त पदा ओसक्किज्जंति एवइअं कालं पडिक्खितु मारेयव्वं, संवुज्झिस्सतित्तिकाउं, गता। अण्णया चोरो(रओ)गतो, अवसउणेणं णिअत्तो, रत्ति सणिअं घरं एति, तद्दिवसं च तस्स भगिणी आगएल्लिआ, सा पुरिसणेवत्थिआ भाउज्जायाए समं णोज्झपेक्खिया गया. ततो चिरेण आगया, णिद्दक्कंताओ तहेव एक्कंमि चेव सयणे सइयाओ, इअरो अ आगओ, ततो पेच्छति, परपुरिसोत्ति असिं करिसित्ता आहणेमित्ति,

१ भणित–यदि वा नैव स एषोऽथवा प्रवञ्चिता स्म इति, तच्छ्रुत्वा पृष्टास्तेन, कथित यथाऽस्माकं कथित ईदृशस्तादृश श्रावक इति, स भणति–अहो अकार्य, मां तावत्प्रवञ्चयतां, तत् किं साधव प्रवञ्च्यन्ते, मा तेषाममारता भूत् इति भणति–ददामि प्रतिश्रय एकया व्यवस्थया–यदि मह्य धर्म न कथयत, साधुभिः कथितम्–एव भवत्विति, दत्त गृह, वर्षारात्रे वृत्ते आपृष्टैर्धर्मः कथित , तत्र न किञ्चित् शक्नोति ग्रहीतुं मूलगुणोत्तरगुणानां मधुमद्यमांसविरतिं वा, पश्चात् सप्तपदिकव्रत दत्त, मारयितुकामेन यावता कालेन सप्त पदानि अवष्वष्क्यन्ते एतावन्त कालं प्रतीक्ष्य मारयितव्य, संभोत्स्यत इतिकृत्वा गता । अन्यदा चौरो ( भूत्वा ) गत , अपशकुनेन निवृत्त , रात्रौ शनैर्गृहमेति, तद्दिवसे च तस्य भगिनी आगता, सा पुरुषनेपथ्या भ्रातुर्जायया सम नृत्यविशेषमेक्षिता गता, ततश्चिरेणागता, निद्राक्रान्ते तथैवैकस्मिन्नेव शयने शयिते, इतरश्चागत , तत पश्यति, परपुरुष इत्यसिं कृष्ट्वा आहन्मीति *वरय काऊण

वेतं सुमरियं, ठितो सत्तपदंतरं, एअंमि अंतरे भगिणीअ से बाहा भज्जाए अक्कंतिआ, ताए दुक्खाविज्जंतियाए भणिअं हला! अवणेहि बाहाओ मे सीसं, तेण सरेण णाया भगिणी एसा मे पुरिसणेवत्थत्ति लज्जितो जातो, अहो मणागं मए अकज्जं न कयंति। उवणओ जहा सावगभज्जाए, संबुद्धो, विभासा, पव्वइओ २।

इदानीं कोङ्कणकदारकोदाहरणम्—कोंकणगविसए एक्को दारगो, तस्स माया मुया, पिता से अण्णमाहेलिअं ण लभति सवत्तिपुत्तो अत्थित्ति। अण्णदा सपुत्तो कट्ठाणं गतो, ताहेणेण चिंतिअं–एअस्स तणएण महिलं ण लभामि, मारेमित्ति कंडं खित्तं, आणत्तो–वच्च कंडं आणेहि, सो पहावितो, अण्णेणं कंडेणं विद्धो, चेडेण भणिअं–किं ते कंडं खित्तं, विद्धोमित्ति, पुणोवि खित्तं, रडन्तो मारिओ, पुव्वं अजाणतेण विद्धोमित्ति अणणुओगो, मारिज्जामित्ति एवं णाते अणुओगो, अहवा सारक्खणिज्जं मारेमित्ति अणणुओगो, सारक्खंतस्स अणुओगो। जहा सारक्खणिज्जं मारेंतो विपरीतं करेति,

१ मत स्मृत, स्थित सप्तपदान्तर, अत्रान्तरे भगिन्यास्तस्य भुजो भार्ययाऽऽक्रान्त , तया दु खितया ( दु खयन्त्या ) भणितम्–हले ! अपनय भुजाया मे शिर ,तेन स्वरेण ज्ञाता भगिनी एषा मे पुरुषनेपथ्येति लज्जितो जात , अहो मनाक् ( विलम्बेन ) मया अकार्य न कृतमिति। उपनयो यथा श्रावकभार्यया, संबुद्धो, विभाषा, प्रव्रजित । २ कोङ्कणकविषये एको दारक , तस्य माता मृता, पिता तस्य अन्यमहेलां न लभते सपत्नीपुत्रोऽस्तीति, अन्यदा सपुत्र काष्ठेभ्यो गत , तदाऽनेन चिन्तित–एतेन तनयेन महेलां न लभे, मारयामीति शर क्षिप्त , आज्ञप्त –व्रज शरमानय, स प्रधावित , अन्येन शरेण विद्ध , चेटकेन ( दारकेण ) भणित–किं त्वया शर क्षिप्त ,? विद्धोऽस्मीति, पुनरपि क्षिप्त , रटन् मारित , पूर्वमजानता विद्धोऽस्मीति ( पुत्रविचारे ) अननुयोग , मार्येऽहमित्येव ज्ञाते अनुयोग , अथवा सरक्षणीय मारयामीति अननुयोग ( पितु ) सरक्षत. अनुयोग । य ा सरक्षणीय मारयन् विपरीत करोति,

एवं अण्णं परूवेयव्वं अण्णं परूवेमाणस्स विपरीतत्वात् अणणुओगो भवति, जहाभूतं परूवेमाणस्स अणुओगो भवति ३।

णउले उदाहरणं—एगा चोरगभडिया गब्भिणी जाया, अण्णावि णउलिया गब्भिणी चेव, तत्थ एगाए राईए ताओ सरिसिआओ पसूआओ, ताए चिंतिअं–मम पुत्तस्स रमणओ भविस्सइ, तस्स पीहयं खीरं च देति। अण्णआ तीसे अविरतिआए खडंतीए जत्थ मंचुलिआए सो डिक्करओ उत्तारितो, तत्थ सप्पेणं चडित्ता खइतो मतो, इतरेण णउलेण ओयरंतो दिट्ठो मंचुलिआओ सप्पो, ततो णेणं खंडाखंडिं कतो, ताहे सो तेण रुहिरलित्तेणं तुंडेणं तीसे अविरतियाए मूलं गतूण चाडूणि करेइ, ताए णायं–एतेण मम पुत्तो खइओ, मुसलेण आहणित्ता मारितो, ताहे धावंती गया पुत्तस्स मूलं, जाव सप्पं खंडाखंडीकयं पासति, ताहे दिगुणतरं अधितिं पगता। तीसे अविरइआए पुव्विं अणणुओगो पच्छा अणुओगो, एवं जो अण्णं परूवेयव्वं अण्णं परूवेति सो अणणुओओ, जो तं चेव परूवेति तस्स अणुओगो ४।

१ एवमन्यत्प्ररूपयितव्य ( यत्र तत्र ) अन्यत् प्ररूपयत विपरीतत्वात् अननुयोगो भवति, यथाभूत प्ररूपयत अनुयोगो भवति २ नकुलविषयमुदाहरण—एका चारकभट्टिनी ( भर्तृका ) गर्भिणी जाता, अन्याऽपि नकुलिका गर्भिणी चैव, तत्रैकस्यां रात्रौ ते युगपत् प्रसूते, तया चिन्तित–मम पुत्रस्य रमणको भविष्यति, तस्मै स्तन्य (पृथुक) क्षीर च दत्ते। अन्यदा तस्या अविरत्यां कण्डयन्त्यां यत्र मञ्चिकाया स पुत्र अवतारित (शायित ), तत्र सर्पेण चटित्वा खादित ( दष्ट ) मृत , इतरेण नकुलकेनावतरन् दृष्ट. मञ्चिकाया सर्पः, ततस्तेन खण्डखण्डीकृत , तदा स तेन रुधिरलिप्तेन तुण्डेन तस्या अविरत्या मूल गत्वा चाटूनि करोति, तया ज्ञात–एतेन मम पुत्रः खादित , मुशलेनाहत्य मारित , तदा धावन्ती गता पुत्रस्य मूल, यावत्सर्प खण्डखण्डीकृत पश्यति, तदा द्विगुणामधृतिं प्रगता। तस्या अविरते पूर्वमननुयोग. पश्चादनुयोग , एव योऽन्यत् प्ररूपयितव्यमन्यत् प्ररूपयति सोऽननुयोग यस्तदेव प्ररूपयति तस्य अनुयोगः।

कमलामेलाउदाहरणं—बारवईए बलदेवपुत्तस्स निसढस्स पुत्तो सागरचंदो रूवेणं उक्किट्ठो, सव्वेसिं संबादीणं इट्ठो, तत्थ य बारवईए वत्थव्वस्स चेव अण्णस्स रण्णो कमलामेलानाम धूआ उक्किठसरीरा, सा य उग्गसेणपुत्तस्स णभसेणस्स वरेलिया, इतो य णारदो सागरचंदस्स कुमारस्स सगासं आगतो, अब्भुट्ठिओ, उवविट्ठे समाणे पुच्छति—भगवं ! किंचि अच्छेरयं दिट्ठं ?, आमं दिट्ठं, कहिं ? कहेह, इहेव बारवईए कमलामेलाणाम दारिया, कस्सइ दिण्णिआ?, आमं, कथं मम ताए समं संपओगो भवेज्जा ?, ण याणामित्ति भणित्ता गतो। सो य सागरचंदो तं सोऊण णवि आसणे णवि सयणे धितिं लभति, तं दारियं फलए लिहंतो णामं च गिण्हंतो अच्छति, णारदोऽवि कमलामेलाए अंतिअं गतो, ताएवि पुच्छिओ—किंचि अच्छेरयं दिट्ठपुव्वंति, सो भणति—दुवे दिट्ठाणि, रूवेण सागरचंदो विरूवत्तणेण णभसेणओ, सागरचंदे मुच्छिता णहसेणए विरत्ता, णारएण समासासिता, तेण गंतुं आइक्खितं—जहा इच्छतित्ति। ताहे सागरचंदस्स माता अण्णे अ

१ कमलामेलोदाहरण—द्वारिकायां बलदेवपुत्रस्य निषधस्य पुत्र सागरचन्द्र रूपेणोत्कृष्ट, सर्वेषां शाम्बादीनामिष्ट, तत्र च द्वारिकायां वास्तव्यस्यैव अन्यस्य राज्ञ कमलामेलानाम्नी दुहिता उत्कृष्टशरीरा, सा चोग्रसेनपुत्रेण नभःसेनेन वृता, इतश्च नारद सागरचन्द्रस्य कुमारस्य सकाशं (पार्श्वं) आगत, अभ्युत्थित, उपविष्टे सति पृच्छति—भगवन् ! किञ्चिदाश्चर्यं दृष्टम् ? ॐ दृष्ट, क कथयत, इहैव द्वारिकायां कमलामेलानाम्नी दारिका, कस्मैचिद्दत्ता ?, ॐ, कथ मम तया समं संप्रयोगो भवेत् ?, न जानामीति भणित्वा गत.। स च सागरचन्द्र. तत् श्रुत्वा नाप्यासने नापि शयने धृति लभते, तां दारिकां फलके लिखन् नाम च गृह्णन् तिष्ठति, नारदोऽपि कमलामेलाया अन्तिक गत, तयाऽपि पृष्ट (सुखवृत्तान्त), किञ्चिदाश्चर्यं दृष्टपूर्वमिति, स भणति—द्वे दृष्टे रूपेण सागरचन्द्र विरूपतया नभःसेन, सागरचन्द्रे मूर्छिता, नभःसेने विरक्ता, नारदेन समाश्वासिता, तेन गत्वाऽऽख्यात—यथेच्छतीति, तदा सागरचन्द्रस्य माता अन्ये च

कुमारा आदण्णा मरइत्ति. संबो आगतो जाव पेच्छति सागरचंदं विलवमाणं, ताहे णेण पच्छतो ठाइऊण अच्छीणि दोहिवि हत्थेहि छादिताणि, सागरचंदेण भणितं—कमलामेलत्ति, संवेण भणितं—णाहं कमलामेला, कमलामेलोऽहं, सागरचंदेण भणितं—आमं तुमं चेव ममं विमलकमलदललोअणिं कमलामेलं मेलिहिसि, ताहे तेहिं कुमारेहिं संबो मज्जं पाएत्ता अब्भुवगच्छाविओ, विगतमदो चिंतेति—अहो मए आलो अब्भुवगओ, इदाणीं किं सक्कमण्णहाकाउं?, णिव्वहियव्वंति पज्जुण्णं पण्णत्तिं मग्गिऊण जंदिवसं तस्स णभसेणस्स विवाहदिवसो तद्दिवसं ते सागरचंदसंबप्पमुहा कुमारा उज्जाणं गंतुं णारदस्स सरहस्सं दारिया सुरंगाए उज्जाणं णेत्तुं सागरचंदो परिणाविओ, ते तत्थ किड्डुंता अच्छंति। इतरे य तं दारियं ण पेच्छंति, मग्गंतेहिं उज्जाणे दिट्ठा, विज्जाहररूवा विउव्विया, णारायणो सबलो णिग्गओ, जाव अपच्छिमं संबरूवेणं पाएसु पडिओ, सागरचंदस्स चेव दिण्णा, णभसेण तणया अ खमाविया । एत्थ सागरचंदस्स

१ कुमाराः खिन्ना म्रियत इति, शाम्ब आगतो यावत्प्रेक्षते सागरचन्द्र विलपन्तं, तदाऽनेन पश्चात्स्थित्वा अक्षिणी द्वाभ्यामपि हस्ताभ्यां छादिते, सागरचन्द्रेण भणित—कमलामेलेति, शाम्बेन भणित—नाह कमलामेला कमलामेलोऽह, सागरचन्द्रेण भणित—एव त्वमेव मां विमलकमलदललोचनां कमलामेलां मेलयिष्यसि, तदा तै कुमारै शाम्बो मद्य पाययित्वाऽभ्युपगमित., विगतमदश्चिन्तयति—अहो मयाऽऽलमभ्युपगत, इदानीं किं शक्यमन्यथाकर्तुं, निर्वहणीयमिति प्रद्युम्न प्रज्ञप्तिं मार्गयित्वा यद्दिवसे तस्य नभःसेनस्य विवाहदिवस तस्मिन् दिवसे ते सागरचन्द्रशाम्बप्रमुखा कुमारा उद्यान गत्वा नारदेन सरहस्य दारिका सुरङ्गया उद्यानं नीत्वा सागरचन्द्र परिणायित, ते तत्र क्रीडन्तस्तिष्ठन्ति। इतरे च तां दारिकां न प्रेक्षन्ते, मार्गयद्भिरुद्याने दृष्टा, विद्याधररूपाणि विकुर्वितानि, नारायण सबलो निर्गत, यावत्प्रान्ते शाम्बरूपेण पादयो पतित, सागरचन्द्रायैव दत्ता, नभःसेनतनयाश्च क्षमिता। अत्र सागरचन्द्रस्य

संबं[१] कमलामेलं मण्णमाणस्स अणणुओगो णाहं कमलामेलेति भणिते अणुओगो, एवं जो विवरीयं परूवेति तस्स अणणुओगो जहाभावं परूवेमाणस्स अणुओगो ५।

संबस्स साहसोदाहरणं—जंबूवई णारायणं भणति—एक्कावि मए पुत्तस्स अणाडिया ण दिट्ठा, णारायणेण भणितं—अज्ज दाएमि, ताहे णारायणेण जंबूवतीअ आभीरीरूवं कयं, दोवि तक्कं घेत्तुं बारवईमोइण्णाणि, महियं विक्किणंति, संबेण दिट्ठाणि, आभीरी भणिता—एहि महिअं कीणामित्ति, सा अणुगच्छति, आभीरो मग्गेण एति, सो एक्कं देउलिअं पविसइ, सा आभीरी भणति—णाहं पविसामि किंतु मोल्लं देहि तो एत्थ चेव ठितो तक्कं गेण्हाहि, सो भणति—अवस्स पविसितव्वं, सा णेच्छति, ताहे हत्थे लग्गो, आभीरो उद्धाइऊण लग्गो संबेण समं, संबो आवट्टितो, आभीरो वासुदेवो जातो इतरी जंबूवती, अंगुट्ठीकाऊण पलातो, विईयदिवसे मड्डाए आणिज्जंतो खीलयं घडंतो एइ, जोक्कारे कए वासुदेवेण

१ शाम्ब कमलामेलां मन्यमानस्यानुयोगो नाह कमलामेलेति भणितेऽनुयोग, एव यो विपरीत प्ररूपयति तस्याननुयोगो यथाभाव प्ररूपयत अनुयोग। २ शाम्बस्य साहसोदाहरणम्—जम्बूवती नारायण भणति—एकाऽपि मया पुत्रस्य अनादतिर्न दृष्टा, नारायणेन भणितम्—अद्य दर्शयामि, तदा नारायणेन जम्बूवत्या आभीरीरूप कृत, द्वावपि तक्र गृहीत्वा द्वारिकामवतीर्णौ, गोरस विक्रीणीत, शाम्बेन दृष्टौ, आभीरी भणिता—एहि गोरसं क्रीणामीति, साऽनुगच्छति, आभीर पृष्ठत एति, स एकं देवकुल प्रविशति, साऽऽभीरी भणति—नाह प्रविशामि, किंतु मूल्य ददास्तदाऽत्रैव स्थितस्तक्र गृहाण, स भणति—अवश्य प्रवेष्टव्य, सा नेच्छति, तदा हस्ते लग्न, आभीर उद्धाव्य लग्नः शाम्बेन सम, शाम्बोऽप्यावृत्त, आभीरो वासुदेवो जात इतरा जम्बूवती अङ्गुष्ठी- (शिरोऽवगुण्ठन) कृत्वा पलायित, द्वितीयदिवसे बलात्कारेण आनीयमान. कीलक घटयन् एति, जयोत्कारे कृते वासुदेवेन

पुच्छिओ—किं एयं घडिज्जतित्ति, भणति—जो पारिओसियं घोलं काहिति तस्स मुहे खोट्टिज्जिहित्ति । पढमं अणणुओगो णोत अणुओगो, एवं जो विवरीयं परूवेति तस्स अणणुओगो इतरस्स अणुओगो ६ ।

श्रेणिकविषयकोपोदाहरणं—रायगिहे णगरे सेणिओ राया, चेल्लणा तस्स भज्जा, सा वद्धमाणसामिमपच्छिमतित्थगरं वंदित्ता वेयालियं माहमासे पविसति, पच्छा साहू दिट्ठो पडिमापडिवण्णओ, तीए रत्तिं सुत्तिआए हत्थो किहवि विलंबिओ, जया सीतेण गहिओ तदा चेतितं, पवेसितो हत्थो, तस्स हत्थस्स तणएणं सव्वं सरीरं सीतेण गहिअं, तीए भणिअं—स तवस्सी किं करिस्सति संपयं? । पच्छा सेणिएण चिंतियं—संगारदिण्णओ मे कोई, रुट्ठेण कल्लं अभओ भणिओ—सिग्घं अंतेउरं पलीवेहि, सेणिओ गतो सामिसगासं, अभएण हत्थिसाला पलीविया, सेणिओ सामिं पुच्छति—चेल्लणा किं एगपत्ती अणेगपत्ती?, सामिणा भणिअं-एगपत्ती,

१ पृष्ट—किमेतत् घट्यते इति, भणति—यः पर्युषित घृतान्तोलापं करिष्यति तस्य मुखे क्षेप्स्यते इति । प्रथममननुयोगः ज्ञाते अनुयोगः, एवं यो विपरीत प्ररूपयति तस्याननुयोग इतरस्य अनुयोग २ राजगृहे नगरे श्रेणिको राजा चेल्लना तस्य भार्या, सा वर्धमानस्वामिनमपश्चिमतीर्थंकरं वन्दित्वा विकाले माघमासे प्रविशति, पश्चात् साधुर्दृष्ट प्रतिपन्नप्रतिम', तस्या रात्रौ सुप्ताया हस्त' कथमपि विलम्बित (बहिः स्थित') यदा शीतेन गृहीतः तदा चेतितं, प्रवेशितो हस्त , तस्य हस्तस्य सम्बन्धिना सर्वं शरीर शीतेन गृहीत, पश्चात् तया भणित—स तपस्वी किं करिष्यति साम्प्रतं?, पश्चात् श्रेणिकेन चिन्तितं—दत्तसङ्केतोऽस्याः कश्चित्, रुष्टेन कल्येऽभयो भणित'—शीघ्रमन्त पुर प्रदीपय, श्रेणिको गतः स्वामिसकाशं, अभयेन हस्तिशाला प्रदीपिता, श्रेणिक स्वामिनं पृच्छति—चेल्लना किमेकपत्नी अनेकपत्नी?, स्वामिना भणित—एकपत्नी,

ताहे मा डज्झिहितित्ति तुरितं णिग्गओ, अभओ णिप्फिडति, सेणिएणं भणिअं—पलीवितं ?, सो भणति—आमं, तुमं किं ण पविट्ठो ?, भणति—अहं पव्वइस्सामि किं मे अग्गिणा ?, पच्छा णेण चिंतिअं—मा छड्डिज्जिहितित्ति भणितं—ण डज्झत्ति । सेणियस्स चेल्लणाए पुव्विं अणणुओगो पुच्छिए अणुओगो, एवं विवरीए परूविए अणणुओगो जहाभावे परूविए अणुओगो ७ ॥ १३४ ॥ इत्थं तावदनुयोगः सप्रतिपक्षः प्रपञ्चेनोक्तः, नियोगोऽपि पूर्वप्रतिपादितस्वरूपमात्रः सोदाहरणोऽनुयोगवदवसेयः, साम्प्रतं प्रागुपन्यस्तभाषादिस्वरूपप्रतिपादनायाह—

**कट्ठे १ पुत्थे २ चित्ते ३ सिरिघरिए ४ पुंड ५ देसिए ६ चेव । भासगविभासए वा वत्तीकरणे अ आहरणा ॥ १३५ ॥**

व्याख्या—तत्र 'काष्ठ' इति काष्ठविषयो दृष्टान्तः, यथा काष्ठे कश्चित् तद्रूपकारः खल्वाकारमात्रं करोति, कश्चित्स्थूलावयवनिष्पत्तिं, कश्चित् पुनरशेषाङ्गोपाङ्गाद्यवयवनिष्पत्तिमिति, एवं काष्ठकल्पं सामायिकादिसूत्रं, तत्र भाषकः परिस्थूरमर्थमात्रमभिधत्ते—यथा समभावः सामायिकमिति, विभाषकस्तु तस्यैवानेकधाऽर्थमभिधत्ते—यथा समभावः सामायिकं, समानां वा आयः समायः स एव स्वार्थिकप्रत्ययविधानात्सामायिकमित्यादि, व्यक्तीकरणशीलो व्यक्तिकरः, यः खलु निरवशेषव्युत्पत्त्यतिचारानतिचारफलादिभेदभिन्नमर्थं भाषते स व्यक्तिकर इति, स निश्चयतश्चतुर्दशपूर्वविदेव, इह च

१ तदा मा दाहीति त्वरित निर्गतः, अभयो निस्सरति, श्रेणिकेन भणित—प्रदीपित ?, स भणति—आमं, त्व किं न प्रविष्ट ?, भणति—अहं प्रव्रजिष्यामि किं ममाग्निना ? पश्चादनेन चिन्तित—मा त्याक्षीदिति भणित—न दग्धेति । श्रेणिकस्य चेल्लनाया पूर्वमननुयोग पृष्टेऽनुयोग, एवं विपरीते प्ररूपितेऽननुयोग यथाभावे प्ररूपिते अनुयोगः ।

भाषकादिस्वरूपव्याख्यानात् भाषादय एव प्रतिपादिता द्रष्टव्याः, कुतः ?, भाषादीनां तत्प्रभवत्वात् १ । इदानीं पुस्तविषयो दृष्टान्तः—यथा पुस्ते कश्चिदाकारमात्रं करोति, कश्चित् स्थूरावयवनिष्पत्तिं, कश्चित्त्वशेषावयवनिष्पत्तिमिति, दार्ष्टान्तिकयोजना पूर्ववत् २ । इदानीं चित्रविषयो दृष्टान्तः—यथा चित्रकर्मणि कश्चित् वर्त्तिकाभिराकारमात्रं करोति, कश्चित्तु हरितालादिवर्णोद्भेदं, कश्चित्त्वशेषपर्यायैर्निष्पादयति, दार्ष्टान्तिकयोजना पूर्ववत् ३ । श्रीगृहिकोदाहरणं—श्रीगृहं—भाण्डागारं तदस्यास्तीति 'अत इनिठनौ' (५–२–११५) इति ठनीकादेशे च कृते श्रीगृहिक इति भवति, तद्दृष्टान्तः—तत्र कश्चिद् रत्नानां भाजनमेव वेत्ति—इह भाजने रत्नानीति, कश्चित्तु जातिमाने अपि, कश्चित्पुनर्गुणानपि, एवं प्रथमद्वितीयतृतीयकल्पा भाषकादयो द्रष्टव्याः ४ । तथा 'पोंडं' इति पुण्डरीकं पद्मं तद् यथेषद्भिन्नार्धभिन्नविकसितरूपं त्रिधा भवति, एवं भाषादि विज्ञेयं ५ । इदानीं देशिकविषयमुदाहरणं—देशनं देशः कथनमित्यर्थः, तदस्यास्तीति देशिकः—यथा कश्चिद्देशिकः पन्थानं पृष्टः दिङ्मात्रमेव कथयति, कश्चित् तद्व्यवस्थितग्रामनगरादिभेदेन, कश्चित् पुनस्तदुत्थगुणदोषभेदेन कथयतीति, दार्ष्टान्तिकयोजना पूर्ववत् ज्ञेया ६ । एवमेतानि भाषकविभाषकव्यक्तिकरविषयाण्युदाहरणानि प्रतिपादितानि इति गाथार्थः ॥ १३५ ॥ इत्थं तावद्विभाग उक्तः, इदानीं द्वारविधिमवसरप्राप्तं विहाय व्याख्यानविधिं प्रतिपादयन्नाह—

**गोणी १ चंदणकंथा २ चेडीओ ३ सावए ४ बहिर ५ गोहे ६ । टंकणओ ववहारो ७, पडिवक्खो आयरियसीसे ॥ १३६ ॥**

आह—चतुरनुयोगद्वारानधिकृतो व्याख्यानविधिः किमर्थं प्रतिपाद्यत इति, उच्यते, शिष्याचार्ययोः सुखश्रवणसुखव्याख्यानप्रवृत्त्या शास्त्रोपकारार्थः, अथवा अधिकृत एव वेदितव्यः, कुतः ?, अनुगमान्तर्भावात्, अन्तर्भावस्तु

व्याख्याङ्गत्वात् इति । आह—यद्यसावनुगमाङ्गं ततः किमित्ययं द्वारविधेः पूर्वं प्रतिपाद्यते?, उच्यते, द्वारविधेरपि बहुवक्तव्यत्वात् मा भूदिहापि व्याख्याविधेर्विपर्ययः, अतोऽत्रैव आचार्यशिष्ययोर्गुणदोषाः प्रतिपाद्यन्ते, येन आचार्यो गुणवते शिष्यायानुयोगं करोति, शिष्योऽपि गुणवदाचार्यसन्निधावेव शृणोतीति । आह—यद्येवं व्याख्यानविधिरनुगमाङ्गं इहावतार्योच्यते तत्कथं द्वारगाथायामप्येवं नोपन्यस्त इति, उच्यते, सूत्रव्याख्यानस्य गुरुत्वख्यापनार्थं, विशेषेण सूत्रव्याख्यायां आचार्यः शिष्यो वा गुणवानन्वेष्टव्य इत्यलं विस्तरेण, प्रकृतं प्रस्तुमः—प्रक्रान्तगाथाव्याख्या—तत्र गोदृष्टान्तः, एते चाचार्यशिष्ययोः संयुक्ता दृष्टान्ताः, एक आचार्यस्य एकः शिष्यस्येति द्वौ वा एकस्मिन्नेवावतार्याविति ।

एगंमि[1] णगरे एगेण कस्सइ धुत्तस्स सगासाओ गावी रोगिता उद्वितुंपि असमत्था णिविट्ठा चेव किणिता, सो तं पडिविक्किणति, कायगा भणंति—पेच्छामो से गतिपयारं तो किणीहामो, सो भणति—मएवि उवविट्ठा चेव गहिया, जदि पडिहाति ता तुम्हेवि एवमेव गिण्हह । एवं जो आयरिओ पुच्छितो परिहारंतरं दाउमसमत्थो भणति—मएवि एवं सुयं तुम्हेवि एवं सुणहत्ति, तस्स सगासे ण सोअव्वं, संसइयपयत्थंमि मिच्छत्तसंभवा, जो पुण

---

१ एकस्मिन्नगरे एकेन कस्यचिद्धूर्तस्य सकाशाद्गौरोगिणी उत्थातुमप्यसमर्था निविष्टैव क्रीता, स तां प्रतिविक्रीणाति, क्रायका भणन्ति—प्रेक्षामहेऽस्या गतिप्रचारं, ततः क्रेष्यामः, स भणति—मयाऽपि उपविष्टैव गृहीता, यदि प्रतिभाति तदा यूयमपि एवमेव गृह्णीत । एवं य आचार्यः पृष्टः परिहारान्तरं दातुमसमर्थो भणति—मयाऽपि एवं श्रुतं यूयमपि एवं शृणुतेति, तस्य सकाशे न श्रोतव्यं, सांशयिकपदार्थे मिथ्यात्वसम्भवात्, यः पुन–

अविकलगोविक्किणगो इव अक्खेवणिण्णयपसंगपारगो तस्स सगासे सोयव्वं, सीसोऽवि जो अवियारियगाही पढमगोविक्कणगोव्व सो अजोग्गो इतरो जोग्गोत्ति १ ।

चंदणकंथोदाहरणं[2]—बारवईए वासुदेवस्स तिण्णि भेरीओ, तंजहा—संगामिआ उब्भुतिया कोमुतिया, तिण्णिवि गोसीसचंदणमइयाओ देवयापरिग्गहियाओ, तस्स चउत्थी भेरी असिवुवसमणी, तीसे उप्पत्ती कहिज्जइ—सक्को सुरमज्झे वासुदेवस्स गुणकित्तणं करेति—अहो उत्तमपुरिसाणं गुणा, एते अवगुणं ण गेण्हंति णीएण य ण जुज्झंति, तत्थेगो देवो असद्दहंतो आगतो, वासुदेवोऽवि जिणमगासं वंदओ पट्ठिओ, सो अंतराले कालसुणयरूवं मययं विउव्वेति वावण्णं दुब्भिगंधं, तस्स गंधेण सव्वो लोगो पराभग्गो, वासुदेवेण दिट्ठो, भणितं चणेण—अहो कालसुणगस्सेतस्स पंडुरा दंता सोहंति, देवो चिंतितो[*]—सच्चं सच्चं गुणग्गाही । ततो वासुदेवस्स आसरयणं गहाय पधावितो, सो मंदुरापालएण णाओ, तेण

---

१ ०रविकलगोविक्रायक इवाक्षेपनिर्णयप्रसङ्गपारगः तस्य सकाशे श्रोतव्यं, शिष्योऽपि योऽविचार्यग्राही प्रथमगोविक्रायक इव सोऽयोग्यः, इतरो योग्य इति १ । २ चन्दनकन्थोदाहरणं—द्वारिकायां वासुदेवस्य तिस्रो भेर्यः, तद्यथा—साम्रामिकी आभ्युदयिकी कौमुदीकी, तिस्रोऽपि गोशीर्षचन्दनमय्यो देवतापरिगृहीताः, तस्य चतुर्थी भेरी अशिवोपशमनी, तस्या उत्पत्तिः कथ्यते—शक्रः सुरमध्ये वासुदेवस्य गुणकीर्त्तनं करोति—अहो उत्तमपुरुषाणां गुणाः, एते अवगुणं न गृह्णन्ति नीचेन च न युध्यन्ते, तत्रैको देवोऽश्रद्दधत् आगतः, वासुदेवोऽपि जिनसकाशं वन्दकः (वन्दनाय) प्रस्थितः, सोऽन्तराले कृष्णश्वरूपं मृतकं विकुर्वति व्यापन्नं दुरभिगन्धं, तस्य गन्धेन सर्वो लोकः पराभग्नः, वासुदेवेन दृष्टः, भणितं चानेन—अहो कृष्णशुनः एतस्य पाण्डुरा दन्ताः शोभन्ते, देवश्चिन्तितवान्—सत्यं सत्यं गुणग्राही । ततो वासुदेवस्याश्वरत्नं गृहीत्वा प्रधावितः, स मन्दुरापालकेन ज्ञातः, तेन * चिंतेति

कुवितं[1], कुमारा रायाणो य निग्गया, तेण देवेण हयविहया काऊण धाडिआ, वासुदेवोऽवि निग्गओ, भणति—मम कीस आसरयणं हरसि ?, देवो भणति—मं जुज्झे पराजिणिऊण गेण्ह, वासुदेवेण भणियं—वाढं, किह जुज्झामो ? तुमं भूमीए अहं रहेण, ता रहं गिण्ह, देवो भणति—अलं रहेणंति, एवं आसहत्थीवि पडिसिद्धा, बाहुजुद्धादियाइं सव्वाइं पडिसेहेइ, भणइ य—अहिट्ठाणजुद्धं देहि, वासुदेवेण भणिअं—पराजिओऽहं, णेहि आसरयणं, णाहं नीयजुज्झेण जुज्झामि, ततो देवो तुट्ठो भणितादिओ—वरेहि वरं, किं ते देमि ?, वासुदेवेण भणिअं—असिवोवसमणीं भेरीं देहि, तेण दिण्णा, एसुप्पत्ती भेरीए । तहिं सा छण्हं छण्हं मासाणं वज्जति, पच्चुप्पण्णा रोगा वाही वा उवसमंति, णवगा वि छम्मासे ण उप्पज्जंति, जो सद्दं सुणेति । तत्थऽण्णदा आगंतुओ वाणिअओ, सो अतीव दाहज्जरेण अभिभूतो भेरीपालयं भणइ—गेण्ह तुमं सयसहस्सं, मम एत्तो पलमेत्तं देहि, तेण लोभेण दिण्णं, तत्थ अण्णा चंदणथिग्गलिआ दिण्णा, एवं अण्णेणवि अण्णेणवि मग्गितो दिण्णं च,

---

१ कूजितं, कुमारा राजानश्च निर्गताः, तेन देवेन हतविहतीकृत्य घाटिताः, वासुदेवोऽपि निर्गतः, भणति—मम कस्मादश्वरत्नं हरसि ?, देवो भणति—मां युद्धे पराजित्य गृहाण, वासुदेवेन भणितं—बाढं, कथं युध्यावहे त्वं भूमौ अहं रथेन, तद् रथं गृहाण, देवो भणति—अलं रथेनेति, एवमश्वहस्तिनावपि प्रतिषिद्धौ, बाहुयुद्धादीनि सर्वाणि प्रतिषेधयति, भणति च—अधिष्ठानयुद्धं देहि, वासुदेवेन भणितं—पराजितोऽहं नय अश्वरत्नं, नाहं नीचयुद्धेन युध्ये, ततो देवस्तुष्टो भणितवान्—वृणुष्व वरं, किं तुभ्यं ददामि?, वासुदेवेन भणितं—अशिवोपशमनीं भेरीं देहि, तेन दत्ता, एषोत्पत्तिर्भेर्याः । तत्र सा षड्भिः षड्भिर्मासैः वाद्यते, प्रत्युत्पन्ना रोगा व्याधयो वोपशाम्यन्ति, नवका अपि षट्सु मासेषु नोत्पद्यन्ते, यः शब्दं शृणोति । तत्रान्यदाऽऽगन्तुको वणिक्, सोऽतीव दाहज्वरेणाभिभूतो भेरीपालकं भणति—गृहाण त्वं शतसहस्रं, ममैतस्मात् पलमात्रं देहि, तेन लोभेन दत्तं, तत्रान्या चन्दनथिग्गलिका दत्ता, एवमन्येनापि अन्येनापि मार्गितो दत्तं च, * तारे

सा चंदणकंथा जाता, अण्णदा असिवे वासुदेवेण ताडाविया, जाव तं चेव सभं ण पूरेति, तेण भणिअं-जोएह भेरिं, दिट्ठा कंथीकता, सो भेरिवालो ववरोविओ, अण्णा भेरी अट्ठमभत्तेणाराहइत्ता लद्धा, अण्णो भेरिवालो कओ, सो आयरक्खेण रक्खति, सो पूइतो-जो सीसो सुत्तत्थं चंदणकंथव परमतादीहिं । मीसेति गलितमहवा मिक्खितमाणी ण सो जोग्गो ॥ १ ॥ कंथीकतसुत्तत्थो गुरूवि जोग्गो ण भामितवरस । अविणासियसुत्तत्था सीसायरिया विणिद्दिट्ठा ॥ २ ॥ २ ।

इदानीं चेटयुदाहरणम्—वसंतपुरे जुण्णसेट्ठिधूता, णवगस्स य सेट्ठिस्स धूआ, तासिं पीई, तहवि से अत्थि वेरो अम्हे एएहिं उवट्ठिताणि, ताओ अण्णआ कयावि मज्जितुं गताओ, तत्थ जा सा णवगस्स धूआ, सा तिलगचोद्दसगेणं अलंकारेण अलंकिआ, सा आहरणाणि तडे ठवेत्ता उत्तिण्णा, जुण्णसेट्ठिधूआ ताणि गहाय पधाविता, मा वारेति, इतरी अकोसंती गता, ताए मातापितीणं सिट्ठं, ताणि भणंति-तुण्हिक्का अच्छाहि, णवगस्स धूआ ण्हाइत्ता णियगघरं गया, अम्मापिईहिं

१ सा (भेरी) चन्दनकन्था जाता, अन्यदाऽशिवे वासुदेवेन ताडिता, यावत्तां सभामपि न पूरयति, तेन भणित-पश्यत भेरीं, दृष्टा कन्थीकृता, स भेरीपालो व्यपरोपित, अन्या भेर्यष्टमभक्तेनाराध्य लब्धा, अन्यो भेरीपालक कृत', स आत्मरक्षेण रक्षति, स पूजित-य शिष्य सूत्रार्थं चन्दनकन्थामिव परमतादिभिः । मिश्रयति गलितमथवा क्षिक्षितमानी, न स योग्यः । १ । कन्थीकृतसूत्रार्थो गुरुरपि योग्यो न भाषितव्यस्य (अनुयोगस्य) । अविनाशितसूत्रार्थौ शिष्याचार्यौ विनिर्दिष्टौ । २ । २ वसन्तपुरे जीर्णश्रेष्ठिदुहिता, नवकस्य च श्रेष्ठिन दुहिता, तयोः प्रीति, तथापि तयोरस्ति वैरं वयमेतैरुद्वर्तिताविनि, ते अन्यदा कदाचिन्मङ्क्तु गते, तत्र या सा नवकस्य दुहिता, सा तिलकचतुर्दशकेन अलङ्कारेणालङ्कृता, साऽऽभरणानि तटे स्थापयित्वाऽवतीर्णा, जीर्णश्रेष्ठिदुहिता तानि गृहीत्वा प्रधाविता, सा वारयति, इतराक्रोशन्ती गता, तया मातापितृभ्यां शिष्ट, तौ भणतः-तूष्णीका तिष्ठ, नवकस्य दुहिता स्नात्वा निजगृह गता, मातापितृभ्यां * कन्थाकया + ०भालओ † आदरेण ‡ कथ य

साहइ, तेहिं मग्गियं, ण देंति, राउले ववहारो, तत्थ णत्थि सक्खी, तत्थ कारणिया भणंति-चेडीओ वाहिज्जंतु, तेहिं वाहित्ताँ भणिता-जति तुज्झच्चयं ता आविंध, ताहे सा जुण्णसेट्ठिचेडी जं हत्थे तं पाए, ण जाणति, तं च से असिलिट्ठं, ताहे तेहिं णाअं-जहा एयाइं ईमीसे ण होंति, ताहे इतरी भणिआ-तुमे आविंध, ताए कमेण आविद्धं, सिलिट्ठं च से जायं, भणिया य-मेल्लाहि, ताए तहेव णिच्चं आमुंचंतीए पडिवाडीए आमुक्कं, ताहे सो जुण्णसेट्ठी डंडितो । जहा सो एगभविअं मरणं पत्तो, एवायरिओवि जं अण्णत्थ तं अण्णहिं संघाडेति, अण्णवत्तव्वाओ अण्णत्थ परूवेति उस्सग्गादिआओ, एवं सो संसारदंडेण दंडिज्जति, तारिसस्स पासे ण सोतव्वं, जहा सा चेडी जसं पत्ता, एवं चेवायरिओ जो ण विसंवाएति, तेण अरिहंताणं आणा कता भवति, तारिसस्स पासे सोयव्वं । एत्थ गाथा-अत्थाणत्थनिउत्ताऽऽभरणाणं जुण्णसेट्ठिधूअव्व । ¹ण

१ कथयति, ताभ्यां मार्गित, न दत्त, राजकुले व्यवहार, तत्र नास्ति साक्षी, तत्र कारणिका भणन्ति-चेट्यौ व्याह्रियेतां, तैर्व्याहृत्य भणिता-यदि तावकीन तिलकचतुर्दशक तदा परिधेहि, तदा सा जीर्णश्रेष्ठिचेटी यत् हस्ते (हस्तसम्बन्धि) तत् पादे (परिदधाति), न जानाति, तच्च तस्या अश्लिष्ट, तदा तैर्ज्ञात-यथैतान्यस्या न भवन्ति, तदेतरा भणिता-त्व परिधेहि, तया क्रमेण परिहितं, श्लिष्ट च तस्या जात, भणिता च-मुञ्च, तया तथैव नित्यमामुञ्चन्त्या परिपाट्या आमुक्त, तदा स जीर्णश्रेष्ठी दण्डित । यथा स एकभविक मरण प्राप्त, एवमाचार्योऽपि यत् (सूत्र) अन्यत्र (उत्सर्गादौ) तद् अन्यत्र (अपवादादौ) सघातयति, अन्यवक्तव्यता अन्यत्र प्ररूपयति उत्सर्गादिका, एव स संसारदण्डेन दण्ड्यते, तादृशस्य पार्श्वे न श्रोतव्यं, यथा सा चेटी यश प्राप्ता, एवमेवाचार्यो यो न विसवादयति, तेनार्हतां आज्ञा कृता भवति, तादृशस्य पार्श्वे श्रोतव्य । अत्र गाथे-अस्थानार्थनियोक्ता आभरणानां जीर्णश्रेष्ठिदुहितेव । न * वाहित्ता + एते से † गो

गुरू विधिभणिते वा विवरीयनिओअओ सीसो ॥ १ ॥ सत्थाणत्थनिउत्ता ईसरधूआ सभूसणाणं व । होइ गुरू सीसोऽवि अ विणिओअं तो जहा भणितं ॥ २ ॥ ३ । श्रावकोदाहरणं पूर्ववत्—नवरमुपसंहारः-चिरपरिचितंपि ण सरति सुत्तत्थं सावगो सभज्जं व । जो ण सो जोग्गो सीसो गुरुत्तणं तस्स दूरेणं ॥ १ ॥ ४ । बधिरगोदाहरणं पूर्ववदेव, उपसंहारस्तु गाथयोच्यते—अण्णं पुट्ठो अण्णं जो साहइ सो गुरू ण बहिरो व । ण य सीसो जो अण्णं सुणेति अणुभामए अण्ण ॥ १ ॥ ५ । एवं गोधोदाहरणोपसंहारोऽपि वक्तव्यः ६ । इदानीं टङ्कणकोदाहरणं—उत्तरावहे टंकणा णाम मेच्छा, ते सुवण्णेणं दक्खिणावहाइं भंडाइं गेण्हंति, ते य परोप्परं भासं ण जाणंति, पच्छा पुंजं करेंति, हत्थेण उँ छाएंति, जाव इच्छा ण पूरति ताव ण अवणेंति, पुण्णे अवणेंति, एवं

१ गुरु विधिभणिते वा विपरीतनियोजक शिष्य । १ । स्वस्थानार्थनियोक्ता ईश्वरदुहिता सभूषणानामिव । भवति गुरु शिष्योऽपिच विनियोग तद (विनियोजयन्) यथा भणितम् । २ । २ चिरपरिचितावपि न सरति सूत्रार्थौ श्रावक स्वभार्यामिव । यो न स योग्य' शिष्य गुरुत्व तस्य दूरेण । १ । ३ अन्यत्पृष्टोऽन्यत् य कथयति स न गुरुर्बधिर इव । न च शिष्यो योऽन्यच्छृणोत्यनुभाषतेऽन्यत् । १ । ४ उत्तरापथे टङ्कणानामानो म्लेच्छा, ते सुवर्णेन दक्षिणापथानि भाण्डानि गृह्णन्ति, ते च परस्पर भाषां न जानते, पश्चात् पुञ्ज कुर्वन्ति, हस्तेन स्वाच्छादयन्ति, यावदिच्छा न पूर्यते तावन्नापनयन्ति, पूर्णेऽपनयन्ति, एव * हत्थेण च्छाएंति.

ते'सिं इच्छियपडिच्छियववहारो एवं-अक्खेवनिण्णयपसंगदाणग्गहणाणुवत्तिणो दोवि । जोग्गा सीसायरिआ टंकणवणिओवमा एसा ॥ १ ॥ ७ ।

इत्थमुक्तप्रकारेण गवादिषु द्वारेषु साक्षादभिहितार्थविपर्ययः-प्रतिपक्षः आचार्यशिष्ययोर्यथायोगं योजनीयः, स च योजित एवेति गाथार्थः ॥ १३६ ॥ इदानीं विशेपतः शिष्यदोपगुणान् प्रतिपादयन्नाह—

**कस्स न होही वेसो अनब्भुवगओअ निरवगारी अ । अप्पच्छंदमईओ पट्ठिओ गंतुकामो अ ॥ १३७ ॥**
**विणओणएहिं कयपंजलीहिं छंदमणुअत्तमाणेहिं । आराहिओ गुरुजणो सुयं बहुविहं लहुं देइ ॥ १३८ ॥**

आह—शिष्यदोपगुणानां विशेपाभिधानं किमर्थम् ?, उच्यते, कालान्तरेण तस्यैव गुरुत्वभवनात्, अयोग्याय च गुरुपदनिबन्धनविधाने तीर्थकराज्ञादिलोपप्रसङ्गात् । प्रथमगाथाव्याख्या—कस्य न भविष्यति द्वेष्यः-अप्रीतिकरः, यः किम्भूतः ?-न अभ्युपगतः अनभ्युपगतः-श्रुतोपसंपदाऽनुपसंपन्न इति भावार्थः, उपसंपन्नोऽपि न सर्व एवाद्वेष्यो भवतीत्यत आह—'निरुपकारी च' निरुपकर्तुं शीलमस्येति निरुपकारी, गुरोरकृत्यकारीत्यर्थः, उपकार्यपि न सर्व एवाद्वेष्य इत्यत आह—आत्मच्छन्दा आत्मायत्ता मतिर्यस्य कार्येषु असावात्मच्छन्दमतिः, स्वाभिप्रायकार्यकारीत्यर्थः, गुर्वायत्तमतिरपि न सर्व एवाद्वेष्यः अत आह—'प्रस्थितः'

१ तेषां ईप्सितप्रतीप्सित (इष्मितप्रतीप्सित) व्यवहार', एव-आक्षेपनिर्णयप्रसङ्गदानग्रहणानुवर्तिनो द्वयेऽपि । योग्या आचार्यशिष्या टङ्कणवणिगुपमा एषा । १ । * ० मुक्ते

संप्रस्थितद्वितीय इति, गन्तुकामश्च गन्तुकामोऽभिधीयते यो हि सदैव गन्तुमना व्यवतिष्ठते, वक्ति च-श्रुतस्कन्धादिपरिसमाप्तावश्यमहं यास्यामि, क इहावतिष्ठते इति, अयमयोग्यः शिष्य इति गाथार्थः ॥ १३७ ॥ इदानीं दोपपरिज्ञानपूर्वकत्वात् गुणाः प्रतिपाद्यन्ते-द्वितीयगाथाव्याख्या—विनयः-अभिवन्दनादिलक्षणः तेन अवनताः विनयावनताः तैरित्थंभूतैः सद्भिः, तथा पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयः तैः, तथा छन्दो-गुर्वभिप्रायः तं सूत्रोक्तश्रद्धानसमर्थनकरणकारणादिनाऽनुवर्त्तयद्भिः आराधितो गुरुजनः, 'श्रुतं' सूत्रार्थोभयरूपं 'बहुविधं' अनेकप्रकारं 'लघु' शीघ्रं 'ददाति' प्रयच्छतीति गाथार्थः ॥ १३८ ॥ इदानीं प्रकारान्तरेण शिष्यपरीक्षां प्रतिपादयन्नाह—

**सेलघण कुडग चालणि परिपूणग हंस महिस मेसे अ । मसग जलूग विराली जाहग गो भेरि आभीरी ॥ १३९ ॥**

व्याख्या—एतानि शिष्ययोग्यायोग्यत्वप्रतिपादकान्युदाहरणानीति । किंच—चरियं च कप्पितं वा आहरणं दुविहमेव नायव्वं । अत्थस्स साहणट्ठा इंधणमिव ओदणट्ठाए । १ । तत्थ इमं कप्पिअं जहा—मुग्गसेलो पुक्खलसंवट्टओ अ महामेहो जंबूदीवप्पमाणो, तत्थ णारयत्थाणीओ कलहं आँलाएति-मुग्गसेलं भणति-तुज्झ नामग्गहणे कए पुक्खलसंवट्टओ भणति-जहा णं एगाए धाराए विराएमि, सेलो

१ चरित च कल्पित वाऽऽहरण द्विविधमेव ज्ञातव्यम् । अर्थस्य साधनार्थाय इन्धनानीवौदनार्थाय । १ । तत्रेद कल्पित यथा-मुद्गशैल पुष्करसंवर्त्तकश्च महामेघ जम्बूद्वीपप्रमाण, तत्र नारदस्थानीय कलहमालगयति (आयोजयति)-मुद्गशैल भणति-तव नामग्रहणे कृते पुष्कलसंवर्तको भणति-यथैकया धारया विद्रावयामि, शैल * आलो(जो)एति

उप्पासितो भणति-जदि मे तिलतुसतिभागंपि उल्लेति तो णामं ण वहामि, पच्छा मेहस्स मूले भणति मुग्गसेलवयणाइं, सो रुट्ठो, सव्वादरेण वरिसिउमारद्धो जुगप्पहाणाहि धाराहिं, मत्तरत्ते वुट्ठे चिंतेति-विराओ होहित्ति ठिओ, पाणिए ओसरिए इतरो मिसिमिसिंतो उज्जलतरो जातो भणति-जोहारोत्ति, ताहे मेहो लज्जितो गतो । एवं चेव कोइ सीसो मुग्गसेलसमाणो एगमवि पदं ण लग्गति, अण्णो आयरिओ गज्जंतो आगतो, अहं णं गाहेमित्ति, आह—आचार्यस्यैव तज्जाड्यं, यच्छिष्यो नावबुध्यते । गावो गोपालकेनेव, कुतीर्थेनावतारिताः ॥ १ ॥ ताहे पढावेउमारद्धो, ण सक्किओ, लज्जिओ गओ, एरिसस्स ण दायव्वं, किं कारणं ?-आयरिए सुत्तंमि अ परिवादो सुत्तअत्थपलिमंथो । अण्णेसिंपिय हाणी पुट्ठावि ण दुद्धया वंझा ॥ १ ॥ पडिवक्खो कण्हऽभूमी-वुट्ठेवि दोणमेहे ण कण्हभोमाओ लोट्टए उदयं । गहणधरणासमत्थे इअ देयमछित्तिकारंमि ॥ १ ॥

१ उप्पासितो (अभ्यूणित) भणति-यदि मे तिलतुषत्रिभागमपि आर्द्रयति तदा नाम न वहामि, पश्चान्मेघस्य मूले भणति मुद्गशैलवचनानि, स रुष्ट, सर्वादरेण वर्षितुमारब्ध, युगप्रधानाभिर्धाराभि, सप्तरात्रे वृष्टे चिन्तयति-विद्रुतो भविष्यति इति स्थित, पानीयेऽपसृते इतरो दीप्यन् उज्ज्वलतरो जातो भणति-जुहार (जयोत्कार) इति, तदा मेघो लज्जितो गत ॥ एवमेव कश्चिच्छिष्यो मुद्गशैलसमान एकमपि पद न लगयति, अन्य आचार्यो गर्जयन् आगत, अहमेन ग्राहयामि-तदा पाठयितुमारब्ध, न शकित, लज्जितो गत, ईदृशाय न दातव्य, किं कारणम् ?-आचार्ये सूत्रे च परिवाद सूत्रार्थपरिमन्थ (विघ्न)। अन्येषामपिच हानि स्पृष्टाऽपि न दुग्धदा (दोग्ध्री) वन्ध्या॥ १ ॥ प्रतिपक्ष कृष्णभूमि -वृष्टेऽपि द्रोणमेघे न कृष्णभूमात् लुठति उदकम् । ग्रहणधरणसमर्थे दातव्यमच्छित्तिकरे । १ । ' उल्लेवि. + ०पमाणाहिं † विराइओ ‡ भणितो ¶ कज्ज $ ०पलिमया || दुज्झया § ०भूमीसु

इदानीं कुटोदाहरणम्—कुटा घटा उच्यन्ते, ते दुविहा—नवा जुण्णा य, जुण्णा दुविहा—भाविया अभाविया य, भाविआ दुविहा—पसत्थभाविआ अपसत्थभाविआ य, पसत्था—अगुरुतुरुक्कादीहिं, अपसत्था—पलंडुलसुणमादीहिं, पसत्थभाविया वम्मा अवम्मा य, एवं अपसत्थावि, जे अपसत्था अवम्मा जे य पसत्था वम्मा ते ण सुंदरा, इतरे सुंदरा, अभावित्ता ण केणइ भाविता—णवगा आवाँगातो उत्तारितमेत्तगा, एवं चेव सीसगा णवगा—जे मिच्छद्दिट्ठी तप्पढमयाए गाहिज्जंति, जुण्णावि जे अभाविता ते सुंदरा—कुप्पवयणपासत्थेहिं भाविता एवमेव भावकुडा। संविग्गेहिं पसत्था वम्माऽवम्मा य तह चेव ॥ १ ॥ जे अपसत्था वम्मा जे य पसत्था संविग्गा य अवम्मा एते लट्ठगा, इतरेवि †अवम्मा। अहवा कूडा चउविहा—छिड्डकुडे १ बोडकुडे २ खंडकुडे ३ संपुण्णकुडे ४ इति, ‡छिड्डो जो मूले छिड्डो, बोट॰ओ जस्स ओट्ठा नत्थि, खंडो एगं ओट्ठपुडं नत्थि, संपुण्णो सव्वंगो चेव, छिड्डे जं छूढं तं गलति, बोडे तावतिअं ठाति, खंडे एगेण पासेण

१ ते द्विविधाः, नवा जीर्णाश्च, जीर्णा द्विविधा—भाविता अभाविताश्च, भाविता द्विविधा—प्रशस्तभाविता अप्रशस्तभाविताश्च, प्रशस्ता:—अगुरुतुरुष्कादिभिः, अप्रशस्ता—पलाण्डुलशुनादिभिः, प्रशस्तभाविता वाम्या अवाम्याश्च, एवमप्रशस्ता अपि, ये अप्रशस्ता अवाम्या ये च प्रशस्ता वाम्यास्ते न सुन्दरा, इतरे सुन्दरा, अभाविता न केनचिद्भाविता—नवका आपाकादुत्तारितमात्राः, एवमेव शिष्या नवका—ये मिथ्यादृष्टयस्तत्प्रथमतया ग्राह्यन्ते, जीर्णा अपि येऽभावितास्ते सुन्दरा। कुप्रवचनपार्श्वस्थैर्भाविता एवमेव भावकुटाः। संविग्नैः प्रशस्ता वाम्या अवाम्याश्च तथैव। १। ये अप्रशस्ता वाम्या ये च प्रशस्ताः संविग्नाश्चावाम्या एते लष्टा, इतरेऽप्यवाम्या। अथवा कुटाश्चतुर्विधा—छिद्रकुट अनोष्ठकुट खण्डकुट सम्पूर्णकुट इति, छिद्रो यो मूले छिद्रवान्, अनोष्ठकुट—यस्य ओष्ठौ न स्त, खण्ड एकमोष्ठपुटं नास्ति, सम्पूर्ण सर्वाङ्गश्चैव, छिद्रे यत्क्षिप्तं तद्गलति, बोटके तावत् तिष्ठति, खण्डे एकेन पार्श्वेन * आपाहगाओ. + ०ओसत्थेहिं † ०रे अवम्मा ‡ तत्थ ¶ घोडो

छड्डिज्जइ, जदि इच्छा थोवेणवि रुंभइ, एस विसेसो बोडखंडाणं, संपुण्णो सव्वं धरेति, एवं चेव सीसा चत्तारि समोतारेयव्वा।

चालन्युदाहरणम्—चालनी—लोकप्रसिद्धा यया कणिकादि चाल्यते,—जहं चालणीए उदयं छुब्भंतं तक्खणं अधो णीति। तह सुत्तत्थपयाइं जस्स तु सो चालणिसमाणो ॥ १ ॥ तथाच शैलच्छिद्रकुटचालनीभेदप्रदर्शनार्थमुक्तमेव भाष्यकृता—सेलेयँछिड्डचालणि मिहो कहा सोउ उट्ठियाणं तु। छिड्डाह तत्थ वेट्ठो सुमरिंसु सरामि णेयाणीं ॥ १ ॥ एगेण विसति बितिएण नीति कण्णेण चालणी आह। धण्णु त्थ आह सेलो जं पविसइ णीइ वा तुब्भं ॥ २ ॥ तावसखउरकढिणयं चालणिपडिवक्खु ण सवइ दवंपि।

इदानीं परिपूणकोदाहरणम्—तत्र परिपूर्णकः घृतपूर्णक्षीरकगालनकं चिटिकावासो वा, तेन हि आभीर्यः किल घृतं गालयन्ति, स च कचवरं धारयति घृतमुज्झति, एवं—वक्खाणादिसु दोसे हिययंमि ठवेति मुअति गुणजालं। सीसो सो उ अजोग्गो भणिओ परिपूणगसमाणो ॥ १ ॥ आह—सर्वज्ञमतेऽपि दोषसंभव †इत्ययुक्तं, सत्यमुक्तमेव भाष्यकृता—

१ णि सरति, यदीच्छा स्तोकेनापि रुध्यते, एष विशेषो बोटकखण्डयो, सपूर्ण सर्वं धारयति, एवमेव शिष्याश्चत्वार समवतारयितव्या। २ यथा चालन्यामुदक क्षिप्यमाण तत्क्षणमधो गच्छति। तथा सूत्रार्थपदानि यस्य तु स चालनीसमान। १। ३ शैलच्छिद्रचालनीना मिथः कथा श्रुत्वोत्थितानां तु। छिद्र आह तत्रोपविष्ट अस्मार्षं स्मरामि नेदानीम्। १। एकेन विशति कर्णेन द्वितीयेन नि सरति चालन्याह। धन्याऽत्र आह शैलो यत्प्रविशति नि सरति वा तव (त्वयि) २। तापसकमण्डलु चालनीप्रतिपक्ष न स्रवति द्रवमपि. ४ व्याख्यानादिषु दोषान् हृदये स्थापयति मुञ्चति गुणजालम्। शिष्य, स त्वयोग्यो भणित परिपूणकसमान। १। * रुज्झति + परिपूणक (स्यात्) † इत्युक्त

सव्वंणुपमाणाओ दोसा ण हु संति जिणमए किंचि। जं अणुवउत्तकहणं अपत्तमासज्ज व भवंति। १।

इदानीं हंसोदाहरणम्—अंबत्तणेण जीहाइ कूइआ होइ खीरमुदगंमि। हंसो मोत्तूण जलं आपियइ पयं तह सुसीसो ॥ १ ॥ घेत्तूण दढं दोसे गुरुणोऽणुवउत्तभासितादीए। गिण्हइ गुणे उ जो सो जोग्गो समयत्थसारस्स ॥ २ ॥

इदानी महिषोदाहरणम्—सयमवि ण पियइ महिसो ण य जूहं पियइ लोलियं उदयं। विग्गहविगहाहि तहा अथक्कपुच्छाहि य कुसीसो ॥ १ ॥

मेषोदाहरणम्—अवि गोप्पदंमिवि पिवे सुढिओ तणुअत्तणेण तुंडस्स। ण करेति कलुसमुदगं मेसो एवं सुसीसोऽवि ॥१॥

मशकोदाहरणम्—मसगो व तुदं जच्चादिएहि णिच्छुब्भते कुसीसोऽवि।

जलूकोदाहरणम्—जलूगा व अदूमंतो पिवति सुसीसोऽवि सुयणाणं।

बिराल्युदाहरणम्—छड्डेउं भूमीए जह खीरं पिवति दुट्ठमज्जारी। परिसुट्ठियाण पासे सिक्खति एवं विणयभंसी ॥ १ ॥

१ सर्वज्ञप्रामाण्यात् दोषा नैव सन्ति जिनमते केऽपि। यदनुपयुक्तकथन अपात्रमासाद्य वा भवन्ति। १। २ अम्लतया जिह्वाया कूर्चिका भवति क्षीरमुदके। हंसो मुक्त्वा जलमापिबति पय तथा सुशिष्य। १। मुक्त्वा दृढ दोषान् गुरोरनुपयुक्तभाषितादिकान्। गृह्णाति गुणांस्तु य स योग्य समयार्थ(स्य) सारस्य। २। ३ स्वयमपि न पिबति महिषो न च यूथ पिबति लोठितमुदकम्। विग्रहविकथाभिस्तथा अविश्रान्तपृच्छाभिश्च कुशिष्य। १। ४ अपि गोष्पदेऽपि पिबति मेषस्तनुत्वेन तुण्डस्य। न करोति कलुषमुदक मेष एव सुशिष्योऽपि। १। ५ मशक इव तुदन् जात्यादिभिराट्ट्यति (तुदति) कुशिष्योऽपि ६ जलौका इव अदुन्वन् पिबति सुशिष्योऽपि श्रुतज्ञान ७ छर्दयित्वा भूमौ यथा क्षीरं पिबति दुष्टमार्जारी। पर्युपस्थितानां पार्श्वे शिक्षते एव विनयभ्रंशी ॥ १ ॥ * केवि + भणति † वि०.

जाहकस्तिर्यग्विशेषः, तदुदाहरणम्—पातुं थोवं थोवं खीरं पासाणि जाहओ लिहइ । एमेव जितं काउं पुच्छति मतिमं ण खेदंति । १ ।

गोउदाहरणम्—एगेण धम्मट्ठितेण चाउवेज्जाण गावी दिण्णा, ते भणंति–परिवाडीए दुज्झउ, तहा कतं, पढमपरिवाडीदोहगो चिंतेति–अज्ज चेव मज्झं दुद्धं, कल्लं अण्णस्स होहिति, ता किं मम तणपाणिएण इह हारवितेण ?, ण दिण्णं, एवं सेसेहि वि, गावी मता, अवण्णवादो य धिज्जाइयाणं, तद्दव्वणदव्ववोच्छेदो, उक्तं च—अण्णो दोज्झति कल्लं णिरत्थयं से वहामि किं चारिं ? । चउचरणगवी उ मता अवण्ण हाणी उ वडुआणं ॥ १ ॥ प्रतिपक्षगौः—मा मे होज्ज अवण्णो गोवज्झा मा पुणो व ण लभेज्जा । वयमवि दोज्झामो पुण अणुग्गहो अण्णदूहेऽवि । दार्ष्टान्तिकयोजना–सीसा पडिच्छगाणं भरोत्ति तेवि य सीसगभरोत्ति । ण करेंति सुत्तहाणी अण्णत्थवि दुलहं तेसिं ॥ १ ॥ अविणीयत्तणओ ।

---

१ पीत्वा स्तोकं स्तोकं क्षीरं पार्श्वयोर्जाहको लेढि । एवमेव जीतं (परिचितं) कृत्वा पृच्छति मतिमान् न खेदयति । १ । २ गवोदाहरणम्–एकेन धर्मार्थिकेन चातुर्वैद्येभ्यो गौर्दत्ता, ते भणन्ति–परिपाट्या दुहन्तु, तथा कृतं, प्रथमपरिपाटीदोहकश्चिन्तयति–अद्यैव मम दुग्धं, कल्ये अन्यस्य भविष्यति, तत्किं मम तृणपानीयाभ्यामाहारिताभ्यामिह ?, न दत्तं, एवं शेषैरपि, गौर्मृता, अवर्णवादश्च धिग्जातीयानां, तद्द्रव्यान्यद्द्रव्यव्यवच्छेदः, उक्तं च—अन्यो धोक्ष्यति कल्ये निरर्थकं तस्या वहामि किं चारीम् । चतुश्चरणा गौर्मृतैव, अवर्णो हानिस्तु वटुकानाम् । १ । ३ माऽस्माकं भूदवर्णो गोवधका (इति) मा पुनश्च न लप्स्यध्वम् । वयमपि धोक्ष्यामः पुनरनुग्रहोऽन्येन दुग्धेऽपि । १ । ४ शिष्याः प्रतीच्छकानां भार इति तेऽपि च शिष्यभार इति । न कुर्वन्ति सूत्रहानिं अन्यत्रापि दुर्लभं तेषां । १ । अविनीतत्वात् * ०चाहिगो + मज्झ य.

भेर्युदाहरणं पूर्ववत् । आभीर्युदाहरणम्—आभीराणि घयं गड्डीए घेत्तूण पट्टणं विकिणीणि गयाणि, आढत्ते मप्पे आभीरी हेट्ठओ ठिता पडिच्छति, आभीरोऽवि वारगेण अप्पिणति, कथमवि अणुवउत्त प्पिणणे गहणे वा अंतरे वारगो भग्गो. आभीरी भणति–आ सच्च गामेल्लग ! किं ते कडं ?, इतरोऽवि आह—तुमं उम्मत्ता अण्णं पलोएसि अण्णं गेण्हसि, ताणं कलहो, पिट्टापिट्टी जाता, सेसंपि घयं पडियं, उसूरए जंताणं सेसघयरूवगा बलद्दा य तेणेहिं हडा, अणाभागिणो संवुत्ताणि । एवं जो सीसो पच्चुचारादि करेंतो अण्णहा परूवेंतो पढंतो वा सिक्खावितो भणति–तुमे चेव एवं वक्खाणिअं कहिअं वा–मा णिण्हवेहि दाउं उवजुंजिअ देहि किंचि चिंतेहि । वच्चामेलियदाणे किलिस्ससि तं चऽहं चेव ॥ १ ॥ पडिवक्खे कहाणगं पूर्ववत्, नानात्वं प्रदर्श्यते, भग्गे वारगे उत्तिण्णो, दोहिवि तुरितं तुरितं कप्परेहिं घतं लइअं, थेवं नट्ठं, सो आभीरो भणति–

---

१ आभीरा घृतं गन्त्र्या गृहीत्वा पत्तनं विक्रायका गताः, आरब्धे माने आभीरी अधः स्थिता प्रतीप्सति, आभीरोऽपि वारकेणार्पयति, कथमप्यनुपयुक्त अर्पणे ग्रहणे वाऽन्तरा घटो भग्नः, आभीरी भणति–आ सत्य ग्रामेयक ! किं त्वया कृतं !, इतरोऽप्याह–त्वमुन्मत्ताऽन्यं प्रलोकयसि अन्यं गृह्णासि, तयोः कलहो (जातः) केशाकेशि जातं, शेषमपि घृतं पतितं, उत्सूरे यातोः शेषघृतरूप्यका बलीवर्दौ च स्तेनैर्हृतौ, अनाभागिनौ (भोगानां) संवृत्तौ । एवं य शिष्यः प्रत्युच्चारादि कुर्वन् अन्यथा प्ररूपयन् पठन् वा शिक्षितः भणति–त्वयैवैवं व्याख्यातं कथितं वा, मा अपलपीः दत्त्वा उपयुज्य देहि किञ्चिच्चिन्तय । व्यत्याम्रेडितदाने क्लिश्यसि त्वं चाहमेव । १ । प्रतिपक्षे कथानकं, भग्ने घटे उत्तीर्णे, द्वाभ्यामपि त्वरितं त्वरितं कर्परैर्घृतं लातं, स्तोकं नष्टं, स आभीरो भणति–
* विक्किणगाणि + मेप्पे. † पडिच्छेति ‡ ०वत्त प्पि० ¶ कत $ उसूरयं § अणाभागीणि सवुत्ताणि || वारगो उदीण्णो.

मए ण सुट्ठु पणामितं, सावि भणति–मए ण सुट्ठु गहियं । एवं आयरिएण आलावगे दिण्णे विणासितो, पच्छा आयरिओ भणति–मा एवं कुट्टेहि, मया अणुवउत्तेण दिण्णो त्ति, सीसो भणति–मए ण सुट्ठु गहितोत्ति । अहवा जहा आभीरो जाणति—एवड्डा धारा घडे माइत्ति, एवं आयरिओऽवि जाणति–एवड्डं आलावगं सक्केहिति गेण्हिउंति गाथार्थः ॥१३९॥

इत्थमाचार्यशिष्यदोषगुणकथनलक्षणो व्याख्यानविधिः प्रतिपादितः, इदानीं कृतमङ्गलोपचारो व्यावर्णितप्रसङ्गविस्तरः प्रदर्शितव्याख्यानविधिरुपोद्घातदर्शनायाह—

> उद्देसे १ निद्देसे २ निग्गमे ३ खित्त ४ काल ५ पुरिसे ६ अ ।
> कारण ७ पच्चय ८ लक्खण ९ नए १० समोआरणा ११ ऽणुमए १२ ॥ १४० ॥
> किं १३ कइविहं १४ कस्स १५ कहिं १६ केसु १७ कहं १८ केच्चिरं १९ हवइ कालं ।
> कइ २० संतर २१ मविरहिअं २२ भवा २३ गरिस २४ फासण २५ निरुत्ती २६ ॥ १४१ ॥

व्याख्या—उद्देशो वक्तव्यः, एवं सर्वेषु क्रिया योज्या, उद्देशनमुद्देशः–सामान्याभिधानं अध्ययनमिति, निर्देशनं निर्देशः–विशेषाभिधानं सामायिकमिति, तथा निर्गमणं निर्गमः, कुतोऽस्य निर्गमणमिति वाच्यं, क्षेत्रं वक्तव्यं कस्मिन्

---

१ मया न सुष्ठु अर्पितं, साऽपि भणति–मया न सुष्ठु गृहीतं । एवमाचार्येण आलापके दत्ते विनाशितः, पश्चादाचार्यो भणति–मैवं कुट्टीः, मयाऽनुपयुक्तेन दत्त इति, शिष्यो भणति–मया न सुष्ठु गृहीत इति । अथवा यथा आभीरो जानाति–एतावती धारा घटे माति इति, एवमाचार्योऽपि जानाति–एतावन्तं आलापकं शक्ष्यति ग्रहीतुमिति * दिण्णि + विणासेते † माति ‡ उद्देसे य. ¶ उद्देश समुद्देश..

क्षेत्रे ?, कालो वक्तव्यः कस्मिन् काले ?, पुरुषश्च वक्तव्यः कुतः पुरुषात् ?, कारणं वक्तव्यं किं कारणं गौतमादयः शृण्वन्ति?, तथा प्रत्याययतीति प्रत्ययः स च वक्तव्यः, केन प्रत्ययेन भगवतेदमुपदिष्टं ? को वा गणधराणां श्रवण इति, तथा लक्षणं वक्तव्यं श्रद्धानादि, तथा नया—नैगमादयः, तथा तेषामेव समवतरणं वक्तव्यं यत्र संभवति, वक्ष्यति च 'मूढणइयं सुयं कालियं तु' इत्यादि, 'अनुमतं' इति कस्य व्यवहारादेः किमनुमतं सामायिकमिति, वक्ष्यति—'तवसंजमो अणुमओ' इत्यादि, किं सामायिकम् ? 'जीवो गुणपडिवण्णो' इत्यादि वक्ष्यति, कतिविधं सामायिकं ? 'सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं च' इत्यादि प्रतिपादयिष्यति, कस्य सामायिकमिति, वक्ष्यति—'जस्स सामाणिओ अप्पा' इत्यादि, क्व सामायिकं, क्षेत्रादाविति, वक्ष्यति—'खेत्तकालदिसि गति भविय' इत्यादि, केषु सामायिकमिति, सर्वद्रव्येषु, वक्ष्यति—'सव्वगतं सम्मत्तं सुए चरित्ते ण पज्जवा सव्वे' इत्यादि, कथमवाप्यते ?, वक्ष्यति—'माणुस्सखित्तजाइ' इत्यादि, कियच्चिरं भवति ? कालमिति, वक्ष्यति—'सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइ ठिती' इत्यादि, 'कति' इति कियन्तः प्रतिपद्यन्ते ? पूर्वप्रतिपन्ना वेति वक्तव्यं, वक्ष्यति च—'सम्मत्तदेसविरया पलियस्स असंखभागमित्ता उ' इत्यादि,

१ सम्यक्त्वसामायिकादे' २ मूढनयिकं श्रुतं कालिकं तु ३ तपःसंयमोऽनुमतः. ४ जीवो गुणप्रतिपन्नः ५ सामायिकं च त्रिविधं सम्यक्त्वं श्रुतं तथा चारित्रं च ६ यस्य समानीत आत्मा ७ क्षेत्रकालदिग्गतिभव्य० ८ सर्वगतं सम्यक्त्वं श्रुते चारित्रे न पर्यवाः सर्वे ९ मानुष्यं क्षेत्रं जातिः. १० सम्यक्त्वस्य श्रुतस्य च षट्षष्टिः सागरोपमाणि स्थितिः ११ सम्यक्त्वदेशविरताः पल्यस्यासंख्यभागमात्रा एव * समवतारश्च + संभवति † ०क्ष्यति. ‡ ०दिसिकाल० ¶ ०पाद्यन्ते § ०पन्नाश्चेति § ०मेत्ता.

'सान्तरं' इति सह अन्तरेण वर्त्तत इति सान्तरं, किं सान्तरं निरंतरं वा ?, यदि सान्तरं किमन्तरं भवति?, वक्ष्यति—'कालमणंतं च सुते अद्धापरियट्टगो य देसूणो' इत्यादि, 'अविरहितं' इति अविरहितं कियन्तं कालं प्रतिपद्यन्त इति, वक्ष्यति—'सुतसम्म अगारीणं आवलियासंखभाग' इत्यादि, तथा 'भवा' इति कियतो भवानुत्कृष्टतः खल्ववाप्यन्ते 'सम्मत्तदेसविरता पलियस्स असंखभागमित्ता उ । अट्ठभवा उ चरित्ते' इत्यादि, आकर्षणमाकर्षः, एकानेकभवेषु ग्रहणानीति भावार्थः, 'तिण्हं सहस्सपुहुत्तं सयपुहुत्तं च होंति विरईए । एगभवे आगरिसा' इत्यादि, स्पर्शना वक्तव्या, कियत्क्षेत्रं सामायिकवन्तः स्पृशन्तीति, वक्ष्यति—'सम्मत्तचरणसहिआ सव्वं लोगं फुसे निरवसेसं' इत्यादि, निश्चिता उक्तिर्निरुक्तिर्वक्तव्या—'सम्मद्दिट्ठी अमोहो सोही सब्भाव दंसणे बोही' इत्यादि वक्ष्यति। अयं तावद्गाथाद्वयसमुदायार्थः, अवयवार्थं तु प्रतिद्वारं प्रपञ्चेन वक्ष्यामः। अत्र कश्चिदाह—पूर्वमध्ययनं सामायिकं तस्यानुयोगद्वारचतुष्टयमुपन्यस्तं, अतस्तदुपन्यास एव उद्देशनिर्देशावुक्तौ, तथौघनामनिष्पन्ननिक्षेपद्वये च, अतः पुनरनयोरभिधानमयुक्तमिति, अत्रोच्यते, तत्र हि अत्र द्वारद्वयोक्तयोरनागतग्रहणं द्रष्टव्यं, अन्यथा तद्ग्रहणमन्तरेण द्वारोपन्यासादय एव न स्युः, अथवा द्वारोपन्यासादिविहितयोस्तत्राभिधानमात्रं इह त्वर्थानुगमद्वाराधिकारे विधानतो लक्षणतश्च व्याख्या क्रियत इति। आह—यद्येवं निर्गमो न वक्तव्यः, तस्यागमद्वार एवाभिहितत्वात्, तथा च 'आत्मागम' इत्याद्युक्तं, ततश्च तीर्थकरगणधरेभ्य एव निर्गतमिति गम्यते इति, उच्यते, सत्यं किंतु इह तीर्थकरगणधराणामेव निर्गमोऽभिधीयते, कोऽसौ तीर्थकरो गणधराश्चेति, वक्ष्यते—वर्धमानो गौतमादयश्चेति, यथा च तेभ्यो निर्गतं तथा क्षेत्रकालपुरुषकारणप्रत्ययविशिष्टमित्यतोऽदोष इति। आह—यद्येवं लक्षणं न वक्तव्यं, उपक्रम एव नामद्वारे क्षायोपशमिकभावेऽवतारितत्वात्, प्रमाणद्वारे च जीवगुणप्रमाणे आगमे इति, उच्यते, तत्र निर्देशमात्रत्वात्, इह तु प्रपञ्चतोऽभिधानाददोषः, अथवा तत्र श्रुतसामायिकस्यैवोक्तं, इह तु चतुर्णामपि लक्षणाभिधानाददोषः। आह—नयाः प्रमाणद्वार एवोक्ताः किमिहोच्यन्ते ?, स्वस्थाने च मूलद्वारे वक्ष्यमाणा एवेति, उच्यते, प्रमाणद्वारोक्ता एवेह व्याख्यायन्ते, अथवा प्रमाणद्वाराधिकारात्तत्र प्रमाणभावमात्रमुक्तं, इह तु स्वरूपावधारणमवतारो वाऽऽरभ्यते, एते च सर्व एव सामायिकसमुदायार्थमात्रविषयाः प्रमाणोक्ता उपोद्घातोक्ताश्च नयाः सूत्रविनियोगिनः, मूलद्वारोपन्यस्तनयास्तु सूत्रव्याख्योपयोगिन एवेति। आह—प्रमाणद्वारे जीवगुणः सामायिकं ज्ञानं चेति प्रतिपादितमेव, ततश्च किं सामायिकमित्याशङ्कानुपपत्तिः, उच्यते, जीवगुणत्वे ज्ञानत्वे च सत्यपि किं तज्जीव एव आहोस्विद् जीवादन्यदिति संशयः, तदुच्छित्त्यर्थमुपन्यासाददोषः। आह—नामद्वारे क्षायोपशमिकं सामायिकमुक्तं तत्तदावरणक्षयोपशमाल्लभ्यत इति गम्यत एव, अतः कथं लभ्यत इत्यतिरिच्यते, न, क्षयोपशमलाभस्यैवेह शेषाङ्गलाभचिन्तनादिति। एवं यदुपक्रमनिक्षेपद्वारद्वयाभिहितमपि पुनः

१ कालेऽनन्तश्च श्रुते, पुद्गलपरावर्त्तश्च देशोनः. २ श्रुतसम्यक्त्वागारिणां आवलिकाऽसंख्यभाग ३ सम्यक्त्वदेशविरताः पल्यस्यासंख्यभागमात्रा एव । अष्टभवास्तु चारित्रे ४ त्रयाणां सहस्रपृथक्त्वं, शतपृथक्त्वं च भवति विरते । एकभवे आकर्षा—५ सम्यक्त्वचरणसहिता सर्वं लोकं स्पृशन्ति निरवशेषं ६ सम्यग्दृष्टिरमोहः शोधिः सद्भावः दर्शनं बोधिः * ०वाप्यते. + नेदम् † भावार्थ इति ‡ ०ति भावार्थः ¶ एतद्द्वारद्व०

* ऽभिधानतो. + वक्ष्यति † तथा च यथा च ‡ चिन्त्यते ¶ न तु सूत्रविनियोगिनः. § ०मेवेति

प्रतिपादयति अनुगमद्वारावसरे तदशेषं निर्दिष्टनिक्षिप्तप्रपञ्चव्याख्यानार्थमिति । आह—उपक्रमः प्रायः शास्त्रसमुत्थानार्थ उक्तः, अयमप्युपोद्घातः शास्त्रसमुद्घातप्रयोजन एवेति कोऽनयोर्भेदः ?, उच्यते, उपक्रमो ह्युद्देशमात्रनियतः, तदुद्दिष्टवस्तुप्रबोधनफलस्तु प्रायेणोपोद्घातः, अर्थानुगमत्वात् इत्यलं विस्तरेण, प्रकृतमुच्यते ॥ १४१ ॥ तत्रोद्देशद्वारावयवार्थप्रतिपादनायेदमाह—

**नामं ठवणा दविए खेत्ते काले समास उद्देसे । उद्देसुद्देसंमि अ भावंमि अ होइ अट्ठमओ ॥ १४२ ॥**

व्याख्या—तत्र नामोद्देशः—यस्य जीवादेरुद्देश इति नाम क्रियते, नाम्नो वा उद्देशः नामोद्देशः, स्थापनोद्देशः—स्थापनाभिधानं उद्देशन्यासो वा, 'द्रव्ये' इति द्रव्यविषय उद्देशो द्रव्योद्देशः, स च आगमनोआगमज्ञशरीरेतरव्यतिरिक्तः द्रव्यस्य द्रव्येण द्रव्ये वा उद्देशो द्रव्योद्देशः, द्रव्यस्य–द्रव्यमिदमिति, द्रव्येण–द्रव्यपतिरयमिति, द्रव्ये–सिंहासने राजा चूते कोकिलः गिरौ मयूर इति, एवं क्षेत्रविषयोद्देशोऽपि वक्तव्यः,एवं कालविषयोऽपीति, 'समासः' संक्षेपस्तद्विषय उद्देशः समासोद्देशः, स च अङ्गश्रुतस्कन्धाध्ययनेषु द्रष्टव्यः, तत्र अङ्गसमासोद्देशः–अङ्गं अङ्गी तदध्येता तदर्थज्ञ इत्येवमन्यत्रापि योजना कार्या, उद्देशः–अध्ययनविशेषः तस्य उद्देश उद्देशोद्देशः, तद्विषयश्च उद्देश इति, स चोद्देशोद्देशोऽभिधीयते–उद्देशवान् तदध्येता तदर्थज्ञो वेति, भावविषयश्च भवति उद्देशः अष्टमक इति, स चायं–भावः भावी भावज्ञो वेति गाथार्थः ॥ १४२ ॥ अयमेव ह्युद्देशोऽष्टविधविशिष्टनामसहितो निर्देश इत्यवमेयः, तथा चाह निर्युक्तिकारः—

**एमेव य निद्देसो अट्ठविहो सोऽवि होइ णायव्वो । अविसेसिअमुद्देसो विसेसिओ होइ निद्देसो ॥ १४३ ॥**

व्याख्या—'एवमेव च' यथा उद्देश उक्तस्तथा,निर्देशोऽप्यष्टविध एव भवति ज्ञातव्यः, सर्वथा साम्यप्राप्त्यतिप्रसङ्गविनिवृत्त्यर्थमाह–किंतु 'अविशेषितः' सामान्याभिधानादिगोचरः उद्देशः, विशेषितस्तु भवति निर्देशः, यथा नामनिर्देशो जिनभद्र इत्याद्यभिधानविशेषनिर्देशः, स्थापनानिर्देशः स्थापनाविशेषाभिधानं निर्देशस्थापना वा, विशिष्टद्रव्याभिधानं द्रव्यनिर्देशः यथा—गौः, तेन वा–अश्ववानित्यादि, एवं क्षेत्रविशेषाभिधानं क्षेत्रनिर्देशः यथा—भरतं, क्षेत्रेण–सौराष्ट्र इत्यादि, कालविशेषाभिधानं कालनिर्देशः यथा—समय इत्यादि, तेन वा–वासन्तिक इत्यादि, समासनिर्देशः–आचाराङ्गं आवश्यकश्रुतस्कन्धः सामायिकं चेति, उद्देशनिर्देशः–शस्त्रपरिज्ञादेः प्रथमो द्वितीयो वेति, भगवत्यां वा पुद्गलोद्देशो वेति, भावव्यक्त्यभिधानं भावनिर्देशः यथा—औदयिक इत्यादि, तेन—औदयिकवान् क्रोधीत्यादि वेति अलं विस्तरेणेति गाथार्थः॥१४३॥ इह समासोद्देशनिर्देशाभ्यामधिकारः, कथं ?, अध्ययनमिति समासोद्देशः सामायिकमिति समासनिर्देशः, इदं च सामायिकं नपुंसकम् , अस्य च निर्देष्टा त्रिविधः–स्त्री पुमान् नपुंसकं चेति, तत्र को नयो नैगमादिः कं निर्देशमिच्छतीत्यमुं अर्थमभिधित्सुराह—

**दुविहंपि णेगमणओ णिद्देसं संगहो य ववहारो । निद्देसगमुज्जुसुओ उभयसरित्थं च सद्दस्स ॥ १४४ ॥**

व्याख्या—'द्विविधमपि' निर्देश्यवशात् निर्देशकवशाच्च नैगमनयो निर्देशमिच्छति, कुतः ?, लोकसंव्यवहारप्रवणत्वात् नैकगमत्वाच्चास्येति, लोके च निर्देश्यवशात् निर्देशकवशाच्च निर्देशप्रवृत्तिरुपलभ्यते, निर्देश्यवशात् यथा—वासवदत्ता

~ णिद्दिट्ठ

प्रियदर्शनेति, निर्देशकवशाच्च यथा—मनुना प्रोक्तो ग्रन्थो मनुः,अक्षपादप्रोक्तोऽक्षपाद इत्यादि,लोकोत्तरेऽपि निर्देश्यवशात् यथा—षड्जीवनिका, तत्र हि षड् जीवनिकाया निर्देश्या इति, एवमाचारक्रियाऽभिधायकत्वादाचार इत्यादि, तथा निर्देशकवशात् जिनवचनं कापिलीयं नन्दसंहितेत्येवमादि, एवं सामायिकमर्थरूपं रूढितो नपुंसकमितिकृत्वा नैगमस्य निर्देश्यवशान्नपुंसकनिर्देश एव, तथा सामायिकवतः स्त्रीपुन्नपुंसकलिङ्गत्वात् तत्परिणामानन्यत्वाच्च सामायिकार्थरूपस्य स्त्रीपुंनपुंसकलिङ्गत्वाविरोधमपि मन्यते, तथा निर्देष्टुस्त्रिलिङ्गसंभवात् निर्देशकवशादपि त्रिलिङ्गतामनुमन्यते नैगमः । आह—'द्विविधमपि नैगमनयः' इत्येतावत्युक्ते निर्देश्यवशात् निर्देशकवशाच्च निर्देशमिच्छतीति क्रियाऽध्याहारः कुतोऽवमीयते इति, उच्यते, यत आह—'निर्दिष्टं' वस्त्वङ्गीकृत्य, संग्रहो व्यवहारः, चशब्दस्य व्यवहितः संबन्धो, निर्देशमिच्छतीति वाक्यशेषः अत्र भावना—वचनं ह्यर्थप्रकाशकमेवोपजायते, प्रदीपवत्, यथा हि प्रदीपः प्रकाश्यं प्रकाशयन्नेव आत्मरूपं प्रतिपद्यते, एवं ध्वनिरप्यर्थं प्रतिपादयन्नेव, ततस्तत्प्रत्ययोपलब्धेः, तस्मान्निर्दिष्टवशात् निर्देशप्रवृत्तिरिति, ततश्च सामायिकमर्थरूपं रूढितो नपुंसकमतस्तदधिकृत्य संग्रहो व्यवहारश्च निर्देशमिच्छतीति, अथवा सामायिकवतः स्त्रीपुंनपुंसकलिङ्गत्वात् तत्परिणामानन्यत्वाच्च सामायिकार्थस्य त्रिलिङ्गतामपि मन्यत इति । तथा निर्देशकसत्त्वमङ्गीकृत्य सामायिकनिर्देशं ऋजुसूत्रो मन्यते, वचनस्य वक्तुरधीनत्वात् तत्पर्यायत्वात् तद्भावभावित्वादिति । ततश्च यदा पुरुषो निर्देष्टा तदा पुँल्लिङ्गता, एवं स्त्रीनपुंसकयोजनाऽपि कार्या, तथा 'उभयसदृशं' निर्देश्यनिर्देशकसदृशं, समानलिङ्गमेव वस्त्वङ्गीकृत्य, शब्दस्य निर्देशप्रवृत्तिरिति वाक्यशेषः, एतदुक्तं भवति–उपयुक्तो हि निर्देष्टा निर्देश्यादभिन्न एव, तदुपयोगानन्यत्वात्,

ततश्च पुंसः पुमांसमभिदधतः पुन्निर्देश एव, एवं स्त्रियाः स्त्रियं प्रतिपादयन्त्याः स्त्रीनिर्देश एव, एवं नपुंसकस्य नपुंसकमभिदधानस्य नपुंसकनिर्देश एव, यदा तु पुमान् स्त्रियमभिधत्ते, तदा स्त्र्युपयोगानन्यत्वात् स्त्रीरूप एवासौ, निर्देश्यनिर्देशकयोः समानलिङ्गतैव, एवं सर्वत्र योज्यं, असमानलिङ्गनिर्देशोऽस्य अवस्त्वेव, यदा पुमान् पुमांसं स्त्रियं चाहेति, कुतः ?, तस्य पुरुषयोषिद्विज्ञानोपयोगभेदाभेदविकल्पद्वारेण पुरुषयोषिदापत्तेः, अन्यथा वस्त्वभावप्रसङ्गात्, तस्मादुपयुक्तो यमर्थमाह स तद्विज्ञानानन्यत्वात्तन्मय एव, तन्मयत्वाच्च तत्समानलिङ्गनिर्देशः, ततश्च सामायिकवक्ता तदुपयोगानन्यत्वात् सामायिकं प्रतिपादयन्नात्मानमेवाह यतः तस्मात्तत्समानलिङ्गाभिधान एवासौ, स्थितश्च सामायिकार्थरूपस्य नपुंसकत्वात् स्त्रियाः पुंसो नपुंसकस्य वा प्रतिपादयतः सामायिकं नपुंसकलिङ्गनिर्देश एवेति गाथासमासार्थः । व्यासार्थस्तु विशेषविवरणादवगन्तव्य इति । सर्वेनयमतान्यपि चामूनि पृथग्विपरीतविषयत्वात् न प्रमाणं, समुदितानि त्वन्तर्बाह्यनिमित्तसामग्रीमयत्वात् प्रमाणमिति अलं विस्तरेण, गमनिकामात्रप्रधानत्वात् प्रस्तुतप्रयासस्य ॥ १४४ ॥

इदानीं निर्गमविशेषस्वरूपप्रतिपादनायाह—

**नामं ठवणा दविए खित्ते काले तहेव भावे अ । एसो उ निग्गमस्सा णिक्खेवो छव्विहो होइ ॥ १४५ ॥**

गमनिका—नामस्थापने पूर्ववत्, द्रव्य[†]निर्गमः—आगमनोआगमज्ञशरीरेतरव्यतिरिक्तः, स च त्रि[‡]धा—सचित्ताचित्तमिश्रभेदभिन्नः, तत्र सचित्तात्सचित्तस्य यथा पृथिव्या अङ्कुरस्य, सचित्तान्मिश्रस्य यथा—भूमेः पतङ्गस्य, सचित्तादचित्तस्य

१ पक्षस्य अचित्तत्वात् * सयोऽय + ०ति सामा०. † मृद्व्यस्य मृद्व्याद्वा ‡ ०रिक्त सचित्ता०.

यथा—भूमेर्बाष्पस्य, तथा मिश्रात्सचित्तस्य यथा—देहात्कृमिकस्य, मिश्रान्मिश्रस्य यथा—स्त्रीदेहाद्गर्भस्य, मिश्रादचित्तस्य यथा—देहाद् विष्ठायाः, अचित्तात्सचित्तस्य यथा—काष्ठात्कृमिकस्य, अचित्तान्मिश्रस्य यथा—काष्ठाद् घुणस्य, अचित्तादचित्तस्य यथा—काष्ठाद् घूणचूर्णस्य । अथवा द्रव्यात् द्रव्यस्य द्रव्यात् द्रव्याणां द्रव्येभ्यो द्रव्यस्य द्रव्येभ्यो द्रव्याणामिति, तत्र द्रव्याद् द्रव्यस्य यथा—रूपकात् रूपकस्य निर्गमः, एकस्मादेव कलान्तरप्रयुक्तादिति भावार्थः, एकस्मादेव कलान्तरतः प्रभूतनिर्गमो द्वितीयभङ्गभावना, प्रभूतेभ्यः स्वल्पकालेनैकस्य निर्गमो भवति तृतीयभङ्गभावना, प्रभूतेभ्यः प्रभूताना कलान्तरतश्चतुर्थभङ्गभावनेति, 'क्षेत्रे' इति क्षेत्रविषयो निर्गमः प्रतिपाद्यते, एवं सर्वत्र अक्षरगमनिका कार्या, तत्र कालनिर्गमः—कालो ह्यमूर्तस्तथापि उपचारतो वसन्तस्य निर्गमः दुर्भिक्षाद्वा निर्गतो देवदत्तो बालकालाद्वेति, अथवा कालो द्रव्यधर्म एव, तस्य द्रव्यादेव निर्गमः, तत्प्रभवत्वादिति, एवं भावनिर्गमः तत्र पुद्गलाद्वर्णादिनिर्गमः, जीवात्क्रोधादिनिर्गम इति, तयोर्वा पुद्गलजीवयोर्वर्णविशेषक्रोधादिभ्यो निर्गम इति, एष एव निर्गमस्य निक्षेपः षड्विध इति गाथार्थः ॥ १४५ ॥

एवं शिष्यमतिविका[१]शार्थ प्रसङ्गत उक्तोऽनेकधा निर्गमः, इह च प्रशस्तभावनिर्गममात्रेण अप्रशस्तापगमेन वाऽधिकारः, शेषैरपि तदङ्गत्वाद्, इह च द्रव्यं वीरः क्षेत्रं महासेनवनं कालः प्रमाणकालः भावश्च भावपुरुषः, एवं च निर्गमाङ्गानि द्रष्टव्यानीति एतानि च द्रव्याधीनानि यतः अतः प्रथमं जिनस्यैव मिथ्यात्वादिभ्यो निर्गममभिधित्सुराह—

१ वण्णताय। २ फेवायुत्तत्वान् एवममेऽपि ०र्गमो वक्तव्य तृती० + कालान्तरतश्च० † विकासार्थं

**पं*थं किर देसित्ता साहूणं अडविविप्पणट्ठाणं । सम्मत्तपढमलंभो बोद्धव्वो वद्धमाणस्स ॥ १४६ ॥**

गमनिका—पन्थानं किल देशयित्वा साधूनां अटवीविप्रनष्टानां पुनस्तेभ्य एव देशनां श्रुत्वा सम्यक्त्वं प्राप्तः, एवं सम्यक्त्वप्रथमलाभो बोद्धव्यो वर्धमानस्येति समुदायार्थः ॥ १४६ ॥ अवयवार्थः कथानकादवसेयः, तच्चेदम्—अवरविदेहे एगंमि गामे बलाहिओ, सो य रायादेसेण सगडाणि गहाय दारुनिमित्तं महाडविं पविट्ठो, इओ य साहुणो मग्गपवण्णा सत्थेण समं वच्चंति, सत्थे आवासिए भिक्खट्ठं पविट्ठाणं गतो सत्थो, पहा[+]वितो, अयाणंता विभुल्ला, मूढदिसा पंथं अयाणमाणा तेण अडविपंथेण मज्झण्हदेसकाले तण्हाए छुहाए अपा[†]रद्धा तं देसं गया जत्थ सो सगडसण्णिवेसो, सो य ते पासित्ता महंतं संवेगमावण्णो भणति—अहो इमे साहुणो अदेसिया तवस्सिणो अडविमणुपविट्ठा, तेसिं सो अणुकंपाए विपुलं असणपाणं दाऊणं आह—एह भगवं! जेण पथेणमवयारेमि, पुरतो संपत्थिओ, ताहे तेऽवि साहुणो तस्सेव मग्गेण अणुगच्छंति,

१ अपरविदेहेषु एकस्मिन्ग्रामे बलाधिक , स च राजादेशेन शकटानि गृहीत्वा दारुनिमित्त महाटवीं प्रविष्ट , इतश्च साधव मार्गप्रपन्नाः सार्थेन समं व्रजन्ति, सार्थ आवासिते भिक्षार्थं प्रविष्टेषु गत सार्थ , प्रधावित , अजानन्तो भ्रष्टा', दिग्मूढा पन्थानमजानाना तेन अटवीपथेन मध्याह्नदेशकाले तृषा क्षुधा अपराद्धा ( च व्याप्ता ) त देश गता यत्र स शकटसन्निवेश , स च तान् दृष्ट्वा महान्त सवेगमापन्नो भणति—अहो इमे साधवोऽदेशिकास्तपस्विनोऽटवीमनुप्रविष्टा , तेभ्योऽसौ अनुकम्पया विपुलमशनपान दत्त्वाऽऽह—एत भगवन्त. ! येन पथि युष्मानवतारयामि, पुरत सप्रस्थित , तदा तेऽपि साधव तस्यैव पृष्ठत अनुगच्छन्ति, * जह मिच्छत्ततमाओ विणिग्गओ जह य केवल पत्तो । जह य पयासिअमेय सामइअ तह पवक्खामि ॥ १ ॥ ( गाथैषाऽव्याख्याता निर्युक्तिपुस्तके ) + पहावितो † य पारद्धा.

तेतो गुरू तस्स धम्मं कहेदुमारद्धो, तस्स सो अवगतो, ते पंथं समोयारेत्ता नियत्तो, ते पत्ता सदेस, सो पुण अविरयसम्मद्दिट्ठी कालं काऊण सोहम्मे कप्पे पलिओवमठिइओ देवो जाओ। अस्यैवार्थस्योपदर्शकमिदं गाथाद्वयमाह भाष्यकारः—

अवरविदेहे गामस्स चिंतओ रायदारुवणगमणं। साहू भिक्खनिमित्तं सत्था हीणे तहिं पासे ॥१॥ (भाष्यम्)
दाणन्न पंथनयणं अणुकंप गुरू कहण सम्मत्तं। सोहम्मे उववण्णो पलियाउ सुरो महिड्ढीओ॥ २ ॥ (भाष्यम्)

गमनिका—अवरविदेहे ग्रामस्य चिन्तको राजदारुवनगमनं, निमित्तशब्दलोपोऽत्र द्रष्टव्यः, राजदारुनिमित्तं वनगमनं, साधून् भिक्षानिमित्तं सार्थाद्भ्रष्टाँस्तत्र दृष्टवान्, दानमन्नपानस्य, नयनं पथि अनुकम्पया गुरोः कथनं सम्यक्त्वं प्राप्त मृत्वा सौधर्मे उपपन्नः पल्योपमायुः सुरो महर्द्धिक इति गाथाद्वयार्थः।

लद्धूण य सम्मत्तं अणुकंपाए उ सो सुविहियाणं। भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥ १४७ ॥

गमनिका—लब्ध्वा च सम्यक्त्वं अनुकम्पयाऽसौ सुविहितेभ्यः भास्वरा—दीप्तिमती वरां-प्रधानां 'बोंदिं' तनुं धारयतीति समासः, देवो वैमानिको जात इति निर्युक्तिगाथार्थः ॥ १४७ ॥ तथा च—

चइऊण देवलोगा इह चेव य भारहंमि वासंमि। इक्खागकुले जाओ उसभसुअसुओ मरीइत्ति ॥ १४८ ॥

१ ततो गुरु तस्मै धर्मं कथयितुमारब्ध, तेन सोऽवगत, तान्पथि समवतार्य निवृत्त, ते प्राप्ता. स्वदेश, स पुनरविरतसम्यग्दृष्टि काल कृत्वा सौधर्म कल्पे पल्योपमस्थितिको देवो जात * पथि नयन + गाथार्थ † सो

व्याख्या—ततः स्वायुष्कक्षये सति च्युत्वा देवलोकादिहैव भारते वर्षे इक्ष्वाकुकुले 'जातः' उत्पन्नः ऋषभसुतसुतो मरीचिः सामान्येन ऋषभपौत्र इति गाथार्थः ॥ १८ ॥ यतश्चैवमतः—

इक्खागकुले जाओ इक्खागकुलस्स होइ उप्पत्ती। कुलगरवंसेऽईए भरहस्स सुओ मरीइत्ति ॥ १४९ ॥

व्याख्या—इक्ष्वाकूणा कुलं इक्ष्वाकुकुलं तस्मिन्, 'जातः' उत्पन्नः, भरतस्य सुतो मरीचिरिति योगः, तत्र सामान्य-ऋषभपौत्रत्वाभिधाने सति इदं विशेषाभिधानमदुष्टमेव, स च कुलकरवंशेऽतीते जातः, तत्र कुलकरा वक्ष्यमाणलक्षणास्तेषां वंशः कुलकरवंशः प्रवाह इति समासः, तस्मिन्नतीते-अतिक्रान्ते इति, यतश्चैवमत इक्ष्वाकुकुलस्य भवति उत्पत्तिः, वाच्येति वाक्यशेष', इत्ययं गाथार्थः ॥ १४९ ॥ तत्र कुलकरवंशेऽतीत इत्युक्तं, अतः प्रथमं कुलकराणामेवोत्पत्तिः प्रतिपाद्यते, यत्र यस्मिन्काले क्षेत्रे च तत्प्रभवस्तन्निदर्शनाय चेदमाह— (ग्रन्थाग्रम् ३०००)

ओसप्पिणी इमीसे तइयाएँ समाएँ पच्छिमे भागे। पलिओवमट्ठभाए सेसंमि उ कुलगरुप्पत्ती ॥ १५० ॥
अद्धभरहमज्झिल्लुतिभागे गंगासिंधुमज्झंमि। इत्थ बहुमज्झदेसे उप्पण्णा कुलगरा सत्त ॥ १५१ ॥

प्रथमगाथागमनिका—अवसर्पिण्यामस्यां वर्त्तमानायां या तृतीया समा-सुषमदुष्षमासमा, तस्याः पश्चिमो भागस्तस्मिन् कियन्मात्रे पल्योपमाष्टभाग एव शेषे तिष्ठति सति कुलकरोत्पत्तिः संजातेति वाक्यशेष इति गाथार्थः ॥ १५० ॥ द्वितीय-

* ०स्तेषां वंश प्रवाह

गाथागमनिका—अर्धभरतमध्यमत्रिभागे, कस्मिन् ?—गङ्गासिन्धुमध्ये, अत्र बहुमध्यदेशे न पर्यन्तेषु, उत्पन्नाः कुलकराः सप्त. अर्धं भरतं विद्याधरालयवैताढ्यपर्वतादारतो गृह्यत इति गाथार्थः ॥ १५१ ॥ इदानीं कुलकरवक्तव्यताभिधायिका द्वारगाथा प्रतिपादयन्नाह—

पुव्वभवजम्मनामं पमाण संघयणमेव संठाणं। वण्णित्थियाउ भागा भवणोवाओ य णीई य * ॥ १५२ ॥

गमनिका—कुलकराणां पूर्वभवा वक्तव्याः, जन्म वक्तव्यं तथा नामानि प्रमाणानि तथा संहननं वक्तव्यं, एवशब्दः पूरणार्थः, तथा संस्थानं वक्तव्यं तथा वर्णाः प्रतिपादयितव्याः तथा स्त्रियो वक्तव्याः तथा आयुर्वक्तव्यं भागा वक्तव्याः—कस्मिन् वयोभागे कुलकराः संवृत्ता इति, भवनेषु उपपातः भवनोपपातः वक्तव्यः, भवनग्रहणं भवनपतिनिकायोपपातप्रदर्शनार्थं, तथा नीतिश्च या यस्य हकारादिलक्षणा सा वक्तव्येति गाथासमुदायार्थः, अवयवार्थं तु प्रतिद्वारं वक्ष्यति ॥ १५२ ॥ तत्र प्रथमद्वारावयवार्थाभिधित्सयेदमाह—

अवरविदेहे दो वणिय वयंसा माइ उज्जुए चेव। कालगया इह भरहे हत्थी मणुओ अ आयाया ॥ १५३ ॥
दट्ठुं सिणेहकरणं गयमारुहणं च नामणिप्फत्ती। परिहाणि गेहि कलहो सामत्थण विन्नवण हत्ति ॥ १५४ ॥

गमनिका—अपरविदेहे द्वौ वणिग्वयस्यौ मायी ऋजुश्चैव कालगतौ इह भरते हस्ती मनुष्यश्च आयातौ, दृष्ट्वा स्नेहकरणं गजारोहणं च नामनिर्वृत्तिः परिहाणिः गृद्धिः कलहः, 'सामत्थणं' देशीवचनतः पर्यालोचनं भण्यते, विज्ञापना—ह

* पुव्वभव कुलगराण उसभजिणिंदस्स भरहरण्णो अ। इक्खागकुलुप्पत्ती णेयव्वा आणुपुव्वीए। (गाथैषा निर्युक्तिपुस्तकेऽव्याख्याता च)

इति गाथार्थः ॥ १५४ ॥ भावार्थस्तु कथानकादवसेयः, अध्याहार्यक्रियायोजना च स्वबुद्ध्या प्रतिपदं कार्या, यथा-अपरविदेहे द्वौ वणिग्वयस्यौ अभूतामिति, नवरं हस्ती मनुष्यश्च आयातावित्ति, अनेन जन्म प्रतिपादितं वेदितव्यं, अवरविदेहे दो मित्ता वाणिअया, तत्थेगो मायी एगो उज्जुगो, ते पुण एगओ चेव ववहरंति, तत्थेगो जो मायी सो तं उज्जुअं अतिसंधेइ, इतरो सव्वमगूहंतो सम्मं सम्मेण ववहरति, दोवि पुण दाणरुई, ततो सो उज्जुगो कालं काऊण इहेव दाहिणद्धे मिहुणगो जाओ, वंको पुण तंमि चेव पदेसे हत्थिरयणं जातो, सो य सेतो वण्णेणं चउदंतो य, जाहे ते पडिपुण्णा ताहे तेण हत्थिणा हिंडंतेण सो दिट्ठो मिहुणगो, दट्ठूण य से पीती उप्पण्णा, तं च से आभिओगजणिअं कम्ममुदिण्णं, ताहे तेण मिहुणगं खंधे विलइयं, तं दट्ठूण य तेण सव्वेण लोएण अब्भहियमणूसो एसो इमं च से विमलं वाहणंति तेण से विमलवाहणोत्ति नामं कयं, तेसिं च जातीसरणं जायं, ताहे कालदोसेण ते रुक्खा परिहायंति-मत्तंगा भिंगंगा तुडियं च

१ अपरविदेहेषु द्वौ मित्रे वणिजौ, तत्रैको मायावी एक ऋजुकः, तौ पुनरेकत्र एव व्यवहरत, तत्रैको यो मायावी स तमृजुं अतिसन्दधाति, इतरः सर्वमगूहयन् सम्यग् साम्येन व्यवहरति, द्वावपि पुनर्दानरुची, ततः स ऋजुकः कालं कृत्वेहैव दक्षिणार्धे मिथुनकनरो जातः, वक्रः पुनः तस्मिन्नेव प्रदेशे हस्तिरत्नं जातं, स च वर्णेन श्वेतश्चतुर्दन्तश्च, यदा तौ प्रतिपूर्णौ तदा तेन हस्तिना हिण्डमानेन स दृष्टः मिथुनकनरः, दृष्ट्वा च तस्य प्रीतिरुत्पन्ना, तच्च तस्याभियोगजनितं कर्मोदीर्णं, तदा तेन मिथुनकनरः स्कन्धे विलगितः, तद्दृष्ट्वा च तेन सर्वेण लोकेन अभ्यधिकमनुष्य एष इदं चास्य विमलं वाहनमिति तेन तस्य विमलवाहन इति नाम कृतं, तयोश्च जातिस्मरणं जातं, तदा कालदोषेण ते वृक्षाः परिहीयन्ते, तद्यथा-मत्ताङ्गा भृङ्गाङ्गास्त्रुटिताङ्गा- * प्रतिपदं + ०स्वावासिद्धा० ‡ स० † ०ण्णा जाता ¶ स० म०

चित्तंगा (य) चित्तरसा। गेहागारा अणियणा सत्तमया कप्परुक्खत्ति ॥१॥ तेसु परिहायंतेसु कसाया उप्पण्णा-इमं मम, मा एत्थ कोइ अण्णो अल्लियउत्ति भणितुं पयत्ता, जो ममीकयं अल्लियइ तेण कसाइज्जंति, गेण्हणे अ संखडंति, ततो तेहिं चिंतितं-किंचि अधिपतिं ठवेमो जो ववत्थाओ ठवेति, ताहे तेहिं सो विमलवाहणो एस अम्हेहिंतो अहितोत्ति ठवितो, ताहे तेण तेसिं रुक्खा विरिक्का, भणिया य-जो तुब्भं एयं मेरं अतिक्कमति तं मम कहिज्जाहत्ति, अहं से दंडं करिहामि, सोऽवि किह जाणति ?, जाइस्सरो तं वणियत्तं सरति, ताहे तेसिं जो कोइ अवरज्झइ सो तस्स कहिज्जइ, ताहे सो तेसिं दंडं ठवेति, को पुण दंडो ?, हक्कारो, हा तुमे दुट्ठु कयं, ताहे सो जाणति-अहं सव्वस्सहरणो कतो, तं वरं किर हतो मे सीसं छिण्णं, ण य एरिसं विडंबणं पावितोत्ति, एवं बहुकालं हक्कारदंडो अणुवत्तिओ। तस्स य चंदजसा भारिया, तीए समं भोगे भुंजंतस्स अवरं मिथुणं जायं, तस्सवि कालंतरेण अवरं, एवं ते एगवंसंमि सत्त कुलगरा उप्पण्णा। पूर्वभवाः खल्वमीषां प्रथमानुयोगतोऽवसेयाः, जन्म पुनरिहैव सर्वेषां द्रष्टव्यम्। व्याख्यातं पूर्वभवजन्मद्वारद्वयमिति, इदानीं कुलकरनामप्रतिपादनायाह—

१ चित्राङ्गाश्चित्ररसा। गृहाकारा अनग्नाः सप्तमकाः कल्पवृक्षा इति, ॥१॥ तेषु परिहीयमाणेषु कषाया उत्पन्ना, इदं मम, मा अत्र कोऽप्यन्यो लगीत् इति भणितुं प्रवृत्ताः, यो ममीकृतं लगति तेन कषायन्ते, ग्रहणे च क्लिश्नन्ति (सखण्डयन्ति), ततस्तैश्चिन्तितं-कमपि अधिपतिं स्थापयामो यो व्यवस्था स्थापयति, तदा तैः स विमलवाहन एषोऽस्मभ्यमधिक इति स्थापितः, तदा तेन तेभ्यो वृक्षा विभक्ताः, भणिताश्च-यो युष्माकं एतां मर्यादां अतिक्रामति तं मह्यं कथयेत, अहं तस्य दण्डं करिष्यामि, सोऽपि कथं जानीते ?, जातिस्मरस्तद् वणिक्त्वं स्मरति, तदा तेषां यः कश्चिदपराध्यति स तस्मै कथ्यते, तदा स तस्य दण्डं स्थापयति, कः पुनर्दण्डः ?, हाकारः-हा त्वया दुष्टु कृतं, तदा स जानीते-अहं सर्वस्वहरणीकृतः (स्याम्), तदा वरं किल हतः शिरो मे छिन्नं, न चेदृशं विडम्बनां प्रापित इति, एवं बहुकालं हाकारदण्डोऽनुवर्त्तितः। तस्य च चन्द्रयशा भार्या, तया समं भोगान्भुञ्जतोऽपरं मिथुनकं (युग्मं) जातं, तस्यापि कालान्तरेणापरं, एवं ते एकवंशे सप्त कुलकरा उत्पन्नाः। * चित्तगा + अह दंडं वसेहामि † पडितोत्ति

पढमित्थ विमलवाहण चक्खुम जसमं चउत्थमभिचंदे। तत्तो अ पसेणइए मरुदेवे चेव नाभी य ॥ १५५ ॥

गमनिका—प्रथमोऽत्र विमलवाहनश्चक्षुष्मान् यशस्वी चतुर्थोऽभिचन्द्रः ततश्च प्रसेनजित् मरुदेवश्चैव नाभिश्चेति, भावार्थः सुगम एवेति गाथार्थः ॥ १५५ ॥ गतं नामद्वारम्, अधुना प्रमाणद्वारावयवार्थाभिधित्सयाऽऽह—

णव धणुसया य पढमो अट्ठ य सत्तद्धसत्तमाइं च। छच्चेव अद्धछट्ठा पंचसया पण्णवीसं तु ॥ १५६ ॥

व्याख्या—नव धनुःशतानि प्रथमः अष्टौ च सप्त अर्धसप्तमानि षट् च अर्धषष्ठानि पञ्च शतानि पञ्चविंशति, अन्ये पठन्ति-पञ्चशतानि विंशत्यधिकानि, यथासंख्यं विमलवाहनादीनामिदं प्रमाणं द्रष्टव्यं इति गाथार्थः ॥ १५६ ॥ गतं प्रमाणद्वारं, इदानीं कुलकरसंहननसंस्थानप्रतिपादनायाह—

वज्जरिसहसंघयणा समचउरंसा य हुंति संठाणे। वण्णंपि य वुच्छामि पत्तेयं जस्स जो आसी ॥ १५७ ॥

गमनिका—वज्रऋषभसंहननाः सर्व एव समचतुरस्राश्च भवन्ति 'संस्थाने' इति संस्थानविषये निरूप्यमाणा इति, वर्णद्वारसंबन्धाभिधानायाह—वर्णमपि च वक्ष्ये प्रत्येकं यस्य य आसीदिति गाथार्थः ॥ १५७ ॥

चक्खुम जसमं च पसेणइअं एए पिअंगुवण्णाभा। अभिचंदो ससिगोरो निम्मलकणगप्पभा सेसा ॥ १५८ ॥

१ वसुदेवहिण्डीत * पण्णवीसा य + पञ्चविंशतिश्च ‡ ०प्यमाणे.

गमनिका—चक्षुष्मान् यशस्वी च प्रसेनजिच्चैते प्रियङ्गुवर्णाभाः अभिचन्द्रः शशिगौरः निर्मलकनकप्रभाः शेषा—विमलवाहनादयः, भावार्थः सुगम एव, नवरं निर्मलकनकवत् प्रभा—छाया येषां ते तथाविधा इति गाथार्थः ॥ १५८ ॥ गतं वर्णद्वारं, स्त्रीद्वारव्याचिख्यासयाऽऽह—

**चंदजसचंदकंता सरूव पडिरूव चक्खुकंता य । सिरिकंता मरुदेवी कुलगरपत्तीण नामाइं ॥ १५९ ॥**

गमनिका—चन्द्रयशाः चन्द्रकान्ता सुरूपा प्रतिरूपा चक्षुःकान्ता च श्रीकान्ता मरुदेवी कुलकरपत्नीनां नामानीति गाथार्थः ॥ १५९ ॥ एताश्च संहननादिभिः कुलकरतुल्या एव द्रष्टव्याः, यत आह—

**संघयणं संठाणं उच्चत्तं चेव कुलगरेहि समं । वण्णेण एगवण्णा सव्वाओ पियंगुवण्णाओ ॥ १६० ॥**

गमनिका—संहननं संस्थानं उच्चैस्त्वं चैव कुलकरैः—आत्मीयैः, समं—अनुरूपं आसां प्रस्तुतस्त्रीणमिति, किंतु प्रमाणेन ईषन्न्यूना इति संप्रदायः, तथापि ईषन्न्यूनत्वान्न भेदाभिधानमिति, वर्णेन एकवर्णाः सर्वाः प्रियङ्गुवर्णा इति गाथार्थः ॥ १६० ॥ स्त्रीद्वारं गतं, इदानीं आयुर्द्वारम्—

**पलिओवमदसभाए* पढमस्साउं तओ असंखिज्जा । ते आणुपुव्विहीणा पुव्वा नाभिस्स संखेज्जा ॥ १६१ ॥**

व्याख्या—पल्योपमदशभागः, 'प्रथमस्य' विमलवाहनस्य आयुरिति, ततः अन्येषा चक्षुष्मदादीना असंख्येयानि, पूर्वाणीति योगः, तान्येवानुपूर्वीहीनानि नाभेः संख्येयान्यायुष्कमित्ययं गाथार्थः ॥ १६१ ॥

* ०भागो.

अन्ये तु व्याचक्षते—पल्योपमदशभाग एव प्रथमस्यायुः ततो द्वितीयस्य असंख्येयाः—पल्योपमासंख्येयभागा इति वाक्यशेषः, त एव चानुपूर्वीहीना* शेषाणामायुष्कं द्रष्टव्याः तावद् यावत्पूर्वाणि नाभेः संख्येयानि इति, अविरुद्धा चेय व्याख्येति । अन्ये तु व्याचक्षते—पल्योपमदशभागः प्रथमस्य आयुष्कं, ततः शेषाणां 'असंखेज्जा' इति समुदितानां पल्योपमासंख्येयभागाः, एतदुक्त भवति—द्वितीयस्य पल्योपमासंख्येयभागः, शेषाणां तत एवासंख्येयभागोऽसंख्येयभाग+ पात्यते तावद्यावन्नाभेः असंख्येयानि पूर्वाणि । इदं पुनरपव्याख्यानं, कुतः ?, पञ्चानामसंख्येयभागानां पल्योपमचत्वारिंशत्तमभा†गानुपपत्तेः, कथम् ?, पल्योपमं विंशतिभागाः क्रियते‡, तदष्टभागे कुलकरोत्पत्तिः, प्रथमस्य दशभाग आयुः, शेषाणां पञ्चानामर्धरूपाच्चत्वारिंशत्तमभागाद् असंख्यातोऽसंख्यातो भाग आयुः तथाऽप्यर्धं किञ्चिन्न्यूनं चत्वारिंशत्तमो भागोऽवशिष्यते, यतः कृतविंशतिभागपल्योपमस्य अष्टभागे अष्टभागे इदं भवति, ततोऽपि दशभागे द्वौ जातौ¶, गताः असंख्यानाः पञ्चभागाः, अर्धाद् यदर्धं किञ्चिन्न्यूनं स चत्वारिंशत्तमो भाग इति, उक्तं च—'पलिओवमट्ठभागे सेसंमि उ कुलगरुप्पत्ती' (गाथा १५०), तत्रापि प्रथमस्य दशमभाग आयुष्कमुक्तं, तस्मिंश्चापगते विंशतितमभागद्वयस्य व्यपगमाच्छेषश्चत्वारिंशद्भागोऽवतिष्ठते◊, स च संख्येयतमः, ततश्च कालो न गच्छति, आह—अत एव नाभेरसंख्येयानि पूर्वाणि आयुष्कमिष्टं§, उच्यते, इष्टमिदं, अयुक्तं चैतत्, मरुदेव्याः संख्येयवर्षायुष्कत्वात्, न हि केवलज्ञानमसंख्येयवर्षायुषा भवतीति, ततः किमिति चेद्, उच्यते, ततश्च नाभेरपि संख्येयवर्षायुष्कत्वम् ॥ १६१ ॥ यत आह—

* ०या भागा + ०निम० † ०पमवि० ‡ क्रियन्ते ¶ जातौ ◊ ०ष्ठति § ०मिष्ट

**जं चेव आउयं कुलगराण तं चेव होइ तासिंपि । जं पढमगस्स आउं तावइयं चेव हत्थिस्स ॥ १६२ ॥**

गमनिका—यदेव आयुष्कं कुलकराणां तदेव भवति तासामपि—कुलकराङ्गनानां, संख्यासाम्याच्च तदेवेत्यभिधीयते, तथा यत्तु प्रथमस्यायुः कुलकरस्य, तावदेव भवति हस्तिनः, एवं शेषकुलकरहस्तिनामपि कुलकरतुल्यं द्रष्टव्यमिति गाथार्थः ॥ १६२ ॥ इदानीं भागद्वारं—कः कस्य सर्वायुष्कात् कुलकरभाग इति—

**जं जस्स आउयं खलु तं दसभागे* समं विभइऊणं+ । मज्झिल्लट्ठतिभागे कुलगरकालं वियाणाहि ॥ १६३ ॥**

व्याख्या—यद्यस्यायुष्कं खलु तद् दशभागान् समं विभज्य मध्यमाष्टत्रिभागे कुलकरकालं विजानीहीति गाथार्थः ॥ १६३ ॥ अमुमेवार्थं प्रचिकटयिषुराह—

**पढमो य कुमारत्ते भागो चरमो य वुड्ढभावंमि† । ते पयणुपिज्जदोसा सव्वे देवेसु उववण्णा‡ ॥ १६४ ॥**

गमनिका—तेषां दशानां भागानां प्रथमः कुमारत्वे गृह्यते, भागः चरमश्च वृद्धभाग इति, शेषा मध्यमा अष्टौ भागाः कुलकरभागा इति, अत एवोक्तं 'मध्यमाष्टत्रिभागे' इति, मध्यमाश्च ते अष्टौ च मध्यमाष्टौ त एव च त्रिभागस्तस्मिन् कुलकरकालं विजानीहि, गतं भागद्वारं, उपपातद्वारमुच्यते—ते प्रतनुप्रेमद्वेषाः, प्रेम रागे वर्त्तते, द्वेषस्तु प्रसिद्ध एव, सर्वे विमलवाहनादयो देवेषु उपपन्ना इति गाथार्थः ॥ १६४ ॥ न ज्ञायते केषु देवेषु उपपन्ना इति, अत आह—

**दो चेव सुवण्णेसुं उदहिकुमारेसु हुंति दो चेव । दो दीवकुमारेसुं एगो नागेसु उववण्णो ॥ १६५ ॥**

* ०भागो + ०इऊण. † ०भाव ‡ ववय०

गमनिका—द्वावेव सुपर्णेषु देवेषु उदधिकुमारेषु भवतः द्वावेव द्वौ द्वीपकुमारेषु एको नागेषु उपपन्नः, यथासंख्यमयं विमलवाहनादीनामुपपात इति गाथार्थः ॥ १६५ ॥ इदानीं तत्स्त्रीणां हस्तिनां चोपपातमभिधित्सुराह—

**हत्थी छच्चित्थीओ नागकुमारेसु हुंति उववण्णा । एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती ॥ १६६ ॥**

गमनिका—हस्तिनः षट् स्त्रियश्चन्द्रयशाद्या नागकुमारेषु भवन्ति उपपन्नाः, अन्ये तु प्रतिपादयन्ति—एक एव हस्ती षट् स्त्रियो नागेषु उपपन्नाः, शेषैर्नाधिकार इति, एका सप्तमी सिद्धिं प्राप्ता मरुदेवी नाभेः पत्नीति गाथार्थः ॥ १६६ ॥ उक्तमुपपातद्वारं, अधुना नीतिद्वारप्रतिपादनायाह—

**हक्कारे मक्कारे धिक्कारे चेव दंडनीईओ । वुच्छं तासि विसेसं जहक्कमं आणुपुव्वीए ॥ १६७ ॥**

गमनिका—हक्कारः मक्कारः धिक्कारश्चैव* दण्डनीतयो वर्त्तन्ते, वक्ष्ये तासां विशेषं यथाक्रमं—या यस्येति, आनुपूर्व्या—परिपाट्येति गाथार्थः ॥ १६७ ॥

**पढमबीयाण पढमा तइयचउत्थाण अभिनवा बीया । पंचमछट्ठस्स य सत्तमस्स तइया अभिनवा उ ॥ १६८ ॥**

गमनिका—प्रथमद्वितीययोः—कुलकरयोः प्रथमा दण्डनीतिः—हक्काराख्या, तृतीयचतुर्थयोरभिनवा द्वितीया, एतदुक्तं भवति—स्वल्पापराधिनः प्रथमया दण्डः क्रियते, महदपराधिनो द्वितीययेत्यतोऽभिनवा सेति, सा† च मकाराख्या, तथा

* श्चैव † द्वितीयेति

पञ्चमषष्ठयोः, सप्तमस्य तृतीयैव अभिनवा—धिक्काराख्या, एताश्च तिस्रो लघुमध्यमोत्कृष्टापराधगोचराः खल्ववसेया इति गाथार्थः ॥ १६८ ॥

**सेसा उ दंडनीई माणवगनिहीओ होंति भरहस्स । उसभस्स गिहावासे असक्कओ आसि आहारो ॥ १६९ ॥**

गमनिका—शेषा तु दण्डनीतिः माणवकनिधेर्भवति भरतस्य, वर्त्तमानक्रियाभिधानं इह क्षेत्रे सर्वावसर्पिणीस्थितिप्रदर्शनार्थं, अन्यास्वप्यतीतासु एष्यासु चावसर्पिणीषु अयमेव न्यायः प्रायो नीत्युत्पाद इति, तस्य च भरतस्य पिता ऋषभनाथः, तस्य च ऋषभस्य गृहवासे असंस्कृत आसीदाहारः—स्वभावसंपन्न एवेति, तस्य हि देवेन्द्रादेशाद्देवाः देवकुरूत्तरकुरुक्षेत्रयोः स्वादूनि फलानि क्षीरोदाच्चोदकमुपनीतवन्त इति गाथार्थः ॥ १६९ ॥ इयं मूल*निर्युक्तिगाथा, एनामेव भाष्यकृद् व्याख्यानयन्नाह—

**परिभासणा उ पढमा मंडलिबंधं+मि होइ बीया उ ।**
**चारग छविछेआई भरहस्स चउव्विहा नीई ॥ ३ ॥ † ( भाष्यम् )**

गमनिका—यदुक्तं 'शेषा तु दण्डनीतिर्माणवकनिधेर्भवति भरतस्य' सेयं—परिभाषणा तु प्रथमा, मण्डलीबन्धश्च भवति द्वितीया तु, चारकः छविच्छेदश्च भरतस्य चतुर्विधा नीतिः, तत्र परिभाषणं परिभाषा—कोपाविष्करणेन मा यास्यसीत्यपराधिनोऽभिधानं, तथा मण्डलीबन्धः—नास्मात्प्रदेशाद् गन्तव्यं, चारको—बन्धनगृहं, छविच्छेदः—हस्तपादनासिकादिच्छेद इति, इयं

* भाष्यकारेण व्याख्यानादस्या मूलत्व तत्र पाश्चात्यभागकल्पना निर्युक्तेः मूलभाष्य० + बधोमि † मूलभाष्यगाथेति निर्युक्तिपुस्तके ।

भरतस्य चतुर्विधा दण्डनीतिरिति । अन्ये त्वेव प्रतिपादयन्ति—किल परिभाषणामण्डलिबन्धौ ऋषभनाथेनैवोत्पादिताविति, चारकच्छविच्छेदौ तु माणवकनिधेरुत्पन्नौ इति, भरतस्य—चक्रवर्त्तिन एवं चतुर्विधा नीतिरिति गाथार्थः ॥ ३ ॥ अथ कोऽयं भरत इत्याह—ऋषभनाथपुत्रः, अथ कोऽयं ऋषभनाथ इति तद्वक्तव्यताऽभिधित्सयाऽऽह—नाभी गाहा । अथवा प्रतिपादितः कुलकरवंशः, इदानीं प्राक्सूचितेक्ष्वाकुवंशः प्रतिपाद्यते—स च ऋषभनाथप्रभव इत्यतस्तद्वक्तव्यताऽभिधित्सयाऽऽह—

**नाभी विणीअभूमी मरुदेवी उत्तरा य साढा य । राया य वइरणाहो विमाणसव्वट्ठसिद्धाओ ॥ १७० ॥**

गमनिका—इयं हि निर्युक्तिगाथा प्रभूतार्थप्रतिपादिका, अस्यां च प्रति*पदं क्रियाऽध्याहारः कार्यः, स चेत्थम्—नाभिरिति नाभिर्नाम कुलकरो बभूव, विनीता भूमिरिति—तस्य विनीताभूमौ प्रायः अवस्थानमासीद्, मरुदेवीति तस्य भार्या, राजा च प्राग्भवे वैरनाभः सन् प्रव्रज्यां गृहीत्वा तीर्थकरनामगोत्रं कर्म बद्ध्वा मृत्वा सर्वार्थसिद्धिमवाप्य ततस्तस्याः मरुदेव्याः तस्यां विनीतभूमौ सर्वार्थसिद्धाद्विमानादवतीर्य ऋषभनाथः संजातः, तस्योत्तराषाढानक्षत्रमासीत् इति गाथार्थः ॥ १७० ॥ इदानीं यः प्राग्भवे वैरनाभः यथा च तेन सम्यक्त्वमवाप्तं यावतो वा भवान् अवाप्तसम्यक्त्वः संसारं पर्यटितः यथा च तेन तीर्थकरनामगोत्रं कर्म बद्धमित्यमुमर्थमभिधित्सुराह—

**+धणसत्थवाह घोसण जइगमण अडविवासठाणं च । बहुवोलीणे वासे चिंता घयदाणमासि तया ॥ १७१ ॥**

* प्रतिपाद + धणमिहुणसुरमहब्बलललियगयवइरजघमिहुणे य । सोहम्मविज्जअच्चुअ चक्की सव्वट्ठ उसभे अ ॥ १ ॥ ( गाथेय अव्याख्याता निर्युक्तौ )

उत्तरकुरु सोहम्मे महाविदेहे महब्बलो राया । ईसाणे ललियंगो महाविदेहे वइरजंघो ॥ १ ॥* (प्रक्षिप्ता)
उत्तरकुरु सोहम्मे विदेहि तेगिच्छियस्स तत्थ सुओ । रायसुय सेट्ठिमच्चासत्थाहसुया वयंसा से ॥ १७२ ॥

अन्या अपि उक्तसंबन्धा एव द्रष्टव्याः तावत् यावत् 'पढमेण पच्छिमेण' गाहा, किंतु यथाऽवसरमसंमोहनिमित्तमुपन्यासं करिष्यामः । प्रथमगाथागमनिका—धनः सार्थवाहो घोषणं यतिगमनं अटवी वर्षस्थानं च बहुवोलीने वर्षे चिन्ता घृतदानमासीत्तदा । द्वितीयगाथागमनिका—उत्तरकुरौ सौधर्मे महाविदेहे महाबलो राजा ईशाने ललिताङ्गो महाविदेहे च वैरजङ्घः । इयमन्यकर्तृकी गाथा सोपयोगा च । तृतीयगाथागमनिका—उत्तरकुरौ सौधर्मे महाविदेहे चिकित्सकस्य तत्र सुतः राजसुतश्रेष्ठ्यमात्यसार्थवाहसुता वयस्याः 'से' तस्य । आसां भावार्थः कथानकादवसेयः, प्रतिपदं च अनुरूपः क्रियाऽध्याहारः कार्य इति, यथा—धनः सार्थवाह इति धनो नाम सार्थवाह आसीत्, स हि देशान्तरं गन्तुमना घोषणं कारितवानित्यादि । कथानकम्— [1]तेणं कालेणं तेणं समएणं अवरविदेहे वासे धणो नाम सत्थवाहो होत्था, सो खितिपतिट्ठिआओ नयराओ वसंतपुरं पट्ठिओ वणिज्जेणं, घोसणयं कारेइ—जो मए सद्धिं जाइ तस्साहमुदंतं वहामित्ति,' तंजहा—खाणेण वा पाणेण वा वत्थेण वा पत्तेण वा ओसहेण वा भेसज्जेण वा अण्णेण वा केणई जो जेण विसूरइत्ति

1 तस्मिन्काले तस्मिन्समयेऽपरविदेहे वर्षे धनो नाम सार्थवाहोऽभूत्, स क्षितिप्रतिष्ठितात् नगराद्वसन्तपुरं प्रस्थितो वाणिज्येन, घोषणां कारयति—यो मया सार्धं याति तस्याहमुदन्तं वहामीति, तद्यथा—खादनेन वा पानेन वा वस्त्रेण वा पात्रेण वा औषधेन वा भैषज्येन वा अन्येन वा यो (विना) येन केनचिद्विषीदति इति' * इयं अन्यकर्तृकी सोपयोगा चेति वृत्तिकाराः + घनसा०

तं' च सोऊण वहवे तडियकप्पडियादओ पयट्टंति, विभासा, जाव तेण समं गच्छो साहूण संपट्ठितो, को पुण कालो ?, चरमनिदाघो, सो य सत्थो जाहे अडविमज्झे संपत्तो ताहे वासरत्तो जाओ, ताहे सो सत्थवाहो अइदुग्गमा पंथत्तिकाउं तत्थेव सत्थनिवेसं काउं वासावासं ठितो, तंमि य ठिते सव्वो सत्थो ठितो, जाहे य तेसिं सत्थिल्लियाणं भोयणं णिट्ठियं ताहे कंदमूलफलाणि समुद्दिसिउमारद्धा, तत्थ साहुणो दुक्खिया जदि कहवि अहापवत्ताणि लभंति ताहे गेण्हंति, एवं काले वच्चंते थोवावसेसे वासारत्ते ताहे तस्स धणस्स चिंता जाता—को एत्थ सत्थे दुक्खिओत्ति ?, ताहे सरिअं जहा मए समं साहुणो आगया, तेसिं च कंदाइ न कप्पंति, ते दुक्खिता तवस्सिणो, कल्लं देमित्ति पभाए निमन्तिता भणंति—जं परं अम्ह कप्पिअं होज्जा* त गेण्हेज्जामो, किं पुण तुब्भं कप्पति ?, जं अकयमकारियं भिक्खामेत्तं, जं वा सिणेहादि+, तो तेण साहूण घयं फासुय विउलं दाणं दिण्णं, सो य अहाउयं पालेत्ता कालमासे कालं किच्चा तेण दाणफलेण उत्तरकुराए

1 तच्छ्रुत्वा च बहवस्तटिककार्पटिकादय प्रवर्तन्ते, विभाषा (वर्णन), यावत्तेन सम गच्छ साधूना सप्रस्थित, क पुन काल ?, चरमनिदाघ, स च सार्थो यदाऽटवीमध्ये समाप्त तदा वर्षारात्रो जात, तदा स सार्थवाहोऽतिदुर्गमा पन्थान इतिकृत्वा तत्रैव सार्थनिवेश कृत्वा वर्षावास स्थितः, तस्मिंश्च स्थिते सर्व सार्थ स्थित, यदा च तेषा सार्थिकानां भोजन निष्ठितं तदा कन्दमूलफलानि समुद्देष्टु (भोक्तु) आरब्धाः, तत्र साधव दु खिता यदि कथमपि यथाप्रवृत्तानि लभन्ते तदा गृह्णन्ति, एव काले व्रजति स्तोकावशेषो वर्षारात्र तदा धनस्य चिन्ता जाता—क एतस्मिन्सार्थे दु खित इति, तदा स्मृत यथा मया सम साधव आगतास्तेषा कन्दादि न कल्पते, ते दु खितास्तपस्विन, कल्ये दास्ये इति प्रभाते निमन्त्रिता भणन्ति—यत्परमस्माक कल्प्य भवेत्तद्गृहीष्याम, किं पुनर्भवतां कल्पते ?, यदकृतमकारित भिक्षामात्र यद्वा स्नेहादि, तत तेन साधुभ्यो घृत प्रासुक विपुल दान दत्त, स च यथायुष्क पालयित्वा कालमासे काल कृत्वा तेन दानफलेन उत्तरकुरुषु * होज्ज + सिणेहति

मणूसो जाओ, तओ† आउक्खएणं सोहम्मे कप्पे देवो उववण्णो, ततो चइऊण इहेव जंबूदीवे दीवे अवरविदेहे गंधिलावतीविजए वेयड्ढपव्वए गंधारजणवए गन्धसमिद्धे विज्जाहरणगरे अतिवलरण्णो+ नत्ता सयबलराइणो पुत्तो महाबलो नाम राया जाओ, तत्थ सुबुद्धिणा अमच्चेण सावगेण पिअवयस्सेण णाडयपेक्खाअक्खित्तमणो संबोहिओ, मासावसेसाऊ बावीसदिणे भत्तपच्चक्खाणं काउं मरिऊण ईसाणकप्पे सिरिप्पभे विमाणे ललियंगओ नाम देवो जाओ, ततो चइऊण इहेव जंबूदीवे दीवे पुक्खलावइविजए लोहग्गलणगरसामी वइरजंघो नाम राया जाओ, तत्थ सभारिओ पच्छिमे वए पव्वयामित्ति चिंतंतो पुत्तेण वासघरे जोगधूवधूविए मारिओ, मरिऊण उत्तरकुराए सभारिओ मिहुणगो जाओ, तओ सोहम्मे कप्पे देवो जाओ, ततो चइऊण महाविदेहे वासे खिइपइट्ठिए णगरे वेज्जपुत्तो आयाओ, जद्दिवसं च जातो तद्दिवसमेगाहजातगा से इमे चत्तारि वयंसगा तंजहा—रायपुत्ते सेट्ठिपुत्ते अमच्चपुत्ते सत्थाहपुत्तेत्ति, संवड्ढिआ ते, अण्णया कयाइ

1 मनुष्यो जात, तत आयु क्षयेण सौधर्मे कल्पे देव उत्पन्न, ततश्च्युत्वा इहैव जम्बूद्वीपे द्वीपे अपरविदेहेषु गन्धिलावत्यां वैताढ्यपर्वते गान्धारजनपदे गन्धसमृद्धे विद्याधरनगरे अतिबलराजस्य नप्ता शतबलराजस्य पुत्र महाबलनामा राजा जात, तत्र सुबुद्धिना अमात्येन श्रावकेण प्रियवयस्येन नाटकप्रेक्षाक्षिप्तमना सबोधित, मासावशेषायु द्वाविंशतिदिनीं भक्तप्रत्याख्यान कृत्वा मृत्वेशानकल्पे श्रीप्रभे विमाने ललिताङ्कनामा देवो जात, ततश्च्युत्वेहैव जम्बूद्वीपे द्वीपे पुष्कलावतीविजये लोहार्गलनगरस्वामी वज्रजङ्घनामा राजा जात, तत्र सभार्य पश्चिमे वयसि प्रव्रजामीति चिन्तयन् पुत्रेण वासगृहे योगधूपधूपिते (तेन) मारित, मृत्वोत्तरकुरुषु सभार्यो मिथुनको जात, तत सौधर्मे कल्पे देवो जात, ततश्च्युत्वा पुनरपि महाविदेहे वर्षे क्षितिप्रतिष्ठिते नगरे वैद्यपुत्र आयातः, यद्दिवसे च जातस्तद्दिवसे एकाहर्जातास्तस्येमे चत्वारो वयस्यास्तद्यथा—राजपुत्र श्रेष्ठिपुत्र अमात्यपुत्र सार्थवाहपुत्र इति, संवर्धितास्ते, अन्यदा कदाचित् * तेण + ०बलस्स र०. † पुणोवि म०.

[1]तस्स वेज्जस्स घरे एगओ* सबे सन्निसण्णा अच्छंति, तत्थ साहू महप्पा सो किमिकुट्ठेण गहिओ अइगतो भिक्खस्स, तेहिं सप्पणयं सहासं सो भणति–तुब्भेहि नाम सबो लोगो खाय†वो, ण तुब्भेहिं तवस्सिस्स वा अणाहस्स वा किरिया कायबा, सो भणति–करेजामि, किं पुण ? ममोसहाणि णत्थि, ते भणंति–अम्हे मोल्लं देमो, किं ओसहं जाइज्जउ ?, सो भणति–कंबलरयणं गोसीसचंदणं च, तइयं सह‡स्सपागं तिल्लं तं मम अत्थि, ताहे मग्गिउं पवत्ता, आगमियं च णेहिं जहा–अमुगस्स वाणियगस्स अत्थि दोवि एयाणि, ते गया तस्स सगासं दो लक्खाणि घेत्तुं, वाणिओ संभंतो भणति–किं देमि ?, ते भणंति–कंबलरयणं गोसीसचंदणं च देहि, तेण भणति–किं एतेहिं कज्जं ?, भणंति–साहुस्स किरिया कायबा, तेण भणितं–अलाहि मम मोल्लेण, इहरहा एव गेण्हह, करेह किरियं, ममवि धम्मो होउत्ति, सो वाणियगो चिंतेइ–जइ ताव एतेसिं वालाणं एरिसा सद्धा धम्मस्सुवरिं, मम णाम मंदपुण्णस्स इहलोगपडिबद्धस्स नत्थि, सो

१ तस्य वैद्यस्य गृहे एकत्र सन्निषण्णास्तिष्ठन्ति, तत्र साधुर्महात्मा स कृमिकुष्ठेन गृहीतः अतिगतो भिक्षायै, तैः सप्रणयं सहासं सोऽभाणि–युष्माभिर्नाम सर्वो लोकः खादितव्य, न युष्माभि तपस्विनो वा अनाथस्य वा क्रिया ( चिकित्सा ) कर्तव्या, स भणति–करोमि, किं पुनः ? मम औषधानि न सन्ति, ते भणन्ति–वय मूल्य दद्म, किमौषधं याच्यते ( तां ), स भणति–कम्बलरत्नं गोशीर्षचन्दनं च, तृतीयं सहस्रपाकं तैलं तन्ममास्ति, तदा मार्गयितु प्रवृत्ता, ज्ञातं च तैः यथा–अमुकस्य वणिजो द्वे अपि एते स्त, ते गतास्तस्य सकाशं द्वे लक्षे गृहीत्वा, वणिक् सम्भ्रान्तो भणति–किं ददामि ?, ते भणन्ति–कम्बलरत्न गोशीर्षचन्दन च देहि, तेन भण्यते–किमेतै कार्यं ?, भणन्ति–साधो क्रिया कर्तव्या, तेन भणित–अलं मम मूल्येन, इतरथैव गृहीत कुरुत क्रियां, ममापि धर्मो भवत्विति, स वणिग् चिन्तयति–यदि तावदेतेषां बालानामीदृशी श्रद्धा धर्मस्योपरि, मम नाम मन्दपुण्यस्य इहलोकप्रतिबद्धस्य नास्ति, स

* एगगओ + कोढेण † खाइयबो ‡ सयसह०

[1]संवेगमावण्णो तहारूवाणं थेराणं अंतिए पबइओ सिद्धो। अमुमेवार्थं उपसंहरन् गाथाद्वयमाह—

विज्जसुअस्स य गेहे किमिकुट्ठोवद्दुअं जइं दट्ठुं। बिंति य ते विज्जसुयं करेहि एअस्स तेगिच्छं ॥ १७३ ॥

तिल्लं तेगिच्छसुओ कंबलगं चंदणं च वाणियओ। दाउं अभिणिक्खंतो तेणेव भवेण अंतगडो ॥ १७४ ॥

गमनिका—वैद्यसुतस्य च गेहे कृमिकुष्ठोपद्रुतं मुनिं दृष्ट्वा वदन्ति च ते वैद्यसुतं–कुरु अस्य चिकित्सां, तैलं चिकित्सकसुतः कम्बलकं चन्दनं च वणिग् दत्त्वा अभिनिष्क्रान्तः, तेनैव भवेन अन्तकृत्, भावार्थः स्पष्ट एव, क्वचित् क्रियाध्याहारः स्वबुद्ध्या कार्य इति गाथाद्वयार्थः ॥ १७३—१७४ ॥ कथानकशेषमुच्यते—[2]इमेवि घेत्तूण ताणि ओसहाणि गता तस्स साहुणो पासं जत्थ सो उज्जाणे पडिमं ठिओ, ते तं पडिमं ठिअं वंदिऊण अणुण्णवेंति–अणुजाणह भगवं ! अम्हे तुम्हं धम्मविग्घं काउं उवट्ठिआ, ताहे तेण तेल्लेण सो साहू अब्भंगिओ, तं च तिल्लं रोम†कूवेहिं सबं अइगतं, तंमि य अइगए किमिआ सबे संखुद्धा, तेहिं चलंतेहिं तस्स साहुणो अतीव वेयणा पाउब्भूया, ताहे ते निग्गते दट्ठूण कंबलरयणेण

१ सवेगमापन्न तथारूपाणा स्थविराणा अन्तिके प्रव्रजित सिद्ध । २ इमेऽपि गृहीत्वा तान्यौषधानि गतास्तस्य साधो पार्श्वं यत्र स उद्याने प्रतिमया स्थित, ते त प्रतिमया स्थित वन्दित्वाऽनुज्ञापयन्ति–अनुजानीहि भगवन् ! वय तव धर्मविघ्न कर्तुमुपस्थिता, तदा तेन तैलेन स साधुरभ्यङ्गित, तच्च तैल रोमकूपे ( ०पेषु ) सर्वं अतिगत ( व्याप्त ), तस्मिंश्चातिगते कृमय सर्वे सक्षुब्धा, तेषु चलत्सु तस्य साधोरतीव वेदना प्रादुर्भूता, तदा तान्निर्गतान् दृष्ट्वा कम्बलरत्नेन

* यति + वन्दन्ते च † रोम कू०

[1]सो पाउओ साहू, तं सीतलं, तं चेव* तेल्लं उण्हवीरियं, किमिया तत्थ लग्गा, ताहे पुवाणीयगोकडेवरे पप्फो+डेंति, ते सबे पडिया, ताहे सो साहू चंदणेण लित्तो, ततो समासत्थो, एवेक्कसिं दो तिण्णि वारे अब्भंगेऊण सो साहू तेहिं नीरोगो कओ, पढमं मक्खिज्जति,† पच्छा आलिंपति गोसीसचंदणेणं पुणो मक्खिज्जइ, एवेताए परिवाडीए पढमब्भंगे तयागया णिग्गया बिइयाए मंसगया तइयाए अट्ठिगया बेंदिया णिग्गया, ततो संरोहणीए ओसहीए कणगवण्णो जाओ, ताहे खामित्ता पडिगता, ते पच्छा साहू जाता, अहाउयं पालइत्ता तम्मूलागं पंचवि जणा अच्चुए उववण्णा, ततो चइऊण इहेव जंबूदी‡वे पुबविदेहे पुक्खलावइविजए पुंडरगिणीए नयरीए व¶इरसेणस्स रण्णो धारिणीए देवीए उयरे पढमो वइरणाभो णाम पुत्तो जाओ, जो से§ वेज्जपुत्तो चक्कवट्टी आगतो, अवसेसा कमेण बाहुसुबाहुपीढमहापीढत्ति, वइरसेणो पबइओ, सो य तित्थंकरो जाओ, इयरेवि संवड्ढिया पंचलक्खणे|| भोए भुंजंति, जद्दिवसं वइरसेणस्स केवलनाणं उप्प||ण्णं,

१ स प्रावृत साधु , तत् शीतल, तच्चैव तैल उष्णवीर्यं, कृमयस्तत्र लग्ना , तदा पूर्वानीतगोकलेवरे प्रस्फोटयन्ति ( क्षिपन्ति ), ते सर्वे पतिता , तदा साधुः स चन्दनेन लिप्त , तत समाश्वस्त , एवमेक द्वौ त्रीन् वारान् अभ्यज्य स साधुस्तैर्नीरोग कृत , प्रथम म्रक्ष्यते पश्चादालिप्यते गोशीर्षचन्दनेन पुनर्म्रक्ष्यते, एवमेतया परिपाट्या प्रथमाभ्यङ्गे त्वग्गता निर्गता द्वितीयाया मांसगतास्तृतीयायामस्थिगता द्वीन्द्रिया निर्गता , तत सरोहण्यौषध्या कनकवर्णो जात , तदा क्षमयित्वा प्रतिगता, ते पश्चात् साधवो जाता , यथायुष्कं पालयित्वा तन्मूल पञ्चापि जना अच्युते उत्पन्ना । ततश्च्युत्वा इहैव जम्बूद्वीपे पूर्वविदेहेषु पुष्करावतीविजये पुण्डरीकिण्यां नगर्यां वज्रसेनस्य राज्ञ धारिण्या देव्या उदरे प्रथमो वज्रनाभनामा पुत्रो जात , य स वैद्यपुत्रश्चक्रवर्त्ती आयात ( उत्पन्न ), अवशेषा क्रमेण बाहुसुबाहुपीठमहापीठा इति, वज्रसेन प्रव्रजित , स च तीर्थकरो जात , इतरेऽपि सवर्धिता पञ्चलक्षणान् भोगान् भुञ्जते, यद्दिवसे वज्रसेनस्य केवलज्ञानमुत्पन्न,

* च. + पप्फोडिय † ताहे पावणिज्जति ‡ दीवे दीवे ¶ वइरसेणस्स § सो वेज्जपुत्तो § सो जाओ || ०णभोए ||| समुप्पण्ण.

तद्दिवसं वइरणाभस्स चक्करयणं समुप्पण्णं, वइरो चक्की जाओ, तेणं साहुवेयावच्चेण चक्कवट्टीभोया उदिण्णा, अवसेसा चत्तारि मंडलिया रायाणो, तत्थ वइरणाभचक्कवट्टिस्स चउरासीतिं पुव्वलक्खा सवाउगं, तत्थ कुमारो तीसं मंडलिओ सोलस चउव्वीस महाराया चोद्दस सामण्णपरिआओ, एवं चउरासीइ सवाउयं, भोगे भुंजंता विहरंति, इओ य तित्थयरसमोसरणं, सो पिउपायमूले चउहिवि सहोदरेहिं सहिओ पव्वइओ, तत्थ वइरणाभेण चउद्दस पुव्वा अहिज्जिया, सेसा एक्कारसंगवी चउरो, तत्थ बाहू तेसिं वेयावच्चं करेति, जो सुबाहू सो साहुणो वीसामेति, एवं ते करेंते वइरणाभो भगवं अणुवूहइ–अहो सुलद्धं जम्मजीविअफलं, जं साहूणं वेयावच्चं कीरइ, परिस्संता वा साहुणो वीसामिज्जंति, एवं पसंसइ. एवं पसंसिज्जंतेसु तेसु तेसिं दोण्हं पच्छिमाणं अप्पत्तिअं भवइ, अम्हे सज्झायंता न पसंसिज्जामो, जो करेइ सो पसंसिज्जइ,

१ तद्दिवसे वज्रनाभस्य चक्ररत्नं समुत्पन्नं, वज्रनाभः चक्री जातः, तेन साधुवैयावृत्त्येन चक्रवर्त्तिभोगा उदीर्णाः (लब्धाः), अवशेषाश्चत्वारो माण्डलिका राजानो (जाताः), तत्र वज्रनाभचक्रवर्त्तिनश्चतुरशीतिलक्षपूर्वाणि सर्वायुष्कं कुमारः त्रिंशतं माण्डलिकः षोडश चतुर्विंशतिं महाराजः चतुर्दश श्रामण्यपर्यायः, एवं चतुरशीतिः सर्वायुष्कं, भोगान् भुञ्जमाना विहरन्ति, इतश्च तीर्थकरसमवसरणं, स पितृपादमूले चतुर्भिरपि सहोदरैः सहितः प्रव्रजितः, तत्र वज्रनाभेन चतुर्दश पूर्वाण्यधीतानि, शेषा एकादशाङ्गविदः चत्वारः, तत्र बाहुस्तेषां वैयावृत्त्यं करोति, यः सुबाहुः स साधून् विश्रमयति, एवं तौ कुर्वन्तौ वज्रनाभो भगवान् अनुबृंहयति–अहो सुलब्धं जन्मजीवितफलं, यत् साधूनां वैयावृत्त्यं क्रियते, परिश्रान्ता वा साधवो विश्रम्यन्ते, एवं प्रशंसति, एवं प्रशस्यमानयोस्तयोर्द्वयोः पश्चिमयोरप्रीतिकं भवति, आवां स्वाध्यायन्तौ न प्रशस्यावहे, यः करोति स प्रशस्यते, * ०चक्किस्स + ०सीइं † ०सरणे ‡ बीऊ

सच्चो (च्चो) लोगववहारोत्ति, वइरणाभेण य विसुद्धपरिणामेण तित्थगरणामगोत्तं कम्मं बद्धंति । अमुमेवार्थमुपसंहरन्निदं गाथाचतुष्टयमाह—

साहुं तिगिच्छिऊणं सामण्णं देवलोगगमणं च । पुंडरगिणिए उ चुया तओ सुया वइरसेणस्स ॥ १७५ ॥

पढमित्थ वइरणाभो बाहु सुबाहू य पीढमहपीढे*। तेसि पिआ तित्थअरो णिक्खंता तेऽवि तत्थेव ॥ १७६ ॥

पढमो चउदसपुव्वी सेसा इक्कारसंगविउ चउरो । बीओ वेयावच्चं किइकम्मं तइओ कासी ॥ १७७ ॥

भोगफलं बाहुबलं पसंसणा जिट्ठ इयर अचियत्तं । पढमो तित्थयरत्तं वीसहि ठाणेहि कासी य ॥ १७८ ॥

आसामक्षरगमनिका—साधुं चिकि+त्सित्वा श्रामण्यं देवलोकगमनं च पौण्डरीकिण्यां च च्युताः, ततः सुता वैरसेनस्य जाता इति वाक्यशेषः, प्रथमोऽत्र वैर†नाभः बाहुः सुबाहुश्च पीठमहापीठौ, तेषां पिता तीर्थकरो निष्क्रान्तास्तेऽपि तत्रैव–पितुः सकाशे इत्यर्थः, प्रथमश्चतुर्दशपूर्वी शेषा एकादशाङ्गविदश्चत्वारः, तेषां चतुर्णां बाहुप्रभृतीनां मध्ये द्वितीयो वैयावृत्त्यकृतिकर्म तृतीयोऽकार्षीत्, भोगफलं बाहु‡बलं प्रशंसनं ज्येष्ठ इतरयोरचियत्तं, प्रथमस्तीर्थकरत्वं विंश¶तिभिः स्थानैरकार्षीत्, भावार्थस्तु उक्त एव, क्रियाऽध्याहारोऽपि स्वबुद्ध्या कार्यः, इह च विस्तरभयान्नोक्त इति गाथाचतुष्टयार्थः ॥१७५-१७६-१७७-१७८॥ यदुक्तं 'प्रथमस्तीर्थकरत्वं विंशतिभिः स्थानैरकार्षीत्,' तानि स्थानानि प्रतिपादयन्निदं गाथात्रयमाह–

१ सर्वो(त्यो) लोकव्यवहार इति, वज्रनाभेन च विशुद्धपरिणामेन तीर्थकरनामगोत्रं कर्म बद्धमिति * पीढा. + चिकित्सयित्वा † वइरनाभ ‡ बाहुफल ¶ विंशत्या (स्यात्)

अरिहंत सिद्ध पवयण गुरु थेर बहुस्सुए तवस्सीसुं। वच्छल्लया एएसिं अभिक्खनाणोवओगे य ॥ १७९ ॥

दंसण विणए आवस्सए य सीलव्वए निरइआरो । खणलव तवच्चियाए वेयावच्चे समाही य ॥ १८० ॥

अप्पुव्वनाणगहणे सुयभत्ती पवयणे पभावणया। एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥ १८१ ॥

व्याख्या—तत्र अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीति अर्हन्तः–शास्तार इति भावार्थः १ । सिद्धास्तु अशेषनिष्ठितकर्मांशाः परमसुखिनः कृतकृत्या इति भावार्थः २ । प्रवचनं–श्रुतज्ञानं तदुपयोगानन्यत्वाद्वा सङ्घ इति ३ । गृणन्ति शास्त्रार्थमिति गुरवः–धर्मोपदेशादिदातार इत्यर्थः ४ । स्थविराः–जातिश्रुतपर्यायभेदभिन्नाः, तत्र जातिस्थविरः षष्टिवर्षः श्रुतस्थविरः समवायधरः पर्यायस्थविरो विंशतिवर्षपर्यायः ५ । बहु श्रुतं येषां ते बहुश्रुताः, आपेक्षिकं बहुश्रुतत्वं, एवमर्थेऽपि संयोज्यं, किंतु सूत्रधरेभ्योऽर्थधराः प्रधानाः तेभ्योऽप्युभयधरा इति ६ । विचित्रं अनशनादिलक्षणं तपो विद्यते येषां ते तपस्विनः सामान्यसाधवो वा ७ । अर*हन्तश्च सिद्धाश्च प्रवचनं च गुरवश्च स्थविराश्च बहुश्रुताश्च तपस्विनश्च अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विनः । वत्सलभावो वत्सलता, सा चानुरागयथावस्थितगुणोत्कीर्त्तनायथानुरूपोपचारलक्षणा तया, एतेषामर्हदादीनामिति, प्राक् षष्ठ्यर्थे सप्तमी 'बहुस्सुए तवस्सीणं' वा पाठान्तरं, तीर्थकरनामगोत्रं कर्म बध्यत इति, अभीक्ष्णं–अनवरतं ज्ञानोपयोगे च सति बध्यते ८ । दर्शनं–सम्यक्त्वं, विनयो–ज्ञानादिविनयः, स च दशवैकालिकादवसेयः, दर्शनं च विनयश्च दर्शनविनयौ तयोर्निरतिचारः तीर्थकरनामगोत्रं कर्म बध्नाति १०–११

* अर्हन्तश्च (स्यात्)

आवश्यकम्-अवश्यकर्त्तव्यं संयमव्यापारनिष्पन्नं तस्मिंश्च निरतिचारः सन्निति १२। शीलानि च व्रतानि च शीलव्रतानि शीलानि-उत्तरगुणाः व्रतानि-मूलगुणाः तेषु च अनतिचार इति १३। क्षणलवग्रहणं कालोपलक्षणं, क्षणलवादिषु संवेगभावनाध्यानासेवनतश्च बध्यते १४। तथा तपस्त्यागयोर्बध्यते, यो हि यथाशक्त्या तपः आसेवते त्यागं च यतिजने विधिना करोति १६। व्यावृतभावो वैयावृत्त्यं, तच्च दशधा, तस्मिन्सति बध्यते १७। समाधिः-गुर्वादीनां कार्यकरणेन स्वस्थतापादनं समाधौ च सति बध्यते १८। तथा अपूर्वज्ञानग्रहणे सति श्रुतभक्तिः श्रुतबहुमानः, स च विवक्षितकर्मबन्धकारणमिति १९। तथा प्रवचनप्रभावनता च, सा च यथाशक्त्या मार्गदेशनेति २०। एतैरेभिः कारणैः अनन्तरोक्तैः तीर्थकरत्वं लभते जीव इति गाथात्रयार्थः॥ १७९-१८०-१८१॥

**पुरिमेण पच्छिमेण य एए सव्वेऽवि फासिया ठाणा। मज्झिमएहिं जिणेहिं एक्कं दो तिण्णि सव्वे वा ॥ १८२॥**

गमनिका—पुरिमेण पश्चिमेन च एतानि-अनन्तरोक्तानि सर्वाणि स्पृष्टानि स्थानानि, मध्यमैर्जिनैः एकं द्वे त्रीणि सर्वाणि चेति गाथार्थः॥ १८२॥

आह—तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं। बज्झइ तं तु भगवओ तइयभवोसक्कइत्ताणं ॥१८३॥

गमनिका —तच्च तीर्थकरनामगोत्रं कर्म कथं वेद्यत इति, अग्लान्या धर्मदेशनादिभिः, बध्यते तत्तु भगवतो यो

* यथाशक्ति (स्यात्). + ०करणद्वारेण

भवस्तस्मात् तृतीयं भवमवसर्प्य, अथवा बध्यते तत्तु भगवतस्तृतीयं भवं प्राप्य, ओसक्कइत्ताणंति-तत्स्थितिं संसारं वाऽवसर्प्येति, तस्य ह्युत्कृष्टा सागरोपमकोटीकोटिर्बन्धस्थितिः, तच्च प्रारम्भबन्धसमयादारभ्य सततमुपचिनोति, यावदपूर्वकरणसंख्येयभागैरिति, केवलिकाले तु तस्योदय इति गाथार्थः॥१८३॥ तत्कस्यां गतौ बध्यत इत्याह—

**नियमा मणुयगईए इत्थी पुरिसेयरो य सुहलेसो। आसेवियबहुलेहिं वीसाए अण्णयरएहिं ॥ १८४॥**

गमनिका—नियमात् मनुष्यगतौ बध्यते,कस्तस्यां बध्नातीत्याशङ्कयाह—स्त्री पुरुष इतरो वेति-नपुंसकं (कः), किं सर्व एव? नेत्याह—शुभा लेश्या यस्यासौ शुभलेश्यः, स 'आसेवितबहुलेहिं' बहुलासेवितैः-अनेकधाऽऽसेवितैरित्यर्थः, प्राकृतशैल्या पूर्वापरनिपातोऽतान्त्रं, विंशत्या अन्यतरैः स्थानैर्बध्नातीति गाथार्थः॥ १८४॥ कथानकशेषमिदानीम्—बाहुणा वेयावच्चकरणेण चक्किभोगा णिव्वत्तिया, सुबाहुणा वीसामणाए बाहुबलं निव्वत्तिअं, पच्छिमेहिं दोहिं ताए मायाए इत्थिनामगोत्तं कम्ममज्जितंति, ततो अहाउअमणुपालेत्ता पंचवि कालं काऊण सव्वट्ठसिद्धे विमाणे तित्तीससागरोवमठिइया देवा

१ बाहुना वैयावृत्यकरणेन चक्रिभोगा निर्वर्त्तिता, सुबाहुना विश्रामणया बाहुबलं निर्वर्तितं, पश्चिमाभ्यां द्वाभ्यां तया मायया स्त्रीनामगोत्रं कर्म अर्जितमिति, ततो यथायुष्कमनुपाल्य पञ्चापि कालं कृत्वा सर्वार्थसिद्धे विमाने त्रयस्त्रिंशत्सागरोपमस्थितिका देवा * करण + बध्यते † ०ऽतन्त्र च ‡ बाहुणावि. ¶ वैयावृत्त्य० § वीसावणाए

उववण्णा, तत्थवि अहाउयं अणुपालेत्ता पढमं वइरणाभो चइऊण इमीसे ओसप्पिणीए सुसमसुसमाए वइक्कंताए सुसमाएवि सुसमदुसमाएवि बहुवीइक्कंताए चउरासीइए पुव्वसयसहस्सेसु एगूणणउए य पक्खेहि सेसेहिं आसाढबहुलपक्खचउत्थीए उत्तरासाढजोगजुत्ते मियंके इक्खागभूमीए नाभिस्स कुलगरस्स मरुदेवीए भारियाए कुच्छिंसि गब्भत्ताए उववण्णो, चोद्दस सुमिणा उसभगयाईआ पासिय पडिबुद्धा, नाभिस्स कुलगरस्स कहेइ, तेण भणिय-तुब्भ पुत्तो महाकुलकरो भविस्सइ, सक्कस्स य आसणं चलियं, सिग्घं आगमणं, भणइ-देवाणुप्पिए! तव पुत्तो सयलभुवणमंगलालओ पढमराया पढमधम्मचक्कवट्टी भविस्सइ, केई भणंति-बत्तीसंपि इंदा आगंतूण वागरेंति, ततो मरुदेवा हट्ठतुट्ठा गब्भं वहइत्ति। अमुमेवार्थमुपसंहरन्नाह—

**उववाओ सव्वट्ठे सव्वेसिं पढमओ चुओ उसभो। रिक्खेण असाढाहिं असाढबहुले चउत्थीए ॥ १८५॥**

गमनिका—उपपातः सर्वार्थे सर्वेषां संजातः, ततश्च आयुष्कपरिक्षये सति प्रथमश्च्युतो ऋषभ ऋक्षेण-नक्षत्रेण आषा-

१ उत्पन्नाः, तत्रापि यथायुरनुपाल्य प्रथम वज्रनाभश्च्युत्वा अस्या अवसर्पिण्या सुषमसुषमायां व्यतिक्रान्तायां सुषमायामपि सुषमदुष्षमायामपि बहुव्यतिक्रान्तायां चतुरशीतौ पूर्वशतसहस्रेषु एकोननवतौ च पक्षेषु शेषेषु आषाढकृष्णपक्षचतुर्थ्यां उत्तराषाढायोगयुक्ते मृगाङ्के इक्ष्वाकुभूमौ नाभेः कुलकरस्य मरुदेव्या भार्यायाः कुक्षौ गर्भतयोत्पन्नः, चतुर्दश स्वप्नान् ऋषभगजादिकान् दृष्ट्वा प्रतिबुद्धा, नाभये कुलकराय कथयति, तेन भणितं-तव पुत्रो महाकुलकरो भविष्यति, शक्रस्य चासनं चलितं, शीघ्रमागमनं, भणति-देवानुप्रिये! तव पुत्रः सकलभुवनमङ्गलालयः प्रथमराजः प्रथमधर्मचक्रवर्त्ती भविष्यति, केचिद् भणन्ति-द्वात्रिंशदपि इन्द्रा आगत्य व्यागृणन्ति, ततो मरुदेवी हृष्टतुष्टा गर्भं वहतीति * मरुदेवाए + चउद्दस० † नाभिकुल० ‡ ०णुप्पिया

द्वाभिः आषाढबहुले चतुर्थ्यामिति गाथार्थः ॥ १८५ ॥ इदानीं तद्वक्तव्यताऽभिधित्सया एनां द्वारगाथामाह निर्युक्तिकारः—

जम्मणे नाम वुड्ढी अ, जाईएँ सरणे इअ । वीवाहे अ अवच्चे अभिसेए रज्जसंगहे ॥ १८६ ॥

गमनिका—'जंमण' इति जन्मविषयो विधिर्वक्तव्यः, वक्ष्यति च 'चित्तबहुलट्ठमीए' इत्यादि, नामं इति–नामविषयो विधिर्वक्तव्य', वक्ष्यति 'देसूणगं च' इत्यादि, 'वुड्ढी यत्ति' वृद्धिश्च भगवतो वाच्या, वक्ष्यति च 'अह सो वड्ढति भगवमित्यादि', 'जातीसरणेतियत्ति' जातिस्मरणे च विधिर्वक्तव्य', वक्ष्यति च 'जाईसरो य' इत्यादि, 'वीवाहे यत्ति' वीवाहे च विधिर्वक्तव्यः, वक्ष्यति च 'भोगसमत्थं' इत्यादि, 'अवच्चेत्ति' अपत्येषु क्रमो वाच्यः, वक्ष्यति च 'तो भरहबंभिसुंदरी-त्यादि' 'अभिसेगत्ति' राज्याभिषेके विधिर्वाच्यः 'आभोएउं सक्को उवागओ' इत्यादि वक्ष्यति, 'रज्जसंगहेत्ति' राज्यसंग्रहविषयो विधिर्वाच्यः, 'आसा हत्थी गावो' इत्यादि । अयं समुदायार्थः, अवयवार्थं तु प्रतिद्वारं यथावसरं वक्ष्यामः । तत्र प्रथमद्वारावयवार्थाभिधित्सयाऽऽह—

चित्तबहुलट्ठमीए जाओ उसभो असाढणक्खत्ते । जम्मणमहो अ सव्वो णेयव्वो जाव घोसणयं ॥ १८७ ॥

गमनिका—चैत्रबहुलाष्टम्यां जातो ऋषभ आषाढानक्षत्रे जन्ममहश्च सर्वो नेतव्यो यावद् घोषणमिति गाथार्थः ॥१८७॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्—सा य मरुदेवा नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाण य राइंदियाणं

१ सा च मरुदेवी नवसु मासेषु बहुप्रतिपूर्णेषु अर्धाष्टसु च रात्रिन्दिवेषु * जातीसरणेतिय (वृत्तौ) + नामेति. † ०णकमिति ‡ माण राइ०

वइक्कंताणं अद्धरत्तकालसमयंसि चित्तबहुलट्ठमीए उत्तरासाढानक्खत्ते आरोग्गा आरोग्गं दारयं पयाया, जायमाणेसु य तित्थयरेसु सव्वलोए उज्जोओ भवति, तित्थयरमायरो य पच्छण्णगब्भाओ भवंति जराउरुहिरकलमलाणि य न हवंति, ततो जाते तिलोयणाहे अहोलोयवत्थव्वाओ अट्ठ दिसाकुमारीओ, तंजहा—भोगंकरा भोगवती, सुभोगा भोगमालिणी । सुवच्छा वच्छमित्ता य, पुप्फमाला अणिंदिया ॥ १ ॥ एयासिं आसणाणि चलंति, ततो भगवं उसहसामि ओहिणा जायं आभोएऊण दिव्वेण जाणविमाणेण सिग्घमागंतूण तित्थयरं तित्थयरजणणिं च मरुदेविं अभिवंदिऊण संलवंति—नमोऽत्थु ते जगप्पईवदाईए !, अम्हे णं देवाणुप्पिए ! अहोलोयवत्थव्वाओ अट्ठ दिसाकुमारीओ भगवओ तित्थगरस्स जम्मणमहिमं करेमो तं तुब्भेहिं न भाइयव्वंति, ततो तंमि पदेसे अणेगखंभसयसंनिविट्ठं जम्मणभवणं विउव्विऊण संवट्टगपवणं विउव्वंति, ततो तस्स भगवंतस्स जम्मणभवणस्स आजोयणं सव्वतो समंता तणकट्ठकंटककक्करसक्कराइ तमाहुणिय आहुणिय एगंते

१ बहुव्यतिक्रान्तेषु अर्धरात्रकालसमये चैत्रकृष्णाष्टम्या उत्तराषाढानक्षत्रे अरोगा अरोग दारक प्रजाता, जायमानेषु च तीर्थकरेषु सर्वलोके उद्योतो भवति, तीर्थकरमातरश्च प्रच्छन्नगर्भा भवन्ति जरारुधिरकलिमलानि च न भवन्ति, ततो जाते त्रिलोकनाथे अधोलोकवास्तव्या अष्ट दिक्कुमार्य , तद्यथा–भोगङ्करा भोगवती सुभोगा भोगमालिनी । सुवत्सा वत्समित्रा च पुष्पमाला अनिन्दिता ॥१॥ एतासामासनानि चलन्ति, ततो भगवन्त ऋषभस्वामिन अवधिना जात आभोग्य दिव्येन यानविमानेन शीघ्रमागम्य तीर्थकर तीर्थकरजननीं च मरुदेवीमभिवन्द्य सलपन्ति–नमोऽस्तु तुभ्य जगत्प्रदीपदायिके ! वय देवानुप्रिये ! अधोलोकवास्तव्या अष्ट दिक्कुमार्य भगवतस्तीर्थकरस्य जन्ममहिमान कुर्मस्तत् त्वया न भेतव्यमिति, ततस्तस्मिन् प्रदेशे अनेकस्तम्भशतसन्निविष्ट जन्मभवन विकुर्व्य सवर्त्तकपवन विकुर्वन्ति, ततस्तस्य भगवत जन्मभवनस्यायोजन सर्वत समन्तात् तृणकाष्ठकण्टककर्करशर्करादि तत आधूय आधूयैकान्ते * उत्तरासाढ०

पक्खिवंति, ततो खिप्पँमेव पच्चुवसमंति, ततो भगवतो तित्थगरस्स जणणीसहिअस्स पणामं काऊण नाइदूरे निविट्ठाओ परिगायमाणीओ चिट्ठंति । तओ उड्ढलोगवत्थव्वाओ अट्ठ दिसाकुमारीओ, तंजहा–मेघंकरा मेघवती, सुमेघा मेघमालिनी । तोयधारा विचित्ता य, वारिसेणा बलाहया ॥ १ ॥ एयाओऽवि तेणेव विहिणा आगंतूण अब्भवद्दलयं विउव्वित्ता आजोयणं भगवओ जम्मणभवणस्स णच्चोदयं णाइमट्टियं पफुसियपविरलं रयरेणुविणासणं सुरभिगंधोदयवासं वासित्ता पुप्फवद्दलयं विउव्वित्ता जलथलयभासुरप्पभूयस्स विंटट्ठाइस्स दसद्धवण्णस्स कुसुमस्स जाणुस्सेधपमाणमेत्तं पुप्फवासं वासंति, तं चेव जाव आगायमाणीओ चिट्ठंति । तओ पुरच्छिमरुयगवत्थव्वाओ अट्ठ दिसाकुमारिसामिणीओ, तंजहा–णंदुत्तरा य णंदा आणंदा णंदिवद्धणा चेव । विजया य वेजयंती जयंति अवराजिया चेव ॥ १ ॥ तहेवागंतूण जाव न तुब्भेहिं बीहियव्वंति भणिऊण भगवओ तित्थगरस्स जणणिमहिअस्स पुरच्छिमेणं आदंसगहत्थिआओ आगायमाणीओ चिट्ठंति ।

१ प्रक्षिपन्ति, तत क्षिप्रमेव प्रत्युपशमयन्ति, ततो भगवते तीर्थकराय जननीसहिताय प्रणाम कृत्वा नातिदूरे निविष्टा परिगायन्त्यस्तिष्ठन्ति । तत ऊर्ध्वलोकवास्तव्या अष्ट दिक्कुमार्य , तद्यथा–मेघङ्करा मेघवती, सुमेघा मेघमालिनी । तोयधारा विचित्रा च, वारिषेणा बलाहका ॥ १ ॥ एता अपि तेनैव विधिनाऽऽगत्याभ्रवर्दल विकुर्वयित्वा आयोजन भगवतो जन्मभवनात् नात्युदक नातिमृत्तिक विरलशीकर (फुसार) रजोरेणुविनाशन सुरभिगन्धोदकवर्षा वर्षयित्वा पुष्पवर्दल विकुर्व्य जलस्थलजभास्वरप्रभूतस्य वृन्तस्थायिन दशार्धवर्णस्य कुसुमस्य जानूत्सेधप्रमाणमात्रा पुष्पवर्षा वर्षयन्ति, तदेव यावद् आगायन्त्यस्तिष्ठन्ति । तत. पूर्वदिग्रुचकवास्तव्या अष्टौ दिक्कुमारीस्वामिन्य , तद्यथा–नन्दोत्तरा च नन्दा आनन्दा नन्दिवर्धना चैव । विजया च वैजयन्ती जयन्ती अपराजिता चैव ॥ १ ॥ तथैवागत्य यावद्भवतया न भेतव्यमिति भणित्वा भगवतस्तीर्थकराज्जननीसहितात्पूर्वस्या आदर्शहस्ता आगायन्त्यस्तिष्ठन्ति । * खिप्पा० + तह चेव † ०यती ‡ पुरच्छिमेण

एवं दाहिणरुयगवत्थव्वाओ अट्ठ, तंजहा–समाहारा सुप्पदिण्णा, सुप्पबुद्धा जसोहरा। लच्छिमती भोगवती, चित्तगुत्ता वसुंधरा ॥ १ ॥ तहेवागंतूण जाव भुवणाणंदजणणस्स जणणिसहिअस्स दाहिणेणं भिंगारहत्थगयाओ आगायमाणीओ चिट्ठंति। एवं पच्छिमरुयगवत्थव्वाओऽवि अट्ठ, तंजहा–इलादेवी सुरादेवी, पुहवी पउमावती। एगणासा णवमिआ, सीया भद्दा य अट्ठमा ॥१॥ एयाओऽवि तित्थयरस्स जणणिसहिअस्स पच्चत्थिमेणं तालियंटहत्थगयाओ आगायमाणीओ चिट्ठंति। एवं उत्तररुयगवत्थव्वाओऽवि अट्ठ, तंजहा–अलंबुसा मिस्सकेसी, पुंडरिगिणी य वारुणी। हासा सव्वप्पभा चेव, सिरि हिरी चेव उत्तरओ ॥ १ ॥ तहेवागंतूण तित्थगरस्स जणणिसहिअस्स उत्तरेण णातिदूरे चामरहत्थगयाओ आगायमाणीओ चिट्ठंति। ततो विदिसिरुयगवत्थव्वाओ चत्तारि विज्जुकुमारीसामिणीओ, तंजहा–चित्ता य चित्तकणगा, सतेरा सोयामणी ॥ तहेवागंतूण तिहुअणबंधुणो जणणिसहिअस्स चउसु विदिसासु दीवियाहत्थगयाओ णाइदूरे आगायमाणीओ चिट्ठंति। ततो

---

१ एव दक्षिणरुचकवास्तव्या अष्ट, तद्यथा–समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा। लक्ष्मीवती भोगवती, चित्रगुप्ता वसुन्धरा ॥१॥ तथैवागत्य यावत् भुवनानन्दजनकाज्जननीसहितात् दक्षिणस्यां भृङ्गारहस्ता आगायन्त्यस्तिष्ठन्ति। एव पश्चिमरुचकवास्तव्या अपि अष्ट, तद्यथा–इलादेवी सुरादेवी, पृथ्वी पद्मावती। एकनासा नवमिका, सीता भद्रा चाष्टमी ॥१॥ एता अपि तीर्थकरात् जननीसहितात्पश्चिमायां तालवृन्तहस्तगता आगायन्त्यस्तिष्ठन्ति। एवमुत्तररुचकवास्तव्या अपि अष्ट, तद्यथा–अलम्बुसा मिश्रकेशी, पुण्डरीकिणी च वारुणी। हासा सर्वप्रभा चैव, श्रीः ह्रीश्चैवोत्तरतः ॥१॥ तथैवागत्य तीर्थकराज्जननीसहितादुत्तरस्यां नातिदूरे चामरहस्तगता आगायन्त्यस्तिष्ठन्ति। ततो विदिग्रुचकवास्तव्याश्चतस्रः विद्युत्कुमारीस्वामिन्य, तद्यथा–चित्रा च चित्रकनका, सतारा सौदामिनी ॥ तथैवागत्य त्रिभुवनबन्धोर्जननीसहिताच्चतसृषु विदिक्षु दीपिकाहस्तगता नातिदूरे आगायन्त्यस्तिष्ठन्ति। ततो * श्वासा + वत्तरा. † ०मि बाहिरह०.

---

मज्झरुयगवत्थव्वाओ चत्तारि दिसाकुमारिपहाणाओ, तंजहा–रूयया रूययंसा, सुरूया रूयगावती ॥ तहेवागंतूण जाव ण उवरोहं गंतव्वंतिकट्टु भगवओ भवियजणकुमुयसंडमंडणस्स चउरंगुलवज्जं णाभिं कप्पेंति, वियरयं खणंति, णाभिं वियरए निहणंति, रयणाण वैराण य पूरेंति, हरियालियाए य पीढं बंधेंति, भगवओ तित्थयरस्स जम्मणभवणस्स पुरच्छिमदाहिणउत्तरेण तओ कदलीहरए विउव्वंति, तेसिं बहुमज्झदेसे तओ चंदसाले विउव्वंति, तेसिं बहुमज्झदेसे तओ सीहासणे विउव्वंति, भगवं तित्थयरं करयलपरिग्गहिअं तित्थगरजणणिं च बाहाए गिण्हिऊण दाहिणिल्ले कदलीघरचाउस्साले सीहासणे निवेसिऊण सयपागसहस्सपागेहिं तिल्लेहिं अब्भंगेंति, सुरभिणा गंधवट्टएण उवट्टेंति, ततो भगवं तित्थयरं करकमलजुअलरुद्धं काऊण तिहुयणनिव्वुइयरस्स जणणिं च सुइरं बाहाहिं गहाय पुरच्छिमिल्ले कदलीघरचाउस्सालसीहासणे सन्नि-

---

१ मध्यरुचकवास्तव्याश्चतस्रो दिक्कुमारीप्रधाना, तद्यथा–रुचका रुचकांशा, सुरुचा रुचकावती ॥ तथैवागत्य यावन्नोपरोधः गन्तव्यमितिकृत्वा भगवतो भव्यजनकुमुदषण्डमण्डनस्य चतुरङ्गुलवर्जं नाभिं कल्पयन्ति, विवरं खनन्ति, नाभिं विवरे निघ्नन्ति, रत्नैर्वज्रैश्च पूरयन्ति, हरितालिकया च पीठं बध्नन्ति, भगवतस्तीर्थकरस्य जन्मभवनाद् पूर्वदक्षिणोत्तरासु त्रीणि कदलीगृहाणि विकुर्वयन्ति, तेषां बहुमध्यदेशे तिस्रश्चन्द्रशाला विकुर्वन्ति, तासां बहुमध्यदेशे त्रीणि सिंहासनानि विकुर्वन्ति, भगवन्तं तीर्थकरं करतलपरिगृहीतं तीर्थकरजननीं च बाह्वोः गृहीत्वा दाक्षिणात्ये कदलीगृहचतुःशाले सिंहासने निवेश्य शतपाकसहस्रपाकैस्तैलैरभ्यङ्गयन्ति, सुरभिणा गन्धवर्त्तकेनोद्वर्त्तयन्ति, ततो भगवन्तं तीर्थकरं करकमलयुगलरुद्धं कृत्वा त्रिभुवननिर्वृतिकरस्य जननीं च सुचिरं बाहुभ्यां गृहीत्वा पौरस्त्ये कदलीगृहचतुःशालसिंहासने * ०मारीओ पहा० + पेढ † करकमल० ‡ घरगे ¶ ०लसीहा० § निसियावेऊण § सहर. ‖ भय ‡ छिन्दति

---

वेसावेंति, ततो मज्जणविहीए मज्जेंति, गंधकासाइएहि अंगयाइं लूहेंति, सरसेणं गोसीसचंदणेणं समालहेंति, दिव्वाइं देवदूसजुअलाइं नियंसंति, सव्वालंकारविभूसियाइं करेंति, तओ उत्तरिल्ले कदलीघरचाउस्सालसीहासणे निसीयाविंति, ताओ आभिओगेहिं चुल्लहिमवंताओ सरसाइं गोसीसचंदणकट्ठाइं आणावेऊण अरणीए अग्गिं उप्पाएंति, तेहिं गोसीसचंदणकट्ठेहिं अग्गिं उज्जालेंति, अग्गिहोमं करेंति, भूइकम्मं करेंति, रक्खापोट्टलिअं करेंति, भगवओ तित्थंकरस्स कण्णमूलंसि दुवे पाहाणवट्टए टिंटियावेंति, भवउ २ भवं पव्वयाउएत्तिकट्टु भगवंतं तित्थकरं करतलपुडेण तित्थगरमातरं च बाहाए गहाय जेणेव भगवओ जम्मणभवणे जेणेव सयणिज्जे तेणेव उवागच्छंति, तित्थयरजणणिं सयणिज्जे निसियावेंति, भगवं तित्थयरं पासे ठवेंति, तित्थकरस्स जणणिसहिअस्स नाइदूरे आगायमाणीओ चिट्ठंति ॥ अमुमेवार्थमुपसंहरन्नाह—

संवट्ट मेह आयंसगा य भिंगार तालियंटा य। चामर जोई रक्खं करेंति एयं कुमारीओ ‖॥ १८८ ॥

---

१ सन्निवेशयन्ति, ततो मज्जनविधिना मज्जयन्ति, गन्धकाषायीभिरङ्गानि रूक्षयन्ति, सरसेन गोशीर्षचन्दनेन समालभन्ते, दिव्यानि देवदूष्ययुगलानि परिधापयन्ति, सर्वालङ्कारविभूषिते कुर्वन्ति, तत औत्तरे कदलीगृहचतुःशालसिंहासने ‖ निषादयन्ति, तत आभियोगिकैः क्षुल्लकहिमवतः सरसानि गोशीर्षचन्दनकाष्ठानि आनाय्य अरणीतोऽग्निमुत्पादयन्ति, तैर्गोशीर्षचन्दनकाष्ठैरग्निं उज्ज्वालयन्ति, अग्निहोमं कुर्वन्ति, भूतिकर्म कुर्वन्ति, रक्षापोट्टलिकां कुर्वन्ति, भगवतस्तीर्थकरस्य कर्णमूले द्वौ पाषाणवर्तुलौ आस्फालयन्ति, भवतु २ भवान् पर्वतायुष्क इतिकृत्वा भगवन्तं तीर्थकरं करतलपुटेन तीर्थकरमातरं च भुजयोर्गृहीत्वा यत्रैव भगवतो जन्मभवनं यत्रैव शयनीयं तत्रैवोपागच्छन्ति, तीर्थकरजननीं शयनीये निषादयन्ति, भगवन्तं तीर्थकरं पार्श्वे स्थापयन्ति, तीर्थकरस्य जननीसहितस्य नातिदूरे आगायन्त्यस्तिष्ठन्ति। * निसियावेंति + ०गंधकासाइए † ०गायाइं ‡ तत्थ आभिओगिएहिं ¶ वाससय० ‖ मेरु अह उड्ढलोआ चउदिसिरुअगा उ अट्ठ पत्तेअं। चउविदिसि मज्झरुयगा इति छप्पण्णा दिसिकुमारी ॥ १ ॥ सोपयोगा प्रक्षिप्ता. ‖ निवेशयन्ति

गतार्था, द्वारयोजनामात्रं प्रदर्श्यते—'संवट्ट मेहे'ति संवर्त्तकं मेघम् उक्तप्रयोजनं विकुर्वन्ति, आदर्शकांश्च गृहीत्वा तिष्ठन्ति, भृङ्गारांस्तालवृन्तांश्चेति, तथा चामरं ज्योतिः रक्षां कुर्वन्ति, एतत् सर्वं दिक्कुमार्य इति गाथार्थः ॥ १८८ ॥

[1]ततो सक्कस्स देविंदस्स णाणामणिकिरणसहस्सरंजिअं सीहासणं चलिअं, भगवं तित्थगरं ओहिणा आभोएति, सिग्घं पालएण विमाणेणं एइ, भगवं तित्थयरं जणणिं च तिक्खुत्तो आयाहिणपयाहिणं करेइ, वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी—णमोऽत्थु ते रयणकुच्छिधारिए !, अहं णं सक्के देविंदे भगवओ आदितित्थगरस्स जम्मणमहिमं करेमि, तं णं तुमे ण उवरुज्झियव्वंतिकट्टु ओसोयणिं दलयति, तित्थगरपडिरूवगं विउव्वति, तित्थयरमा*उए पासे ठवेति, भगवं तित्थयरं करयलपुडेण गेण्हति, अप्पाणं च पंचधा विउव्वति—गहियजिणिंदो एक्को दोण्णि य पासंमि चामराहत्था। गहिउज्जलायवत्तो एक्को एक्कोऽथ वज्जधरो ॥ १ ॥ ततो सक्को चउव्विहदेवनिकायसहिओ सिग्घं तुरियं जेणेव मंदरे पव्वए पंडगवणे मंदरचूलियाए दाहिणेणं अइपंडुकंवलसिलाए अभिसेयसीहासणे तेणेव उवागच्छइ, उवागच्छित्ता सीहासणे पुरच्छाभिमुहे निसीयति,

1 ततः शक्रस्य देवेन्द्रस्य नानामणिकिरणसहस्ररञ्जितं सिंहासनं चलितं, भगवन्तं तीर्थंकरमवधिनाऽऽभोगयति, शीघ्रं पालकेन विमानेनायाति, भगवन्तं तीर्थंकरं जननीं च त्रिकृत्वः आदक्षिणप्रदक्षिणं करोति, वन्दते नमस्यति वन्दित्वा नमस्थित्वा एवमवादीत्—नमोऽस्तु तुभ्यं रत्नकुक्षिधारिके !, अहं शक्रो देवेन्द्रो भगवत आदितीर्थंकरस्य जन्ममहिमानं करोमि, तत् त्वया नोपरोद्धव्यमितिकृत्वाऽवस्वापिनीं ददाति, तीर्थंकरप्रतिरूपकं विकुर्वति, तीर्थंकरमातुः पार्श्वे स्थापयति, भगवन्तं तीर्थंकरं करतलपुटेन गृह्णाति, आत्मानं च पञ्चधा विकुर्वति—गृहीतजिनेन्द्र एको द्वौ च पार्श्वयोश्चामरहस्तौ । गृहीतोज्ज्वलातपत्र एकः एकोऽथ वज्रधरः ॥ १ ॥ ततः शक्रः चतुर्विधदेवनिकायसहितः शीघ्रं त्वरितं यत्रैव मन्दरे पर्वते पाण्डकवने मन्दरचूलिकाया दक्षिणेन अतिपाण्डुकम्बलशिलायामभिषेकसिंहासनं तत्रैवोपागच्छति, उपागत्य सिंहासने पौरस्त्याभिमुखो निषीदति, * मायरुए

[1]एत्थ वत्तीसंपि इंदा भगवओ पादसमीवं आगच्छंति, पढमं अच्चुयइंदोऽभिसेयं करेति, ततो अणु परिवाडीए जाव सक्को ततो चमरादीया जाव चंदसूरत्ति, ततो सक्को भगवओ जम्मणाभिसेयमहिमाए निव्वत्ताए ताए सव्विड्ढीए चउव्विहदेवणिकायसहिओ तित्थंकरं घेत्तूण पडियागओ, तित्थगरपडिरूवं पडिसाहरइ, भगवं तित्थयरं जणणीए पासे ठवेइ, ओसोवणिं पडिसंहरइ, दिव्वं खोमजुअलं कुंडलजुअलं च भगवओ तित्थगरस्स ऊसीसयमूले ठवेति, एगं सिरिदामगंडं तवणिज्जुज्जललंवूसगं सुवण्णपयरगमंडियं नाणामणिरयणहारद्धहारउवसोहियसमुदयं भगवओ तित्थगरस्स उप्पिं उल्लोयगंसि नि*क्खिवति, जे णं भगवं तित्थगरे अणिमिसाए दिट्ठीए पेहमाणे+ सुहं सुहेणं अभिरममाणे चिट्ठति, ततो वेसमणो सक्कवयणेणं वत्तीसं हिरण्णकोडीओ वत्तीसं सुवण्णकोडीओ वत्तीसं नंदाइं वत्तीसं भद्दाइं सुभगसोभग्गरूवजोव्वणगुणलावण्णं भगवतो तित्थकरस्स जम्मणभवणंमि साहरति, ततो सक्को अभि†ओगिएहिं देवेहिं महया महया सद्देणं उग्घोसावेइ

1 अत्र द्वात्रिंशदपि इन्द्रा भगवतः पादसमीपमागच्छन्ति, प्रथममच्युतेन्द्रोऽभिषेकं करोति, ततोऽनु परिपाट्या यावत् शक्रस्ततश्चमरादयः यावच्चन्द्रसूर्या इति, ततः शक्रो भगवतो जन्माभिषेकमहिमनि निर्वृत्ते तया सर्वर्द्ध्या चतुर्विधदेवनिकायसहितस्तीर्थंकरं गृहीत्वा प्रत्यागतः, तीर्थंकरप्रतिरूपं प्रतिसंहरति, भगवन्तं तीर्थंकरं जनन्याः पार्श्वे स्थापयति, अवस्वापिनीं प्रतिसंहरति, दिव्यं क्षौमयुगलं कुण्डलयुगलं च भगवतस्तीर्थंकरस्योच्छीर्षकमूले स्थापयति, एकं श्रीदामगण्डं तपनीयोज्ज्वललम्बूसकं सुवर्णप्रतरकमण्डितं नानामणिरत्नहारार्धहारोपशोभितसमुदयं भगवतस्तीर्थंकरस्योपरि उल्लोचे निक्षिपति, यद् भगवांस्तीर्थंकरोऽनिमेषया दृष्ट्या प्रेक्षमाणः सुखसुखेनाभिरममाणस्तिष्ठति, ततो वैश्रमणः शक्रवचनेन द्वात्रिंशतं हिरण्यकोटीः द्वात्रिंशतं सुवर्णकोटीः द्वात्रिंशत् नन्दासनानि द्वात्रिंशत् भद्रासनानि सुभगसौभाग्यरूपयौवनगुणलावण्यं भगवतस्तीर्थंकरस्य जन्मभवने संहरति, ततः शक्रः आभियोगिकैर्देवैर्महत्या महता शब्देनोद्घोषयति * अभिनिक्खि० + पेहमाणे पेहमाणे † अभिओगेहिं

हंदि[1] ! सुणंतु बहवे भवणवइवाणमंतरजोइसिअवेमाणिआ देवा य देवीओ य जे णं देवाणुप्पिआ ! भगवओ तित्थगरस्स तित्थगरमाऊए वा असुभं मणं संपधारे*ति, तस्स णं अज्जयमंजरीविव सत्तहा मुद्धाणं फुट्टउत्तिकट्टु घोसणं घोसावेइ, ततो णं भवणवइवाणमंतरजोइसियवेमाणिआ देवा भगवओ तित्थगरस्स जम्मणमहिमं काऊण गता नंदीसरवरदीवं, तत्थ अट्ठाहिआमहिमाओ काऊण सए सए आलए पडिगतत्ति। जंमणेत्ति गयं, इदानीं नामद्वारं, तत्र भगवतो नामनिबन्धनं चतुर्विंशतिस्तवे वक्ष्यमाणं 'ऊरुसु उसभलंछण उसभं सुमिणंमि तेण उसभजिणो' इत्यादि, इह तु वंशनामनिबन्धनमभिधातुकाम आह—

देसूणगं च वरिसं सक्कागमणं च वंसठवणा य। आहारमंगुलीए ठवंति देवा मणुण्णं तु ॥ १८९ ॥

व्याख्या—देशोनं च वर्षं भगवतो जातस्य तावत् पुनः शक्रागमनं च संजातं, तेन वंशस्थापना च कृता भगवत इति, सोऽयं ऋ+षभनाथः, अस्य गृहा†वासे असस्कृत आसीदाहार इति। किं च—सर्वतीर्थकरा एव बालभावे वर्त्तमाना न स्तन्यो‡पयोगं कुर्वन्ति, किन्त्वाहाराभिलाषे सति स्वामेवाङ्गुलिं वदने प्रक्षिपन्ति, तस्या च आहारमङ्गुल्यां नानारससमा-

1 हन्दि शृण्वन्तु बहवो भवनपतिव्यन्तरज्योतिष्कवैमानिका देवाश्च देव्यश्च यो देवानुप्रिया ! भगवति तीर्थंकरे तीर्थंकरमातरि वा अशुभं मनः सम्प्रधारयति, तस्यार्यमञ्जरीव सप्तधा मूर्धा स्फुटत्विति कृत्वा घोषणां घोषयति, ततो भवनपतिव्यन्तरज्योतिष्कवैमानिका देवा भगवतस्तीर्थंकरस्य जन्ममहिमानं कृत्वा गता नन्दीश्वरवरद्वीपं, तत्राष्टाह्निकामहिमानं कृत्वा स्वके स्वके आलये प्रतिगता इति । जन्मेति गतम् * ०धारेंति + ऋषभस्य † गृहवासे ‡ स्तनो०

युक्तं स्थापयन्ति देवा 'मनोज्ञं' मनोऽनुकूलम् । एवमतिक्रान्तबालभावास्तु अग्निपक्कं गृह्णन्ति, ऋषभनाथस्तु प्रव्रज्यामप्रतिपन्नो देवोपनीतमेवाहारमुपभुक्तवान् इत्यभिहितमानुपङ्गिकमिति गाथार्थः ॥ १८९ ॥ प्रकृतमुच्यते—आह-इन्द्रेण वंशस्थापना कृता इत्यभिहितं, सा किं यथाकथञ्चित् कृता आहोस्वित् प्रवृत्तिनिमित्तपूर्विकेति, उच्यते, प्रवृत्तिनिमित्तपूर्विका, न याद्दच्छिकी, कथम् ?—

सक्को वंसट्ठवणे इक्खु अगू तेण हुंति इक्खागा । जं च जहा जंमि वए जोग्गं कासी य तं सव्वं ॥ १९० ॥

कथानकशेषम्—जीतमेतं अतीतपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं पढमतित्थगराणं वंसट्ठवणं करेत्तएत्ति, ततो तिदसजणसंपरिवुडो आगओ, कहं रित्तहत्थो पविसामित्ति महंतं इक्खुलट्ठिं गहाय आगतो । इओ य नाभिकुलकरो उसभसामिणा अंकगतेण अच्छइ, सक्केण उवागतेण भगवया इक्खुलट्ठीए दिट्ठी पाडियत्ति, ताहे सक्केण भणियं—भयवं ! किं इक्खू अगू—भक्खेसि ?, ताहे सामिणा हत्थो पसारिओ हरिसिओ य, ततो सक्केण चिंतियं—जम्हा तित्थगरो इक्खू अहिलसइ, तम्हा इक्खागवंसो भवउ, पुव्वगा य भगवओ इक्खुरसं पिवियाइया तेण गोत्तं कासवंति । एवं सक्को वंसं ठाविऊण

१ जीतमेतत् अतीतानागतवर्त्तमानानां शक्राणां देवेन्द्राणां प्रथमतीर्थंकराणां वंशस्थापनां कर्तुमिति, ततस्त्रिदशजनसंपरिवृत आगत, कथं रिक्तहस्तः प्रविशामीति महतीं इक्षुयष्टिं गृहीत्वाऽऽगत । इतश्च नाभिकुलकरो ऋषभस्वामिनाऽङ्कगतेन तिष्ठति, शक्र उपागते भगवतेक्षुयष्टौ दृष्टि पातितेति, तदा शक्रेण भणितम्—भगवन् ! किमिक्षु भक्षयसि ?, तदा स्वामिना हस्त प्रसारितो हृष्टश्च, ततः शक्रेण चिन्तितम्—यस्मात् तीर्थकर इक्षुमभिलपति, तस्मादिक्ष्वाकुवंशो भवतु, पूर्वजाश्च भगवत इक्षुरस पीतवन्तस्तेन गोत्र काश्यपमिति । एव शक्रो वंश स्थापयित्वा * ०पक्कमेव + भक्खयसि

गओ, पुणोवि–'जं च जहा जंमि वए जोग्गं कासी य तं सव्वं'ति । गाथा गतार्था, तथाऽप्यक्षरगमनिका क्रियते–तत्र 'शक्रो' देवराडिति 'वंशस्थापने' प्रस्तुते इक्षुं गृहीत्वा आगतः, भगवता करे प्रसारिते सत्याह–भगवन् ! किं इक्खुं अकु–भक्षयसि ?, अकुशब्दः भक्षणार्थे वर्त्तते, भगवता गृहीतं, तेन भवन्ति इक्ष्वाकाः–इक्षुभोजिनः, इक्ष्वाकाः ऋषभनाथवंशजा इति । एवं 'यच्च' वस्तु 'यथा' येन प्रकारेण 'यस्मिन्' वयसि योग्यं शक्रः कृतवांश्च तत्सर्वमिति, पश्चार्धपाठान्तरं वा 'तालफलाहयभगिणी होही पत्तीति सारवणा' 'तालफलाहतभगिनी भविष्यति पत्नीति सारवणा' किल भगवतो नन्दायाश्च तुल्यवयःख्यापनार्थमेवं पाठ इति, तदेव तालफलाहतभगिनी भगवतो बालभाव एव मिथुनकैर्नाभिसकाशमानीता, तेन च भविष्यति पत्नीति सारवणा–संगोपना कृतेति, तथा चानन्तरं वक्ष्यति "णंदाय सुमंगला सहिओ" । अन्ये तु प्रतिपादयन्ति –सर्वैवेयं जन्मद्वारवक्तव्यता, द्वारगाथाऽपि किलैवं पठ्यते–'जम्मणे य विवड्ढी य' त्ति, अलं प्रसङ्गेन । इदानीं वृद्धिद्वारमधिकृत्याह—

अह वड्ढइ सो भयवं दियलोयचुओ अणोवमसिरीओ । देवगणसंपरिवुडो नंदाइ सुमंगला सहिओ ॥ १९१ ॥
असिअसिरओ सुनयणो विंबुट्ठो धवलदंतपंतीओ । वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥ १९२ ॥

प्रथमगाथा निगदसिद्धैव, द्वितीयगाथागमनिका—न सिता असिताः–कृष्णा इत्यर्थः, शिरसि जाताः शिरोजाः–केशाः असिताः शिरोजा यस्य स तथाविधः, शोभने नयने यस्यासौ सुनयनः, बिल्वं(म्बं)–गोल्हाफलं बिल्व(म्ब)वदोष्ठौ यस्यासौ

१ गतः, पुनरपि–यच्च यथा यस्मिन्वयसि योग्य अकार्षीच्च तत्सर्वमिति । * भगवं + भक्षणार्थे § ०कव † फलाहत ‡ तदैव ¶ फलाहत.

बिल्वो(म्बो)ष्ठः, धवले दन्तपङ्क्ती यस्य स धवलदन्तपङ्क्तिकः, वरपद्मगर्भवद् गौरः पुष्पोत्पलगन्धवन्निःश्वासो यस्येति गाथार्थः ॥ १९१—१९२ ॥ इदानीं जातिसरणद्वारावयवार्थं विवरिषुराह—

जाइस्सरो अ भयवं अप्परिवडिएहिं तिहिं उ नाणेहिं ।
कंतीहि य बुद्धीहि य अब्भहिओ तेहि मणुएहिं ॥ १९३ ॥

गमनिका—जातिस्मरणश्च भगवान् अप्रतिपतितैरेव त्रिभिर्ज्ञानैः–मतिश्रुतावधिभिः, अवधिज्ञानं हि देवलौकिकमेव अप्रच्युतं भगवतो भवति, तथा कान्त्या च बुद्ध्या च अभ्यधिकस्तेभ्यो मिथुनकमनुष्येभ्य इति गाथार्थः ॥ १९३ ॥ इदानीं विवाहद्वारव्याचिख्यासयेदमाह—

पढमो अकालमच्चू तहिं तालफलेण दारओ पहओ । कण्णा य कुलगरेणं सिट्ठे गहिआ उसहपत्ती ॥ १९४ ॥

व्याख्या—भगवतो देशोनवर्षकाल एव किञ्चन मिथुनकं संजातापत्यं सद् अपत्यमिथुनकं तालवृक्षाधो विमुच्य रिरंसया क्रीडागृहकमगमत्, तस्माच्च तालवृक्षात् पवनप्रेरितमेकं तालफलमपतत्, तेन दारको व्यापादितः, तदपि मिथुनकं तां दारिकां संवर्धयित्वा प्रतनुकपाय मृत्वा सुरलोक उत्पन्न, सा चोद्यानदेवतेवोत्कृष्टरूपा एकाकिन्येव वने विचचार, दृष्ट्वा च तां त्रिदशवधूसमानरूपां मिथुनकनरा विस्मयोत्फुल्लनयना नाभिकुलकराय न्यवेदयन्, शिष्टे च तैः कन्या कुलकरेण गृहीता ऋषभपत्नी भविष्यतीतिकृत्वा, अयं गाथार्थः ॥ भगवांश्च तेन कन्याद्वयेन सार्धं विहरन् यौवनमनुप्राप्तः, अत्रान्तरे

* विबुट्ठ० + कंतीइ † बुद्धीइ ‡ सवर्ध्य ¶ ०लोकमुत्पन्न

देवराजस्य चिन्ता जाता—कृत्यमेतदतीतप्रत्युत्पन्नानागतानां शक्राणां प्रथमतीर्थकराणां विवाहकर्म क्रियत इति संचिन्त्य अनेकत्रिदशसुरवधूवृन्दसमन्वितोऽवतीर्णवान्, अवतीर्य च भगवतः स्वयमेव वरकर्म चकार, पत्न्योरपि देव्यो वधूकर्मेति ॥ १९४ ॥ अमुमेवार्थमुपसंहरन्नाह—

**भोगसमत्थं नाउं वरकम्मं तस्स कासि देविंदो । दुण्हं वरमहिलाणं वहुकम्मं कासि देवीओ ॥ १९५ ॥**

गमनिका—भोगसमर्थं ज्ञात्वा वरकर्म तस्य कृतवान् देवेन्द्रः, द्वयोः वरमहिलयोर्वधूकर्म कृतवत्यो देव्य इति गाथार्थः, भावार्थस्तूक्त एव ॥ १९५ ॥ इदानीमपत्यद्वारमभिधित्सुराह—

**छप्पुव्वसयसहस्सा पुव्विं जायस्स जिणवरिंदस्स । तो भरहबंभिसुंदरिबाहुबली चेव जायाइं ॥ १९६ ॥**

निगदसिद्धैवेयं, नवरमनुत्तरविमानादवतीर्य सुमङ्गलाया बाहुः पीठश्च भरतब्राह्मीमिथुनकं जातं, तथा सुबाहुर्महापीठश्च सुनन्दायाः बाहुबली सुन्दरी च मिथुनकमिति ॥ १९६ ॥ अमुमेवार्थं प्रतिपादयन्नाह मूलभाष्यकारः—

**देवी सुमंगलाए भरहो बंभी य मिहुणयं जायं । देवीइ सुनंदाए बाहुबली सुंदरी चेव ॥ ४ ॥ (मू० भा०)**

सुगमत्वान्न विव्रियते । आह—किमेतावन्त्येव भगवतोऽपत्यानि उत नेति, उच्यते,

**अउणापण्णं जुअले पुत्ताण सुमंगला पुणो पसवे । नीईणमइक्कमणे निवेअणं उसभसामिस्स ॥ १९७ ॥**

गमनिका—एकोनपञ्चाशत् युग्मानि पुत्राणां सुमङ्गला पुनः प्रसूतवती, अत्रान्तरे प्राक् निरूपितानां हक्कारादिप्रभृतीनां दण्डनीतीनां ते लोकाः प्रचुरतरकषायसंभवाद् अतिक्रमणं कृतवन्तः, ततश्च नीतीनामतिक्रमणे सति ते लोका अभ्यधिकज्ञानादिगुणसमन्वितं भगवन्तं विज्ञाय 'निवेदनं' कथनं 'ऋषभस्वामिने' आदितीर्थकराय कृतवन्त इति क्रिया, अयं गाथार्थः ॥ १९७ ॥ एवं निवेदिते सति भगवानाह—

**राया करेइ दंडं सिट्ठे ते बिंति अम्हवि स होउ । मग्गह य कुलगरं सो अ बेइ उसभो य भे राया ॥ १९८ ॥**

गमनिका—मिथुनकैर्निवेदिते सति भगवानाह—नीत्यतिक्रमणकारिणां 'राजा' सर्वनरेश्वरः करोति दण्डं, स च अमात्यारक्षकादिबलयुक्तः कृताभिषेकः अनतिक्रमणीयाज्ञश्च भवति, एवं 'शिष्टे' कथिते सति भगवता 'ते' मिथुनका 'ब्रुवते' भणन्ति—अस्माकमपि 'स' राजा भवतु, वर्त्तमानकालनिर्देशः खल्वन्यास्वपि अवसर्पिणीषु प्रायः समानन्यायप्रदर्शनार्थः त्रिकालगोचरसूत्रप्रदर्शनार्थो वा, अथवा प्राकृतशैल्या छान्दसत्वाच्च वेति इति—उक्तवन्तः, भगवानाह—यद्येवं 'मग्गह य कुलगरं' ति याचध्वं कुलकरं राजानं, स च कुलकरस्तैर्याचितः सन् 'बेइ' त्ति पूर्ववदुक्तवान्—ऋषभो 'भे' भवतां राजेति गाथार्थः ॥ १९८ ॥ ततश्च ते मिथुनका राज्याभिषेकनिवर्त्तनार्थमुदकानयनाय पद्मिनीसरो गतवन्तः, अत्रान्तरे देवराजस्य खल्वासनकम्पो बभूव, विभाषा पूर्ववत् यावदिहागत्याभिषेकं कृतवानिति । अमुमेवार्थमुपसंहरन् अनुक्तं च प्रतिपादयन्निदमाह—

**आभोएउं सक्को उवागओ तस्स कुणइ अभिसेअं । मउडाइअलंकारं नरिंदजोग्गं च से कुणइ ॥ १९९ ॥**

गमनिका—'आभोगयित्वा' उपयोगपूर्वकेन अवधिना विज्ञाय 'शक्रो' देवराज उपागतः, 'तस्य' भगवतः करोति 'अभिषेकं' राज्याभिषेकमिति, तथा मुकुटाद्यलङ्कारं च, आदिशब्दात् कटककुण्डलकेयूरादिपरिग्रहः, चशब्दस्य व्यवहितः संबन्धः, नरेन्द्रयोग्यं च 'से' तस्य करोति, अत्रापि वर्त्तमानकालनिर्देशप्रयोजनं पूर्ववदवसेयं, पाठान्तरं वा 'आभोएउं सक्को आगंतुं तस्स कासि अभिसेयं । मउडाइअलंकारं नरिंदजोग्गं च से कासी ॥ १ ॥" भावार्थः पूर्ववदेवेति गाथार्थः ॥ १९९ ॥ अत्रान्तरे ते मिथुनकनरास्तस्मात् पद्मसरसः खलु नलिनीपत्रैरुदकमादाय भगवत्समीपमागत्य तं चालङ्कृतविभूषितं दृष्ट्वा विस्मयोत्फुल्लनयनाः किंकर्त्तव्यताव्याकुलीकृतचेतसः कियन्तमपि कालं स्थित्वा भगवत्पादयोः तदुदकं निक्षिप्तवन्त इति, तानेवंविधक्रियोपेतान् दृष्ट्वा देवराट् अचिन्तयत्—अहो खलु विनीता एते पुरुषा इति वैश्रवणं यक्षराजमाज्ञापितवान्—इह द्वादशयोजनदीर्घां नवयोजनविष्कम्भां विनीत*नगरीं निष्पादयेति, स चाज्ञासमनन्तरमेव दिव्यभवनप्राकारमालोपशोभितां नगरीं चक्रे । अमुमेवार्थमुपसंहरन्नाह—अत्रान्तरे

**भिसिणीपत्तेहिंअरे उदयं घित्तुं छुहंति पाएसु । साहु विणीआ पुरिसा विणीअनयरी अह निविट्ठा ॥ २०० ॥**

गमनिका—बिसिनी+पत्रैरितरे उदकं गृहीत्वा 'छुभंतित्ति' प्रक्षिपन्ति, वर्त्तमाननिर्देशः प्राग्वत्, पादयोः, देवराजो†ऽभिहितवान्—साधु विनीताः पुरुषा विनीतनगरी अथ निविष्टेति गाथार्थः ॥ २०० ॥ गतमभिषेकद्वारम्, इदानीं संग्रहद्वाराभिधित्सयाऽऽह—

---

* विनीता०. + भिसिनी० † देवराडभि०.

आसा हत्थी गावो गहिआइं रज्जसंगहनिमित्तं । घित्तूण एवमाई चउव्विहं संगहं कुणइ ॥ २०१ ॥

गमनिका—अश्वा हस्तिनो गाव एतानि चतुष्पदानि तदा गृहीतानि भगवता राज्ये संग्रहः राज्यसंग्रहस्तन्निमित्तं गृहीत्वा एवमादि चतुष्पदजातमसौ भगवान् 'चतुर्विधं' वक्ष्यमाणलक्षणं संग्रहं करोति, वर्त्तमाननिर्देशप्रयोजनं पूर्ववत्, पाठान्तरं वा 'चउव्विहं संगहं कासी' इति अयं गाथार्थः ॥ २०१ ॥ स चायम्—

उग्गा १ भोगा २ रायण्ण ३ खत्तिआ ४ संगहो भवे चउहा ।
आरक्खि १ गुरु २ वयंसा ३ सेसा जे खत्तिआ ४ ते उ ॥ २०२ ॥

गमनिका—उग्रा भोगा राजन्याः क्षत्रिया एषां समुदायरूपः संग्रहो भवेच्चतुर्धा, एतेषामेव यथासंख्यं स्वरूपमाह—आरक्खीत्यादि, आरक्षका उग्रदण्डकारित्वात् उग्राः, गुर्विति गुरुस्थानीया भोगाः*, वयस्या इति राजन्याः समानवयस इतिकृत्वा वयस्याः, शेषा उक्तव्यतिरिक्ता ये क्षत्रियाः 'ते तु' तुशब्दः पुनःशब्दार्थः ते पुनः क्षत्रिया इति गाथार्थः ॥ २०२ ॥ इदानीं लोकस्थितिवैचित्र्यनिबन्धनप्रतिपादनमाह+—

आहारे १ सिप्प २ कम्मे ३ अ, मामणा ४ अ विभूसणा ५ ।
लेहे ६ गणिए ७ अ रूवे ८ अ, लक्खणे ९ माण १० पोअए ११ ॥ २०३ ॥

* भोजा + ०पादनायाह

ववहारे १२ नीइ १३ जुद्धे १४ अ, ईसत्थे १५ अ उवासणा १६ ।
तिगिच्छा १७ अत्थसत्थे १८ अ, बंधे १९ घाए २० अ मारणा २१ ॥ २०४ ॥
जण्णू २२ सव २३ समवाए २४, मंगले २५ कोउगे २६ इअ ।
वत्थे २७ गंधे २८ अ मल्ले २९ अ, अलंकारे ३० तहेव य ॥ २०५ ॥
चोलो ३१ वँण* ३२ विवाहे ३३ अ, दत्तिआ ३४ मडयपूअणा ३५ ।
झावणा ३६ थूभ ३७ सद्दे ३८ अ, छेलावणय ३९ पुच्छणा ४० ॥ २०६ ॥

एताश्चतस्रोऽपि द्वारगाथाः, एताश्च भाष्यकारः प्रतिद्वारं व्याख्यास्यत्येव, तथाप्यक्षरगमनिकामात्रमुच्यते, तत्रापि प्रथमगाथामधिकृत्याह—तत्र 'आहार' इति आहारविषयो विधिर्वक्तव्यः, कथं कल्पतरुफलाहारासंभवः संवृत्तः ? कथं वा पक्वाहारः संवृत्त इति, तथा 'शिल्प' इति शिल्पविषयो विधिर्वक्तव्यः, कुतः कदा कथं कियन्ति वा शिल्पानि उपजातानि ?, 'कर्मणि' इति कर्मविषयो विधिर्वाच्यः, यथा कृषिवाणिज्यादि कर्म संजातमिति, तच्चाग्नौ उत्पन्ने संजातमिति, 'चः' समुच्चये 'मामणत्ति' ममीकारार्थे देशीवचनं, ततश्च परिग्रहममीकारो वक्तव्यः, स च तत्काल एव प्रवृत्तः, 'चः' पूर्ववत्, विभूषणं विभूषणा मण्डनमित्यर्थः, सा च वक्तव्या, सा च भगवतः प्रथमं देवेन्द्रैः कृता, पश्चाल्लोकेऽपि प्रवृत्ता, 'लेख' इति लेखनं लेखः–लिपीविधानमित्यर्थः, तद्विषयो विधिर्वक्तव्यः, तच्च जिनेन ब्राह्म्या दक्षिणकरेण प्रदर्शितमिति, गणित-

* लवणयण

विषयो विधिर्वाच्यः, एवमन्यत्रापि क्रिया योज्या, गणितं–संख्यानं, तच्च भगवता सुन्दर्या वामकरेणोपदिष्टमिति, 'चः' समुच्चये, रूपं–काष्ठकर्मादि, तच्च भगवता भरतस्य कथितमिति, 'चः' पूर्ववत्, 'लक्षणं' पुरुषलक्षणादि, तच्च भगवतैव बाहुबलिनः कथितमिति, 'मानमिति' मानोन्मानावमानगणिमप्रतिमानलक्षणं, 'पोत' इति बोहित्थः प्रोतं वा अनयोर्मानपोतयोर्विधिर्वाच्यः, तत्र मानं द्विधा–धान्यमानं रसमानं च, तत्र धान्यमानमुक्तम्–'दो असतीओ पसती' इत्यादि, रसमानं तु 'चउसट्ठीया बत्तीसिआ' एवमादि १, उन्मानं–येनोन्मीयते यद्वोन्मीयते तद्यथा–कर्ष इत्यादि २, अवमानं येनावमीयते यद्वाऽवमीयते तद्यथा–हस्तेन दण्डेन वा हस्तो वेत्यादि ३, गणिमं–यद्गण्यते एकादिसंख्ययेति ४, प्रतिमानं–गुञ्जादि ५, एतत्सर्वं तदा प्रवृत्तमिति, पोता अपि तदैव प्रवृत्ताः, अथवा प्रकर्षेण उतनं प्रोतः–मुक्ताफलादीनां प्रोतनं तदैव प्रवृत्तमिति प्रथमद्वारगाथासमासार्थः । द्वितीयगाथागमनिका—'ववहारे' त्ति व्यवहारविषयो विधिर्वाच्यः, राजकुलकरणभाषाप्रदानादिलक्षणो* व्यवहारः, स च तदा प्रवृत्तो, लोकानां प्रायः स्वस्वभावापगमात्+, 'नीतित्ति' नीतौ विधिर्वक्तव्यः, नीतिः–हक्कारादिलक्षणा सामाद्युपायलक्षणा वा तदैव जातेति, 'जुद्धे यत्ति' युद्धविषयो विधिर्वाच्यः, तत्र युद्धं–बाहुयुद्धादिकं लावकादीनां वा तदैवेति, 'ईसत्थे यत्ति' प्राकृतशैल्या सुकारलोपात् इषुशास्त्रं–धनुर्वेदः तद्विषयश्च विधिर्वाच्य इति, तदपि तदैव जातं राजधर्मे सति, अथवा एकारान्ताः सर्वत्र प्रथमान्ता एव द्रष्टव्याः, व्यवहार इति–व्यवहारस्तदा जातः, एवं सर्वत्र योज्यं, यथा–'कयरे आगच्छति दित्त-

* प्रतिपादना० + स्वभावोपग०.

रूवे इत्यादि' 'उवासणेति' उपासना—नापितकर्म तदपि तदैव जातं, प्राग्व्यवस्थितनखलोमान एव प्राणिन आसन् इति, गुरुनरेन्द्रादीनां वोपासनेति, 'चिकित्सा' रोगहरणलक्षणा सा तदैव जाता एवं सर्वत्र क्रियाध्याहारः कार्यः, 'अत्थसत्थे य' त्ति अर्थशास्त्रं, 'बंधे घाते य मारणे ति' बन्धो—निगडादिजन्यः घातो—दण्डादिताडना जीविताद्व्यपरोपणं मारणेति, सर्वाणि तदैव जातानीति द्वितीयद्वारगाथासमासार्थः । तृतीयगाथागमनिका—एकारान्ताः प्रथमद्वितीयान्ताः प्राकृते भवन्त्येव, तत्र यज्ञाः—नागादिपूजारूपा उत्सवाः—शक्रोत्सवादयः समवायाः—गोष्ठयादिमेलकाः, एते तदा प्रवृत्ताः, मङ्गलानि—स्वस्तिकसिद्धार्थकादीनि कौतुकानि—रक्षादीनि मङ्गलानि च कौतुकानि चेति समासः, मंगलेत्ति एकारः अलाक्षणिको मुखसुखोच्चारणार्थः, एतानि भगवतः प्राग् देवैः कृतानि, पुनस्तदैव लोके प्रवृत्तानि, तथा 'वस्त्रं' चीनांशुकादि 'गन्धः' कोष्ठपुटादिलक्षणः 'माल्यं' पुष्पदाम 'अलङ्कारः' केशभूषणादिलक्षणः, एतान्यपि वस्त्रादीनि तदैव जातानीति तृतीयद्वारगाथासमासार्थः । चतुर्थगाथागमनिका—तत्र 'चूलेति' बालानां चूडाकर्म, तेषामेव कलाग्रहणार्थं नयनमुपनयनं धर्मश्रवणनिमित्तं वा साधुसकाशं नयनमुपनयनं, 'वीवाहः' प्रतीत एव, एते चूडादयः तदैव प्रवृत्ताः ( ३५०० ), दत्ता च कन्या पित्रादिना परिणीयत इत्येतत्तदैव संजातं, भिक्षादानं वा, मृतकस्य पूजना मरुदेव्यास्तदैव प्रथमसिद्ध इतिकृत्वा देवैः कृतेति लोके च रूढा, 'ध्यापना' अग्निसंस्कारः, स च भगवतो निर्वाणप्राप्तस्य प्रथमं त्रिदशैः कृतः, पश्चाल्लोकेऽपि संजातः, भगवदादिदग्धस्थानेषु स्तूपाः तदैव कृता लोके च प्रवृत्ताः, शब्दश्च—रुदितशब्दो भगवत्येवापवर्गं गते भरतदुःखमसाधारणं ज्ञात्वा शक्रेण कृतः, लोकेऽपि रूढ एव, 'छेलापनकमिति' देशीवचनमुत्कृष्टबालक्रीडापनं सेण्टिताद्यर्थवाचकमिति, तथा पृच्छनं पृच्छा, सा इङ्खिणिकादिलक्षणा इङ्खिणिकाः कर्णमूले घण्टिकां चालयन्ति, पुनर्यक्षाः खल्वागत्य कर्णे कथयन्ति किमपि प्रष्टुर्विवक्षितमिति, अथवा निमित्तादिप्रच्छना सुखशयितादिप्रच्छना वेति चतुर्थद्वारगाथासमासार्थः ॥ २०३–२०४–२०५–२०६ ॥ इदानीं प्रथमद्वारगाथाऽऽद्यद्वारावयवार्थाभिधित्सया मूलभाष्यकृदाह—

आसी अ कंदहारा मूलाहारा य पत्तहारा य ।
पुप्फफलभोइणोऽवि अ जइआ किर कुलगरो उसभो ॥ ५ ॥ ( मू० भा० )

गमनिका—आसंश्च कन्दाहारा मूलाहाराश्च पत्राहाराश्च पुष्पफलभोजिनोऽपि च, कदा ?, यदा किल कुलकर ऋषभः । भावार्थः स्पष्ट एव । नवरं ते मिथुनका एवंभूता आसन्, किलशब्दस्तु परोक्षाप्ताऽऽगमवादसंसूचक इति गाथार्थः ॥ तथा

आसी अ इक्खुभोई इक्खागा तेण खत्तिआ हुंति ।
सणसत्तरसं धण्णं आमं ओमं च भुंजीआ ॥ ६ ॥ ( मू० भा० )

गमनिका—आसंश्च इक्षुभोजिन इक्ष्वाकवस्तेन क्षत्रिया भवन्ति, तथा च शणः सप्तदशो यस्य तत् शणसप्तदशं 'धान्यं' शाल्यादि 'आमं' अपक्वं 'ओमं' न्यूनं च 'भुंजीआ' इति भुक्तवन्त इति गाथार्थः ॥ ६ ॥ तथापि तु कालदोषात्तदपि न जीर्णवन्तः, ततश्च भगवन्तं पृष्टवन्तः, भगवाँश्चाह—हस्ताभ्यां घृष्ट्वाऽऽहारयध्वमिति । अमुमेवार्थं प्रतिपादयन्नाह मूलभाष्यकृत्—

ओमंपाहारंता अजीरमाणंमि ते जिणमुर्विति। हत्थेहिँ घंसिऊणं आहारेहत्ति ते भणिआ॥७॥ ( मू० भा० )

गमनिका—ओममप्याहारयन्तः अजीर्यमाणे 'ते' मिथुनका 'जिनं' प्रथमतीर्थकरं उपयान्ति, सर्वावसर्पिणीस्थितिप्रदर्शनार्थो वर्त्तमाननिर्देशो, भगवता च हस्ताभ्यां घृष्ट्वा आहारयध्वमिति ते भणिताः सन्तः । किम् ?—

आसी अ पाणिघंसी तिम्मिअतंदुलपवालपुडभोई ।
हत्थतलपुडाहारा जइआ किर कुलकरो उसहो ॥ ८ ॥ ( मू० भा० )

व्याख्या—आसंश्च ते मिथुनका भगवदुपदेशात् पाणिभ्यां घर्षं* शीलं येषां ते पाणिघर्षिणः, एतदुक्तं भवति—ता एवौषधीः हस्ताभ्यां घृष्ट्वा त्वचं चापनीय भुक्तवन्तः, एवमपि कालदोषात् कियत्यपि गते काले ता अपि न जीर्णवन्तः, पुनर्भगवदुपदेशात एव तीमिततन्दुलप्रवालपुटभोजिनो बभूवुः, तीमिततन्दुलान् प्रवालपुटे भोक्तुं शीलं येषां ते तथाविधाः, तन्दुलशब्देन औषध्य एवोच्यन्ते । पुनः कियताऽपि कालेन गच्छता अजरणदोषादेव+ भगवदुपदेशेन हस्ततलपुटाहारा आसन्, हस्ततलपुटेषु आहारो विहितो येषामिति समासः, हस्ततलपुटेषु कियन्तमपि कालमौषधीः स्थापयित्वोपभुक्तवन्त इत्यर्थः । तथा कक्षासु स्वेदयित्वेति, यदा किल कुलकरो वृ†षभः, किलशब्दः परोक्षाप्तागमवादसंसूचकः, तदा ते मिथुनका एवंभूता आसन्निति गाथार्थः ॥ पुनरभिहितप्रकारद्व्यादिसंयोगैराहारितवन्तः, तद्यथा—पाणिभ्यां घृष्ट्वा पत्रपुटेषु च मुहूर्त्तं तीमित्वा तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु च मुहूर्त्तं धृत्वा पुनर्हस्ताभ्यां घृष्ट्वा कक्षास्वेदं च कृत्वा पुनस्तीमित्वा हस्तपुटेषु च मुहूर्त्तं धृत्वेत्यादिभङ्गकयोजना, केचित् प्रदर्शयन्ति घृष्ट्वापदं विहाय, तच्चायुक्तं, त्वगपनयनमन्तरेण तीमितस्यापि

* घृष्टुं + अजीरण० † ऋषभ

हस्तपुटघृतस्य सौकुमार्यत्वानुपपत्तेः, श्लक्ष्णत्वग्भावत्वाद्वा अदोष इति, द्वितीययोजना पुनः–हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु मुहूर्त्तं धृत्वेति, तृतीययोजना पुनः–हस्ताभ्यां घृष्ट्वा पत्रपुटेषु च तीमित्वा हस्तपुटेषु च धृत्वा कक्षासु स्वेदयित्वेति ॥ अमुमेवार्थमुपसंहरन्नाह—

घंसेऊणं तिम्मण घंसणतिम्मणपवालपुडभोई । घंसणतिम्मपवाले हत्थउडे कक्खसेएँ य ॥ ९ ॥ ( मू० भा० )

भावार्थ उक्त एव, नवरम् उक्तार्थाक्षरयोजना–घृष्ट्वा तीमनं कृतवन्त इत्यनेन प्रागभिहितप्रत्येकभङ्गकाक्षेपः कृतो वेदितव्यः, 'घृष्टप्रवालपुटतीमितभोजिनः' इत्यनेन द्वितीययोजनाक्षेपः, 'घृष्टेति' तिमनं 'प्रवाल' इति प्रवाले तिमित्वा हस्तपुटे कियन्तमपि कालं विधाय भुक्तवन्त इति शेषः, इत्यनेन तृतीययोजनाक्षेपः, तथा कक्षास्वेदे च कृते सति भुक्तवन्त इत्यनेन अनन्तराभिहितत्रययुक्तेन चतुर्भङ्गकयोजनाक्षेप इति गाथार्थः ॥ अत्रान्तरे—

अगणिस्स य उट्ठाणं दुमघंसा दट्ठु भीअपरिकहणं ।
पासेसुं परिछिंदह गिण्हह पागं च तो कुणह ॥ १० ॥ ( मू० भा० )

आह–सर्व तीमनादि ते मिथुनकास्तीर्थकरोपदेशात्कृतवन्तः, स च भगवान् जातिस्मरः,¶ स किमित्यग्न्युत्पादोपदेशं न दत्तवानिति, उच्यते, तदा कालस्यैकान्तस्निग्धत्वात् सत्यपि यत्ने वह्न्यनुत्पत्तेरिति । स च भगवान् विजानाति–न ह्येकान्तस्निग्धरूक्षयोः कालयोर्वह्न्युत्पादः किंतु अनतिस्निग्धरूक्षकाल इत्यतो नादिष्टवानिति, ते च च॥तुर्थभङ्गविकल्पि-

* सेईअ + तिमित † घृष्ट्वा ¶ र. सन् कि०. || चतुर्भ०

तमप्याहारं कालदोषान्न जीर्णवन्त इत्यस्मिन्प्रस्तावे अग्नेश्चोत्थानं संवृत्तमिति, कुतः ?, द्रुमघर्षात् , तं चोत्थितं प्रवृद्धज्वालावलीसनाथं भूम्याद्यं तृणादि दहन्तं दृष्ट्वा अपूर्वरत्नबुद्ध्या ग्रहणं प्रति प्रवृत्तवन्तः,दह्यमानास्तु भीतपरिकथनं ऋषभाय कृतवन्त इति,भीतानां परिकथनं भीतपरिकथनं, भीत्या वा परिकथनं भीतिपरिकथनं पाठान्तरमिति । भगवानाह—'पार्श्वे'त्यादि, सुगमं, ते ह्यजानाना वह्नावेवौषधीः प्रक्षिप्तवन्तः, ताश्च दाहमापुः, पुनस्ते भगवतो हस्तिस्कन्धगतस्य न्यवेदयन्–स हि स्वयमेवौषधीर्भक्षयतीति, भगवानाह–न तत्रातिरोहितानां प्रक्षेपः क्रियते, किन्तु मृत्पिण्डमानयध्वमिति, तैरानीतः, भगवान् हस्तिकुम्भे पिण्डं निधाय पत्र*काकारं निदर्शयेद्दशानि कृत्वा इहैव पक्त्वा एतेषु पाकं निवर्त्तयध्वमित्युक्तवानिति, ते तथैव कृतवन्तः, इत्थं तावत्प्रथमं कुम्भकारशिल्पमुत्पन्नम् ॥ अमुमेवार्थमुपसंहरन्नाह—

पक्खेव डहणमोसहि कहणं निग्गमण हत्थिसीसंमि ।
पयणारंभपवित्ती ताहे कासी अ ते मणुआ ॥ ११ ॥+ ( मू० भा० )

भावार्थ उक्त एव, किन्तु क्रियाऽध्याहारकरणेन अक्षरगमनिका स्वबुद्ध्या कार्या, यथा–प्रक्षेपं कृतवन्तो दहनमौषधीनां बभूवेत्यादि ॥ उक्तमाहारद्वारं, शिल्पद्वारावयवार्थाभिधित्सयाऽऽह—

पंचेव य सिप्पाइं घड १ लोहे २ चित्त ३ णंत ४ कासवए ५ । इक्किक्कस्स य इत्तो वीसं वीसं भवे भेया ॥२०७॥

गमनिका—पञ्चैव 'शिल्पानि' मूलशिल्पानि, तद्यथा–घडलोहे चित्तणंतकासवए,तत्र घट इति–कुम्भकारशिल्पोपलक्षणं,

* कुम्भाकारं + मिंठेण हत्थिपिंडे मट्टियपिंडं गहाय कुडगं च । निव्वत्तेसि अ तइआ जिणोवइट्ठेण मग्गेण ॥ १ ॥ निव्वत्तिए समाणे भण्णई राया तओ बहुजणस्स । एवइआ मे कुव्वह पयट्टिअ पढमसिप्पं तु ॥ २ ॥ ( प्रक्षिप्ते अन्याख्याते च ).

लोहमिति*–लोहकारशिल्पस्य चित्रमिति–चित्रकरशिल्पस्य णंतमिति–देशीवचनं वस्त्रशिल्पस्य काश्यप इति–नापितशिल्पस्य, एकैकस्य च एभ्यो विंशतिर्विंशतिः भवन्ति भेदा इति गाथार्थः ॥ २०७ ॥ साम्प्रतं शेषद्वारावयवार्थप्रतिपादनायाऽऽह भाष्यकारः—

कम्मं किसिवाणिज्जाइ ३ मामणा जा परिग्गहे ममया ४ ।
पुव्विं देवेहिं कया विभूसणा मंडणा गुरुणो ५ ॥ १२ ॥
लेहं लिवीविहाणं जिणेण बंभीइ दाहिणकरेणं ६ ।
गणिअं संखाणं सुंदरीइ वामेण उवइट्ठं ७ ॥ १३ ॥
भरहस्स रूवकम्मं ८ नराइलक्खणमहोइअं बलिणो ९ ।
माणुम्माणवमाणप्पमाणगणिमाइवत्थूणं १० ॥ १४ ॥
मणिआई दोराइसु पोआ तह सागरंमि वहणाइं ११ ।
ववहारो लेहवणं कज्जपरिच्छेदणत्थं वा १२ ॥ १५ ॥
णीई हक्काराई सत्तविहा अहव सामभेआई १३ ।
जुद्धाइ बाहुजुद्धाइआइ वट्टाइआणं वा १४ ॥ १६ ॥ ( भाष्यम् )

* लोहे ( मूले ).

ईसत्थं धणुवेओ १५ उवासणा मंसुकम्ममाईआ १६।
गुरुरायाईणं वा उवासणा पज्जुवासणया ॥ १७ ॥
रोगहरणं तिगिच्छा १७ अत्थागमसत्थमत्थसत्थंति १८।
निअलाइजमो बंधो १९ घाओ दंडाइताडणया २० ॥ १८ ॥
मारणया जीववहो २१ जण्णा नागाइआण पूआओ २२।
इंदाइमहा पायं पइनिअया ऊसवा हुंति २३ ॥ १९ ॥
समवाओ गोट्ठीणं गामाईणं च संपसारो वा २४।
तह मंगलाइं सत्थिअसुवण्णसिद्धत्थयाईणि २५ ॥ २० ॥
पुव्विं कयाइ पहुणो सुरेहि रक्खाइ कोउगाइं च २६।
तह वत्थगन्धमल्लालंकारा केसभूसाई २७-२८-२९-३० ॥ २१ ॥
तं दट्ठूण पवत्तोऽलंकारेउं जणोऽवि सेसोऽवि।
विहिणा चूलाकम्मं बालाणं चोलया नाम ३१ ॥ २२ ॥
उवणयणं तु कलाणं गुरुमूले साहुणो तओ धम्मं।
घित्तुं हवंति सड्ढा केई दिक्खं पवज्जंति ३२ ॥ २३ ॥
दट्ठुं कयं विवाहं जिणस्स लोगोऽवि काउमारद्धो ३३।
गुरुदत्तिआ य कण्णा परिणिज्जंते तओ पायं ॥ २४ ॥
दत्तिव्व दाणमुसभं दिंतं दट्ठूं जणंमिवि पवत्तं।
जिणभिक्खादाणंपि हु, दट्ठूं भिक्खा पवत्ताओ ३४ ॥ २५ ॥
मडयं मयस्स देहो तं मरुदेवीइ पढमसिद्धुत्ति।
देवेहि पुरा महिअं ३५ झावणया अग्गिसक्कारो ॥ २६ ॥
सो जिणदेहाईणं देवेहि कओ ३६ चिआसु थूभाई ३७।
सद्दो अ रुण्णसद्दो लोगोऽवि तओ तहा पगओ ३८ ॥ २७ ॥
छेलावणमुक्किट्ठाइ बालकीलावणं व सेंटाई ३९।
इंखिणिआइ रुअं वा पुच्छा पुण किं कहं कज्जं ? ॥ २८ ॥
अहव निमित्ताईणं सुहसइआइ सुहदुक्खपुच्छा वा ४०।
इच्चेवमाइ पाएणुप्पन्नं उसभकालंमि ॥ २९ ॥
किंचित्थ (त्थ) भरहकाले कुलगरकालेऽवि किंचि उप्पन्नं।
पहुणा य देसिआई सव्वकलासिप्पकम्माइं ॥ ३० ॥ ( भाष्यम् )

एताश्च स्पष्टत्वात् प्रायो द्वारगाथाव्याख्यान एव च व्याख्यातत्वात् न प्रतन्यन्ते ॥

**उसभचरिआहिगारे सव्वेसिं जिणवराण सामण्णं। संबोहणाइ वुत्तुं वुच्छं पत्तेअमुसभस्स ॥ २०८ ॥**

व्याख्या—ऋषभचरिताधिकारे 'सर्वेषाम्' अजितादीनां जिनवराणां 'सामान्यं' साधारणं संबोधनादि, आदिशब्दात् परित्यागादिपरिग्रहः, वक्तुं, किम् ?, वक्ष्यति निर्युक्तिकारः प्रत्येकं केवलस्य ऋषभस्य वक्तव्यतामिति गाथार्थः ॥ २०८ ॥

संबोहण १ परिचाए २, पत्तेअं ३ उवहिंमि अ ४।
अन्नलिंगे कुलिंगे अ ५, गामायार ६ परीसहे ७ ॥ २०९ ॥
जीवोवलंभ ८ सुयलंभे ९, पच्चक्खाणे १० अ संजमे ११।
छउमत्थ १२ तवोकम्मे १३, उप्पाया नाण १४ संगहे १५ ॥ २१० ॥
तित्थं १६ गणो १७ गणहरो १८, धम्मोवायस्स देसगा १९।
परिआअ २० अंतकिरिआ, कस्स केण तवेण वा २१ ? ॥ २११ ॥

आसां व्याख्या—स्वयंबुद्धाः सर्व एव तीर्थकृतस्तथापि तु कल्प इतिकृत्वा लोकान्तिका देवाः सर्वतीर्थकृतां संबोधनं कुर्वन्ति । परित्याग इति-परित्यागविषयो विधिर्वक्तव्यः, किं भगवन्तश्चारित्रप्रतिपत्तौ परित्यजन्तीति । प्रत्येकमिति-कः कियत्परिवारो निष्क्रान्तः । उपधाविति-उपधिविषयो विधिर्वक्तव्यः, कः केनोपधिरासेवितः, को वा विनेयानामनुज्ञात

इति । 'अन्यलिङ्गं' साधुलिङ्गं 'कुलिङ्गं' तापसादिलिङ्गं, तत्र न ते अन्यलिङ्गे निष्क्रान्ता नापि कुलिङ्गे, किंतु तीर्थकरलिङ्ग एवेति, ग्राम्याचाराः—विषयाः परीषहाः—क्षुत्पिपासादयः, तत्र ग्राम्याचारपरीषहयोर्विधिर्वाच्यः, कुमारप्रव्रजितैर्विषया न भुक्ताः शेषैर्भुक्ताः, परीषहाः पुनः सर्वैर्निर्जिता एवेति प्रथमद्वारगाथासमासार्थः । साम्प्रतं द्वितीयगाथागमानका—तत्र जीवोपलम्भः—सर्वैरेव तीर्थकरैर्नव जीवादिपदार्था उपलब्धा इति । श्रुतलाभः—पूर्वभवे प्रथमस्य द्वादशाङ्गानि खल्वासन् शेषाणामेकादशेति । प्रत्याख्यानं च पञ्चमहाव्रतरूपं पुरिमपश्चिमयोः मध्यमानां तु चतुर्महाव्रतरूपमिति, मैथुनस्य परिग्रहेऽन्तर्भावात् । संयमोऽपि पुरिमपश्चिमयोः सामायिकच्छेदोपस्थापनाभ्यां द्विभेदः, मध्यमानां सामायिकरूप एव, सप्तदशप्रकारो वा सर्वेषामिति । छादयतीति छद्म—कर्माभिधीयते, छद्मनि तिष्ठन्ति इति छद्मस्थाः, कः कियन्तं कालं छद्मस्थः खल्वासीदिति । तथा तपःकर्म—किं कस्येति वक्तव्यं । तथा ज्ञानोत्पादो वक्तव्यो, यस्य यस्मिन्नहनि केवलमुत्पन्नमिति । तथा संग्रहो वक्तव्यः, शिष्यादिसंग्रह इति द्वितीयद्वारगाथासमासार्थः । साम्प्रतं तृतीयद्वारगाथागमनिका—तत्र तीर्थमिति—कथं कस्य कदा तीर्थमुत्पन्नमित्यादि वक्तव्यं, तीर्थं—प्रागुक्तशब्दार्थं तच्च चातुर्वर्णः श्रमणसङ्घः, तच्च ऋषभादीनां प्रथमसमवसरण एवोत्पन्नं, वीरस्य तु द्वितीय इति द्वारं । गण इति—एकवाचनाचारक्रियास्थानां समुदायो न कुलसमुदाय इति, ते च ऋषभादीनां कस्य कियन्त इति वक्तव्यं । तथा गणधराः—सूत्रकर्त्तारः, ते च कस्य कियन्त इति वक्तव्यम् । तथा धर्मोपायस्य देशका वक्तव्याः, तत्र दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः, तस्य उपायो—द्वादशाङ्गं प्रवचनम् अथवा पूर्वाणि धर्मोपायैस्तस्य देशकाः—देशयन्तीति देशकाः, ते च सर्वतीर्थकृतां गणधरा एव, अथवा अन्येऽपि यस्य यावन्तश्चतुर्दशपूर्वविदः । तथा पर्याय इति—कः कस्य प्रव्रज्यादिपर्याय इत्येतद्वक्तव्यं । तथा अन्ते क्रिया अन्तक्रिया सा च निर्वाणलक्षणा, सा च कस्य केन तपसा संजाता ? वाशब्दात् कस्मिन् वा संजाता कियत्परिवृतस्य चेति वक्तव्यमिति तृतीयद्वारगाथासमासार्थः ॥ २०९-२१०-२११ ॥ इदानीं प्रथमद्वारगाथाऽऽद्यदलावयवार्थप्रतिपादनायाह—

**सव्वेऽवि सयंबुद्धा लोगन्तिअबोहिआ य जीएणं १ । सव्वेसिं परिच्चाओ संवच्छरिअं महादाणं ॥ २१२ ॥**

व्याख्या—सर्व एव तीर्थकृतः स्वयंबुद्धा वर्त्तन्ते, गर्भस्थानामपि ज्ञानत्रयोपेतत्वात्, लोकान्तिकाः—सारस्वतादयः तद्बोधिताश्च जीतमितिकृत्वा—कल्प इतिकृत्वा, तथा च स्थितिरियं तेषां यदुत—स्वयंबुद्धानपि भगवतो बोधयन्तीति । सर्वेषां परित्यागः सांवत्सरिकं महादानं—वक्ष्यमाणलक्षणमिति गाथार्थः ॥ २१२ ॥

**रज्जाइच्चाओऽवि य २ पत्तेअं को व कत्तिअसमग्गो ३ । को कस्सुवही ? को वाऽणुण्णाओ केण सीसाणं ४ ॥ २१३ ॥**

व्याख्या—राज्यादित्यागोऽपि च परित्याग एव, 'प्रत्येकम्' एकैकः को वा कियत्समग्र इति वाच्यं, कः कस्योपधिरिति, को वाऽनुज्ञातः केन शिष्याणामिति गाथार्थः ॥ २१३ ॥ इदं च गाथाद्वयमपि समासव्याख्यारूपमवगन्तव्यम् । साम्प्रतं प्रपञ्चेन प्रथमद्वारगाथाऽऽद्यावयवार्थप्रतिपादनायाह—

* धर्मोपायस्य

**सारस्सय १ माइच्चा २ वण्ही ३ वरुणा ४ य गद्दतोया ५ य ।**
**तुसिआ ६ अव्वाबाहा ७ अग्गिच्चा ८ चेव रिट्ठा ९ य ॥ २१४ ॥**

गमनिका—'सारस्सयमादिच्चत्ति' सारस्वतादित्याः, अनुस्वारस्त्वलाक्षणिकः, 'वण्ही वरुणा यत्ति' प्राकृतशैल्या वकारलोपात् वह्न्यरुणाश्च, गर्दतोयाश्च तुषिता अव्याबाधाः 'अग्गिच्चा चेव रिट्ठा यत्ति' अग्नयश्चैव रिष्टाश्च, अग्नयश्च संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति 'तात्स्थ्यात्तद्व्यपदेशः' ब्रह्मलोकस्थरिष्टप्रस्तटाधाराष्टकृष्णराजिनिवासिन इत्यर्थः । अष्टकृष्णराजीस्थापना त्वेवम् । उक्तं च भगवत्याम्—"कहिं णं भंते ! कण्हराईओ पण्णत्ताओ ?, गोयमा ! उप्पिं सणंकुमारमाहिंदाणं कप्पाणं हेट्ठिं बंभलोए कप्पे रिट्ठे विमाणपत्थडे, एत्थ णं अक्खाडगसमचउरंससंठाणसंठियाओ अट्ठ कण्हराईओ पण्णत्ताओ" एताश्च स्वभावत एवात्यन्तकृष्णा वर्त्तन्त इति, अलं प्रपञ्चकथयेति गाथार्थः ॥ २१४ ॥

**एए देवनिकाया भयवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहिअं भयवं ! तित्थं पवत्तेहिं ॥ २१५ ॥**

गमनिका—एते देवनिकायाः स्वयंबुद्धमपि भगवन्तं बोधयन्ति जिनवरेन्द्रं तु, कल्प इतिकृत्वा, कथम् ?, सर्वे च ते जगज्जीवाश्च सर्वजगज्जीवाः तेभ्यः हितं हे भगवन् ! तीर्थं प्रवर्त्तयस्वेति गाथार्थः ॥ २१५ ॥ उक्तं संबोधनद्वारम्, इदानीं परित्यागद्वारमाह—

**संवच्छरेण होही अभिणिक्खमणं तु जिणवरिंदाणं । तो अत्थसंपयाणं पवत्तए पुव्वसूरंमि ॥ २१६ ॥**

१ कुत्र हे भगवन् ! कृष्णराजयः प्रज्ञप्ता ?, गौतम ! उपरि सनत्कुमारमाहेन्द्रयोः कल्पयोरधस्ताद्ब्रह्मलोके कल्पे रिष्टे प्रस्तटविमाने, अत्र अक्षाटकसमचतुरस्रसंस्थानसंस्थिता अष्ट कृष्णराजयः प्रज्ञप्ताः. * सबन्धविवक्षा.

भावार्थः स्पष्ट एव, नवरं पूर्वसूर्ये-पूर्वाह्णे इत्यर्थः, इति गाथार्थः ॥ २१६ ॥ कियत्प्रतिदिनं दीयत इत्याह—

एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा । सूरोदयमाईअं दिज्जइ जा पायरासाओ ॥ २१७ ॥

गमनिका—पूर्वार्धं सुगमं, कथं दीयत इत्याह–सूर्योदय आदौ यस्य दानस्य तत् सूर्योदयादि, सूर्योदयादारभ्य दीयत इत्यर्थः, कियन्तं कालं यावत् ?—प्रातरशनं प्रातराशः प्रातर्भोजनकालं यावत् इति गाथार्थः ॥ २१७ ॥ यथा दीयते तथा प्रतिपादयन्नाह—

सिंघाडगतिगचउक्कचच्चरचउमुहमहापहपहेसुं । दारेसु पुरवराणं रत्थामुहमज्झयारेसुं ॥ २१८ ॥

वरवरिआ घोसिज्जइ किमिच्छअं दिज्जए बहुविहीअं । सुरअसुरदेवदाणवनरिंदमहिआण निक्खमणे ॥ २१९ ॥

तत्र शृङ्गाटकं △ त्रिकं ⊥ चतुष्कं + चत्वरं * चतुर्मुखं ╬ 'महापथो' राजमार्गः, पथशब्दः प्रत्येकमभिसंबध्यते, सिङ्घाटकं च त्रिकं चेत्यादिद्वन्द्वः क्रियते, तथा द्वारेषु पुरवराणां प्रतोलिषु इति भावार्थः, 'रथ्यामुखानि' रथ्याप्रवेशा 'मध्यं-कारा' मध्या एव तेषु रथ्यामुखमध्यकारेष्विति गाथार्थः ॥ किं ?, वरवरिका घोष्यते–वरं याचध्वं वरं याच† ध्वमित्येवं घोषणा समयपरिभाषया वरवरिकोच्यते, किमिच्छकं दीयत इति–कः किमिच्छति ? यो यदिच्छति तस्य तद्दानं समयत्त एव किमि-च्छकमित्युच्यते । एकमपि वस्त्वङ्गीकृत्यैतत्परिसमाप्त्या भवति, अतः बहवो विधयो मुक्ताफलप्रदानादिलक्षणा यस्मिंस्त-

* सिङ्घाटक + मध्या० † याचयध्वं.

द्बहुविधिकं । 'सुरअसुरेत्यादि' सुरअसुरग्रहणात् चतुष्प्रकारदेवनिकायग्रहणं,देवदानवनरग्रहणेन तदुपलक्षितेन्द्रग्रहणं वेदि-तव्यमिति गाथार्थः ॥ २१८–२१९ ॥ इदानीमेकैकेन तीर्थकृता कियद्रव्यजातं संवत्सरेण दत्तमिति प्रतिपादयन्नाह—

तिण्णेव य कोडिसया अट्ठासीइं च हुंति कोडीओ । असिइं च सयसहस्सा एअं संवच्छरे दिण्णं ॥ २२० ॥

भावार्थः सुगम एव, प्रतिदिनदेयं त्रिभिः षष्ठ्यधिकैर्वासरशतैः गुणितं यथावर्णितं भवति इति गाथार्थः ॥ २२० ॥

॥ इति प्रथमवरवरिका ॥

साम्प्रतमधिकृतद्वारार्थानुपात्येव वस्तु प्रतिपादयन्नाह—

वीरं अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च । एए मुत्तूण जिणे अवसेसा आसि रायाणो ॥ २२१ ॥

रायकुलेसुऽवि जाया विसुद्धवंसेसु खत्तिअकुलेसुं । न य इत्थि*आभिसेआ कुमारवासंमि पव्वइआ ॥ २२२ ॥

संती कुंथू अ अरो अरिहंता चेव चक्कवट्टी अ । अवसेसा तित्थयरा मंडलिआ आसि रायाणो ॥ २२३ ॥

एताः तिस्रोऽपि निगदसिद्धा एव, परित्यागद्वारानुपातिता तु राज्यं चोक्तलक्षणं विहाय प्रव्रजिता इत्येवं भावनीया ॥ २२१–२२२–२२३ ॥ गतं परित्यागद्वारं, साम्प्रतं प्रत्येकद्वारं व्याचिख्यासुराह—

एगो भगवं वीरो पासो मल्ली अ तिहि तिहि सएहिं । भयवं च वासुपुज्जो छहि पुरिससएहि निक्खंतो ॥ २२४ ॥

उग्गाणं भोगाणं रायण्णाणं च खत्तिआणं च । चउहि सहस्सेहुसभो सेसा उ सहस्सपरिवारा ॥ २२५ ॥

* स्त्रीपाणिग्रहणराज्याभिषेकोभयरहिता इत्यर्थः ।

व्याख्या—एको भगवान् वीरः–चरमतीर्थकरः प्रव्रजितः, तथा पार्श्वो मल्लिश्च त्रिभिस्त्रिभिः शतैः सह, तथा भगवांश्च वासुपूज्यः षड्भिः पुरुषशतैः सह निष्क्रान्तः–प्रव्रजितः । तथा उग्राणां भोगानां राजन्यानां च क्षत्रियाणां च चतुर्भिः सहस्रैः सह ऋषभः, किम् ?, निष्क्रान्त इति वर्त्तते, शेषास्तु–अजितादयः सहस्रपरिवारा निष्क्रान्ता इति, उग्रादीनां च स्वरूपमधः प्रतिपादितमेवेति गाथार्थः ॥ २२४–२२५ ॥ साम्प्रतं प्रसङ्गतोऽत्रैव ये यस्मिन् वयसि निष्क्रान्ता इत्येतदभिधित्सुराह—

वीरो अरिट्ठनेमी पासो मल्ली अ वासुपुज्जो अ । पढमवए पव्वइआ सेसा पुण पच्छिमवयंमि ॥ २२६ ॥

निगदसिद्धैव । गतं प्रत्येकद्वारं, साम्प्रतमुपधिद्वारप्रतिपादनायाह—

सव्वेऽवि एगदूसेण निग्गया जिणवरा चउव्वीसं । न य नाम अण्णलिंगे नो गिहिलिंगे कुलिंगे वा ५ ॥ २२७ ॥

गमनिका—सर्वेऽपि 'एकदूष्येण' एकवस्त्रेण निर्गताः जिनवराश्चतुर्विंशतिः, अपिशब्दस्य व्यवहितः संबन्धः, 'सर्वे' यावन्तः खल्वतीता जिनवरा अपि एकदूष्येण निर्गताः, किं पुनस्तन्मतानुसारिणः न सोपधयः ?। ततश्च य उपधिरासेवितो भगवद्भिः स साक्षादेवोक्तः, यः पुनर्विनेयेभ्यः स्थविरकल्पिकादिभेदभिन्नेभ्योऽनुज्ञातः स खलु अपिशब्दात् ज्ञेय इति, चतुर्विंशतीति संख्या भेदेन वर्त्तमानावसर्पिणीतीर्थकरप्रतिपादिकेति । गतमुपधिद्वारम्, इदानीं लिङ्गद्वारं–सर्वे तीर्थकृतः तीर्थकरलिङ्ग एव निष्क्रान्ताः, न च नाम अन्यलिङ्गे न गृहस्थलिङ्गे कुलिङ्गे वा, अन्यलिङ्गाद्यर्थ उक्त एवेति गाथार्थः ॥ २२७ ॥ इदानी यो येन तपसा निष्क्रान्तस्तदभिधित्सुराह—

सुमई थ निच्चभत्तेण निग्गओ वासुपुज्ज जिणो चउत्थेणं। पासो मल्लीवि अ अट्ठमेण सेसा उ छट्ठेणं ॥ २२८॥

व्याख्या—सुमतिः तीर्थकरः, थेति निपातः, 'नित्यभक्तेन' अनवरतभक्तेन 'निर्गतो' निष्क्रान्तः, तथा वासुपूज्यो जिनश्चतुर्थेन, निर्गत इति वर्त्तते, तथा पार्श्वो मल्ल्यपि चाष्टमेन, 'शेषास्तु' ऋषभादयः षष्ठेनेति गाथार्थः ॥२२८॥ साम्प्रतमिहैव निर्गमनाधिकाराद्यो यत्र येषूद्यानादिषु निष्क्रान्त इत्येतत्प्रतिपाद्यते—

उसभो अ विणीआए बारवईए अरिट्ठवरनेमी। अवसेसा तित्थयरा निक्खंता जम्मभूमीसुं ॥ २२९ ॥

उसभो सिद्धत्थवणंमि वासुपुज्जो विहारगेहंमि। धम्मो अ वप्पगाए नीलगुहाए अ मुणिनामा ॥ २३० ॥

आसमपयंमि पासो वीरजिणिंदो अ नायसंडंमि। अवसेसा निक्खंता, सहसंबवणंमि उज्जाणे ॥ २३१ ॥

एतास्तिस्रोऽपि निगदसिद्धा एव ॥ इदानीं प्रसङ्गत एव निर्गमणकालं प्रतिपादयन्नाह—

पासो अरिट्ठनेमी सिज्जंसो सुमइ मल्लिनामो अ। पुव्वण्हे निक्खंता सेसा पुण पच्छिमण्हंमि ॥ २३२ ॥

निगदसिद्धा इत्यलं विस्तरेण ॥ गतमुपधिद्वारं, तत्प्रसङ्गत एव चान्यलिङ्गकुलिङ्गार्थोऽपि व्याख्यात एव। इदानीं ग्राम्याचारद्वारावयवार्थं प्रतिपादयन्नाह—

गामायारा विसया निसेविआ ते कुमारवज्जेहिं ६। गामागराइएसु व केसु विहारो भवे कस्स ?॥ २३३ ॥

व्याख्या—ग्राम्याचारा विषया उच्यन्ते, निषेवितास्ते कुमारवर्जैस्तीर्थकृद्भिः, ग्रामाकरादिषु वा केषु विहारो भवेत् कस्येति वाच्यमिति गाथार्थः ॥ २३३ ॥ तत्र—

मगहारायगिहाइसु मुणओ खित्तारिएसु विहरिंसु। उसभो नेमी पासो वीरो अ अणारिएसुंपि ॥ २३४॥

सूत्रसिद्धा ॥ गतं ग्राम्याचारद्वारं, साम्प्रतं परीषहद्वारं व्याचिख्यासयाऽऽह—

उदिआ परीसहा सिं पराइआ ते अ जिणवरिंदेहिं ७ नव जीवाइपयत्थे उवलभिऊणं च निक्खंता ८॥२३५॥

व्याख्या—उदिताः परीषहाः-शीतोष्णादयः अमीषां पराजितास्ते च जिनवरेन्द्रैः सर्वैरेवेति ॥ गतं परीषहद्वारं, व्याख्याता च प्रथमद्वारगाथेति ॥ साम्प्रतं च द्वितीया व्याख्यायते-तत्रापि प्रथमद्वारम्, आह च नव जीवादिपदार्थान् उपलभ्य च निष्क्रान्ताः, आदिशब्दाद् अजीवाश्रवबन्धसंवरपुण्यपापनिर्जरामोक्षग्रह इति गाथार्थः ॥ २३५ ॥ गतं जीवोपलम्भद्वारम्, अधुना श्रुतोपलम्भादिद्वारार्थप्रतिपादनायाह—

पढमस्स बारसंगं सेसाणिक्कारसंग सुयलंभो ९। पंच जमा पढमंतिमजिणाण सेसाण चत्तारि ॥ २३६ ॥

पच्चक्खाणमिणं १० संजमो अ पढमंतिमाण दुविगप्पो। सेसाणं सामइओ सत्तरसंगो अ सव्वेसिं ११॥२३७॥

गाथाद्वयं निगदसिद्धमेव, नवरं 'पढमंतिमाण दुविगप्पो' त्ति सामायिकच्छेदोपस्थापनाविकल्पः ॥ २३६–२३७ ॥ साम्प्रतं छद्मस्थकालतपःकर्मद्वारावयवार्थव्याचिख्यासयाऽऽह—

वाससहस्सं १ बारस २ चउदस ३ अट्ठार ४ वीस ५ वरिसाइं।
मासा छ ६ नव ७ तिण्णि अ ८ चउ ९ तिग १० दुग ११ मिक्कग १२ दुगं च १३ ॥ २३८ ॥
तिग १४ दुग १५ मिक्कग १६ सोलस वासा १७ तिण्णि अ १८ तहेवऽहोरत्तं १९।
मासिक्कारस २० नवगं २१ चउपण्ण दिणाइ २२ चुलसीई २३ ॥ २३९ ॥

तह बारस वासाइं, जिणाण छउमत्थकालपरिमाणं १२।उग्गं च तवोकम्मं विसेसओ वद्धमाणस्स १३॥२४०॥

एतास्तिस्रोऽपि निगदसिद्धा एव ॥ २३८–२३९–२४० ॥ इदानीं ज्ञानोत्पादद्वारं विवृण्वन्नाह—

फग्गुणबहुलिक्कारसि उत्तरसाढाहि नाणमुसभस्स १। पोसिक्कारसि सुद्धे रोहिणिजोएण अजिअस्स २ ॥२४१॥
कत्तिअबहुले पंचमि मिगसिरजोगेण संभवजिणस्स ३। पोसे सुद्धचउद्दसि अभीइ अभिणंदणजिणस्स ४ ॥२४२॥
चित्ते सुद्धिक्कारसि महाहि सुमइस्स नाणमुप्पण्णं ५। चित्तस्स पुण्णिमाए पउमाभजिणस्स चित्ताहिं ६ ॥२४३॥
फग्गुणबहुले छट्ठी विसाहजोगे सुपासनामस्स ७। फग्गुणबहुले सत्तमि अणुराह ससिप्पहजिणस्स ८ ॥ २४४॥
कत्तिअसुद्धे तइया मूले सुविहिस्स पुप्फदंतस्स ९। पोसे बहुलचउद्दसि पुव्वासाढाहि सीअलजिणस्स १० ॥२४५॥
पण्णरसि माहबहुले सिज्जंसजिणस्स सवणजोएणं ११। सयभिय वासुपुज्जे बीयाए माहसुद्धस्स १२ ॥ २४६॥
पोसस्स सुद्धछट्ठी उत्तरभद्दवय विमलनामस्स १३। वइसाह बहुलचउदसि रेवइजोएणऽणंतस्स १४ ॥ २४७ ॥
पोसस्स पुण्णिमाए नाणं धम्मस्स पुस्सजोएणं १५। पोसस्स सुद्धनवमी भरणीजोगेण संतिस्स १६ ॥ २४८ ॥
चित्तस्स सुद्धतइआ कित्तिअजोगेण नाण कुंथुस्स १७। कत्तिअसुद्धे बारसि अरस्स नाणं तु रेवइहिं १८ ॥२४९॥
मग्गसिरसुद्धइक्कारसीइ मल्लिस्स अस्सिणीजोगे १९। फग्गुणबहुले बारसि सवणेणं सुव्वयजिणस्स २० ॥ २५० ॥

मगसिरसुद्धिक्कारसि अस्सिणिजोगेण नमिजिणिंदस्स २१ ।
आसोअमावसाए नेमिजिणिंदस्स चित्ताहिं २२ ॥ २५१ ॥
चित्ते बहुलचउत्थी विसाहजोएण पासनामस्स २३। वइसाहसुद्धदसमी हत्थुत्तरजोगि वीरस्स २४।१४ ॥२५२॥
तेवीसाए नाणं उप्पण्णं जिणवराण पुव्वण्हे । वीरस्स पच्छिमण्हे पमाणपत्ताएँ चरिमाए ॥ २५३ ॥

एताश्च त्रयोदश गाथा निगदसिद्धाः । साम्प्रतमधिकृतद्वार एव येषु क्षेत्रेषूत्पन्नं तदेतदभिधित्सुराह—

उसभस्स पुरिमताले वीरस्सुजुवालिआनईतीरे । सेसाण केवलाइं जेसुज्जाणेसु पव्वइआ ॥ २५४ ॥

निगदसिद्धा । साम्प्रतमिहैव यस्य येन तपसोत्पन्नं तत्तपः प्रतिपादयन्नाह—

अट्ठमभत्तंतमी पासोसहमल्लिरिट्ठनेमीणं । वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाणं ॥ २५५ ॥

निगदसिद्धा । गतं ज्ञानोत्पादद्वारं, इदानीं संग्रहद्वारं विवरीषुराह—

चुलसीइं च सहस्सा १ एगं च २ दुवे अ ३ तिण्णि ४ लक्खाइं ।
तिण्णि अ वीसहिआइं ५ तीसहिआइं च तिण्णेव ६ ॥ २५६ ॥
तिण्णि अ ७ अड्ढाइज्जा ८ दुवे अ ९ एगं च १० सयसहस्साइं ।
चुलसीइं च सहस्सा ११ बिसत्तरि १२ अट्ठसट्ठिं च १३ ॥ २५७ ॥
छावट्ठिं १४ चउसट्ठिं १५ बावट्ठिं १६ सट्ठिमेव १७ पण्णासं १८ ।
चत्ता १९ तीसा २० वीसा २१ अट्ठारस २२ सोलस २३ सहस्सा ॥ २५८ ॥
चउदस य सहस्साइं २४ जिणाण जइसीससंगहपमाणं ।
अज्जासंगहमाणं उसभाईणं अओ वुच्छं ॥ २५९ ॥
तिण्णेव य लक्खाइं १ तिण्णि य तीसा य २ तिण्णि छत्तीसा ३ ।
तीसा य छच ४ पंच य तीसा ५ चउरो अ वीसा अ ॥ २६० ॥
चत्तारि अ तीसाइं ७ तिण्णि अ असिआइ ८ तिण्हमेत्तो अ ।
वीसुत्तरं ९ छलहिअं १० तिसहस्सहिअं च लक्खं च ११ ॥ २६१ ॥
लक्खं १२ अट्ठसयाणि अ १३ बावट्ठिसहस्स १४ चउसयसमग्गा १५ ।
एगट्टी छच सया १६ सट्ठिसहस्सा सया छच १७ ॥ २६२ ॥
सट्ठि १८ पणपण्ण १९ वण्णे २० गचत्त २१ चत्ता २२ तहट्ठतीसं च २३ ।
छत्तीसं च सहस्सा २४ अज्जाणं संगहो एसो ॥ २६३ ॥
•पढमाणुओगसिद्धो पत्तेअं सावयाइआणंपि ।
नेओ सव्वजिणाणं सीसाण परिग्गहो ( संगहो ) कमसो १५ ॥ २६४ ॥

एता अपि नव गाथाः स्पष्टा एवेति न प्रतन्यन्ते ॥ २५६–२६४ ॥ गतं संग्रहद्वारं, व्याख्याता च द्वितीयद्वारगाथेति । साम्प्रतं तृतीयाद्यद्वारप्रतिपादनाय आह—

तित्थं चाउव्वण्णो संघो सो पढमए समोसरणे। उप्पण्णो अ जिणाणं वीरजिणिंदस्स बीअंमि १६ ॥ २६५ ॥

निगदसिद्धैव, नवरं वीरजिनेन्द्रस्य 'द्वितीये' इति अत्र यत्र केवलमुत्पन्नं कल्पात्तत्र कृतसमवसरणापेक्षया मध्यमायां द्वितीयमुच्यत इति ॥ २६५ ॥ गतं तीर्थद्वारं, साम्प्रतं गणद्वारं व्याचिख्यासुराह—

चुलसीइ १ पंचनउई २ विउत्तरं ३ सोलसुत्तर ४ सयं च ५ ।
सत्तहिअं ६ पणनउई ७ तेणउई ८ अट्ठसीई अ ९ ॥ २६६ ॥
इक्कासीई १० बावत्तरी अ ११ छावट्ठि १२ सत्तवण्णा य १३
पण्णा १४ तेयालीसा १५ छत्तीसा १६ चेव पणतीसा १७ ॥ २६७ ॥
तित्तीस १८ अट्ठवीसा १९ अट्ठारस २० चेव तहय सत्तरस २१ ।
इक्कारस २२ दस २३ नवगं २४ गणाण माणं जिणिंदाणं १७ ॥ २६८ ॥

एतास्तिस्रोऽपि निगदसिद्धा एव, नवरमेकवाचनाचारक्रियास्थानां समुदायो गणो न कुलसमुदाय इति पूज्या व्याचक्षते ॥ २६६–२६७–२६८ ॥ गतं गणद्वारम्, अधुना गणधरद्वारव्याचिख्यासयाऽऽह—

एक्कारस उ गणहरा जिणस्स वीरस्स सेसयाणं तु । जावइआ जस्स गणा तावइआ गणहरा तस्स १८ ॥२६९॥

निगदसिद्धैव, नवरं मूलसूत्रकर्त्तारो गणधरा उच्यन्ते ॥ २६९ ॥ गतं गणधरद्वारम्, इदानीं धर्मोपायस्य देशका इत्येतद्व्याचिख्यासुराह—

धम्मोवाओ पवयणमहवा पुव्वाइँ देसगा तस्स । सव्वजिणाण गणहरा चउदसपुव्वी व जे जस्स ॥ २७० ॥
सामाइयाइया वा वयजीवणिकायभावणा पढमं । एसो धम्मोवाओ जिणेहिँ सव्वेहिँ उवइट्ठो १९ ॥ २७१ ॥

गाथाद्वयमपीदं सूत्रसिद्धमेव ॥ २७० ॥ २७१ ॥ गतं धर्मोपायस्य देशका इति द्वारम्, इदानीं पर्यायद्वारप्रतिपादनायाह—

उसभस्स पुव्वलक्खं पुव्वंगूणमजिअस्स तं चेव । चउरंगूणं लक्खं पुणो पुणो जाव सुविहित्ति ॥ २७२ ॥
पणवीसं तु सहस्सा पुव्वाणं सीअलस्स परिआओ । लक्खाइं इक्कवीसं सिज्जंसजिणस्स वासाणं ॥ २७३ ॥

चउपण्णं १२ पण्णारस १३ तत्तो अद्धट्ठमाइ लक्खाइं १४ ।
अड्ढाइज्जाइं १५ तओ वाससहस्साइं पणवीसं १६ ॥ २७४ ॥
तेवीसं च सहस्सा सयाणि अद्धट्ठमाणि अ हवंति १७ ।
इगवीसं च सहस्सा १८ वाससउणा य पणपण्णा १९ ॥ २७५ ॥
अद्धट्ठमा सहस्सा २० अड्ढाइज्जा य २१ सत्त य सयाइं २२ ।
सयरी २३ बिचत्तवासा २४ दिक्खाकालो जिणिंदाणं ॥ २७६ ॥

एताः पञ्च निगदसिद्धा एव ॥ २७२–२७६ ॥ एवं तावत्सामान्येन प्रव्रज्यापर्यायः प्रतिपादितः, साम्प्रतमत्रैव भेदेन भगवतां कुमारादिपर्यायं प्रतिपादयन्नाह—

उसभस्स कुमारत्तं पुव्वाणं वीसई सयसहस्सा । तेवट्ठी रज्जंमी अणुपालेऊण णिक्खंतो ॥ २७७ ॥
अजिअस्स कुमारत्तं अट्ठारस पुव्वसयसहस्साइं । तेवण्णं रज्जंमी पुव्वंगं चेव बोद्धव्वं ॥ २७८ ॥
पण्णरस सयसहस्सा कुमारवासो अ संभवजिणस्स । चोआलीसं रज्जे चउरंगं चेव बोद्धव्वं ॥ २७९ ॥
अद्धत्तेरस लक्खा पुव्वाणऽभिणंदणे कुमारत्तं । छत्तीसा अद्धं चिय अट्ठंगा चेव रज्जंमि ॥ २८० ॥
सुमइस्स कुमारत्तं हवंति दस पुव्वसयसहस्साइं । अउणातीसं रज्जे बारस अंगा य बोद्धव्वा ॥ २८१ ॥
पउमस्स कुमारत्तं पुव्वाणऽद्धट्ठमा सयसहस्सा । अद्धं च एगवीसा सोलस अंगा य रज्जंमि ॥ २८२ ॥
पुव्वसयसहस्साइं पंच सुपासे कुमारवासो उ । चउदस पुण रज्जंमी वीसं अंगा य बोद्धव्वा ॥ २८३ ॥
अड्ढाइज्जा [अड्ढुट्ठा उ] लक्खा कुमारवासो ससिप्पहे होइ । अद्धं छ चिय रज्जे चउवीसंगा य बोद्धव्वा ॥२८४॥
पण्णं पुव्वसहस्सा कुमारवासो उ पुप्फदंतस्स । तावइअं रज्जंमी अट्ठावीसं च पुव्वंगा ॥ २८५ ॥
पणवीससहस्साइं पुव्वाणं सीअले कुमारत्तं । तावइअं परिआओ पण्णासं चेव रज्जंमि ॥ २८६ ॥
वासाण कुमारत्तं इगवीसं लक्ख हुंति सिज्जंसे । तावइअं परिआओ बायालीसं च रज्जंमि ॥ २८७ ॥
गिहवासे अट्ठारस वासाणं सयसहस्स निअमेणं । चउपण्ण सयसहस्सा परिआओ होइ वसुपुज्जे ॥ २८८ ॥
पण्णरस सयसहस्सा कुमारवासो अ तीसई रज्जे । पण्णरस सयसहस्सा परिआओ होइ विमलस्स ॥ २८९ ॥
अद्धट्ठमलक्खाइं वासाणमणंतई कुमारत्ते । तावइअं परिआओ रज्जंमी हुंति पण्णरस ॥ २९० ॥
धम्मस्स कुमारत्तं वासाणड्ढाइआइं लक्खाइं । तावइअं परिआओ रज्जे पुण हुंति पंचेव ॥ २९१ ॥
संतिस्स कुमारत्तं मंडलिय चक्किपरिआअ चउसुंपि । पत्तेअं पत्तेअं वाससहस्साइं पणवीसं ॥ २९२ ॥
एमेव य कुंथुस्सवि चउसुवि ठाणेसु हुंति पत्तेअं । तेवीससहस्साइं वरिसाणद्धट्ठमसया य ॥ २९३ ॥
एमेव अरजिणिंदस्स चउसुवि ठाणेसु हुंति पत्तेअं । इगवीस सहस्साइं वासाणं हुंति णायव्वा ॥ २९४ ॥
मल्लिस्सवि वाससयं गिहवासे सेसअं तु परिआओ । चउपण्ण सहस्साइं नव चेव सयाइ पुण्णाइं ॥ २९५ ॥
अद्धट्ठमा सहस्सा कुमारवासो उ सुव्वयजिणस्स । तावइअं परिआओ पण्णरससहस्स रज्जंमि ॥ २९६ ॥
नमिणो कुमारवासो वाससहस्साइ दुण्णि अद्धं च । तावइअं परिआओ पंच सहस्साइं रज्जंमि ॥ २९७ ॥
तिण्णेव य वाससया कुमारवासो अरिट्ठनेमिस्स । सत्त य वाससयाइं सामण्णे होइ परिआओ ॥ २९८ ॥
पासस्स कुमारत्तं तीसं परिआओ सत्तरी होइ । तीसा य वद्धमाणे बायालीसा उ परिआओ ॥ २९९ ॥

आद्यानां सुविधिपर्यन्तानामनुपरिपाट्येयं श्रामण्यपर्यायगाथा—तद्यथा—

उसभस्स पुव्वलक्खं पुव्वंगूणमजिअस्स तं चेव । चउरंगूणं लक्खं पुणो पुणो जाव सुविहित्ति ॥ ३०० ॥
सेसाणं परिआओ कुमारवासेण सहिअओ भणिओ । पत्तेअंपि अ पुव्वं सीसाणमणुग्गहट्ठाए ॥ ३०१ ॥

छउमत्थकालमित्तो सोहेउं सेसओ उ जिणकालो। सव्वाउअंपि इत्तो उसभाईणं निसामेह ॥ ३०२ ॥

चउरासीइ १ बिसत्तरि २ सट्ठी ३ पण्णासमेव ४ लक्खाइं।
चत्ता ५ तीसा ६ वीसा ७ दस ८ दो ९ एगं १० च पुव्वाणं ॥ ३०३ ॥
चउरासीई ११ बावत्तरी १२ अ सट्ठी १३ अ होइ वासाणं।
तीसा १४ य दस १५ य एगं १६ च एवमेए सयसहस्सा ॥ ३०४ ॥
पंचाणउइ सहस्सा १७ चउरासीई अ १८ पंचवण्णा १९ य।
तीसा २० य दस २१ य एगं २२ सयं २३ च बावत्तरी २४ चेव २० ॥ ३०५ ॥

एताश्च एकोनत्रिंशदपि गाथाः सूत्रसिद्धा एव द्रष्टव्या इति। गतं पर्यायद्वारम्, इदानीमन्तक्रियाद्वारावसर इति, तत्रान्ते क्रिया अन्तक्रिया—निर्वाणलक्षणा, सा कस्य केन तपसा क जाता ?, वाशब्दात्कियत्परिवृतस्य चेत्येतत्प्रतिपादयन्नाह—

निव्वाणमंतकिरिआ सा चउदसमेण पढमनाहस्स। सेसाण मासिएणं वीरजिणिंदस्स छट्ठेणं ॥ ३०६ ॥
अट्ठावयचंपुज्जिंतपावासम्मेअसेलसिहरेसुं। उसभ वसुपुज्ज नेमी वीरो सेसा य सिद्धिगया ॥ ३०७ ॥
एगो भयवं वीरो तित्तीसाइ सह निव्वुओ पासो। छत्तीसएहिं पंचहिं सएहिं नेमी उ सिद्धिगओ ॥ ३०८ ॥
पंचहि समणसएहिं मल्ली संती उ नवसएहिं तु। अट्ठसएणं धम्मो सएहि छहि वासुपुज्जजिणो ॥ ३०९ ॥
सत्तसहस्साणंतइजिणस्स विमलस्स छस्सहस्साइं। पंचसयाइ सुपासे पउमाभे तिण्णि अट्ठ सया ॥ ३१० ॥
दसहि सहस्सेहि उसभो सेसा उ सहस्सपरिवुडा सिद्धा। कालाइ जं न भणिअं पढमणुओगाउ तं णेअं ॥ ३११ ॥
इच्चेवमाइ सव्वं जिणाण पढमाणुओगओ णेअं। ठाणासुण्णत्थं पुण भणिअं २१ पगयं अओ वुच्छं ॥ ३१२ ॥
उसभजिणसमुट्ठाणं उट्ठाणं जं तओ मरीइस्स। सामाइअस्स एसो जं पुव्वं निग्गमोऽहिगओ ॥ ३१३ ॥

एता अप्यष्टौ निगदसिद्धा एव।

चित्तबहुलट्ठमीए चउहि सहस्सेहि सो उ अवरण्हे। सीआ सुदंसणाए सिद्धत्थवणंमि छट्ठेणं ॥ ३१४ ॥

गमनिका—चैत्रबहुलाष्टम्यां चतुर्भिः सहस्रैः समन्वितः सन् अपराह्णे शिबिकायां सुदर्शनायां व्यवस्थितः सिद्धार्थवने षष्ठेन भक्तेन निष्क्रान्त इति वाक्यशेषः, अलङ्करणकं परित्यज्य चतुर्मुष्टिकं च लोचं कृत्वेति ॥ ३१४ ॥ आह—चतुर्भिः सहस्रैः समन्वित इत्युक्तं, तत्र तेषां दीक्षां किं भगवान् प्रयच्छति उत नेति, नेत्याह—

चउरो साहस्सीओ लोअं काऊण अप्पणा चेव। जं एस जहा काही तं तह अम्हेऽवि काहामो ॥ ३१५ ॥

गमनिका—प्राकृतशैल्या चत्वारि सहस्राणि लोचं पञ्चमुष्टिकं कृत्वा आत्मना चैव इत्थं प्रतिज्ञां कृतवन्तः—'यत्' क्रियाऽनुष्ठानं 'एष' भगवान् 'यथा' येन प्रकारेण करिष्यति तत्तथा 'अम्हेऽवि काहामोत्ति' वयमपि करिष्याम इति गाथार्थः ॥ ३१५ ॥ भगवानपि भुवनगुरुत्वात्स्वयमेव सामायिकं प्रतिपद्य विजहार। तथा चाह—

उसभो वरवँसभगई घित्तूणमभिग्गहं परमघोरं। वोसट्ठचत्तदेहो विहरइ गामाणुगामं तु ॥ ३१६ ॥

* वसभसमगइ

गमनिका—ऋषभो वृषभसमगतिर्गृहीत्वा अभिग्रहं 'परमघोरं' परमः—परमसुखहेतुभूतत्वात् घोरः—प्राकृतपुरुषैः कर्तुमशक्यत्वात् तं, 'व्युत्सृष्टत्यक्तदेहो विहरति ग्रामानुग्रामं तु' व्युत्सृष्टो—निष्प्रतिकर्मशरीरतया, तथा चोक्तम्—'अच्छिंपि नो पमज्जिज्जा, णोऽवि य कंडुविया मुणी गायं' त्यक्त—खलु दिव्याद्युपसर्गसहिष्णुतया, शेषं सुगममिति गाथार्थः ॥ ३१६ ॥ स एवं भगवांस्तैरात्मीयैः परिवृतो विजहार, न च तदाऽद्यापि भिक्षादानं प्रवर्त्तते, लोकस्य परिपूर्णत्वादर्थ्यभावाच्च, तथा चाह मूलभाष्यकारः—

णवि ताव जणो जाणइ का भिक्खा ? केरिसा व भिक्खयरा ?।
ते भिक्खमलभमाणा वणमज्झे तावसा जाया ॥ ३१ ॥ (मू० भा०)

गमनिका—नापि तावज्जनो जानाति—का भिक्षा ? कीदृशा वा भिक्षाचरा इति, अतस्ते भगवत्परिकरभूता भिक्षामलभमानाः क्षुत्परीषहार्त्ता भगवतो मौनव्रतावस्थिताद् उपदेशमलभमानाः कच्छमहाकच्छावेवोक्तवन्तः—अस्माकमनाथाना भवन्तौ नेताराविति, अतः कियन्तं कालमस्माभिरेवं क्षुत्पिपासोपगतैरासितव्यं ?, तावाहतुः—वयमपि न विद्मः, यदि भगवान् अनागतमेव पृष्टो भवेत्—किमस्माभिः कर्त्तव्यं ? किं वा नेति, ततः शोभनं भवेत्, इदानीं तु एतावद्युज्यते—भरतलज्जया गृहगमनमयुक्तमाहारमन्तरेण चासितुं न शक्यत इत्यतो वनवासो नः श्रेयान्, तत्रोपवासरताः परिशटितपरिणतपत्राद्युपभोगिनो भगवन्तमेव ध्यायन्तस्तिष्ठाम इति संप्रधार्य सवसंमतेनैव गङ्गानदीदक्षिणकूले रम्यवनेषु वल्कल-

१ अक्ष्यपि नो प्रमार्जयेत् नापि च कण्डूयेत् मुनिर्गात्रम्

चीरधारिणः खल्वाश्रमिणः संवृत्ता इति, आह च 'वनमध्ये तापसा जाताः' इति गाथार्थः ॥ तयोश्च कच्छमहाकच्छयोः सुतौ नमिविनमिनौ पित्रनुरागात् ताभ्यामेव सह विहृतवन्तौ, तौ च वनाश्रयणकाले ताभ्यामुक्तौ—दारुणः खल्विदानीमस्माभिर्वनवासविधिरङ्गीकृतः तद्याथ यूयं स्वगृहाणीति, अथवा भगवन्तमेव उपसर्पथः, स योऽनुकम्पयाऽभिलषितफलदो भविष्यति, तावपि च पित्रोः प्रणामं कृत्वा पित्रादेशं तथैव कृतवन्तौ, भगवत्समीपमागत्य प्रतिमास्थिते भगवति जलाशयेभ्यो नलिनीपत्रेषु उदकमानीय सर्वतः प्रवर्षणं कृत्वा आजानूच्छ्रयमानं सुगन्धिकुसुमप्रकरं च अवनतोत्तमाङ्गक्षितिनिहितजानुकरतलौ प्रतिदिनमुभयसन्ध्यं राज्यसंविभागप्रदानेन भगवन्तं विज्ञाप्य पुनस्तदुभयपार्श्वे खड्गव्यग्रहस्तौ तस्थतुः ॥ तथा चाह निर्युक्तिकारः—

नमिविनमीणं जायण नागिंदो विज्जदाण वेअड्ढे । उत्तरदाहिणसेढी सट्ठीपण्णासनगराइं ॥ ३१७ ॥

अक्षरगमनिका—नमिविनमिनोर्याचना, नागेन्द्रो भगवद्वन्दनायागतः, तेन विद्यादानमनुष्ठितं, वैताढ्ये पर्वते उत्तरदक्षिणश्रेण्योः यथायोगं षष्टिपञ्चाशन्नगराणि निविष्टानीति गाथाक्षरार्थः ॥ ३१७ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—अन्नया धरणो नागराया भगवंतं वंदओ आगओ, इमेहि य विण्णविअं, तओ सो ते तहा जायमाणे भणति—भगवं चत्तसंगो, ण एयस्स अत्थि किंचि दायव्वं, मा एयं जाएह, अहं तुब्भं भगवओ भत्तीए देमि, सामिस्स सेवा अफला मा

१ अन्यदा धरणो नागराज भगवन्तं वन्दितुमागत, आभ्यां विज्ञप्त च, तत स तौ तथा याचमानौ भणति—भगवान् त्यक्तसङ्ग, नैतस्य विद्यते किञ्चिद्दातव्य, मैनं याचिष्ट, अहं वां भगवतो भक्त्या ददामि, स्वामिन. सेवाऽफला मा * नेदम् प्र० + था.

भवउत्तिकाउं पढियसिद्धाणं गंधव्वपन्नगाणं अडयालीसं विज्जासहस्साइं गिण्हह,ताण इमाओ महाविज्जाओ चत्तारि,तंजहा—गोरी गंधारी रोहिणी पण्णत्तित्ति, तं गच्छह तुब्भे विज्जाहररिद्धीए सयणं जणवयं च उवलोभेऊण दाहिणिल्लाए उत्तरिल्लाए य विज्जाहरसेढीए रहनेउरचक्कवालपामोक्खे गगणवल्लभपामोक्खे य पण्णासं सट्ठिं च विज्जाहरणगरे णिवेसिऊण विहरह। तओ ते लद्धप्पसाया कामियं पुप्फयविमाणं विउव्विऊण भगवंतं तित्थयरं नागरायं च वंदिऊणं पुप्फयविमाणारूढा कच्छमहाकच्छाणं भगवप्पसायं उवदंसेमाणा विणीयनगरिमुवंगम्म भरहस्स रण्णो तमत्थं निवेदित्ता सयणं परियणं गहाय वेयड्ढे पव्वए णमी दाहिणिल्लाए विज्जाहरसेढीए विणमी उत्तरिल्लाए पण्णासं सट्ठिं च विज्जाहरनगराइ निवेसिऊण विहरंति । अत्रान्तरे—

भगवं अदीणमणसो संवच्छरमणसिओ विहरमाणो । कण्णाहि निमंतिज्जइ वत्थाभरणासणेहिं च ॥ ३१८ ॥

व्याख्या—भगः खल्वैश्वर्यादिलक्षणः सोऽस्यास्तीति भगवान् असावपि अदीनं मनो यस्यासौ अदीनमनाः—निष्प्रकम्पचित्त इत्यर्थः । 'संवत्सरं' वर्षं न अशितः अनशितः विहरन् भिक्षाप्रदानानभिज्ञेन लोकेनाभ्यर्हितश्च (श्चेति) कृत्वा कन्याभिर्निमन्त्र्यते, वस्त्राणि—पट्टांशुकानि आभरणानि—कटककेयूरादीनि आसनानि—सिंहासनादीनि एतैश्च निमन्त्र्यत इति । वर्तमाननिर्देशप्रयोजनं पूर्ववदिति गाथार्थः ॥३१८॥ एवं विहरता भगवता कियता कालेन भिक्षा लब्धेत्येतत्प्रतिपादनायाह—

१ भूदितिकृत्वा पठितसिद्धाना गन्धर्वपन्नगानां अष्टचत्वारिंशत् विद्यासहस्राणि गृह्णीतं, तासामिमा महाविद्याश्चतस्र, तद्यथा—गौरी गान्धारी रोहिणी प्रज्ञप्तिरिति, तद् गच्छत युवा विद्याधरर्ध्या स्वजन जनपद चोपप्रलोभ्य दक्षिणस्यामुत्तरस्यां च विद्याधरश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि गगनवल्लभप्रमुखाणि च पञ्चाशत षष्टिं च विद्याधरनगराणि निवेश्य विहरत । ततस्तौ लब्धप्रसादौ कामित पुष्पकविमान विकुर्व्य भगवन्त तीर्थकरं नागराज च वन्दित्वा पुष्पकविमानारूढौ कच्छमहाकच्छाभ्यां भगवत्प्रसाद उपदर्शयन्तौ विनीतानगरीमुपागम्य भरताय राज्ञे तमर्थं निवेद्य स्वजन परिजन गृहीत्वा वैताढ्ये पर्वते नमिर्दाक्षिणात्यायां विद्याधरश्रेण्यां विनमिरौत्तरायां पञ्चाशतं षष्टिं च विद्याधरनगराणि निवेश्य विहरत.. * दोवि + ०मतिगम्म

संवच्छरेण भिक्खा लद्धा उसभेण लोगनाहेण । सेसेहि बीयदिवसे लद्धाओ पढमभिक्खाओ ॥ ३१९ ॥

गमनिका—संवत्सरेण भिक्षा लब्धाः ऋषभेण लोकनाथेन—प्रथमतीर्थकृता, शेषैः—अजितादिभिः भरतक्षेत्रतीर्थकृद्भिः द्वितीयदिवसे लब्धाः प्रथमभिक्षा इति गाथार्थः ॥ ३१९ ॥ तीर्थकृतां प्रथमपारणकेषु† यद्यस्य पारणकमासीत तदभिधित्सुराह—

उसभस्स उ पारणए इक्खुरसो आसि लोगनाहस्स । सेसाणं परमण्णं अमयरसरसोवमं आसी ॥ ३२० ॥

गमनिका—ऋषभस्य तु इक्षुरसः प्रथमपारणके आसील्लोकनाथस्य, शेषाणाम्—अजितादीनां परमं च तदन्नं च परमान्नं—पायसलक्षणं, किंविशिष्टमित्याह—अमृतरसवद् रसोपमा यस्य तद् अमृतरसरसोपममासीदिति गाथार्थः ॥३२०॥ तीर्थकृतां प्रथमपारणकेषु यद्वृत्तं तदभिधित्सुराह—

घुट्ठं च अहोदाणं दिव्वाणि अ आहयाणि तूराणि । देवा य संनिवइआ वसुहारा चेव वुट्ठा य ॥ ३२१ ॥

गमनिका—देवैराकाशगतैः घुष्टं च अहोदानमिति—अहोशब्दो विस्मये अहो दानमहो दानमित्येवं दीयते, सुदत्तं

+ पट्टेवाक्रादीनि † नास्ति पदद्वयमिद

भवतामित्यर्थः, तथा दिव्यानि च आहतानि तूराणि तदा त्रिदशैरिति देवाश्च सन्निपतिताः, तदैव वसुधारा चैव वृष्टा, वसु द्रव्यमुच्यत इति गाथार्थः ॥ ३२१ ॥ एवं सामान्येन पारणककालभाव्युक्तम्, इदानीं यत्र यथा च यच्च आदितीर्थकरस्य पारणकमासीत् तथाऽभिधित्सुराह—

**गयउर सिज्जंसिक्खुरसदाण वसुहार पीढँ गुरुपूआ। तक्खसिलायलगमणं बाहुबलिनिवेअणं चेव ॥ ३२२ ॥**

अस्या भावार्थः कथानकादवबोद्धव्यः। तच्चेदम्—कुरुजणपदे गयपुरणगरे बाहुबलिपुत्तो सोमप्पभो, तस्स पुत्तो सेज्जंसो जुवराया, सो सुमिणे मंदरं पव्वयं सामवण्णं पासति, ततो तेण अमयकलसेण अभिसित्तो अब्भहिअं सोभितुमाढत्तो, नगरसेट्ठी सुबुद्धिनामो, सो सूरस्स रस्सीसहस्सं ठाणाओ चलियं पासति, नवरं सिज्जंसेण इक्खुत्तं, सो य अहिअयरं तेयसंपुण्णो जाओ, राइणा सुमिणे एक्को पुरिसो महप्पमाणो महया रिउबलेण सह जुज्झंतो दिट्ठो, सिज्जंसेण साहाज्जं दिण्णं, ततो णेण तं बलं भग्गंति, ततो अत्थाणीए एगओ मिलिया, सुमिणे साहंति, न पुण जाणंति—किं भविस्सइत्ति, नवरं राया भणइ—कुमारस्स महंतो कोऽवि लाभो भविस्सइत्ति भणिऊण उट्ठिओ अत्थाणीओ, सिज्जंसोऽवि गओ

१ कुरुजनपदे गजपुरनगरे बाहुबलिपुत्रः सोमप्रभः, तस्य पुत्रः श्रेयांसो युवराजः, स स्वप्ने मन्दरं पर्वतं श्यामवर्णमपश्यत्, ततस्तेन अमृतकलशेनाभिषिक्तः अभ्यधिकं शोभितुमारब्धः, नगरश्रेष्ठी सुबुद्धिनामा, स सूर्यस्य रश्मिसहस्रं स्थानात् चलितं अपश्यत्, नवरं श्रेयांसेन अभिक्षिप्तं, स चाधिकतरं तेजःसंपूर्णो जातः, राज्ञा स्वप्ने एकः पुरुषो महाप्रमाणो महता रिपुबलेन सह युध्यमानो दृष्टः, श्रेयांसेन साहाय्यं दत्तं, ततोऽनेन तद्बलं भग्नमिति, ततः आस्थानिकायां एकतो मिलिताः, स्वप्नान् साधयन्ति, न पुनर्जानन्ति—किं भविष्यतीति, नवरं राजा भणति—कुमारस्य महान् कोऽपि लाभो भविष्यतीति भणित्वा उत्थितः आस्थानिकातः, श्रेयांसोऽपि गतो * पेढ०. + दूल० † ०पुरे ‡ थाणाओ. ¶ साहिय्यं.

निययभवणं, तत्थ य ओलोयणट्ठिओ पेच्छति सामिं पविसमाणं, सो चिंतेइ—कहिं मया एरिसं नेवत्थं दिट्ठपुव्वं? जारिसं पपितामहस्सत्ति, जाती संभरिता—सो पुव्वभवे भगवओ सारही आसि, तत्थ तेण वइरसेणतित्थगरो तित्थयरलिंगेण दिट्ठोत्ति, वइरणाभे य पव्वयंते सोऽवि अणुपव्वइओ, तेण तत्थ सुयं जहा—एस वइरणाभो भरहे पढमतित्थयरो भविस्सइत्ति, तं एसो सो भगवंति। तस्स य मणुस्सो खोयरसघडएण सह अतीओ, तं गहाय भगवंतमुवट्ठिओ, कप्पइत्ति सामिणा पाणी पसारिओ, सव्वो निसिट्ठो पाणीसु, अच्छिद्दपाणी भगवं, उपरि सिहा वड्ढइ, न य छड्डिज्जइ, भगवओ एस लद्धी, भगवया सो पारिओ, तत्थ दिव्वाणि पाउब्भूयाणि, तंजहा—वसुहारा वुट्ठा १ चेलुक्खेवो कओ २ आहयाओ देवदुंदुहीओ ३ गंधोदककुसुमवरिसं मुक्कं ४ आगासे य अहोदाणं घुट्ठंति ५। तओ तं देवसंनिवाअं पासिऊण लोगो सेज्जंसघरमुवगओ, ते तावसा अन्ने य रायाणो, ताहे सेज्जंसो ते पण्णवेइ—एवं भिक्खा दिज्जइ, एएसिं च दिण्णे सोग्गती गम्मइ, ततो ते सव्वेऽवि

१ निजकभवनं, तत्र चावलोकनस्थितः पश्यति स्वामिनं प्रविशन्तं, स चिन्तयति—क्व मया ईदृशं नेपथ्यं दृष्टपूर्वं यादृशं प्रपितामहस्येति, जातिः स्मृता, —स पूर्वभवे भगवतः सारथिरासीत्, तत्र तेन वज्रसेनतीर्थकरस्तीर्थकरलिङ्गेन दृष्ट इति, वज्रनाभे च प्रव्रजति सोऽप्यनुप्रव्रजितः, तेन तत्र श्रुतं यथा—एष वज्रनाभो भरते प्रथमतीर्थंकरः भविष्यतीति, तदेष स भगवानिति। तस्य च मनुष्यः इक्षुरसघटेन सहागतः, तं गृहीत्वा भगवन्तमुपस्थितः, कल्पत इति स्वामिना पाणी प्रसारितौ, सर्वो निसृष्टः पाण्योः, अच्छिद्रपाणिर्भगवान्, उपरि शिखा वर्धते, न चाधः पतति, भगवत एषा लब्धिः, भगवता स पारितः, तत्र दिव्यानि प्रादुर्भूतानि—तद्यथा—वसुधारा वृष्टा १ चेलोत्क्षेपः कृतः २ आहता देवदुन्दुभयः ३ गन्धोदककुसुमवर्षा मुक्ता ४ आकाशे चाहोदानं घुष्टमिति ५। ततस्तं देवसंनिपातं दृष्ट्वा लोकः श्रेयांसगृहमुपागतः, ते तापसा अन्ये च राजानः, तदा श्रेयांसस्तान् प्रज्ञापयति—एवं भिक्षा दीयते, एतेभ्यश्च दत्ते सुगतिर्गम्यते, ततस्ते सर्वेऽपि

पुच्छंति—कहं तुमे जाणियं? जहा—सामिस्स भिक्खा दायव्वत्ति, सेज्जंसो भणइ—जाइसरणेण, अहं सामिणा सह अट्ठ भवग्गहणाइं अहेसि, तओ ते संजायकोउहल्ला भणंति—इच्छामो णाउं अट्ठसु भवग्गहणेसु को को तुमं सामिणो आसित्ति, ततो सो तेसिं पुच्छंताणं अप्पणो सामिस्स य अट्ठभवसंबद्धं कहं कहेइ जहा "वसुदेवहिंडीए", ताणि पुण संखेवओ इमाणि; तंजहा—ईसाणे सिरिप्पभे विमाणे भगवं ललिअंगओ अहेसि, सेज्जंसो से सयंपभादेवी पुव्वभवनिन्नामिआ १ पुव्वविदेहे पुक्खलावइविजए लोहग्गले नयरे भगवं वइरजंघो आसि, सिज्जंसो से सिरिमती भारिया २ तत्तो उत्तरकुराए भगवं मिहुणगो सेज्जंसोऽवि मिहुणिआ अहेसि ३ ततो सोहम्मे कप्पे दुवेऽवि देवा अहेसि ४ ततो भगवं अवरविदेहे विज्जपुत्तो सेज्जंसो पुण जुण्णसेट्ठिपुत्तो केसवो नाम छट्ठो मित्तो अहेसि ५ ततो अच्चुए कप्पे देवा ६ ततो भगवं पुंडरीगिणीए नगरीए वइरणाहो सेज्जंसो सारही ७ ततो सव्वट्ठसिद्धे विमाणे देवा ८ इह पुण भगवओ पपोत्तो जाओ सेज्जंसोत्ति। तेसि

१ पृच्छन्ति—कथं त्वया ज्ञातं? यथा स्वामिने भिक्षा दातव्येति, श्रेयांसो भणति—जातिस्मरणेन, अहं स्वामिना सहाष्टौ भवग्रहणान्यभूवं, ततस्ते संजातकौतूहला भणन्ति—इच्छामो ज्ञातुं, अष्टसु भवग्रहणेषु कस्कस्त्वं स्वामिनोऽभव इति, ततः स तेभ्यः पृच्छद्भ्य आत्मनः स्वामिनश्चाष्टभवसंबद्धां कथां कथयति यथा वसुदेवहिण्ड्यां, तानि पुनः संक्षेपत इमानि, तद्यथा—ईशाने श्रीप्रभे विमाने भगवान् ललिताङ्गक आसीत्, श्रेयांसस्तस्य स्वयंप्रभा देवी पूर्वभवनिर्नामिका १ पूर्वविदेहेषु पुष्कलावतीविजये लोहार्गले नगरे भगवान् वज्रजङ्घ आसीत्, श्रेयांसस्तस्य श्रीमती भार्या २ ततः उत्तरकुरुषु भगवान् मिथुनकः श्रेयांसोऽपि मिथुनिका आसीत् ३ ततः सौधर्मे कल्पे द्वावपि देवौ अभूताम् ४ ततो भगवानपरविदेहेषु वैद्यपुत्रः श्रेयांसः पुनर्जीर्णश्रेष्ठिपुत्रः केशवनामा षष्ठ मित्रमभूत् ५ ततोऽच्युते कल्पे देवौ ६ ततो भगवान् पुण्डरीकिण्यां नगर्यां वज्रनाभः श्रेयांसः सारथिः ७ ततः सर्वार्थसिद्धे विमाने देवौ ८ इह पुनर्भगवतः प्रपौत्रो जातः श्रेयांस इति। तेषां

च तिण्हवि सुमिणाण एतदेव फलं-जं भगवओ भिक्खा दिण्णत्ति। ततो जणवओ एवं सोऊण सेज्जंसं अभिणंदिऊण सट्ठाणाणि गतो, सेज्जंसोऽवि भगवं जत्थ ठिओ पडिलाभिओ ताणि पयाणि मा पाएहिं अक्कमिहामित्ति भत्तीए तत्थ रयणामयं पेढं करेइ, तिसंझं च अच्चिणइ, विसेसेण य पव्वदेसकाले अच्चिणेऊण भुंजइ, लोगो पुच्छइ-किमेयंति, सेज्जंसो भणति-आदिगरमंडलगंति, ततो लोगेणवि जत्थ जत्थ भगवं ठितो तत्थ तत्थ पेढं कयं, तं च कालेण आइच्चपेढं संजायंति गाथार्थः ॥ एवं भगवतः खल्वादिकरस्य पारणकविधिरुक्तः, साम्प्रतं प्रसङ्गतः शेषतीर्थकराणामजितादीनां येषु स्थानेषु प्रथमपारणकान्यासन् यैश्च कारितानि तद्गतिश्चेत्यादि प्रतिपाद्यते, तत्र विवक्षितार्थप्रतिपादिकाः खल्वेता गाथा इति।

हत्थिणउरं १ अओज्झा २ सावत्थी ३ तहय चेव साकेअं ४।
विजयपुर ५ बंभथलयं ६ पाडलिसंडं ७ पउमसंडं ८ ॥ ३२३ ॥
सेयपुरं ९ रिट्ठपुरं १० सिद्धत्थपुरं ११ महापुरं १२ चेव।
धण्णकड १३ वद्धमाणं १४ सोमणसं १५ मंदिरं १६ चेव ॥ ३२४ ॥
चक्कपुरं १७ रायपुरं १८ मिहिला १९ रायगिहमेव २० बोद्धव्वं।
वीरपुरं २१ बारवई २२ कोअगडं २३ कोल्लयग्गामो २४ ॥ ३२५ ॥

१ च त्रयाणामपि स्वप्नानामेतदेव फलं-यत् भगवते भिक्षा दत्तेति। ततो जनपद एवं श्रुत्वा श्रेयांसमभिनन्द्य स्वस्थानं गतः, श्रेयांसोऽपि भगवान् यत्र स्थितः प्रतिलम्भितः तानि चरणानि मा पादैराक्रमिषमिति भक्त्या तत्र रत्नमयं पीठं करोति, त्रिसन्ध्यं चार्चयति, विशेषेण च पर्वदेशकालेऽर्चयित्वा भुङ्क्ते, लोकः पृच्छति-किमेतदिति, श्रेयांसो भणति-आदिकरमण्डलमिति, ततो लोकेनापि यत्र यत्र भगवान् स्थितः तत्र तत्र पीठं कृतं, तत्र कालेनादित्यपीठं संजातमिति.

एएसु पढमभिक्खा लद्धाओ जिणवरेहिं सव्वेहिं।
दिण्णाउ जेहिं पढमं तेसिं नामाणि वोच्छामि ॥ ३२६ ॥
सिज्जंस १ बंभदत्ते २ सुरेंददत्ते ३ य इंददत्ते ४ अ।
पउमे ५ अ सोमदेवे ६ महिंद ७ तह सोमदत्ते ८ अ ॥ ३२७ ॥
पुस्से ९ पुणव्वसू १० पुणनंद ११ सुनंदे १२ जए १३ अ विजए १४ य।
तत्तो अ धम्मसीहे १५ सुमित्त १६ तह वग्घसीहे १७ अ ॥ ३२८ ॥
अपराजिअ १८ विस्ससेणे १९ वीसइमे होइ बंभदत्ते २० अ।
दिण्णे २१ वरदिण्णे २२ पुण धण्णे २३ बहुले २४ अ बोद्धव्वे ॥ ३२९ ॥

एए कयंजलिउडा भत्तीबहुमाणसुक्कलेसागा। तक्कालपहट्ठमणा पडिलाभेसुं जिणवरिंदे ॥ ३३० ॥
सव्वेहिंपि जिणेहिं जहिअं लद्धाओ पढमभिक्खाओ। तहिअं वसुहाराओ वुट्ठाओ पुप्फवुट्ठीओ ॥ ३३१ ॥
अद्धत्तेरसकोडी उक्कोसा तत्थ होइ वसुहारा। अद्धत्तेरस लक्खा जहण्णिआ होइ वसुहारा ॥ ३३२ ॥
सव्वेसिंपि जिणाणं जेहिं दिण्णाउ पढमभिक्खाओ। ते पयणुपिज्जदोसा दिव्ववरपरक्कमा जाया ॥ ३३३ ॥
केई तेणेव भवेण निव्वुआ सव्वकम्मउम्मुक्का। अन्ने तइअभवेणं सिज्झिस्संति जिणसगासे ॥ ३३४ ॥

अक्षरगमनिका तु क्रियाऽध्याहारतः कार्या, यथा—गजपुरं नगरमासीत्, श्रेयांसस्तत्र राजा, तेनेक्षुरसदानं भगवन्तमधिकृत्य प्रवर्तितं, तत्रार्धत्रयोदशहिरण्यकोटीपरिमाणा वसुधारा निपतिता, पीठमिति-श्रेयांसेन यत्र भगवता पारितं तत्र तत्पादयोर्मा कश्चिदाक्रमणं करिष्यतीतिभक्त्या रत्नमयं पीठं कारितं। गुरुपूजेति-तदर्चनं चक्रे इति। अत्रान्तरे भगवतः तक्षशिलातले गमनं बभूव, भगवत्प्रवृत्तिनियुक्तपुरुषैर्बाहुबलेर्निवेदनं च कृतमित्यक्षरगमनिका। एवमन्यासामपि संग्रहगाथानां स्वबुद्ध्या गमनिका कार्येति गाथार्थः ॥ ३२२-३३४ ॥ इदानीं कथानकशेषम्—बाहुबलिणा चिंतिअं-कल्ले सव्विड्ढीए वंदिस्सामित्ति निग्गतो पभाए, सामी गतो विहरमाणो, अदिट्ठे अद्धितिं काऊण जहिं भगवं वुत्थो तत्थ धम्मचक्कचिंधं कारियं, तं सव्वरयणामयं जोयणपरिमंडलं पंचजोयणूसियदंडं। सामीवि बहलीयडंबइल्लाजोणगविसयाइएसु निरुवसग्गं विहरंतो विणीअणगरीए उज्जाणत्थाणं पुरिमतालं नगरं संपत्तो। तत्थ य उत्तरपुरच्छिमे दिसिभागे सगडमुहं नाम उज्जाणं, तंमि णिग्गोहपायवस्स हेट्ठा अट्ठमेणं भत्तेणं पुव्वण्हदेसकाले फग्गुणबहुलेक्कारसीए उत्तरासाढणक्खत्ते पव्वज्जादिवसाओ आरब्भ वाससहस्संमि अतीते भगवओ तिहुअणेक्कबंधवस्स दिव्वमणंतं केवलनाणमुप्पण्णंति। अमुमेवार्थमुपसंहरन् गाथापञ्चकमाह—

१ बाहुबलिना चिन्तितम्-कल्ये सर्वर्द्ध्या वन्दिष्य इति निर्गतः प्रभाते, स्वामी गतः विहरन्, अदृष्ट्वाऽधृतिं कृत्वा यत्र भगवानुषितस्तत्र धर्मचक्रचिह्नं कारितं, तत् सर्वरत्नमयं योजनपरिमण्डलं पञ्चयोजनोच्छ्रितदण्डं। स्वाम्यपि बहुल्यडम्बइल्लायोनकविषयादिकेषु निरुपसर्गं विहरन् विनीतनगर्या उद्यानस्थानं पुरिमतालं नगरं समाप्तः। तत्र च उत्तरपूर्वदिग्भागे शकटमुखं नाम उद्यानं, तस्मिन् न्यग्रोधपादपस्याधः अष्टमेन भक्तेन पूर्वाह्णदेशकाले फाल्गुनकृष्णैकादश्यां उत्तराषाढानक्षत्रे प्रव्रज्यादिवसादारभ्य वर्षसहस्रेऽतीते भगवतस्त्रिभुवनैकबान्धवस्य दिव्यमनन्तं केवलज्ञानमुत्पन्नमिति।

कल्लं सव्विड्ढीए पूएमहऽदट्ठु धम्मचक्कं तु । विहरइ सहस्समेगं छउमत्थो भारहे वासे ॥ ३३५ ॥
बहलीअडंबइल्लाजोणगविसओ सुवण्णभूमी अ । आहिंडिआ भगवआ उसभेण तवं चरंतेणं ॥ ३३६ ॥
बहली अ जोणगा पल्हगा य जे भगवया समणुसिट्ठा । अन्ने य मिच्छजाई ते तइआ भद्दया जाया ॥ ३३७ ॥
तित्थयराणं पढमो उसभरिसी विहरिओ निरुवसग्गो । अट्ठावओ णगवरो अग्ग (य) भूमी जिणवरस्स ॥ ३३८ ॥
छउमत्थप्परिआओ वाससहस्सं तओ पुरिमताले । णग्गोहस्स य हेट्ठा उप्पण्णं केवलं नाणं ॥ ३३९ ॥
फग्गुणबहुले एक्कारसीइ अह अट्ठमेण भत्तेणं । उप्पण्णंमि अणंते महव्वया पंच पण्णवए ॥ ३४० ॥

आसां भावार्थः सुगम एव, नवरम्-अनुरूपक्रियाऽध्याहारः कार्यः, यथा-कल्लं-प्रत्यूषसि सर्वर्ध्या पूजयामि भगवन्तम्-आदिकर्त्तार अहमिति-आत्मनिर्देशः, अदृष्ट्वा भगवन्तं धर्मचक्रं तु चकारेत्यादि गाथाषट्काक्षरार्थः॥ ३३५-३४० ॥ महाव्रतानि पञ्च प्रज्ञापयतीत्युक्तं, तानि च त्रिदशकृतसमवसरणावस्थित एव; तथा चाह—

उप्पण्णंमि अणंते नाणे जरमरणविप्पमुक्कस्स । तो देवदाणविंदा करिंति महिमं जिणिंदस्स ॥ ३४१ ॥

गमनिका—उत्पन्ने-घातिकर्मचतुष्टयक्षयात् संजाते अनन्ते ज्ञाने केवल इत्यर्थः, जरा-वयोहानिलक्षणा मरणं-प्रतीतं जरामरणाभ्यां विप्रमुक्त इति समासः तस्य, विप्रमुक्तवद्विप्रमुक्त इति, ततो देवदानवेन्द्राः कुर्वन्ति महिमां-ज्ञानपूजां जिनवरेन्द्रस्य । देवेन्द्रग्रहणात् वैमानिकज्योतिष्कग्रहः, दानवेन्द्रग्रहणात् भवनवासिव्यन्तरेन्द्रग्रहणं । सर्वतीर्थकराणां च देवा अवस्थितानि नखलोमानि कुर्वन्ति, भगवतस्तु कनकावदाते शरीरे जटा एवाञ्जनरेखा इव राजन्त्य उपलभ्य धृता इति गाथार्थः ॥ ३४१ ॥ इदानीमुक्तानुक्तार्थसंग्रहपरां संग्रहगाथामाह—

उज्जाणपुरिमताले पुरी(इ) विणीआइ तत्थ नाणवरं । चक्कुप्पाँया य भरहे निवेअणं चेव दोण्हंपि ॥ ३४२ ॥

गमनिका—उद्यानं च तत्पुरिमतालं च उद्यानपुरिमतालं तस्मिन्, पुर्या विनीतायां तत्र ज्ञानवरं भगवत उत्पन्नमिति वाक्यशेषः । तथा तस्मिन्नेवाहनि भरतस्य नृपतेरायुधशालायां चक्रोत्पादश्च बभूव । 'भरहे निवेअणं चेव दोण्हंपि' त्ति भरताय निवेदनं च द्वयोरपि-ज्ञानरत्नचक्ररत्नयोः तन्नियुक्तपुरुषैः कृतमित्यध्याहार इति गाथार्थः ॥ ३४२ ॥ अत्रान्तरे भरतश्चिन्तयामास-पूजा तावद्द्वयोरपि कार्या, कस्य प्रथमं कर्तुं युज्यते ? किं चक्ररत्नस्य उत तातस्येति, तत्र—

+तायंमि पूइए चक्क पूइअं पूअणारिहो ताओ । इहलोइअं तु चक्कं परलोअसुहावहो ताओ ॥ ३४३ ॥

गमनिका—'ताते'-त्रैलोक्यगुरौ पूजिते सति चक्रं पूजितमेव, तत्पूजानिबन्धनत्वाच्चक्रस्य । तथा पूजामर्हतीति पूजार्हः तातो वर्त्तते, देवेन्द्रादिनुतत्वात् । तथा इह लोके भवं चैहलौकिकं तु चक्रं, तुरेवकारार्थः, स चावधारणे, किमवधारयति ? ऐहिकमेव चक्रं, सांसारिकसुखहेतुत्वात् । परलोके सुखावहः परलोकसुखावहस्तातः, शिवसुखहेतुत्वाद् इति गाथार्थः ॥ ३४३ ॥ तस्मात् 'तिष्ठतु तावच्चक्रं, तातस्य पूजा कर्त्तुं युज्यते' इति संप्रधार्य तत्पूजाकरणसंदेशव्यापृतो बभूव । इदानीं कथानकम्—

* चक्कुपाओ य (स्यात्) + आवहवरसालाए उप्पण्ण चक्करयण भरहस्स । जक्खसहस्सपरिवुड सव्वरयणामय चक्क ॥ १ ॥ (प्र० अध्या०)

भरहो सव्विड्ढीए भगवंतं वंदिउं पयट्टो, मरुदेवीसामिणी य भगवंते पव्वइए भरहरज्जसिरिं पासिऊण भणियाइआ-मम पुत्तस्स एरिसी रज्जसिरी आसि, संपयं सो खुहापिवासापरिगओ नग्गओ हिंडइत्ति उव्वेयं करियाइआ, भरहस्स तित्थकरविभूइं वण्णेंतस्सवि न पत्तिज्जियाइआ, पुत्तसोगेण य से किल झामलं चक्खुं जायं रुयंतीए, तो भरहेण गच्छंतेण विण्णत्ता-अम्मो ! एहि, जेण भगवओ विभूइं दंसेमि । ताहे भरहो हत्थिखंधे पुरओ काऊण निग्गओ, समवसरणदेसे य गयणमंडलं सुरसमूहेण विमाणारूढेणोत्तरंतेण विरायंतधयवडं पहयदेवदुंदुहिनिनायपूरियदिसामंडलं पासिऊण भरहो भणियाइओ-पेच्छ जइ एरिसी रिद्धी मम कोडिसयसहस्सभागेणवि, ततो तीए भगवओ छत्ताइच्छत्तं पासंतीए चेव केवलमुप्पण्णं । अण्णे भणंति-भगवओ धम्मकहासद्दं सुणंतीए । तक्कालं च से खुट्टमाउगं, ततो सिद्धा, इह भारहोसप्पिणीए पढमसिद्धोत्तिकाऊण देवेहिं पूजा कया, सरीरं च खीरोदे छूढं, भगवं च समवसरणमज्झत्थो सदेवमणुयासुराए

१ भरतः सर्वर्ध्या भगवन्त वन्दितु प्रवृत्त , मरुदेवीस्वामिनी च भगवति प्रव्रजिते भरतराज्यश्रियं दृष्ट्वा भणितवती-मम पुत्रस्येदृशी राज्यश्रीरभवत्, साम्प्रत स क्षुत्पिपासापरिगत नग्नो हिण्डत इत्युद्वेग कृतवती, भरते तीर्थकरविभूति वर्णयत्यपि न प्रतीतवती, पुत्रशोकेन च तस्या. किल ध्यामल चक्षुर्जात रुदत्या , तदा भरतेन गच्छता विज्ञप्ता-अम्ब ! एहि, येन भगवतो विभूतिं दर्शयामि । तदा भरत हस्तिस्कन्धे पुरतः कृत्वा निर्गत , समवसरणदेशे च गगनमण्डल सुरसमूहेन विमानारूढेनोत्तरता विराजध्वजपट प्रहतदेवदुन्दुभिनिनादापूरितदिग्मण्डल दृष्ट्वा भरतो भणितवान्-पश्य यदि ईदृशी ऋद्धिर्मम कोटीशतसहस्रभागेनापि, ततस्तस्या भगवतश्छत्रातिच्छत्र पश्यन्त्या एव केवलमुत्पन्न । अन्ये भणन्ति-भगवतो धर्मकथाशब्द शृण्वन्त्या । तत्काल च तस्या त्रुटितमायु , तत. सिद्धा, इह भरतावसर्पिण्या प्रथमसिद्ध इतिकृत्वा देवै पूजा कृता, शरीरं च क्षीरोदे क्षिप्तं, भगवांश्च समवसरणमध्यस्थ सदेवमनुजासुरायां

सभाए धम्मं कहेइ, तत्थ उसभसेणो नाम भरहपुत्तो पुव्वबद्धगणहरनामगोत्तो जायसंवेगो पव्वइओ, बंभी य पव्वइआ, भरहो सावगो जाओ, सुंदरी पव्वयंती भरहेण इत्थीरयणं भविस्सइत्ति निरुद्धा, सावि साविआ जाया, एस चउव्विहो समणसंघो। ते य तावसा भगवओ नाणमुप्पण्णंति कच्छमहाकच्छवज्जा भगवओ सगासमागंतूण भवणवइवाणमंतरजोइसियवेमाणियदेवाइण्णं परिसं दट्ठूण भगवओ सगासे पव्वइआ, इत्थ समोसरणे मरीइमाइआ बहवे कुमारा पव्वइआ। साम्प्रतमभिहितार्थसंग्रहपरमिदं गाथाचतुष्टयमाह—

सह मरुदेवाइ निग्गओ कहणं पव्वज्ज उसभसेणस्स। बंभीमरीइदिक्खा सुंदरी ओरोहसुअदिक्खा ॥ ३४४॥
पंच य पुत्तसयाइं भरहस्स य सत्त नत्तूअसयाइं। सयराहं पव्वइआ तंमि कुमारा समोसरणे ॥ ३४५॥
भवणवइवाणमंतरजोइसवासी विमाणवासी अ। सव्विड्ढिइ सपरिसा कासी नाणुप्पयामहिमं ॥ ३४६॥
दट्ठूण कीरमाणिं महिमं देवेहि खत्तिओ मरिई। सम्मत्तलद्धबुद्धी धम्मं सोऊण पव्वइओ ॥ ३४७॥

व्याख्या—'कथनं' धर्मकथा परिगृह्यते, मरुदेव्यै भगवद्विभूतिकथनं वा। तथा 'नप्तृशतानीति' पौत्रकशतानि। तथा

१ सभाया धर्मं कथयति, तत्र ऋषभसेनो नाम भरतपुत्रः पूर्वबद्धगणधरनामगोत्रः जातसंवेगः प्रव्रजितः, ब्राह्मी च प्रव्रजिता, भरतः श्रावको जातः, सुन्दरी प्रव्रजन्ती भरतेन स्त्रीरत्नं भविष्यतीति निरुद्धा, सापि श्राविका जाता, एष चतुर्विधः श्रमणसङ्घः। ते च तापसा भगवतो ज्ञानमुत्पन्नमिति कच्छमहाकच्छवर्जा भगवतः सकाशमागत्य भवनपतिव्यन्तरज्योतिष्कवैमानिकदेवाकीर्णां पर्षदं दृष्ट्वा भगवतः सकाशे प्रव्रजिताः, अत्र समवसरणे मरीच्यादिका बहवः कुमाराः प्रव्रजिताः

'सयराहमिति' देशीवचनं युगपदर्थाभिधायकं त्वरितार्थाभिधायकं वेति। 'मरीचिरिति' जातमात्रो मरीचीन्मुक्तवान् इत्यतो मरीचि*मान् मरीचिः, अभेदोपचारान्मतुब्लोपाद्वेति, अस्य च प्रकृतोपयोगित्वात्कुमारसामान्याभिधाने सत्यपि भेदेनोपन्यासः। सम्यक्त्वेन लब्धा—प्राप्ता बुद्धिर्यस्य स तथाविधः। शेषं सुगममिति गाथाचतुष्टयार्थः ॥ ३४४–३४७॥

कथानकम्—भरहोऽवि भगवओ पूअं काऊण चक्करयणस्स अट्ठाहिआमहिमं करियाइओ, निव्वत्ताए अट्ठाहिआए तं चक्करयणं पुव्वा+हिमुहं पहाविअं, भरहो सव्वबलेण तमणुगच्छिआइओ, तं जोयणं गंतूण ठिअं, ततो सा जोअणसंखा जाआ, पुव्वेण य मागहतित्थं पाविऊण अट्ठमभत्तोसितो रहेण समुद्दमवगाहित्ता चक्कणाभिं जाव, ततो णामंकं सरं विसज्जियाइओ, सो दुवालसजोयणाणि गंतूण मागहतित्थकुमारस्स भवणे पडिओ, सो तं दट्ठूण परिकुविओ भणइ—केस णं एस अपत्थिअपत्थिए ?, अह नामयं पासइ, नायं जहा उप्पण्णो चक्कवट्टित्ति, सरं चूडामणिं च घेत्तूण उवट्ठिओ भणति—अहं ते पुव्विल्लो अंतेवालो, ताहे तस्स अट्ठाहिअ महामहिमं करेइ। एवं एएण कमेण दाहिणेण वरदामं, अवरेण पभासं, ताहे

१ भरतोऽपि भगवतः पूजां कृत्वा चक्ररत्नस्याष्टाहिकामहिमानं कृतवान्, निवृत्तेऽष्टाहिके तच्चक्ररत्नं पूर्वाभिमुखं प्रधावितं, भरतः सर्वबलेन तदनुगतवान् तद्योजनं गत्वा स्थितं, ततः सा योजनसंख्या जाता, पूर्वस्यां च मागधतीर्थं प्राप्याष्टमभक्तोषितो रथेन समुद्रमवगाह्य चक्रनाभिं यावत्, ततो नामाङ्कं शरं विसृष्टवान्, स द्वादश योजनानि गत्वा मागधतीर्थकुमारस्य भवने पतितः, स तं दृष्ट्वा परिकुपितो भणति—क एषोऽप्रार्थितप्रार्थकः ?, अथ नाम पश्यति, ज्ञातं यथा उत्पन्नश्चक्रवर्त्तीति, शरं चूडामणिं च गृहीत्वोपस्थितो भणति—अहं तव पौरस्त्योऽन्तपालः, तदा तस्याष्टाहिकं महामहिमानं करोति। एवमेतेन क्रमेण दक्षिणस्यां वरदाम अपरस्यां प्रभासं, तदा * मरीचिवान् + पुव्वामुह

सिंधुदेविं ओयवेइ, ततो वेयड्ढगिरिकुमारं देवं, ततो तमिसगुहाए कयमालयं, तओ सुसेणो अद्धबलेण दाहिणिल्लं सिंधुनिक्खूडं ओयवेइ, ततो सुसेणो तिमिसगुहं *समुग्घाडेइ, ततो तिमिसगुहाए मणिरयणेण उज्जोअं काऊण उभओ पासिं पंचधणुसयायामविक्खंभाणि एगूणपण्णा+सं मंडलाणि आलिहमा†णे उज्जोअकरणा उम्मुग्गनिमुग्गाओ अ संकमेण उत्तरिऊण निग्गओ तिमिसगुहाओ, आवडिअं चिलातेहिं समं जुद्धं, ते पराजिआ मेहमुहे नाम कुमारे कुलदेवए आराहेंति, ते सत्तरा‡त्ति वासं वासेंति, भरहोऽवि चम्मरयणे खंधावारं ठवेऊण उवरिं छत्तरयणं ठवेइ, मणिरयणं छत्तरयणस्स पडिच्छभा¶ए ठवेति, ततोपभिइ लोगेण अंडसंभवं जगं पणीअंति, तं ब्रह्माण्डपुराणं, तत्थ पुव्वण्हे साली वुप्पइ, अवरण्हे जिम्मइ, एवं सत्त दिवसे अच्छ§ति, ततो मेहमुहा आभिओगिएहिं धाडिआ, चिलाया तेसिं वयणेण उवणया भरहस्स, ततो चुल्लहिमवंतगिरिकुमारं देव ओयवेति, तत्थ बावत्तरि जोयणाणि सरो उवरिहुत्तो गच्छति,

१ सिन्धुदेवीमुपैति, ततो वैताढ्यगिरिकुमारं देवं, ततस्तमिस्रगुहायां कृतमाल्यं, ततः सुषेणोऽर्धबलेन दाक्षिणात्यं सिन्धुनिष्कूटं उपैति, ततः सुषेणः तमिस्रगुहां समुद्घाटयति, ततस्तमिस्रगुहायां मणिरत्नेनोद्योतं कृत्वोभयपार्श्वयोः पञ्चधनुःशतायामविष्कम्भाणि मण्डलानि एकोनपञ्चाशतमालिखन् उद्योतकरणादुन्मग्नानिमग्ने च सङ्क्रमेणोत्तीर्य निर्गतस्तमिस्रगुहायाः, आपतितं किरातैः समं युद्धं, ते पराजिता मेघमुखान् नाम कुमारान् कुलदेवता आराधयन्ति, ते सप्तरात्रं वर्षां वर्षयन्ति, भरतोऽपि चर्मरत्ने स्कन्धावारं स्थापयित्वोपरि छत्ररत्नं स्थापयति, मणिरत्नं छत्ररत्नस्य प्रतीक्ष्यभागे ( मध्ये दण्डस्य ) स्थापयति, ततःप्रभृति लोकेनाण्डप्रभवं जगत्प्रणीतमिति, तत्० तत्र पूर्वाह्णे शालय उप्यन्ते, अपराह्णे जिम्यते एवं सप्त दिनानि तिष्ठन्ति, ततो मेघमुखा आभियोगिकैर्निर्धाटिताः, किरातास्तेषां वचनेनोपनता भरताय, ततः क्षुल्लकहिमवद्गिरिकुमारं देवमुपैति, तत्र द्वासप्ततिं योजनानि शरः उपरि गच्छति, * ०गुहसुग्घा० + ०ण्णासमं०. † ०माणो. ‡ सत्तरत्त ¶ पडिच्छिआ § अच्छति

ततो उसभकूडए नामं लिहइ, ततो सुसेणो उत्तरिल्लं सिंधुनिक्खुडं ओयवेइ, ततो भरहो गंगं ओयवेइ, पच्छा सेणावती उत्तरिल्लं गंगानिक्खुडं ओयवेइ, भरहोऽवि गंगाए सद्धिं वाससहस्सं भोगे भुंजइ, ततो वेयड्ढे पव्वए णमिविणमिहिं समं बारस संवच्छराणि जुद्धं, ते पराजिआ समाणा विणमी इत्थीरयणं णमी रयणाणि गहाय उवट्ठिया, पच्छा खंडगप्पवायगुहाए नट्टमालयं देवं ओयवेइ, ततो खंडगप्पवायगुहाए नींति, गंगाकूलए नव निहओ उवागच्छंति, पच्छा दक्खिणिल्लं गंगानिक्खुडं सेणावई ओयवेइ, एतेण कमेण सट्ठीए वाससहस्सेहिं भारहं वासं अभिजिणिऊण अतिगओ विणीयं रायहाणिंति, बारस वासाणि महारायाभिसेओ, जाहे बारस वासाणि महारायाभिसेओ वत्तो राइणो विसज्जिआ ताहे नियगवग्गं सरिउमारद्धो, ताहे दाइज्जंति सवे निइल्लिआ, एवं परिवाडीए सुंदरी दाइआ, सा पंडुलुग्गितमुही. सा य जद्दिवसं रुद्धा तद्दिवसमारद्धा आयंबिलाणि करेति, तं पासित्ता रुट्ठो ते कुडुंबिए भणइ–किं मम नत्थि भोयणं ?, जं एसा एरिसी

१ ततः ऋषभकूटे नाम लिखति, ततः सुषेण औत्तरीयं सिन्धुनिष्कूटं उपयाति, ततो भरतो गङ्गामुपयाति, पश्चात्सेनापतिरौत्तरं गङ्गानिष्कूटमुपयाति, भरतोऽपि गङ्गया सार्धं वर्षसहस्रं भोगान्भुनक्ति, ततो वैताढ्ये पर्वते नमिविनमिभ्यां समं द्वादश संवत्सराणि युद्धं, तौ पराजितौ सन्तौ विनमिः स्त्रीरत्नं नमिः रत्नानि गृहीत्वोपस्थितौ, पश्चात्खण्डप्रपातगुहाया नृत्तमाल्यं देवमुपयाति, ततः खण्डप्रपातगुहाया निर्याति, गङ्गाकूले नव निधय उपागच्छन्ति, पश्चात् दाक्षिणात्यं गङ्गानिष्कूटं सेनापतिरुपयाति, एतेन क्रमेण षष्ट्या वर्षसहस्रैः भारतं वर्षं अभिजित्यातिगतो विनीतां राजधानीमिति, द्वादश वर्षाणि महाराजाभिषेको, यदा द्वादश वर्षाणि महाराजाभिषेको वृत्तो राजानो विसृष्टाः तदा निजकवर्गं स्मर्तुमारब्धः, तदा दर्श्यन्ते सर्वे निजकाः, एवं परिपाट्या सुन्दरी दर्शिता, सा पाण्डुरितमुखी, सा च यद्दिवसे रुद्धा तस्माद्दिवसादारभ्याचाम्लानि करोति, तां दृष्ट्वा रुष्टस्तान् कौटुम्बिकान् भणति–किं मम नास्ति भोजनं, यदेषा ईदृशी

* नामयं. + गंगाकूलेण. † गच्छतित्ति ‡ महारज्जा०.

रूवेण जाया, विज्जा वा नत्थि ?, तेहिं सिट्ठं जहा–आयंबिलाणि करेति, ताहे तस्स तस्सोवरिं पयणुओ रागो जाओ, सा य भणिया–जइ रुच्चइ तो मए समं भोगे भुंजाहि, णवि तो पव्वयाहित्ति, ताहे पाएसु पडिया विसज्जिया पव्वइआ। अन्नया भरहो तेसिं भाउयाणं दूयं पट्ठवेइ–जहा मम रज्जं आयाणह, ते भणंति–अम्हवि रज्जं ताएण दिण्णं, तुज्झवि, एतु ताव ताओ पुच्छिज्जिहित्ति, जं भणिहिति तं करिहामो। ते णं समए णं भगवं अट्ठावयमागओ विहरमाणो, एत्थ सवे समोसरिआ कुमारा, ताहे भणंति–तुब्भेहिं दिण्णाइं रज्जाइं हरति भाया, ता किं करेमो ? किं जुज्झामो उयाहु आयाणामो ?, ताहे सामी भोगेसु निवत्तावेमाणो तेसिं धम्मं कहेइ–न मुत्तिसमं सुहमत्थि, ताहे इंगालदाहकदिट्ठंतं कहेइ–जहा एगो इंगालदाहओ एगं भाणं पाणिअस्स भरेऊणं गओ, तं तेण उदगं णिट्ठविअं, उवरिं आइच्चो पासे अग्गी पुणो परिस्समो दारुगाणि कुट्टंतस्स, घरं गतो पाणं पीअं, मुच्छिओ सुमिणं पासइ, एवं असब्भावपट्ठवणाए कूवतलागनदिदहसमुद्दा य सवे

१ रूपेण जाता, वैद्या वा न सन्ति ?, तैः शिष्टं–यथाऽऽचाम्लानि करोति, तदा तस्य तस्या उपरि प्रतनुको रागो जातः, सा च भणिता–यदि रोचते तदा मया समं भोगान् भुङ्क्ष्व, नैव तर्हि प्रव्रज, तदा पादयोः पतिता विसृष्टा प्रव्रजिता। अन्यदा भरतस्तेषां भ्रातॄणां दूतान् प्रेषयति–यथा मम राज्यमाज्ञापयत, ते भणन्ति–अस्माकमपि राज्यं तातेन दत्तं, तवापि, एतु तावत्तातः पृच्छ्यते, यद्भणिष्यति तत्करिष्यामः। तस्मिन्समये भगवानष्टापदमागतो विहरन्, अत्र सर्वे समागताः कुमाराः, तदा भणन्ति–युष्माभिर्दत्तानि राज्यानि हरति भ्राता, ततः किं कुर्मः ? किं युध्यामहे उताहो आज्ञाप्यामहे, तदा स्वामी भोगेभ्यो निवर्त्तयमानः तेभ्यो धर्मं कथयति–न मुक्तिसमं सुखमस्ति, तदाऽङ्गारदाहकदृष्टान्तं कथयति–यथैकोऽङ्गारदाहक एकं भाजनं पानीयस्य भृत्वा गतः, तत्तेनोदकं निष्ठापितं, उपरि आदित्यः पार्श्वयोरग्निः पुनः परिश्रमो दारूणि कुट्टयतः, गृहं गतः पानं पीतं, मूर्च्छितः स्वप्नं पश्यति, एवमसद्भावप्रस्थापनया कूपतटाकनदीह्रदसमुद्राश्च सर्वे * ०याणह + अट्ठावदे समागतो † भरहो ता ताओ ‡ करेमि. ¶ भरेव $ कोट्टेंतस्स

पीआ, न य छिज्जइ तण्हा, ताहे एगंमि जिण्णकूवे तणपूलिअं गहाय उस्सिंचइ, जं पडियसेसं तं जीहाए लिहइ। एवं तुब्भेहिंपि अणुत्तरा सवलोगे सद्दफरिसा सवट्ठसिद्धे अणुभूआ, तहवि तत्ति न गया। एवं वियालिअं नाम अज्झयणं भासइ 'संबुज्झह किं न बुज्झहा ?' एवं अट्ठाणउए वित्तेहिं अट्ठाणउइ कुमारा पव्वइआ, कोइ पढमिल्लुएण संबुद्धो कोइ बितिएण कोइ ततिएण जाहे ते पव्वइआ। अमुमेवार्थमुपसंहरन्नाह—

मागहमाई विजयो सुंदरिपव्वज्ज बारसभिसेओ। आणवण भाउगाणं समुसरणे पुच्छ दिट्ठंतो ॥ ३४८ ॥

गमनिका—मागधमादौ यस्य स मागधादिः, कोऽसौ ? विजयो भरतेन कृत इति। पुनरागतेन सुन्दर्यवरोधस्थिता दृष्टा, क्षीणत्वान्मुक्ता चेति। द्वादश वर्षाणि अभिषेकः कृतो भरताय, आज्ञापनं भ्रातॄणां चकार, तेऽपि च समवसरणे भगवन्तं पृष्टवन्तः, भगवता चाङ्गारदाहकदृष्टान्तो गदित इति गाथाक्षरार्थः ॥ ३४८ ॥ इदानीं कथानकशेषम्—कुमारेसु पव्वइएसु भरहेण बाहुबलिणो दूओ पेसिओ, सो ते पव्वइए सोउं आसुरुत्तो, ते बाला तुमए पव्वाविआ, अहं पुण जुद्धसमत्थो,

१ पीता, न च छिद्यते तृष्णा, तदैकस्मिञ्जीर्णकूपे तृणपूलं गृहीत्वोत्सिञ्चति, यत्पतितशेषं तज्जिह्वया लेढि। एवं युष्माभिरपि अनुत्तराः सर्वलोके शब्दस्पर्शाः सर्वार्थसिद्धेऽनुभूतास्तथापि तृप्तिं न गताः, एवं वैदारिकं नामाध्ययनं भाषते, संबुध्यत किं न बुध्यत ? एवमष्टनवत्या वृत्तैरष्टनवतिः कुमाराः प्रव्रजिताः कश्चित् प्रथमेन संबुद्धः कश्चिद्द्वितीयेन कश्चित्तृतीयेन, यदा ते प्रव्रजिताः। २ कुमारेषु प्रव्रजितेषु भरतेन बाहुबलिने दूतः प्रेषितः, स तान्प्रव्रजितान् श्रुत्वा क्रुद्धः, ते बालास्त्वया प्रव्राजिताः, अहं पुनः युद्धसमर्थः * पीआ य + पच्छिज्जइ † मागहवरदामपभास सिंधुखंडप्पवायतमिसगुहा। सट्ठिं वाससहस्से, ओअविउं आगओ भरहो ॥ १ ॥ ( प्र० अध्या० )

ता एहि, किं वा मयंमि अजिए भरहे तुमे जिअंति । ततो सव्वबलेण दोवि मिलिआ देसंते, बाहुबलिणा भणिअं–किं अणवराहिणा लोगेण मारिएणं ?, तुमं च अहं च दुवेऽवि जुज्झामो, एवं होउत्ति, तेसिं पढमं दिट्ठिजुद्धं जायं, तत्थ भरहो पराजिओ, पच्छा वायाए, तत्थवि भरहो पराइओ, एवं बाहाजुद्धेण पराजिओ मुट्ठिजुद्धेऽवि पराजिओ दंडजुद्धेऽवि जिप्पमाणो भरहो चिंतियाइओ–किं एसेव चक्की ? जेणाहं दुब्बलोत्ति, तस्स एवं चिंतंतस्स देवयाए आउहं दिण्णं चक्करयणं, ताहे सो तेणं गहिएणं पहाविओ । इओ बाहुबलिणा दिट्ठो गहियदिव्वरयणो आगओ, सगव्वं चिंतियं चाणेण–सममेएण भंजामि एयं, किं पुण तुच्छाण कामभोगाण कारणा भट्ठनियपइण्णं एयं मम वावाइउं न जुत्तं, सोहणं मे भाउगेहिं अणुट्ठिअं, अहमवि तमणुट्ठामित्ति चिंतिऊण भणियं चाणेण–धिसि धिसि पुरिसत्तणं ते अहम्मजुद्धपवत्तस्स, अलं मे भोगेहिं, गेण्हाहि रज्जं, पव्वयामित्ति, मुक्कदंडो पव्वइओ, भरहेण बाहुबलिस्स पुत्तो रज्जे ठविओ । बाहुबली विचिंतेइ–तायसमीवे भाउणो मे

१ तत् एहि, किं वा मय्यजिते भरते त्वया जितमिति । ततः सर्वबलेन द्वावपि मिलितौ देशान्ते, बाहुबलिना भणित–किमनपराधिना लोकेन मारितेन ?, त्वं चाहं च द्वावेव युध्यावहे, एवं भवत्विति, तयोः प्रथमं दृष्टियुद्धं जातं, तत्र भरतः पराजितः, पश्चाद्वाचा, तत्रापि भरतः पराजितः, एवं बाहुयुद्धेन पराजितो मुष्टियुद्धेऽपि पराजितो दण्डयुद्धेऽपि जीयमानो भरतश्चिन्तितवान्–किमेष एव चक्रवर्ती ? येनाहं दुर्बल इति । तस्यैव चिन्तयतो देवतया आयुधं दत्तं चक्ररत्नं, तदा स तद् गृहीत्वा प्रधावितः । इतो बाहुबलिना दृष्टः गृहीतदिव्यरत्न आगतः, सगर्वं चिन्तितं चानेन–सममेतेन भनज्म्येनं, किं पुनस्तुच्छानां कामभोगानां कारणाद्भ्रष्टप्रतिज्ञमेनं व्यापादयितुं न युक्तं, शोभनं मे भ्रातृभिरनुष्ठितं, अहमपि तदनुतिष्ठामि इति चिन्तयित्वा भणितं चानेन–धिग्धिग् पुरुषत्वं तेऽधर्मयुद्धप्रवृत्तस्य, अलं मे भोगैः, गृहाण राज्यं, प्रव्रजामीति, मुक्तदण्डः प्रव्रजितः, भरतेन बाहुबलिनः पुत्रो राज्ये स्थापितः । बाहुबली विचिन्तयति–तातसमीपे भ्रातरो मे * विजिअति + से † नेदम् ‡ भुजामि

लहुयरा समुप्पण्णनाणाइसया, ते किह निरइसओ पिच्छामि?, एत्थेव ताव अच्छामि जाव केवलनाणं समुप्पण्णंति, एवं सो पडिमं ठिओ, माणपव्वयसिहरे, जाणइ सामी तहवि न पट्ठवेइ, अमूढलक्खा तित्थयरा, ताहे संवच्छरं अच्छइ काउस्सग्गेणं, वल्लीविताणेणं वेढिओ, पाया य वम्मीयनिग्गएहिं भुयंगेहिं, पुण्णे य संवच्छरे भगवं बंभीसुंदरीओ पट्ठवेइ, पुव्विं न पट्ठविआ, जेण तया सम्मं न पडिवज्जइत्ति, ताहिं सो मग्गंतीहिं वल्लीतणवेढिओ दिट्ठो, परूढेणं महल्लेणं कुच्चेणंति, तं दट्ठूण वंदिओ, इमं च भणियं–ताओ आणवेइ–न किर हत्थिविलग्गस्स केवलनाणं समुप्पज्जइत्ति भणिऊणं गयाओ, ताहे पचिंतितो–कहिं एत्थ हत्थी ?, ताओ अ अलियं न भणंति, ततो चिंतंतेण णायं–जहा माणहत्थित्ति, को य मम माणो?, वच्चामि भगवंतं वंदामि ते य साहुणोत्ति पादे उक्खित्ते केवलनाणं समुप्पण्णं, ताहे गंतूण केवलिपरिसाए ठिओ । ताहे भरहोऽवि रज्जं भुंजइ । मरीईवि सामाइयादि एक्कारस अंगाणि अहिज्जिओ । साम्प्रतमभिहितार्थोपसंहारायेदं गाथासप्तकमाह—

१ लघुतराः समुत्पन्नज्ञानातिशयाः, तान् कथं निरतिशयः पश्यामि?, अत्रैव तावत्तिष्ठामि यावत्केवलज्ञानं समुत्पन्नमिति ( समुत्पद्यत इति ), एवं स प्रतिमां स्थितः, मानपर्वतशिखरे, जानाति स्वामी तथापि न प्रस्थापयति, अमूढलक्षास्तीर्थकराः, तदा संवत्सरं तिष्ठति कायोत्सर्गेण, वल्लीवितानेन वेष्टितः, पादौ च वल्मीकनिर्गतैर्भुजङ्गैः, पूर्णे च संवत्सरे भगवान् ब्राह्मीसुन्दर्यौ प्रस्थापयति, पूर्वं न प्रस्थापिते, येन तदा सम्यक् न प्रतिपद्यत इति, ताभ्यां मार्गयन्तीभ्यां स वल्लीतृणवेष्टितो दृष्टः, प्ररूढेन महता कूर्चेनेति, स दृष्ट्वा वन्दितः, इदं च भणितम्–तात आज्ञापयति–न किल हस्तिविलग्नस्य केवलज्ञानं समुत्पद्यत इति भणित्वा गते, तदा प्रचिन्तितः ( चिन्तितुमारब्धवान् ) कात्र हस्ती ?, तातश्चालीकं न भणति, ततश्चिन्तयता ज्ञातं–यथा मानो हस्तीति, कश्च मम मानः, व्रजामि भगवन्तं (प्रति) वन्दे तांश्च साधूनिति पादे उत्क्षिप्ते केवलज्ञानं समुत्पन्नं, तदा गत्वा केवलिपर्षदि स्थितः । तदा भरतोऽपि राज्यं भुनक्ति । मरीचिरपि सामायिकादीन्येकादशाङ्गान्यधीतवान् ¹ पट्ठविआओ + पडिवज्जिहिंत्ति | जेट्ठज्ज' ताओ ‡ किल " चिन्तितो

बाहुबलिकायकरणं निवेअणं चक्कि देवया कहणं । नाहम्मेणं जुज्झे दिक्खा पडिमा पइण्णा य ॥ ३४९ ॥
पढमं दिट्ठीजुद्धं वायाजुद्ध तहेव बाहाहिं । मुट्ठीहि अ दंडेहि अ सव्वत्थवि जिप्पए भरहो ॥ ३२ ॥
सो एव जिप्पमाणो विहुरो अह नरवई विचिंतेइ । किं मन्नि एस चक्की ? जह दाणि दुब्बलो अहयं ॥ ३३ ॥
संवच्छरेण धूअं अमूढलक्खो उ पेसए अरिहा । हत्थीओ ओयरत्ति अ वुत्ते चिन्ता पए नाणं ॥ ३४ ॥
उप्पण्णनाणरयणो तिण्णपइण्णो जिणस्स पामूले । गंतुं तित्थं नमिउं केवलिपरिसाइ आसीणो ॥ ३५ ॥
काऊण एगछत्तं भरहोऽवि अ भुंजए विउलभोए । मरिईवि सामिपासे विहरइ तवसंजमसमग्गो ॥ ३६ ॥
सामाइअमाईअं इक्कारसमाउ जाव अंगाउ । उज्जुत्तो भत्तिगतो अहिज्जिओ सो गुरुसगासे ॥ ३७ ॥ (भाष्यम्)

आसामभिहितार्थानामपि असंमोहार्थमक्षरगमनिका प्रदर्श्यते—भरतसंदेशाकर्णने सति बाहुबलिनः कोपकरणं, तन्निवेदनं चक्रवर्तिभरताय दूतेन कृतं, 'देवयत्ति' युद्धे जीयमानेन भरतेन किमयं चक्रवर्ती न त्वहमिति चिन्तिते देवता आगतेति, 'कहणंति' बाहुबलिना परिणामदारुणान् भोगान् पर्यालोच्य कथनं कृतं–अलं मम राज्येनेति, तथा चाह–नाधर्मेण युध्यामीति, दीक्षा तेन गृहीता, अनुत्पन्नज्ञानः कथमहं ज्यायान् लघीयसो द्रक्ष्यामीत्यभिसंधानात् प्रतिमा अङ्गीकृता प्रतिज्ञा च कृता–नास्मादनुत्पन्नज्ञानो यास्यामीति निर्युक्तिगाथा, शेषास्तु भाष्यगाथाः ॥ ३४९ ॥

* ताहे चक्क मणसी करेइ पत्ते अ चक्करयणमि । बाहुबलिणा य भणिअ धिरत्थु रज्जस्स तो तुज्झ ॥ १ ॥ चिंतेइ य सो मज्झ सहोअरा पुव्वदिक्खिया नाणी । अहय केवलिहोउ वेच्छामि ठिओ पडिम ॥ २ ॥ ( प्र० अन्या० )

तयोश्च भरतबाहुबलिनोः प्रथमं दृष्टियुद्धं पुनर्वाग्युद्धं तथैव बाहुभ्यां मुष्टिभिश्च दण्डैश्च, 'सर्वत्रापि' सर्वेषु युद्धेषु जीयते भरतः ॥ स एवं जीयमानो विधुरोऽथ नरपतिर्विचिन्तितवान्–किं मन्ये एष चक्रवर्त्ती ? यथेदानीं दुर्बलोऽहमिति ॥ कायोत्सर्गावस्थिते भगवति बाहुबलिनि संवत्सरेण 'धूतां' दुहितॄरं* अमूढलक्षस्तु प्रेषितवान् 'अर्हन्' आदितीर्थकरः, 'हस्तिनः अवतर' इति चोक्ते चिन्ता तस्य जाता, यामीति संप्रधार्य 'पदे' इति पादोत्क्षेपे+ ज्ञानमुत्पन्नमिति ॥ उत्पन्नज्ञानरत्नस्तीर्णप्रतिज्ञो जिनस्य पादमूले केवलिप†र्षदं गत्वा ‡तीर्थं नत्वा आसीनः ॥ अत्रान्तरे कृत्वा एकच्छत्रं भुवनमिति वाक्यशेषः, भरतोऽपि च भुङ्क्ते विपुलभोगान् । मरीचिरपि स्वामिपार्श्वे विहरति तपःसंयमसमग्रः ॥ स च सामायिकादिकमेकादशमङ्गं यावत् उद्युक्तः क्रियायां, भक्तिगतो भगवति श्रुते वा, अधीतवान् स गुरुसकाश इत्युपन्यस्तगाथार्थः ॥ ३२-३७ ॥

**अह अण्णया कयाई गिम्हे उण्हेण परिगयसरीरो । अण्हाणएण चइओ इमं कुलिंगं विचिंतेइ ॥ ३५० ॥**

गमनिका–'अथ' इत्यानन्तर्ये 'कदाचिद्' एकस्मिन्काले ग्रीष्मे उष्णेन परिगतशरीरः 'अस्नानेनेति' अस्नानपरीषहेण त्याजितः संयमात् 'एतत्कुलिङ्गं' वक्ष्यमाणं विचिन्तयतीति गाथार्थः ॥ ३५० ॥

**मेरुगिरीसमभारे न हुमि समत्थो मुहुत्तमवि वोढुं । सामण्णए गुणे गुणरहिओ संसारमणुकंखी ॥ ३५१ ॥**

गमनिका–मेरुगिरिणा समो भारो येषां ते तथाविधास्तान् नैव समर्थो मुहूर्त्तमपि वोढुं, कान्?, श्रमणानामेते श्रामणाः,

* दुहितरौ + पदो० † परिषद. ‡ तत्तीर्थं

के ते ?, गुणाः विशिष्टक्षान्त्यादयस्तान्, कुतो ?, यतो धृत्यादिगुणरहितोऽहं संसारानुकाङ्क्षीति गाथार्थः ॥ ३५१ ॥ ततश्च किं मम युज्यते ?, गृहस्थत्वं तावदनुचितं, श्रमणगुणानुपालनमप्यशक्य–

**एवमणुचिंतंतस्स तस्स निअगा मई समुप्पण्णा । लद्धो मए उवाओ जाया मे सासया बुद्धी ॥ ३५२ ॥**

व्याख्या–'एवं' उक्तेन प्रकारेण अनुचिन्तयतस्तस्य निजा मतिः समुत्पन्ना, न परोपदेशेन, स ह्येवं चिन्तयामास–लब्धो मया वर्त्तमानकालोचितः खलूपायः, जाता मम शाश्वता बुद्धिः, शाश्वतेति आकालिकी प्रायो निरवद्यजीविकाहेतुत्वात् इति गाथार्थः ॥ ३५२ ॥ यदुक्तं 'इदं कुलिङ्गं अचिन्तयत्' तत्प्रदर्शनायाह–

**समणा तिदंडविरया भगवंतो निहुअसंकुइअअंगा । अजिइंदिअदंडस्स उ होउ तिदंडं महं चिंधं ॥ ३५३ ॥**

गमनिका–श्रमणाः मनोवाक्कायलक्षणत्रिदण्डविरताः, ऐश्वर्यादिभगयोगाद्भगवन्तः, निभृतानि–अन्तःकरणाशुभव्यापारचिन्तनपरित्यागात् संकुचितानि–अशुभकायव्यापारपरित्यागात् अङ्गानि येषां ते तथोच्यन्ते, अहं तु नैवंविधो यतोऽतः–'अजितेन्दियेत्यादि' न जितानि इन्द्रियाणि–चक्षुरादीनि दण्डाश्च–मनोवाक्कायलक्षणा येन स तथोच्यते, तस्य अजितेन्द्रियदण्डस्य तु भवतु त्रिदण्डं मम चिह्नं, अविस्मरणार्थमिति गाथार्थः ॥ ३५३ ॥

**लोइंदिअमुंडा संजया उ अहयं खुरेण ससिहो अ । थूलगपाणिवहाओ वेरमणं मे सया होउ ॥ ३५४ ॥**

गमनिका–मुण्डो हि द्विविधो भवति–द्रव्यतो भावतश्च, तत्रैते श्रमणा द्रव्यभावमुण्डाः, कथम्?, लोचेन इन्द्रियैश्च मुण्डाः संयतास्तु, अहं पुनर्नेन्द्रियमुण्डो यतः अतः अल द्रव्यमुण्डतया, तस्मादहं क्षुरेण मुण्डः सशिखश्च भवामि, तथा सर्वप्राणिवधविरताः श्रमणा वर्त्तन्ते अहं तु नैवंविधो यतः अतः स्थूलप्राणातिपाताद्विरमणं मे सदा भवत्विति गाथार्थः ॥ ३५४ ॥

**निक्किंचणा य समणा अकिंचणा मज्झ किंचणं होउ । सीलसुगंधा समणा अहयं सीलेण दुग्गंधो ॥ ३५५ ॥**

गमनिका–निर्गतं किञ्चनं*–हिरण्यादि येभ्यस्ते निष्किञ्चनाश्च श्रमणाः तथा अविद्यमानं किञ्चनम्–अल्पमपि येषां तेऽकिञ्चना†–जिनकल्पिकादयः, अहं तु नैवंविधो यतः अतो मार्गाविस्मृत्यर्थं मम किञ्चनं भवतु पवित्रिकादि । तथा शीलेन शोभनो गन्धो येषां ते तथाविधाः, अहं तु शीलेन दुर्गन्धः अतो गन्धचन्दनग्रहणं मे युक्तमिति गाथार्थः ॥ ३५५ ॥ तथा–

**ववगयमोहा समणा मोहच्छण्णस्स छत्तयं होउ । अणुवाहणा य समणा मज्झं तु उवाहणा होन्तु ॥ ३५६ ॥**

गमनिका–व्यपगतो मोहो येषां ते व्यपगतमोहाः श्रमणाः, अहं तु नेत्थं यतः अतो मोहाच्छादितस्य छत्रकं भवतु । अनुपानत्काश्च श्रमणाः मम चोपानहौ भवत इति गा‡थाक्षरार्थः ॥ ३५६ ॥ तथा–

**सुक्कंबरा य समणा निरंबरा मज्झ धाउरत्ताइं । हुंतु इमे वत्थाइं अरिहो मि कसायकलुसमई ॥ ३५७ ॥**

गमनिका–शुक्लान्यम्बराणि येषां ते शुक्लाम्बराः श्रमणाः, तथा निर्गतमम्बरं ( ग्रन्थाग्रम् ४००० ) येषां ते निरम्बरा

* काञ्चन + ०ञ्चन अ० † ०नाश्च जि० ‡ गाथार्थ

जिनकल्पिकादयः 'मज्जन्ति' मम च, एते श्रमणा इत्यनेन तत्कालोपपन्नतापसश्रमणव्युदासः, भवतु स्नानं भवतु मम ग्रन्थाि किमिति?, 'अर्होऽस्मि' योग्योऽस्मि तेषामेव, कषायैः कलुषा मतिर्यस्य सोऽहं कषायकलुषमतिरिति गाथार्थः ॥२५७॥ तथा—

वज्जंतऽवज्जभीरू बहुजीवसमाउलं जलारंभं । होउ मम परिमिएणं जलेण ण्हाणं च पिअणं च ॥ २५८ ॥

गमनिका—वर्जयन्ति अवद्यभीरवो बहुजीवसमाकुलं जलारम्भं, तत्रैव वनस्पत्यवस्थानात्, अवद्यं—पापं, नाहं तु नैव यतः अतो भवतु मे परिमितेन जलेन स्नानं च पानं चेति गाथार्थः ॥ २५८ ॥

एवं सो रुइअमई निअगमइविगप्पिअं इमं लिंगं । तद्धितहेउसुजुत्तं पारिव्वज्जं पवत्तेइ ॥ २५९ ॥

गमनिका—स्थूलमृषावादादिनिवृत्तः, एवमसौ रचिता मतिर्यस्य असौ रचितमतिः*, अतो निजमत्या विकल्पितं निज मतिविकल्पितं, इदं लिङ्गं, किंविशिष्टम्?—तस्य हितास्तद्धिताः तद्धिताश्च ते हेतवश्चेति समासः, तैः सुष्ठु युक्तं—श्लिष्ट मित्यर्थः, परिव्राजामिदं पारिव्रज्यं, प्रवर्त्तयति, शास्त्रकारवचनात् वर्त्तमाननिर्देशोऽप्यविरुद्ध एव, पाठान्तरं वा 'पारिव्वज्जं ततो कासी' त्ति पारिव्राजं ततः कृतवानिति गाथार्थः ॥ २५९ ॥ भगवता च सह विहरति, तं च साधुमध्ये विजातीयं दृष्ट्वा कौतुकाल्लोकः पृष्टवान्, तथा चाह—

अह तं पागडरूवं दट्ठुं पुच्छेइ बहुजणो धम्मं । कहइ जईणं तो सो विआलणे तस्स परिकहणा ॥ २६० ॥

गमनिका—अथ तं प्रकटरूपं—विजातीयत्वात् दृष्ट्वा पृच्छति बहुजनो धर्मं, कथयति यतीनां संबन्धिनमुक्तं क्षान्त्यादि-

* यतो रचितमति अतो

लक्षणं ततोऽसाविति लोका भणन्ति—यद्ययं श्रेयो भवता किं नाङ्गीकृत इति विचारणे तस्य परि—समवसरणात् कथना परिकथना 'श्रमणास्त्रिदण्डविरता इत्यादिलक्षणा', पृच्छतीति त्रिकालगोचरसूत्रप्रदर्शनार्थमित्यादेर्वं निर्देशः, पाठान्तरं वा 'अह तं पागडरूवं दट्ठुं पुच्छिंसु बहुजणो धम्मं । कहतीसु जतीणं सो वियालणे तस्स परिकहणा ॥ १ ॥' प्रवर्तते इति गाथार्थः ॥ २६० ॥

धम्मकहाअक्खित्ते उवट्ठिए देइ भगवओ सीसे । गामनगराइआइं विहरइ सो सामिणा सद्धिं ॥ २६१ ॥

गमनिका—धर्मकथाक्षिप्तान् उपस्थितान् ददाति भगवतः शिष्यान्, ग्रामनगरादीन् विहरति च स्वामिना सार्धं, भावार्थः सुगमः, इत्थं निर्देशप्रयोजनं पूर्ववत्, ग्रन्थकारवचनत्वाद्वाऽदोष इति गाथार्थः ॥ २६१ ॥ अन्यदा भगवान् विहरमाणोऽष्टापदमनुप्राप्तवान्, तत्र च समवसृतः, भरतोऽपि भ्रातृप्रव्रज्याकर्णनात् संजातमनस्तापोऽधृतिं चक्रे, कदाचिद्भोगान् दीयमानान् पुनरपि गृह्णन्तीत्यालोच्य भगवत्समीपं चागम्य निमन्त्रयंश्च तान् भोगैः निराकृतश्च चिन्तयामास—एतेषामेवेदानीं परित्यक्तसङ्गानां आहारदानेनापि तावद्धर्मानुष्ठानं करोमीति पञ्चभिः शकटशतैर्विचित्रमाहारमानाय्योपनिमन्त्र्य आधाकर्माहृतं च न कल्पते यतीनामिति प्रतिषिद्धः अकृताकारितेनान्नेन निमन्त्रितवान्, राजपिण्डोऽप्यकल्पनीय इति प्रतिषिद्धः सर्वप्रकारैरहं भगवता परित्यक्त इति सुतरामुन्माथितो बभूव, तमुन्माथितं विज्ञाय देवराट् तच्छोकोपशान्तये भगवन्तमवग्रहं पप्रच्छ—कतिविधोऽवग्रह इति, भगवानाह—पञ्चविधोऽवग्रहः, तद्यथा—देवेन्द्रावग्रहः राजा-

* प्रतिषिद्धे

वग्रहः गृहपत्यवग्रहः सागारिकावग्रहः साधर्मिकावग्रहश्च, राजा—भरताधिपो गृह्यते, गृहपतिः—माण्डलिको राजा, सागारिकः—शय्यातरः, साधर्मिकः—संयत इति, एतेषां चोत्तरोत्तरेण पूर्वः पूर्वो बाधितो द्रष्टव्य इति, यथा राजाऽवग्रहेण देवेन्द्रावग्रहो बाधित इत्यादि प्रज्ञप्तिे देवराडाह—भगवन्! य एते श्रमणा मदीयावग्रहे विहरन्ति, तेषां मयाऽवग्रहोऽनुज्ञात इत्येवमभिधाय अभिवन्द्य च भगवन्तं तस्थौ, भरतोऽचिन्तयत्—अहमपि स्वमवग्रहमनुजानामीति, एतावताऽपि नः कृतार्थता भवतु, भगवत्समीपेऽनुज्ञातावग्रहः शक्रं पृष्टवान्—भक्तपानमिदमानीतं अनेन किं कार्यमिति, देवराडाह—गुणोत्तरान् पूजयस्व, सोऽचिन्तयत्—के मम साधुव्यतिरेकेण जात्यादिभिरुत्तराः?, पर्यालोचयता ज्ञातं—श्रावका विरताविरतत्वाद्गुणोत्तराः, तेभ्यो दत्तमिति। पुनर्भरतो देवेन्द्ररूपं भास्वरमाकृतिमद् दृष्ट्वा पृष्टवान्—किं यूयमेवंभूतेन रूपेण देवलोके तिष्ठत उत नेति, देवराज आह—नेति, तत् मानुषैर्द्रष्टुमपि न पार्यते, भास्वरत्वात्, पुनरप्याह भरतः—तस्याकृतिमात्रेणापि अस्माकं कौतुकं, तन्निदर्श्यतां, देवराज आह—त्वमुत्तमपुरुष इतिकृत्वा एकमङ्गावयवं दर्शयामीत्यभिधाय योग्यालङ्कारविभूषितां अङ्गुलीमत्यन्तभास्वरामदर्शयत्, दृष्ट्वा च तां भरतोऽतीव मुमुदे, शक्राङ्गुलीं च स्थापयित्वा महिमामष्टाहिकां चक्रे, ततःप्रभृति शक्रोत्सवप्रवृत्त इति। भरतश्च श्रावकानाहूय उक्तवान्—भवद्भिः प्रतिदिनं मदीयं भोक्तव्यं, कृष्यादि च न कार्यं, स्वाध्यायादिपरैरासितव्यं, भुक्ते च मदीयगृहद्वारासन्नव्यवस्थितैः वक्तव्यम्—जितो भवान्

१ इमनजावितिपुंस्त्वापत्तौ औणादिक इमनि रूप, बाहुल्याद् अनुक्तान्मद्रे, तथा च हजनिभ्यामिमन्निति सूत्रेणेमन्, दीर्घादिरत्वप्रस्तुत एव *श्राव मह० + ०मात्रेऽपि

वर्धते भयं तस्मान्मा हन मा हनेति. ते तथैव कृतवन्तः. भरतश्च रतिसागरावगाढत्वात् प्रमत्तत्वात् तच्छब्दाकर्णनोत्तरकालमेव केनाहं जित इति, आः ज्ञातं–कषायैः, तेभ्य एव च वर्धते भयमित्यालोचनापूर्वं संवेगं यातवान् इति। अत्रान्तरे लोकबाहुल्यात् सूपकाराः पाकं कर्तुमशक्नुवन्तो भरताय निवेदितवन्तः–नेह ज्ञायते–कः श्रावकः को वा नेति. लोकस्य प्रचुरत्वात्, आह भरतः–पृच्छापूर्वकं देयमिति। ततस्तान् पृष्टवन्तस्ते–को भवान् ?, श्रावकः, श्रावकाणां कति व्रतानि ?, स आह—श्रावकाणां न सन्ति व्रतानि, किन्त्वस्माकं पञ्चाणुव्रतानि, कति शिक्षाव्रतानि ?, ते उक्तवन्तः–सप्त शिक्षाव्रतानि, य एवंभूतास्ते राज्ञो निवेदिताः. स च काकिणीरत्नेन तान् लाञ्छितवान्, पुनः षण्मासेन येऽन्ये भवन्ति तानपि लाञ्छितवान्, षण्मासकालादनुयोगं कृतवान्, एवं ब्राह्मणाः संजाता इति। ते च स्वसुतान् साधुभ्यो दत्तवन्तः, ते च प्रव्रज्या चक्रुः, परीषहभीरवस्तु श्रावका एवासन्निति। इयं च भरतराज्यस्थितिः, आदित्ययशसस्तु काकिणीरत्नं नासीत्, सुवर्णमयानि यज्ञोपवीतानि कृतवान्, महायशःप्रभृतयस्तु केचन रूप्यमयानि, केचन विचित्रपट्टसूत्रमयानि, इत्येवं यज्ञोपवीतप्रसिद्धिः। अमुमेवार्थं समोसरणेत्यादिगाथया प्रतिपादयति—

**समुसरण भत्त उग्गह अंगुलि झय सक्क सावया अहिआ। जेआ वड्ढइ कागिणिलंछण अणुसज्जणा अट्ठ ॥ ३६२ ॥**

गमनिका—समवसरणं भगवतोऽष्टापदे खल्वासीत्, भक्तं भरतेनानीतं, तदग्रहणोन्माथिते सति भरते देवेशो भगवन्तमवग्रहं पृष्टवान्, भगवांश्च तस्मै प्रतिपादितवान्। 'अंगुलि झय'त्ति भरतनृपतिना देवलोकनिवासिरूपपृच्छायां कृतायां इन्द्रेण अङ्गुलिः प्रदर्शिता, तत एवारभ्य ध्वजोत्सवः प्रवृत्तः। 'सक्क'त्ति भरतनृपतिना किमनेनाहारेण कार्यमिति पृष्टः शक्रोऽभिहितवान्–त्वदधिकेभ्यो दीयतामिति, पर्यालोचयता ज्ञातं–श्रावका अधिका इति। 'जेया वड्ढइत्ति' प्राकृतशैल्या 'जितो भवान् वर्धते भयं' भुक्तोत्तरकालं ते उक्तवन्तः, 'कागिणिलंछणत्ति' प्रचुरत्वात् काकिणीरत्नेन लाञ्छनं–चिह्नं तेषां कृतमासीत् 'अणुसज्जणा अट्ठ'त्ति अष्टौ पुरुषान् यावदयं धर्मः प्रवृत्तः, अष्टौ वा तीर्थकरान् यावदिति गाथार्थः॥ तत ऊर्ध्वं मिथ्यात्वमुपगता इति ॥ ३६२ ॥

**राया आइच्चजसो महाजसे अइबले अ बलभद्दे। बलविरिए कत्तविरिए जलविरिए दंडविरिए य ॥ ३६३ ॥**

भावार्थः सुगम एवेति गाथार्थः ॥

**एएहिं अद्धभरहं सयलं भुत्तं सिरेण धरिओ अ। पवरो जिणिंदमउडो सेसेहिं न चाइओ वोढुं ॥ ३६४ ॥**

गमनिका—एभिरर्धभरतं सकलं भुक्तं, शिरसा धृतश्च, कोऽसावित्याह—[*]प्रवरो जिनेन्द्रमुकुटो देवेन्द्रोपनीतः शेषैः–नरपतिभिः न शकितो वोढुं, महाप्रमाणत्वादिति गाथार्थः ॥ ३६४ ॥

**अस्सावगपडिसेहो छट्ठे छट्ठे अ मासि अणुओगो। कालेण य मिच्छत्तं जिणंतरे साहुवोच्छेओ ॥ ३६५ ॥**

गमनिका—अश्रावकाणां प्रतिषेधः कृतः, ऊर्ध्वमपि षष्ठे षष्ठे मासे अनुयोगो बभूव, अनुयोगः–परीक्षा, कालेन गच्छता मिथ्यात्वमुपगताः, कदा ?, नवमजिनान्तरे, किमिति ?, यतस्तत्र साधुव्यवच्छेद आसीदिति गाथार्थः ॥ ३६५ ॥ साम्प्रतमुक्तानुक्तार्थप्रतिपादनाय संग्रहगाथामाह—

---

[*] प्रथमो

**दाणं च माहणाणं १ वेए कासी अ २ पुच्छ ३ निव्वाणं ४।**
**कुंडा ५ थूभ ६ जिणहरे ७ कविलो ८ भरहस्स दिक्खा य ९ ॥ ३६६ ॥ (मूलदारगाहा)**

गमनिका—दानं च माहनानां लोको दातुं प्रवृत्तो, भरतपूजितत्वात्। 'वेदे कासी अ'त्ति आर्यान् वेदान् कृतवांश्च भरत एव, तत्स्वाध्यायनिमित्तमिति, तीर्थकृत्स्तुतिरूपान् श्रावकधर्मप्रतिपादकांश्च, अनार्यास्तु पश्चात् सुलसायाज्ञवल्क्यादिभिः कृता इति। 'पुच्छ'त्ति भरतो भगवन्तमष्टापदमवसृतमेव पृष्टवान्–यादृग्भूता यूयं एवंविधास्तीर्थकृतः कियन्तः खल्विह भविष्यन्तीत्यादि। 'णिव्वाण'त्ति भगवानष्टापदे निर्वाणं प्राप्तः, देवैरग्निकुण्डानि कृतानि, स्तूपाः कृताः, जिनगृहं भरतश्चकार, कपिलो मरीचिसकाशे निष्क्रान्तः, भरतस्य दीक्षा च संवृत्तेति समुदायार्थः ॥ ३६६ ॥ अवयवार्थं उच्यते—आद्यावयवद्वयं व्याख्यातमेव, पृच्छावयवार्थं तु 'पुणरवि' गाथेत्यादिना आह—

**पुणरवि अ समोसरणे पुच्छीअ जिणं तु चक्किणो भरहे। अप्पुट्ठो अ दसारे तित्थयरो को इहं भरहे ? ॥ ३६७ ॥**

गमनिका—पुनरपि च समवसरणे पृष्टवांश्च जिनं तु च[*]क्रवर्त्तिनः भरतः, चक्रवर्त्तिन इत्युपलक्षणं तीर्थकृतश्चेति, भरतविशेषणं वा चक्री भरतस्तीर्थकरादीन् पृष्टवान्। पाठान्तरं वा 'पुच्छीय जिणे य चक्किणो भरहे' पृष्टवान् जिनान् चक्रवर्त्तिनश्च भरतः, चशब्दस्य व्यवहितः संबन्धः, भगवानपि तान् कथितवान्, तथा अपृष्टश्च दशारान्, तथा तीर्थकरः क इह भरतेऽस्यां परिषदीति पृष्टवान्, भगवानपि मरीचिं कथितवान् इति गाथाक्षरार्थः ॥ ३६७ ॥ तथा चाह निर्युक्तिकारः—

---

[*] चक्रवर्ती

जिणचक्किदसाराणं वण्ण १ पमाणाइं २ नाम ३ गोत्ताइं ४ ।
आऊ ५ पुर ६ माइ ७ पियरो ८ परियाय ९ गई य १० साहीअ ॥ ३६८ ॥ (दारगाहा)

गमनिका—'जिनचक्रिदशाराणा' जिनचक्रवर्त्तिवासुदेवानामित्यर्थः, वर्णप्रमाणानि तथा नामगोत्राणि तथा आयुःपुराणि मातापितरौ यथासम्भवं पर्यायं गतिं च, चशब्दात् जिनानामन्तराणि च शिष्यान् इति द्वारगाथासमासार्थः ॥ ३६८ ॥ अवयवार्थं तु वक्ष्यामः । तत्र प्रश्नावयवमधिकृत्य तावदाह भाष्यकारः—

जारिसया लोअगुरू भरहे वासंमि केवली तुब्भे ।
एरिसया कइ अन्ने ताया ! होहिंति तित्थयरा ? ॥ ३८ ॥ (भाष्यम्)

व्याख्या—यादृशा लोकगुरवो भारते वर्षे केवलिनो यूयं, ईदृशाः कियन्तोऽन्येऽत्रैव तात ! भविष्यन्ति तीर्थकराः ? इति गाथार्थः ॥ ३८ ॥

अह भणइ जिणवरिंदो भरहे वासंमि जारिसो अहयं। एरिसया तेवीसं अण्णे होहिंति तित्थयरा ॥ ३६९ ॥

निगदसिद्धा ॥ ते[+] चैवं—

होही अजिओ संभव अभिणंदण सुमइ सुप्पभ सुपा[†]सो। ससि पुप्फदंत सीअल सिज्जंसो वासुपुज्जो अ ॥३७०॥
विमलमणंतइ धम्मो संती कुंथू अरो अ मल्ली अ । मुणिसुव्वय नमि नेमी पासो तह वद्धमाणो अ ॥ ३७१ ॥

---

[*] भरते. [+] चेति [†] सुपासे

भावार्थः सुगम एव ॥

अह भणइ नरवरिंदो भरहे वासंमि जारिसो उ अहं। तारिसया कइ अण्णे ताया होहिंति रायाणो ? ॥ ३७२ ॥

गमनिका—अथ भणति नरवरेन्द्रो-भरतः, भारते वर्षे यादृशस्त्वहं तादृशाः कत्यन्ये तात ! भविष्यन्ति राजान इति गाथार्थः ॥ ३७२ ॥

अह भणइ जिणवरिंदो जारिसओ तं नरिंदसद्दूलो । एरिसया एक्कारस अण्णे होहिंति रायाणो ॥ ३७३ ॥

गमनिका—अथ भणति जिनवरेन्द्रो-यादृशस्त्वं नरेन्द्रशार्दूलः, शार्दूलः-सिंहपर्यायः, ईदृशा एकादश अन्ये भविष्यन्ति राजानः ॥ ३७३ ॥ ते चैते—

होही सगरो मघवं सणंकुमारो य रायसद्दूलो । संती कुंथू अ अरो होई सुभूमो य कोरव्वो ॥ ३७४ ॥
णवमो अ महापउमो हरिसेणो चेव रायसद्दूलो । जयनामो अ नरवई बारसमो बंभदत्तो अ ॥ ३७५ ॥

गाथाद्वयं निगदसिद्धमेव । यदुक्तम् 'अपृष्टश्च दशारान् कथितवान्' तदभिधित्सुराह भाष्यकार:—

होहिंति वासुदेवा नव अण्णे नीलपीअकोसिज्जा। हलमुसलचक्कजोही सतालगरुडज्झया दो दो॥३९॥(भाष्यम्)

व्याख्या—भविष्यन्ति वासुदेवा नव बलदेवाश्चानुक्ता अप्यत्र तत्सहचरत्वात् द्रष्टव्याः, यतो वक्ष्यति 'सतालगरुडज्झया दो दो', ते च सर्वे बलदेववासुदेवा यथासंख्यं नीलानि च पीतानि च कौशेयानि-वस्त्राणि येषां ते तथाविधाः,

---

[*] तादृश [+] हवइ [†] ०ज्झयाए

यथासंख्यमेव हलमुशलचक्रयोधिनः-हलमुशलयोधिनो बलदेवाः चक्रयोधिनो वासुदेवा इति, सह तालगरुडध्वजाभ्यां वर्त्तन्त इति सतालगरुडध्वजाः । एते च भवन्तो युगपद् द्वौ द्वौ भविष्यतः, बलदेववासुदेवाविति गाथार्थः ॥ वासुदेवाभिधानप्रतिपादनायाह—

तिविट्ठू अ १ दिविट्ठू २ सयंभु ३ पुरिसुत्तमे ४ पुरिससीहे ५ ।
तह पुरिसपुंडरीए ६ दत्ते ७ नारायणे ८ कण्हे ९ ॥ ४० ॥ (भाष्यम्)

निगदसिद्धा ॥ अधुना बलदेवानामभिधानप्रतिपादनायाह—

अयले १ विजए २ भद्दे ३, सुप्पभे ४ अ सुदंसणे ५ ।
आणंदे ६ णंदणे ७ पउमे ८, रामे ९ आवि अपच्छिमे ॥ ४१ ॥ (भाष्यम्)

निगदसिद्धा ॥ वासुदेवशत्रुप्रतिपादनायाह—

आसग्गीवे १ तारय २ मेरय ३ महुकेढवे ४ निसुंभे ५ अ ।
बलि ६ पहराए ७ तह रावणे ८ अ नवमे जरासिंधू ॥ ४२ ॥ (भाष्यम्)

निगदसिद्धा एव ॥

एए खलु पडिसत्तू कित्तीपुरिसाण वासुदेवाणं । सव्वे अ चक्कजोही सव्वे अ हया सचक्केहिं ॥ ४३ ॥ (भाष्यम्)

गमनिका—एते खलु प्रतिशत्रवः-एते एव खलुशब्दस्य अवधारणार्थत्वात् नान्ये, कीर्त्तिपुरुषाणां वासुदेवानां, सर्वे चक्र-

योधिनः, सर्वे च हताः स्वचक्रैरिति—अतस्तान्येव तच्चक्राणि वासुदेवव्यापत्तये क्षिप्तानि तैः, पुण्योदयात् वासुदेवं प्रणम्य तानेव व्यापादयन्ति इति गाथार्थः ॥ एवं तावत्प्रागुपन्यस्तगाथाया वर्णादिद्वारोपन्यासं परित्यज्य असंमोहार्थमुत्क्रमेण जिनादीना नामद्वारमुक्तं, पारभविकं चैषा वर्णनामनगरमातृपितृपुरादिकं प्रथमानुयोगतोऽवसेयं, इह विस्तरभयान्नोक्तमिति ॥ साम्प्रतं तीर्थकरवर्णप्रतिपादनायाह—

**पउमाभवासुपुज्जा रत्ता ससिपुप्फदंत ससिगोरा । सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥ ३७६ ॥**
**वरकणगतविअगोरा सोलस तित्थंकरा मुणेयव्वा । एसो वण्णविभागो चउवीसाए जिणवराणं ॥ ३७७ ॥**

गाथाद्वयं सूत्रसिद्धमेव ॥ साम्प्रतं तीर्थकराणामेव प्रमाणाभिधित्सयाह—

**पंचेव* १ अद्धपंचम २ चत्तार ३ द्धुट्ठ ४ तह तिगं ५ चेव ।**
**अड्ढाइज्जा ६ दुण्णि ७ अ दिवड्ढ ८ मेगं धणुसयं ९ च ॥ ३७८ ॥**
**नउई १० असीइ ११ सत्तरि १२ सट्ठी १३ पण्णास १४ होइ नायव्वा ।**
**पणयाल १५ चत्त १६ पणतीस १७ तीसा १८ पणवीस १९ वीसा २० य ॥ ३७९ ॥**
**पण्णरस २१ दस धणूणि य २२, नव पासो २३ सत्तरयणिओ वीरो ।**
**नामा पुव्वुत्ता खलु तित्थयराणं मुणेयव्वा ॥ ३८० ॥**

---

* वसभो पचधणुसय पासो नव सत्तरयणिओ वीरो । सेसट्ठ पच अट्ठ य, पण्णा दस पच परिहीणा ॥ १ ॥ ( प्र० अध्या० ).

एतास्तिस्रोऽपि पाठसिद्धा एव ॥ ३७८–३७९–३८० ॥ साम्प्रतं भगवतामेव गोत्राणि प्रतिपादयन्नाह—

**मुणिसुव्वओ अ अरिहा अरिट्ठनेमी अ गोअमसगुत्ता । सेसा तित्थयरा खलु कासवगुत्ता मुणेयव्वा ॥ ३८१ ॥**

निगदसिद्धा ॥ आयुष्कानि तु प्राक्प्रतिपादितान्येवेति न प्रतन्यन्ते, भगवतामेव पुरप्रतिपादनाय गाथात्रितयमाह—

**इक्खाग भूमि १ उज्झा २ सावत्थि ३ विणिअ ४ कोसलपुरं ५ च ।**
**कोसंबी ६ वाणारसी ७ चंदाणण ८ तह य कायंदी ९ ॥ ३८२ ॥**
**भद्दिलपुर १० सीहपुरं ११ चंपा १२ कंपिल्ल १३ उज्झ १४ रयणपुरं १५ ।**
**तिण्णेव गयपुरंमी १८ मिहिला १९ तह चेव रायगिहं २० ॥ ३८३ ॥**
**मिहिला २१ सोरिअनयरं २२ वाणारसि २३ तह य होइ कुंडपुरं ।**
**उसभाईण जिणाणं जम्मणभूमी जहासंखं ॥ ३८४ ॥**

निगदसिद्धाः ॥ भगवतामेव मातृप्रतिपादनायाह—

**मरुदेवि १ विजय २ सेणा ३ सिद्धत्था ४ मंगला ५ सुसीमा ६ य ।**
**पुह्वी ७ लक्खण ८ रामा ९ नंदा १० विण्हू ११ जया १२ रामा १३ ॥ ३८५ ॥**
**सुजसा १४ सुव्वया १५ अइरा १६, सिरी १७ देवी १८ पभावई १९ ।**
**पउमावई २० अ वप्पा २१ अ, सिव २२ वम्मा २३ तिसला २४ इअ ॥ ३८६ ॥**

गाथाद्वयं निगदसिद्धमेव ॥ भगवतामेव पितृप्रतिपादनायाह—

**नाभी १ जिअसत्तू २ आ, जियारी ३ संवरे ४ इअ । मेहे ५ धरे ६ पइट्ठे ७ अ, महसेणे ८ अखत्तिए ॥३८७॥**
**सुग्गीवे ९ दढरहे १० विण्हू ११, वसुपूज्जे १२ अ अखत्तिए ।**
**कयवम्मा १३ सीहसेणे १४ अ, भाणू १५ विससेणे १६ इअ ॥ ३८८ ॥**
**सूरे १७ सुदंसणे १८ कुंभे १९ सुमित्तु २० विजए २१ समुद्दविजए २२ अ ।**
**राया अ अससेणे २३ सिद्धत्थेऽवि य २४ खत्तिए ॥ ३८९ ॥**

निगदसिद्धाः ॥ पर्यायो—गृहस्थादिपर्यायो भगवतामुक्त एव तथैव द्रष्टव्यः । साम्प्रतं भगवतामेव गतिप्रतिपादनायाह—

**सव्वेऽवि गया मुक्खं जाइजरामरणबंधणविमुक्का । तित्थयरा भगवंतो सासयसुक्खं निराबाहं ॥ ३९० ॥**

निगदसिद्धा ॥ एव तावत्तीर्थकरान् अङ्गीकृत्य प्रतिद्वारगाथा व्याख्याता, इदानीं चक्रवर्त्तिनः अङ्गीकृत्य व्याख्यायते—एतेषामपि पूर्वभववक्तव्यतानिबद्धं च्यवनादि प्रथमानुयोगादवसेयं, साम्प्रतं चक्रवर्त्तिवर्णप्रमाणप्रतिपादनायाह—

**सव्वेऽवि एगवण्णा निम्मलकणगप्पभा मुणेयव्वा । छक्खंडभरहसामी तेसिं पमाणं अओ वुच्छं ॥ ३९१ ॥**
**पंचसय १ अद्धपंचम २ बायालीसा य अद्धधणुअं च ३ । इगयाल धणुस्सद्धं ४ च चउत्थे पंचमे चत्ता ५ ॥ ३९२ ॥**
**पणतीसा ६ तीसा ७ पुण अट्ठावीसा ८ य वीसइ ९ धणूणि ।**
**पण्णरस १० बारसेव य ११ अपच्छिमो सत्त य धणूणि १२ ॥ ३९३ ॥**

निगदसिद्धाः ॥ नामानि प्राक्प्रतिपादितान्येव, साम्प्रतं चक्रवर्त्तिगोत्रप्रतिपादनायाह—

कासवगुत्ता सव्वे चउदसरयणाहिवा समक्खाया। देविंदवंदिएहिं जिणेहिं जिअरागदोसेहिं ॥ ३९४॥

सूत्रसिद्धा ॥ साम्प्रतं चक्रवर्त्यायुष्कप्रतिपादनायाह—

चउरासीई १ बावत्तरी अ पुव्वाण सयसहस्साइं २।
पंच ३ य तिण्णि अ ४ एगं च ५ सयसहस्सा उ वासाणं ॥ ३९५॥
पंचाणउइ सहस्सा ६ चउरासीई अ ७ अट्ठमे सट्ठी ८।
तीसा ९ य दस १० य तिण्णि ११ अ अपच्छिमे सत्तवाससया १२॥ ३९६॥

गाथाद्वयं पठितसिद्धम् ॥ इदानीं चक्रवर्त्तिनां पुरप्रतिपादनायाह—

जम्मण विणीअ १ उज्झा २ सावत्थी ३ पंच हत्थिणपुरंमि ८।
वाणारसि ९ कंपिल्ले १० रायगिहे ११ चेव कंपिल्ले १२॥ ३९७॥

निगदसिद्धा एव ॥ साम्प्रतं चक्रवर्त्तिमातृप्रतिपादनायाह—

सुमंगला १ जसवई २ भद्दा ३ सहदेवि ४ अइर ५ सिरि ६ देवी ७।
तारा ८ जाला ९ मेरा १० य वप्पगा ११ तह य चूलणी अ ॥ ३९८॥

निगदसिद्धा ॥ साम्प्रतं चक्रवर्त्तिपितृप्रतिपादनायाह—

उसभे १ सुमित्तविजए २ समुद्दविजए ३ अ अस्ससेणे अ ४।
तह वीससेण ५ सूरे ६ सुदंसणे ७ कत्तविरिए ८ अ ॥ ३९९॥
पउमुत्तरे ९ महाहरि १० विजए राया ११ तहेव बंभे १२ अ।
ओसप्पिणी इमीसे पिउनामा चक्कवट्टीणं ॥ ४००॥

गाथाद्वयं निगदसिद्धमेव ॥ पर्यायः केषाञ्चित् प्रथमानुयोगतोऽवसेयः, केषाञ्चित् प्रव्रज्याऽभावात् न विद्यत एवेति ॥ साम्प्रतं चक्रवर्त्तिगतिप्रतिपादनायाह—

अट्ठेव गया मोक्खं सुभुमो बंभो अ सत्तमिं पुढविं। मघवं सणंकुमारो सणंकुमारं गया कप्पं ॥ ४०१॥

निगदसिद्धा ॥ एवं तावच्चक्रवर्त्तिनोऽप्यधिकृत्य व्याख्याता प्रतिद्वारगाथा, इदानीं वासुदेवबलदेवाङ्गीकरणतो व्याख्यायते—एतेषामपि च पूर्वभववक्तव्यतानिबद्धं च्यवनादि प्रथमानुयोगत एवावसेयं, साम्प्रतं वासुदेवादीनां वर्णप्रमाणप्रतिपादनायाह—

वण्णेण वासुदेवा सव्वे नीला बला य सुक्किलया। एएसि देहमाणं वुच्छामि अहाणुपुव्वीए ॥ ४०२॥

पढमो धणूणसीई १ सत्तरि २ सट्ठी ३ अ पण्ण ४ पणयाला ५।
अउणत्तीसं च धणू ६ छव्वीसा ७ सोलस ८ दसेव ९॥ ४०३॥

गाथाद्वयं निगदसिद्धं ॥ नामानि प्रागभिहितान्येव। साम्प्रतं वासुदेवादीनां गोत्रप्रतिपादनायाह—

बलदेववासुदेवा अट्ठेव हवंति गोयमसगुत्ता। नारायणपउमा पुण कासवगुत्ता मुणेअव्वा ॥ ४०४॥

निगदसिद्धा ॥ वासुदेवबलदेवानां यथोपन्यासमायुःप्रतिपादनायाह—

चउरासीई १ बिसत्तरि २ सट्ठी ३ तीसा य ४ दस ५ य लक्खाइं।
पण्णट्ठि सहस्साइं ६ छप्पण्णा ७ बारसे ८ गं च ९॥ ४०५॥

पंचासीई १ पण्णत्तरी अ २ पण्णट्ठि ३ पंचवण्णा ४ य। सत्तरस सयसहस्सा ५ पंचमए आउअं होइ ॥४०६॥
पंचासीइ सहस्सा ६ पण्णट्ठी ७ तह य चेव पण्णरस ८। बारस सयाइं ९ आउं बलदेवाणं जहासंखं ॥ ४०७॥

निगदसिद्धाः ॥ साम्प्रतममीषामेव पुराणि प्रतिपाद्यन्ते—तत्र—

पोअण १ बारवइतिगं ४ अस्सपुरं ५ तह य होइ चक्कपुरं ६।
वाणारसि ७ रायगिहं ८ अपच्छिमो जाओ महुराए ९॥ ४०८॥

निगदसिद्धा ॥ एतेषां मातापितृप्रतिपादनायाह—

मिगावई १ उमा चेव २, पुहवी ३ सीआ य ४ अम्मया ५।
लच्छीमई ६ सेसमई ७, केगमई ८ देवई ९ इअ ॥ ४०९॥
भद्द १ सुभद्दा २ सुप्पभ ३ सुदंसणा ४ विजय ५ वेजयंती ६ अ।
तह य जयंती ७ अपराजिआ ८ य तह रोहिणी ९ चेव ॥ ४१०॥

हवइ पयावइ १ बंभो २ रुद्दो ३ सोमो ४ सिवो ५ महसिवो ६ अ ।
अग्गिसिहे ७ अ दसरहे ८ नवमे भणिए अ वसुदेवे ९ ॥ ४११ ॥

निगदसिद्धाः ॥ एतेषामेव पर्यायनक्तव्यतामभिधित्सुराह—

परिआओ पव्वज्जाऽभावाओ नत्थि वासुदेवाणं । होइ बलाणं सो पुण पढमऽणुओगाओ णायव्वो ॥ ४१२ ॥

निगदसिद्धा एव ॥ एतेषामेव गतिं प्रतिपादयन्नाह—

एगो अ सत्तमाए पंच य छट्ठीएँ पंचमी एगो । एगो अ चउत्थीए कण्हो पुण तच्चपुढवीएँ ॥ ४१३ ॥

गमनिका—एकश्च सप्तम्यां पञ्च च षष्ठ्यां पञ्चम्यामेकः एकश्च चतुर्थ्यां कृष्णः पुनस्तृतीयपृथिव्यां यास्यति गतो वेति सर्वत्र क्रियाध्याहारः कार्यः, भावार्थः स्पष्ट एव ॥ ४१३ ॥ बलदेवगतिप्रतिपिपादयिषयाऽऽह—

* वीसभूई १ पव्वइए २ धणदत्त ३ समुद्ददत्त ४ सेवाले ५ । पियमित्त ६ ललिअमित्ते ७ पुणव्वसू ८ गंगदत्ते ९ अ ॥ १ ॥ एयाइ नामाइं पुव्वभवे आसि वासुदेवाणं । इत्तो बलदेवाण जहक्कम कित्तइस्सामि ॥ २ ॥ विस्सनंदी १ सुबुद्धी २ अ सागरदत्ते ३ असोअ ४ ललिए ५ अ । वाराह ६ धणसेणे ७ अवराइअ ८ रायललिए य ॥ ३ ॥ सभूअ १ सुभद्द २ सुदसणे ३ अ सिज्जंस ४ कण्ह ५ गंगे ६ अ । सागर ७ समुद्दनामे ८ दमसेणे ९ अ अपच्छिमे ॥ ४ ॥ एए धम्मायरिआ कित्तीपुरिमाण वासुदेवाण । पुव्वभवे आसीआ जत्थ निआणाइ कासी अ ॥ ५ ॥ महुरा १ य कणगवत्थू २ सावत्थी ३ पोअणं ४ च रायगिह ५ । कायंदी ६ मिहिलावि य ७ वाणारसि ८ हत्थिणपुर ९ च ॥ ६ ॥ गावी जूए संगामे इत्थी पाराइए अ रंगमि । भज्जाणुरागगुट्ठी परइड्ढी माउगा इअ ॥ ७ ॥ महसुक्का पाणय लंतगाउ महसारओ अ माहिंदा । बंभा सोहम्म सणकुमार नवमो महासुक्का ॥ ८ ॥ तिण्णेवणुत्तरेहिं तिण्णेव भवे तहा महासुक्का । अवसेसा बलदेवा अणंतर बंभलोगचुआ ॥ ९ ॥ ( प्र० अ०या० )

अट्ठंतगडा रामा एगो पुण बंभलोगकप्पंमि । उवँवण्णु तओ चइउं सिज्झिस्सइ भारहे वासे ॥ ४१४ ॥

गमनिका—अष्ट अन्तकृतो रामाः, अन्तकृत इति ज्ञानावरणीयादिकर्मान्तकृतः, सिद्धिं गता इत्यर्थः । एकः पुनः ब्रह्मलोककल्पे उत्पत्स्यते उत्पन्नो वेति क्रिया । ततश्च ब्रह्मलोकाच्च्युत्वा सेत्स्यति मोक्षं यास्यति भारते वर्षे इति गाथार्थः ॥ ४१४ ॥ आह—किमिति सर्वे वासुदेवाः खल्वधोगामिनो रामाश्चोर्ध्वगामिन इति ?, आह—

अणिआणकडा रामा सव्वेऽवि अ केसवा निआणकडा । उड्ढंगामी रामा केसव सव्वे अहोगामी ॥ ४१५ ॥

गमनिका—अनिदानकृतो रामाः, सर्वे अपि च केशवा निदानकृतः, ऊर्ध्वगामिनो रामाः, केशवाः सर्वे अधोगामिनः । भावार्थः सुगमो, नवरं प्राकृतशैल्या पूर्वापरनिपातः 'अनिदानकृता रामाः' इति, अन्यथा अकृतनिदाना रामा इति द्रष्टव्यं, केशवास्तु कृतनिदाना इति गाथार्थः ॥४१५॥ एवं तावदधिकृतद्वारगाथा 'जिणचक्किदसाराण'मित्यादिलक्षणा प्रपञ्चतो व्याख्यातेति । साम्प्रतं यश्चक्रवर्त्ती वासुदेवो वा यस्मिन् जिने जिनान्तरे वाऽऽसीत् स प्रतिपाद्यत इत्यनेन संबन्धेन जिनान्तरागमनं, तत्रापि तावत्प्रसङ्गत एव कालतो जिनान्तराणि निर्दिश्यन्ते—

उसभो वरवसभगई ततिअसमापच्छिमंमि कालंमि ।
उप्पण्णो पढमजिणो भरहपिआ भारहे वासे ॥ १ ॥

* ववत्थु तत्थ भोए, भोत्तु अयरोवमा दस उ ॥ १ ॥ तत्तो अ चइत्ताण इहेव उस्सप्पिणीइ भरहंमि । भवसिद्धिआ अ भयव सिज्झिस्सइ कण्हतित्थमि ॥ ( सार्धा पाठान्तररूपा )

पण्णासा लक्खेहिं कोडीणं सागराण उसभाओ ।
उप्पण्णो अजिअजिणो ततिओ तीसाएँ लक्खेहिं ॥ २ ॥
जिणवसहसंभवाओ दसहि उ लक्खेहि अयरकोडीणं ।
अभिनंदणो उ भगवं एवइकालेण उप्पण्णो ॥ ३ ॥
अभिणंदणाउ सुमती नवहि उ लक्खेहि अयरकोडीणं ।
उप्पण्णो सुहपुण्णो सुप्पभनामस्स वोच्छामि ॥ ४ ॥

णउईइ य सहस्सेहिं कोडीणं सागराण पुण्णाणं । सुमइजिणाउ पउमो एवतिकालेण उप्पण्णो ॥ ५ ॥
पउमप्पहनामाओ नवहि सहस्सेहि अयरकोडीणं । कालेणेवइएणं सुपासनामो समुप्पण्णो ॥ ६ ॥
कोडीसएहि नवहि उ सुपासनामा जिणो समुप्पण्णो । चंदप्पभो पभाए पभासयंतो उ तेलोकं ॥ ७ ॥
णउईए कोडीहिं ससीउ सुविहीजिणो समुप्पण्णो । सुविहिजिणाओ नवहि उ कोडीहिं सीअलो जाओ ॥ ८ ॥
सीअलजिणाउ भयवं सिज्जंसो सागराण कोडीए । सागरसयऊणाए वरिसेहिं तहा इमेहिं तु ॥ ९ ॥
छव्वीसाएँ सहस्सेहिं चेव छावट्ठि सयसहस्सेहिं । एतेहिं ऊणिआ खलु कोडी मग्गिल्लिआ होइ ॥ १० ॥
चउपण्णा अयराणं सिज्जंसाओ जिणो उ वसुपुज्जो । वसुपुज्जाओ विमलो तीसहि अयरेहि उप्पण्णो ॥ ११ ॥

विमलजिणा उप्पण्णो नवहिँ अयरेहिँणंतइजिणोऽवि। चउसागरनामेहिँ अणंतईतो जिणो धम्मो ॥ १२ ॥
धम्मजिणाओ संती तिहि उ तिचउभागपलिअऊणेहिँ। अयरेहि समुप्पण्णो पलिअद्धेणं तु कुंथुजिणो ॥ १३॥
पलिअचउब्भाएणं कोडिसहस्सूणएण वासाणं। कुंथूओ अरनामो कोडिसहस्सेण मल्लिजिणो ॥ १४ ॥
मल्लिजिणाओ मुणिसुव्वओ य चउपण्णवासलक्खेहिँ। सुव्वयनामाओ नमी लक्खेहिँ छहि उ उप्पण्णो ॥१५॥
पंचहिँ लक्खेहिँ तओ अरिट्ठनेमी जिणो समुप्पण्णो। तेसीइसहस्सेहिँ सएहि अद्धट्ठमेहिँ च ॥ १६ ॥
नेमीओ पासजिणो पासजिणाओ य होइ वीरजिणो। अड्डाइज्जसएहिँ गएहिँ चरमो समुप्पण्णो॥ १७ ॥

इयमत्र स्थापना—उसभाओ कोडिलक्ख ५० अजिओ, कोडिलक्ख ३० संभवो, कोडिलक्ख १० अभिनंदणो, कोडिलक्ख ५ सुमती, कोडीओ नउईओ सहस्सेहिं ९० पउमप्पहो. कोडीनवसहस्सेहिं ९ सुपासो, कोडीनवसएहिं ९ चंदप्पभो, कोडीओ णउइओ ९० पुप्फदंतो, कोडीओ णवहि उ ९ सीअलो, कोडीऊणा १०० सा० ६६२६००० वरिसाइं सेज्जंसो, सागरोपमा ५४ वासुपुज्जो, तीससागराइं ३० विमलो, सागरोवमाइं ९ अणंतो, सागरोवमाइं ४ धम्मो, सागरोवमाइं ३ ऊणाइं पलिओवमचउभागेहिं तिहिं संती, पलिअद्धं २ कुंथू, पलियचउब्भाओ ऊणओ वासकोडीसहस्सेण १ अरो, वासकोडीसहस्सं १ मल्ली, वरिसलक्खचउपण्णा मुणिसुव्वओ, वरिसलक्ख ६ नमी, वरिसलक्ख ५ अरिट्ठनेमी, वरिससहस्सा ८३७५० पासो, वाससयाइं २५० वद्धमाणो। जिणंतराइं॥ साम्प्रतं चक्रवर्तिनोऽधिकृत्य जिनान्तराण्येव प्रतिपाद्यन्ते—तत्र—

उसभे भरहो अजिए सगरो मघवं सणंकुमारो अ।
धम्मस्स य संतिस्स य जिणंतरे चक्कवट्टिदुगं ॥ ४१६ ॥
संती कुंथू अ अरो अरहंता चेव चक्कवट्टी अ।
अरमल्लीअंतरे उ हवइ सुभूमो अ कोरव्वो ॥ ४१७ ॥
मुणिसुव्वए नमिंमि अ हुंति दुवे पउमनाभहरिसेणा।
नमिनेमिसु जयनामो अरिट्ठपासंतरे बंभो ॥ ४१८ ॥

इह च असंमोहार्थं सर्वेषामेव जिनचक्रवर्त्तिवासुदेवानां यो यस्मिन् जिनकालेऽन्तरे वा चक्रवर्त्ती वा वासुदेवो वा भविष्यति बभूव वा तस्य अनन्तरव्यावर्णितप्रमाणायुःसमन्वितस्य सुखपरिज्ञानार्थमयं प्रतिपादनोपायः—

बत्तीसं घरयाइं काउं तिरियायताहिं रेहाहिं। उड्ढाययाहिं काउं पंच घराइं तओ पढमे ॥ १ ॥ पन्नरस जिण निरन्तर सुण्णदुगं ति जिण सुण्णतियगं च। दो जिण सुण्ण जिणिंदो सुण्ण जिणो सुण्ण दोण्णि जिणा ॥ २ ॥ बितियपंतिठवणा—दो चक्कि सुण्ण तेरस पण चक्किसुण्ण चक्कि दो सुण्णा। चक्कि सुण्ण दु चक्की सुण्णं चक्की दु सुण्णं च ॥ ३ ॥ ततियपंतिठवणा—दस सुण्ण पंच केसव पण सुण्णं केसि सुण्ण केसी य। दो सुण्ण केसवोऽवि य सुण्णदुगं केसव ति सुण्णं ॥४॥ प्रमाणान्यायूंपि चामीषां प्रतिपादितान्येव। तानि पुनर्यथाक्रमं ऊर्ध्वायतरेखाभिरधोधोगृहद्वये स्थापनीयानीति। तत्र इयं स्थापना साम्प्रतं प्रदर्श्यते—

| | | | धनूंषि | पूर्वलक्षा |
|---|---|---|---|---|
| ऋषभ | भरत | ० | ५०० | ८४००००० |
| अजित | सगर | ० | ४५० | ७२ |
| संभव | ० | ० | ४०० | ६० |
| अभिनन्दन | ० | ० | ३५० | ५० |
| सुमति | ० | ० | ३०० | ४० |
| पद्मप्रभ | ० | ० | २५० | ३० |
| सुपार्श्व | ० | ० | २०० | २० |
| चन्द्रप्रभ | ० | ० | १५० | १० |
| सुविधि | ० | ० | १०० | २ |
| शीतल | ० | ० | ९० | १ |
| | | | | वर्षलक्ष |
| श्रेयास | ० | त्रिपृष्ठ | ८० | ८४००००० |
| वासुपूज्य. | ० | द्विपृष्ठ | ७० | ७२ |
| विमल | ० | स्वयम्भू | ६० | ६० |
| अनन्तः | ० | पुरुषोत्तम. | ५० | ३० |
| धर्म | ० | पुरुषसिंह | ४५ | १० |
| ० | मघवान् | ० | ४२॥ | ५ |
| ० | सनत्कुमार | ० | ४१॥ | ३ |
| शान्ति | शान्ति. | ० | ४० | १ |
| कुन्थु | कुन्थु | ० | ३५ | ९५००० |
| अर | अर | ० | ३० | ८४००० |
| ० | ० | पुरुषपुण्डरीक. | २९ | ६५००० |
| ० | सुभूम | ० | २८ | ६०००० |
| ० | ० | दत्त | २६ | ५६००० |
| मल्लि | ० | ० | २५ | ५५००० |
| सुव्रत | पद्म | ० | २० | ३०००० |
| ० | ० | नारायण | १६ | १२००० |
| नेमि | हरिषेण | ० | १५ | १०००० |
| ० | जय | ० | १२ | ३००० |
| नेमिः | ० | कृष्ण | १० | १००० |
| ० | ब्रह्मदत्त' | ० | ७ | ७०० |
| पार्श्व | ० | ० | ९ हस्ताः | १०० |
| वीर' | ० | ० | ७ हस्ता | ७२ |

उक्तसम्बन्धगाथात्रयगमनिका—ऋषभे तीर्थंकरे भरतश्चक्रवर्त्ती, तथा अजिते तीर्थंकरे सगरश्चक्रवर्त्ती भविष्यति एवं तीर्थकरोकानुवादः, सर्वत्र भविष्यत्कालानुरूपः क्रियाध्याहारः कार्यः, त्रिकालसूत्रप्रदर्शनार्थो वा भूतेनापि न दुष्यति, तथा चावोचत्—'मघवा सणंकुमारो सणंकुमारं गया कप्पं' इत्यादि । एवं सर्वत्र योज्यमिति । मघवान् सनत्कुमारश्च एतच्चक्रवर्त्तिद्वयं धर्मस्य शान्तेश्च अनयोरन्तरं तस्मिन् जिनान्तरे चक्रवर्त्तिद्वयं भविष्यत्यभवद्वेति गाथार्थः ॥ द्वितीयगाथागमनिका–शान्तिः कुन्थुश्चारः, एते त्रयोऽप्यशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तश्चैव चक्रवर्त्तिनश्च, तथा अरमहृयन्तरे तु भवति सुभूमश्च कौरव्यः, तुशब्दोऽन्तरविशेषणे, नान्तरमात्रे, किन्तु पुरुषपुण्डरीकदत्तवासुदेवद्वयमध्य-इति गाथार्थः ॥ तृतीयगाथागमनिका—मुनिसुव्रते तीर्थंकरे नमौ च भवतः द्वौ, कौ द्वौ?, पद्मनाभहरिषेणौ 'नमिनेमिसु जयनामो अरिट्ठपासंतरे बंभो' त्ति नमिश्च नेमी च नमिनेमिनौ, अन्तरग्रहणमभिसंबध्यते, ततश्च नमिनेम्यन्तरे जयनामाऽभवत्, अरिष्टग्रहणाद् अरिष्टनेमिः, पार्श्वेति पार्श्वस्वामी, अनयोरन्तरे ब्रह्मदत्तो भविष्यत्यभवद्वेति गाथार्थः ॥ ४१६-४१७-४१८ ॥ इदानीं वासुदेवो यो यत्तीर्थकरकालेऽन्तरे वा खल्वासीत् असौ प्रतिपाद्यते—

**पंचऽरहंते वंदंति केसवा पंच आणुपुव्वीए । सिज्जंस तिविट्ठाई धम्म पुरिससीहपेरंता ॥ ४१९ ॥**
**अरमल्लिअंतरे दुण्णि केसवा पुरिसपुंडरिअदत्ता । मुणिसुव्वयनमिअंतरि नारायण कण्हु नेमिंमि ॥ ४२० ॥**

गमनिका—पञ्च अर्हतः वन्दन्ते केशवाः, एतदुक्तं भवति—पञ्च केशवा अर्हतो वन्दन्ते, वन्दन्त इत्येतेषां सम्यक्त्वख्यापनार्थमिति । कियन्तोऽर्हन्तः? किमेकः द्वौ त्रयो वा?, नेत्याह—'पंच' पञ्चेति पञ्चैव, किं यथाकथञ्चित्? नेत्याह—'आनुपूर्व्या' परिपाट्या 'सिज्जंस तिविट्ठाई धम्म पुरिससीहपेरंता' श्रेयांसादीन् त्रिपृष्ठादयः धर्मपर्यन्तान् पुरुषसिंहपर्यन्ता इति, वन्दन्त इति शास्त्रकारवचनत्वात् वर्त्तमाननिर्देशः, पाठान्तरं वा 'पंचऽरिहंते वंदिंसु केसवा' इत्यादि गाथार्थः ॥ द्वितीयगाथागमनिका–अरश्च मल्लिश्च अरमल्ली तयोरन्तरम्–अपान्तरालं तस्मिन् द्वौ केशवौ भविष्यतः, कौ द्वौ इत्याह–पुरुषपुण्डरीकदत्तौ 'मुणिसुवयणमिअंतरे णारायणो' त्ति मुनिसुव्रतश्च नमिश्च मुनिसुव्रतनमी तयोरन्तरं मुनिसुव्रतनम्यन्तरं तस्मिन् नारायणो नाम वासुदेवो भविष्यति अभवद्वा । तथा 'कण्हो यँ नेमिंमि'त्ति कृष्णाभिधानश्चरमो वासुदेवो नेमितीर्थंकरे भविष्यति बभूव वेति गाथार्थः ॥ ४१९-४२० ॥ एवं तावत् चक्रवर्त्तिनो वासुदेवाश्च यो यज्जिनकाले अन्तरे वा स उक्त', साम्प्रतं चक्रवर्त्तिवासुदेवान्तराणि प्रतिपादयन्नाह—

**चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की । केसव चक्की केसव दु चक्की केसी अ चक्की अ ॥ ४२१ ॥**

गमनिका—प्रथममुक्तलक्षणकाले चक्रवर्त्तिद्वयं भविष्यति अभवद्वा, ततस्त्रिपृष्ठादिहरिपञ्चकं, पुनः पञ्चकं मघवादीना चक्रवर्त्तिनां, पुनः पुरुषपुण्डरीकः केशवः, ततः सुभूमाभिधानश्चक्रवर्ती, पुनर्दत्ताभिधानः केशवः, पुनः पद्मनामा चक्रवर्त्येव, पुनर्नारायणाभिधानः केशवः, पुनः हरिषेणजयनामानौ द्वौ चक्रवर्त्तिनौ, पुनः कृष्णनामा केशवः, पुनर्ब्रह्मदत्ताभिधानश्चक्रवर्तीति, क्रियायोगः सर्वत्र प्रथमपदवद् द्रष्टव्य इति गाथार्थः ॥ ४२१ ॥ उक्तमानुषङ्गिकं, प्रकृतं प्रस्तुमः—तत्र यदुक्तम् 'तित्थगरो को इहं भरहे!' त्ति तद्व्याचिख्यासयाऽऽह–मूलभाष्यकारः—

* कण्हु (इति स्यात्)

**अह भणइ नरवरिंदो ताय! इमीसित्तिआइ परिसाए ।**
**अण्णोऽवि कोऽवि होही भरहे वासंमि तित्थयरो ? ॥ ४४ ॥ ( मू० भा० )**

गमनिका—अत्रान्तरे अथ भणति नरवरेन्द्रः–तात! अस्या एतावत्याः परिषदः अन्योऽपि कश्चिद् भविष्यति तीर्थकरोऽस्मिन् भारते वर्षे ?, भावार्थस्तु सुगम एवेति गाथार्थः ॥

**तत्थ मरीईनामा आइपरिव्वायगो उसभनत्ता । सज्झायझाणजुत्तो एगंते झायइ महप्पा ॥ ४२२ ॥**

गमनिका—'तत्र' भगवतः प्रत्यासन्ने भूभागे मरीचिनामा आदौ परिव्राजक आदिपरिव्राजकः प्रवर्त्तकत्वात्, ऋषभनप्ता–पौत्रक इत्यर्थः । स्वाध्याय एव ध्यानं स्वाध्यायध्यानं तेन युक्तः, एकान्ते ध्यायति महात्मेति गाथार्थः ॥ ४२२ ॥

**तं दाएइ जिणिंदो एव नरिंदेण पुच्छिओ संतो । धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥ ४२३ ॥**

गमनिका—भरतपृष्टो भगवान् 'तं' मरीचिं दर्शयति जिनेन्द्रः, एवं नरेन्द्रेण पृष्टः सन् धर्मवरचक्रवर्ती अपश्चिमो वीरनामा भविष्यति इति गाथार्थः ॥ ४२३ ॥

**आइगरु दसाराणं तिविट्ठू नामेण पोअणाहिवई । पिअमित्तचक्कवट्टी मूआइ विदेहवासंमि ॥ ४२४ ॥**

गमनिका—आदिकरो दशाराणां त्रिपृष्ठनामा पोतना नाम नगरी तस्या अधिपतिः भविष्यतीति क्रिया । तथा प्रियमित्रनामा चक्रवर्त्ती मूकायां नगर्यां 'विदेहवासंमि'त्ति महाविदेहे भविष्यतीति गाथार्थः ॥ ४२४ ॥

**तं वयणं सोऊणं राया अंचियतणूरुहसरीरो । अभिवंदिऊण पिअरं मरीइमभिवंदओ जाइ ॥ ४२५ ॥**

गमनिका—'तद्वचनं' तीर्थकरवदनविनिर्गतं श्रुत्वा राजा अञ्चितानि तनूरुहाणि—रोमाणि शरीरे यस्य स तथाविधः अभिवन्द्य 'पितरं' तीर्थकरं मरीचिं अभिवन्दिष्यत इत्यभिवन्दको याति। पाठान्तरं वा 'मरीइमभिवंदिउं जाइत्ति' मरीचिं याति किमर्थम्?—अभिवन्दितुं—अभिवन्दनायेत्यर्थः, यातीति वर्त्तमानकालनिर्देशः त्रिकालगोचरसूत्रप्रदर्शनार्थ इति गाथार्थः॥ ४२५॥

**सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो। वंदइ अभित्थुणंतो इमाहि महुराहि वग्गूहिं ॥४२६॥**

गमनिका—'सः' भरतः विनयेन—करणभूतेन मरीचिसकाशमुपागतः सन् कृत्वा प्रदक्षिणं च 'तिक्खुत्तो'त्ति त्रिकृत्वः तिस्रो वारा इत्यर्थः, वन्दते अभिष्टुवन् एताभिः 'मधुराभिः' वल्गुभिः वाग्भिरिति गाथार्थः॥ ४२६॥

**लाहा हु ते सुलद्धा जंसि तुमं धम्मचक्कवट्टीणं। होहिसि दसचउदसमो अपच्छिमो वीरनामुत्ति ॥ ४२७॥**

गमनिका—'लाभाः' अभ्युदयप्राप्तिविशेषाः, हुकारो निपातः, स चैवकारार्थः, तस्य च व्यवहितः संबन्धः, 'ते' तव सुलब्धा एव, यस्मात् त्वं धर्मचक्रवर्त्तिनां भविष्यसि 'दशचतुर्दशमः' चतुर्विंशतितम इत्यर्थः, अपश्चिमो वीरनामेति गाथार्थः॥ ४२७॥ तथा—

आइगरु० (४२३) पूर्ववत् ज्ञेया। एकान्तसम्यग्दर्शनानुरञ्जितहृदयो भावितीर्थकरभक्त्या च तमभिवन्दनायोद्यतो भरत एवाह—

* ०मुपगतः

**णावि अ पारिव्वज्जं वंदामि अहं इमं च ते जम्मं। जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि॥ ४२८॥**

गमनिका—नापि च परिव्राजामिदं पारिव्राजं वन्दामि अहं इदं च ते जन्म, किन्तु यद्भविष्यसि तीर्थकरः अपश्चिमः तेन वन्दे इति गाथार्थः॥ ४२८॥ तथा—

**एवण्हं थोऊणं काऊण पयाहिणं च तिक्खुत्तो। आपुच्छिऊण पिअरं विणीअणगरिं अह पविट्ठो॥ ४२९॥**

गमनिका—एवं स्तुत्वा 'ण्हमि'ति निपातः पूरणार्थो वर्त्तते, कृत्वा प्रदक्षिणां च त्रिकृत्वः आपृच्छ्य 'पितरं' ऋषभदेवं 'विनीतनगरीं' अयोध्यां 'अथ' अनन्तरं प्रविष्टो भरत इति गाथार्थः॥ ४२९॥ अत्रान्तरे—

**तव्वयणं सोऊणं तिवई आप्फोडिऊण तिक्खुत्तो। अब्भहिअजायहरिसो तत्थ मरीई इमं भणइ॥ ४३०॥**

गमनिका—तस्य—भरतस्य वचनं तद्वचनं श्रुत्वा तत्र मरीचिः इदं भणतीति योगः, कथमित्यत आह—त्रिपदीं दत्त्वा, रङ्गमध्यगतमल्लवत्, तथा आस्फोट्य त्रिकृत्वः—तिस्रो वारा इत्यर्थः, किंविशिष्टः सन् इत्यत आह—अभ्यधिको जातो हर्षो यस्येति समासः, तत्र स्थाने मरीचिः 'इदं' वक्ष्यमाणलक्षणं भणति, वर्त्तमाननिर्देशप्रयोजनं प्राग्वदिति गाथार्थः॥ ४३०॥

**जइ वासुदेवु पढमो मूआइ विदेहि चक्कवट्टित्तं। चरमो तित्थयराणं होउ अलं इत्तिअं मज्झ॥ ४३१॥**

गमनिका—यदि वासुदेवः प्रथमोऽहं मूकायां विदेहे चक्रवर्त्तित्वं प्राप्स्यामि, तथा 'चरमः' पश्चिमः तीर्थकराणां भविष्यामि, एवं तर्हि भवतु एतावन्मम, एतावतैव कृतार्थ इत्यर्थः, 'अलं' पर्याप्तं अन्येनेति। पाठान्तरं वा 'अहो मए एत्तिअं लद्धं' ति गाथार्थः॥ ४३१॥

**अहयं च दसाराणं पिआ य मे चक्कवट्टिवंसस्स। अज्जो तित्थयराणं, अहो कुलं उत्तमं मज्झ *॥ ४३२॥**

गमनिका—अहमेव, चशब्दस्यैवकारार्थत्वात्, किम्?, दशाराणां प्रथमो भविष्यामीति वाक्यशेषः. पिता च 'मे' मम चक्रवर्तिवंशस्य प्रथम इति क्रियाऽध्याहारः। तथा 'आर्यकः' पितामहः स तीर्थकराणां प्रथमः, यत एवं अतः 'अहो' विस्मये कुलमुत्तमं ममेति गाथार्थः॥ ४३२॥ पृच्छाद्वारं गतम्, इदानीं निर्वाणद्वारावयवार्थाभिधित्सयाऽऽह—

**अह भगवं भवमहणो पुव्वाणमणूणगं सयसहस्सं। अणुपुव्वि विहरिऊणं पत्तो अट्ठावयं सेलं॥ ४३३॥**

गमनिका—अथ भगवान् भवमथनः पूर्वाणामन्यूनं शतसहस्रं आनुपूर्व्या विहृत्य प्राप्तोऽष्टापदं शैलं, भावार्थः सुगम एवेति गाथार्थः॥ ४३३॥

**अट्ठावयंमि सेले चउदसभत्तेण सो महरिसीणं। दसहि सहस्सेहि समं निव्वाणमणुत्तरं पत्तो॥ ४३४॥**

गमनिका—अष्टापदे शैले चतुर्दशभक्तेन स महर्षीणां दशभिः सहस्रैः समं निर्वाणमनुत्तरं प्राप्तः। अस्या अपि भावार्थः सुगम एव, नवरं चतुर्दशभक्तं—षड्रात्रोपवासः। भगवन्तं चाष्टापदप्राप्तं अपवर्गजिगमिषुं श्रुत्वा भरतो दुःखसंतप्तमानसः पद्भ्यामेव अष्टापदं ययौ, देवा अपि भगवन्तं मोक्षजिगमिषुं ज्ञात्वा अष्टापदं शैलं दिव्यविमानारूढाः खलु आगतवन्तः, उक्तं च 'भगवति मोक्षगमनायोद्यते—जाव य देवावासो जाव य अट्ठावओ नगवरिंदो। देवेहि य देवीहि य अविरहियं

* जारिसयेत्यत आरभ्य अन्तरा विहायैकादश सर्वा अपि भाष्यगाथा इति कस्यचिदभिप्रायः

संचरंतेहिं ॥ १ ॥" तत्र भगवान् त्रिदशनरेन्द्रैः स्तूयमानो मोक्षं गत इति गाथार्थः ॥ ४३४ ॥ साम्प्रतं निर्वाणगमनविधिप्रतिपादनाय एनां द्वारगाथामाह—

**निव्वाणं१चिइगागिई जिणस्स इक्खाग सेसयाणं च२। सकहा३थूभ जिणहरे४ जायग५तेणाहिअग्गित्ति ६ ४३५**

व्याख्या—'निर्वाणमिति' भगवान् दशसहस्रपरिवारो निर्वाणं प्राप्तः, अत्रान्तरे च देवाः सर्व एवाष्टापदमागताः। 'चितिकाकृतिरिति' ते तिस्रः चिता वृत्तत्र्यस्रचतुरस्राकृतीः कृतवन्तः इति, एकां पूर्वेण अपरा दक्षिणेन तृतीयामपरेणेति, तत्र पूर्वा तीर्थकृतः दक्षिणा इक्ष्वाकूणां अपरा शेषाणामिति, ततः अग्निकुमाराः वदनैः खलु अग्निं प्रक्षिप्तवन्तः, तत एव निबन्धनाल्लोके 'अग्निमुखा वै देवाः' इति प्रसिद्धं, वायुकुमारास्तु वातं मुक्तवन्त इति, मांसशोणिते च ध्यामिते सति मेघकुमाराः सुरभिणा क्षीरोदजलेन निर्वापितवन्तः। 'सकथेति' सकथा—हनुमोच्यते, तत्र दक्षिणां हनुमां भगवतः संबन्धिनीं शक्रो जग्राह वामामीशानः आधरस्त्यदक्षिणां पुनश्चमरः आधरस्त्योत्तरां तु बलिः, अवशेषास्तु त्रिदशाः शेषाङ्गानि गृहीतवन्तः, नरेश्वरादयस्तु भस्म गृहीतवन्तः, शेषलोकास्तु तद्भस्मना पुण्ड्रकाणि चक्रुः, तत एव च प्रसिद्धिमुपागतानि। 'स्तूपा जिनगृहं चेति' भरतो भगवन्तमुद्दिश्य वर्धकीरत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान्, निजवर्णप्रमाणयुक्ताः चतुर्विंशतिं जीवाभिगमोक्तपरिवारयुक्ताः तीर्थकरप्रतिमाः तथा भ्रातृशतप्रतिमा आत्मप्रतिमां च स्तूपशतं च, मा कश्चिद् आक्रमणं करिष्यतीति, तत्रैकां भगवतः शेषान् एकोनशतस्य भ्रातॄणामिति, तथा लोहमयान् यन्त्रपुरुषान् तद्वारपालांश्चकार, दण्डरत्नेन अष्टापदं च सर्वतश्छिन्नवान्, योजने योजने अष्टौ पदानि च कृतवान्, सगरसुतैस्तु स्ववंशानुरागाद्यथा परिखां कृत्वा गङ्गाऽवतारिता तथा ग्रन्थान्तरतो विज्ञेयमिति। 'याचकास्तेनाहिताग्नयः' इत्यस्य व्याख्या—देवैर्भगवत्सकथादौ गृहीते सति श्रावका देवान् अतिशयभक्त्या याचितवन्तः, देवा अपि तेषां प्रचुरत्वात् महता यत्नेन याचनाभिद्रुता आहुः—अहो याचका अहो याचका इति, तत एव हि याचका रूढाः, ततोऽग्निं गृहीत्वा स्वगृहेषु स्थापितवन्तः, तेन कारणेन आहिताग्नय इति तत एव च प्रसिद्धाः, तेषां चाग्नीनां परस्परतः कुण्डसंक्रान्तावयं विधिः—भगवतः संबन्धिभूतः सर्वकुण्डेषु संचरति, इक्ष्वाकुकुण्डाग्निस्तु शेषकुण्डाग्निषु संचरति, न भगवत्कुण्डाग्नौ इति, शेषानगारकुण्डाग्निस्तु नान्यत्र संक्रमत इति गाथार्थः ॥ ४३५ ॥ साम्प्रतमप्रतिहतद्वारगाथाया द्वारद्वयव्याचिख्यासया मूलभाष्यकार आह—

**थूभसय भाउगाण चउवीसं चेव जिणहरे कासी।**
**सव्वजिणाणं पडिमा वण्णपमाणेहिँ निअएहिँ ॥ ४५ ॥ ( मू० भा० )**

गमनिका—स्तूपशतं भ्रातॄणां भरतः कारितवान् इति, तथा चतुर्विंशतिं चैव जिनगृहे—जिनायतने (नानि) 'कासीति' कृतवान्, का इत्याह—सर्वजिनानां प्रतिमा वर्णप्रमाणैः 'निजैः' आत्मीयैरिति गाथार्थः ॥ साम्प्रतं भरतवक्तव्यतानिबद्धां संग्रहगाथां प्रतिपादयन्नाह—

**आयंसघरपवेसो भरहे पडणं च अंगुलीअस्स। सेसाणं उम्मुअणं संवेगो नाण दिक्खा य ॥ ४३६ ॥**

अस्या भावार्थः कथानकादवसेयः, तच्चेदम्—[1]भगवतो निव्वाणं गयस्स आययणं काराविय भरहो अउज्झमागओ, कालेण

१ भगवतो निर्वाणं गतस्य आयतनं कारयित्वा भरतोऽयोध्यामागत , कालेन

यं अप्पसोगो जाओ, ताहे पुणरवि भोगे भुंजिउं पवत्तो, एवं तस्स पंच पुव्वसयसहस्सा अइक्कंता भोगे भुंजंतस्स, अन्नया कयाइ सव्वालंकारभूसिओ आयंसघरमतिगतो, तत्थ य सव्वंगिओ पुरिसो दीसइ, तस्स एवं पेच्छमाणस्स अंगुलिज्जयं पडियं, त च तेण न नायं पडियं, एवं तस्स पलोयंतस्स जाहे सा अंगुली दिट्ठिमि पडिया, ताहे असोभंतिआ दिट्ठा, ततो कडगंपि अवणेइ, एवमेक्केक्कमवणेंतेण सव्वमाभरणमवणीअं, ताहे अप्पाणं उच्चियपउमं व पउमसरं असोभंतं पेच्छिय संवेगावण्णो परिचिंतिउं पयत्तो—आगंतुगदव्वेहिं विभूसियं मे सरीरगंति न सहावसुंदरं, एवं चिन्तन्तस्स अपुव्वकरणज्झाणमुवट्ठिअस्स केवलनाणं समुप्पण्णंति। सक्को देवराया आगओ भणति—दव्वलिंगं पडिवज्जह, जाहे निक्खमणमहिमं करेमि, ततो तेण पंचमुट्ठिओ लोओ कओ, देवयाए रओहरणपडिग्गहमादि उवगरणमुवणीअं, दसहिं रायसहस्सेहिं समं पव्वइओ। सेसा नव चक्किणो सहस्सपरिवारा निक्खंता। सक्केणं वंदिओ, ताहे भगवं पुव्वसयसहस्सं केवलिपरियागं पाउ-

१ चाल्पशोको जात , तदा पुनरपि भोगान् भोक्तुं प्रवृत्त , एवं तस्य पञ्च पूर्वशतसहस्राणि अतिक्रान्तानि भोगान् भुञ्जानस्य, अन्यदा कदाचित सर्वालङ्कारविभूषित आदर्शगृहमतिगत , तत्र च सर्वाङ्गिक पुरुषो दृश्यते, तस्यैव प्रेक्षमाणस्याङ्गुलीयकं पतितं, तच्च तेन न ज्ञात पतित, एवं तस्य प्रलोकमानस्य यदा साऽङ्गुलिर्दृष्टौ पतिता, तदाऽशोभमाना दृष्टा, तत कटकमपि अपनयति, एवमेकैकमपनयता सर्वमाभरणमपनीत, तदाऽऽत्मानं वचितपद्म इव पद्मसर अशोभमानं प्रेक्ष्य संवेगापन्न परिचिन्तितु प्रवृत्त –आगन्तुकद्रव्यै विभूषित मे शरीरकमिति न स्वभावसुन्दरम्, एव चिन्तयत अपूर्वकरणध्यानमुपस्थितस्य केवलज्ञान समुत्पन्नमिति। शक्रो देवराज आगतो भणति—द्रव्यलिङ्गं प्रतिपद्यस्व, यत निष्क्रमणमहिमानं करोमि, ततस्तेन पञ्चमुष्टिक लोच. कृत , देवतया रजोहरणप्रतिग्रहादि उपकरणमुपनीत, दशभि राजसहस्रै. सम प्रव्रजित । शेषा नव चक्रिण सहस्रपरिवारा निष्क्रान्ता । शक्रेण वन्दित , तदा भगवान् पूर्वशतसहस्रं केवलिपर्यायं पालयित्वा ।

णित्ता परिणिव्वुडो य । आइच्चजसो सक्केणाभिसित्तो, एवमट्ठपुरिसजुगाणि अभिसित्ताणि । इत्थो भावा(गाथा)र्थः, साम्प्रतमक्षरगमनिका—आदर्शकगृहे प्रवेशः, कस्य? 'भरहेत्ति' भरतस्य प्राकृतशैल्या षष्ठ्यर्थे सप्तमी, तथा पतनं चाङ्गुलीयस्य बभूव, शेषाणां कटकादीनां तून्मोचनं अनुष्ठितं, ततः संवेगः सञ्जातः, तदुत्तरकालं ज्ञानमुत्पन्नमिति, दीक्षा च तेन गृहीता, पश्चान्निर्वृत्तश्चेत्यक्षरार्थः ॥४३६॥ उक्तमानुषङ्गिकं इदानीं प्रकृतां मरीचिवक्तव्यतां पृच्छतां कथयतीत्यादिना प्रतिपादयति—तत्र—

पुच्छंताण कहेइ उवट्ठिए देइ साहुणो सीसे । गेलन्नि अपडिअरणं कविला इत्थंपि इहयंपि ॥ ४३७ ॥

गमनिका—पृच्छतां कथयति, उपस्थितान् ददाति साधुभ्यः शिष्यान्, ग्लानत्वे अप्रतिजागरणं कपिल ! अत्रापि इहापि । भावार्थः—स हि प्राग्व्यावर्णितस्वरूपो मरीचिः भगवति निर्वृत्ते साधुभिः सह विहरन् पृच्छतां लोकानां कथयति धर्मं जिनप्रणीतमेव, धर्माक्षिप्तांश्च प्राणिन उपस्थितान् ददाति साधुभ्यः शिष्यानिति । अन्यदा स ग्लानः संवृत्तः, साधवोऽप्यसंयतत्वान्न प्रतिजाग्रति, स चिन्तयति—निष्ठितार्थाः खल्वेते, नासंयतस्य कुर्वन्ति, नापि ममैतान् कारयितुं युज्यते, तस्मात् कञ्चन प्रतिजागरकं दीक्षयामीति, अपगतरोगस्य च कपिलो नाम राजपुत्रो धर्मशुश्रूषया तदन्तिकमागत इति, कथिते साधुधर्मे स आह-यद्ययं मार्गः किमिति भवता एतदङ्गीकृतम् ?, मरीचिराह—पापोऽहं, 'लोइंदिये'त्यादिविभाषा पूर्ववत्, कपिलोऽपि कर्मोदयात् साधुधर्मानभिमुखः खल्वाह—तथापि किं भवद्दर्शने नास्त्येव धर्म इति, मरीचिरपि-प्रचुरकर्मा खल्वयं न तीर्थकरोक्तं प्रतिपद्यते, वरं मे सहायः संवृत्त इति संचिन्त्याह—'कविला एत्थंपिति' अपिशब्दस्यैवकारार्थत्वात् निरुपचरितः खल्वत्रैव साधुमार्गे 'इहयंपित्ति' स्वल्पस्तु अत्रापि विद्यते इति गाथार्थः ॥ ४३७ ॥ स एवमा-

१ परिनिर्वृतश्च । आदित्ययशा शक्रेणाभिषिक्तः, एवमष्टपुरुषयुगान्यभिषिक्तानि ।

कर्ण्य तत्सकाश एव प्रव्रजितः, मरीचिनाऽप्यनेन दुर्वचनेन संसारोऽभिनिर्वर्त्तितः, नीचैर्गोत्रं कर्म बद्धमिति ॥ अमुमेवार्थं प्रतिपादयन्नाह—

दुब्भासिएण इक्केण मरीई दुक्खसायरं पत्तो । भमिओ कोडाकोडिं सागरसरिनामधेज्जाणं ॥ ४३८ ॥

तम्मूलं संसारो नीआगोत्तं च कासि तिवइंमि । अपडिक्कंतो बंभे कविलो अंतद्धिओ कहए ॥ ४३९ ॥

प्रथमगाथागमनिका—'दुर्भाषितेनैकेन' उक्तलक्षणेन मरीचिर्दुःखसागरं प्राप्तः भ्रान्तः कोटीनां कोटी कोटीकोटी तां, केषामित्याह-'सागरसरिनामधेज्जाणंति' सागरसदृशनामधेयानां, सागरोपमाणामिति गाथार्थः । द्वितीयगाथागमनिका-'तन्मूलं' दुर्भाषितमूलं संसारः संजातः, तथा स एव नीचैर्गोत्रं च कृतवान्—निष्पादितवान् 'त्रिपद्यां' प्राग्व्यावर्णितस्वरूपायामिति । 'अपडिक्कंतो बंभेत्ति' स मरीचिः चतुरशीतिपूर्वशतसहस्राणि सर्वायुष्कमनुपाल्य तस्मात् दुर्भाषितात् गर्वाच्च 'अप्रतिक्रान्तः' अनिवृत्तः ब्रह्मलोके दशसागरोपमस्थितिः देवः संजात इति । कपिलोऽपि ग्रन्थार्थपरिज्ञानशून्य एव तद्दर्शितक्रियारतो विजहार. आसुरिनामा च शिष्योऽनेन प्रव्राजित इति, तस्य स्वाचारमात्रं दिदेश, एवमन्यानपि शिष्यान् स गृहीत्वा शिष्यप्रवचनानुरागतत्परो मृत्वा ब्रह्मलोक एवोत्पन्नः, स ह्युत्पत्तिसमनन्तरमेव अवधिं प्रयुक्तवान्—किं मया हुतं वा ? इष्टं वा ? दानं वा दत्तं ? येनैषा दिव्या देवर्द्धिः प्राप्तेति, स्वं पूर्वभवं विज्ञाय चिन्तयामास—ममहि शिष्यो न किञ्चिद्वेत्ति, तत्तस्य उपदिशामि तत्त्वमिति, तस्मै आकाशस्थपञ्चवर्णमण्डलकस्थः तत्त्वं जगाद, आह च—'कपिलो अंतद्धिओ कहए' कपिलः अन्तर्हितः कथितवान्, किम् ?—अव्यक्तात् व्यक्तं प्रभवति, ततः षष्टितन्त्रं जातं, तथा चाहुस्तन्मतानुसारिणः—"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ १ ॥" इत्यादि, अलं विस्तरेण, प्रकृतं प्रस्तुम. इति गाथार्थः ॥ ४३८–४३९ ॥

इक्खागेसु मरीई चउरासीई अ बंभलोगंमि । कोसिउ कुल्लागंमी (गेसुं) असीइमाउं च संसारे ॥ ४४० ॥

गमनिका—इक्ष्वाकुषु मरीचिरासीत्, चतुरशीतिं च पूर्वशतसहस्राण्यायुष्कं पालयित्वा 'बंभलोयंमि' ब्रह्मलोके कल्पे देवः संवृत्तः, ततश्चायुष्कक्षयाच्च्युत्वा 'कोसिओ कुल्लाएसुत्ति' कोल्लाकसंनिवेशे कौशिको नाम ब्राह्मणो बभूव, 'असीइमाउं च संसारेत्ति' स च तत्राशीतिं पूर्वशतसहस्राण्यायुष्कमनुपाल्य 'संसारेत्ति' तिर्यङ्नरनारकामरभवानुभूतिलक्षणे पर्यटित इति गाथार्थः ॥ ४४० ॥ संसारे कियन्तमपि कालमटित्वा स्थूणाया नगर्या जात इति, अमुमेवार्थं 'थूणाई'त्यादिना प्रतिपादयति—

थूणाइ पूसमित्तो आउं बावत्तरिं च सोहम्मे । चेइअ अग्गिज्जोओ चोवट्ठीसाणकप्पंमि ॥ ४४१ ॥

व्याख्या—स्थूणायां नगर्यां पुष्पमित्रो नाम ब्राह्मणः संजातः 'आउं बावत्तरिं सोहम्मेत्ति' तस्यायुष्कं द्विसप्ततिः पूर्वशतसहस्राण्यासीत्, परिव्राजकदर्शने च प्रव्रज्यां गृहीत्वा तां पालयित्वा कियन्तमपि कालं स्थित्वा सौधर्मे कल्पे अजघन्योत्कृष्टस्थितिः समुत्पन्न इति । 'चेइअ अग्गिज्जोओ चोवट्ठीसाणकप्पंमीति' सौधर्माच्च्युतः चैत्यसन्निवेशे अग्निद्योतो ब्राह्मणः संजातः, तत्र चतुःषष्टिपूर्वशतसहस्राण्यायुष्कमासीत्, परिव्राट् च संजातो, मृत्वा चेशाने देवोऽजघन्योत्कृष्टस्थितिः संवृत्त इति गाथार्थः ॥ ४४१ ॥

**मंदिरे अग्गिभूई छप्पण्णा उ सणंकुमारंमि। सेअवि भारद्दाओ चोआलीसं च माहिंदे ॥ ४४२ ॥**

गमनिका—ईशानाच्च्युतो 'मन्दिरेत्ति' मन्दिरसन्निवेशे अग्निभूतिनामा ब्राह्मणो बभूव, तत्र षट्पञ्चाशत् पूर्वशतसहस्राणि जीवितमासीत्, परिव्राजकश्च बभूव, मृत्वा 'सणंकुमारंमीति' सनत्कुमारकल्पे विमध्यमस्थितिर्देवः समुत्पन्न इति। 'सेअवि भारद्दाएँ चोआलीसं च माहिंदेत्ति' सनत्कुमारात् च्युतः श्वेतव्यां नगर्यां भारद्वाजो नाम ब्राह्मण उत्पन्न इति, तत्र च चतुश्चत्वारिंशत् पूर्वशतसहस्राणि जीवितमासीत्, परिव्राजकश्चाभवत्, मृत्वा च माहेन्द्रे कल्पेऽजघन्योत्कृष्टस्थितिर्देवो बभूवेति गाथार्थः ॥ ४४२ ॥

**संसरिअ थावरो रायगिहे चउतीस बंभलोगंमि। छस्सुवि पारिव्वज्जं भमिओ तत्तो अ संसारे ॥ ४४३ ॥**

गमनिका—माहेन्द्रात् च्युत्वा संसृत्य कियन्तमपि कालं संसारे ततः स्थावरो नाम ब्राह्मणो राजगृहे उत्पन्न इति, तत्र च चतुस्त्रिंशत् पूर्वशतसहस्राण्यायुष्कं परिव्राजकश्चासीत्, मृत्वा च ब्रह्मलोकेऽजघन्योत्कृष्टस्थितिर्देवः संजातः, एवं षट्स्वपि वारासु परिव्राजकत्वमधिकृत्य दिवमासवान्। 'भमिओ तत्तो अ संसारे' ततो ब्रह्मलोकाच्च्युत्वा भ्रान्तः संसारे प्रभूतं कालमिति गाथार्थः ॥ ४४४ ॥

**रायगिह विस्सनंदी विसाहभूई अ तस्स जुवराया। जुवरण्णो विस्सभूई विसाहनंदी अ इअरस्स ॥ ४४४ ॥**

**रायगिह विस्सभूई विसाहभूइसुओ खत्तिए कोडी। वाससहस्सं दिक्खा संभूअजइस्स पासंमि ॥ ४४५ ॥**

* ओ.

भावार्थः खल्वस्य गाथाद्वयस्य कथानकादवसेयः, तच्चेदम्—रायगिहे नयरे विस्सनंदी राया, तस्स भाया विसाहभूई, सो य जुवराया, तस्स जुवरण्णो धारिणीए देवीए विस्सभूई नाम पुत्तो जाओ, रण्णोऽवि पुत्तो विसाहनंदित्ति, तत्थ विस्सभूइस्स वासकोडी आऊ, तत्थ पुप्फकरंडकं नाम उज्जाणं, तत्थ सो विस्सभूती अंतेउरवरगतो सच्छंदसुहं पवियरइ, ततो जा सा विसाहनंदिस्स माया तीसे दासचेडीओ पुप्फकरंडए उज्जाणे पत्ताणि पुप्फाणि अ आणेंति, पिच्छंति अ विस्सभूतिं कीडंतं, तासिं अमरिसो जाओ, ताहे साहिति जहा—एवं कुमारो ललइ, किं अम्ह रज्जेण वा बलेण वा? जइ विसाहनंदी न भुंजइ एवंविहे भोए, अम्ह नामं चेव, रज्जं पुण जुवरण्णो पुत्तस्स जस्सेरिसं ललिअं, सा तासिं अंतिए सोउं देवी ईसाए कोवघरं पविट्ठा, जइ ताव रायाणए जीवंतए एसा अवत्था, जाहे राया मओ भविस्सइ ताहे एत्थ अम्हे को गणिहित्ति?, राया गमेइ, सा पसायं न गिण्हइ, किं मे रज्जेण तुमे वत्ति?, पच्छा तेण अमच्चस्स सिट्ठं, ताहे अमच्चोऽवि

१ राजगृहे नगरे विश्वनन्दी राजा, तस्य भ्राता विशाखभूतिः, स च युवराजः, तस्य युवराजस्य धारिण्यां देव्यां विश्वभूतिर्नाम पुत्रो जातः, राज्ञोऽपि पुत्रो विशाखनन्दीति, तस्य विश्वभूतेर्वर्षकोट्यायुः, तत्र पुष्पकरण्डकं नाम उद्यानं, तत्र स विश्वभूतिः वरान्तःपुरगतः स्वच्छन्देन सुखं प्रविचरति, ततो या सा विशाखनन्दिनो माता तस्या दासचेट्यः पुष्पकरण्डकादुद्यानात्पुष्पाणि पत्राणि चानयन्ति, प्रेक्षन्ते च विश्वभूतिं क्रीडन्तं, तासाममर्षो जातः, तदा साधयन्ति यथा—एवं कुमारो ललति (विलसति), किमस्माकं राज्येन वा बलेन वा? यदि विशाखनन्दी न भुङ्क्ते एवंविधान् भोगान्, अस्माकं नामैव, राज्यं पुनर्युवराजस्य पुत्रस्य यस्येदृशं ललितं, सा तासामन्तिके श्रुत्वा देवीर्ष्यया कोपगृहं प्रविष्टा, यदि तावद्राज्ञि जीवति एषाऽवस्था, यदा राजा मृतो भविष्यति तदाऽस्मान् को गणयिष्यति? राजा गमयति, सा प्रसादं न गृह्णाति, किं मे राज्येन त्वया चेति, पश्चात्तेनामात्याय शिष्टं, तदाऽमात्योऽपि

'तं गमेइ, तहवि न ठाति, ताहे अमच्चो भणइ—रायं! मा देवीए वयणातिक्कमो कीरउ, मा मारेहिइ अप्पाणं, राया भणइ—को उवाओ होज्जा?, ण य अम्हं वंसे अण्णंमि अतिगए उज्जाणे अण्णओ अतीति, तत्थ वसंतमासं ठिओ, मासग्गेसु अच्छति, अमच्चो भणति—उवाओ किज्जउ जहा—अमुगो पच्चंतराया उक्कुट्ठो(वट्टो), अणज्जंता पुरिसा कूडलेहे उवणेंतु, एवमेएण कयगेण ते कूडलेहा रण्णो उवट्ठाविया, ताहे राया जत्तं गिण्हइ, तं विस्सभूइणा सुयं, ताहे भणति—मए जीवमाणे तुब्भे किं निग्गच्छह?, ताहे सो गओ, ताहे चेव इमो अइगओ, सो गतो तं पच्चंत, जाव न किंचि पिच्छइ अहुमरेंतं, ताहे आहिंडित्ता जाहे नत्थि कोई जो आणं अइक्कमति, ताहे पुणरवि पुप्फकरंडयं उज्जाणमागओ, तत्थ दारवाला दंडगहियग्गहत्था भणंति—मा अईह सामी!, सो भणति—किं निमित्तं?, एत्थ विसाहनन्दी कुमारो रमइ, ततो एयं सोऊण कुविओ विस्सभूई, तेण नायं—अहं कयगेण निग्गच्छाविओत्ति, तत्थ कविट्ठलता अणेगफलभरसमोणया, सा मुट्ठिपहारेण आहया, ताहे तेहिं कविट्ठेहिं भूमी अत्थुआ,

१ तं गमयति, तथापि न तिष्ठति, तदाऽमात्यो भणति—राजन्! मा देव्या वचनातिक्रमं करोतु, मा मीमरदात्मानं, राजा भणति कः उपायो भवेत्?, न चास्माकं वंशेऽन्यस्मिन् अतिगते उद्याने अन्योऽतियाति, तत्र वसन्तमासं स्थितः मासोऽग्रे तिष्ठति, अमात्यो भणति—उपायः क्रियतां यथा—अमुकः प्रत्यन्तराज उत्कृष्टः (वृत्तः), अज्ञायमानाः पुरुषाः कूटलेखानुपनयन्तु, एवमेतेन कृतकेन ते कूटलेखा राज्ञे उपस्थापिताः, तदा राजा यात्रां गृह्णाति, तत् विश्वभूतिना श्रुतं, तदा भणति—मयि जीवति यूयं किं निर्गच्छत, तदा स गतः, तदैवायं (विशाखनन्दी) अतिगतः, स गतः तं प्रत्यन्तं, यावन्न कञ्चित्पश्यति उपद्रवन्तं, तदाऽऽहिण्ड्य यदा नास्ति कोऽपि य आज्ञामतिक्रामति, तदा पुनरपि पुष्पकरण्डकमुद्यानमागतः, तत्र द्वारपाला गृहीतदण्डाग्रहस्ता भणन्ति—मा अतियासीः स्वामिन्!, स भणति—किंनिमित्तम्? अत्र विशाखनन्दी कुमारो रमते, ततः एतत् श्रुत्वा कुपितो विश्वभूतिः, तेन ज्ञातम्—अहं कृतकेन निर्गमित इति, तत्र कपित्थलता अनेकफलभरसमवनता, सा मुष्टिप्रहारेणाहता, तदा तैः कपित्थैर्भूमिरास्तृता * ०मासंतमासग्गे७. + दद्दुमरेंतं

ते' भणति–एवं अहं तुज्झं सीसाणि पाडिंतो जइ अहं महल्लपिउणो गोरवं न करेंतो, अहं भे छम्मेण णीणिओ, तम्हा अलाहि भोगेहिं, तओ निग्गओ भोगा अवमाणमूलन्ति, अज्जसंभूआणं थेराणं अंतिए पव्वइओ, तं पव्वइयं सोउं ताहे राया संतेउरपरियणो जुवराया य निग्गओ, ते तं खमावेंति, ण य तेसिं सो आणत्तिं गेण्हति। ततो बहूहिं छट्ठट्ठमादिएहिं अप्पाणं भावेमाणो विहरइ, एवं सो विहरमाणो महुरं नगरिं गतो। इओ य विसाहनंदी कुमारो तत्थ महुराए पिउच्छाए रण्णो अग्गमहिसीए धूआ लद्धेल्लिआ, तत्थ गतो, तत्थ से रायमग्गे आवासो दिण्णो। सो य विस्सभूती अणगारो मासखमणपारणगे हिंडंतो तं पदेसमागओ जत्थ ठाणे विसाहणंदीकुमारो अच्छति, ताहे तस्स पुरिसेहिं कुमारो भण्णति–सामि! तुब्भे एयं न जाणह?, सो भणति–न जाणामि, तेहिं भण्णति–एस सो विस्सभूती कुमारो, ततो तस्स तं दट्ठूण रोसो जाओ। एत्थंतरा सूतिआए गावीए पेल्लिओ पडिओ, ताहे तेहिं उक्किट्ठकलयलो कओ, इमं च णेहिं भणिअं–तं बलं तुज्झ

१ तान् भणति–एवमहं युष्माकं शिरांस्यपातयिष्यं यद्यहं पितृव्यस्य गौरवं नाकरिष्यम्, अहं भवद्भिश्छद्मना नीतः, तस्मादलं भोगैः, ततो निर्गतो भोगा अपमानमूलमिति, आर्यसंभूतानां स्थविराणामन्तिके प्रव्रजित, स प्रव्रजितं श्रुत्वा तदा राजा सान्तःपुरपरिजनो युवराजश्च निर्गतः, ते तं क्षमयन्ति, न च तेषां स आज्ञप्तिं (विज्ञप्तिं) गृह्णाति। ततो बहुभिः षष्ठाष्टमादिकैरात्मानं भावयन् विहरति, एवं स विहरन् मथुरां नगरीं गतः। इतश्च विशाखनन्दी कुमारस्तत्र मथुरायां पितृष्वसू राज्ञोऽग्रमहिष्या दुहिता लब्धपूर्वा (इति) तत्र गतः, तत्र तस्य राजमार्गे आवासो दत्तः। स च विश्वभूतिरनगारः मासक्षपणपारणे हिण्डमानः तं प्रदेशमागतः यत्र स्थाने विशाखनन्दी कुमारः तिष्ठति, तदा तस्य पुरुषैः कुमारो भण्यते–स्वामिन्! त्वं एनं न जानीषे?, स भणति–न जानामि, तैर्भण्यते–एष स विश्वभूतिः कुमारः, ततस्तस्य तं दृष्ट्वा रोषो जातः। अत्रान्तरे प्रसूतया गवा प्रेरितः पतितः, तदा तैरुत्कृष्टकलकलः कृतः, इदं च तैर्भणितम्–तत् बलं तव

कविट्ठपाडणं च कहिं गतं?, ताहे णेण ततो पलोइयं, दिट्ठो य णेण सो पावो, ताहे अमरिसेणं तं गाविं अग्गसिंगेहिं गहाय उड्ढं उव्वहति, सुदुब्बलस्सवि सिंघस्स किं सियालेहिं बलं लंघिज्जइ?, ताहे चेव नियत्तो, इमो दुरप्पा अज्जवि मम रोसं वहति, ताहे सो नियाणं करेति–जइ इमस्स तवनियमस्स बंभचेरस्स फलमत्थि तो आगमेसाणं अपरिमितबलो भवामि। तत्थ सो अणालोइयपडिक्कंतो महासुक्के उववन्नो, तत्थुक्कोसठितिओ देवो जातः। ततो चइऊण पोअणपुरे णगरे पुत्तो पयावइस्स मिगाईए देवीए कुच्छिंसि उववण्णो। तस्स कहं पयावई नामं, तस्स पुव्वं रिउपडिसत्तुत्ति णामं होत्था, तस्स य भद्दाए देवीए अत्तए अयले नामं कुमारे होत्था, तस्स य अयलस्स भगिणी मियावईनाम दारिया अतीव रूववती, सा य उम्मुक्कबालभावा सव्वालंकारविभूसिआ पिउपायवंदिया गया, तेण सा उच्छंगे निवेसिआ, सो तीसे रूवे जोव्वणे य अंगफासे य मुच्छिओ, तं विसज्जेत्ता पउरजणवयं वाहरति–जं एत्थं रयणं उप्पज्जइ तं कस्स होति?, ते भणंति–तुब्भं, एवं तिण्णि

१ कपित्थपातनं च क्व गतं?, तदाऽनेन ततः प्रलोकितं, दृष्टश्चानेन स पापः, तदाऽमर्षेण तां गां अग्रशृङ्गाभ्यां गृहीत्वोर्ध्वमुत्क्षिपति, सुदुर्बलस्यापि सिंहस्य किं शृगालैर्बलं लङ्घ्यते?, तदैव निवृत्तः, अयं दुरात्माऽद्यापि मयि रोषं वहति, तदा स निदानं करोति–यद्यस्य तपोनियमस्य ब्रह्मचर्यस्य फलमस्ति तर्हि आगमिष्यन्त्यां अपरिमितबलो भूयासं। तत्र सोऽनालोचितप्रतिक्रान्तो महाशुक्रे उत्पन्नः, तत्रोत्कृष्टस्थितिको देवो जातः। ततश्च्युत्वा पोतनपुरे नगरे पुत्रः प्रजापतेर्मृगावत्या देव्याः कुक्षौ उत्पन्नः। तस्य कथं प्रजापतिर्नाम?, तस्य पूर्वं रिपुप्रतिशत्रुरिति नामाभवत्, तस्य च भद्राया देव्या आत्मजः अचलो नाम कुमारोऽभवत्, तस्य चाचलस्य भगिनी मृगावती नाम दारिकाऽतीव रूपवती, सा चोन्मुक्तबालभावा सर्वालङ्कारविभूषिता पितृपादवन्दिका गता, तेन सोत्सङ्गे निवेशिता, स तस्या रूपे यौवने चाङ्गस्पर्शे च मूर्छितः, तां विसृज्य पौरजनपदं व्याहरति–यदत्र रत्नमुत्पद्यते तत्कस्य भवति?, ते भणन्ति–तव, एवं त्रीन्

वारा साहिए सा चेडी उवट्ठविआ, ताहे लज्जिआ निग्गया, तेसिं सव्वेसिं कुव्वमाणाणं गंधव्वेण विवाहेण सयमेव विवाहिया, उप्पाइया णेणं भारिया, सा भद्दा पुत्तेण अयलेण समं दक्खिणावहे माहेस्सरिं पुरिं निवेसेति, महन्तीए इस्सरीए कारियत्ति माहेस्सरी, अयलो मायं ठविऊण पिउमूलमागओ, ताहे लोएण पयावई नामं कयं, पया अणेण पडिवण्णा पयावइत्ति, वेदेऽप्युक्तम्–"प्रजापतिः स्वां दुहितरमकामयत"। ताहे महासुक्काओ चइऊण तीए मियावईए कुच्छिंसि उववण्णो, सत्त सुमिणा दिट्ठा, सुविणपाढएहिं पढमवासुदेवो आदिट्ठो, कालेण जाओ, तिण्णि यसे पिट्ठकरंडगा तेण से तिविट्ठू णामं कयं, माताए परिक्खिततो उण्हतेल्लेणंति, जोव्वणगमणुपत्तो। इओ य महामंडलिओ आसग्गीवो राया, सो णेमित्तियं पुच्छति–कत्तो मम भयंति, तेण भणियं–जो चंडमेहं दूतं आधरिसेहिति, अवरं ते य महाबलगं सीहं मारेहिति, ततो ते भयंति, तेण सुयं जहा–पयावइपुत्ता महाबलवगा, ताहे तत्थ दूतं पेसेति, तत्थ य अंतेउरे पेच्छणयं वट्टति, तत्थ दूतो पविट्ठो, राया उट्ठिओ, पेच्छणयं

१ वारान् साधिते सा चेटयुपस्थापिता, तदा लज्जिता निर्गता, सर्वेषां तेषां कूजतां गान्धर्वेण विवाहेन स्वयमेव विवाहिता, उत्पादिता तेन भार्या, सा भद्रा पुत्रेणाचलेन समं दक्षिणापथे माहेश्वरीं पुरीं निविशति, महत्या ईश्वर्या कारितेति माहेश्वरी, अचलो मातरं स्थापयित्वा पितृमूलमागतः, तदा लोकेन प्रजापति नाम कृतं, प्रजा अनेन प्रतिपन्ना प्रजापतिरिति। तदा महाशुक्रात् च्युत्वा तस्या मृगावत्याः कुक्षावुत्पन्नः, सप्त स्वप्ना दृष्टाः, स्वप्नपाठकैः प्रथमवासुदेव आदिष्टः, कालेन जातः, त्रीणि च तस्य पृष्ठकरण्डकानि तेन तस्य त्रिपृष्ठ नाम कृतं, मात्रा परिरक्षितः उष्णतैलेनेति, यौवनमनुप्राप्तः। इतश्च महामाण्डलिकः अश्वग्रीवो राजा, स नैमित्तिकं पृच्छति–कुतो मम भयमिति, तेन भणितम्–यश्चण्डमेघं दूतं आधर्षयिष्यति, अपरं तव च महाबलिनं सिंहं मारयिष्यति, ततस्तव भयमिति, श्रुतं यथा–प्रजापतिपुत्रौ महाबलिनौ, तदा तत्र दूतं प्रेषयति, तत्र चान्तःपुरे प्रेक्षणकं वर्त्तते, तत्र दूतः प्रविष्टः, राजोत्थितः, प्रेक्षणकं

भग्गं, कुमारा पेच्छणगेण अक्खित्ता भणंति—को एस?, तेहिं भणिअं—जहा आसग्गीवरण्णो दूतो, ते भणंति—जाहे एस वच्चेज्ज ताहे कहेज्जाह, सो राइणा पूएऊण विसज्जिओ पहाविओ अप्पणो विसयस्स, कहियं कुमाराणं, तेहिं गंतूण अद्धपहे हओ, तस्स जे सहाया ते सव्वे दिसोदिसिं पलाया, रण्णा सुयं जहा—आधरिसिओ दूओ, संभंतेण निअत्तिओ, ताहे रण्णा बिउणं तिगुणं दाऊण मा हु रण्णो साहिज्जसु जं कुमारेहिं कयं, तेण भणियं—न साहामि, ताहे जे ते पुरतो गता तेहिं सिट्ठं जहा—आधरिसिओ दूतो, ताहे सो राया कुविओ, तेण दूतेण णायं जहा—रण्णो पुव्वं कहितेल्लयं, जहावित्तं सिट्ठं, ततो आसग्गीवेण अण्णो दूतो पेसिओ, वच्च पयावइं गंतूण भणाहि—मम सालिं रक्खाहि भक्खिज्जमाणं, गतो दूतो, रण्णा कुमारा उवलद्धा—किह अकाले मच्चू खवलिओ?, तेण अम्हे अवारए चेव जत्ता आणत्ता, राया पहाविओ, ते भणंति—अम्हे वच्चामो, ते रुब्भंता मज्झाए गया, गंतूण खेत्तिए भणंति—किहऽण्णे रायाणो रक्खियाइया?, ते भणंति—आसहत्थिरहपुरिस-

१ भग्नं, कुमारौ प्रेक्षणकेनाक्षिप्तौ भणत —क एष ?, तैर्भणितं यथा—अश्वग्रीवराजस्य दूतः, तौ भणत —यदा एष व्रजेत् तदा कथयेत, स राज्ञा पूजयित्वा विसृष्ट प्रधावित आत्मनो विषयाय, कथित कुमाराभ्यां, ताभ्यां गत्वाऽर्धपथे हतः, तस्य ये सहायाः ते सर्वे दिशोदिशि पलायिता., राज्ञा श्रुत यथा—आधर्षितो दूत , सम्भ्रान्तेन निवर्तितः, तदा राज्ञा द्विगुणं त्रिगुणं दत्वा मैव चीकथः राज्ञे यत्कुमाराभ्यां कृत, तेन भणितं—न साधयामि, तदा ये ते पुरतो गतास्तैः शिष्ट यथा—आधर्षितो दूत', तदा स राजा कुपितः, तेन दूतेन ज्ञातं यथा—राज्ञे पूर्वं कथितं, यथावृत्तं शिष्टं, तत' अश्वग्रीवेणान्यो दूतः प्रेषितः, व्रज प्रजापतिं गत्वा भण—मम शालीन् भक्ष्यमाणान् रक्ष, गतो दूत , राज्ञा कुमारावुपालब्धौ—किमकाले मृत्युरामन्त्रितः ?, तेनास्माकमवारके एव यात्राऽऽज्ञप्ता, राजा प्रधावितः ( गन्तुमारब्धः ), तौ भणतः, आवां व्रजावः, तौ रुध्यमानौ बलाद्गतौ, गत्वा क्षेत्रिकान् भणतः—कथमन्ये राजानः रक्षितवन्तः?, ते भणन्ति—अश्वहस्तिरथपुरुषैः

पागारं काऊणं, केच्चिरं ?, जाव करिसणं पविट्ठं, तिविट्ठू भणति—को एच्चिरं अच्छति ?, मम तं पएसं दरिसह, तेहिं कहियं—एताए गुहाए, ताहे कुमारो रहेणं तं गुहं पविट्ठो, लोगेण दोहिवि पासेहि कलयलो कओ, सीहो वियंभंतो निग्गओ, कुमारो चिन्तेइ—एस पाएहिं अहं रहेण, विसरिसं जुद्धं, असिखेडगहत्थो रहाओ ओइण्णो, ताहे पुणोवि विचिन्तेइ—एस दाढानक्खाउहो अहं असिखेडएण, एवमवि असमंजसं, तंपि अणेण असिखेडगं छड्डियं, सीहस्स अमरिसो जातो—एगं ता रहेण गुहं अतिगतो एगागी, वितिअं भूमिं ओतिण्णो, ततिअं आउहाणि विमुक्काणि, अज्ज णं विणिवाएमित्ति महता अव-दालिएण वयणेण उक्कंदं काऊण संपत्तो, ताहे कुमारेण एगेण हत्थेण उवरिल्लो होट्ठो एगेणं हेट्ठिल्लो गहिओ, ततो णेण जुण्ण-पडगोविव दुहाकाऊण मुक्को, ताहे लोएण उक्कुट्ठिकलयलो कओ, अहासन्निहिआए देवयाए आभरणवत्थकुसुमवरिसं, वरिसियं, ताहे सीहो तेण अमरिसेण फुरफुरेंतो अच्छति, एवं नाम अहं कुमारेण जुद्धेण मारिओत्ति, तं च किर कालं

१ प्राकार कृत्वा, कियच्चिरं ?, यावत् कर्षणं प्रविष्ट ( भवति ), त्रिपृष्ठ भणति—क इयच्चिरं तिष्ठति ?, मह्य तं प्रदेश दर्शयत, तैः कथित—एतस्यां गुहायां, तदा कुमारो रथेन तां गुहां प्रविष्ट , लोकेन कलकलो द्वयोरपि पार्श्वयोः कृत , सिंहो विजृम्भमाण' निर्गत , कुमारश्चिन्तयति—एष पादाभ्यामह रथेन, विसदृशं युद्ध, असिखेटकहस्त रथादवतीर्ण तदा पुनरपि विचिन्तयति—एष दंष्ट्रानखायुधः अहमसिखेटकेन, एवमप्यसमञ्जसं, तदप्यसिखेटकमनेन त्यक्तं, सिंहस्यामर्षो जात —एक तावत् रथेन गुहामतिगत एकाकी, द्वितीय भूमिमवतीर्णः, तृतीयमायुधानि विमुक्तानि, अद्य एन विनिपातयामीति महताऽवदारितेन वदनेनोत्कम्पं कृत्वा सम्प्राप्तः, तदा कुमारेणैकेन हस्तेनोपरितन ओष्ठ एकेनाधस्त्यो गृहीत', ततस्तेन जीर्णपट इव द्विधाकृत्य मुक्त , तदा लोकेनोत्कृष्टिकलकल कृत , यथासन्निहितया तदेवतयाभरणवस्त्रकुसुमवर्षं वर्षित, तदा सिंहस्तेनामर्षेण स्फुरंस्तिष्ठति, एव नामाहं कुमारेण युद्धेन मारित इति, तस्मिंश्च किल काले

भगवओ गोअमसामी रहसारही आसी, तेण भण्णति—मा तुमं अमरिसं वहाहि, एस नरसीहो तुमं मियाहिवो, तो जइ सीहो सीहेण मारिओ को एत्थ अवमाणो?, ताणि सो वयणाणि महुमिव पिवति, सो मरित्ता नरएसु उववण्णो, सो कुमारो तच्चम्मं गहाय सनगरस्स पहावितो, ते* गामिलए भणति—गच्छह भो तस्स घोडयगीवस्स कहेह जहा अच्छसु वीसत्थो, तेहि गंतूण सिट्ठं, रुट्ठो दूतं विसज्जेइ, एते पुत्ते तुमं मम ओलग्गए पट्ठवेहि, तुमं महल्लो, जाहे पेच्छामि सक्कारेमि रज्जाणि य देमि, तेण भणियं—अच्छंतु कुमारा, सयं चेव णं ओलग्गामित्ति, ताहे सो भणति—किं न पेसेसि ? अतो जुद्धसज्जो निग्गच्छा†सि, सो दूतो तेहिं आधरिसित्ता धाडिओ, ताहे सो आसग्गीवो सव्वबलेण उवट्ठिओ, इयरेवि देसंते ठिआ, सुबहुं कालं जुज्झेऊण हयगयरहनरादिक्खयं च पेच्छिऊण कुमारेण दूओ पेसिओ जहा—अहं च तुमं च दोण्णिवि जुद्धं संप-लग्गामो, किंवा बहुएण अकारिजणेण मारिएण ? एवं होउत्ति, वीअदिवसे रहेहिं संपलग्गा, जाहे आउधाणि खीणाणि

१ भगवतो गौतमस्वामी रथसारथिरासीत्, तेन भण्यते—मा त्वममर्षं वाही , एष नरसिंह त्व मृगाधिप , तद्यदि सिंह सिंहेन मारित कोऽत्रापमानः? तानि वचनानि स मध्विव पिबति, स मृत्वा नरके उत्पन्न , स कुमारस्तच्चर्म गृहीत्वा स्वनगराय प्रधावित , तांश्च ग्रामेयकान् भणति—गच्छत भो तस्मै अश्वग्रीवाय कथयत यथा तिष्ठ विश्वस्त , तैर्गत्वा शिष्टं, रुष्टो दूत विसृजति, एतौ पुत्रौ ममावलगके प्रस्थापय, त्व वृद्ध , यत पश्यामि सत्कारयामि राज्यानि च ददामि, तेन भणितम्—तिष्ठतां कुमारौ स्वयमेवावलगामीति, तदा स भणति—किं न प्रेषयसि ? अतो युद्धसज्जो निर्गच्छ, स दूतस्तैराधृष्य धाटित , तदा सोऽश्व-ग्रीवः सर्वबलेनोपस्थित , इतरेऽपि देशान्ते स्थिता , सुबहु काल युध्वा हयगजरथनरादिक्षय च प्रेक्ष्य कुमारेण दूत प्रेपितो यथा—अह च त्व च द्वावपि युद्ध सम्लगाव , किंवा बहुनाऽकारिजनेन मारितेन?, एव भवत्विति, द्वितीयदिवसे रथै सम्प्रलग्ना , यदाऽऽयुधानि क्षीणानि, * ते य + अहो † निग्गच्छत्ति

ताहे चक्कं मुयइ, तं तिविट्ठुस्स तुंबेण उरे पडिअं, तेणेव सीसं छिन्नं, देवेहिं उग्घुट्ठं-अहेस तिविट्ठू पढमो वासुदेवो उप्पण्णोत्ति । ततो सवे रायाणो पणिवायमुवगता, उयविअं अद्धभरहं, कोडिसिला दंडबाहाहिं धारिआ, एवं रहावत्तपव्वयसमीवे जुद्धं आसी । एवं परिहायमाणे वले कण्हेण किल जाणुगाणि जाव किहवि पाविआ । तिविट्ठू चुलसीइवाससयसहस्साइं सव्वाउयं पालइत्ता कालं काऊण सत्तमाए पुढवीए अप्पइट्ठाणे नरए तेत्तीसं सागरोवमट्ठितीओ नेरइओ उववण्णो। अयमासां भावार्थः, अक्षरार्थस्त्वभिधीयते—राजगृहे नगरे विश्वनन्दी राजाऽभूत्, विशाखभूतिश्च तस्य युव[†]राजेति, तत्र '[‡]जुवरण्णो'त्ति युवराजस्य धारिणीदेव्या विश्वभूति[¶]नामा पुत्र आसीत्, विशाखनन्दिश्चेतरस्य राज्ञ इत्य$र्थः, तत्रेत्थमधिकृतो मरीचिजीवः 'रायगिहे विस्सभूति'त्ति राजगृहे नगरे विश्वभूतिर्नाम विशाखभूतिसुनः क्षत्रियोऽभवत्, तत्र च वर्षकोट्यायुष्कमासीत्, तस्मिंश्च भवे वर्षसहस्रं 'दीक्षा' प्रव्रज्या कृता संभूतियतेः पार्श्वे । तत्रैव—

गोत्तासिउ महुराए सनिआणो मासिएण भत्तेणं । महसुक्के उववण्णो तओ चुओ पोअणपुरंमि ॥ ४४६ ॥

१ तदा चक्रं मुञ्चति, तत् त्रिपृष्ठस्य तुम्बेनोरसि पतितं, तेनैव शिरश्छिन्नं, देवैरुद्घुष्टम्-एषैष त्रिपृष्ठः प्रथमो वासुदेव उत्पन्न इति । ततः सर्वे राजानः प्रणिपातमुपागताः, उपचितं ( साधितं ) अर्धभरतं, कोटीशिला दण्डबाहुभ्यां धारिता, एवं रथावर्त्तपर्वतसमीपे युद्धमासीत् । एवं परिहीयमाणे बले कृष्णेन किल जानुनी यावत् कथमपि प्रापिता । त्रिपृष्ठश्चतुरशीतिवर्षशतसहस्राणि सर्वायुः पालयित्वा कालं कृत्वा सप्तम्यां पृथिव्यामप्रतिष्ठाने नरके त्रयस्त्रिंशत्साग-रोपमस्थितिको नैरयिक उत्पन्नः । * द्वितीय + ०न्दिर्नामा रा० † नेवम् ‡ नेदम् ¶ भूतिर्नाम $ इति

गमनिका—पारणके प्रविष्टो गोत्रासितो मथुरायां निदानं चकार, मृत्वा च सनिदानोऽनालोचिताप्रतिक्रान्तो मासिकेन भक्तेन महाशुक्रे कल्पे उपपन्न उत्कृष्टस्थितिर्देव इति, 'ततो' महाशुक्राच्च्युतः पोतनपुरे नगरे—

पुत्तो पयावइस्सा मिआवईदेविकुच्छिसंभूओ । नामेण तिविट्ठुत्ती आइं आसी दसाराणं ॥ ४४७ ॥

गमनिका—पुत्रः प्रजापते राज्ञः मृगावतीदेवीकुक्षिसंभूतः नाम्ना त्रिपृष्ठः 'आदिः' प्रथम आसीद् दसाराणां, तत्र वासुदेवत्वं चतुरशीतिवर्षशतसहस्राणि पालयित्वा अधः सप्तमनरकपृथिव्यामप्रतिष्ठाने नरके त्रयस्त्रिंश ( ग्रन्थाग्रम् ४५०० ) त्सागरोपमस्थितिर्नारकः संजात इति ॥ ४४७ ॥ अमुमर्थं प्रतिपादयन्नाह—

चुलसीईमप्पइट्ठे सीहो नरएसु तिरियमणुएसु । पिअमित्त चक्कवट्टी मूआइ विदेहि चुलसीई ॥ ४४८ ॥

गमनिका—चतुरशीतिवर्षशतसहस्राणि वासुदेवभवे खल्वायुष्कमासीत्, तदनुभूय अप्रतिष्ठाने नरके समुत्पन्नः, तस्मादप्युद्धृत्य सिंहो बभूव, मृत्वा च पुनरपि नरक एवोत्पन्न इति, 'तिरियमणुएसुत्ति' पुनः कतिचित् भवग्रहणानि तिर्यग्मनुष्येषूत्पद्य 'पिअमित्त चक्कवट्टी मूआइ विदेहि चुलसीइ'त्ति अपरविदेहे मूकायां राजधान्यां धनञ्जयनृपतेः धारिणीदेव्यां प्रियमित्राभिधानः चक्रवर्ती समुत्पन्नः, तत्र चतुरशीतिपूर्वशतसहस्राण्यायुष्कमासीदिति गाथार्थः ॥ ४४८ ॥

पुत्तो धणंजयस्सा पुट्टिल परिआउ कोडि सव्वट्ठे । णंदण* छत्तग्गाए पणवीसाउ सयसहस्सा ॥ ४४९ ॥

गमनिका—तत्रासौ प्रियमित्रः पुत्रो धनञ्जयस्य धारिणीदेव्याश्च भूत्वा चक्रवर्तिभोगान् भुक्त्वा कथञ्चित् संजातसं-

* णंदणो छत्तगाए

वेगः सन् 'पोट्टिल* इति' प्रोष्ठिलाचार्यसमीपे प्रव्रजितः 'परिआओ कोडि सवट्ठे' त्ति प्रव्रज्यापर्यायो वर्षकोटी बभूव, मृत्वा महाशुक्रे कल्पे सर्वार्थे विमाने सप्तदशसागरोपमस्थितिर्देवोऽभवत् 'णंदण छत्तगाए पणवीसाउं सयसहस्सेति' ततः सर्वार्थसिद्धाच्च्युत्वा छत्राग्रायां नगर्यां जितशत्रुनृपतेर्भद्रादेव्या नन्दनो नाम कुमार उत्पन्न इति, पञ्चविंशतिवर्षशतसहस्राण्यायुष्कमासीदितिगाथार्थः ॥ ४४९ ॥ तत्र च बाल एव राज्यं चकार, चतुर्विंशतिवर्षसहस्राणि राज्यं कृत्वा ततः—

पव्वज्ज पुट्टिले सयसहस्स सव्वत्थ मासभत्तेणं । पुप्फुत्तरि उववण्णो तओ चुओ माहणकुलंमि ॥ ४५० ॥

गमनिका—राज्यं विहाय प्रव्रज्यां कृतवान् 'पोट्टिलत्ति' प्रोष्ठिलाचार्यान्तिके 'सयसहस्सं'ति वर्षशतसहस्रं यावदिति, कथम् ?, सर्वत्र मासभक्तेन—अनवरतमासोपवासेनेति भावार्थः, अस्मिन् भवे विंशति+भिः कारणैः तीर्थकरनामगोत्रं कर्म निका†चयित्वा मासिकया संलेखनयाऽऽत्मानं क्षपयित्वा षष्टिभक्तानि विहाय आलोचितप्रतिक्रान्तो मृत्वा 'पुप्फोत्तरे उववण्णोत्ति' प्राणतकल्पे पुष्पोत्तरावतंसके विमाने विंशतिसागरोपमस्थितिर्देव उत्पन्न इति । 'ततो चुओ माहणकुलंमित्ति' ततः पुष्पोत्तराच्च्युतः ब्राह्मणकुण्डग्रामनगरे ऋषभदत्तस्य ब्राह्मणस्य देवानन्दायाः पत्न्याः कुक्षौ समुत्पन्न इति गाथार्थः ॥ ४५० ॥ कानि पुनर्विंशतिः कारणानि ? यैस्तीर्थकरनामगोत्रं कर्म तेनोपनिबद्धमित्यत आह—

अरिहंतसिद्धपवयण०॥४५१॥दंसण०॥४५२॥अप्पुव्व०॥४५३॥पुरिमेण०॥४५४॥तं च कहं॥४५५॥निअमा०॥४५६॥

* पोट्टिल इति + विंशत्या ( स्यात् ) † निकाच्य ( स्यात् )

एता ऋषभदेवाधिकारे व्याख्यातत्वान्न विव्रियन्ते ।

**माहणकुंडग्गामे कोडालसगुत्तमाहणो अत्थि । तस्स घरे उववण्णो देवाणंदाइ कुच्छिंसि ॥ ४५७ ॥**

अस्या व्याख्या—पुष्पोत्तराच्युतो ब्राह्मणकुण्डग्रामे नगरे कोडालसगोत्रो ब्राह्मणः ऋषभदत्ताभिधानोऽस्ति, तस्य गृहे उत्पन्नः, देवानन्दायाः कुक्षाविति गाथार्थः ॥ ४५७ ॥ साम्प्रतं वर्धमानस्वामिवक्तव्यतानिबद्धां द्वारगाथामाह निर्युक्तिकारः—

**सुमिण १ मवहार २ ऽभिग्गह ३ जम्मण ४ मभिसेअ ५ वुड्ढि ६ सरणं ७ च ।**
**भेसण ८ विवाह ९ वच्चे १० दाणे ११ संबोह १२ निक्खमणे १३ ॥ ४५८ ॥**

गमनिका—'सुमिणेति' महास्वप्ना वक्तव्याः, यान् तीर्थकरजनन्यः पश्यन्ति, यथा च देवानन्दया प्रविशन्तो निष्क्रामन्तश्च दृष्टाः, त्रिशलया च प्रविशन्त इति । 'अवहारत्ति' अपहरणमपहारः स वक्तव्यो यथा भगवानपहृत इति । 'अभिग्गहेत्ति' अभिग्रहो वक्तव्यः, यथा भगवता गर्भस्थेनैव गृहीत इति । 'जम्मणेति' जन्मविधिर्वक्तव्यः । 'अभिसेउत्ति' अभिषेको वक्तव्यः, यथा विबुधनाथाः कुर्वन्ति, 'वुड्ढित्ति' वृद्धिर्वक्तव्या भगवतो यथाऽसौ वृद्धिं जगाम । 'सरणंति' जातिस्मरणं च वक्तव्यं । 'भेसणेति' यथा देवेन भेषितः तथा वक्तव्यं । 'विवाहेति' विवाहविधिर्वक्तव्यः । 'अवच्चेत्ति' अपत्यं-पुत्रभाण्डं वक्तव्यं । 'दाणेत्ति' निष्क्रमणकाले दानं वाच्यं । 'संबोहेति' संबोधनविधिर्वक्तव्यः यथा लोकान्तिकाः संबोधयन्ति । 'निक्खमणेत्ति' निष्क्रमणे च यो विधिरसौ वक्तव्य इति गाथासमुदायार्थः ॥ ४५८ ॥ अवयवार्थं तु प्रतिद्वारं वक्ष्यति भाष्यकार एव, तत्र स्वप्नद्वारावयवार्थमभिधित्सुराह—

**गय १ वसह २ सीह ३ अभिसेअ ४ दाम ५ ससि ६ दिणयरं ७ झयं ८ कुम्भं ९ ।**
**पउमसर १० सागर ११ विमाणभवण १२ रयणुच्चय १३ सिहिं च १४ ॥ ४६ ॥ ( भाष्यम् )**

गमनिका—गजं वृषभं सिंहं अभिषेकं दाम शशिनं दिनकरं ध्वजं कुम्भं पद्मसरः सागरं विमानभवनं रत्नोच्चयं शिखिनं च, भावार्थः स्पष्ट एव, नवरं अभिषेकः-श्रियः परिगृह्यते, . दाम-पुष्पदाम रत्नविचित्रं, विमानं च तद्भवनं च विमानभवनं-वैमानिकदेवनिवास इत्यर्थः, अथवा वैमानिकदेवप्रच्युतेभ्यः विमानं पश्यति, अधोलोकोद्वृत्तेभ्यस्तु भवनमिति, न तूभयमिति ॥

**एए चउदस सुमिणे पासइ सा माहणी सुहपसुत्ता । जं रयणिं उववण्णो कुच्छिंसि महायसो वीरो ॥४७॥ (भा०)**

गमनिका—एतान् चतुर्दश महास्वप्नान् पश्यति सा ब्राह्मणी सुखप्रसुप्ता, यस्यां रजन्यामुत्पन्नः कुक्षौ महायशा वीर इति । पश्यतीति निर्देशः पूर्ववत्, पाठान्तरं वा 'एए चोद्दस सुमिणे पेच्छिआ माहणी' ततश्च दृष्टवतीति गाथार्थः ॥

**अह दिवसे बासीई वसइ तहिं माहणीइ कुच्छिंसि । चिंतइ सोहम्मवई, साहरिउं जे जिणं कालो ॥४८॥ (भा०)**

गमनिका—अथ दिवसान् द्व्यशीतिं वसति तस्या ब्राह्मण्याः कुक्षाविति । अथानन्तरं एतावत्सु दिवसेषु अतिक्रान्तेषु चिन्तयति सौधर्मपतिः संहर्त्तुं 'जे' निपातः पादपूरणार्थः, जिनं कालो वर्त्तते इति गाथार्थः ॥ किमिति संह्रियत इत्याह—

**अरहंत चक्कवट्टी बलदेवा चेव वासुदेवा य । एए उत्तमपुरिसा न हु तुच्छकुलेसु जायंति ॥ ४९ ॥ ( भाष्यम् )**

भावार्थः स्पष्ट एव, नवरं 'तुच्छकुलेषु' असारकुलेषु इति । केषु पुनः कुलेषु जायन्ते इत्याह—

**उग्गकुलभोगखत्तिअकुलेसु इक्खागनायकोरव्वे । हरिवंसे अ विसाले आयंति तहिं पुरिससीहा ॥५०॥(भा०)**

गमनिका—उग्रकुलभोजक्षत्रियकुलेषु इक्ष्वाकुज्ञातकौरव्येषु पुनः कुलेषु हरिवंशे च विशाले 'आयंति' आगच्छन्ति उत्पद्यन्त इत्यर्थः 'तत्र' उग्रकुलादौ 'पुरुषसिंहाः' तीर्थकरादय इति गाथार्थः ॥ यस्मादेवं तस्माद् भुवनगुरुभक्त्या चोदितो देवराजो हरिणेगमेषिमभिहितवान्—एष भरतक्षेत्रे चरमतीर्थकृत् प्रागुपात्तकर्मशेषपरिणतिवशात् तुच्छकुले जातः, तदयमितः संहृत्य क्षत्रियकुले स्थाप्यतामिति । स हि तदादेशात्तथैव चक्रे । भाष्यकारस्तु अमुमेवार्थं 'अह भणती' त्यादिना प्रतिपादयति—

**अह भणइ णेगमेसिं देविंदो एस इत्थ तित्थयरो । लोगुत्तमो महप्पा उववण्णो माहणकुलंमि ॥५१॥ (भा०)**

गमनिका—'अथ' अनन्तरं भणति 'णेगमेसिं' ति प्राकृतशैल्या हरिणेगमेषिं देवेन्द्रः 'एष' भगवान् 'अत्र' ब्राह्मणकुले 'लोकोत्तमो' महात्मा उत्पन्न इति गाथार्थः ॥ इदं चासाधु, ततश्चेदं कुरु—

**खत्तिअकुंडग्गामे सिद्धत्थो नाम खत्तिओ अत्थि । सिद्धत्थभारिआए साहर तिसलाइ कुच्छिंसि ॥५२॥ (भा०)**

गमनिका—क्षत्रियकुण्डग्रामे सिद्धार्थो नाम क्षत्रियोऽस्ति, तत्र सिद्धार्थभार्यायाः संहर त्रिशलायाः कुक्षाविति गाथार्थः ॥

**बाढंति भाणिऊणं वासारत्तस्स पंचमे पक्खे । साहरइ पुव्वरत्ते हत्थुत्तर तेरसी दिवसे ॥ ५३ ॥ ( भाष्यम् )**

गमनिका-स हरिणेगमेषिः 'बाढंति भाणिऊणं'ति बाढमित्यभिधाय, अत्यर्थं करोमि आदेशं, शिरसि स्वाम्यादेशमिति, वर्षारात्रस्य पञ्चमे पक्षे मासद्वयेऽतिक्रान्ते अश्वयुग्बहुलत्रयोदश्यां संहरति पूर्वरात्रे-प्रथमप्रहरद्वयान्त इति भावार्थः, हस्तोत्तरायां त्रयोदशीदिवसे इति गाथार्थः ॥

गयगाहा ॥ ५४ ॥

एए चोद्दससुमिणे पासइ सा माहणी पडिनिअत्ते। जं रयणी अवहरिओ कुच्छीओ महायसो वीरो॥५५॥(भा०)

पूर्ववत्। इदं नानात्वं—पश्यति सा ब्राह्मणी प्रतिनिवृत्तान् यस्यां रजन्याम् अपहृतः कुक्षितः महायशा वीर इति गाथार्थः ॥

गयगाहा ॥ ५६ ॥ ( भाष्यम् )

एए चोद्दस सुमिणे पासइ सा तिसलया सुहपसुत्ता। जं रयणिं साहरिओ कुच्छिंसि महायसो वीरो॥५७॥ भा०

इदं गाथाद्वयं त्रिशलामधिकृत्य पूर्ववद्वाच्यम् ॥ गतमपहारद्वारम्, साम्प्रतमभिग्रहद्वारव्याचिख्यासयाऽऽह—

तिहिं नाणेहिं समग्गो देवी तिसलाइ सो अ कुच्छिंसि। अह वसइ सण्णिगब्भो छम्मासे अद्धमासं च॥५८॥भा०

गमनिका—'अथ' अपहारानन्तरं वसति संज्ञी चासौ गर्भश्चेति समानः, क? देव्याः त्रिशलायाः स तु कुक्षौ, आह-सर्वो गर्भस्थः संज्ञ्येव भवतीति विशेषणवैफल्यं, न, दृष्टिवादोपदेशेन विशेषणत्वात्, स च ज्ञानत्रयवानपि भवत्यत आह–त्रिभिर्ज्ञानैः—मतिश्रुतावधिभिः समग्रः। कियन्तं कालमित्याह–षण्मासान् अर्धमासं चेति गाथार्थः ॥

अह सत्तमंमि मासे गब्भत्थो चेवऽभिग्गहं गिण्हे। नाहं समणो होहं अम्मापिअरंमि जीवंते ॥ ५९ ॥ ( भा० )

गमनिका—अथ सप्तमे मासे गर्भादारभ्य तयोर्मातापित्रोर्गर्भप्रयत्नकरणेनात्यन्तस्नेहं विज्ञाय अहो ममोपर्यनयोः स्नेह इति यद्यहमनयोः जीवतोः प्रव्रज्यां गृह्णामि नूनं न भवत एतावित्यतो गर्भस्थ एव अभिग्रहं गृह्णाति,

---

* स ( मूले )

ज्ञानत्रयोपेतत्वात्। किंविशिष्टमित्याह–नाहं श्रमणो भविष्यामि मातापित्रोर्जीवतोरिति गाथार्थः ॥ एवं—

दोण्हं वरमहिलाणं गब्भे वसिऊण गब्भसुकुमालो। नवमासे पडिपुण्णे सत्त य दिवसे समइरेगे ॥६०॥(भा०)

गमनिका—द्वयोर्वरमहिलयोः गर्भे उषित्वा गर्भे सुकुमारः गर्भसुकुमारः, प्रायः अमासपुरुष इत्यर्थः। कियन्तं कालम्? नव मासान् प्रतिपूर्णान् सप्त दिवसान् 'सातिरेकान्' समधिकान् इति गाथार्थः ॥

अह चित्तसुद्धपक्खस्स तेरसीपुव्वरत्तकालंमि। हत्थुत्तराहिं जाओ कुण्डग्गामे महावीरो ॥ ६१ ॥ ( भाष्यम् )

गमनिका—'अथ' अनन्तरं चैत्रस्य शुद्धपक्षः चैत्रशुद्धपक्षः तस्य चैत्रशुद्धपक्षस्य त्रयोदश्यां पूर्वरात्रकाले–प्रथमप्रहर-द्वयान्त इति भावार्थः। हस्तोत्तरायां जातः हस्त उत्तरो यासां ता हस्तोत्तराः–उत्तराफाल्गुन्य इत्यर्थः। कुण्डग्रामे महावीर इति ॥ जातकर्म दिक्कुमार्यादिभिर्निर्वर्तितं पूर्ववदवसेयं, किञ्चित्प्रतिपादयन्नाह—

आभरणरयणवासं वुट्ठं तित्थंकरंमि जायंमि। सक्को अ देवराया उवागओ आगया निहओ ॥ ६२ ॥ (भा०)

गमनिका—आभरणानि–कटककेयूरादीनि रत्नानि–इन्द्रनीलादीनि तद्वर्षं–वृष्टिं तीर्थकरे जाते सति, शक्रश्च देवराज उपागतस्तत्रैव, तथा आगताः पद्मादयो निधय इति गाथार्थः ॥

तुट्ठाओ देवीओ देवा आणंदिआ सपरिसागा। भयवंमि वद्धमाणे तेलुक्कसुहावहे जाए ॥ ६३ ॥ ( भाष्यम् )

व्याख्या—तुष्टा देव्यः देवा आनन्दिताः सह परिषद्भिः वर्तन्त इति सपरिषदः भगवति वर्धमाने त्रैलोक्यसुखावहे जाते सतीति गाथार्थः ॥ गतं जन्मद्वारं, अभिषेकद्वारावयवार्थं प्रतिपादयन्नाह—

भवणवइवाणमंतरजोइसवासी विमाणवासी अ। सव्विड्ढीइ सपरिसा चउव्विहा आगया देवा ॥ ६४॥ (भा०)

गमनिका—भवनपतयश्च व्यन्तराश्च ज्योतिर्वासिनश्चेति समासः, विमानवासिनश्च सर्वर्ध्या सपरिषदः चतुर्विधा आगता देवा इति गाथार्थः ॥

देवेहिं संपरिवुडो देविंदो गिण्हिऊण तित्थयरं। नेऊण मंदरगिरिं अभिसेअं तत्थ कासीअ ॥ ६५ ॥ ( भाष्यम् )

व्याख्या—देवैः संपरिवृतो देवेन्द्रो गृहीत्वा तीर्थकर नीत्वा मन्दरगिरिं 'अभिसेअं' ति अभिषेकं तत्र कृतवांश्चेति गाथार्थः ॥

काऊण य अभिसेअं देविंदो देवदाणवेहिं समं। जणणीइ समप्पित्ता जम्मणमहिमं च कासीअ ॥६६॥ (भा०)

गमनिका—कृत्वा चाभिषेकं देवेन्द्रो देवदानवैः सार्धं, देवग्रहणाद् ज्योतिष्कवैमानिकग्रहणं, दानवग्रहणात् व्यन्तर-भवनपतिग्रहणमिति। ततो जनन्याः समर्प्य जन्ममहिमा च कृतवान् स्वर्गे नन्दीश्वरे द्वीपे चेति गाथार्थः ॥ साम्प्रतं यदिन्द्रादयो भुवननाथेभ्यो भक्त्या प्रयच्छन्ति तद्दर्शनायाह—

खोमं कुंडलजुअलं सिरिदामं चेव देइ सक्को से। मणिकणगरयणवासं उवच्छुभे जंभगा देवा ॥ ६७ ॥ ( भा० )

गमनिका—'क्षौमं' देववस्त्रं 'कुण्डलयुगलं' कर्णाभरणं 'श्रीदाम' अनेकरत्नखचितं दर्शनसुभगं भगवतो ददाति शक्रः 'से' तस्य। इत्थं निर्देशस्त्रिकालगोचरसूत्रप्रदर्शनार्थः। 'जृम्भकाः' व्यन्तरा देवाः, शेषं सुगममिति गाथार्थः ॥

वेसमणवयणसंचोइआ उ ते तिरिअजंभगा देवा। कोडिग्गसो हिरण्णं रयणाणि अ तत्थ उवर्णिति ॥६८॥ (भा०)

गमनिका—वैश्रमणवचनसंचोदितास्तु ते तिर्यग्जृम्भका देवाः। तिर्यगिति तिर्यग्लोकजृम्भकाः 'कोट्यग्रशः' कोटीप-

रिमाणतः 'हिरण्यम्' अघटितरूपं 'रत्नानि च' इन्द्रनीलादीनि तत्रोपनयन्तीति गाथार्थः ॥ गतमभिषेकद्वारं, इदानीं वृद्धिद्वारावयवार्थमाह—

**अह वड्ढइ सो भयवं दिअलोअचुओ अणोवमसिरीओ। दासीदासपरिवुडो परिकिण्णो पीढमद्देहिं ॥६९॥(भा०)**

अस्य व्याख्या—अथ वर्धते स भगवान् देवलोकच्युतः अनुपमश्रीको दासीदासपरिवृतः 'परिकीर्णः पीठमर्दैः' महान्नृपतिभिः परिवृत इति गाथार्थः ॥ द्वारम् ।

**असिअसिरओ सुनयणो० ॥ ७० ॥ जाईसरो अ भयवं० ॥ ७१ ॥ ( भाष्यम् )**

गाथाद्वयमिदं ऋषभदेवाधिकार इव द्रष्टव्यम् ॥ भेषणद्वारावयवार्थमाह—

**अह ऊणअट्ठवासस्स भगवओ सुरवराण मज्झंमि । संतगुणुक्कित्तणयं* करेइ सक्को सुहम्माए ॥ ७२ ॥ ( भा० )**

गमनिका—'अथ' अनन्तरं न्यूनाष्टवर्षस्य भगवतः सतः सुरवराणां मध्ये सन्तश्च ते गुणाश्च सद्गुणाः तेषां कीर्त्तनं-शब्दनमिति समासः, करोति 'शक्रो' देवराजः 'सुधर्मायां' सभायां व्यवस्थित इति गाथार्थः ॥ किंभूतमित्यत आह—

**बालो अबालभावो अबालपरक्कमो महावीरो । न हु सक्कइ भेसेउं अमरेहिँ सइंदएहिंपि ॥७३॥ ( भाष्यम् )**

गमनिका—बालः न बालभावोऽबालभावः, भावः—स्वरूपं, न बालपराक्रमोऽबालपराक्रमः, पराक्रमः—चेष्टा, 'शूर वीर

* गुणकित्तणय ( वृत्तौ )

विक्रान्तौ' विति कषायादिशत्रुजयाद् विक्रान्तो वीरः, महांश्चासौ वीरश्चेति महावीरः, नैव शक्यते भेषयितुं 'अमरैः' देवैः सेन्द्रैरपीति गाथार्थः ॥

**तं वयणं सोऊणं अह एगु सुरो असद्दहंतो उ। एइ जिणसण्णिगासं तुरिअं सो भेसणट्ठाए ॥७४॥ (भाष्यम्)**

गमनिका—तद्वचनं श्रुत्वा अथैकः 'सुरो' देवः अश्रद्धानस्तु—अश्रद्दधान इत्यर्थः, 'एति' आगच्छति 'जिनसन्निकाशं' जिनसमीपं त्वरितमसौ, किमर्थम् ?—'भेषणार्थम्' भेषणनिमित्तमिति गाथार्थः ॥ स चागत्य इदं चक्रे—

**सप्पं च तरुवरंमी काउं तिंदूसएण डिंभं च । पिट्ठी मुट्ठीइ हओ वंदिअ वीरं पडिनिअत्तो ॥ ७५ ॥ ( भा० )**

अस्या भावार्थः कथानकादवसेयः, तच्चेदम्—देवो[1] भगवओ सकाशमागओ, भगवं पुण चेडरूवेहिं समं रुक्खखेड्डेण कीलइ, तेसु रुक्खेसु जो पढमं विलग्गति जो य पढमं ओलुहति सो चेडरूवाणि वाहेइ, सो अ देवो आगंतूण हेट्ठओ रुक्खस्स सप्परूवं विउव्वित्ता अच्छइ उप्परामुहो, सामिणा अमूढेण वामहत्थेण सत्ततिलमित्तत्ते छूढो, ताहे देवो चिंतेइ—एत्थ ताव न छलिओ । अह पुणरवि सामी तेंदूसएण रमइ, सो य देवो चेडरूवं विउव्विऊण सामिणा समं अभिरमइ, तत्थ सामिणा

१ देवो भगवत सकाशमागत , भगवान्पुन चेटरूपै सम वृक्षक्रीडया क्रीडति, तेषु वृक्षेषु यः प्रथममारोहति यश्च प्रथममवरोहति स चेटरूपाणि वाहयति, स च देव आगत्याधो वृक्षस्य सर्परूप विकुर्व्य तिष्ठति उपरिमुख , स्वामिना अमूढेन वामहस्तेन सप्ततालमात्रतस्त्यक्त , तदा देवश्चिन्तयति—अत्र तावन्न छलित । अथ पुनरपि स्वामी तिन्दूसकेन रमते, स च देवश्चेटरूप विकुर्व्य स्वामिना सममभिरमते, तत्र स्वामिना

सो जिओ[1], तस्स उवरिं विलग्गो, सो य वड्ढिउं पवत्तो पिसायरूवं विउव्वित्ता, तं सामिणा अभीएण तलप्पहारेण पहओ जहा तत्थेव णिव्वुड्डो, एत्थवि न तिण्णो छलिउं, देवो वंदित्ता गओ। अयं पुनरक्षरार्थः—सर्पं च तरुवरे कृत्वा 'तेन्दूसकेन' क्रीडाविशेषेण हेतुभूतेन 'डिम्भं च' बालरूपं च, कृत्वेत्यनुवर्त्तते । पृष्ठौ मुष्टिना हतः वन्दित्वा वीरं प्रतिनिवृत्त इत्यक्षरार्थः ॥ अन्यदा भगवन्तमधिकाष्टवर्षं कलाग्रहणयोग्यं विज्ञाय मातापितरौ लेखाचार्याय उपनीतवन्तौ । आह च—

**अह तं अम्मापिअरो जाणित्ता अहिअअट्ठवासं तु । कयकोउअलंकारं लेहायरिअस्स उवणिंति ॥७६॥ (भा०)**

गमनिका—'अथ' अनन्तरं भगवन्तं मातापितरौ ज्ञात्वा अधिकाष्टवर्षं तु कृतानि रक्षादीनि कौतुकानि केयूरादयोऽलङ्काराश्च यस्येति समासः, तं 'लेखाचार्याय' उपाध्यायायेत्यर्थः । 'उवणेंति' त्ति प्राकृतशैल्या उपनयतः, पाठान्तरं वा 'उवणेंसु' तदा उपनीतवन्त इति गाथार्थः ॥ अत्रान्तरे देवराजस्य खल्वासनकम्पो बभूव, अवधिना च विज्ञायेदं प्रयोजनं अहो खल्वपत्यस्नेहविलसितं भुवनगुरुमातापित्रोः येन भगवन्तमपि लेखाचार्याय उपनेतुमभ्युद्यतौ इति संप्रधार्य आगत्य चोपाध्यायतीर्थकरयोः परिकल्पितयोः बृहदल्पयोरासनयोः उपाध्यायपरिकल्पिते बृहदासने भगवन्तं निवेश्य शब्दलक्षणं पृष्टवान् ॥ अमुमेवार्थं प्रतिपादयति भाष्यकारः 'सक्को अ०' इत्यादिनेति ।

**सक्को अ तस्समक्खं भगवंतं आसणे निवेसित्ता। सद्दस्स लक्खणं पुच्छे वागरणं अवयवा इंदं ॥७७॥ (भा०)**

१ स जित तस्योपरि विलग्न , स च वर्धितु प्रवृत्त पिशाचरूप विकुर्व्य, तथा स्वामिनाऽभीतेन तलप्रहारेण प्रहत यथा तत्रैव निमग्न , अत्रापि न शक्तश्छलितु, देवो वन्दित्वा गत ।

गमनिका—शक्रश्च 'तत्समक्षं' लेखाचार्यसमक्षं 'भगवंतं' तीर्थकरं आसने निवेश्य शब्दस्य लक्षणं पृच्छति । पाठान्तरं वा 'पुच्छिसु सद्दलक्खणं, वागरणं अवयवा इंदं' पृष्टवान् शब्दलक्षणं, भगवता च व्याकरणमभ्यधायि, व्याक्रियन्ते लौकिकसामयिकाः शब्दा अनेनेति व्याकरणं-शब्दशास्त्रं, तदवयवाः केचन उपाध्यायेन गृहीताः, ततश्च ऐन्द्रं व्याकरणं संजातमिति गाथार्थः ॥ द्वारम् । विवाहद्वारावयवार्थमभिधित्सयाऽऽह—

उम्मुक्कबालभावो कमेण अह जोव्वणं अणुप्पत्तो । भोगसमत्थं णाउं अम्मापिअरो उ वीरस्स ॥ ७८ ॥ (भा०)

गमनिका—एवं उन्मुक्तो बालभावो येनेति समासः, 'क्रमेण' उक्तप्रकारेण 'अथ' अनन्तरं 'यौवनं' वयोविशेषलक्षणं बालादिभावात् पश्चात् प्राप्तः अनुप्राप्तः । अत्रान्तरे भुज्यन्त इति भोगाः-शब्दादयः तेषां समर्थो भोगसमर्थः तं ज्ञात्वा भगवन्तं, कौ ?-मातापितरौ तु वीरस्येति गाथार्थः ॥ किम् ?—

तिहिरिक्खंमि पसत्थे महन्तसामन्तकुलपसूआए । कारेंति पाणिगहणं जसोअवररायकण्णाए ॥ ७९ ॥ (भा०)

गमनिका—तिथिश्च ऋक्षं च तिथिऋक्षं, ऋक्षं-नक्षत्रं, तस्मिन् तिथिऋक्षे, 'प्रशस्ते' शोभने, महच्च तत्सामन्तकुलं च महासामन्तकुलं तस्मिन् प्रसूतेति समासः तया, कारयतः मातापितरौ, पाणेर्ग्रहणं पाणिग्रहणं, कया ?-यशोदा चासौ वरराजकन्या चेति विग्रहः तया, तत्र 'महासामन्तकुलप्रसूतया' इत्यनेनान्वयमहत्त्वमाह, 'वरराजकन्यया' इत्यनेन तु तत्कालराज्यसंपद्युक्ततामाहेति गाथार्थः ॥ द्वारम् । अपत्यद्वारावयवार्थं व्याचिख्यासुराह—

पंचविहे माणुस्से भोगे भुंजित्तु सह जसोआए । तेयसिरिव्व सुरूवं जणेइ पिअदंसणं धूअं ॥ ८० ॥ (भा०)

गमनिका—'पञ्चविधान्' पञ्चप्रकारान् शब्दादीन् मनुष्याणामेते मानुष्यास्तान् भोगान् भुक्त्वा 'ततो' यशोदायाः, तेजसः श्रीः तेजःश्रीः तां तेजःश्रियमिव सुरूपां, अथवा तस्याः श्रियमिवेति पाठान्तरं वा । जनयति प्रियदर्शनां 'धुतां' दुहितरं, 'जणिंसु' वा पाठः, जनितवानिति गाथार्थः ॥ द्वारम् । अत्रान्तरे च भगवतः मातापितरौ कालगतौ, भगवानपि तीर्णप्रतिज्ञः प्रव्रज्याग्रहणाहितमतिः नन्दिवर्धनपुरस्सरं स्वजनमापृच्छति स्म, स पुनराह-भगवन् ! क्षारं क्षते मा क्षिपस्व, कियन्तमपि कालं तिष्ठ, भगवानाह-कियन्तम् ?, स्वजन आह-वर्षद्वयं, भगवानाह-भोजनादौ मम व्यापारो न वोढव्य इति, प्रतिपन्ने भगवान् समधिकं वर्षद्वयं प्रासुकैषणीयाहारः शीतोदकमप्यपिबन् तस्थौ, अत्रान्तर एव महादानं दत्तवान्, लोकान्तिकैश्च प्रतिबोधितः पुनः पूर्णावधिः प्रव्रजित इति॥ अमुमेवार्थं संक्षेपतः प्रतिपादयन् आह निर्युक्तिकृत्—

हत्थुत्तरजोएणं कुंडग्गामंमि खत्तिओ जच्चो । वज्जरिसहसंघयणो भविअजणविबोहओ वीरो ॥ ४५९ ॥
सो देवपरिग्गहिओ तीसं वासाइ वसइ गिहवासे । अम्मापिईहिँ भयवं देवत्तगएहिँ पव्वइओ ॥ ४६० ॥

गमनिका—'हस्तोत्तरायोगेन' उत्तराफाल्गुनीयोगेनेत्यर्थः, कुण्डग्रामे नगरे क्षत्रियो 'जात्यः' उत्कृष्ट इत्यर्थः, वज्रऋषभसंहननो भव्यजनविबोधको वीरः, किम् ?-मातापितृभ्यां भगवान् देवत्वगताभ्यां प्रव्रजित इति योगः । द्वितीयगाथाग-

* तओ वृत्तौ प्र०

मनिका-'सः' भगवान् देवपरिगृहीतः त्रिंशद्वर्षाणि वसति, उषित्वा वा पाठान्तरं, गृहवासे शेषं व्याख्यातमेव ॥ ४५९-४६० ॥ साम्प्रतं भाष्यकारः प्रतिद्वारं अवयवार्थं व्याख्यानयति-'संवच्छरेण०' गाथेत्यादिना—

संवच्छरेण० ॥ ८१ ॥ एगा हिरण्ण० ॥८२॥ सिंघाडय० ॥ ८३ ॥ वरवरिआ० ॥ ८४ ॥ तिण्णेव य० ॥ ८५ ॥ (भा०)

इदं गाथापञ्चकं ऋषभदेवाधिकारे व्याख्यातत्वान्न विव्रियते ॥ द्वारम् । संबोधनद्वारावयवार्थमाह—

सारस्सयमाइच्चा० ॥ ८६ ॥ एए देवनिकाया० ॥ ८७ ॥ (भा०)

एवं अभित्थुव्वंतो बुद्धो बुद्धारविंदसरिसमुहो । लोगंतिगदेवेहिँ कुंडग्गामे महावीरो ॥ ८८ ॥ (भा०)

इदमपि गाथात्रयं व्याख्यातत्वात् न प्रतन्यते । आह-ऋषभदेवाधिकारे 'संबोहणपरिच्चाए त्ति' इत्यादिद्वारगाथाया संबोधनोत्तरकालं परित्यागद्वारमुक्तं, तथा मूलभाष्यकृता व्याख्या कृतेति, अधिकृतद्वारगाथायां तु 'दाणे संबोध निक्खमणे' इत्यभिहितं, इत्थं व्याख्या (च) कृतेति । ततश्च इह दानद्वारस्य संबोधनद्वारात् पूर्वमुपन्यासः तत्र वा संबोधनद्वारादुत्तरं परित्यागद्वारस्य विरुध्यत इति, उच्यते, न सर्वतीर्थकराणामयं नियमो यदुत-संबोधनोत्तरकालभाविनी महादानप्रवृत्तिरिति, अधिकृतग्रन्थोपन्यासान्यथानुपपत्तेः, नियमेऽपीह दानद्वारस्य बहुतरवक्तव्यत्वात् संबोधनद्वारात् प्रागुपन्यासो न्यायप्रदर्शनार्थोऽविरुद्ध एव, अधिकृतद्वारगाथानियमे तु व्यत्ययेन परिहारः-तत्राल्पवक्तव्यत्वात् संबोधनद्वारस्य प्रागुपन्यासः, इत्येतावन्तः संभविनः पक्षाः, तत्त्वं तु विशिष्टश्रुतविदो जानन्तीति अलं प्रसङ्गेन ॥ द्वारम् । साम्प्रतं निष्क्रमणद्वारावयवार्थं व्याचिख्यासुराह—

**मणपरिणामो अ कओ अभिनिक्खमणंमि जिणवरिंदेण।देवेहिँ य देवीहिँ य समंतओ उच्छयं गयणं॥८९॥ (भा०)**

गमनिका—मनःपरिणामश्च कृतः 'अभिनिष्क्रमणे' इति अभिनिष्क्रमणविषयो जिनवरेन्द्रेण, तावत् किं संजातमित्याह–देवैर्देवीभिश्च 'समन्ततः' सर्वासु दिक्षु 'उच्छयं गयणं' ति व्याप्तं गगनमिति गाथार्थः ॥

**भवणवइवाणमंतरजोइसवासी विमाणवासी अ। धरणियले गयणयले विज्जुज्जोओ कओ खिप्पं ॥९०॥ (भा०)**

गमनिका—यैर्देवैः गगनतलं व्याप्तं ते खल्वमी वर्त्तन्ते–भवनपतयश्च व्यन्तराश्च ज्योतिर्वासिनश्चेति समासः, ज्योतिःशब्देन इह तदालया एवोच्यन्ते, विमानवासिनश्च। अमीभिरागच्छद्भिः धरणितले गगनतले विद्युतामिवोद्योतो विद्युदुद्योतः कृतः 'क्षिप्रं' शीघ्रमिति गाथार्थः ॥

**जाव य कुंडग्गामो जाव य देवाण भवणआवासा। देवेहिँ य देवीहिँ य अविरहिअं संचरंतेहिँ ॥ ९१ ॥ (भा०)**

गमनिका—यावत् कुण्डग्रामो यावच्च देवानां भवनावासा अत्रान्तरे धरणितलं गगनतलं च देवैः देवीभिश्च 'अविरहितं' व्याप्तं संचरद्भिरिति गाथार्थः ॥ अत्रान्तरे देवैरेव भगवतः शिविकोपनीता, तामारुह्य भगवान् सिद्धार्थवनमगमत्, अमुमेवार्थं प्रतिपादयति–'चंदप्पभा येत्यादिना'—

**चन्दप्पभा य सीआ उवणीआ जम्मजरणमुक्कस्स। आसत्तमल्लदामा जलयथलयदिव्वकुसुमेहिँ ॥९२॥ (भा०)**

व्याख्या—चन्द्रप्रभा शिविकेत्यभिधानं 'उपनीता' आनीता, कस्मै ?–जरामरणाभ्यां मुक्तवत् मुक्तः तस्मै–वर्धमानायेत्यर्थः, षष्ठी चतुर्थ्यर्थे द्रष्टव्या। किंभूता सेत्याह–आसक्तानि माल्यदामानि यस्यां सा तथोच्यते, तथा जलजस्थलजदिव्यकुसुमैः, चर्चितेति वाक्यशेषः इति गाथार्थः ॥ शिविकाप्रमाणदर्शनायाह—

**पंचासइ आयामा धणूणि विच्छिण्ण पण्णवीसं तु। छत्तीसइमुव्विद्धा सीया चंदप्पभा भणिआ ॥९३॥ (भा०)**

व्याख्या—पञ्चाशत् धनूंषि आयामो–दैर्घ्यं यस्याः सा पञ्चाशदायामा धनूंषि, विस्तीर्णा पञ्चविंशत्येव, षट्त्रिंशद्धनूंषि 'उव्विद्धत्ति' उच्चा, उच्चैस्त्वेन षट्त्रिंशद्धनूंषीति भावार्थः, शिबिका चन्द्रप्रभाभिधाना 'भणिता' प्रतिपादिता तीर्थकरगणधरैरिति, अनेन शास्त्रपारतन्त्र्यमाहेति गाथार्थः ॥

**सीआइ मज्झयारे दिव्वं मणिकणगरयणचिंचइअं। सीहासणं महरिहं सपायवीढं जिणवरस्स ॥९४॥ (भा०)**

व्याख्या—शिबिकाया मध्य एव मध्यकारस्तस्मिन् 'दिव्यं' सुरनिर्मितं मणिकनकरत्नखचितं सिंहासनं महार्हं, तत्र मणयः–चन्द्रकान्ताद्याः कनकं–देवकाञ्चनं रत्नानि–मरकतेन्द्रनीलादीनि 'चिंचइअं' ति देशीवचनतः खचितमित्युच्यते। सिंहप्रधानमासनं सिंहासनं, महान्तं–भुवनगुरुमर्हतीति महार्हं, सह पादपीठेनेति सपादपीठं, जिनवरस्य, कृतमिति वाक्यशेषः इति गाथार्थः ॥

**आलइअमालमउडो भासुरबोंदी पलंबवणमालो। सेययवत्थनियत्थो जस्स य मोल्लं सयसहस्सं ॥ ९५ ॥**

**छट्ठेणं भत्तेणं अज्झवसाणेण सोहँणेण जिणो। लेसाहिँ विसुज्झंतो आरुहई उत्तमं सीअं ॥ ९६ ॥ (भा०)**

* सुंदरेण वृत्तौ

व्याख्या—आलइअं आविद्धमुच्यते, माला–अनेकसुरकुसुमग्रथिता, मुकुटस्तु प्रसिद्ध एव, माला च मुकुटश्च मालामुकुटौ आविद्धौ मालामुकुटौ यस्येति विग्रहः। भास्वरा–छायायुक्ता बोन्दी–तनुः यस्य स तथाविधः, प्रलम्बा वनमाला–प्रागभिहिता अन्या वा यस्येति समासः। 'सेययवत्थनियत्थो' त्ति नियत्थं–परिहितं भण्णइ, निवसितं श्वेतं वस्त्रं येन स निवसितश्वेतवस्त्रः, बन्धानुलोम्यात् निवसितशब्दस्य सूत्रान्ते प्रयोगः, लक्षणतस्तु बहुव्रीहौ निष्ठान्तं पूर्वं निपततीति पूर्वं द्रष्टव्यः, श्वेतवस्त्रपरिधान इत्यर्थः। यस्य च मूल्यं शतसहस्रं दीनाराणामिति गाथार्थः ॥ स एवंभूतो भगवान् मार्गशीर्षबहुलदशम्यां हस्तोत्तरानक्षत्रयोगेन 'छट्ठेणं भत्तेणं' इत्यादि, षष्ठेन भक्तेन, दिनद्वयमुपोषित इत्यर्थः। अध्यवसानं–अन्तःकरणसव्यपेक्षं विज्ञानं तेन 'सुन्दरेण' शोभनेन 'जिनः' पूर्वोक्तः, तथा लेश्याभिर्विशुध्यमानः मनोवाक्कायपूर्विकाः कृष्णादिद्रव्यसंबन्धजनिताः खलु आत्मपरिणामाः लेश्या इति, उक्तं च–"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥१॥" ताभिः विशुध्यमानः, किम् ?–आरोहति 'उत्तमां' प्रधानां शिविकामिति गाथार्थः ॥

**सीहासणे निसण्णो सक्कीसाणा य दोहि पासेहिँ। वीअंति चामरेहिँ मणिकणँगविचित्तदंडेहिँ ॥९७॥ (भा०)**

व्याख्या—तत्र भगवान् सिंहासने निषण्णः शक्रेशानौ च देवनाथौ द्वयोः पार्श्वयोः व्यवस्थितौ, किम् ?–वीजयतः, काभ्याम् ?–चामराभ्यां, किंभूताभ्याम् ?–मणिरत्नविचित्रदण्डाभ्यामिति गाथार्थः ॥ एवं भगवति शिविकान्तर्वर्त्तिनि सिंहासनारूढे सति सा शिविका सिद्धार्थोद्यानननयनाय उत्क्षिप्ता ॥ कैरित्याह—

* ०रयण० वृत्तौ

पुव्विं उक्खित्ता माणुसेहिँ सा हट्ठरोमकूवेहिँ। पच्छा वहंति सीअं असुरिंदसुरिंदनागिंदा ॥९८॥ (भा०)

व्याख्या—'पूर्वं' प्रथमं 'उत्क्षिप्ता' उत्पाटिता, कैः?—मानुषैः, सा शिबिका, किंविशिष्टैः?—हृष्टानि रोमकूपानि येषामिति-समासः, तैः। पश्चाद्वहन्ति शिबिकां, के?—असुरेन्द्रसुरेन्द्रनागेन्द्रा इति गाथार्थः॥ असुरादिस्वरूपव्यावर्णनायाह—

चलचवलभूसणधरा सच्छंदविउव्विआभरणधारी। देविंददाणविंदा वहंति सीअं जिणिंदस्स ॥९९॥ (भा०)

गमनिका—चलाश्च ते चपलभूषणधराश्चेति समासः। चलाः—गमनक्रियायोगात् हारादिचपलभूषणधराश्च। स्वच्छन्देन—स्वाभिप्रायेण विकुर्वितानि—देवशक्त्या कृतानि आभरणानि—कुण्डलादीनि धारयितुं शीलं येषामिति समासः। अथवा चलचपलभूषणधरा इत्युक्तं, तानि च भूषणानि किं ते परनिर्मितानि धारयन्ति उत नेति विकल्पसंभवे व्यवच्छेदार्थमाह—'स्वच्छन्दविकुर्विताभरणधारिणः', क एते?-देवेन्द्रा दानवेन्द्राः. किम्?-वहन्ति शिबिकां जिनेन्द्रस्येति गाथार्थः॥ अत्रान्तरे—

कुसुमाणि पंचवण्णाणि मुयंता दुंदुही य ताडंता। देवगणा य पहट्ठा समंतओ उच्छयं गयणं ॥१००॥ (भा०)

व्याख्या—भगवति शिबिकारूढे गच्छति सति नभःस्थलस्थाः कुसुमानि शुक्लादिपञ्चवर्णानि मुञ्चन्तः तथा दुदुम्भीस्ताडयन्तश्च, के?—'देवगणाः' देवसंघाताः, चशब्दस्य प्राक्संबन्धो व्यवहितः प्रदर्शित एव, प्रकर्षेण हृष्टाः प्रहृष्टाः, किम्?—भगवन्तमेव स्तुवन्तीति क्रियाऽध्याहारः। एवं स्तुवद्भिर्देवैः किमित्याह—'समन्ततः' सर्वासु दिक्षु सर्वं 'उच्छयं गगणं' व्याप्तं गगनमिति गाथार्थः॥

वणसंडोव्व कुसुमिओ पउमसरो वा जहा सरयकाले। सोहइ कुसुमभरेणं इय गगणयलं सुरगणेहिँ ॥१०१॥ भा०)

गमनिका—वनखण्डमिव कुसुमितं पद्मसरो वा यथा शरत्काले शोभते कुसुमभरेण—हेतुभूतेन, 'इय' एवं गगनतलं सुरगणैः शुशुभे इति गाथार्थः॥

सिद्धत्थवणं च(व)जहा असणवणं सणवणं असोगवणं। चूअवणंव कुसुमिअं इअ गयणयलं सुरगणेहिँ १०२(भा०)

व्याख्या—सिद्धार्थकवनमिव यथा असनवनं, अशनाः—बीजकाः, सणवनं अशोकवनं चूतवनमिव कुसुमितं, 'इअ' एवं गगनतलं सुरगणै रराजेति गाथार्थः॥

अयसिवणं व कुसुमिअं कणिआरवणं व चंपयवणं व।
तिलयवणं व कुसुमिअं इअ गयणतलं सुरगणेहिँ ॥१०३॥ (भा०)

व्याख्या—अतसीवनमिव कुसुमितं, अतसी—मालवदेशप्रसिद्धा, कर्णिकारवनमिव चम्पकवनमिव तथा तिलकवनमिव कुसुमितं यथा राजते, 'इअ' एवं गगनतलं सुरगणैः क्रियायोगः पूर्ववदिति गाथार्थः॥

वरपडहभेरिझल्लरिदुंदुहिसंखसहिएहिँ तूरेहिँ। धरणियले गयणयले तूरनिनाओ परमरम्मो ॥१०४॥ (भा०)

व्याख्या—वरपटहभेरिझल्लरिदुन्दुभिशङ्खसहितैस्तूर्यैः करणभूतैः, किम्?—धरणितले गगनतले 'तूर्यनिनादः' तूर्यनिर्घोषः परमरम्योऽभवदिति गाथार्थः॥

एवं सदेवमणुआसुराएँ परिसाएँ परिवुडो भयवं। अभिथुव्वंतो गिराहिँ संपत्तो नायसंडवणं ॥१०५॥ (भा०)

गमनिका—'एवं' उक्तेन विधिना, सह देवमनुष्यासुरैर्वर्त्तत इति सदेवमनुष्यासुरा तया, कयेत्याह—परिषदा परिवृतो भगवान् अभिस्तूयमानो 'गीर्भिः' वाग्भिरित्यर्थः, संप्राप्तः ज्ञातखण्डवनमिति गाथार्थः॥

उज्जाणं संपत्तो ओरुभइ उत्तमाउ सीआओ। सयमेव कुणइ लोअं सक्को से पडिच्छए केसे ॥१०६॥ (भा०)

गमनिका—उद्यानं संप्राप्तः, 'ओरुहइत्ति' अवतरति उत्तमायाः शिबिकायाः, तथा स्वयमेव करोति लोचं, 'शक्रो' देवराजा 'से' तस्य प्रतीच्छति केशानिति, एवं वृत्तानुवादेन ग्रन्थकारवचनत्वात् वर्त्तमाननिर्देशः सर्वत्र अविरुद्ध एवेति गाथार्थः॥

जिणवरमणुण्णवित्ता अंजणघणरुयगविमलसंकासा।
केसा खणेण नीआ खीरसरिसनामयं उदहिँ ॥१०७॥ (भा०)

गमनिका—शक्रेण—जिनवरमनुज्ञाप्य अञ्जनं—प्रसिद्धं घनो—मेघः रुक्—दीप्तिः, अञ्जनघनयो रुक् अञ्जनघनरुक् अञ्जनघनरुग्वत् विमलः संकाशः—छायाविशेषो येषां ते तथोच्यन्ते। अथवा अञ्जनघनरुचकविमलानामिव संकाशो येषामिति समासः 'रुचकः' कृष्णमणिविशेष एव, क एते?—केशाः, किम्?—क्षणेन नीताः, कम्?—'क्षीरसदृशनामानमुदधिं' क्षीरोदधिमिति गाथार्थः॥ अत्रान्तरे च चारित्रं प्रतिपत्तुकामे भगवति सुरासुरमनुजवृन्दसमुद्भवो ध्वनिस्तूर्यनिनादश्च शक्रादेशाद् विरराम, अमुमेवार्थं प्रतिपादयन्नाह—

दिव्वो मणूसघोसो तूरनिनाओ अ सक्कवयणेणं। खिप्पामेव निलुक्को जाहे पडिवज्जइ चरित्तं॥१०८॥ (भा०)

गमनिका—'दिव्यो' देवसमुत्थो मनुष्यघोषश्च, चशब्दस्य व्यवहितः संबन्धः, तथा तूर्यनिनादश्च शक्रवचनेन 'क्षिप्र-

मेव' शीघ्रमेव 'निलुक्कोत्ति' देशीवचनतो विरतः 'यदा' यस्मिन् काले प्रतिपद्यते चारित्रमिति गाथार्थः ॥ स यथा चारित्रं प्रतिपद्यते तथा प्रतिपिपादयिषुराह—

**काऊण नमोक्कारं सिद्धाणमभिग्गहं तु सो गिण्हे। सव्वं मे अकरणिज्जं पावंति चरित्तमारूढो ॥ १०९॥(भा०)**

व्याख्या—कृत्वा नमस्कारं सिद्धेभ्यः अभिग्रहमसौ गृह्णाति, किंविशिष्टमित्याह—सर्वं 'मे' मम 'अकरणीयं' न कर्त्तव्यं, किं तदित्याह—पापमिति, किमित्याह—चारित्रमारूढ इतिकृत्वा, स च भदन्तशब्दरहितं सामायिकमुच्चारयतीति गाथार्थः ॥ चारित्रप्रतिपत्तिकाले च स्वभावतो भुवनभूषणस्य भगवतो निर्भूषणस्य सत इन्द्रो देवदूष्यवस्त्रमुपनीतवान् इति । अत्रान्तरे कथानकम्—[1]एगेण देवदूसेण पव्वएइ, एतं जाहे असे करेइ एत्थनरा पिउवयंसो धिज्जाइओ उवट्ठिओ, सो अ दाणकाले कहिंपि पवसिओ आसी, आगओ भज्जाए अंबाडिओ, सामिणा एवं परिचत्त, तुमं च पुण वणाइ हिंडसि, जाहि जइ इत्थंतरेऽवि लभिज्जासि । सो भणइ—सामि ! तुब्भेहिं मम न किंचि दिण्णं, इदाणिंपि मे देहि । ताहे सामिणा तस्स दूसस्स अद्धं दिण्णं, अन्नं मे नत्थि परिचत्तंति । तं तेण तुण्णागस्स उवणीअं जहा एअस्स दसिआओ बधाहि । कत्तोत्ति पुच्छिए भणति—सामिणा दिण्णं, तुण्णाओ भणति—तंपि से अद्धं आणेहि, जया पडिहिति भगवओ अंसाओ, ततो अहं तुण्णामि ताहे लक्खमोल्लं भविस्सइत्ति तो तुज्झवि अद्धं मज्झवि अद्धं, पडिवण्णो ताहे पओलग्गिओ,[1]सेसमुवरि भणिहामि । अलं प्रसङ्गेन ॥ तस्य भगवतश्चारित्रप्रतिपत्तिसमनन्तरमेव मनःपर्यायज्ञानमुदपादि, सर्वतीर्थकृतां चायं क्रमो, यत आह—

> **तिहिं नाणेहिं समग्गा तित्थयरा जाव हुंति गिहवासे ।**
> **पडिवण्णंमि चरित्ते चउनाणी जाव छउमत्था ॥ ११० ॥ ( भा० )**

व्याख्या—'त्रिभिर्ज्ञानैः' मतिश्रुतावधिभिः संपूर्णाः तीर्थकरणशीलास्तीर्थकरा भवन्तीति योगः । किं सर्वमेव कालम् ? नेत्याह—यावद्गृहवासे भवन्तीति वाक्यशेषः । प्रतिपन्ने चारित्रे चतुर्ज्ञानिनो, भवन्तीत्यनुवर्त्तते । कियन्तं कालमित्याह—यावत् छद्मस्थाः तावदपि चतुर्ज्ञानिन इति गाथार्थः ॥ एवमसौ भगवान् प्रतिपन्नचारित्रः समासादितमनःपर्यवज्ञानो ज्ञातखण्डादापृच्छ्य स्वजनान् कर्मारग्राममगमत् । आह च भाष्यकारः—

**बहिआ य णायसंडे आपुच्छित्ताण नायए सव्वे। दिवसे मुहुत्तसेसे कुमारगामं समणुपत्तो ॥ १११ ॥ (भा०)**

व्याख्या—बहिर्धा च कुण्डपुरात् ज्ञातखण्ड उद्याने, आपृच्छ्य 'ज्ञातकान्' स्वजनान् 'सर्वान्' यथासन्निहितान्, तस्मात् निर्गतः, कर्मारग्रामगमनायेति वाक्यशेषः । तत्र च पथद्वयं—एको जलेन अपरः स्थलयां, तत्र भगवान् स्थलया गतवान्, गच्छंश्च दिवसे मुहूर्त्तशेषे कर्मारग्राममनुप्राप्त इति गाथार्थः ॥ तत्र प्रतिमया स्थित इति । अत्रान्तरे—[2]तत्थेगो गोवो, सो दिवसं बइल्ले वाहित्ता गामसमीवं पत्तो, ताहे चिंतेइ—एए गामसमीवे चरंतु, अहंपि ता गावीओ दुहामि, सोऽवि ताव अन्तो परिकम्मं करेइ, तेऽवि बइल्ला अडविं चरन्ता पविट्ठा, सो गोवो निग्गओ, ताहे सामिं पुच्छइ—कहिं बइल्ला ?, ताहे सामी तुण्हिक्को अच्छइ, सो चिंतेइ—एस न याणइ, तो मग्गिउं पवत्तो सव्वरत्तिंपि, तेऽवि बइल्ला सुचिरं भमित्ता गामसमीवमागया माणुसं दट्ठूण रोमंथंता अच्छंति, ताहे सो आगओ, ते पेच्छइ तत्थेव निविट्ठे, ताहे आसुरुत्तो एएण दामएण आहणामि, एएण मम एए हरिआ, पभाए घेत्तूण वच्चिहामित्ति । ताहे सक्को देवराया चिंतेइ—किं अज्ज सामी पढमदिवसे करेइ ?, जाव पेच्छइ गोवं धावंतं, ताहे सो तेण थंभिओ, पच्छा आगओ तं तज्जेति—दुरप्पा ! न याणसि सिद्धत्थरायपुत्तो एस पव्वइओ । एयंमि अंतरे सिद्धत्थो सामिस्स माउसियाउत्तो बालतवोकम्मेणं वाणमन्तरो जाएल्लओ,

[1] एकेन देवदूष्येण प्रव्रजति, एतद् यदाऽसे करोति, अत्रान्तरे पितृवयस्यो धिग्जातीय उपस्थितः, स च दानकाले कुत्रापि प्रोषितोऽभवत्, आगतो भार्यया तर्जितः—स्वामिना एवं परित्यक्त, त्वं च पुनर्वनानि हिण्डसे, याहि यद्यत्रान्तरेऽपि लभेथाः । स भणति—स्वामिन् ! युष्माभिर्मम न किञ्चिद्दत्तं, इदानीमपि मह्यं देहि । तदा स्वामिना तस्मै दूष्यस्यार्धं दत्तं, अन्यन्मे नास्ति परित्यक्तमिति । तन्तेन तुन्नवायायोपनीतं यथैतस्य दशा बधान । कुत इति पृष्टे भणति—स्वामिना दत्तं, तुन्नवायः भणति—तदपि तस्यार्धं आनय, यदा पतति भगवतोऽसात्, ततोऽहं वयामि । तदा लक्षमूल्यं भविष्यतीति, ततस्तवाप्यर्धं ममाप्यर्धं, प्रतिपन्नस्तदा प्रावलग्नः । शेषमुपरिष्टात् भणिष्यामि

[2] पादाभ्याम् प्र० [2] तत्रैको गोपः स दिवसं बलीवर्दौ वाहयित्वा ग्रामसमीपं प्राप्तः, तदा चिन्तयति—एतौ ग्रामसमीपे चरतां, अहमपि तावद् गा दोह्मि, सोऽपि तावदन्तः परिकर्म करोति, तावपि बलीवर्दौ चरन्तावटवीं प्रविष्टौ, स गोपो निर्गतः, तदा स्वामिनं पृच्छति—क्व बलीवर्दौ ?, तदा स्वामी तूष्णीकस्तिष्ठति, स चिन्तयति—एष न जानाति, ततः मार्गयितुं प्रवृत्तः सर्वरात्रिमपि, तावपि बलीवर्दौ सुचिरं भ्रान्त्वा ग्रामसमीपमागतौ मानुषं दृष्ट्वा रोमन्थायमानौ तिष्ठतः, तदा स आगतः, तौ पश्यति तत्रैव निविष्टौ, तदा क्रुद्ध एतेन दाम्नाऽऽहन्मि, एतेन मम एतौ हृतौ, प्रभाते गृहीत्वा वजिष्यामीति । तदा शक्रो देवराजश्चिन्तयति— किमद्य स्वामी प्रथमदिवसे करोति, यावत्पश्यति गोपं धावन्तं, तदा स तेन स्तम्भितः, पश्चादागतस्तं तर्जयति—दुरात्मन् ! न जानीषे सिद्धार्थराजपुत्र एष प्रव्रजितः । एतस्मिन्नन्तरे सिद्धार्थः स्वामिनः मातृष्वस्रेयः बालतपःकर्मणा वानमन्तरो जातोऽभवत्

सो आगओ। ताहे सक्को भणइ-भगवं! तुब्भ उवसग्गबहुलं, अहं बारस वरिसाणि तुब्भं वेयावच्चं करेमि, ताहे सामिणा भणिअं-न खलु देविंदा! एयं भूअं वा (भव्वं वा भविस्सं वा) जण्णं अरहंता देविंदाण वा असुरिंदाण वा निस्साए कट्टु केवलनाणं उप्पाडेंति, सिद्धिं वा वच्चंति, अरहंता सएण उट्ठाणबलविरियपुरिसकारपरक्कमेणं केवलनाणं उप्पाडेंति। ताहे सक्केण सिद्धत्थो भण्णइ-एस तव नियल्लओ, पुणो य मम वयणं-सामिस्स जो परं मारणंतिअं उवसग्गं करेइ तं वारेज्जसु, एवमत्थु तेण पडिस्सुअं, सक्को पडिगओ, सिद्धत्थो ठिओ। तद्दिवसं सामिस्स छट्ठपारणयं, तओ भगवं विहरमाणो गओ कोल्लागसण्णिवेसे, तत्थ य भिक्खट्ठा पविट्ठो बहुलमाहणगेहं, जेणामेव कुल्लाए सन्निवेसे बहुले माहणे, तेण महुघयसंजुत्तेण परमण्णेण पडिलाभिओ, तत्थ पंच दिव्वाइं पाउब्भूयाइं। अमुमेवार्थमुपसंहरन्नाह—

गोवनिमित्तं सक्कस्स आगमो वागरेइ देविंदो। कोल्लागबहुले छट्ठस्स पारणे पयस वसुहारा॥ ४६१॥

व्याख्या—ताडनायोद्यतगोपनिमित्तं प्रयुक्तावधेः 'शक्रस्य' देवराजस्य, किम्?, आगमनं आगमः अभवत्, विनिवार्य च गोपं 'वागरेइ देविंदो' त्ति भगवन्तमभिवन्द्य 'व्याकरोति' अभिधत्ते देवेन्द्रो-भगवन्! तवाहं द्वादश वर्षाणि वैयावृत्त्यं करोमीत्यादि, 'वागरिंसु' वा पाठान्तरं, व्याकृतवानिति भावार्थः, सिद्धार्थं वा तत्कालप्राप्तं व्याकृतवान् देवेन्द्रः-भगवान् त्वया न मोक्तव्य इत्यादि। गते देवराजे भगवतोऽपि कोल्लाकसन्निवेशे बहुलो नाम ब्राह्मणः 'षष्ठस्य' तपोविशेषस्य पारणके, किम्?, 'पयस' इति पायसं समुपनीतवान्, 'वसुधारे'ति तद्गृहे वसुधारा पतितेति गाथाक्षरार्थः॥ कथानकम्—तओ सामी विहरमाणो गओ मोरागं सन्निवेसं, तत्थ मोराए दूइज्जंता नाम पासंडिगिहत्था, तेसिं तत्थ आवासो, तेसिं च कुलवती भगवओ पिउमित्तो, ताहे सो सामिस्स सागएण उवट्ठिओ, ताहे सामिणा पुव्वपओगेण बाहा पसारिआ, सो भणति-अत्थि घरा, एत्थ कुमारवर! अच्छाहि, तत्थ सामी एगराइअं वसित्ता पच्छा गतो, विहरति, तेण य भणियं-विवित्ताओ वसहीओ, जइ वासारत्तो कीरइ, आगच्छेज्जाह अणुग्गहीया होज्जामो। ताहे सामी अट्ठ उउबद्धिए मासे विहरेत्ता वासावासे उवागते तं चेव दूइज्जंतयगामं एति, तत्थेगंमि उडवे वासावासं ठिओ। पढमपाउसे य गोरूवाणि चारिं अलभंताणि जुण्णाणि तणाणि खायंति, ताणि य घराणि उव्वेल्लेंति, पच्छा ते वारेंति, सामी न वारेइ, पच्छा दूइज्जंतगा तस्स कुलवइस्स साहेंति जहा एस एताणि न णिवारेति, ताहे सो कुलवती अणुसासति, भणति-कुमारवर! सउणीवि ताव अप्पणिअं णेड्डुं रक्खेंति, तुमं वारेज्जासि, सप्पिवासं भणति। ताहे सामी अचियत्तोग्गहोत्तिकाउं निग्गओ, इमे य तेण पंच अभिग्गहा गहीआ, तंजहा-अचियत्तोग्गहे न वसियव्वं १ निच्चं वोसट्ठकाएण २ मोणेणं ३ पाणीसु भोत्तव्वं ४ गिहत्थो न वंदियव्वो नऽब्भुट्ठेतव्वो ५, एते पंच अभिग्गहा। तत्थ भगवं अद्धमासं अच्छित्ता तओ पच्छा अट्ठिगामं गतो। तस्स पुण अट्ठिअगामस्स पढमं वद्धमाणगं नाम आसी, सो य किह अट्ठियग्गामो जाओ?, धणदेवो नाम वाणिअओ पंचहिं धुरसएहिं गणिमधरिममेज्जस्स भरिएहिं तेणंतेण आगओ, तस्स समीवे य वेगवती नाम नदी, तं सगडाणि उत्तरंति, तस्स एगो वइल्लो सो मूलधुरे जुप्पति, तावच्चएण ताओ गड्डिओ उत्तीण्णाओ, पच्छा सो पडिओ छिन्नो, सो वाणिअओ तस्स तणपाणिअं पुरओ छड्डेऊण तं अवहाय गओ। सोऽवि तत्थ वालुगाए जेट्ठामूलमासे अतीव उण्हेण तण्हाए छुहाए य परिताविज्जइ,

---

१ स आगत। तदा शक्रो भणति-भगवन्! तव उपसर्गबहुलं (श्रामण्यं) अहं द्वादश वर्षाणि तव वैयावृत्त्यं करोमि, तदा स्वामिना भणितम्-न खलु देवेन्द्र! एतद्भूतं वा ३ (भवति वा भविष्यति वा) यद् अर्हन्त देवेन्द्राणां वा असुरेन्द्राणां वा निश्रया कृत्वा केवलज्ञानमुत्पादयन्ति, सिद्धिं वा व्रजन्ति, अर्हन्त. स्वकेन उत्थानबलवीर्यपुरुषकारपराक्रमेण केवलज्ञानमुत्पादयन्ति। तदा शक्रेण सिद्धार्थो भण्यते-एष तव निजक, पुनश्च मम वचन-स्वामिनः य परं मारणान्तिकमुपसर्गं करोति स वारयेः। तेन प्रतिश्रुत, शक्र प्रतिगत, सिद्धार्थ स्थितः। तद्दिवसं स्वामिन षष्ठपारणक, ततो भगवान् विहरन् गतः कोल्लाकसन्निवेशे, तत्र च भिक्षार्थं प्रविष्ट बहुलब्राह्मणगृह, यत्रैव कुल्लाकसन्निवेशे बहुलो ब्राह्मण, तेन मधुघृतसंयुक्तेन परमान्नेन प्रतिलम्भित, तत्र च दिव्यानि प्रादुर्भूतानि

१ तत स्वामी विहरन् गतो मोराकं सन्निवेश, तत्र मोराके दूइज्जन्ता (द्वितीयान्ता) नाम पाषण्डिनो गृहस्था., तेषां तत्रावास, तेषां च कुलपतिः भगवत पितु मित्रम्, तदा स स्वामिन स्वागतेन उपस्थित, तदा स्वामिना पूर्वप्रयोगेण बाहुः प्रसारितः, स भणति-सन्ति गृहाणि, अत्र कुमारवर! तिष्ठ, तत्र स्वामी एकां रात्रिं उषित्वा पश्चाद्गत, विहरति, तेन च भणितम्-विविक्ता वसतय, यदि वर्षारात्रः क्रियते, आगमिष्य अनुगृहीता अभविष्याम। तदा स्वामी अष्टौ ऋतुबद्धान् मासान् विहृत्य वर्षावासे उपागते तमेव द्वितीयान्तकग्राममेति, तत्रैकस्मिन् उटजे वर्षावास स्थित.। प्रथमप्रावृषि च गावः चारिं सलभमाना जीर्णानि तृणानि खादन्ति, तानि च गृहाणि उद्वेल्लयन्ति, पश्चात्ते वारयन्ति, स्वामी न वारयति, पश्चाद् द्वितीयान्तका. * उवगे प्र०. २ सढे प्र

१ तस्मै कुलपतये कथयन्ति-यथा एष एता न निवारयति, तदा स कुलपतिरनुशास्ति, भणति-कुमारवर! शकुनिरपि तावदात्मीय नीडं रक्षति, त्वं वारये, सपिपास भणति। तदा स्वामी अप्रीतिकावग्रह इतिकृत्वा निर्गत, इमे च तेन पञ्च अभिग्रहा गृहीता, तद्यथा-अप्रीतिकावग्रहे न वसनीय, नित्य व्युत्सृष्टकायेन, मौनेन, पाण्योर्भोक्तव्य, गृहस्थो न वन्दयितव्य., नाभ्युत्थातव्य, एते पञ्च अभिग्रहा। तत्र भगवान् अर्धमास स्थित्वा तत पश्चाद् अस्थिकग्रामं गत., तस्य पुनरस्थिकग्रामस्य प्रथम वर्धमानक नामासीत्, स च कथमस्थिकग्रामो जात?, धनदेवो नाम वणिक् पञ्चभिर्धूर्शतै गणिमधरिममेयैर्भृतैस्तेन मार्गेण आगत, तस्य समीपे च वेगवती नाम नदी, तां शकटानि उत्तरन्ति, तस्य एको बलीवर्द स मूलधुरि योज्यते, तदीयेन (वीर्येण) ता गन्त्र्य उत्तीर्णा, पश्चात्स छिन्न पतित, स वणिक् तस्य तृणपानीय पुरतस्त्यक्त्वा त अपहाय गतः। सोऽपि तत्र वालुकाया ज्येष्ठामूलमासे अतीवोष्णेन तृषया क्षुधा च परिताप्यते * छड्डत्ति प्र०

वद्धमाणओ य लोगो तेणंतेण पाणिअं तणं च वहति, न य तस्स कोइवि देइ, सो गोणो तस्स पओसमावण्णो, अकामतण्हाछुहाए य मरिऊणं तत्थेव गामे अग्गुज्जाणे सूलपाणीजक्खो उप्पण्णो, उवउत्तो पासति तं बलीवद्दसरीर, ताहे रुसिओ मारिं विउव्वति, सो गामो मरिउमारद्धो, ततो अद्दण्णा कोउगसयाणि करेंति, तहवि ण ठाति, ताहे भिण्णो गामो अण्णगामेसु संकंतो, तत्थावि न मुंचति, ताहे तेसिं चिंता जाता—अम्हेहिं तत्थ न नज्जइ—कोऽवि देवो वा दाणवो वा विराहिओ, तम्हा तहिं चेव वच्चामो, आगया समाणा नगरदेवयाए विउलं असणं पाणं खाइमं साइमं उवक्खडावेंति, वलिउवहारे करेंता समंतओ उद्धमुहा सरणं सरणंति, जं अम्हेहिं सम्मं न चेट्ठिअं तस्स खमइ, ताहे अंतलिक्खपडिवण्णो सो देवो भणति—तुम्हे दुरप्पा निरणुकंपा, तेणंतेण य एह जाह य, तस्स गोणस्स तणं वा पाणिअं वा न दिण्णं, अतो नत्थि भे मोक्खो, ततो ण्हाया पुप्फवलिहत्थगया भणंति—दिट्ठो कोवो पसादमिच्छामो, ताहे भणति—एताणि माणुसअट्ठिआणि

१ वर्धमानकश्च लोक' तेन मार्गेण पानीयं तृण च वहति, न च तस्मै कश्चिदपि ददाति, स गौस्तस्य प्रद्वेषमापन्न, अकामतृषा क्षुधा च मृत्वा तत्रैव ग्रामे अग्रोद्याने (अभ्युद्याने) शूलपाणिर्यक्ष उत्पन्न, उपयुक्त पश्यति तत् बलीवर्दशरीर, तदा रुष्टो मारिं विकुर्वति, स ग्रामो मर्तुमारब्ध, ततोऽधृतिमुपगता कौतुकशतानि कुर्वन्ति, तथापि न तिष्ठति (न विरमति), तदा भिन्नो ग्राम अन्यग्रामेषु सङ्क्रान्त, तत्रापि न मुञ्चति, तदा तेषा चिन्ता जाता, अस्माभिस्तत्र न ज्ञायते—कोऽपि देवो वा दानवो वा विराद्ध, तस्मात् तत्रैव व्रजाम, आगता सन्त. नगरदेवतायै विपुलमशन पान खाद्य स्वाद्य उपस्कुर्वन्ति, बल्युपहारान् कुर्वन्त. समन्तत ऊर्ध्वमुखा शरण शरणमिति, यदस्माभि सम्यग् न चेष्टित तत् क्षमस्व, तदा अन्तरिक्षप्रतिपन्न स देवो भणति—यूय दुरात्मानो निरनुकम्पा', तेन मार्गेणैव आगच्छत यात च, तस्मै गवे तृण वा पानीय वा न दत्त, अतो नास्ति भवतां मोक्ष, तत, स्नाता. हस्तगतपुष्पपटलिका भणन्ति—दृष्ट कोप. प्रसादमिच्छाम., तदा भणति—एतानि मानुषास्थीनि

'पुंजं काऊण उवरि देवउलं करेह, सूलपाणिं च तत्थ जक्खं वलिवद्दं च एगपासे ठवेह, अण्णे भणंति—तं वइल्लरूवं करेह, तस्स य हेट्ठा ताणि से अट्ठिआणि निहणह, तेहिं अचिरेण कयं, तत्थ इंदसम्मो नाम पडियरगो कओ। ताहे लोगो पंथिगादि पेच्छइ पंडरट्ठिअगामं देवउलं च ताहे पुच्छंति अण्णे—कयराओ गामाओ आगता जाह वत्ति, ताहे भणंति—जत्थ ताणि अट्ठियाणि, एवं अट्ठिअगामो जाओ। तत्थ पुण वाणमंतरघरे जो रत्तिं परिवसति सो तेण सूलपाणिणा जक्खेण वाहेत्ता पच्छा रत्तिं मारिज्जइ, ताहे तत्थ दिवसं लोगो अच्छति, पच्छा अण्णत्थ गच्छति, इंदसम्मोऽवि धूपं दीवगं च दाउं दिवसओ जाति। इतो य तत्थ सामी आगतो, दूतिज्जंतगामपासाओ, तत्थ य सव्वो लोगो एगत्थ पिंडिओ अच्छइ, सामिणा देवकुलिगो अणुण्णविओ, सो भणति—गामो जाणति, सामिणा गामो मिलिओ चेवाणुण्णविओ, गामो भणति—एत्थ न सक्का वसिउं, सामी भणइ—नवरं तुम्हे अणुजाणह, ते भणति—ठाह, तत्थेक्केक्को वसहिं देइ, सामी णेच्छति,

१ पुञ्ज कृत्वा उपरि देवकुल कुरुत, शूलपाणिं च तत्र यक्ष बलीवर्दं चैकपार्श्वे स्थापयत, अन्ये भणन्ति—त बलीवर्दरूप कुरुत, तस्याधस्तात् तानि तस्यास्थीनि निहत, तैरचिरात् कृत, तत्र इन्द्रशर्मा नाम प्रतिचरक कृत। तदा लोक. पान्थादि पश्यति, पाण्डुरास्थिकग्राम देवकुल च तदा पृच्छन्ति अन्ये—कतरस्मात् ग्रामादागता ? यात वेति, तदा भणन्ति—यत्र तानि अस्थीनि, एवमस्थिकग्रामो जात। तत्र पुनर्व्यन्तरगृहे यो रात्रौ परिवसति स तेन शूलपाणिना यक्षेण वाहयित्वा पश्चाद् रात्रौ मार्यते, ततस्तत्र दिवस (यावत्) लोकस्तिष्ठति, पश्चात् अन्यत्र गच्छति, इन्द्रशर्मापि धूप दीपक च दत्वा दिवसे यात। इतश्च तत्र स्वामी आगत, द्वितीयान्तग्रामपार्श्वात्, तत्र च सर्वो लोक एकत्र पिण्डितस्तिष्ठति, स्वामिना देवकुलिकोऽनुज्ञापित., स भणति—ग्रामो जानाति, स्वामिना ग्रामो मिलित एवानुज्ञापितः, ग्रामो भणति—अत्र न शक्ता वसितु, स्वामी भणति—पर यूयमनुजानीत, ते भणन्ति—तिष्ठत, तत्रैकैको वसतिं दत्ते, स्वामी नेच्छति

'जाणति—जहेसो संवुज्झिहितित्ति, ततो एगकूणे पडिमं ठिओ, ताहे सो इंदसम्मो सूरे धरेंते चेव धूवपुप्फं दाउं कप्पडियकारोडिय सव्वे पलोइत्ता भणति—जाह मा विणस्सिहिह, तंपि देवज्जयं भणति—तुब्भेवि णीध, मा मारिहिज्जिहिध, भगवं तुसिणीओ, सो वंतरो चिंतेइ—देवकुलिएण गामेण य भण्णंतोऽवि न जाति, पेच्छ जं से करेमि, ताहे संझाए चेव भीमं अट्टहासं मुअंतो बीहावेति॥ अभिहितार्थोपसंहारायेदं गाथाद्वयमाह—

दूइज्जंतगा पिउणो वयंस तिव्वा अभिग्गहा पंच। अचियत्तुग्गहि न वसण १ णिच्चं वोसट्ठ २ मोणेणं ३॥४६२॥
पाणीपत्तं ४ गिहिवंदणं च ५ तओ वद्धमाणवेगवई। धणदेव सूलपाणिंदसम्म वासऽट्ठिअग्गामे॥४६३॥

व्याख्या—विहरतो मोराकसन्निवेशं प्राप्तस्य भगवतः तन्निवासी दूइज्जन्तकाभिधानपाषण्डस्थो दूतिज्जंतक एवोच्यते, 'पितुः' सिद्धार्थस्य 'वयस्यः' स्निग्धकः, सोऽभिवाद्य भगवन्तं वसतिं दत्तवान् इति वाक्यशेष.। विहृत्य च अन्यत्र वर्षाकालगमनाय पुनस्तत्रैवागतेन विदितकुलपत्यभिप्रायेण, किम्?, 'तिव्वा अभिग्गहा पंच' त्ति 'तीव्राः' रौद्राः अभिग्रहाः पञ्च गृहीता इति वाक्यशेषः। ते चामी 'अचियत्तुग्गहि न वसणं ति' 'अचियत्तं' देशीवचनं अप्रीत्यभिधायकं, ततश्च तत्स्वामिनो न प्रीतिर्यस्मिन्नवग्रहे सोऽप्रीत्यवग्रहः तस्मिन् 'न वसनं' न तत्र मया वसितव्यमित्यर्थः, 'णिच्चं वोसट्ठ मोणे-

१ जानाति—यथैष सम्भोत्स्यत इति, तत एकस्मिन् कोणे प्रतिमा स्थित, तदा स इन्द्रशर्मा सूर्ये ध्रियमाणे (सति) एव धूपपुष्प दत्वा कार्पटिककरोटिकान् सर्वान् प्रलोक्य भणति—यात मा विनेशत, तमपि देवार्यं भणति—यूयमपि निर्गच्छत, मा मारिध्व (मृध्व), भगवान् तूष्णीक, स व्यन्तरश्चिन्तयति—देवकुलिकेन ग्रामेण च भण्यमानोऽपि न याति, पश्य यत्तस्य करोमि, तदा सन्ध्यायामेव भीममट्टाट्टहासं मुञ्चन् भापयति।

ण्णंति' नित्यं सदा व्युत्सृष्टकायेन सता मौनेन विहर्त्तव्यं 'पाणिपत्तं'ति पाणिपात्रभोजिना भवितव्यं, 'गिहिवंदणं चेति' गृहस्थस्य वन्दनं, चशब्दादभ्युत्थानं च न कर्त्तव्यमिति । एतान् अभिग्रहान् गृहीत्वा तथा तस्माद्विनिर्गत्य 'वासऽट्ठिअग्गामेसि' वर्षाकालं अस्थिग्रामे स्थित इति अध्याहारः, स चास्थिग्रामः पूर्वं वर्धमानाभिधः खल्वासीत्, पश्चात् अस्थिग्रामसंज्ञामित्थं प्राप्तः, तत्र हि वेगवतीनदी, तां धनदेवाभिधानः सार्थवाहः तं प्रधानेन गवाऽनेकशकटसहितः समुत्तीर्णः, तस्य च गोरनेकशकटसमुत्तारणतो हृदयच्छेदो बभूव, सार्थवाहः तं तत्रैव परित्यज्य गतः, स वर्धमाननिवासिलोकाप्रतिजागरितो मृत्वा तत्रैव शूलपाणिनामा यक्षोऽभवत्, दृष्टभयलोककारितायतने स प्रतिष्ठितः, इन्द्रशर्मनामा प्रतिजागरको निरूपित इत्यक्षरार्थः ॥ एवमन्यासामपि गाथानामक्षरगमनिका स्वबुद्ध्या कार्येति । कथानकशेषम्—जाहे सो अट्टहासादिणा भगवंतं खोभेउं पवत्तो ताहे सो सव्वो लोगो तं सद्दं सोऊण भीओ, अज्ज सो देवज्जओ मारिज्जइ, तत्थ उप्पलो नाम पच्छाकडओ पासावच्चिज्जओ परिव्वायगो अट्ठंगमहानिमित्तजाणगो जणपासाओ तं सोऊण मा तित्थंकरो होज्ज अधितिं करेइ, बीहेइ य रत्तिं गंतुं, ताहे सो वाणमंतरो जाहे सद्देण न बीहेति ताहे हत्थिरूवेणुवसग्गं करेति, पिसायरूवेणं नागरूवेण य,

१ यदा सोऽट्टाट्टहास्यादिना भगवन्तं क्षोभयितुं प्रवृत्तस्तदा स सर्वलोकस्तं शब्दं श्रुत्वा भीतः, अद्य स देवार्यः मार्यते, तत्रोत्पलो नाम पश्चात्कृतकः पार्श्वापत्यः परिव्राजकोऽष्टाङ्गमहानिमित्तज्ञायकः जनपार्श्वात् तत् श्रुत्वा मा तीर्थकरो भवेत् (इति) अधृतिं करोति, बिभेति च रात्रौ गन्तुं, तत्र स व्यन्तरः यदा शब्देन न बिभेति तदा हस्तिरूपेणोपसर्गं करोति, पिशाचरूपेण नागरूपेण च

एतेहिंपि जाहे न तरति खोभेउं ताहे सत्तविहं वेदणं उदीरेइ, तंजहा—सीसवेयणं कण्ण अच्छि नासा दंत नह पट्ठिवेदणं च एक्केक्का वेअणा समत्था पागतस्स जीवितं संकामेउं, किं पुण सत्तवि समेताओ उज्जलाओ?, अहियासेति, ताहे सो देवो जाहे न तरति चालेउं वा खोभेउं वा, ताहे परितंतो पायवडितो खामेति, खमह भट्टारगत्ति । ताहे सिद्धत्थो उद्धाइओ भणति—हंभो सूलपाणी ! अपत्थिअपत्थिआ न जाणसि सिद्धत्थरायपुत्तं भगवंतं तित्थयरं, जइ एयं सक्को जाणइ तो ते निव्विसयं करेइ, ताहे सो भीओ दुगुणं खामेइ, सिद्धत्थो से धम्मं कहेइ, तत्थ उवसंतो महिमं करेइ सामिस्स, तत्थ लोगो चिंतेइ—सो तं देवज्जयं मारित्ता इदाणिं कीलइ, तत्थ सामी देसूणे चत्तारि जामे अतीव परियाविओ पहायकाले मुहुत्तमेत्तं निद्दापमादं गओ, तत्थ इमे दस महासुमिणे पासित्ता पडिबुद्धो, तंजहा—तालपिसाओ हओ, सेअसउणो चित्तकोइलो अ दोऽवि एते पज्जुवासंता दिट्ठा, दामदुगं च सुरहिकुसुममयं, गोवग्गो अ पज्जुवासेंतो, पउमसरो विबुद्धपंकओ,

१ एतैरपि यदा न शक्नोति क्षोभयितुं तदा सप्तविधां वेदनामुदीरयति, तद्यथा—शीर्षवेदनां कर्ण० अक्षि० नासा० दन्त० नख० पृष्ठिवेदनां च, एकैका वेदना समर्था प्राकृतस्य जीवितं संक्रमितुं, किं पुनः सप्तापि समेता उज्ज्वला ?, अध्यास्ते, तदा स देवो यदा न शक्नोति चालयितुं वा क्षोभयितुं वा, तदा परिश्रान्तः पादपतितः क्षमयति—क्षमस्व भट्टारकेति । तदा सिद्धार्थ उद्धावितो भणति—हहो शूलपाणे !, अप्रार्थितप्रार्थक ! न जानासि सिद्धार्थराजपुत्रं भगवन्तं तीर्थंकरं, यद्येतत् शक्रो जानाति तदा त्वां निर्विषयं करोति, तदा स भीतो द्विगुणं क्षमयति, सिद्धार्थः तस्मै धर्मं कथयति, तत्रोपशान्तो महिमानं करोति स्वामिनः, तत्र लोकश्चिन्तयति—स तं देवार्यं मारयित्वेदानीं क्रीडति, तत्र स्वामी देशोनान् चतुरो यामान् अतीव परितापितः प्रभातकाले मुहूर्त्तमात्रं निद्राप्रमादं गतः, तत्रेमान् दश महास्वप्नान् दृष्ट्वा प्रतिबुद्धः, तद्यथा—तालपिशाचो हतः, श्वेतशकुनः चित्रकोकिलश्च द्वावपि एतौ पर्युपासमानौ दृष्टौ, दामद्विकं च सुरभिकुसुममयं गोवर्गश्च पर्युपासमानः, पद्मसरः विबुद्धपङ्कजं

सागरो अ मे नित्थिण्णोत्ति, सूरो अ पइण्णरस्सीमंडलो उग्गमंतो, अंतेहि य मे माणुसुत्तरो वेढिओत्ति, मंदरं चारूढोमित्ति । लोगो पभाए आगओ, उप्पलो अ, इन्दसम्मो अ, ते अ अच्चणिअं दिव्वगंधचुण्णपुप्फवासं च पासंति, भट्टारगं च अक्खयसव्वंगं, ताहे सो लोगो सव्वो सामिस्स उक्किट्ठसिंहणायं करेंतो पाएसु पडिओ भणति—जहा देवज्जएणं देवो उवसामिओ, महिमं पगओ, उप्पलोऽवि सामिं दट्ठुं वंदिअ भणियाइओ—सामी ! तुब्भेहिं अंतिमरातीए दस सुमिणा दिट्ठा, तेसिम फलंति—जो तालपिसाओ हओ तमचिरेण मोहणिज्जं उम्मूलेहिसि, जो अ सेअसउणो तं सुक्कज्झाणं काहिसि, जो विचित्तो कोइलो तं दुवालसंगं पण्णवेहिसि, गोवग्गफलं च ते चउव्विहो समणसमणीसावगसाविगासंघो भविस्सइ, पउमसरा चउव्विहदेवसंघाओ भविस्सइ, जं च सागरं तिण्णो तं संसारमुत्तारिहिसि, जो अ सूरो तमचिरा केवलनाणं ते उप्पज्जिहित्ति, जं चंतेहिं माणुसुत्तरो वेढिओ तं ते निम्मलो जसकीत्तिपयावो सयलतिहुअणे भविस्सइत्ति, जं च मंदरमारूढोऽसि

१ सागरश्च मया निस्तीर्ण इति, सूर्यश्च प्रकीर्णरश्मिमण्डल उद्गच्छन्, अन्त्रैश्च मया मानुषोत्तरो वेष्टित इति, मन्दरं चारूढोऽस्मीति । लोकः प्रभाते आगतः, उत्पलश्च, इन्द्रशर्मा च, ते चार्चनिकां दिव्यगन्धचूर्णपुष्पवर्षं च पश्यन्ति, भट्टारकं चाक्षतसर्वाङ्गं, तदा स लोकः सर्वः स्वामिनः उत्कृष्टं सिंहनादं कुर्वन् पादयोः पतितो भणति—यथा—देवार्येण देव उपशमितः, महिमानं प्रगतः, उत्पलोऽपि स्वामिनं दृष्ट्वा वन्दित्वा भणितवान्—स्वामिन् ! त्वया अन्त्यरात्रौ दश स्वप्ना दृष्टाः, तेषामिदं फलमिति—यस्तालपिशाचो हतः तदचिरेण मोहनीयमुन्मूलयिष्यसि, यश्च श्वेतशकुनः तत् शुक्लध्यानं करिष्यसि, यो विचित्रः कोकिलः तत् द्वादशाङ्गीं प्रज्ञापयिष्यसि, गोवर्गफलं च तव चतुर्विधः श्रमणश्रमणीश्रावकश्राविकासङ्घः भविष्यति, पद्मसरः चतुर्विधदेवसङ्घातो भविष्यति, यच्च सागरस्तीर्णस्तत् संसारमुत्तरिष्यसि, यश्च सूर्यस्तत् अचिरात् केवलज्ञानं ते उत्पत्स्यत इति, यच्चान्त्रैर्मानुषोत्तरो वेष्टितस्तत्ते निर्मलः यशःकीर्त्तिप्रतापस्त्रिभुवने सकले भविष्यतीति, यच्च मन्दरमारूढोऽसि

'तं सीहासणत्थो सदेवमणुआसुराए परिसाए धम्मं पण्णवेहिसित्ति, दामदुगं पुण न याणामि, सामी भणति–हे उप्पल ! जण्णं तुमं न जाणासि तण्णं अहं दुविहं सागाराणगारिअं धम्मं पण्णवेहामित्ति, ततो उप्पलो वंदित्ता गओ, तत्थ सामी अद्धमासेण खमति । एसो पढमो वासारत्तो १ । ततो सरए निग्गंतूण मोरागं नाम सण्णिवेसं गओ, तत्थ सामी बाहिं उज्जाणे ठिओ, तत्थ मोराए सण्णिवेसे अच्छंदा नाम पासंडत्था, तत्थेगो अच्छंदओ तंमि सण्णिवेसे कोंटलवेंटलेण जीवति, सिद्धत्थओ अ एकलओ दुक्खं अच्छति बहुसंमोइओ पूअं च भगवओ अपिच्छंतो, ताहे सो वोलेंतयं गोवं सद्दावेत्ता भणति–जहिं पधावितो जहिं जिमिओ पंथे य जं दिट्ठं, दिट्ठो य एवंगुणविसिट्ठो सुमिणो, तं वागरेइ, सो आउट्टो गंतुं गामे मित्तपरिचिताणं कहेति, सव्वेहिं गामे य पगासिअं–एस देवज्जओ उज्जाणे तीताणागयवट्टमाणं जाणइ, ताहे अण्णोऽवि लोओ आगओ, सव्वस्स वागरेइ, लोगो आउट्टो महिमं करेइ, लोगेण अविरहिओ अच्छइ, ताहे सो लोगो

१ तत्सिंहासनस्थः सदेवमनुजासुरायां पर्षदि धर्मं प्रज्ञापयिष्यति इति, दामद्विकं पुनर्न जानामि, स्वामी भणति–हे उत्पल ! यत् त्वं न जानीषे तदहं द्विविधं सागारिकानगारिकं धर्मं प्रज्ञापयिष्यामीति, तत उत्पलो वन्दित्वा गतः, तत्र स्वामी अर्धमासेन क्षपयति । एष प्रथमो वर्षारात्रः १ । ततः शरदि निर्गत्य मोराकं नाम सन्निवेशं गतः, तत्र स्वामी बहिरुद्याने स्थितः, तत्र मोराके सन्निवेशे यथाच्छन्दा नाम पाषण्डस्थाः, तत्रैकः यथाछन्दकः तस्मिन् सन्निवेशे कार्मणवशीकरणादिना जीवति, सिद्धार्थकश्च एकाकी दुःखं तिष्ठति बहुसंमुदितः पूजां च भगवतः अपश्यन्, तदा स व्रजन्तं गोपं शब्दयित्वा भणति–यत्र गतः यत्र जिमितः पथि च यद् दृष्टं, दृष्टश्चैवंगुणविशिष्टः स्वप्नः, तद्व्याकरोति, स आवर्जितो ग्रामे गत्वा मित्रपरिचितेभ्यः कथयति, सर्वैर्ग्रामे च प्रकाशितं–एष देवार्य उद्याने अतीतानागतवर्तमानं जानाति, तदा अन्योऽपि लोक आगतः, (तस्मा अपि) सर्वस्मै व्याकरोति, लोक आवर्जितो महिमानं करोति, लोकेनाविरहितः तिष्ठति, तदा स लोको

भणइ–एत्थ अच्छंदओ नाम जाणओ, सिद्धत्थो भणति–सो ण किंचि जाणइ, ताहे लोगो गंतुं भणइ–तुमं न किंचि जाणसि, देवज्जओ जाणइ, सो लोयमज्झे अप्पाणं ठावेउकामो भणति–एह जामो, जइ मज्झ पुरओ जाणइ तो जाणइ, ताहे लोगेण परिवारिओ एइ, भगवओ पुरओ ठिओ तणं गहाय भणति–एयं तणं किं छिंदिहिति नवत्ति, सो चिंतेइ–जइ भणति–न छिज्जिहि इति ता णं छिंदिस्सं, अह भणइ–छिज्जिहित्ति, तो न छिंदिस्सं. ततो सिद्धत्थेण भणिअं–न छिज्जिहित्ति, सो छिंदिउमाढत्तो, सक्केण य उवओगो दिण्णो, वज्जं पक्खित्तं, अच्छंदगस्स अंगुलीओ दसवि भूमीए पडिआओ, ताहे लोगेण खिंसिओ, सिद्धत्थो य से रुट्ठो । अमुमेवार्थं समासतोऽभिधित्सुराह—

रोद्दा य सत्त वेयण थुइ दस सुमिणुप्पलऽद्धमासे य । मोराए सक्कारं सक्को अच्छंदए कुविओ ॥ ४६४ ॥

समासव्याख्या—रौद्राश्च सप्त वेदना यक्षेण कृताः, स्तुतिश्च तेनैव कृता, दश स्वप्ना भगवता दृष्टाः, उत्पलः फलं जगाद, 'अद्धमासे यत्ति' अर्धमासमर्धमासं च क्षपणमकार्षीत्, मोरायां लोकः सत्कारं चकार, शक्रः अच्छन्दके तीर्थकरहीलनात् परिकुपित इत्यक्षरार्थः ॥ इयं निर्युक्तिगाथा, एतास्तु मूलभाष्यकारगाथाः—

१ भणति–अत्र यथाच्छन्दको नाम ज्ञायकः, सिद्धार्थो भणति–स न किञ्चिद् जानाति, तदा लोको गत्वा भणति–त्वं न किञ्चित् जानासि, देवार्यको जानाति, स लोकमध्ये आत्मानं स्थापयितुकामो भणति–एत यामः, यदि मम पुरतो जानाति तदा जानाति, तदा लोकेन परिवारित एति, भगवतः पुरतः स्थितः तृणं गृहीत्वा भणति–एतत् तृणं किं छेत्स्यते नवेति, स चिन्तयति–यदि भणति–न छेत्स्यते इति तदैतत् छेत्स्यामि, अथ भणति–छेत्स्यते इति तदा न छेत्स्यामि, ततः सिद्धार्थेन भणितम्–न छेत्स्यतीति, स छेत्तुमारब्धः, शक्रेण च उपयोगो दत्तः, वज्रं प्रक्षिप्तं, अच्छन्दकस्याङ्गुल्यो दशापि भूमौ पतिताः, तदा लोकेन हीलितः, सिद्धार्थश्च तस्मै रुष्टः ।

भीमट्टहास हत्थी पिसाय नागे य वेदणा सत्त ।
सिरकण्णनासदन्ते नहऽच्छी पट्ठीय सत्तमिआ ॥ ११२ ॥ ( मू० भा० )
तालपिसायं १ दो कोइला य ३ दामदुगमेव ४ गोवग्गं ५ ।
सर ६ सागर ७ सूरं ८ ते ९ मन्दर १० सुविणुप्पले चेव ॥ ११३ ॥ ( मू० भा० )
मोहे १ य झाण २ पवयण ३ धम्मे ४ संघे ५ य देवलोए ६ य ।
संसारं ७ णाण ८ जसे ९. धम्मं परिसाएँ मज्झंमि ॥ ११४ ॥ ( मू० भा० )

व्याख्या—भीमाट्टहासः हस्ती पिशाचो नागश्च वेदनाः सप्त शिरःकर्णनासादन्तनखाक्षि पृष्ठौ च सप्तमी, एतद्यन्तरेण कृतं । तालपिशाचं द्वौ कोकिलौ च दामद्वयमेव गोवर्गं सरः सागरं सूर्यं अन्त्रं मन्दरं 'सुविणुप्पले चेवत्ति' एतान् स्वप्नान् दृष्टवान्, उत्पलश्चैव फलं कथितवान् इति । तच्चेदम्—मोहं च ध्यानं प्रवचनं धर्मः सङ्घश्च 'देवलोकश्च' देवजनश्चेत्यर्थः, संसारं ज्ञानं यशः धर्मं पर्षदो मध्ये, मोहं च निराकरिष्यसीत्यादिक्रियायोगः स्वबुद्ध्या कार्यः ॥

मोरागसण्णिवेसे बाहिं सिद्धत्थ तीतमाईणि । साहइ जणस्स अच्छंद पओसो छेअणे सक्को ॥ १ ॥

अर्थोऽस्याः कथानकोक्त एव वेदितव्य इति । इयं गाथा सर्वपुस्तकेषु नास्ति, सोपयोगा च । कथानकशेषम्—तओ सिद्धत्थो तस्स पओसमावण्णो तं लोगं भणति–एस चोरो, कस्स णेण चोरियंति भणह, अत्थेत्थ वीरघोसो णाम

१ ततः सिद्धार्थः तस्मिन् प्रद्वेषमापन्नस्तं लोकं भणति–एष चौरः, कस्यानेन चोरितं इति भणत, अस्त्यत्र वीरघोषो नाम

कम्मकरो?, सो पादेसु पडिओ अहंति, अत्थि तुब्भ अमुककाले दसपलयं वट्टयं णट्ठपुव्वं ?, आमं अत्थि, तं एएण हरियं, तं पुण कहिं ?, एयस्स पुरोहडे महिसिंदुरुक्खस्स पुरत्थिमेणं हत्थमित्तं गंतूणं तत्थ खणिउं गेण्हह । ताहे गता, दिट्ठं, आगया कलकलं करेमाणा । अण्णंपि सुणह-अत्थि एत्थं इंदसम्मो नाम गिहवई ?, ताहे भणंति-अत्थि, ताहे सो सयमेव उवट्ठिओ, जहा अहं, आणवेह, अत्थि तुब्भ ओरणओ अमुयकालंमि नट्ठिलओ ?, स आह-आमं अत्थि, सो एएण मारित्ता खइओ, अट्ठियाणि य से वदरीए दक्खिणे पासे उक्कुरुडियाए निहयाणि, गया, दिट्ठाणि, उक्किट्ठकलयलं करेंता आगया, ताहे भणंति-एयं बितिअं । अमुमेवार्थं प्रतिपादयन्नाह निर्युक्तिकृत्—

तण छेयंगुलि कम्मार वीरघोस महिसिंदु दसपलिअं । बिइइंदसम्म ऊरण षयरीए दाहिणुक्कुरुडे ॥ ४६५ ॥

व्याख्या—अच्छन्दकः तृणं जग्राह, छेदः अङ्गुलीनां कृतः खल्विन्द्रेण, 'कम्मार वीरघोसत्ति' कर्मकरो वीरघोषः, तत्सं-बन्ध्यनेन 'महिसिंदु दसपलियं' दशपलिकं करोटकं गृहीत्वा महिसेन्दुवृक्षाधः स्थापितं, एकं तावदिदं, द्वितीयं-इन्द्रशर्मण ऊरणकोऽनेन भक्षितः, तदस्थीनि चाद्यापि तिष्ठन्त्येव बदर्या अध दक्षिणोत्कुरुट इति गाथार्थः ॥४६५॥ तेतियं पुण अवत्तं,

१ कर्मकरो?, स पादयोः पतित अहमिति, अस्ति तव अमुककाले दशपलमानं वर्तुलं नष्टपूर्वम् ?, ओमस्ति, तदनेन हृतं, तत्पुनः क ?, एतस्य गृहपुरतः खर्जूरीवृक्षस्य पूर्वस्यां हस्तमात्रं गत्वा तत्र खात्वा गृहीत । तदा गता., दृष्टं, आगताः कलकलं कुर्वन्त । अन्यदपि शृणुत-अस्त्यत्र इन्द्रशर्मा नाम गृहपतिः, तदा भणन्ति-अस्ति, तदा स स्वयमेवोपस्थितः, यथाऽहं, आज्ञापयत, अस्ति तवोर्णायुः अमुककाले नष्टः, स आह-ओमस्ति, स एतेन मारयित्वा खादितः, अस्थीनि च तस्य बदर्या दक्षिणे पार्श्वे उत्कुरुटके निखातानि, गताः, दृष्टानि, उत्कृष्टकलकलं कुर्वन्त आगताः, तदा भणन्ति-एतद्द्वितीयम् २ तृतीयं पुनरवाच्य

अलाहि भणितेण, ते निबंधं करेंति, पच्छा भणति-वच्चह भज्जा से कहेहिइ, सा पुण तस्स चेव छिड्डाणि मग्गमाणी अच्छति, ताए सुयं-जहा सो विडंबिओत्ति, अंगुलीओ से छिन्नाओ, सा य तेण तद्दिवसं पिट्टिया, सा चिंतेति-नवरि एउ गामो, ताहे साहेमि, ते आगया पुच्छंति, सा भणइ-मा से नामं गेण्हह, भगिणीए पती ममं नेच्छति, से उक्किट्ठिं करेमाणा तं भणंति-एस पावो, एवं तस्स उड्डाहो जाओ, एस पावो, जहा न कोइ भिक्खंपि देइ, ताहे अप्पसागारियं आगओ भणइ-भगवं ! तुब्भे अन्नत्थवि पुज्जिज्जह, अहं कहिं जामि ?, ताहे अचियत्तोग्गहोत्तिकाउं सामी निग्गओ । ततो वच्च-माणस्स अंतरा दो वाचालाओ-दाहिणा उत्तरा य, तासिं दोण्हवि अंतरा दो नईओ-सुवण्णवालुगा रुप्पवालुगा य, ताहे सामी दक्खिणवाचालाओ सन्निवेसाओ उत्तरवाचालं वच्चइ, तत्थ सुवण्णवालुयाए नदीए पुलिणे कंटियाए तं वत्थं विलग्गं, सामी गतो, पुणोऽवि अवलोइअं, किं निमित्तं ?, केई भणंति-ममत्तीए, अवरे-किं थंडिले पडिअं अथंडिलेत्ति,

१ अलं भणितेन, ते निर्बन्धं कुर्वन्ति, पश्चाद् भणति-व्रजत भार्या तस्य कथयिष्यति, सा पुनस्तस्य छिद्राण्येव मृगयमाणा तिष्ठति, तया श्रुतम्-यथा स विडम्बित इति, अङ्गुलयस्तस्य छिन्नाः, सा च तेन तद्दिवसे पिट्टिता, सा चिन्तयति-परमायातु ग्रामः, तदा साधयामि, त आगताः पृच्छन्ति, सा भणति-मा तस्य नाम ग्रहीष्ट, भगिन्याः पतिर्मां नेच्छति, ते उत्कृष्टिं कुर्वन्तस्तं भणन्ति-एष पापः, एवं तस्योड्डाहो जातः, एष पापः, यथा (यदा) न कश्चिद् भिक्षामपि ददाति, तदाऽल्पसागारिकं आगतो भणति-भगवन्त ! यूयमन्यत्रापि पूज्यिष्यध्वं, अहं क यामि ?, तदा अप्रीतिकावग्रह इतिकृत्वा स्वामी निर्गतः । ततो व्रजतः अन्तरा द्वे वाचाले-दक्षिणा उत्तरा च, तयोर्द्वयोरपि अन्तरा द्वे नद्यौ-सुवर्णवालुका रूप्यवालुका च, तदा स्वामी दक्षिणवाचालात् सन्निवेशात् उत्तरवाचालं व्रजति, तत्र सुवर्णवालुकाया नद्याः पुलिने कण्टिकायां तद्वस्त्रं विलग्नं, स्वामी गतः, पुनरप्यवलोकितं, किं निमित्तम् ?, केचिद् भणन्ति-ममत्वेन अपरे-किं स्थण्डिले पतितमस्थण्डिले इति

१केई-सहसागारेणं, केई-परं सिस्साणं वत्थपत्तं सुलभं भविस्सइ ?, तं च तेण धिज्जाइएण गहिअं, तुण्णागस्स उवणीअं, सयसहस्समोल्लं जायं, एक्केक्कस्स पण्णासं सहस्साणि जायाणि । अमुमेवार्थमभिधित्सुराह—

तइअमवच्चं भज्जा कहिही नाहं तओ पिउवयंसो । दाहिणवायालसुवण्णवालुगाकंटए वत्थं ॥ ४६६ ॥

पदानि—तृतीयमवाच्यं भार्या कथयिष्यति । ततः पितुर्वयस्यस्तु दक्षिणवाचालसुवर्णवालुकाकण्टके वस्त्रं, क्रियाऽध्या-हारतोऽक्षरगमनिका स्वबुद्ध्या कार्येति । २ताहे सामी वच्चइ उत्तरवाचालं, तत्थ अंतरा कणगखलं नाम आसमपयं, तत्थ दो पंथा-उज्जुगो वंको य, जो सो उज्जुओ सो कणगखलंमज्झेण वच्चइ, वंको परिहरंतो, सामी उज्जुगेण पहाविओ, तत्थ गोवालेहिं वारिओ, एत्थ दिट्ठिविसो सप्पो, मा एएण वच्चह, सामी जाणति-जहेमो भविओ संबुज्झिहिति, तओ गतो जक्खघरमंडवियाए पडिम ठिओ । सो पुण को पुव्वभवे आसी ?, खमगो, पारणए गओ वासिगभत्तस्स, तेण मंडुक्कलिया विराहिआ, खुड्डुएण परिचोइओ, ताहे सो भणति-किं इमाओऽवि मए मारिआओ लोयमारिआओ दरिसेइ, ताहे खुड्डुएण

१ केचित्-सहसाकारेण, केचित्-परं शिष्याणां वस्त्रपात्रं सुलभं भविष्यति ?, तच्च तेन धिग्जातीयेन गृहीतं, तुन्नाकस्य उपनीतं, शतसहस्रमूल्यं जातं, एकैकस्य पञ्चाशत् सहस्राणि जातानि । २ तदा स्वामी व्रजति उत्तरवाचालं, तत्रान्तरा कनकखलनामाश्रमपदं तत्र द्वौ पन्थानौ-ऋजुर्वक्रश्च, योऽसौ ऋजुः स कनकखलमध्येन व्रजति, वक्रः परिहरन्, स्वामी ऋजुना प्रधावितः, तत्र गोपालैर्वारितः, अत्र दृष्टिविषः सर्पः, मैतेन व्राजीः, स्वामी जानाति-यथैष भव्यः सम्भोत्स्यत इति, ततो गतो यक्षगृहमण्डपिकायां प्रतिमया स्थितः । स पुनः कः पूर्वभवे आसीत् ?, क्षपकः, पारणके गतः पर्युषितभक्ताय, तेन मण्डूकी विराद्धा परिचोदितः, तदा स भणति-किमिमा अपि मया मारिता लोकमारिता दर्शयति, तदा क्षुल्लकेन

नायं-वियाले आलोहिइत्ति, सो आवस्सए आलोएत्ता उवविट्ठो, खुड्डुओ चिंतेइ-नूणं से विस्सरियं, ताहे सारिअं, रुट्ठो आहणामित्ति उद्धाइओ खुड्डुगस्स, तत्थ थंभे आवडिओ मओ विराहियसामण्णो जोइसिएसु उववण्णो, ततो चुओ कणगखले पंचण्हं तावससयाणं कुलवइस्स तावसीए उदरे आयाओ, ताहे दारगो जाओ, तत्थ से कोसिओत्ति नामं कयं, सो य अतीव तेण सभावेण चंडकोधो, तत्थ अन्नेऽवि अत्थि कोसिया, तस्स चंडकोसिओत्ति नामं कयं, सो कुलवती मओ, ततो य सो कुलवई जाओ, सो तत्थ वणसंडे मुच्छिओ, तेसिं तावसाण ताणि फलाणि न देइ, ते अलभंता गया दिसोदिसं, जोऽवि तत्थ गोवालादी एति तंपि हंतुं धाडेइ, तस्स अदूरे सेयंवियानाम नयरी, ततो रायपुत्तेहिं आगंतूणं विरहिए पडिनिवेसेण भग्गो विणासिओ य, तस्स गोवालएहिं कहियं, सो कंटियाणं गओ, ताओ छड्डेत्ता परसुहत्थो गओ रोसेण धमधमंतो, कुमारेहिं दिट्ठो एंतओ, तं दट्ठूण पलाया, सोऽवि कुहाडहत्थो पहावेत्ता खड्डे आवडिऊण पडिओ, सो

१ ज्ञात-विकाले आलोचयिष्यतीति, स आवश्यके आलोचयित्वा उपविष्ट, क्षुल्लकश्चिन्तयति-नूनमस्य विस्मृत, तत स्मारित, रुष्ट आहन्मीत्युद्धावितः क्षुल्लकाय, तत्र स्तम्भे आस्फलितो मृतो विराधितश्रामण्य ज्योतिष्केषु उत्पन्न, ततश्च्युत कनकखले पञ्चानां तापसशतानां कुलपते तापस्या उदरे आयात, तदा दारको जात', तत्र तस्य कौशिक इति नाम कृत, स चातीव तेन स्वभावेन चण्डक्रोध, तत्र अन्येऽपि सन्ति कौशिका, तस्य चण्डकौशिक इति नाम कृत, स कुलपतिर्मृत, ततश्च स कुलपतिर्जात, स तत्र वनखण्डे मूर्छित, तेभ्य तापसेभ्य तानि फलानि न ददाति, तेऽलभमाना गता दिशि दिशि, योऽपि तत्र गोपालादिक आयाति तमपि हत्वा धाटयति, तस्यादूरे श्वेतम्बीकानामनगरी, ततो राजपुत्रैरागत्य विरहिते प्रतिनिवेशेन भग्नो विनाशितश्च, तस्मै गोपालकै कथित, स कण्टकेभ्यो गत, तांस्त्यक्त्वा परशुहस्तो गतो रोषेण धमधमायमान, कुमारैर्दृष्ट आगच्छन् त दृष्ट्वा पलायिता', सोऽपि कुठारहस्तः प्रधाव्य गर्ते आपत्य पतित, स

कुहाडो अभिमुहो ठिओ, तत्थ से सिरं दो भाए कयं, तत्थ मओ तंमि चेव वणसंडे दिट्ठीविसो सप्पो जाओ, तेण रोसेण लोभेण य तं रक्खइ वणसंडं, तओ ते तावसा सवे दड्ढा, जे अदड्ढगा ते नट्ठा, सो तिसंझं वणसंडं परियंचिऊणं जं सउणगमवि पासइ तं डहइ, ताहे सामी तेण दिट्ठो, ततो आसुरुत्तो, ममं न याणसि ?, सूरं णिज्झाइत्ता पच्छा सामिं पलोएइ, सो न डज्झइ जहा अण्णे, एवं दो तिण्णि वारा, ताहे गंतूण डसइ, डसित्ता अवक्कमइ-मा मे उवरिं पडिहित्ति, तहवि न मरइ, एवं तिण्णि वारे, ताहे पलोएंतो अच्छति अमरिसेणं, तस्स भगवओ रूवं पेच्छंतस्स ताणि विसभरियाणि अच्छीणि णिज्झाइयाणि सामिणो कंतिसोम्मयाए, ताहे सामिणा भणिअं-उवसम भो चंडकोसिया !, ताहे तस्स ईहापोहमग्गणगवेसणं करेंतस्स जातीसरणं समुप्पण्णं, ताहे तिक्खुत्तो आयाहिणपयाहिणं करेत्ता भत्तं पच्चक्खाइ मणसा, तित्थगरो जाणइ, ताहे सो बिले तुंडं छोढुं ठिओ, माऽहं रुट्ठो संतो लोगं मारेहं, सामी तस्स अणुकंपाए अच्छइ, सामिं दट्ठूण गोवा-

१ कुठार अभिमुख स्थित, तत्र तस्य शिरो द्विभागीकृत, तत्र मृतस्तस्मिन्नेव वनखण्डे दृष्टिविष सर्पो जात, तेन रोषेण लोभेन च त रक्षति वनखण्ड, ततस्ते तापसा सर्वे दग्धा, ये अदग्धास्ते नष्टा, स त्रिसन्ध्य वनखण्ड परीत्य य कञ्चन शकुनमपि पश्यति त दहति, तदा स्वामी तेन दृष्ट', तत क्रुद्ध, मां न जानासि ?, सूर्यं निध्याय पश्चात्स्वामिन प्रलोकयति, स न दह्यते यथाऽन्ये, एव द्वौ त्रीन् वारान्, तदा गत्वा दशति, दष्ट्वाऽपक्रामति-मा ममोपरि पप्तत् इति तथापि न म्रियते, एव त्रीन वारान्, तदा प्रलोकमानस्तिष्ठति अमर्षेण, तस्य भगवतो रूप प्रेक्षमाणस्य ते विषभृते अक्षिणी विध्याते स्वामिन कान्तिसौम्येन, तदा स्वामिना भणितम्-उपशाम्य भो चण्डकौशिक !, तदा तस्य ईहापोहमार्गणगवेषणां कुर्वत जातिस्मरण समुत्पन्न, तदा त्रिःकृत्व आद क्षिणप्रदक्षिण कृत्वा भक्त प्रत्याख्याति मनसा, तीर्थंकरो जानाति, तदा स बिले तुण्ड स्थापयित्वा स्थितः, माऽह रुष्ट सन् लोक मीमरम्, स्वामी तस्यानुकम्पया तिष्ठति, स्वामिन दृष्ट्वा

लवच्छवाला अलियंति, रुक्खेहिं आवरेत्ता अप्पाणं तस्स सप्पस्स पाहाणे खिवंति, न चलतित्ति अल्लीणो कट्ठेहिं घट्टिओ, तहवि न फंदतित्ति तेहिं लोगस्स सिट्ठं, तो लोगो आगंतूण सामिं वंदित्ता तंपि य सप्पं महेइ, अण्णाओ य घयविक्किणियाओ तं सप्पं मक्खेंति, फरुसिंति, सो पिवीलियाहिं गहिओ, तं वेयणं अहियासेत्ता अद्धमासस्स मओ सहस्सारे उववण्णो । अमुमेवार्थमुपसंहरन्नाह—

उत्तरवाचालंतरवणसंडे चंडकोसिओ सप्पो । न डहे चिंता सरणं जोइस कोवा ऽहि जाओऽहं ॥ ४६७ ॥

गमनिका—उत्तरवाचालान्तरवनखण्डे चण्डकौशिकः सर्पः न ददाह चिन्ता स्मरणं ज्योतिष्कः क्रोधाद् अहिर्जातोऽहमिति, अक्षरगमनिका स्वबुद्ध्या कार्येति ॥ ४६७ ॥ अनुक्तार्थं प्रतिपादयन्नाह—

उत्तरवायाला नागसेण खीरेण भोयणं दिव्वा । सेयवियाय पएसी पंचरहे णिज्जरायाणो ॥ ४६८ ॥

गमनिका—उत्तरवाचाला नागसेनः क्षीरेण भोजनं दिव्यानि श्वेतम्व्या प्रदेशी पञ्चरथैः नैयका राजानः—नैयका गोत्रतः, प्रदेशे निजा इत्यपरे । शेषो भावार्थः कथानकादवसेयः तच्चेदम्—[2]तओ सामी उत्तरवाचालं गओ, तत्थ

१ गोपालवत्सपाला आगच्छन्ति, वृक्षैरावार्यात्मान तस्य सर्पस्य ( उपरि ) पाषाणान् क्षिपन्ति, न चलतीति ईषल्लीन काष्ठैर्घट्टित, तथाऽपि न स्पन्दत इति तैर्लोकाय शिष्ट, ततो लोक आगत्य स्वामिन वन्दित्वा तमपि च सर्प महति, अन्याश्च घृतविक्रायिकास्त सर्प म्रक्षयन्ति स्पृशन्ति, स पिपीलिकाभिर्गृहीत, तां वेदनामध्यास्य अर्धमासेन मृत सहस्रारे उत्पन्न । २ तत स्वाम्युत्तरवाचाल गत, तत्र

[1]पक्खक्खमणपारणते अतिगओ, तत्थ नागसेणेण गिहवइणा खीरभोयणेण पडिलाभिओ, पंच दियाणि पाउब्भूयाणि, ततो सेयवियं गओ, तत्थ पदेसी राया समणोवासओ भगवओ महिमं करेइ, तओ भगवं सुरभिपुरं वच्चइ, तत्थंतराए णेज्जगा रायाणो पंचहिं रथेहिं एन्ति पएसिरण्णो पासे, तेहिं तत्थ सामी वंदिओ पूइओ य, ततो सामी सुरभिपुरं गओ, तत्थ गंगा उत्तरियव्वा, तत्थ सिद्धजत्तो नाम नाविओ, खेमलो नाम सउणजाणओ, तत्थ य णावाए लोगो विलग्गइ, कोसिएण महासउणेण वासियं, कोसिओ नाम उलूको, ततो खेमिलेण भणियं–जारिसं सउणेण भणियं तारिसं अम्हेहिं मारणंतियं पावियव्वं, किं पुण ? इमस्स महरिसिस्स पभावेण मुच्चिहामो, सा य णावा पहाविया, सुदाढेण य णागकुमारराइणा दिट्ठो भयवं णावाए ठिओ, तस्स कोवो जाओ, सो य किर जो सो सीहो वासुदेवत्तणे मारिओ सो संसारं भमिऊण सुदाढो नागो जाओ, सो संवट्टगवायं विउव्वेत्ता णावं ओवोलेउं इच्छइ । इओ य कंवलसंवलाणं आसणं चलियं, का पुण

---

१ पक्षक्षपणपारणकेऽतिगत, तत्र नागसेनेन गृहपतिना क्षीरभोजनेन प्रतिलम्भितः, पञ्च दिव्यानि प्रादुर्भूतानि, तत. श्वेतम्बीं गत., तत्र प्रदेशी राजा श्रमणोपासको भगवतो महिमानं करोति, ततो भगवान् सुरभिपुरं व्रजति, तत्रान्तरा नैयका राजानः पञ्चभी रथैरायान्ति प्रदेशिराज. पार्श्वे, तैस्तत्र स्वामी वन्दित पूजितश्च, तत स्वामी सुरभिपुरं गत, तत्र गङ्गा उत्तरीतव्या, तत्र सिद्धयात्रो नाम नाविक, क्षेमिलो नाम शाकुनज्ञाता, तत्र च नावि लोको विलगति, कौशिकेन महाशकुनेन वासितं, कौशिको नाम उलूक, तत· क्षेमिलेन भणित–यादृश शाकुनेन भणित तादृशमस्माद्दृशैर्मारणान्तिकं प्राप्तव्य, किं पुन ! अस्य महर्षे प्रभावेण मोक्ष्यामहे, सा च नौ प्रधाविता, सुदंष्ट्रेण च नागकुमारराजेन दृष्टो भगवान् नावि स्थित·, तस्य कोपो जातः, स च किल य. स सिंह वासुदेवत्वे मारित स संसार भ्रान्त्वा सुदंष्ट्रो नागो जातः, स संवर्तकवात विकुर्व्य नावमुद्बुडयितु इच्छति । इतश्च कम्बलशम्बलयोरासन चलितं, का पुनः

---

[1]कंवलसंवलाण उप्पत्ती ?–महुराए नगरीए जिणदासो वाणियओ सड्ढो, सोमदासी साविया, दोऽवि अभिगयाणि परिमाणकडाणि, तेहिं चउप्पयस्स पच्चक्खायं, ततो दिवसदेवसिअं गोरसं गिण्हंति, तत्थ य आभीरी गोरसं गहाय आगया, सा ताए सावियाए भण्णइ–मा तुमं अण्णत्थ भमाहि, जत्तिअं आणेसि तत्तिअं गेण्हामि, एवं तासिं संगयं जायं, इमावि गंधपुडियाइ देइ, इमावि कूइगादि दुद्धं दहियं वा देइ, एवं तासिं दढं सोहियं जायं । अण्णया तासिं गोवाणं विवाहो जाओ, ताहे ताणि निमंतेंति, ताणि भणन्ति–अम्हे वाउलाणि ण तरामो गंतुं, जं तत्थ उवउज्जति भोयणे कडुगभंडादी वत्थाणि आभरणाणि धूवपुप्फगंधमल्लादि वधूवरस्स तं तेहिं दिण्णं, तेहिं अतीव सोभावियं, ( ५००० ) लोगेण य सलाहियाणि, तेहिं तुट्ठेहिं दो तिवरिसा गोणपोतलया हट्ठसरीरा उवट्ठिया कंवलसंवलत्ति नामेणं, ताणि नेच्छंति, वला बंधिउं गयाणि, ताहे तेण सावएण चिंतियं–जइ मुच्चिहिंति ताहे लोगो वाहेहित्ति, ता एत्थ चेव अच्छंतु, फासुगचारी किणिऊणं

---

१ कम्बलशम्बलयोरुत्पत्ति. ?–मथुरायां नगर्यां जिनदासो वणिग् श्राद्ध, सोमदासी श्राविका, द्वे अपि अभिगतौ ( जीवादिज्ञातारौ ) कृतपरिमाणौ, ताभ्या चतुष्पद प्रत्याख्यात, ततो दिवसदैवसिक गोरस गृह्णीतः, तत्र चाभीरी गोरसं गृहीत्वा आगता, सा तया श्राविकया भण्यते–मा त्वमन्यत्र भ्रमी, यावदानयसि तावद्गृह्णामि, एव तयो सगत जात, इयमपि गन्धपुटिकादि ददाति, इयमपि कूचिकादि दुग्ध दधि वा ददाति, एव तयोर्दृढ सौहृद जात । अन्यदा तेषा गोपाना विवाहो जात, तदा तौ निमन्त्रयत, तौ भणत –आवां व्याकुलौ न शक्नुव आगन्तु, यत्तत्रोपयुज्यते भोजने कटाहभाण्डादि वस्त्राण्याभरणानि धूपपुष्पगन्धमाल्यादि वधूवरयो तत्तद्दत्त, तैरतीव शोभित, लोकेन च श्लाघितौ, ताभ्या तुष्टाभ्यां द्वौ त्रिवर्षौ गोपोतौ हृष्टशरीरौ उपस्थापितौ कम्बलशम्बलाविति नाम्ना, तौ नेच्छत, बलाद्बध्वा गतौ, तदा तेन श्रावकेण चिन्तित–यदि मुच्येते तदा लोको वाहयिष्यति इति, तद् अत्रैव तिष्ठता, प्रासुकचारि क्रीत्वा

---

दिज्जइ, एवं पोसिज्जंति, सोऽवि सावओ अट्ठमीचउद्दसीसु उववासं करेइ पोत्थयं च वाएइ, तेऽवि तं सोऊण भद्दया जाया सण्णिणो य, जद्दिवसं सावगो न जेमेइ तद्दिवसं तेऽवि न जेमंति, तस्स सावगस्स भावो जाओ–जहा इमे भविया उवसंता, अब्भहिओ य नेहो जाओ, ते रुवस्सिणो, तस्स य सावगस्स मित्तो, तत्थ भंडीरमणजत्ता, तारिसा नत्थि अण्णस्स वइल्ला, ताहे तेण ते भंडीए जोएत्ता णीआ अणापुच्छाए, तत्थ अण्णेण अण्णेणवि समं धावं कारिया, ताहे ते छिन्ना, तेण ते आणेउं बद्धा, न चरंति न य पाणियं पिबंति, जाहे सव्वहा नेच्छंति ताहे सो सावओ तेसिं भत्तं पच्चक्खाइ, नमुक्कारं च देइ, ते कालगया णागकुमारेसु उववण्णा, ओहिं पउंजंति, जाव पेच्छंति तित्थगरस्स उवसग्गं कीरमाणं, ताहे तेहिं चिंतियं–अलाहि ता अण्णेणं, सामिं मोएमो, आगया, एगेण णावा गहिया, एगो सुदाढेण समं जुज्झइ, सो महिड्ढिगो, तस्स पुण चवणकालो, इमे य अहुणोववण्णया, सो तेहिं पराइओ, ताहे ते नागकुमारा तित्थगरस्स महिमं करेंति

---

१ दीयते, एव पोष्येते, सोऽपि श्रावकोऽष्टमीचतुर्दश्योरुपवास करोति पुस्तक च वाचयति, तावपि तत् श्रुत्वा भद्रकौ जातौ संज्ञिनौ च, यद्दिवसे श्रावको न जेमति तद्दिवसे तावपि न जेमत, तस्य श्रावकस्य भावो जात –यथेमौ भव्यावुपशान्तौ, अभ्यधिकश्च स्नेहो जात तौ रूपवन्तौ, तस्य च श्रावकस्य मित्र, तत्र भण्डीरमणयात्रा, तादृशौ न स्तोऽन्यस्य बलीवर्दौ, तदा तेन भण्ड्यां योजयित्वा नीतौ अनापृच्छया, तत्रान्येनान्येनापि सम धावन कारितौ, तदा तौ छिन्नौ, तेन तावानीय बद्धौ, न चरतो न च पानीय पिबत, यदा सर्वथा नेच्छतस्तदा स श्रावकस्तौ भक्त प्रत्याख्यापयति, नमस्कारं च ददाति, तौ कालगतौ नागकुमारेषूत्पन्नौ, अवधिं प्रायुञ्जां यावत्पश्यत तीर्थंकरस्योपसर्गं क्रियमाण, तदा ताभ्या चिन्तितम्–अल तावदन्येन, स्वामिन मोचयाव, आगतौ, एकेन नौर्गृहीता, एक सुदंष्ट्रेन सम युध्यते, स महर्द्धिक, तस्य पुनश्च्यवनकाल·, इमौ चाधुनोत्पन्नौ, स ताभ्यां पराजितः, तदा तौ नागकुमारौ तीर्थंकरस्य महिमान कुरुत.

सत्तं रूवं च गायंति, एवं लोगोऽवि, ततो सामी उत्तिण्णो, तत्थ देवेहिं सुरहिगंधोदयवासं पुप्फवासं च वुट्ठं, तेऽवि पडिगया। अमुमेवार्थमुपसंहरन्नाह—

**सुरहिपुर सिद्धजत्तो गंगा कोसिअ विऊ य खेमिलओ। नाग सुदाढे सीहे कंबलसबला य जिणमहिमा ॥ ४६९ ॥**
**महुराए जिणदासो आहीर विवाह गोण उववासे। भंडीर मित्त अवच्चे भत्ते णागोहि आगमणं ॥ ४७० ॥**
**वीरवरस्स भगवओ नावारूढस्स कासि उवसग्गं। मिच्छादिट्ठि परद्धं कंबलसबला समुत्तारे ॥ ४७१ ॥**

पदानि—सुरभिपुरं सिद्धयात्रः गङ्गा कौशिकः विद्वांश्च खेमिलकः नागः सुदंष्ट्रः सिंहः कम्बलसबलौ च जिनमहिमा, मधुरायां जिनदासः आभीरविवाहः गोः उपवासः भण्डीरः मित्रं अपत्ये भक्तं नागौ अवधिः आगमनं वीरवरस्य भगवतः नावमारूढस्य कृतवान् उपसर्गं मिथ्यादृष्टिः 'परद्धं' विक्षिप्तं भगवन्तं कम्बलसबलौ समुत्तारितवन्तौ। अक्षरगमनिका स्वबुद्ध्या कार्या। ततो भगवं दगतीराए इरियावहियं पडिक्कमइ, पत्थिओ ततो, णदीपुलिणे भगवओ पादेसु लक्खणाणि दीसंति महुसित्थचिक्खल्ले, तत्थ पूसो नाम सामुद्दिओ, सो ताणि पासिऊण चिंतेइ—एस चक्कवट्टी गतो एगागी, वच्चामि णं वागरेमि, तो मम एत्तो भोगा भविस्संति, सेवामि णं कुमारत्तणे, सामीऽवि थूणागस्स सण्णिवेसस्स बाहिं पडिमं

1 सत्त रूपं च गायत., एव लोकोऽपि, तत स्वाम्युत्तीर्ण, तत्र देवै सुरभिगन्धोदकवर्षा पुष्पवर्षा च वृष्टा, तावपि प्रतिगतौ। 2 ततो भगवान् दकतीरे ईर्यापथिकीं प्रतिक्राम्यति, प्रस्थितस्तत, नदीपुलिने भगवत पादयोर्लक्षणानि दृश्यन्ते मधुसिक्थकर्दमे, तत्र पुष्पो नाम सामुद्रिक, स तानि दृष्ट्वा चिन्तयति—एष चक्रवर्ती गत एकाकी, व्रजामि त व्याकरोमि, तत ममास्माद्भोगा भविष्यन्ति, सेवे त कुमारत्वे, स्वाम्यपि स्थूणाकस्य सन्निवेशस्य बहिर्भागे प्रतिमां

ठिओ, तत्थ सो सामि पिच्छिऊण चिंतेइ—अहो मए पलालं अहिज्जिअं, एएहिं लक्खणेहिं जुत्तं, एएण समणेण न होउं। इओ य सक्को देवराया ओहिणा पलोएइ—कहिं अज्ज सामी ?, ताहे सामिं पेच्छइ, तं च पूसं, आगओ सामिं वन्दित्ता भणति—भो पूस ! तुमं लक्खणं न याणसि, एसो अपरिमिअलक्खणो, ताहे वण्णेइ लक्खणं अब्भिंतरगं—गोखीरगोरं रुहिरं पसत्थं, सत्थं न होइ अलिअं, एस धम्मवरचाउरंतचक्कवट्टी देविंदनरिंदपूइओ भवियजणकुमुयाणंदकारओ भविस्सइ, ततो सामी रायगिहं गओ. तत्थ णालंदाए बाहिरियाए तंतुवागसालाए एगदेसंमि अहापडिरूवं उग्गहं अणुण्णवेत्ता पढमं मासक्खमणं उवसंपज्जित्ता णं विहरइ। तेणं कालेणं तेणं समएणं मंखली नाम मंखो, तस्स भद्दा भारिया गुव्विणी सरवणे नाम सण्णिवेसे गोबहुलस्स माहणस्स गोसालाए पसूआ, गोण्णं नामं कयं गोसालोत्ति, संवड्ढिओ, मंखसिप्पं अहिज्जिओ, चित्तफलयं करेइ, एक्कल्लओ विहरंतओ रायगिहे तंतुवायसालाए ठिओ, जत्थ सामी ठिओ, तत्थ वासावासं उवागओ।

1 स्थित, तत्र स स्वामिन प्रेक्ष्य चिन्तयति—अहो मया पलालमधीत, एनैर्लक्षणैर्युक्त, एतेन श्रमणेन न भाव्य। इतश्च शक्रो देवराजोऽवधिना प्रलोकयति—क्वाद्य स्वामी?, तदा स्वामिन प्रेक्षते, त च पुष्प, आगत स्वामिन वन्दित्वा भणति—भो पुष्प! त्व लक्षण न जानासि, एषोऽपरिमितलक्षण, तदा वर्णयति लक्षणमभ्यन्तर—गोक्षीरगौर रुधिर प्रशस्त, शास्त्र न भवति अलीक, एष धर्मवरचातुरन्तचक्रवर्ती देवेन्द्रनरेन्द्रपूजित भव्यजनकुमुदानन्दकारक भविष्यति, तत स्वामी राजगृह गत, तत्र नालन्दाख्यशाखापुरे तन्तुवायशालायां एकदेशे यथाप्रतिरूपमवग्रहमनुज्ञाप्य प्रथम मासक्षपणमुपसपद्य विहरति। तस्मिन् काले तस्मिन् समये मङ्खलिर्नाम मङ्ख, तस्य भद्रा भार्या गुर्विणी शरवणे नाम सन्निवेशे गोबहुलस्य ब्राह्मणस्य गोशालाया प्रसूता, गौण नाम कृत गोशाल इति, संवर्धित, मङ्खशिल्पमध्यापित, चित्रफलक करोति, एकाकी विहरन् राजगृहे तन्तुवायशालाया स्थित, यत्र स्वामी स्थित, तत्र वर्षावासमुपागत -

भगवं मासखमणपारणए अब्भिंतरियाए विजयस्स घरे विउलाए भोयणविहीए पडिलाभिओ, पंच दिव्वाणि पाउब्भूयाणि, गोसालो सुणेत्ता आगओ, पंच दिव्वाणि पासिऊण भणति—भगवं ! तुज्झं अहं सीसोत्ति, सामी तुसिणीओ निग्गओ, बितिअमासखमणं ठिओ, बितिए आणंदस्स घरे खज्जगविहीए ततिए सुणंदस्स घरे सव्वकामगुणिएणं, ततो चउत्थं मासखमणं उवसंपज्जित्ता णं विहरइ। अभिहितार्थोपसंग्रहायेदमाह—

**थूणाएँ बाहिं पूसो लक्खणमब्भंतरं च देविंदो। रायगिहि तंतुसाला मासक्खमणं च गोसालो ॥ ४७२ ॥**
**मंखलि मंख सुभद्दा सरवण गोबहुलमेव गोसालो। विजयाणंदसुणंदे भोअण खज्जे अ कामगुणे ॥ ४७३ ॥**

पदानि—स्थूणायां बहिः पुष्यो लक्षणमभ्यन्तरं च देवेन्द्रः राजगृहे तन्तुवायकशाला मासक्षपणं च गोशालः मङ्खली मङ्खः सुभद्रा शरवणं गोबहुल एव गोशालो विजय आनन्दः सुनन्दः भोजन खाद्यानि च कामगुणं। शरवणं—गोशालोत्पत्तिस्थानं। शेषाऽक्षरगमनिका स्वधिया कार्या। गोसालो कत्तियदिवसपुण्णिमाए पुच्छइ—किमहं अज्ज भत्तं लभिस्सामि?, सिद्धत्थेण भणियं—कोद्दवकूरं अंबिलेण कूडरूवगं च दक्खिणं, सो णयरिं सव्वादरेण पहिंडिओ, जहा भंडीसुणए, न कहिंचिवि संभाइयं,

1 भगवान् मासक्षपणपारणके अभ्यन्तरिकायां विजयस्य गृहे विपुलेन भोजनविधिना प्रतिलम्भित, पञ्च दिव्यानि प्रादुर्भूतानि, गोशाल श्रुत्वाऽऽगत, पञ्च दिव्यानि दृष्ट्वा भणति—भगवन् ! तवाह शिष्य इति, स्वामी तूष्णीको निर्गत, द्वितीयमासक्षपण स्थित, द्वितीयस्मिन् आनन्दस्य गृहे खाद्यकविधिना तृतीये सुनन्दस्य गृहे सर्वकामगुणितेन, ततश्चतुर्थं मासक्षपणमुपसपद्य विहरति। 2 गोशालः कार्तिकपूर्णिमादिवसे पृच्छति—किमहमद्य भक्त लप्स्ये ?, सिद्धार्थेन भणितम्—कोद्रवतन्दुलान् अम्लेन कूटरूप्य च दक्षिणाया, स नगर्यां सर्वादरेण प्रहिण्डित, यथा गन्त्रीश्वा, न कस्मिंश्चिदपि सभाजित.

ताहे अवरण्हे एक्केणं कम्मकरेण अंबिलेण कूरो दिण्णो, ताहे जिमिओ, एगो रूवगो दिण्णो, रूवगो परिक्खाविओ जाव कूडओ, ताहे भणति–जेण जहा भवियव्वं ण तं भवति अण्णहा, लज्जिओ आगतो। तओ भगवं चउत्थमासखमणपारणए नालिंदाओ निग्गओ, कोल्लाकसन्निवेसं गओ, तत्थ बहुलो माहणो माहणे भोयावेति घयमहुसंजुत्तेणं परमण्णेणं, ताहे तेण सामी पडिलाभिओ, तत्थ पंच दिव्वाणि। गोसालोऽवि तंतुवागसालाए सामिं अपिच्छमाणो रायगिहं सब्भंतरबाहिरिअं गवेसति, जाहे न पेच्छइ ताहे नियगोवगरणं धीयाराणं दाउं सउत्तरोट्ठं मुंडं काउं गतो कोल्लागं, तत्थ भगवतो मिलिओ, तओ भगवं गोसालेण समं सुवण्णखलगं वच्चइ, एत्थंतरा गोवा गावीहिंतो खीरं गहाय महल्लिए थालीए णवएहिं तंदुलेहिं पायसं उवक्खडेंति, ततो गोसालो भणति–एह भगवं! एत्थ भुंजामो, सिद्धत्थो भणति–एस निम्माणं चेव न वच्चइ, एस भज्जिहिति उल्लहिज्जंती, ताहे सो असद्दहंतो ते गोवे भणति–एस देवज्जगो तीताणागतजाणओ

१ तदाऽपराह्णे एकेन कर्मकरेणाम्लेन तन्दुला दत्ताः, तदा जिमितः, एको रूप्यको दत्तः, रूप्यकः परीक्षितः यावत् कूटः, तदा भणति–येन यथा भवितव्यं न तद्भवत्यन्यथा, लज्जित आगतः। ततो भगवान् चतुर्थमासक्षपणपारणके नालन्दाया निर्गतः, कोल्लाकसन्निवेशं गतः, तत्र बहुलो ब्राह्मणो ब्राह्मणान् भोजयति घृतमधुसंयुक्तेन परमान्नेन, तदा तेन स्वामी प्रतिलम्भितः, तत्र पञ्च दिव्यानि। गोशालोऽपि तन्तुवायशालायां स्वामिनमप्रेक्षमाणः राजगृहं साभ्यन्तरबाह्यं गवेषयति, यदा न प्रेक्षते तदा निजकोपकरणं धिग्जातिभ्यो दत्त्वा सोत्तरौष्ठं मुण्डनं कृत्वा गतः कोल्लाकं, तत्र भगवता मिलितः, ततो भगवान् गोशालेन समं सुवर्णखलं व्रजति, तत्रान्तरा गोपा गोभ्यः क्षीरं गृहीत्वा महत्यां स्थाल्यां नवैस्तन्दुलैः पायसमुपस्कुर्वन्ति, ततो गोशालो भणति–यावः भगवन्! अत्र भुञ्ज्महे, सिद्धार्थो भणति–एषा निर्माणमेव न व्रजिष्यति, एषा भङ्क्ष्यति उल्लिख्यमाना, तदा सोऽश्रद्दधानः तान् गोपान् भणति–एष देवार्यकः तीतानागतज्ञायकः

भणति–एस थाली भज्जिहिति, तो पयत्तेण सारक्खह, ताहे पयत्तं करेंति–वंसविदलेहिं सा बद्धा थाली, तेहिं अतीव बहुला तंदुला छूढा, सा फुट्टा, पच्छा गोवालाणं जेणं जं कभल्लं आसाइयं सो तत्थ पजिमिओ, तेण न लद्धं, ताहे सुट्ठुतरं नियतिं गेण्हइ। अमुमेवार्थं कथानकोक्तमुपसंजिहीर्षुराह—

**कोल्लाग बहुल पायस दिव्वा गोसाल दट्ठु पव्वज्जा। बाहिं सुवण्णखलए पायसथाली नियइगहणं॥ ४७४॥**

पदानि—कोल्लाकः बहुलः पायसं दिव्यानि गोशालः दृष्ट्वा प्रव्रज्या बहिः सुवर्णखलात् पायसस्थाली नियतेर्ग्रहणं च। पदार्थ उक्त एव।

**बंभणगामे नंदोवनंद उवणंद तेय पच्छद्धे। चंपा दुमासखमणे वासावासं मुणी खमइ॥ ४७५॥**

पदानि—ब्राह्मणग्रामे नन्दोपनन्दौ उपनन्दः तेजः प्रत्यर्धे चम्पा द्विमासक्षपणे वर्षावासं मुनिः क्षपयतीति। अस्याः पदार्थः कथानकादवसेयः, तच्चेदम्—ततो सामी बंभणगामं गतो, तत्थ नंदो उवणंदो य भायरो, गामस्स दो पाडगा, एक्को नन्दस्स बितिओ उवणंदस्स, ततो सामी नंदस्स पाडगं पविट्ठो नंदघरं च, तत्थ दोसीणेणं पडिलाभिओ नंदेण

१ भणति–एषा स्थाली भङ्क्ष्यति, ततः प्रयत्नेन संरक्षत, तदा प्रयत्नं कुर्वन्ति, वंशविदलैः सा बद्धा स्थाली, तैरतीव बहवस्तन्दुलाः क्षिप्ताः, सा स्फुटिता, पश्चात् गोपालानां येन यत्कपालमासादितं स तत्र प्रजिमितः, तेन न लब्धं, तदा सुष्ठुतरं नियतिं गृह्णाति। २ ततः स्वामी ब्राह्मणग्रामं गतः, तत्र नन्द उपनन्दश्च भ्रातरौ, ग्रामस्य द्वौ पाटकौ, एको नन्दस्य द्वितीय उपनन्दस्य, ततः स्वामी नन्दस्य पाटकं प्रविष्टः नन्दगृहं च, तत्र पर्युषितान्नेन प्रतिलम्भितः नन्देन,

* ०खल पायसथाली नियइए गहणं च प्र०

गोसालो उवनंदस्स, तेण उवणंदेण संदिट्ठं–देहि भिक्खं, तत्थ न ताव वेला, ताहे सीअलकूरो णीणिओ, सो तं णेच्छइ, पच्छा सा तेणवि भण्णति–दासी! एयस्स उवरि छुभसुत्ति, तीए छूढो, अपत्तिएण भणति–जइ मज्झ धम्मायरिअस्स अत्थि तवो तेए वा एयस्स घरं डज्झउ, तत्थ अहासण्णिहितेहिं वाणमंतरेहिं मा भगवतो अलियं भवउत्ति तेण तं दड्ढं घरं। ततो सामी चंपं गओ, तत्थ वासावासं ठाइ, तत्थ दोमासिएण खमणेण खमइ, विचित्तं च तवोकम्मं, ठाणादीए पडिमं ठाइ, ठाणुक्कुडुगो एवमादीणि करेइ, एस ततिओ वासारत्तो।

**कालाए सुण्णगारे सीहो विज्जुमई गोट्ठिदासी य। खंदो दन्तिलियाए पत्तालग सुण्णगारंमि॥ ४७६॥**

पदानि—कालायां शून्यागारे सिंहः विद्युन्मती गोष्ठीदासी च स्कन्दः दन्तिलिकया पात्रालके शून्यागारे। अक्षरगमनिका क्रियाऽध्याहारतः स्वधिया कार्या। पदार्थः कथानकादवसेयः, तच्चेदम्—ततो चरिमं दोमासियपारणयं बाहिं पारेत्ता कालायं नाम सण्णिवेसं गओ गोसालेण समं, तत्थ भगवं सुण्णघरे पडिमं ठिओ, गोसालोऽवि तस्स दारपहे ठिओ,

१ गोशाल उपनन्दस्य, तेनोपनन्देन संदिष्टम्–देहि भिक्षां, तत्र न तावद्वेला, तदा शीतलकूरो नीतः, स तं नेच्छति, पश्चात् सा तेनापि भण्यते–दासि! एतस्योपरि क्षिपेति, तया क्षिप्तः, अप्रीत्या भणति–यदि मम धर्माचार्यस्य अस्ति तपस्तेजो वा एतस्य गृहं दह्यतां, तत्र यथासन्निहितैर्वानमन्तरैः मा भगवान् अलीको भवत्विति तैस्तद् दग्धं गृहं। ततः स्वामी चम्पां गतः, तत्र वर्षावासं तिष्ठति, तत्र द्विमासक्षपणेन तपस्यति, विचित्रं च तपः कर्म, स्थानादिना प्रतिमां (कायोत्सर्गं) करोति, स्थानमुत्कटुक एवमादीनि करोति, एष तृतीयो वर्षारात्रः। २ ततश्चरमं द्विमासिकपारणकं बहिष्कृत्वा कालाकं नाम सन्निवेशं गतः गोशालेन समं, तत्र भगवान् शून्यगृहे प्रतिमां स्थितः, गोशालोऽपि तस्य द्वारपथे स्थितः.

चालिणी जारिसो कओ, तहवि भगवं न चालिओ, ताहे उद्दंसे वज्जतुंडे विउव्वइ, ते तं उद्दंसा वज्जतुंडा खाइंति, जे एगेण पहारेण लोहियं नीणिंति, जाहे तहवि न सक्का ताहे उण्होला विउव्वति, उण्होला तेल्लपाइआओ, ताओ तिक्खेहिं तुंडेहि अतीव डसंति, जहा जहा उवसग्गं करेइ तहा तहा सामी अतीव झाणेण अप्पाणं भावेइ, जाहे तेहिं न सक्किओ ताहे विच्छुए विउव्वति, ताहे खायंति, जाहे न सक्का ताहे नउले विउव्वइ, ते तिक्खाहिं दाढाहिं डसंति, खंडखंडाइं च अवणेंति, पच्छा सप्पे विसरोसपुण्णे उग्गविसे डाहजरकारए, तेहिवि न सक्का, मूसए विउव्वइ, ते खंडाणि अवणेत्ता तत्थेव वोसिरंति मुत्तपुरीसं, ततो अतुला वेयणा भवति, जाहे न सक्का ताहे हत्थिरूवं विउव्वति, तेण हत्थिरूवेण सुंडाए गहाय सत्तट्ठताले आगासं उक्खिवित्ता पच्छा दंतमुसलेहिं पडिच्छति, पुणो भूमीए *विंधति, चलणतलेहिं मलइ, जाहे न सक्को ताहे हत्थिणियारूवं विउव्वति, सा हत्थिणिया सुंडाएहि दंतेहिं विंधइ फालेइ य पच्छा काइएण सिंचइ, ताहे चलणेहिं मलेइ

१ चालनीसदृश कृत, तथापि भगवान्न चलति ( चलित, ), तदा उद्दंशान् वज्रतुण्डान् विकुर्वति, ते तमुद्दंशा वज्रतुण्डा खादन्ति, ये एकेन प्रहारेण रुधिर निष्काशयन्ति, यदा तथापि न शक्तस्तदा घृतेलिका विकुर्वति, 'उण्होला इति तैलपायिन्य' तास्तीक्ष्णैस्तुण्डैरतीव दशन्ति, यथा यथोपसर्ग करोति तथा तथा स्वाम्यतीव ध्यानेनात्मान भावयति, यदा तैर्न शकितस्ततो वृश्चिकान् विकुर्वति, तदा खादन्ति, यदा न शक्तस्तदा नकुलान् विकुर्वति, ते तीक्ष्णाभिर्दंष्ट्राभिर्दशन्ति, खण्डखण्डानि च अपनयन्ति, पश्चात् सर्पान् विषरोषपूर्णान् उग्रविषान् दाहज्वरकारकान्, तैरपि न शक्तो मूषकान् विकुर्वति, ते खण्डान्यपनीय तत्रैव व्युत्सृजन्ति मूत्रपुरीष, ततोऽतुला वेदना भवति, यदा न शकितस्तदा हस्तिरूप विकुर्वति, तेन हस्तिरूपेण शुण्डया गृहीत्वा सप्ताष्टतालानाकाशे उत्क्षिप्य पश्चाद्दन्तमुशलाभ्यां प्रतीच्छति, पुनर्भूम्यां विध्यति, चरणतलैर्मर्दयति, यदा न शक्तस्तदा हस्तिनीरूप विकुर्वति, सा हस्तिनी शुण्डाभिर्दन्तैर्विध्यति विदारयति च पश्चात्कायिकेन सिञ्चति, तदा चरणैर्मर्दयति. * उ भवति.

जाहे न सक्का ताहे पिसायरूवं विउव्वति, जहा कामदेवे, तेण उवसग्गं करेई, जाहे न सक्का ताहे वग्घरूवं विउव्वति, सो दाढेहिं नखेहि य फालेइ, खारकाइएण सिंचति, जाहे न सक्का ताहे सिद्धत्थरायरूवं विउव्वति, सो कट्ठाणि कलुणाणि विलवइ-एहि पुत्त ! मा मा उज्झाहि, एवमादि विभासा, ततो तिसलाए विभासा, ततो सूयं, किह ?, सो ततो खंधावारं विउव्वति, सो परिपेरंतेसु आवासिओ, तत्थ सूतो पत्थरे अलभंतो दोण्हवि पायाण मज्झे अग्गिं जालेत्ता पायाण उवरि उक्खलियं काउं पयइओ, जाहे एएणवि न सक्का ततो पक्कणं विउव्वति, सो ताणि पंजराणि बाहुसु गलए कण्णेसु य ओलएइ, ते सउणगा तं तुंडेहिं खायंति विंधंति सण्णं काइयं च वोसिरंति, ताहे खरवायं विउव्वेइ, जेण सक्का मंदरंपि चालेउं, न पुण सामी विचलइ, तेण उप्पाडेत्ता उप्पाडेत्ता पाडेइ, पच्छा कलंकलियवायं विउव्वइ, जेण जहा चक्काइद्धगो तहा भमाडिज्जइ, नंदिआवत्तो वा, जाहे एवं न सक्का ताहे कालचक्कं विउव्वति, तं घेत्तूणं उड्ढं गगणतलं गओ, एत्ताहे

१ यदा न शक्तस्तदा पिशाचरूप विकुर्वति, यथा कामदेवे, तेनोपसर्गं करोति यदा न शक्तस्तदा व्याघ्ररूप विकुर्वति, स दंष्ट्राभिर्नखैश्च पाटयति, क्षारकायिकया सिञ्चति, यदा न शक्तस्तदा सिद्धार्थराजरूप विकुर्वति, स कष्टानि करुणानि विलपति-एहि पुत्र ! मा मा उज्झीः एवमादिर्विभाषा, ततस्त्रिशलया विभाषा, ततः सूद, कथ ?, स ततः स्कन्धावार विकुर्वति, स पर्यन्तेषु परित आवासित., तत्र सूद अश्मानमलभमानो द्वयोरपि पादयोर्मध्येऽग्निं ज्वलयित्वा पदोरुपरि पिठरिकां कृत्वा पक्तुमारब्धवान्, यदैतेनापि न शक्तस्ततश्चाण्डाल विकुर्वति, स तानि पञ्जराणि बाह्वोर्गले कर्णयोश्च उपलगयति, ते शकुनास्त तुण्डै खादन्ति विध्यन्ति सञ्ज्ञा कायिकीं च व्युत्सृजन्ति, तदा खरवात विकुर्वति येन शक्यते मन्दरोऽपि चालयितु, न पुन स्वामी विचलति, तेनोत्पाट्य उत्पाट्य पातयति, पश्चात्कलङ्कलिकावात विकुर्वति, येन यथा चक्राविद्ध तथा भ्राम्यते नन्द्यावर्त्तो वा, यदैव न शक्तस्तदा कालचक्र विकुर्वति, तद्गृहीत्वोर्ध्वं गगनतल गतोऽधुना

* कामदेवो तचो उपसग्ग प्र०.

मारेमित्ति मुएइ वज्जसंनिभं जं मंदरपि चूरेज्जा, तेण पहारेण भगवं ताव णिवुड्डो जाव अग्गनहा हत्थाणं, जाहे न सक्का तेणवि ताहे चिंतेति-न सक्का एस मारेउं, अणुलोमे करेमि, ताहे पभायं विउव्वइ, लोगो सव्वो चंकमिउं पवत्तो भणति-देवज्जगा ! अच्छसि अज्जवि ?, भयवंपि नाणेण जाणइ जहा न ताव पभाइ जाव सभावओ पभायंति, एस वीसइमो । अन्ने भणन्ति-तुट्ठोमि तुज्झ भगवं ! भण किं देमि ? सग्गं वा ते सरीरं नेमि मोक्खं वा नेमि, तिण्णिवि लोए तुज्झ पादेहि पाडेमि ?, जाहे न तीरइ ताहे सुट्ठुयरं पडिनिवेसं गओ, कल्लं काहिति, पुणोवि अणुकड्ढइ—

वालुय पंथे तेणा माउलपारणग तत्थ कागन्दी । तत्तो सुभोम अंजलि सुच्छित्ताए य विडरूवं ॥ ५०७ ॥

ततो सामी वालुगा नाम गामो तं पहाविओ, *एत्थंतरा पंचचोरसए विउव्वति, वालुगं च जत्थ खुप्पइ, पच्छा तेहि माउलोत्ति वाहिओ पव्वयगुरुतरेहिं सागयं च वज्जसरीरा दिंति जहिं पव्वयावि फुट्टिज्जा, ताहे वालुयं गओ, तत्थ सामी

१ मारयामीति मुञ्चति वज्रसन्निभ यन्मन्दरमपि चूरयेत्, तेन प्रहारेण भगवान् तावत् मृदितो यावदग्रनखा हस्तयो., यदा न शक्तस्तेनापि तदा चिन्तयति-न शक्य एष मारयितुम् अनुलोमान् करोमि, तदा प्रभात विकुर्वति, लोक सर्वश्चङ्क्रमितु प्रवृत्तो भणति-देवार्य ! तिष्ठसि ? अद्यापि, भगवान् ज्ञानेन जानाति यथा न तावत्प्रभाति यावत्स्वभावत प्रभातमिति, एष विंशतितम. । अन्ये भणन्ति-तुष्टोऽस्मि तुभ्य भगवन् ! भण किं ददामि ? स्वर्गं वा ते शरीरं नयामि मोक्ष वा नयामि, त्रीनपि लोकान् तव पादयो पातयामि, यदा न शक्नोति तदा सुष्ठुतर प्रतिनिवेश गत, कल्ये करिष्यति, पुनरप्यनुकर्षति । ततः स्वामी वालुका नाम ग्रामस्त प्रधावित, अत्रान्तरे पञ्च चौरशतानि विकुर्वति, वालुका च यत्र मज्ज्यते, पश्चात् वैर्मातुल इति वाहित पर्वतगुरुतरै. स्वागत वज्रशरीरा ददति, यत्र पर्वता अपि स्फुटेयु, तदा वालुका गत., तत्र स्वामी * तत्थंतरा प्र० + सरीरेहिं कसाघाए च० प्र०

भिक्खं पहिंडिओ, तत्थावरेत्तुं भगवतो रूवं काणच्छि अविरइयाओ णडेइ, जाओ तत्थ तरुणीओ ताओ हम्मति, ताहे निग्गतो। भगवं सुभोमं वच्चइ, तत्थवि अतियओ भिक्खायरियाए, तत्थवि आवरेत्ता महिलाणं अंजलिं करेइ, पच्छा तेहिं पिट्टिज्जति, ताहे भगवं णीति, पच्छा सुच्छेत्ता नाम गामो तहिं वच्चइ, जाहे अतिगतो सामी भिक्खाए ताहे इमो आवरेत्ता विडरुवं विउव्वइ, तत्थ हसइ य गायइ य अट्टट्टहासे य मुंचति, काणच्छियाओ य जहा विडो तहा करेइ, असिट्ठाणि य भणइ, तत्थवि हम्मइ, ताहे ततोवि णीति—

मलए पिसायरूवं सिवरूवं हत्थिसीसए चेव। ओहसणं पडिमाए मसाण सक्को जवण पुच्छा ॥ ५०८ ॥

ततो मलयं गतो गामं, तत्थ पिसायरूवं विउव्वति, उम्मत्तयं भगवतो रूवं करेइ, तत्थ अविरइयाओ अवतासेइ गेण्हइ, तत्थ चेडरूवेहि छारकयारेहि भरिज्जइ लेट्टु(ट्ठु)एहिं च हम्मइ, ताणि य विहावेइ, ततो ताणि छोडियपडियाणि नासंति, तत्थ कहिते हम्मति, ततो सामी निग्गतो, हत्थिसीसं गामं गतो, तत्थ भिक्खाए अतिगयस्स भगवओ सिवरूवं विउव्वइ

१ भिक्षां प्रहिण्डित , तत्रावृत्य भगवतो रूप काणाक्षोऽविरतिका बाधते, यास्तत्र तरुण्यस्ता घ्नन्ति, तदा निर्गत । भगवान् सुभौम व्रजति, तत्रापि अतिगतो भिक्षाचर्यायै, तत्राप्यावृत्य महिलाभ्योऽञ्जलिं करोति, पश्चात्तैः पिट्यते, तदा भगवान् निर्गच्छति, पश्चात् सुक्षेत्रनामा ग्रामस्तत्र व्रजति, यदाऽतिगतः स्वामी भिक्षायै तदाऽयमावृत्य विटरूप विकुर्वति, तत्र हसति च गायति च अट्टाट्टहासांश्च मुञ्चति, काणाक्षिणी च यथा विटस्तथा करोति, अशिष्टानि च भणति, तत्रापि हन्यते, ततोऽपि निर्याति । ततो मलय गतो ग्राम, तत्र पिशाचरूप विकुर्वति, उन्मत्त भगवतो रूप करोति, तत्राविरतिका अपत्रासयति गृह्णाति, तत्र चेटरूपैर्भस्मकचवरैर्भ्रियते लेष्टुकैश्च हन्यते तानि च भापयते, ततस्तानि छोटितपतितानि नश्यन्ति, तत्र कथिते हन्यते, ततः स्वामी निर्गतो, हस्तिशीर्ष ग्राम गत , तत्र भिक्षायै अतिगतस्य भगवत. शिव ( भव्य ) रूप विकुर्वति * एत्थवि प्र०.

सागारियं च से कसाइययं करेइ ,जाहे पेच्छइ अविरइयं ताहे उट्ठवेइ, पच्छा हम्मति, भगवं चिंतेति—एस अतीव गाढं उड्डाहं करेइ अणेसणं च, तम्हा गामं चेव न पविसामि बाहिं अच्छामि, अण्णे भणंति—पंचालदेवरूवं जहा तहा विउव्वति, तदा किर उप्पण्णो पंचालो, ततो बाहिं निग्गओ गामस्स, जओ महिलाजूहं तओ कसाइततेण अच्छति, ताहे किर हीलिसिवा पवत्ता, जम्हा सक्केण पूइओ ताहे ठिआ, ताहे सामी एगंतं अच्छति, ताहे संगमओ उहसेइ—न सक्का तुमं ठाणाओ चालेउं ?, पेच्छामि ता गामं अतीहि, ताहे सक्को आगतो पुच्छइ—भगवं ! जत्ता भे ? जवणिज्जं अव्वाबाहं फासुयविहारं ?, वंदित्ता गओ—

तोसलिकुसीसरूवं संधिच्छेओ इमोत्ति वज्झो य। मोएइ इंदालिउ तत्थ महाभूइलो नामं ॥ ५०९ ॥

ताहे सामी तोसलिं गतो, बाहिं पडिमं ठिओ, ताहे सो देवो चिंतेइ, एस न पविसइ, एत्ताहे एत्थवि से ठियस्स करेमि उवसग्गं, ततो खुड्डुगरूवं विउव्वित्ता संधिं छिंदइ उवकरणेहिं गहिएहिं धाडीए तओ सो गहितो भणति, मा ममं हणह,

१ सागारिक (पुरुषचिह्न) च तस्य कषायित ( स्तब्ध ) करोति, यदा प्रेक्षतेऽविरतिकां तदोत्थापयति, पश्चाद्धन्यते, भगवान् चिन्तयति—एषोऽतीव गाढमपभ्राजनां करोति अनेषणां च, तस्माद्ग्राममेव न प्रविशामि बहिस्तिष्ठामि, अन्ये भणन्ति—पञ्चालदेवरूप यथा तथा विकुर्वति, तदा किलोत्पन्न पञ्चाल , ततो बहिर्निर्गतो ग्रामात्, यतो महिलायूथ तत कापायितकेन तिष्ठति, तदा किल हेलना प्रवृत्ता, यस्मात् शक्रेण पूजितस्तस्मात्स्थिता ( निवृत्ता ), तदा स्वाम्येकान्ते तिष्ठति, तदा संगमकोऽपहसति न शक्यस्त्व स्थानाच्चालयितु ?, प्रेक्षे तावद्ग्राम याहि, तदा शक्र आगतः पृच्छति—भगवन् ! यात्रा भवतां ? यापनीयमव्याबाध प्रासुकविहार , वन्दित्वा गत । तदा स्वामी तोसलिं गत , बहि' प्रतिमया स्थित , तदा स देवश्चिन्तयति—एष न प्रविशति, अधुनाऽत्रापि अस्य स्थितस्य करोम्युपसर्गं, तत क्षुल्लकरूप विकुर्व्य सन्धि छिनत्ति उपकरणेषु गृहीतेषु धाट्या, तत स गृहीतो भणति—मा मा वधिष्ट

अहं किं जाणामि ?, आयरिएण अहं पेसिओ, कहिं सो ?, एस बाहिं अमुए उज्जाणे, तत्थ हम्मति, बज्झति य, मारेज्जउत्ति य वज्झो णीणिओ, तत्थ भूइलो नाम इंदजालिओ, तेण सामी कुंडग्गामे दिट्ठओ, ताहे सो मोएइ, साहइ य—जहा एस सिद्धत्थरायपुत्तो, मुक्को खामिओ य, खुड्डुओ मग्गिओ, न दिट्ठो, नायं जहा से देवो उवसग्गं करेइ—

मोसलि संधि, सुमागह मोएई रट्ठिओ पिउवयंसो। तोसलि य सत्तरज्जू वावत्ति तोसलीमोक्खो ॥ ५१० ॥

ततो भगवं मोसलिं गओ, तत्थवि बाहिं पडिमं ठिओ, तत्थवि सो देवो खुड्डुगरूवं विउव्वित्ता संधिमग्गं सोहेइ पडिलेहेइ य, सामिस्स पासे सव्वाणि उवगरणाणि विउव्वइ, ताहे सो खुड्डुओ गहिओ, तुमं कीस एत्थ सोहेसि ?, साहइ—मम धम्मायरिओ रत्तिं मा कंटए भंजिहितित्ति सो सुहं रत्तिं खत्तं खणिहित्ति, सो कहिं ?, कहिते गया दिट्ठो सामी, ताणि य परिपेरन्ते पासंति, गहितो आणिओ, तत्थ सुमागहो नाम रट्ठिओ पियमित्तो भगवओ सो मोएइ, ततो सामी तोसलिं

१ अहं किं जाने ?, आचार्येणाहं प्रेषित , क स ?, एष बहिरमुकस्मिन्नुद्याने, तत्र हन्यते बध्यते च, मार्यतामिति च वध्यो निष्काशितः, तत्र भूतिलो नामेन्द्रजालिक , तेन स्वामी कुण्डग्रामे दृष्ट , तदा स मोचयति, कथयति च—यथैष सिद्धार्थराजपुत्रो, मुक्त क्षामितश्च, क्षुल्लको मार्गित , न दृष्ट , ज्ञातं यथा तस्य देव उपसर्गं करोति । ततो भगवान् मोसलिं गत , तत्रापि बहि प्रतिमया स्थित , तत्रापि स देव क्षुल्लकरूप विकुर्व्य सन्धिमार्गं शोधयति प्रतिलिखति च, स्वामिनः पार्श्वे सर्वाण्युपकरणानि विकुर्वति, तदा स क्षुल्लको गृहीत , त्व कथमत्र शोधयसि ?, कथयति-मम धर्माचार्य. रात्रौ मा कण्टका भांक्षुः इति स सुखं रात्रौ खात्र खानेष्यति, स क ?, कथिते गता दृष्ट स्वामी, तानि च परित पर्यन्ते पश्यन्ति, गृहीत आनीत , तत्र सुमागधो नाम राष्ट्रिक पितृमित्र भगवत' स मोचयति, तत स्वामी तोसलीं

गओ, तत्थवि तहेव गहिओ, नयरं-उक्कलंबिजिउमाढत्तो, तत्थ से रज्जू छिण्णो, एवं सत्त वारा छिण्णो, ताहे सिद्वं तोसलियस्स खत्तियस्स, सो भणति-मुयह एस अचोरो निद्दोसो, तं खुड्डुयं मग्गह, मग्गिज्जंतो न दीसइ, नायं जहा देवोत्ति—

सिद्धत्थपुरे तेणेत्ति कोसिओ आसवाणिओ मोक्खो। वयगाम हिंडऽणेसण बिइयदिणे बेइ उवसंतो ॥ ५११ ॥

ततो सामी सिद्धत्थपुरं गतो, तत्थवि तेण तहा कयं जहा तेणोत्ति गहिओ, तत्थ कोसिओ नाम अस्सवाणियओ, तेण कुंडपुरे सामी दिट्ठिल्लओ, तेण मोयाविओ। ततो सामी वयगामंति गोउलं गओ, तत्थ य तद्दिवसं छणो, सवत्थ परमण्णं उवक्खडियं, चिरं च तस्स देवस्स ठियस्स उवसग्गे काउं सामी चिंतेइ-गया छम्मासा, सो गतोत्ति अतिगओ जाव अणेसणाओ करेति, ततो सामी उवउत्तो पासति, ताहे अद्धहिंडिए नियत्तो, बाहिं पडिमं ठिओ, सो य सामिं ओहिणा आभोएति-किं भग्गपरिणामो न वत्ति?, ताहे सामी तहेव सुद्धपरिणामो, ताहे दट्ठुं आउट्टो, न तीरइ खोभेउं, जो

१ गत, तत्रापि तथैव गृहीत नगरं उल्लम्बयितुमारब्ध, तत्र तस्य रज्जुश्छिन्ना, एवं सप्त वारांश्छिन्ना, तदा शिष्टं तोसलिकाय क्षत्रियाय, स भणति-मुञ्चत एषोऽचोरो निर्दोष, तं क्षुल्लकं मार्गयत, मार्ग्यमाणो न दृश्यते, ज्ञातं यथा देव इति। तत स्वामी सिद्धार्थपुर गत, तत्रापि तेन तथा कृतं यथा स्तेन इति गृहीतः, तत्र कौशिकनामा अश्ववणिक्, तेन कुण्डपुरे स्वामी दृष्ट, तेन मोचित। तत स्वामी व्रजग्राममिति गोकुलं गत, तत्र च तस्मिन् दिवसे क्षण, सर्वत्र परमान्नमुपस्कृतं, तस्मिन् देवे च चिरमुपसर्गान् कृत्वा स्थिते स्वामी चिन्तयति-गता षण्मासा स गत इति अतिगतो यावदनेषणा करोति, तत स्वाम्युपयुक्त पश्यति, तदाऽर्धहिण्डितो निर्गत, बहि प्रतिमया स्थित, स च स्वामिनमवधिनाऽऽभोगयति-किं भग्नपरिणामो नवेति, तदा स्वामी तथैव शुद्धपरिणाम., तदा दृष्ट्वाऽऽवृत्त, न शक्यते क्षोभयितु, य. * तत्थवि प्र०.

छहिं मासेहिं न चलिओ एम दीहेणावि कालेण न सक्का चालेउं, ताहे पादेसु पडिओ भणति-सच्चं जं सक्को भणति, सव्वं खमेइ-भगवं! अहं भग्गपतिण्णो तुम्हे समत्तपतिण्णा—

वच्चह हिंडह न करेमि किंचि इच्छा न किंचि वत्तव्वो। तत्थेव वच्छवाली थेरी परमन्नवसुहारा ॥ ५१२ ॥
छम्मासे अणुबद्धं देवो कासीय सो उ उवसग्गं। दट्ठूण वयग्गामे वंदिय वीरं पडिनियत्तो ॥ ५१३ ॥

जाह एत्ताहे अतीह न करेमि उवसग्गं, सामी भणति-भो संगमय! नाहं कस्सइ वत्तव्वो, इच्छाए अतीमि वा णवा, ताहे सामी बितियदिवसे तत्थेव गोउले हिंडंतो वच्छवालथेरीए दोसीणेण पायसेण पडिलाभिओ, ततो पंच दिव्वाणि पाउब्भूयाणि, एगे भणंति-जहा तद्दिवसं खीर न लद्धं ततो बितियदिवसे ऊहारेऊण उवक्खडियं तेण पडिलाभिओ। इओ य सोहम्मे कप्पे सव्वे देवा तद्दिवसं ओविग्गमणा अच्छंति, संगमओ य सोहम्मे गओ, तत्थ सक्को तं दट्ठूण परंमुहो ठिओ, भणइ

१ षड्भिर्मासैर्न चलित एष दीर्घेणापि कालेन न शक्यश्चालयितु, तदा पादयो पतितो भणति-सत्यं यच्छक्रो भणति, सर्वं क्षमयति-भगवन्त! अहं भग्नप्रतिज्ञो यूयं समाप्तप्रतिज्ञा। यातऽधुनाऽटत न करोम्युपसर्गं, स्वामी भणति-भो संगमक! नाहं केनापि वक्तव्य इच्छयाऽटामि वा नवा, तदा स्वामी द्वितीयदिवसे तत्रैव गोकुले हिण्डमान, वत्सपालिकया स्थविरया पर्युषितेन पायसेन प्रतिलाभित, तत पञ्च दिव्यानि प्रादुर्भूतानि, एके भणन्ति-यथा तद्दिवसा क्षैरेयी न लब्धा ततो द्वितीयदिवसे अवधार्योपस्कृत तेन प्रतिलाभित। इतश्च सौधर्मे कल्पे सर्वे देवा तद्दिवस (यावत्) उद्विग्नमनसस्तिष्ठन्ति, संगमकश्च सौधर्मं गत, तत्र शक्रस्तं दृष्ट्वा पराङ्मुख स्थितो भणति * पडिलाभिओ इति पर्यन्त न प्र०

'देवे-भो! सुणह एस दुरप्पा, ण एएण अम्हवि चित्तावरक्खा कया अन्नेसिं वा देवाणं, जओ तित्थकरो आसाइओ, न एएण अम्ह कज्जं, असंभासो निव्विसओ य कीरउ—

चवो चु(ठि)ओ महिड्ढीओ वरमंदरचूलियाइ सिहरंमि। परिवारिउ सुरवहूहिं आउंमि सागरे सेसे ॥ ५१४ ॥

ताहे निच्छूढो सह देवीहिं मंदरचूलियाए जाणएण विमाणेणागम्म ठिओ, सेसा देवा इंदेण वारिता, तस्स सागरोवमठिती सेसा।

आलभियाए हरि विज्जू जिणस्स भत्तिएँ वंदओ एइ। भगवं पियपुच्छा जिय उवसग्गत्ति थेवमवसेसं ॥ ५१५ ॥
हरिसह सेयवियाए सावत्थी खंद पडिम सक्को य। ओयरिउं पडिमाए लोगो आउट्टिओ वंदे ॥ ५१६ ॥

तत्थ सामी आलभियं गओ, तत्थ हरि विज्जुकुमारिंदो एति, ताहे सो वंदित्ता भगवओ महिमं काऊण भणति-भगवं! पियं पुच्छामो, नित्थिण्णा उवसग्गा, बहुं गयं थोवमवसेसं, अचिरेण भे केवलनाणं उप्पज्जिहिति। ततो सेयवियं गओ, तत्थ हरिसहो पियपुच्छओ एइ, ततो सावत्थिं गओ, बाहिं पडिमं ठिओ, तत्थ खंदगपडिमाए महिमं लोगो

१ देवान्-भो शृणुत एष दुरात्मा, नैतेनास्माकमपि चित्तावरक्षा कृता अन्येषां वा देवानां, यतस्तीर्थंकर आशातित, नैतेनास्माकं कार्यम्, असंभाष्यो निर्विषयश्च क्रियतां। तदा निर्व्यूढ सह देवीभि मन्दरचूलिकाया यानकेन विमानेनागत्य स्थित, शेषा देवा इन्द्रेण वारिता, तस्य सागरोपमस्थिति शेषा। तत्र स्वामी आलभिकां गत, तत्र हरिर्विद्युत्कुमारेन्द्र एति, तदा स वन्दित्वा भगवतो महिमानं कृत्वा भणति-भगवन्! प्रियं पृच्छामि निस्तीर्णा उपसर्गाः, बहु गत स्तोकमवशेषम्, अचिरेण भवतां केवलज्ञानमुत्पत्स्यते। तत श्वेताम्बीं गत, तत्र हरिसह प्रियप्रच्छक एति, तत श्रावस्तीं गत, बहि प्रतिमया स्थित, तत्र स्कन्दप्रतिमाया महिमानं लोक

करेइ, सक्को ओहिं पउंजति, जाव पेच्छइ खंदपडिमाए पूयं कीरमाणं, सामिं णाढायंति, उत्तिण्णो, सा य अलंकिया रहं विलग्गिहितित्ति, ताहे सक्को तं पडिमं अणुपविसिऊण भगवंतेण पट्ठिओ, लोगो तुट्ठो भणति–देवो सयमेव विलग्गि-हिति, जाव सामिं गंतूण वंदति, ताहे लोगो आउट्टो, एस देवदेवोत्ति महिमं करेइ जाव अच्छिओ—

कोसंबी चंदसूरोयरणं वाणारसीय सक्को उ। रायगिहे ईसाणो महिला जणओ य धरणो य॥ ५१७॥

ततो सामी कोसंबिं गतो, तत्थ चंदसूरा सविमाणा महिमं करेंति, पियं च पुच्छंति, वाणारसीय सक्को पियं पुच्छइ, रायगिहे ईसाणो पियं पुच्छइ, मिहिलाए जणगो राया पूयं करेति, धरणो य पियपुच्छओ एइ—

वेसालि भूयणंदो चमरुप्पाओ य सुंसुमारपुरे। भोगपुरि सिंदकंदग माहिंदो खत्तिओ कुणति॥ ५१८॥

ततो सामी वेसालिं नगरिं गतो, तत्थेक्कारसमो वासारत्तो, तत्थ भूयाणंदो पियं पुच्छइ नाणं च वागरेइ। ततो सामी

---

१ करोति, शक्रोऽवधिं प्रयुनक्ति, यावत्प्रेक्षते स्कन्दप्रतिमाया पूजां क्रियमाणां, स्वामिनं नाद्रियन्ते, अवतीर्ण, सा चालङ्कृता रथं विलगयिष्यतीति, तदा शक्रस्तां प्रतिमामनुप्रविश्य भगवन्मार्गेण प्रस्थितः, लोकस्तुष्टो भणति–देव स्वयमेव विलगिष्यति, यावत्स्वामिनं गत्वा वन्दते, तदा लोक आवृत्त –एष देवदेव इति महिमानं करोति यावत् स्थितः। तत स्वामी कौशाम्ब्यां गतः, तत्र सूर्याचन्द्रमसौ सविमानौ महिमानं कुरुतः, प्रियं च पृच्छतः, वाराणस्यां शक्रः प्रियं पृच्छति, राजगृहे ईशानः प्रियं पृच्छति, मिथिलायां जनको राजा पूजां करोति, धरणश्च प्रियप्रच्छक एति। ततः स्वामी विशालां नगरीं गतः, तत्रैकादशो वर्षारात्रः, तत्र भूतानन्दः प्रियं पृच्छति, ज्ञानं च व्यागृणाति। ततः स्वामी

सुंसुमारपुरं एइ, तत्थ चमरो उप्पयति, जहा पन्नत्तीए, ततो भोगपुरं एइ, तत्थ माहिंदो नाम खत्तिओ सामिं दट्ठूण सिंदिकंदयेण आहणामित्ति पहावितो, सिंदी–खजूरी—

वारण सणंकुमारे नंदीगामे पिउसहा वंदे। मंढियगामे गोवो वित्तासणयं च देविंदो॥ ५१९॥

एत्थंतरे सणंकुमारो एति, तेण धाडिओ तासिओ य, पियं च पुच्छइ। ततो नंदिगामं गओ, तत्थ णंदी नाम भगवओ पियमित्तो, सो महेइ, ताहे मेंढियं एइ। तत्थ गोवो जहा कुम्मारगामे तहेव सक्केण तासिओ वालरज्जुएण आहणंतो—

कोसंबिए सयाणीओ अभिग्गहो पोसबहुल पाडिवई। चाउम्मास मिगावई विजयसुगुत्तो य नंदा य॥ ५२०॥
तच्चावाई चंपा दहिवाहण वसुमई विजयनामा। धणवह मूला लोयण संपुल दाणे य पव्वज्जा॥ ५२१॥

ततो कोसंबिं गओ, तत्थ सयाणिओ राया, मियावती देवी, तच्चावाती नामा धम्मपाढओ, सुगुत्तो अमच्चो, णंदा से भारिया, सा य समणोवासिया, सा य सड्ढित्ति मियावईए वयंसिदा, तत्थेव नगरे धणावहो सेट्ठी, तस्स मूला भारिया, एवं ते सकम्मसंपउत्ता अच्छंति। तत्थ सामी पोसबहुलपाडिवए इमं एयारूवं अभिग्गहं अभिगिण्हइ चउव्विहं–दव्वओ ४

---

१ सुसुमारपुरमेति, तत्र चमर उत्पतति, यथा प्रज्ञप्तौ, ततो भोगपुरमेति, तत्र माहेन्द्रो नाम क्षत्रियः स्वामिनं दृष्ट्वा सिन्दीकण्टकेन आहन्मीति प्रधावित, सिन्दी खर्जूरी। अत्रान्तरे सनत्कुमार आगच्छति, तेन निर्धाटित त्रासितश्च,प्रियं पृच्छति। ततो नन्दीग्रामं गत, तत्र नन्दीनामा भगवत पितृमित्रम्, स महति। तदा मेण्ढिकामेति, तत्र गोपो यथा कूर्मारग्रामे तथैव शक्रेण त्रासित वालरज्ज्वाऽऽघ्नन्। तत कोशाम्ब्यां गत, तत्र शतानीको राजा, मृगावती देवी, तत्त्ववादी नाम धर्मपाठक, सुगुप्तोऽमात्यो, नन्दा तस्य भार्या, सा च श्रमणोपासिका, सा च श्राद्धीति मृगावत्या वयस्या, तत्रैव नगरे धनावह श्रेष्ठी, तस्य मूला भार्या, एव ते स्वकर्मसम्प्रयुक्तास्तिष्ठन्ति। तत्र स्वामी पौषकृष्णप्रतिपदि इममेतद्रूपमभिग्रहमभिगृह्णाति चतुर्विधं द्रव्यत ४

दव्वओ कुम्मासे सुप्पकोणेणं, खेत्तओ एलुगं विक्खंभइत्ता, कालओ नियत्तेसु भिक्खायरेसु, भावतो जहा रायधूया दास-त्तणं पत्ता नियलबद्धा मुंडियसिरा रोवमाणी अट्ठमभत्तिया, एवं कप्पति सेसं न कप्पति, एवं घेत्तूण कोसंबीए अच्छति, दिवसे दिवसे भिक्खायरियं च फासेइ, किं निमित्तं?, बावीसं परीसहा भिक्खायरियाए उइज्जंति, एवं चत्तारि मासे कोसंबीए हिंडंतस्सत्ति। ताहे नंदाए घरमणुप्पविट्ठो, ताहे सामी णाओ, ताहे परेण आदरेण भिक्खा णीणिया, सामी निग्गओ, सा अधितिं पगया, ताओ दासीओ भणंति–एस देवज्जओ दिवसे दिवसे एत्थ एइ, ताहे ताए नायं–नूणं भगवओ अभिग्गहो कोई, ततो निरायं चेव अद्धिती जाया, सुगुत्तो य अमच्चो आगओ, ताहे सो भणति–किं अधितिं करेसि?, ताए कहियं, भणति–किं अम्ह अमच्चत्तणेणं?, एवच्चिरं कालं सामी भिक्खं न लहइ, किं च ते विन्नाणेणं?, जइ एयं अभिग्गहं न याणसि, तेण सा आसासिया, कल्ले समाणे दिवसे जहा लहइ तहा करेमि। एयाए कहाए वट्टमाणीए विजयानाम पडिहारी

---

१ द्रव्यत कुल्माषा सूर्पकोणेन, क्षेत्रत देहलीं विष्कम्भ्य, कालतो निवृत्तेषु भिक्षाचरेषु, भावतो यथा राजसुता दासत्वं प्राप्ता निगडबद्धा मुण्डितशिरा रुदन्ती अष्टमभक्तिका, एवं कल्पते शेषं न कल्पते, एवं गृहीत्वा कोशाम्ब्यां तिष्ठति, दिवसे दिवसे भिक्षाचर्यां च स्पृशति, किं निमित्तम्?–द्वाविंशति परीषहा भिक्षाचर्यायामुदीर्यन्ते, एव चत्वारो मासा कोशाम्ब्यां हिण्डमानस्येति। तदा नन्दाया गृहमनुप्रविष्ट, तदा स्वामी ज्ञात, तदा परेणादरेण भिक्षा आनीता, स्वामी निर्गत, साऽधृतिं प्रगता, ता दास्यो भणन्ति–एष देवार्यो दिवसे दिवसेऽत्रायाति, तदा तया ज्ञात–नूनं भगवतोऽभिग्रह कश्चित्, ततो नितरां चैवाधृतिर्जाता, सुगुप्तश्चामात्य आगत., तदा स भणति–किमधृतिं करोषि?, तया कथित, भणति–किमस्माकममात्यत्वेन? इयच्चिरं कालं स्वामी भिक्षां न लभते, किं च तव विज्ञानेन?, यद्येनमभिग्रहं न जानासि, तेन साऽऽश्वासिता, कल्ये समाने (सति) दिवसे यथा लभते तथा करोमि। एतस्यां कथायां वर्तमानायां विजया नाम प्रतिहारिणी

मिगावतीए भणिया सा केणइ कारणेणं आगया, सा तं सोऊण उल्लावं मियावतीए साहइ, मियावतीवि तं सोऊण महया दुक्खेणाभिभूया, सा चेडगधूया अतीव अद्धितिं पगया, राया य आगओ पुच्छइ, तीए भण्णइ–किं तुज्झ रज्जेणं? मते वा? एवं सामिस्स एवतियं कालं हिंडतस्स भिक्खाभिग्गहो न नज्जइ, न च जाणसि एत्थ विहरंतं, तेण आसासिया–तहा करेमि जहा कल्ले लभइ, ताहे सुगुत्तं अमच्चं सद्दावेइ, अंबाडेइ य–जहा तुमं आगयं सामिं न याणसि, अज्ज किर चउत्थो मासो हिंडंतस्स, ताहे तच्चावादी सद्दावितो, ताहे सो पुच्छिओ सयाणिएण–तुब्भं धम्मसत्थे सव्वपासंडाण आयारा आगया ते तुमं साह, इमोऽवि भणितो–तुमंपि बुद्धिबलिओ साह, ते भणंति–बहवे अभिग्गहा, ण णज्जंति को अभिप्पाओ?, दव्वजुत्ते खेत्तजुते कालजुत्ते भावजुत्ते सत्त पिंडेसणाओ सत्त पाणेसणाओ, ताहे रण्णा सव्वत्थ संदिट्ठाओ लोगे, तेणवि परलोयकंखिणा कयाओ, सामी आगतो, न य तेहिं सव्वेहिं पयारेहिं गेण्हइ, एवं च ताव एयं। इओ य सयाणिओ चंपं

---

१ मृगावत्या भणिता सा केनचित्कारणेनागता, सा तमुल्लापं श्रुत्वा मृगावत्यै कथयति, मृगावत्यपि तं श्रुत्वा महता दुःखेनाभिभूता, सा चेटकदुहिताऽतीवाधृतिं प्रगता, राजा चागतः पृच्छति, तया भण्यते–किं तव राज्येन मया वा ?, एवं स्वामिन एतावन्तं कालं हिण्डमानस्य भिक्षाभिग्रहो न ज्ञायते, न च जानास्यत्र विहरन्तं, तेनाश्वासिता–तथा करिष्यामि यथा कल्ये लभते, तदा सुगुप्तममात्यं शब्दयति उपलभते च–यथा त्वमागतं स्वामिनं न जानासि, अथ किल चतुर्थो मासो हिण्डमानस्य, तदा तत्त्ववादी शब्दितः, तदा स पृष्टः शतानीकेन–तव धर्मशास्त्रे सर्वपाषण्डानामाचारा आगतास्तान् त्वं कथय, अयमपि भणितः–त्वमपि बुद्धिबली कथय, तौ भणतः–बहवोऽभिग्रहाः, न ज्ञायते कोऽभिप्रायः, द्रव्ययुक्तः क्षेत्रयुक्तः कालयुक्तो भावयुक्तः सप्त पिण्डैषणाः सप्त पानैषणाः, तदा राज्ञा सर्वत्र संदिष्टा लोके, तेनापि परलोककाङ्क्षिणा कृताः, स्वाम्यागतः, न च तैः सर्वैः प्रकारैर्गृह्णाति, एवं च तावदेतत्। इतश्च शतानीकश्चम्पा

पहाविओ, दधिवाहणं गेण्हामि, नावाकडएणं गतो एगाते रत्तीते, अचिंतिया नगरी वेढिया, तत्थ दहिवाहणो पलाओ, रण्णा य जग्गहो घोसिओ, एवं जग्गहे घुट्ठे दहिवाहणस्स रण्णो धारिणी देवी, तीसे धूया वसुमती, सा सह धूयाए एगेण होडिएण गहिया, राया य निग्गओ, सो होडिओ भणति–एसा मे भज्जा, एयं च दारियं विक्किणिस्सं, (ग्रं५५००) सा तेण मणोमाणसिएण दुक्खेण एसा मम धूया ण णज्जइ किं पाविहितित्ति अंतरा चेव कालगया, पच्छा तस्स होडियस्स चिंता जाया–दुट्ठु मे भणियं–महिला ममं होहित्ति, एतं धूयं से ण भणामि, मा एसावि मरिहित्ति, ता मे मोल्लंपि ण होहित्ति ताहे तेण अणुयत्तंतेण आणिया विवणीए उड्डिया, धणावहेण दिट्ठा, अणलंकियलावण्णा अवस्सं रण्णो ईसरस्स वा एसा धूया, मा आवई पावउत्ति, जत्तिगं सो भणइ तत्तिएण मोल्लेण गहिया, वरं तेण समं मम तंमि नगरे आगमणं गमणं च होहितित्ति, णीया णिययघरं, कासि तुमंति पुच्छिया, न साहइ, पच्छा तेण धूयत्ति गहिया, एवं सा ण्हाविया, भूलावि

---

१ प्रधावितः, दधिवाहनं गृह्णामि, नौकटकेन गतः एकया रात्र्या, अचिन्तितता वेष्टिता नगरी, तत्र दधिवाहनो राजा पलायितः, राज्ञा च यद्ग्रहो घोषितः, एवं यद्ग्रहे घुष्टे दधिवाहनस्य राज्ञो धारिणी देवी, तस्याः पुत्री वसुमती, सा सह दुहित्रा एकेन नाविकेन गृहीता, राजा च निर्गतः, स नाविको भणति–एषा मे भार्या, एतां च बालिकां विक्रेष्ये, सा तेन मनोमानसिकेन दुःखेन एषा मम दुहिता न ज्ञायते किं प्राप्स्यतीति इत्यन्तरैव कालगता, पश्चात्तस्य नाविकस्य चिन्ता जाता–दुष्टु मया भणितं–महिला मम भविष्यतीति, एतां दुहितरं तस्या न भणामि, मा एषापि मृतेति, ततो मे मूल्यमपि न भविष्यतीति, तदा तेनानुवर्त्तयता आनीता विपण्यामूर्ध्वीकृता, धनावहेन दृष्टा, अनलङ्कृतलावण्याऽवश्यं राज्ञ ईश्वरस्य वैषा दुहिता, मा आपदं प्रापदिति, यावत्स भणति तावता मूल्येन गृहीता, वरं तेन समं मम तस्मिन्नगरे आगमनं गमनं च भविष्यतीति, नीता निजगृहं, कासि त्वमिति पृष्टा, न कथयति, पश्चात्तेन दुहितेति गृहीता, एवं सा स्नपिता, मूलाऽपि

तेण भणिया–एस तुज्झ धूया, एयं सा तत्थ जहा नियघरं तहा सुहंसुहेण अच्छति, ताएवि सो सदासपरियणो लोगो सीलेणं विणएण य सव्वो अप्पणिज्जओ कओ, ताहे ताणि सव्वाणि भणंति–अहो इमा सीलचंदणत्ति, ताहे से बितियं नामं जायं–चंदणत्ति, एवं वच्चति कालो, ताए य घरणीए अवमाणो जायति, मच्छरिज्जइ य, को जाणति? कयाति एस एयं पडिवज्जेज्जा, ताहे अहं घरस्स अस्सामिणी भविस्सामि, तीसे य वाला अतीव दीहा रमणिज्जा किण्हा य, सो सेट्ठी मज्झण्हे जणविरहिए आगओ, जाव नत्थी कोइ जो पादे सोहेति. ताहे सा पाणियं गहाय निग्गया, तेण वारिया, सा मड्डाए पधाविया, ताहे धोवंतीए वाला बद्धेलया छुट्टा, मा चिक्खिल्ले पडिहिंतित्ति तस्स हत्थे लीलाकट्ठयं, तेण धरिया, बद्धा य, मूला य ओलोयणवरगया पेच्छइ, तीए णायं–विणासियं कज्जं, जइ एयं किहवि परिणेइ तो ममं एस नत्थि, जाव तरुणओ वाही ताव तिगिच्छामित्ति सिट्ठिंमि निग्गए ताए ण्हावियं सद्दावेत्ता बोडाविया, नियलेहिं बद्धा, पिट्टिया

---

१ तेन भणिता–एषा तव दुहिता, एवं सा तत्र यथा निजगृहे तथा सुखसुखेन तिष्ठति, तयापि स सदासपरिजनो लोकः शीलेन विनयेन च सर्व आत्मीयः कृतः, तदा ते सर्वे मनुष्या भणन्ति–अहो इयं शीलचन्दनेति, तदा तस्या द्वितीयं नाम जातं चन्दनेति, एवं व्रजति कालः, तया च गृहिण्या अपमानो जायते, मत्सरायते च, को जानाति? कदाचिदेष एतां प्रतिपद्येत, तदाऽहं गृहस्यास्वामिनी भविष्यामि, तस्याश्च वाला अतीव दीर्घा रमणीयाः कृष्णाश्च, स श्रेष्ठी मध्याह्ने जनविरहिते आगतः, यावन्नास्ति कोऽपि यः पादौ शोधयति, तदा सा पानीयं गृहीत्वा निर्गता, तेन वारिता, सा बलात् प्रधाविता, तदा प्रक्षालयन्त्या वाला बद्धाश्छुटिताः, मा कर्दमे पप्तन् (इति) तस्य हस्ते लीलाकाष्ठं तेन धृता बद्धाश्च, मूला चावलोकनवरगता प्रेक्षते, तया ज्ञातं–विनष्टं कार्यं, यदि एतां कथमपि परिणेष्यति तदा ममैष नास्ति, यावत्तरुणो व्याधिस्तावच्चिकित्सामि इति श्रेष्ठिनि निर्गते तया नापितं शब्दयित्वा मुण्डिता, निगडैर्बद्धा, पिट्टिता

यं, वारिओ णाए परिजणो—जो साहइ वाणियगस्स सो मम नत्थि, ताहे सो पिल्लियओ, सा घरे छोढूणं बाहिरिं कुढंडिया, सो कमेण आगओ पुच्छइ—कहिं चंदणा ?, न कोइवि साहइ भयेण, सो जाणति—नूणं रमति उवरिं वा, एवं रत्तिंपि पुच्छिया, जाणति—सा सुत्ता नूणं, बितियदिवसेऽवि सा न दिट्ठा, ततिय दिवसे घणं पुच्छइ—साहह मा भे मारेह, ताहे थेरदासी एक्का, सा चिंतेइ—किं मे जीविएण ?, सा जीवउ वराई, ताए कहियं—अमुयघरे, तेण उग्घाडिया, छुहाहयं पिच्छित्ता कूरं पमग्गितो, जाव समावत्तीए नत्थि ताहे कुम्मासा दिट्ठा, तीसे ते सुप्पकोणे दाऊण लोहारघरं गओ, जा नियलाणि छिंदावेमि, ताहे सा हत्थिणी जहा कुलं संभरिउमारद्धा एलुगं विक्खंभइत्ता, तेहिं पुरओकएहिं हियियब्भंतरओ रोवति, सामी य अतियओ, ताए चिंतियं—सामिस्स देमि, मम एवं अहम्मफलं, भणति—भगवं ! कप्पइ ?, सामिणा पाणी पसारिओ, चउव्विहोऽवि पुण्णो अभिग्गहो, पंच दिव्वाणि, ते वाला तयवत्था चेव जाया, ताणिऽवि से नियलाणि फुट्टाणि

१ च, वारितोऽनया परिजनः—यः कथयति वणिजः स मम नास्ति, तदा स प्रेरित (भीत), तां गृहे क्षिप्त्वा कोष्ठागारो मुद्रित , स क्रमेणागत पृच्छति—क्व चन्दना ?, न कोऽपि कथयति भयेन, स जानाति नूनं रमते उपरि वा, एवं रात्रावपि पृष्टा, जानाति सा सुप्ता नूनं, द्वितीयदिवसेऽपि सा न दृष्टा, तृतीये दिवसे घनं पृच्छति—कथयत मा यूयं मारयत, तदा स्थविरदास्येका, सा चिन्तयति—किं मम जीवितेन ?, सा जीवतु वराकी, तया कथितम्—अमुकस्मिन् गृहे, तेनोद्घाटिते, क्षुधाहतां प्रेक्ष्य कूरं प्रमार्गितं, यावत्समापत्त्या नास्ति तदा कुल्माषा दृष्टाः, तस्यै तान् सूर्पकोणे दत्त्वा लोहकारगृहं गतो यन्निगडान् छेदयामि, तदा सा हस्तिनी यथा कुलं संस्मर्तुमारब्धा देहलीं विष्कभ्य, तेषु पुरस्कृतेषु हृदयाभ्यन्तरे रोदिति— स्वामी चातिगत , तया चिन्तितं स्वामिने ददामि, ममैतदधर्मफलं, भणति—भगवन् ! कल्पते ?, स्वामिना पाणि प्रसारित , चतुर्विधोऽपि पूर्णोऽभिग्रह , पञ्च दिव्यानि, ते वालास्तदवस्था एव जाता , तस्या निगडे अपि ते स्फुटिते * कुदुग्गिया प्र० + परियण प्र०

सोवण्णियाणि नेउराणि जायाणि, देवेहि य सव्वालंकारा कया, सक्को देवराया आगओ, वसुहारा अद्धतेरसहिरण्णकोडिओ पडियाओ, कोसंबीए य सव्वओ उग्घुट्ठं—केण पुण पुण्णमंतेण अज्ज सामी पडिलाभिओ ?, ताहे राया संतेउरपरियणो आगओ, ताहे तत्थ संपुलो नाम दहिवाहणस्स कंचुइज्जो, सो बंधित्ता आणियओ, तेण सा णाया, ततो सो पादेसु पडिऊण परुण्णो, राया पुच्छइ—का एसा ?, तेण से कहियं—जहेसा दहिवाहणरण्णो दुहिया, मियावती भणइ—मम भगिणीधूयत्ति, अमच्चोऽवि सपत्तीओ आगओ, सामिं वंदइ, सामीवि निग्गओ, ताहे राया तं वसुहारं पगहिओ, सक्केण वारिओ, जस्सेसा देइ तस्साभवइ, सा पुच्छिया भणइ—मम पिउणो, ताहे सेट्ठिणा गहियं । ताहे सक्केण सयाणिओ भणिओ—एसा चरिमसरीरा, एयं संगोवाहि जाव सामिस्स नाणं उप्पज्जइ, एसा पढमसिस्सिणी, ताहे कन्नंतेउरे छूढा, संवड्ढति । छम्मासा तया पंचहि दिवसेहिं ऊणा जद्दिवसं सामिणा भिक्खा लद्धा । सा मूला लोगेणं अंबाडिया हीलिया य ।

१ सौवर्णे नूपुरे जाते, देवैश्च सर्वालङ्कारा कृता, शक्रो देवराज आगत , वसुधाराऽर्धत्रयोदशहिरण्यकोटय पतिता , कौशाम्ब्यां च सर्वत्रोद्घुष्ट, केन पुन पुण्यवताऽद्य स्वामी प्रतिलम्भित ?, तदा राजा सान्त पुरपरिजन आगत , तदा तत्र सम्पुलो नाम दधिवाहनस्य कञ्चुकी, स बद्ध्वाऽऽनीतस्तेन सा ज्ञाता, तत स पदोः पतित्वा प्ररुदित , राजा पृच्छति—कैषा ?, तेन तस्मै कथितं—यथैषा दधिवाहनस्य राज्ञो दुहिता, मृगावती भणति—मम भगिनीदुहितेति, अमात्योऽपि सपत्नीक आगत स्वामिनं वन्दते, स्वाम्यपि निर्गत , तदा राजा तां वसुधारां ग्रहीतुमारब्ध , शक्रेण वारितः, यस्मै एषा ददाति तस्याभवति, सा पृष्टा भणति—मम पितु , तदा श्रेष्ठिना गृहीत । तदा शक्रेण शतानीको भणित —एषा चरमशरीरा एतां सगोपय यावत्स्वामिनो ज्ञानमुत्पद्यते, एषा ( स्वामिन ) प्रथमशिष्या, तदा कन्यान्त पुरे क्षिप्ता संवर्धते । षण्मासास्तदा पञ्चभिर्दिवसैरूना यद्दिवसे स्वामिना भिक्षा लब्धा । सा मूला लोकेन तिरस्कृता हीलिता च ।

तत्तो सुमंगलाए सणंकुमार सुछेत्त एइ माहिंदो । पालग वाइलवणिए अमंगलं अप्पणो असिणा ॥ ५२२ ॥

सामी ततो निग्गंतूण सुमंगलं नाम गामो तहिं गओ, तत्थ सणंकुमारो एइ, वंदति पुच्छति य । ततो भगवं सुच्छित्तं गओ, तत्थ माहिंदो पियं पुच्छओ एइ । ततो सामी पालगं नाम गामं गओ, तत्थ वाइलो नाम वाणिअओ जत्ताए पहाविओ, अमंगलन्तिकाऊण असिं गहाय पहाविओ एयस्स फलउत्ति, तत्थ सिद्धत्थेण सहत्थेण सीसं छिण्णं—

चंपा वासावासं जक्खिंदे साइदत्तपुच्छा य । वागरणदुहपएसण पच्चक्खाणे य दुविहे उ ॥ ५२३ ॥

ततो स्वामी चंपं नगरिं गओ, तत्थ सातिदत्तमाहणस्स अग्गिहोत्तसालाए वसहिं उवगओ, तत्थ चाउम्मासं खमति, तत्थ पुण्णभद्दमाणिभद्दा दुवे जक्खा रत्तिं पज्जुवासंति, चत्तारिवि मासे पूयं करेंति रत्तिं रत्तिं, ताहे सो चिंतेइ—किं जाणति एसतो देवा महंति, ताहे विन्नासणानिमित्तं पुच्छइ—को ह्यात्मा ?, भगवानाह—योऽहमित्य†भिमन्यते, स कीदृशः‡ ?,

१ स्वामी ततो निर्गत्य सुमङ्गलं नाम ग्रामं तत्र गत , तत्र सनत्कुमार आयाति, वन्दते पृच्छति च । ततो भगवान् सुक्षेत्रं गत , तत्र माहेन्द्र प्रियपृच्छक आयाति । तत स्वामी पालकं नाम ग्रामं गत, तत्र वातिलो नाम वणिक् यात्रायै प्रधावित,अमङ्गलमितिकृत्वाऽसिं गृहीत्वा प्रधावित एतस्य फलत्विति तत्र सिद्धार्थेन स्वहस्तेन शीर्षं छिन्नम् । २ तत स्वामी चम्पां नगरीं गत , तत्र स्वातिदत्तब्राह्मणस्य अग्निहोत्रशालायां वसतिमुपागत, तत्र चतुर्मासीं क्षपयति, तत्र पूर्णभद्रमाणिभद्रौ द्वौ यक्षौ रात्रौ पर्युपासाते, चतुरोऽपि मासान् पूजां कुरुतो रात्रौ रात्रौ, तदा स चिन्तयति—किं जानाति एषकः ( यत् ) देवौ महयत , तदा विविदिषानिमित्तं पृच्छति । * सुमगल सणकुमार सुछेत्ताए य एइ माहिंदो प्र०. + अनुपलब्धे.. † स्वसंवेदनसिद्ध ‡ इन्द्रियगोचरातीतत्वात्

सूक्ष्मोऽसौ, किं तत् ? सूक्ष्मम्, यन्न गृह्णीमः, ननु शब्दगन्धानिलाः, नैते, इन्द्रियग्राह्यास्तेन, ग्रहणमात्मा, ननु ग्राहयिता स । किं भंते ! पदेसणयं ? किं पच्चक्खाणं ?, भगवानाह–सादिदत्ता ! दुविहं–पदेसणगं–धम्मियं अधम्मियं च ! पदेसणं नाम उवएसो । पच्चक्खाणेऽवि दुविहे–मूलगुणपच्चक्खाणे उत्तरगुणपच्चक्खाणे य । एएहिं पएहिं तस्स उवगतं । भगवं ततो निग्गओ—

जंभियगामे नाणस्स उप्पया वागरेइ देविंदो । मिंढियगामे चमरो वंदण पिअपुच्छणं कुणइ ॥ ५२४ ॥

जंभियगामं गओ, तत्थ सक्को आगओ, वंदित्ता नट्टविहिं उवदंसित्ता वागरेइ–जहा एत्तिएहिं दिवसेहिं केवलनाणं उप्पज्जिहिति । ततो सामी मिंढियागामं गओ, तत्थ चमरओ वंदओ पियपुच्छओ य एति, वंदित्ता पुच्छित्ता य पडिगतो ।–

छम्माणि गोव कडसल पवेसणं मज्झिमाएँ पावाए । खरओ विज्जो सिद्धत्थ वाणियओ नीहरावेइ ॥ ५२५ ॥

ततो भगवं छम्माणि नाम गामं गओ, तस्स बाहिं पडिमं ठिओ, तत्थ सामीसमीवे गोवो गोणे छड्डेऊण गामे पविट्ठो,

१ किं भदन्त ! प्रदेशनम् ? किं प्रत्याख्यानम् ?, भगवानाह—स्वातिदत्त ! द्विविधं प्रदेशनं—धार्मिकमधार्मिकं च । प्रदेशनं नाम उपदेशः । प्रत्याख्यानमपि द्विविधं–मूलगुणप्रत्याख्यानमुत्तरगुणप्रत्याख्यानं च । एतैः पदैरुपगतं तस्य (ज्ञानीति) । ततो भगवान्निर्गतः । २ जृम्भिकाग्रामं गतः, तत्र शक्र आगतः, वन्दित्वा नाट्यविधिमुपदर्श्य व्याकृणोति–यथैयद्भिर्दिवसैः केवलज्ञानमुत्पत्स्यते । ततः स्वामी मिण्ढिकाग्रामं गतः, तत्र चमरो वन्दकः प्रियप्रच्छकश्चायाति, वन्दित्वा पृष्ट्वा च प्रतिगतः । ३ ततो भगवान् षण्मार्णी नाम ग्रामं गतः, तस्माद्बहिः प्रतिमया स्थितः, तत्र स्वामिसमीपे गोपो बलीवर्दौ त्यक्त्वा ग्रामं प्रविष्टः,
* इन्द्रियाणां सूक्ष्मो न विषयः + इन्द्रियातिक्रान्तार्थादृष्टे. † यन्न ज्ञायते ‡ चक्षुषा न दृश्यन्ते इति ¶ अन्येन्द्रियैरुपलब्धे. § ग्राहकः इन्द्रियापरपर्याय § इन्द्रियाणां पदार्थग्राहक.

दोहणाणि काऊण निग्गओ, ते य गोणा अडविं पविट्ठा चरियव्वगस्स कज्जे, ताहे सो आगतो पुच्छति–देवज्जग ! कहिं ते बइल्ला ?, भगवं मोणेण अच्छइ, ताहे सो परिकुविओ भगवतो कण्णेसु कडसलागाओ छुहति, एगा इमेण कण्णेण एगा इमेण, जाव दोन्निवि मिलियाओ ताहे मूले भग्गाओ, मा कोइ उक्खणिहितित्ति । केइ भणंति–एक्का चेव जाव इयरेण कण्णेण निग्गता ताहे भग्गा ।–कण्णेसु तउं तत्तं गोवस्स कयं तिविट्ठुणा रण्णा । कण्णेसु वद्धमाणस्स तेण छूढा कडसलाया ॥ १ ॥ भगवतो तद्दारवेयणीयं कम्मं उदिण्णं । ततो सामी मज्झिमं गतो, तत्थ सिद्धत्थो नाम वाणियगो, तस्स घरं भगवं अतीयओ, तस्स य मित्तो खरगो नाम वेज्जो, ते दोऽवि सिद्धत्थस्स घरे अच्छंति, सामी भिक्खस्स पविट्ठो, वाणियओ वंदति थुणति य, वेज्जो तित्थगरं पासिऊण भणति–अहो भगवं सव्वलक्खणसंपुण्णो किं पुण ससल्लो, ततो सो वाणियओ संभंतो भणति–पलोएहि कहिं सल्लो ?, तेण पलोएतेण दिट्ठो कण्णेसु, तेण वाणियएण भण्णइ–णीणेहि एयं

१ दोहनानि कृत्वा निर्गतः, तौ च बलीवर्दौ अटवीं प्रविष्टौ चरणस्य कार्याय, तदा स आगतः पृच्छति–देवार्यक ! क्व तौ बलीवर्दौ ?, भगवान् मौनेन तिष्ठति, तदा स परिकुपितः भगवतः कर्णयोः कटशलाके क्षिपति, एकाऽनेन कर्णेन एकाऽनेन, यावद्द्वे अपि मीलिते तदा मूले भग्ने, मा कश्चिदुत्खनीरिति । केचिद्भणन्ति–एकैव यावदितरेण कर्णेन निर्गता तदा भग्ना ।—कर्णयोः तप्तं त्रपु गोपस्य कृतं त्रिपृष्ठेन राज्ञा । कर्णयोर्वर्धमानस्य तेन क्षिप्ते कटशलाकिके ॥१॥ भगवतस्तद्द्वारा वेदनीयं कर्मोदीर्णं । ततः स्वामी मध्यमां गतः, तत्र सिद्धार्थो नाम वणिक्, तस्य गृहे भगवानतिगतः, तस्य च मित्रं खरको नाम वैद्यः, तौ द्वावपि सिद्धार्थगृहे तिष्ठतः, स्वामी भिक्षार्थं प्रविष्टः, वणिक् वन्दते स्तौति च, वैद्यस्तीर्थंकरं दृष्ट्वा भणति–अहो भगवान् सर्वलक्षणसंपूर्णः किं पुनः सशल्यः, ततः स वणिक् सम्भ्रान्तो भणति–प्रलोकय क्व शल्यं ?, तेन प्रलोकयता दृष्टं कर्णयोः, तेन वणिजा भण्यते–व्यपनय एतत्

महातवस्सिस्स पुण्णं होहितित्ति, तववि मज्झवि, भणति–निप्पडिकम्मो भगवं नेच्छति, ताहे पडियराविंतो जाव दिट्ठो उज्जाणे पडिमं ठिओ, ते ओसहाणि गहाय गया, तत्थ भगवं तेल्लदोणीए निवज्जाविओ मक्खिओ य, पच्छा बहुएहिं मणूसेहिं जंतिओ अक्कंतो य, पच्छा संडासतेण गहाय कड्ढियाओ, तत्थ सरुहिराउ सलागाओ अंछियाओ, तासु य अंछिज्जतिसु भगवता आरसियं, ते य मणूसे उप्पाडित्ता उट्ठिओ, महाभेरवं उज्जाणं तत्थ जायं, देवकुलं च, पच्छा संरोहणं ओसहं दिन्नं, जेण ताहे चेव पउणो, ताहे वंदित्ता खामेत्ता य गया । सव्वेसु किर उवसग्गेसु कयरे दुव्विसहा ?, उच्यते, कडपूयणासीयं कालचक्कं एयं चेव सल्लं निक्कड्ढिज्जंतं, अहवा–जहण्णगाण उवरि कडपूयणासीयं मज्झिमगाण उवरि कालचक्कं उक्कोसगाण उवरिं सल्लुद्धरणं । एवं गोवेणारद्धा उवसग्गा गोवेण चेव निट्ठिता । गोवो अहो सत्तमिं पुढविं गओ । खरतो सिद्धत्थो य देवलोगं तिव्वमवि उदीरयंता सुद्धभावा । गता उपसर्गाः ।—

१ महानपस्विनः पुण्यं भविष्यतीति, तवापि ममापि, भणति–निष्प्रतिकर्मा भगवान्नेच्छति, तदा प्रतिचारितो यावद्दृष्ट उद्याने प्रतिमया स्थितः, तावौषधानि गृहीत्वा गतौ, तत्र भगवान् तैलद्रोण्यां निमज्जितः म्रक्षितश्च, पश्चाद् बहुभिर्मनुष्यैर्यन्त्रितः आक्रान्तश्च, पश्चात्संदंशकेन गृहीत्वा कर्षिते, तत्र सरुधिरे शलाके आकृष्टे, तयोश्चाकृष्यमाणयोर्भगवताऽऽरसितं, तांश्च मनुष्यानुत्पाट्योत्थितः, महाभैरवमुद्यानं तत्र जातं, देवकुलं च, पश्चात्संरोहणमौषधं दत्तं, येन तदैव प्रगुणः, तदा वन्दित्वा क्षमयित्वा च गतौ । सर्वेषु किलोपसर्गेषु कतरे दुर्विषहाः ?, उच्यते, कटपूतनाशीतं कालचक्रमेतदेव शल्यं निकृष्यमाणम्, अथवा जघन्यानामुपरि कटपूतनाशीतं मध्यमानामुपरि कालचक्रमुत्कृष्टानामुपरि शल्योद्धरणम् । एवं गोपेनारब्धा उपसर्गा गोपेनैव निष्ठिताः । गोपोऽधः सप्तमीं पृथिवीं गतः । खरकः सिद्धार्थश्च देवलोकं गतौ तीव्रामपि ( वेदनां ) उदीरयन्तौ शुद्धभावौ ।

जंभिय बहि उज्जुबालिय तीर वियावत्त सामसालअहे । छट्ठेणुक्कुडुयस्स उ उप्पण्णं केवलं णाणं ॥ ५२६ ॥

तेतो सामी जंभियगामं गओ, तस्स बहिया वियावत्तस्स चेइयस्स अदूरसामंते, वियावत्तं नाम अव्यक्तमित्यर्थः, भिन्नपडियं अपागडं, उज्जुवालियाए नदीए तीरंमि उत्तरिल्ले कूले सामागस्स गाहावतिस्स कट्ठकरणंसि, कट्ठकरणं नाम छेत्तं, सालपायवस्स अहे उक्कुडुगणिसेज्जाए गोदोहियाए आयावणाते आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं वइसाह-सुद्धदसमीए हत्थुत्तराहिं नक्खत्तेणं जोगमुवागतेणं पातीणगामिणीए छायाए अभिनिविट्टाए पोरुसीए पमाणपत्ताए झाणं-तरियाए वट्टमाणस्स एकत्तवियक्कं वोलीणस्स सुहुमकिरियं अणियट्टिं अप्पत्तस्स केवलवरणाणदंसणं समुप्पण्णं । तपसा केवलमुत्पन्नमिति कृत्वा यद्भगवता तप आसेवितं तदभिधित्सुराह—

जो य तवो अणुचिण्णो वीरवरेणं महाणुभावेणं । छउमत्थकालियाए अहक्कमं कित्तइस्सामि ॥ ५२७ ॥

व्याख्या—यच्च तप आचरितं वीरवरेण महानुभावेन छद्मस्थकाले यत्तदोर्नित्यसम्बन्धात् तद्यथाक्रमं—येन क्रमेणानु-चरितं भगवता तथा कीर्तयिष्यामीति गाथार्थः ॥ ५२७ ॥ तच्चेदम्—

---

१ ततः स्वामी जृम्भिकाग्रामं गतः, तस्माद्बहिः वैयावृत्तस्य चैत्यस्यादूरसामन्ते, भिन्नपतितमप्रकटम्, ऋजुवालुकाया नद्यास्तीरे औत्तरे कूले श्यामाकस्य गृहपतेः क्षेत्रे ( काष्ठकरणं नाम क्षेत्रम् ), शालपादपस्याधः उत्कटुकया निषद्यया गोदोहिकयाऽऽतापनयाऽऽतापयतः षष्ठेन भक्तेनापानकेन वैशाखशुक्लदशम्यां हस्तोत्तराभिर्नक्षत्रेण योगमुपागते प्राचीनगामिन्यां छायायामभिनिर्वृत्तायां पौरुष्यां प्रमाणप्राप्तायां ध्यानान्तरिकायां वर्तमानस्य एकत्ववितर्कं व्यतिक्रान्तस्य सूक्ष्मक्रियमनिवृत्ति अप्राप्तस्य केवलवरज्ञानदर्शनं समुत्पन्नम् ।

नव किर चाउम्मासे छक्किर दोमासिए उवासीय । बारस य मासियाइं बावत्तरि अद्धमासाइं ॥ ५२८ ॥

व्याख्या—नव किल चातुर्मासिकानि तथा षट् किल द्विमासिकानि उपोषितवान्, किलशब्दः परोक्षासागमवादसं-सूचकः, द्वादश च मासिकानि द्विसप्तत्यर्द्धमासिकान्युपोषितवानिति क्रियायोग इति गाथार्थः ॥ ५२८ ॥

एगं किर छम्मासं दो किर तेमासिए उवासीय । अड्ढाइज्जाइ दुवे दो चेव दिवड्ढमासाइं ॥ ५२९ ॥

व्याख्या—एकं किल षण्मासं द्वे किल त्रैमासिके उपोषितवान्, तथा 'अड्ढाइज्जाइ दुवे' त्ति अर्द्धतृतीयमासनिष्पन्नं तपः-क्षपणं वाऽर्धतृतीयं, तेऽर्धतृतीये द्वे, चशब्दः क्रियानुकर्षणार्थः, द्वे एव च 'दिवड्ढमासाइं' ति सार्धमासे तपसी क्षपणे वा,क्रियायोगोऽनुवर्त्तत एवेति गाथार्थः ॥ ५२९ ॥

भद्दं च महाभद्दं पडिमं तत्तो य सव्वओभद्दं । दो चत्तारि दसेव य दिवसे ठासीय अणुबद्धं ॥ ५३० ॥

व्याख्या—भद्रां च महाभद्रां प्रतिमां ततश्च सर्वतोभद्रां स्थितवान, अनुवद्धमिति योगः, आसामेवानुपूर्व्या दिवस-प्रमाणमाह—द्वौ चतुरः दशैव च दिवसान् स्थितवान्, अनुवद्धं–सन्ततमेवेति गाथार्थः ॥ ५३० ॥

गोयरमभिग्गहजुयं खमणं छम्मासियं च कासीय । पंचदिवसेहि ऊणं अव्वहिओ वच्छनयरीए ॥ ५३१ ॥

व्याख्या—गोचरेऽभिग्रहो गोचराभिग्रहस्तेन युतं क्षपणं षण्मासिकं च कृतवान् पञ्चभिर्दिवसैर्न्यूनम्, 'अव्यथितः अपीडितो 'वत्सानगर्यां' कौशाम्ब्यामिति गाथार्थः ॥ ५३१ ॥

दस दो य किर महप्पा ठाइ मुणी एगराइयं पडिमं । अट्ठमभत्तेण जई एक्केक्कं चरमराईयं ॥ ५३२ ॥

व्याख्या—दश द्वे च सङ्ख्यया द्वादशेत्यर्थः, किल महात्मा 'ठासि मुणि' त्ति स्थितवान् मुनिः, एकरात्रिकीं प्रतिमां पाठान्तरं वा 'एकराइए पडिमे'त्ति एकरात्रिकीः प्रतिमाः, कथमित्याह 'अष्टमभक्तेन' त्रिरात्रोपवासेनेति हृदयम्, 'यतिः' प्रयत्नवान्, एकैकां 'चरमरात्रिकीं' चरमरजनीनिष्पन्नामिति गाथार्थः ॥ ५३२ ॥

दो चेव य छट्ठसए अउणातीसे उवासिया भगवं । न कयाइ निच्चभत्तं चउत्थभत्तं च से आसि ॥ ५३३ ॥

व्याख्या—द्वे एव च षष्ठशते एकोनत्रिंशदधिके उपोषितो भगवान्, एवं न कदाचिन्नित्यभक्तं चतुर्थभक्तं वा 'से' तस्याऽऽसीदिति गाथार्थः ॥ ५३३ ॥

बारस वासे अहिए छट्ठं भत्तं जहण्णयं आसि । सव्वं च तवोकम्मं अपाणयं आसि वीरस्स ॥ ५३४ ॥

व्याख्या—द्वादश वर्षाण्यधिकानि भगवतश्छद्मस्थस्य सतः 'षष्ठं भक्तं' द्विरात्रोपवासलक्षणं जघन्यकमासीत्, तथा सर्वं च तपःकर्म अपानकमासीद्वीरस्य, एतदुक्तं भवति—क्षीरादिद्रवाहारभोजनकाललभ्यव्यतिरेकेण पानकपरिभोगो नाऽऽसेवित इति गाथार्थः ॥ ५३४ ॥ पारणककालमानप्रतिपादनायाह—

तिण्णि सए दिवसाणं अउणावण्णं तु पारणाकालो । उक्कुडुयनिसेज्जाणं ठियपडिमाणं सए बहुए ॥ ५३५ ॥

व्याख्या—त्रीणि शतानि दिवसानामेकोनपञ्चाशदधिकानि तु पारणकालो भगवत इति, तथा 'उत्कुटुकनिष-द्यानां' स्थितप्रतिमानां शतानि बहूनीति गाथार्थः ॥ ५३५ ॥

पव्वज्जाए पढमं दिवसं एत्थं तु पक्खिवित्ता णं । संकलियंमि उ संते जं लद्धं तं निसामेह ॥ ५३६ ॥

व्याख्या—प्रव्रज्यायाः सम्बन्धिभूतं दिवसं प्रथमम् 'एत्थं तु' अत्रैवोक्तलक्षणे दिवसगणे प्रक्षिप्य संकलिते तु सति यल्लब्धं तत् 'निशामयत' शृणुतेति गाथार्थः ॥ ५३६ ॥

**बारस चेव य वासा मासा छच्चेव अद्धमासो य। वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ ५३७ ॥**

व्याख्या—द्वादश चैव वर्षाणि मासाः षडेवार्धमासश्च वीरवरस्य भगवतः एष छद्मस्थपर्याय इति गाथार्थः ॥ ५३७ ॥

**एवं तवोगुणरओ अणुपुव्वेणं मुणी विहरमाणो। घोरं परीसहचमुं अहियासित्ता महावीरो ॥ ५३८ ॥**

व्याख्या—'एवम्' उक्तेन प्रकारेण तपोगुणेषु रतः–तपोगुणरतः 'अनुपूर्वेण' क्रमेण मन्यते जगतस्त्रिकालावस्थामिति मुनिः विहरन् 'घोरां' रौद्रां 'परीषहचमूं' परीषहसेनामधिसह्य महावीर इति गाथार्थः ॥ ५३८ ॥

**उप्पण्णंमि अणंते नट्ठंमि य छाउमत्थिए नाणे। राईए संपत्तो महसेणवणंमि उज्जाणे ॥ ५३९ ॥**

व्याख्या—'उत्पन्ने' प्रादुर्भूते कस्मिन् ?–'अनन्ते' ज्ञेयानन्तत्वात् अशेषज्ञेयविषयत्वाच्च केवलमनन्तं, नष्टे च छाद्मस्थिके ज्ञाने, रात्र्यां संप्राप्तो महसेनवनमुद्यानं, किमिति ?–भगवतो ज्ञानरत्नोत्पत्तिसमनन्तरमेव देवाः चतुर्विधा अप्यागता आसन्, तत्र च प्रव्रज्याप्रतिपत्ता न कश्चिद्विद्यत इति भगवान् विज्ञाय विशिष्टधर्मकथनाय न प्रवृत्तवान्, ततो द्वादशसु योजनेषु मध्यमा नाम नगरी, तत्र सोमिलार्यो नाम ब्राह्मणः, स यज्ञं यष्टुमुद्यतः, तत्र चैकादशोपाध्यायाः खल्वागता इति, ते च चरमशरीराः, ततश्च तान् विज्ञाय ज्ञानोत्पत्तिस्थाने मुहूर्त्तमात्रं देवपूजां जीतमितिकृत्वा अनुभूय देशनामात्रं कृत्वा असंख्येयाभिर्देवकोटीभिः परिवृतो देवोद्योतेनाशेषं पन्थानमुद्योतयन् देवपरिकल्पितेषु पद्मेषु चरणन्यासं कुर्वन् मध्यमानगर्यां महसेनवनोद्यानं संप्राप्त इति गाथार्थः ॥ ५३९ ॥

**अमरनररायमहिओ पत्तो धम्मवरचक्कवट्टित्तं। बीयंपि समोसरणं पावाए मज्झिमाए उ ॥ ५४० ॥**

व्याख्या—स एव भगवान् अमराश्च नराश्च अमरनराः तेषां राजानः तैर्महितः–पूजितः प्राप्तः, किमित्याह—धर्म्मश्चासौ वरश्च धर्मवरः तस्य चक्रवर्त्तित्वं, तत्प्रभुत्वमित्यर्थः। पुनर्द्वितीयं समवसरणम्, अपिशब्दः पुनःशब्दार्थे द्रष्टव्यः, पापायां मध्यमायां, प्राप्त इत्यनुवर्त्तते, ज्ञानोत्पत्तिस्थानकृतपूजापेक्षया चास्य द्वितीयता इति गाथार्थः ॥ ५४० ॥

**तत्थ किल सोमिलज्जोत्ति माहणो तस्स दिक्खकालंमि। पउरा जणजाणवया समागया जन्नवाडंमि ॥ ५४१ ॥**

व्याख्या—'तत्र' पापायां मध्यमायां, किलशब्दः पूर्ववत्, सोमिलार्य इति ब्राह्मणः, तस्य 'दीक्षाकाले' यागकाल इत्यर्थः, 'पौराः' विशिष्टनगरवासिलोकसमुदायः 'जनाः' सामान्यलोकाः जनपदेषु भवा जानपदाः, विषयलोका इत्यर्थः, समागता यज्ञपाट इति गाथार्थः ॥ ५४१ ॥ अत्रान्तरे—

**एगंते य विवित्ते उत्तरपासंमि जन्नवाडस्स। तो देवदाणविंदा करेंति महिमं जिणिंदस्स ॥ ५४२ ॥**

व्याख्या—एकान्ते च विविक्ते उत्तरपार्श्वे यज्ञपाटकस्य ततो देवदानवेन्द्राः कुर्वन्ति महिमां जिनेन्द्रस्य, पाठान्तरम् वा 'कासी महिमं जिणिंदस्स' कृतवन्त इति गाथार्थः ॥ ५४२ ॥ अमुमेवार्थं किञ्चिद्विशेषयुक्तं भाष्यकारः प्रतिपादयन्नाह—

**भवणवइवाणमंतरजोइसवासी विमाणवासी य।**
**सव्विड्ढिए सपरिसा कासी नाणुप्पयामहिमं ॥ ११५ ॥ ( भाष्यम् )**

व्याख्या—भवनपतिव्यन्तरज्योतिर्वासिनो विमानवासिनश्च सर्वर्द्ध्या हेतुभूतया सपरिषदः कृतवन्तः ज्ञानोत्पत्तिमहिमाम् इति गाथार्थः ॥ साम्प्रतं समवसरणवक्तव्यतां प्रपञ्चतः प्रतिपादयन्नेतां द्वारगाथामाह—

**समोसरणे केवइया रूवं पुच्छ वागरण सोयपरिणामे।**
**दाणं च देवमल्ले मल्लाणयणे उवरि तित्थं ॥ ५४३ ॥ दारगाहा ॥**

व्याख्या—'समोसरणे'त्ति समवसरणविषयो विधिर्वक्तव्यः, ये देवाः यत् प्राकारादि यद्विधं यथा कुर्वन्तीत्यर्थः। 'केवइय'त्ति कियन्ति सामायिकानि भगवति कथयति मनुष्यादयः प्रतिपद्यन्ते ?, कियतो वा भूभागादपूर्वे समवसरणेऽदृष्टपूर्वेण वा साधुना आगन्तव्यमिति। 'रूव'त्ति भगवतो रूपं व्यावर्णनीयं, 'पुच्छ'त्ति किमुत्कृष्टरूपतया भगवतः प्रयोजनमिति पृच्छा कार्योत्तरं च वक्तव्यं, कियन्तो वा युगपदेव हृद्गतं संशयं पृच्छन्तीति, 'वागरण'त्ति व्याकरणं भगवतो वक्तव्यं, यथा युगपदेव सङ्ख्यातीतानामपि पृच्छतां व्याकरोतीति, 'पुच्छावागरणं' ति एकं वा द्वारं, पृच्छाया व्याकरणं पृच्छाव्याकरणमित्येतद्वक्तव्यं, 'सोयपरिणामे'त्ति श्रोतृषु परिणामः श्रोतृपरिणामः, स च वक्तव्यः, यथा—सर्वश्रोतॄणां भागवती वाक् स्वभाषया परिणमत इति। 'दाणं च'त्ति वृत्तिदानं प्रीतिदानं च कियत् प्रयच्छन्ति चक्रवर्त्यादयः तीर्थकरप्रवृत्तिकथकेभ्य इति वक्तव्यं। 'देवमल्ले'त्ति गन्धप्रक्षेपात् देवानां सम्बन्धि माल्यं देवमाल्यं—बल्यादि कः करोति कियत्परिमाणं चेत्यादि। 'मल्लाणयणे'त्ति माल्यानयने

यो विधिरसौ वक्तव्यः, 'उवरि तित्थं'ति उपरीति पौरुष्यामतिक्रान्तायां तीर्थमिति-गणधरो देशनां करोतीति गाथासमुदायार्थः। अवयवार्थं तु प्रतिद्वारं वक्ष्यामः। इयं च गाथा केषुचित्पुस्तकेषु अन्यत्रापि दृश्यते, इह पुनर्युज्यते, द्वारनियमतोऽसंमोहेन समवसरणवक्तव्यताप्रतीतिनिबन्धनत्वादिति ॥ ५४३ ॥ आह-इदं समवसरणं किं यत्रैव भगवान् धर्ममाचष्टे तत्रैव नियमतो भवत्युत नेत्याशङ्कापनोदमुखेन प्रथमद्वारावयवार्थं विवृण्वन्नाह—

जत्थ अपुव्वोसरणं जत्थ व देवो महिड्ढिओ एइ । वाउदयपुप्फवद्दलपागारतियं च अभिओगा ॥ ५४४ ॥

व्याख्या—यत्र क्षेत्रे अपूर्वं समवसरणं भवति, अवृत्तपूर्वमित्यर्थः, तथा यत्र वा भूतसमवसरणे क्षेत्रे देवो महर्द्धिकः 'एति' आगच्छति, तत्र किमित्याह—वातं रेण्वाद्यपनोदाय उदकवर्दलं भाविरेणुसंतापोपशान्तये तथा पुष्पवर्दलं क्षितिविभूषायै, वर्दलशब्द उदकपुष्पयोः प्रत्येकमभिसंबध्यते,तथा प्राकारत्रितयं च सर्वमेतदभियोगमर्हन्तीत्याभियोग्याः-देवाः, कुर्वन्तीति वाक्यशेषः, अन्यत्र त्वनियम इति गाथार्थः॥५४४॥ एवं तावत् सामान्येन समवसरणकरणविधिरुक्तः, साम्प्रतं विशेषेण प्रतिपादयन्नाह—

मणिकणगरयणचित्तं भूमीभागं समंतओ सुरभिं । आजोअणंतरेणं करेंति देवा विचित्तं तु ॥ ५४५ ॥

व्याख्या—मणयः-चन्द्रकान्तादयः कनकं-देवकाञ्चनं रत्नानि-इन्द्रनीलादीनि, अथवा स्थलसमुद्भवा मणयः जलसमुद्भवानि रत्नानि, तैश्चित्रं, भूभागं 'समन्ततः' सर्वासु दिक्षु 'सुरभिं' सुगन्धिगन्धयुक्तं, किम्?-कुर्वन्ति देवा विचित्रं तु, किंपरिमाणमित्याह-'आयोजनान्तरतो' योजनपरिमाणमित्यर्थः, पुनर्विचित्रग्रहणं वैचित्र्यनानात्वख्यापनार्थम्, अथवा कुर्वन्ति देवा विचित्रं तु, किंभूतम्?-मणिकनकरत्नविचित्रमिति गाथार्थः ॥ ५४५ ॥

वेंटट्ठाइं सुरभिं जलथलयं दिव्वकुसुमणीहारिं । पइरंति समन्तेणं दसद्धवण्णं कुसुमवासं ॥ ५४६ ॥

व्याख्या—वृन्तस्थायि सुरभि जलस्थलजं दिव्यकुसुमनिर्हारि प्रकिरन्ति समन्ततः दशार्द्धवर्णं कुसुमवर्षं, भावार्थः सुगमो, नवरं निर्हारि-प्रबलो गन्धप्रसर इति गाथार्थः ॥ ५४६ ॥

मणिकणगरयणचित्ते चउद्दिसिं तोरणे विउव्वंति । सच्छत्तसालभंजियमयरद्धयचिंधसंठाणे ॥ ५४७ ॥

व्याख्या—मणिकनकरत्नचित्राणि 'चउद्दिसि'त्ति चतसृष्वपि दिक्षु तोरणानि विकुर्वन्ति, किंविशिष्टान्यत आह-छत्रं-प्रतीतं सालभञ्जिकाः-स्तम्भपुत्तलिकाः 'मकर'त्ति मकरमुखोपलक्षणं ध्वजाः प्रतीताः चिह्नानि-स्वस्तिकादीनि संस्थानं-तद्रचनाविशेष एव, सच्छोभनानि छत्रसालभञ्जिकामकरध्वजचिह्नसंस्थानानि येषु तानि तथोच्यन्ते, एतानि व्यन्तरदेवाः कुर्वन्तीति गाथार्थः ॥ ५४७ ॥

तिन्नि य पागारवरे रयणविचित्ते तहिं सुरगणिंदा । मणिकंचणकविसीसगविभूसिए ते विउव्वेंति ॥ ५४८ ॥

व्याख्या—त्रींश्च प्राकारवरान् रत्नविचित्रान् तत्र सुरगणेन्द्रा मणिकाञ्चनकपिशीर्षकविभूषितांस्ते विकुर्वन्तीति, भावार्थः स्पष्टः, उत्तरगाथायां वा व्याख्यास्यति ॥ ५४८ ॥ सा चेयम्—

अब्भंतर मज्झ बहिं विमाणजोइभवणाहिवकया उ । पागारा तिण्णि भवे रयणे कणगे य रयए य ॥५४९॥

व्याख्या—अभ्यन्तरे मध्ये च वहिर्विमानज्योतिर्भवनाधिपकृतास्तु आनुपूर्व्या प्राकारास्त्रयो भवन्ति, 'रयणे कणगे य रयए य'त्ति रत्नेषु भवो रात्नः रत्नमय इत्यर्थः, तं विमानाधिपतयः कुर्वन्ति, कनके भवः कानकः तं ज्योतिर्वासिनः कुर्वन्ति, राजतो-रूप्यमयश्च तं भवनपतयः कुर्वन्ति इति गाथार्थः ॥ ५४९ ॥

मणिरयणहेमयाविय कविसीसा सव्वरयणिया दारा । सव्वरयणामय च्चिय पडागधयतोरणविचित्ता ॥५५०॥

व्याख्या—मणिरत्नहेममयान्यपि च कपिशीर्षकाणि, तत्र पञ्चवर्णमणिमयानि प्रथमप्राकारे वैमानिकाः, नानारत्नमयानि द्वितीये ज्योतिष्काः, हेममयानि तृतीये भवनपतय इति, तथा सर्वरत्नमयानि द्वाराणि त एव कुर्वन्ति, तथा सर्वरत्नमयान्येव मूलदलतः पताकाध्वजप्रधानानि तोरणानि विचित्राणि कनकचन्द्रस्वस्तिकादिभिः, अत एव प्रागुक्तं मणिकनकरत्नविचित्रत्वमेतेषामविरुद्धमिति गाथार्थः ॥ ५५० ॥

तत्तो य समंतेणं कालागरुकुंदुरुक्कमीसेणं । गंधेण मणहरेणं धूवघडीओ विउव्वेंति ॥ ५५१ ॥

व्याख्या—ततश्च समन्ततः कृष्णागरुकुन्दुरुक्कमिश्रेण गन्धेन मनोहारिणा युक्ताः, किम्?-धूपघटिका विकुर्वन्ति त्रिदशा एवेति गाथार्थः ॥ ५५१ ॥

उक्कुट्ठिसीहणायं कलयलसद्देण सव्वओ सव्वं । तित्थगरपायमूले करेंति देवा णिवयमाणा ॥ ५५२ ॥

व्याख्या—तत्रोत्कृष्टिसिंहनादं तीर्थकरपादमूले कुर्वन्ति देवा निपतमानाः, उत्कृष्टिः-हर्षविशेषप्रेरितो ध्वनिविशेषः, किंविशिष्टम्?-कलकलशब्देन 'सर्वतः' सर्वासु दिक्षु युक्तं 'सर्वम्' अशेषमिति गाथार्थः ॥ ५५२ ॥

**चेइदुमपेढछंदय आसणछत्तं च चामराओ य। जं चऽण्णं करणिज्जं करेंति तं वाणमंतरिया ॥ ५५३ ॥**

व्याख्या—चैत्यद्रुमम्–अशोकवृक्षं भगवतः प्रमाणात् द्वादशगुणं तथा पीठं तदधो रत्नमयं तस्योपरि देवच्छन्दकं तन्मध्ये सिंहासनं तदुपरि छत्रातिच्छत्रं च, चः समुच्चये, चामरे च यक्षहस्तगते, चशब्दात् पद्मसंस्थितं धर्मचक्रं च, यच्चान्यद्वातोदकादि 'करणीयं' कर्त्तव्यं कुर्वन्ति तद् व्यन्तरा देवा इति गाथार्थः ॥ ५५३ ॥ आह—किं यत्रतसमवसरणं भवति तत्र तत्रायमित्थं नियोग उत नेति, अत्रोच्यते—

**साहारणओसरणे एवं जत्थिड्ढिमं तु ओसरइ। एक्कु चिय तं सव्वं करेइ भयणा उ इयरेसिं ॥ ५५४ ॥**

व्याख्या—साधारणसमवसरणे एवं साधारणं–सामान्यं यत्र देवेन्द्रा आगच्छन्ति तत्रैवं नियोगः, 'जत्थिड्ढिमं तु ओसरइ'त्ति यत्र तु ऋद्धिमान् समवसरति कश्चिदिन्द्रसामानिकादिः तत्रैक एव तत्प्राकारादि सर्व करोति, अत एव च मूलटीकाकृताऽभ्यधायि–"असोगपायवं जिणउच्चत्ताओ बारसगुणं सक्को विउव्वइ" इत्यादि, 'भयणा उ इतरेसिं' ति यदीन्द्रा नागच्छन्ति ततो भवनवास्यादयः कुर्वन्ति वा न वा समवसरणमित्येवं भजनेतरेषामिति गाथार्थः ॥ ५५४ ॥

**सूरोदय पच्छिमाए ओगाहन्तीएँ पुव्वओऽईइ। दोहिँ पउमेहिँ पाया मग्गेण य होइ सत्तऽन्ने ॥ ५५५ ॥**

व्याख्या—एवं देवैर्निष्पादिते समवसरणे सूर्योदये–प्रथमायां पौरुष्याम्, अन्यदा पश्चिमायां 'ओगाहंतीए'त्ति अवगाहन्त्याम्–आगच्छन्त्यामित्यर्थः, 'पुव्वओऽतीती'ति पूर्वद्वारेण 'अतीति'त्ति आगच्छति प्रविशतीत्यर्थः। कथमित्याह–द्वयोः 'पद्मयोः' सहस्रपत्रयोः देवपरिकल्पितयोः पादौ स्थापयन्निति वाक्यशेषः, 'मग्गेण य होंति सत्तऽण्णे'त्ति मार्गतश्च पृष्ठतश्च भवन्ति सप्तान्ये च भगवतः पद्मा इति, तेषां च यद्यत् पश्चिमं तत्तत्पादन्यासं कुर्वतो भगवतः पुरतस्तिष्ठतीति गाथार्थः ॥५५५॥

**आयाहिण पुव्वमुहो तिदिसिं पडिरूवगा उ देवकया। जेट्ठगणी अण्णो वा दाहिणपुव्वे अदूरंमि ॥ ५५६ ॥**

व्याख्या—स एवं भगवान् पूर्वद्वारेण प्रविश्य 'आदाहिण'त्ति चैत्यद्रुमप्रदक्षिणां कृत्वा 'पुव्वमुहो'त्ति पूर्वाभिमुख उपविशतीति, 'तिदिसिं पडिरूवगा उ देवकय'त्ति शेषासु तिसृषु दिक्षु प्रतिरूपकाणि तु तीर्थकराकृतीनि सिंहासनादियुक्तानि देवकृतानि भवन्ति, शेषदेवादीनामप्यस्माकं कथयतीति प्रतिपत्त्यर्थमिति, भगवतश्च पादमूलमेकेन गणधरेणाविरहितमेव भवति, स च ज्येष्ठो वाऽन्यो वेति, प्रायो ज्येष्ठ इति, स ज्येष्ठगणिरन्यो वा दक्षिणपूर्वदिग्भागे अदूरे–प्रत्यासन्न एव भगवतो भगवन्तं प्रणिपत्य निषीदतीति क्रियाऽध्याहारः, शेषगणधरा अप्येवमेव भगवन्तमभिवन्द्य तीर्थकरस्य मार्गतः पार्श्वतश्च निषीदन्तीति गाथार्थः ॥५५६॥ भुवनगुरुरूपस्य त्रैलोक्यगतरूपसुन्दरतरत्वात् त्रिदशकृतप्रतिरूपकाणां किं तत्साम्यमसाम्यं वेत्याशङ्कानिरासार्थमाह—

**जे ते देवेहिँ कया तिदिसिं पडिरूवगा जिणवरस्स। तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं ॥ ५५७ ॥**

व्याख्या—यानि तानि देवैः कृतानि तिसृषु दिक्षु प्रतिरूपकाणि जिनवरस्य, तेषामपि 'तत्प्रभावात्' तीर्थकरप्रभावात् 'तदनुरूपं' तीर्थकररूपानुरूपं भवति रूपमिति गाथार्थः ॥ ५५७ ॥

**तित्थाइसेससंजय देवी वेमाणियाण समणीओ। भवणवइवाणमंतर जोइसियाणं च देवीओ ॥ ५५८ ॥**

व्याख्या—'तीर्थं गणधरस्तस्मिन् स्थिते सति 'अतिसेससंजय'त्ति अतिशयिनः संयताः, तथा देव्यो वैमानिकानां तथा श्रमण्यः तथा भवनपतिव्यन्तरज्योतिष्कानां च देव्य इति समुदायार्थः ॥ ५५८ ॥ अवयवार्थप्रतिपादनाय आह—

**केवलिणो तिउण जिणं तित्थपणामं च मग्गओ तस्स। मणमादीवि णमंता वयंति सट्ठाणसट्ठाणं ॥ ५५९ ॥**

व्याख्या—केवलिनः 'त्रिगुणं' त्रिः प्रदक्षिणीकृत्य 'जिनं' तीर्थकरं तीर्थप्रणामं च कृत्वा मार्गतः 'तस्य' तीर्थस्य गणधरस्य निषीदन्तीति क्रियाध्याहारः, मणमाईवि नमंता वयंति सट्ठाणसट्ठाणं'ति मनःपर्यायज्ञानिनोऽपि भगवन्तमभिवन्द्य तीर्थं केवलिनश्च पुनः केवलिपृष्ठतो निषीदन्तीति। आदिशब्दान्निरतिशयसंयता अपि तीर्थकरादीनभिवन्द्य मनःपर्यायज्ञानिनां पृष्ठतो निषीदन्ति, तथा वैमानिकदेव्योऽपि तीर्थकरादीनभिवन्द्य साधुपृष्ठतः तिष्ठन्ति न निषीदन्ति, तथा श्रमण्योऽपि तीर्थकरसाधूनभिवन्द्य वैमानिकदेवीपृष्ठतः तिष्ठन्ति न निषीदन्ति, तथा भवनपतिज्योतिष्कव्यन्तरदेव्योऽपि तीर्थकरादीनभिवन्द्य दक्षिणपश्चिमदिग्भागे प्रथमं भवनपतिदेव्यः ततो ज्योतिष्कव्यन्तरदेव्यः तिष्ठन्तीति, एवं मनःपर्यायज्ञान्यादयोऽपि नमन्तो व्रजन्ति स्वस्थानं स्वस्थानमिति गाथार्थः ॥ ५५९ ॥

**भवणवई जोइसिया बोद्धव्वा वाणमंतरसुरा य। वेमाणिया य मणुया पयाहिणं जं च निस्साए ॥ ५६० ॥**

व्याख्या—भवनपतयः ज्योतिष्का बोद्धव्या व्यंतरसुराश्च, एते हि भगवन्तमभिवन्द्य साधूंश्च यथोपन्यासमेवोत्तरपश्चिमे पार्श्वे तिष्ठन्तीत्येवं बोद्धव्याः, तथा वैमानिका मनुष्याश्च, चशब्दात् स्त्रियश्चास्य, चशब्दस्य व्यवहित उपन्यासः। किम्?–'पयाहिणं' प्रदक्षिणां कृत्वा तीर्थकरादीनभिवन्द्य तेऽप्युत्तरपूर्वे दिग्भागे यथासंख्यमेव तिष्ठन्तीति ॥५६०॥ अत्र च

मुद्रीकार...न भवनपतिदेवीप्रभृतीनां स्थानं निषीदनं वा स्पष्टाक्षरैर्नोक्तम्, अवस्थानमात्रमेव प्रतिपादितं, पूर्वाचार्योपदेशलिखितपट्टकादिचित्रकर्मबलेन तु सर्वा एव देव्यो न निषीदन्ति, देवाः पुरुषाः स्त्रियश्च निषीदन्तीति प्रतिपादयन्ति केचन इत्यलं प्रसङ्गेन। 'जं च निस्साए'त्ति, यः परिवारो यं च निश्रां कृत्वा आयातः स तत्पार्श्वे एव तिष्ठतीति गाथार्थः ॥ ५६० ॥ साम्प्रतमभिहितमेवार्थं संयतादिपूर्वद्वारादिप्रवेशविशिष्टं प्रतिपादयन्नाह भाष्यकारः—

संजयवेमाणित्थी संजय (इ) पुव्वेण पविसिउं वीरं। काउं पयाहिणं पुव्वदक्खिणे ठंति दिसिभागे ॥ ११६॥ (भा०)

गमनिका—संयता वैमानिकस्त्रियः संयत्यः पूर्वेण प्रवेष्टुं वीरं कृत्वा प्रदक्षिणं पूर्वदक्षिणे तिष्टन्ति दिग्भागे इति गाथार्थः ॥

जोइसियभवणवंतरदेवीओ दक्खिणेण पविसंति।
चिट्ठंति दक्खिणावरदिसिंमि तिगुणं जिणं काउं ॥ ११७ ॥ (भाष्यम्)

गमनिका—ज्योतिष्कभवनव्यन्तरदेव्यो दक्षिणेन प्रविश्य तिष्ठन्ति दक्षिणापरदिशि त्रिगुणं जिनं कृत्वा इति गाथार्थः ॥

अवरेण भवणवासी वंतरजोइससुरा य अइगंतुं। अवरुत्तरदिसिभागे ठंति जिणं तो नमंसित्ता ॥ ११८ ॥ (भा०)

गमनिका—अपरेण भवनवासिनो व्यन्तरज्योतिष्कसुराश्चातिगन्तुम् अपरोत्तरदिग्भागे तिष्ठन्ति जिनं नमस्कृत्य इति गाथार्थः ॥

समहिंदा कप्पसुरा राया णरणारिओ उदीणेणं। पविसित्ता पुव्वुत्तरदिसीएँ चिट्ठंति पंजलिआ ॥ ११९॥ (भा०)

गमनिका—समहेन्द्राः कल्पसुरा राजानो नरा नार्यः 'औदीच्येन' उत्तरेण इत्यर्थः, प्रविश्य पूर्वोत्तरदिशि तिष्ठन्ति प्राञ्जलयः इति गाथार्थः ॥ भावार्थः सर्वासां सुगम एव ॥ अभिहितार्थोपसङ्ग्रहाय इदमाह—

एक्केक्कीय दिसाए तिगं तिगं होइ सन्निविट्ठं तु। आदिचरिमे विमिस्सा थीपुरिमा सेस पत्तेयं ॥ ५६१ ॥

व्याख्या—पूर्वदक्षिणाअपरदक्षिणाअपरोत्तरापूर्वोत्तराणामेकैकस्या दिशि उक्तलक्षणम् संयतवैमानिकाङ्गनासंयत्यादित्रिकं त्रिकं भवति सन्निविष्टं तु, आदिचरमे पूर्वदक्षिणापूर्वोत्तरदिग्द्वये विमिश्राः संयतादयः स्त्रीपुरुषाः शेषदिग्द्वयं प्रत्येकं भवन्तीति गाथार्थः ॥ ५६७ ॥ तेषां चेत्थं स्थितानां देवनराणां स्थितिप्रतिपादनाय आह—

एंतं महिड्ढियं पणिवयंति ठियमवि वयंति पणमंता। णवि जंतणा ण विकहा ण परोप्परमच्छरो ण भयं ॥ ५६२ ॥

व्याख्या—येऽल्पर्द्धयः पूर्वं स्थिताः ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति, स्थितमपि महर्द्धिकं पश्चादागताः प्रणमन्तो व्रजन्ति, तथा नापि यन्त्रणा—पीडा न विकथा न परस्परमत्सरो न भयं तेषां विरोधिसत्त्वानामपि भवति, भगवतोऽनुभावात्, इति गाथार्थः ॥ ५६२ ॥ एते च मनुष्यादयः प्रथमप्राकारान्तर एव भवन्ति ये उक्ताः, यत आह—

बिइयंमि होंति तिरिया तइए पागारमन्तरे जाणा। पागारजढे तिरियाऽवि होंति पत्तेय मिस्सा वा ॥ ५६३ ॥

व्याख्या—द्वितीये प्राकारान्तरे भवन्ति तिर्यञ्चः, तथा तृतीये प्राकारान्तरे यानानि, 'प्राकारजढे' प्राकाररहिते बहिरित्यर्थः, तिर्यञ्चोऽपि भवन्ति, अपिशब्दात् मनुष्या देवा अपि, ते च प्रत्येकं मिश्रा वेति, ते पुनः प्रविशन्तो भवन्ति निर्गच्छन्तश्चैके इति गाथार्थः ॥ ५६३ ॥ द्वारम् १। द्वितीयद्वारावयवार्थमभिधित्सुः संबन्धगाथामाह—

सव्वं च देसविरतिं सम्मं घेच्छति व होति कहणा उ। इहरा अमूढलक्खो न कहेइ भविस्सइ ण तं च ॥ ५६४ ॥

व्याख्या—'सव्वं च देसविरतिं'ति सर्वविरतिं च देशविरतिं च, विरतिशब्द उभयथापि सम्बध्यते, सम्यक्त्वं ग्रहीष्यति वा भवति कथना तु प्रवर्त्तते कथनमित्यर्थः, 'इहर' त्ति अन्यथा न मूढलक्षोऽमूढलक्षः सर्वज्ञेयाविपरीतवेत्ता इत्यर्थः, किम्?,—न कथयति। आह—समवसरणकरणप्रयासो विबुधानामनर्थकः, कृतेऽपि नियमतोऽकथनात् इत्याह—भविष्यति न तच्च, यद् भगवति कथयत्यन्यतमोऽप्यन्यतमत्सामायिकं न प्रतिपद्यते इति, भविष्यत्कालस्त्रिकालोपलक्षणार्थं इति गाथार्थः ॥ ५६४ ॥ 'केवइय'त्ति कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्ते इत्याह—

मणुए चउमण्णयरं तिरिए तिण्णि व दुवे व पडिवज्जे। जइ नत्थि नियमसो च्चिय सुरेसु सम्मत्तपडिवत्ती ॥ ५६५ ॥

अथवा—कथं भविष्यति न तच्चेत्याह—यतः—'मणुए' गाहा। व्याख्या—मनुष्ये प्रतिपत्तरि चतुर्णामन्यतमप्रतिपत्तिरिति, पाठान्तरं वा 'मणुओ चउ अण्णतरं'ति मनुष्यश्चतुर्णामन्यतमत्प्रतिपद्यते, तिर्यञ्च त्रीणि वा—सर्वविरतिवर्जानि, द्वे वा—सम्यक्त्वश्रुतसामायिके प्रतिपद्यन्ते इति। यदि नास्ति मनुष्यतिरश्चां कश्चित्प्रतिपत्ता ततो नियमत एव सुरेषु सम्यक्त्वप्रतिपत्तिर्भवतीति गाथार्थः ॥ ५६५ ॥ स चेत्थं धर्ममाचष्टे—

नित्थपणामं काउं कहेइ साहारणेण सद्देणं। सव्वेसिं सण्णीणं जोयणणीहारिणा भगवं ॥ ५६६ ॥

व्याख्या—'नमस्तीर्थाये'त्यभिधाय प्रणामं च कृत्वा कथयति, साधारणेन प्रतिपत्तिमङ्गीकृत्य शब्देन, केषां साधारणेनेत्याह—'सर्वेषाम्' अमरनरतिरश्चां सञ्ज्ञिनां, किंविशिष्टेन?—'योजननिर्हारिणा' योजनव्यापिना भगवानिति, एतदुक्तं

भवति-भागवतो ध्वनिः अशेषसमवसरणस्थसञ्ज्ञिजिज्ञासितार्थप्रतिपत्तिनिबन्धनं भवति, भगवतः सातिशयत्वादिति गाथार्थः ॥ ५६६ ॥ आह-कृतकृत्यो भगवान् किमिति तीर्थप्रणामं करोतीति ?, उच्यते—

**तप्पुव्विया अरहया पूइयपूता य विणयकम्मं च । कयकिच्चोऽवि जह कहं कहए णमए तहा तित्थं ॥ ५६७ ॥**

व्याख्या—तीर्थं-श्रुतज्ञानं तत्पूर्विका 'अर्हत्ता' तीर्थकरता, तदभ्यासप्राप्तेः, पूजितेन पूजा पूजितपूजा सा च कृताऽस्य भवति, लोकस्य पूजितपूजकत्वाद्, भगवताऽप्येतत्पूजितमिति प्रवृत्तेः, तथा 'विनयकर्म च' वक्ष्यमाणवैनयिकधर्ममूलं कृतं भवति, अथवा-कृतकृत्योऽपि यथा कथा कथयति नमति तथा तीर्थमिति । आह-इदमपि धर्मकथनं कृतकृत्यस्यायुक्तमेव, न, तीर्थकरनामगोत्रकर्मविपाकत्वात्, उक्तं च-'तं* च कथं वेदिज्जती'त्यादि गाथार्थः ॥ ५६७ ॥ आह—क्व केन साधुना कियतो वा भूभागात् समवसरणे खल्वागन्तव्यम्, अनागच्छतो वा किं प्रायश्चित्तमिति ?, उच्यते—

**जत्थ अपुव्वोसरणं न दिट्ठपुव्वं व जेण समणेणं । बारसहिं जोयणेहिं सो एइ अणागमे लहुया ॥ ५६८ ॥**

व्याख्या—यत्रापूर्वं समवसरणं, तत्तीर्थकरापेक्षया अभूतपूर्वमित्यर्थः,न दृष्टपूर्वं वा येन श्रमणेन द्वादशभ्यो योजनेभ्यः स आगच्छति, 'अनागच्छति' अवज्ञया ततोऽनागमे सति'लहुग' त्ति चतुर्लघवःप्रायश्चित्तं भवतीति गाथार्थः॥५६८॥द्वारम्॥ अन्ये त्वेकगाथयैवानया प्रकृतद्वारव्याख्यां कुर्वते,साऽप्यविरुद्धा व्युत्पन्ना चेति॥ रूपपृच्छाद्वारावयवार्थं विवृण्वन् आह—

**सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्वेज्जा । जिणपायंगुट्ठं पइ ण सोहए तं जहिंगालो ॥ ५६९ ॥**

* तच कथ वेद्यते ?

व्याख्या—कीदृग् भगवतो रूपमित्यत आह-सर्वसुरा यदि रूपमशेषसुन्दररूपनिर्मापणशक्त्या अङ्गुष्ठप्रमाणकं विकुर्वीरन् तथापि जिनपादाङ्गुष्ठं प्रति न शोभते तद् यथाऽङ्गार इति गाथार्थः ॥ ५६९ ॥ साम्प्रतं प्रसङ्गतो गणधरादीनां रूपसम्पदभिधित्सयाऽऽह—

**गणहर आहार अणुत्तरा (य)जाव वण चक्कि वासु बला। मण्डलिया ता हीणा छट्ठाणगया भवे सेसा ॥५७०॥**

व्याख्या—तीर्थकररूपसम्पत्सकाशादनन्तगुणहीना गणधरा रूपतो भवन्ति, गणधररूपेभ्यः सकाशादनन्तगुणहीनाः खल्वाहारकदेहाः, आहारकदेहरूपेभ्योऽनन्तगुणहीनाः 'अनुत्तराश्चे' ति अनुत्तरवैमानिका भवन्ति, एवमनन्तरानन्तरदेहरूपेभ्योऽनन्तगुणहानिर्द्रष्टव्या, ग्रैवेयकाच्युतारणप्राणतानतसहस्रारमहाशुक्रलान्तकब्रह्मलोकमाहेन्द्रसनत्कुमारेशानसौधर्मभवनवासिज्योतिष्कव्यन्तरचक्रवर्त्तिवासुदेववलदेवमहामाण्डलिकानामित्यत एवाह—'जाव वण चक्कि वासु बला । मंडलिया ता हीणत्ति' यावत् व्यन्तरचक्रवर्त्तिवासुदेववलदेवमाण्डलिकास्तावत् अनन्तगुणहीनाः, 'छट्ठाणगया भवे सेस'त्ति शेषा राजानो जनपदलोकाश्च षट्स्थानगता भवन्ति,अनन्तभागहीना वा असङ्ख्येयभागहीना वा सङ्ख्येयभागहीना वा सङ्ख्येयगुणहीना वा असङ्ख्येयगुणहीना वा अनन्तगुणहीना वा इति गाथार्थः ॥५७०॥ उत्कृष्टरूपतायां भगवतः प्रतिपादयितुं प्रक्रान्तायामिदं प्रासङ्गिकं रूपसौन्दर्यनिबन्धनं संहननादि प्रतिपादयन्नाह—

**संघयण रूव संठाण वण्ण गइ सत्त सार उस्सासा । एमाइणुत्तराइं हवंति नामोदए तस्स ॥ ५७१ ॥**

व्याख्या—'संहननं' वज्रऋषभनाराचं 'रूपम्' उक्तलक्षणं 'संस्थानं' समचतुरस्रं 'वर्णो' देहच्छाया 'गतिः' गमनं 'सत्त्वं' वीर्यान्तरायकर्मक्षयोपशमादिजन्य आत्मपरिणामः, सारो द्विधा-बाह्योऽभ्यन्तरश्च, बाह्यो गुरुत्वम्, आभ्यन्तरो ज्ञानादिः,'उच्छ्वासः' प्रतीत एव,संहननं च रूपं च संस्थानं च वर्णश्च गतिश्च सत्त्वं च सारश्च उच्छ्वासश्चेति समासः। एवमादीनि वस्तून्यनुत्तराणि भवन्ति तस्य भगवतः, आदिशब्दात् रुधिरं गोक्षीराभं मांसं चेत्यादि, कुत इत्याह—'नामोदयादि'ति नामाभिधानं कर्मानेकभेदभिन्नं तदुदयादिति गाथार्थः ॥५७१॥ आह-अन्यासां प्रकृतीनां वेदना गोत्रादयो नाम्नो वा ये इन्द्रियाज्ञादयः प्रशस्ता उदया भवन्ति ते किमनुत्तरा भगवतः छद्मस्थकाले केवलिकाले वा उत नेति ?, अत्रोच्यते—

**पगडीणं अण्णासुवि पसत्थ उदया अणुत्तरा होंति । खय उवसमेऽवि य तहा खयम्मि अविगप्पमाहंसु॥५७२॥**

व्याख्या—'पगडीणं अण्णासुवि' त्ति, षष्ठ्यर्थे सप्तमी, प्रकृतीनामन्यासामपि प्रशस्ता उदया उच्चैर्गोत्रादयो भवन्ति, किमितरजनस्येव ?, नेत्याह—'अनुत्तरा' अनन्यसदृशा इत्यर्थः, अपिशब्दान्नाम्नोऽपि येऽन्ये जात्यादय इति । 'खय उवसमेऽवि य तह' त्ति,क्षयोपशमेऽपि सति ये दानलाभादयः कार्यविशेषा अपिशब्दादुपशमेऽपि ये केचन तेऽप्यनुत्तरा भवन्ति इति क्रियायोगः, तथा कर्मणः क्षये सति क्षायिकज्ञानादिगुणसमुदयम् 'अविगप्पमाहंसु'त्ति अविकल्पं—व्यावर्णनादिविकल्पातीतं सर्वोत्तममाख्यातवन्तः तीर्थकृद्गणधरा इति गाथार्थः ॥ ५७२ ॥ आह—असातवेदनीयाद्याः प्रकृतयो नाम्नो वा या अशुभास्ताः कथं तस्य दुःखदा न भवन्ति इति ?, अत्रोच्यते—

**अस्सायमाइयाओ जावि य असुहा हवंति पगडीओ। णिंबरसलवोव्व पए ण होंति ता असुहया तस्स ॥५७३॥**

व्याख्या—असाताद्याः या अपि च अशुभा भवन्ति प्रकृतयः, ता अपि निम्बरसलव इव 'पयसि' क्षीरे लवो-बिन्दुः,

न भवन्ति ताः अशुभदाः असुखदा वा 'तस्य' तीर्थकरस्येति गाथार्थः ॥५७३॥ उत्क्रमानुषङ्गिकं, प्रकृतद्वारमधिकृत्याह—उत्कृष्टरूपतया भगवतः किं प्रयोजनमिति ?, अत्रोच्यते,—

**धम्मोदएण रूवं करेंति रूवस्सिणोऽवि जइ धम्मं । गिज्झवओ य सुरूवो पसंसिमो तेण रूवं तु ॥ ५७४॥**

व्याख्या—दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः तस्योदयः तेन रूपं भवतीति श्रोतारोऽपि प्रवर्त्तन्ते, तथा कुर्वन्ति 'रूपस्विनोऽपि' (वस्सिणोऽवि) रूपवन्तोऽपि यदि धर्म्मं ततः शेषैः सुतरां कर्त्तव्य इति श्रोतृबुद्धिः प्रवर्त्तते, तथा 'ग्राह्यवाक्यश्च' आदेयवाक्यश्च सुरूपो भवति, चशब्दात् श्रोतृरूपाद्यभिमानापहारी च अतः, प्रशंसामो भगवतस्तेन रूपमिति गाथार्थः ॥ ५७४ ॥ द्वारम् । अथवा पृच्छेति भगवान् देवनरतिरश्चां प्रभूतसंशयिनां कथं व्याकरणं कुर्वन् संशयव्यवच्छित्तिं करोतीति ?, उच्यते, युगपत्, किमित्याह—

**कालेण असंखेणवि संखातीताण संसईणं तु । मा संसयवोच्छित्ती न एोज्ज कमवागरणदोसा ॥ ५७५ ॥**

व्याख्या—कालेनासङ्ख्येयेनापि सङ्ख्यातीतानां संशयिनां–देवादीनां मा संशयव्यवच्छित्तिर्न भवेत्, कुतः ?–क्रमव्याकरणदोषात्, अतो युगपद् व्यागृणातीति गाथार्थः ॥ ५७५ ॥ युगपद्व्याकरणगुणं प्रतिपिपादयिषुराह—

**सव्वत्थ अविसमत्तं रिद्धिविसेसो अकालहरणं च । सव्वण्णुपच्चओऽवि य अचिंतगुणभूतिओ जुगवं ॥५७६॥**

व्याख्या—'सर्वत्र' सर्वसत्त्वेषु 'अविषमत्वं' युगपत् कथनेन तुल्यत्वं भगवत इति, रागद्वेषरहितस्य तुल्यकालसंशयिनां युगपत् जिज्ञासतां कालभेदकथने रागेतरगोचरचित्तवृत्तिप्रसङ्गात्, सामान्यकेवलिनां तत्प्रसङ्ग इति चेत् , न, तेषामित्थं देशनाकरणानुपपत्तेः, तथा ऋद्धिविशेषश्चायं भगवतो–यद् युगपत् सर्वेषामेव संशयिनामशेषसंशयव्यवच्छित्तिं करोतीति । अकालहरणं चेत्थं भगवतः, युगपत् संशयाऽपगमात्, क्रमकथने तु कस्यचित् संशयिनोऽनिवृत्तसंशयस्यैव मरणं स्यात्, न च भगवन्तमप्यवाप्य संशयनिवृत्त्यादिफलरहिता भवन्ति प्राणिन इति, तथा सर्वज्ञप्रत्ययोऽपि च तेषामित्थमेव भवति, न ह्यसर्वज्ञो हृद्गताशेषसंशयापनोदायालमिति, क्रमव्याकरणे तु कस्यचिदनपेतसंशयस्य तत्प्रतीत्यभावः स्यात्, तथाऽचिन्त्या गुणभूतिः–अचिन्त्या गुणसंपद् भगवत इति, यस्मादेते गुणास्ततो युगपत्कथयति इति गाथार्थः ॥ ५७६ ॥ द्वारम् ॥ श्रोतृपरिणामः पर्यालोच्यते–तत्र यथा सर्वसंशयिनां समा सा पारमेश्वरी वागशेषसंशयोन्मूलनेन स्वभाषया परिणमते तथा प्रतिपादयन्नाह—

**वासोदयस्स व जहा वण्णादी होंति भायणविसेसा । सव्वेसिंपि सभासा जिणभासा परिणमे एवं ॥५७७॥**

व्याख्या—'वर्षोदकस्य वा' वृष्ट्युदकस्य वा, वाशब्दात् अन्यस्य वा, यथैकरूपस्य सतः वर्णादयो भवन्ति, भाजनविशेषात्, कृष्णसुरभिमृत्तिकायां स्वच्छं सुगन्धं रसवच्च भवति ऊपरे तु विपरीतम्, एव सर्वेषामपि श्रोतॄणां स्वभाषया जिनभाषा परिणमत इति गाथार्थः ॥ ५७७ ॥ तीर्थकरवाचः सौभाग्यगुणप्रतिपादनायाह—

**साहारणासवत्ते तदुवओगो उ गाहगगिराए । न य निव्विज्जइ सोया किढिवाणियदासिआहरणा ॥ ५७८ ॥**

व्याख्या—साधारणा–अनेकप्राणिषु स्वभाषात्वेन परिणामात् नरकादिभयरक्षणत्वाद्वा, असपत्ना–अद्वितीया, साधारणा(चा)ऽसावसपत्ना चेति समासः, तस्यां साधारणासपत्नायां सत्यां, किम् ?, तस्यामुपयोगस्तदुपयोग एव भवति श्रोतुः, तुशब्दस्यावधारणार्थत्वात्, कस्यां ?–ग्राहयतीति ग्राहिका,ग्राहिका चासौ गीश्च ग्राहकगीः तस्यां ग्राहकगिरि,उपयोगे सत्यप्यन्यत्र निर्वेददर्शनादाह–न च निर्विद्यते श्रोता, कुतः खल्वयमर्थोऽवगन्तव्यः ? इत्याह—किढिवणिग्दास्युदाहरणादिति, तच्चेदम्—एगस्स वाणियगस्स एक्का किढिदासी, किढी थेरी, सा गोसे कट्ठाणं गया, तण्हाछुहाकिलंता मज्झण्हे आगया, अतिथेवा कट्ठा आणीयत्ति पिट्टिता भुक्खियतिसिया पुणो पट्ठविया, सा य वड्डं कट्ठयभारं ओगाहंतीए पोरुसीए गहायागच्छति, कालो य जेट्ठामूलमासो, अह ताए थेरीए कट्ठभाराओ एगं कट्ठं पडियं, ताहे ताए ओणमित्ता तं गहियं, तं समयं च भगवं तित्थगरो धम्मं कहियाइओ जोयणनीहारिणा सरेणं, सा थेरी तं सद्दं सुणेंती तहेव ओणता सोउमाढत्ता, उण्हं खुहं पिवासं परिस्समं च न विदइ, सूरत्थमणे तित्थगरो धम्मं कहेउमुट्ठिओ, थेरी गया । एवं—

**सव्वाउअंपि सोया खवेज्ज जइ हु सययं जिणो कहए । सीउण्हखुप्पिवासापरिस्समभए अविगणेंतो ॥ ५७९ ॥**

व्याख्या—भगवति कथयति सति सर्वायुष्कमपि श्रोता क्षपयेत् भगवत्समीपवर्त्त्येव, यदि हु 'सततम्' अनवरतं जिनः कथयेत् । किंविशिष्टः सन्नित्याह—शीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन्निति गाथार्थः ।५७९।द्वारम् । साम्प्रत दानद्वा-

१ एकस्य वणिज एका काष्ठिकी दासी, काष्ठिकी स्थविरा, सा गोसे (प्रत्युषसि) काष्ठेभ्यो गता, तृष्णाक्षुधाक्रान्ता मध्याह्ने आगता, अतिस्तोकानि काष्ठान्यानीतानीति पिट्टिता बुभुक्षिततृषिता पुन प्रस्थापिता, सा च बृहन्त काष्ठभारमवगाहमानाया पौरुष्या गृहीत्वागच्छति, कालश्च ज्येष्ठामूलो मास , अथ तस्या स्थविराया काष्ठभारात् एक काष्ठ पतित, तदा तयाऽवनम्य तद्गृहीत, तस्मिन् समये च भगवांस्तीर्थकरो धर्म कथितवान् योजनव्यापिना स्वरेण, सा स्थविरा त [illegible] शृण्वन्ती तथैवावनता श्रोतुमारब्धा, उष्ण क्षुधां पिपासां परिश्रम च न वेत्ति, सूर्योद्गमवे तीर्थकरो धर्म कथयित्वोत्थित , स्थविरा गता.

रावयवार्थमधिकृत्योच्यते–तत्र भगवान् येषु नगरादिषु विहरति, तेभ्यो वार्त्तां ये खल्वानयन्ति, तेभ्यो यत्प्रयच्छन्ति वृत्तिदानं प्रीतिदानं च चक्रवर्त्यादयस्तदुपप्रदिदर्शयिषुराह—

**वित्ती उ सुवण्णस्सा बारस अद्धं च सयसहस्साइं । तावइयं चिय कोडी पीतीदाणं तु चक्किस्स ॥ ५८० ॥**

व्याख्या—'वृत्तिस्तु' वृत्तिरेव नियुक्तपुरुषेभ्यः, कस्येत्याह—सुवर्णस्य, द्वादश अर्द्धं च शतसहस्राणि, अर्द्धत्रयोदश सुवर्णलक्षा इत्यर्थः, तथा तावत्य एव कोट्यः प्रीतिदानं तु, केषामित्याह—चक्रवर्त्तिनां, तत्र वृत्तिर्या परिभाषिता नियुक्तपुरुषेभ्यः, प्रीतिदानं यद् भगवदागमननिवेदने परमहर्षात् नियुक्तेतरेभ्यो दीयत इति, तत्र वृत्तिः संवत्सरनियता, प्रीतिदानमनियतम्, इति गाथार्थः ॥ ५८० ॥

**एयं चेव पमाणं णवरं रययं तु केसवा दिंति । मंडलिआण सहस्सा पीईदाणं सयसहस्सा ॥ ५८१ ॥**

व्याख्या—एतदेव प्रमाणं वृत्तिप्रीतिदानयोः, नवरं 'रजतं तु' रूप्पं तु 'केशवाः' वासुदेवा ददति, तथा माण्डलिकानां राज्ञां सहस्राण्यर्द्धत्रयोदश रूप्यस्य वृत्तिर्नियुक्तेभ्यो वेदितव्या, 'पीईदाणं सतसहस्सं' ति 'सूचनात् सूत्र' मिति प्रीतिदानमर्द्धत्रयोदशशतसहस्राण्यवगन्तव्यानीति गाथार्थः ॥ ५८१ ॥ किमेत एव महापुरुषाः प्रयच्छन्ति ?, नेत्याह—

**भत्तिविहवाणुरूवं अण्णेऽवि य दिंति इब्भमाईया । सोऊण जिणागमणं निउत्तमणिओइएसुं वा ॥ ५८२ ॥**

व्याख्या—भक्तिविभवानुरूपं अन्येऽपि च ददति इभ्यादयः, इभ्यो–महाधनपतिः, आदिशब्दात् नगरग्रामभोगिकादयः, कदा?–श्रुत्वा जिनागमनं,केभ्यो ?–नियुक्तानियोजितेभ्यो वेति,गाथार्थः॥५८२॥ तेषामित्थं प्रयच्छतां के गुणा इति?,उच्यते—

**देवाणुअत्ति भत्ती पूया थिरकरण सत्तअणुकंपा । साओदय दाणगुणा पभावणा चेव तित्थस्स ॥ ५८३ ॥**

व्याख्या—देवानुवृत्तिः कृता भवति, कथं ?, यतो देवा अपि भगवतः पूजां कुर्वन्त्यतः तदनुवृत्तिः कृता भवति, तथा भक्तिश्च भगवतः कृता भवति, तथा पूजा च, तथा स्थिरीकरणमभिनवश्राद्धकानां, तथा कथकसत्त्वानुकम्पा च कृतेति, तथा सातोदयवेदनीयं बध्यते, एते दानगुणाः, तथा प्रभावना चैव तीर्थस्य कृता भवतीति गाथार्थः ॥ ५८३ ॥ द्वारं ॥ साम्प्रतं देवमाल्यद्वारावयवार्थमधिकृत्योच्यते–तत्र भगवान् प्रथमां सम्पूर्णपौरुषीं धर्ममाचष्टे, अत्रान्तरे देवमाल्यं प्रविशति, बलिरित्यर्थः, आह–कस्तं करोति इति ?, उच्यते—

**राया व रायमच्चो तस्सऽसई पउरजणवओ वाऽवि । दुब्बलिखंडियबलिछडियतंदुलाणाढगं कलमा ॥ ५८४ ॥**

व्याख्या—'राजा वा' चक्रवर्त्तिमण्डलिकादिः 'राजामात्यो वा' अमात्यो–मन्त्री,तस्य राज्ञोऽमात्यस्य वा असति–अभावे नगरनिवासिविशिष्टलोकसमुदायः पौरं तत्करोति, ग्रामादिषु जनपदो वा, अत्र जनपदशब्देन तन्निवासी लोकः परिगृह्यते, स किंविशिष्टः किंपरिमाणो वा क्रियत इति ?, आह–'दुब्बली'त्यादि,तत्र दुर्बलिकया खण्डितानां 'बली'ति बलवत्या छटितानां तन्दुलानाम् आढकं–चतुःप्रस्थपरिमाणं, 'कलमे'ति प्राकृतशैल्या कलमानां–तन्दुलानाम् इति गाथार्थः ॥ ५८४ ॥ किंविशिष्टानामिति ? आह—

**भाइयपुणाणियाणं अखंडफुडियाण फलगसरियाणं । कीरइ बली सुरावि य तत्थेव छुहंति गंधाई ॥ ५८५ ॥**

व्याख्या—विभक्तपुनरानीतानां भाजनम्–ईश्वरादिगृहेषु वीननार्थमर्प्पणं तेभ्यः प्रत्यानयनं–पुनरानयनमिति, विभक्ताश्चते पुनरानीताश्चेति समासः, तेषां, किंविशिष्टानाम् ?–अखण्डाः -सम्पूर्णावयवाः अस्फुटिताः–राजीरहिताः, अखण्डाश्च तेऽस्फुटिताश्च इति समासः,तेषां,'फलगसरिताणं'ति फलकवीनितानाम् एवम्भूतानामाढक क्रियते बलिः,सुरा अपि च तत्रैव बलौ प्रक्षिपन्ति गन्धादीनिति गाथार्थः ॥५८५॥द्वार॥माल्यानयनद्वारं,इदानीं तमित्थं निष्पन्नं बलिं राजादयस्त्रिदशसहिताः गृहीत्वा तूर्यनिनादेन दिग्मण्डलमापूरयन्तः खल्वागच्छन्ति,पूर्वद्वारेण च प्रवेशयन्ति,अत्रान्तरे भगवानप्युपसंहरतीति, आह–

**बलिपविसणसमकालं पुव्वद्दारेण ठाति परिकहणा । तिगुणं पुरओ पाडण तस्सद्धं अवडियं देवा ॥ ५८६ ॥**

व्याख्या—पूर्वद्वारेणेति व्यवहित उपन्यासः, बलेः प्रवेशनं पूर्वद्वारेण, बलिप्रवेशनसमकालं 'तिष्ठति' उपरमते धर्मकथेति, 'तिगुणं पुरओ पाडण' प्रविश्य राजादिर्बलिव्यग्रदेहो भगवन्तं त्रिः प्रदक्षिणीकृत्य तं बलिं तत्पादान्तिके पुरतः पातयति, तस्य चार्द्धमपतितं देवाः गृह्णन्ति, इति गाथार्थः ॥ ५८६ ॥

**अद्धद्धं अहिवइणो अवसेसं हवइ पागयजणस्स । सव्वामयप्पसमणी कुप्पइ णऽण्णो य छम्मासे ॥ ५८७ ॥**

व्याख्या—शेषार्द्धस्य अर्द्धं–अर्द्धार्द्धं तदधिपतेर्भवति राज्ञ इत्यर्थः, अवशेषं यद्बलेरास्ते तद्भवति कस्य ?, प्रकृतिषु भवः प्राकृतो–जनस्तस्य, स चेत्थंसामर्थ्यो भवति–ततः सिकूथेनापि शिरसि प्रक्षिप्तेन रोगः खलूपशमं याति, अपूर्वश्च षण्मासान यावन्न भवतीति, आह च–सर्वामयप्रशमनः, कुप्यति नान्यश्च षण्मासं यावत् । प्राकृतशैल्या स्त्रीलिङ्गनिर्देश इति गाथार्थः ॥ ५८७ ॥ द्वारम् ॥ अपरे त्वनन्तरोक्तद्वारद्वयमप्येकद्वारीकृत्य व्याचक्षते, तथापि अविरोध इति । इत्थं बलौ प्रक्षिप्ते भगवान् प्रथमात् प्राकारान्तरात् उत्तरद्वारेण निर्गत्य उत्तरपूर्वायां दिशि देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठत

इति। भगवत्युत्थिते द्वितीयपौरुष्यामाद्यगणधरोऽन्यतमो वा धर्ममाचष्टे। आह–भगवानेव किमिति नाचष्टे ?, तत्कथने के गुणा इति ?, उच्यते—

**खेयविणोओ सीसगुणदीवणा पच्चओ उभयओऽवि। सीसायरियकमोऽवि य गणहरकहणे गुणा होंति॥५८८॥**

व्याख्या—खेदविनोदो भगवतो भवति, परिश्रमविश्राम इत्यर्थः, तथा 'शिष्यगुणदीपना' शिष्यगुणप्रख्यापना च कृता भवति, तथा प्रत्यय उभयतोऽपि श्रोतॄणामुपजायते–यथा भगवताऽभ्यधायि तथा गणधरेणापि, गणधरे वा तदनन्तरं तदुक्तानुवादिनि प्रत्ययो भवति श्रोतॄणाम्—नान्यथावादयमिति, तथा शिष्याचार्यक्रमोऽपि च दर्शितो भवति, आचार्यात् उपश्रुत्य योग्यशिष्येण तदर्थान्व्याख्यानं कर्त्तव्यमिति, एते गणधरकथने गुणा भवन्ति इति गाथार्थः ॥५८८॥
आह–स गणधरः क्व निषण्णः कथयतीति ?, उच्यते—

**राओवणीयसीहासणे निविट्ठो व पायवीढंमि। जिट्ठो अन्नयरो वा गणहारी कहइ बीआए॥ ५८९॥**

व्याख्या—राज्ञा उपनीतं राजोपनीतं राजोपनीतं च तत् सिंहासनं चेति समासः, तस्मिन् राजोपनीतसिंहासने उपविष्टो वा भगवत्पादपीठे, स च ज्येष्ठः अन्यतरो वा गण–साध्वादिसमुदायलक्षणं धारयितुं शीलमस्येति गणधारी कथयति द्वितीयायां पौरुष्यामिति गाथार्थः॥ ५८९॥ आह–स कथयन् कथं कथयतीति ?, उच्यते—

**संखाईएऽवि भवे साहइ जं वा परो उ पुच्छिज्जा। ण य णं अणाइसेसी वियाणई एस छउमत्थो ॥५९०॥**

व्याख्या—सङ्ख्यातीतानपि भवान्, असङ्ख्येयानित्यर्थः, किं ?–'साहइ'त्ति देशीवचनतः कथयति, एतदुक्तं भवति–असङ्ख्येयभवेषु यदभवद्भविष्यति वा, यद्वा वस्तुजातं परस्तु पृच्छेत् तत्सर्वं कथयतीति, अनेनाशेषाभिलाप्यपदार्थप्रतिपादनशक्तिमाह, किं बहुना ?–'न च' नैव, णमिति वाक्यालङ्कारे, 'अणाइसेसि'त्ति अनतिशयी अवध्याद्यतिशयरहित इत्यर्थः, विजानाति यथा एष गणधरश्छद्मस्थ इति, अशेषप्रश्नोत्तरप्रदानसमर्थत्वात्तस्येति गाथार्थः ॥५९०॥ समवसरणं समत्तं

एव तावत्समवसरणवक्तव्यता सामान्येनोक्ता, प्रकृतमिदानीं प्रस्तूयते–तत्र भगवतः समवसरणे निष्पन्ने सत्यत्रान्तरे देवजयशब्दसम्मिश्रदिव्यदुन्दुभिशब्दाकर्णनोत्फुल्लनयनगगनावलोकनोपलब्धसस्वर्गवधूसमेतसुरवृन्दानां यज्ञपाटकसमीपाभ्यागतजनानां परितोषोऽभवद्–अहो स्विष्टं, विग्रहवन्तः खलु देवा आगता इत्याह—

**तं दिव्वदेवघोसं सोऊणं माणुसा तहिं तुट्ठा। अहो(हु) जण्णिएण जट्ठं देवा किर आगया इहइं॥ ५९१॥**

व्याख्या—तं दिव्यदेवघोषं श्रुत्वा मनुष्याः 'तत्र' यज्ञपाटे तुष्टाः, 'अहो'! विस्मये, यज्ञेन यजति लोकानिति याज्ञिकस्तेनेष्टं, कुतः ?–एते देवाः किल आगता अत्रेति, किलशब्दः संशय एव, तेषामन्यत्र गमनादिति गाथार्थः॥ ५९१॥ तत्र च यज्ञपाटे वेदार्थविदः एकादशापि गणधरा ऋत्विजः समन्वागता इत्याह च—

**एक्कारसवि गणहरा सव्वे उण्णयविसालकुलवंसा। पावाए मज्झिमाए समोसढा जन्नवाडम्मि॥ ५९२॥**

व्याख्या—एकादशापि गणधराः समवसृताः यज्ञपाट इति योगः, किंभूता इत्याह–'सर्वे' निरवशेषाः उन्नताः–प्रधानजातित्वात् विशालाः–पितामहपितृव्याद्यनेकसमाकुलाः कुलान्येव वंशाः–अन्वया येषां ते तथाविधाः, पापाया मध्यमायां 'समवसृताः' एकीभूताः, क्व ?–यज्ञपाट इति गाथार्थः॥५९२॥ आह–किमाद्याः किंनामानो वा त एते गणधराः इति ?, उच्यते—

**पढमित्थ इंदभूई बिइओ उण होइ अग्गिभूइत्ति। तइए य वाउभूई तओ वियत्ते सुहम्मे य॥ ५९३॥**

व्याख्या—प्रथमः 'अत्र' गणधरमध्ये इन्द्रभूतिः, द्वितीयः पुनर्भवति अग्निभूतिरिति, तृतीयश्च वायुभूतिः, ततो व्यक्तः चतुर्थः सुधर्मश्च* पञ्चमः, इति गाथार्थः॥ ५९३॥

**मंडियमोरियपुत्ते अकंपिए चेव अयलभाया य। मेयज्जे य पभासे गणहरा होंति वीरस्स॥ ५९४॥**

व्याख्या—मण्डिकपुत्रः मौर्यपुत्रः, पुत्रशब्दः प्रत्येकमभिसम्बध्यते, अकम्पितश्चैव अचलभ्राता च मेतार्यश्च प्रभासः, एते गणधरा भवन्ति वीरस्य इति गाथार्थः॥ ५९४॥

**जंकारण णिक्खमणं वोच्छं एएसि आणुपुव्वीए। तित्थं च सुहम्माओ णिरवच्चा गणहरा सेसा॥ ५९५॥**

व्याख्या—'यत्कारणं' यन्निमित्तं निष्क्रमणं यत्तदोर्नित्यसम्बन्धात् तत् वक्ष्ये 'एतेषां' गणधराणाम् 'अनुपूर्व्या' परिपाट्या, तथा तीर्थं च सुधर्मात् सञ्जातं, 'निरपत्याः' शिष्यगणरहिताः गणधराः 'शेषाः' इन्द्रभूत्यादयः इति गाथार्थः॥ ५९५॥ तत्र जीवादिसंशयापनोदनिमित्तं गणधरनिष्क्रमणमितिकृत्वा यो यस्य संशयस्तदुपदर्शनायाह—

---

* सुधर्मेति स्याद्वाच्यं, परं सुधर्मं इति सञ्ज्ञा तस्य, यद्वा 'सु पूजायां' मिति तत्पुरुषे अबहुव्रीहिवादे सुधर्म इति, अथ च समासान्तविधेरनित्यत्वात्, अथवा केषाञ्चिन्मतेनान् विकल्पेन एनेति बोध्यं यथायथं सुधिया

'जीवे कम्मे तज्जीवे' भूयं तारिसयं बंधमोक्खे य। देवा णेरइए या पुण्णे परलोय णेव्वाणे ॥ ५९६ ॥

व्याख्या—एकस्य जीवे संशयः—किमस्ति नास्ति इति, तथा परस्य कर्मणि, ज्ञानवरणीयादिलक्षणं कर्म किमस्ति नास्ति ? इति, अपरस्य 'तज्जीवे' त्ति किं तदेव शरीरं स एव जीव उत अन्य इति, न जीवसत्तायाम् इति, तथा 'भूते'ति अपरस्य भूतेषु संशयः, पृथिव्यादीनि भूतानि सन्ति न वेति, अपरस्य 'तारिसय' त्ति किं यो यादृश इह भवे स तादृश एव अन्यस्मिन्नपि ? उत नेति, 'बन्धमोक्खे य'त्ति अपरस्य तु किं बन्धमोक्षौ स्तः ? उत न इति, आह—कर्मसंशयात् अस्य को विशेष इति ?, उच्यते, स कर्मसत्तागोचरः, अयं तु तदस्तित्वे सत्यपि जीवकर्मसंयोगविभागगोचर इति, तथा अपरस्य देवाः किं सन्ति ? नेति वा, अपरस्य तु नारकाश्च संशयगोचराः, किं ते सन्ति न सन्ति वा ?, तथा अपरस्य पुण्ये सशयः, कर्मणि सत्यपि किं पुण्यमेव प्रकर्षप्राप्तं प्रकृष्टसुखहेतुः, तदेव चापचीयमानमत्यन्तस्वल्पावस्थं दुःखस्य उत तदतिरिक्तं पापमस्ति आहोस्विदेकमेव उभयरूपम् उत स्वतन्त्रमुभयमिति, अपरस्य तु परलोके संशयः, सत्यप्यात्मनि परलोको—भवान्तरलक्षणः किमस्ति नास्ति ? इति, अपरस्य तु निर्वाणे संशयः, निर्वाणं किमस्ति नास्ति ? इति, आह—बन्धमोक्षसंशयात् अस्य को विशेष इति, उच्यते, स हि उभयगोचरः, अयं तु केवलविषय एव, तथा किं संसाराभावमात्र एव असौ मोक्षः ? उत अन्यथा ? इत्यादि, इति गाथार्थः ॥ ५९६ ॥ साम्प्रतं गणधरपरिवारमानप्रदर्शनाय आह—

पंचण्हं पंचसया अद्धुट्ठसया य होंति दोण्ह गणा। दोण्हं तु जुयलयाणं तिसओ तिसओ भवे गच्छो ॥५९७॥

व्याख्या—पञ्चानामाद्यानां गणधराणां पञ्च शतानि प्रत्येकं प्रत्येकं परिवार इति, तथा अर्द्धं चतुर्थस्य येषु तानि अर्धचतुर्थानि २ शतानि अर्द्धचतुर्थशतानि २ मानं ययोः तौ अर्धचतुर्थशतौ भवतः द्वयोः प्रत्येकं गणौ, इह गणः समुदाय एव उच्यते, न पुनरागमिक इति,तथा द्वयोस्तु गणधरयुगलयोः त्रिशतः त्रिशतो भवति गच्छः, एतदुक्तं भवति—उपरितनानां चतुर्णां गणधराणां प्रत्येकं त्रिशतमानः परिवार इति गाथार्थः ॥५९७॥ उक्तमानुषङ्गिकं, प्रकृतं उच्यते -ते हि देवाः तं यज्ञ पाटं परिहृत्य समवसरणभुवि निपतितवन्तः, ताश्च तथा दृष्ट्वा लोकोऽपि तत्रैव ययौ, भगवन्तं तु त्रिदशलोकेन पूज्यमानं दृष्ट्वा अतीव हर्षं चक्रे, प्रवादश्च सञ्जातः—सर्वज्ञोऽत्र समवसृतः, तं देवाः पूजयन्ति इति, अत्रान्तरे खल्वाकर्णितसर्वज्ञप्रवादोऽमर्षाध्मातः खल्विन्द्रभूतिर्भगवन्तं प्रति प्रस्थित इत्याह—

सोऊण कीरमाणिं महिमं देवेहिं जिणवरिंदस्स। अह एइ अहम्माणी अमरिसिओ इंदभूइत्ति ॥ ५९८ ॥

व्याख्या—श्रुत्वा च क्रियमाणां, दृष्ट्वा वा पाठान्तरं, महिमां देवैर्जिनवरेन्द्रस्य, अथास्मिन् प्रस्तावे 'एइ' त्ति आगच्छति भगवत्समीपम् 'अहम्माणि' त्ति अहमेव विद्वान् इति मानोऽस्य इति अहंमानी, 'अमर्षितः' अमर्षयुक्तः, अमर्षो—मत्सरविशेषः, मयि सति कोऽन्यः सर्वज्ञः ? इति, अपनयामि अद्य सर्वज्ञवादम्, इत्यादिसङ्कल्पकलुषितान्तरात्मा, कोऽसौ? इत्याह—इन्द्रभूतिः, इति गाथार्थः ॥५९८॥ स च भगवत्समीपं प्राप्य भगवन्तं च चतुस्त्रिंशदतिशयसमन्वितं त्रिदशासुरनरेश्वरपरिवृतं दृष्ट्वा साशङ्कः तदग्रतस्तस्थौ, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। णामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ५९९ ॥

व्याख्या—'आभाषितश्च' संलप्तश्च, केन ?—जिनेन, किंविशिष्टेन ?—जातिः—प्रसूतिः जरा—वयोहानिलक्षणा मरणं—दशविधप्राणवियोगरूपम् एभिर्विप्रमुक्तस्तेन, कथम् ?—नाम्ना च हे इन्द्रभूते ! गोत्रेण च हे गौतम ! किंविशिष्टेन जिनेन इत्याह—सर्वज्ञेन सर्वदर्शिना। आह—यो जरामरणविप्रमुक्तः स सर्वज्ञ एवेति गतार्थत्वात् विशेषणवैयर्थ्यं, न, नयवादपरिकल्पितजात्यादिविप्रमुक्तमुक्तनिरासार्थत्वात् तस्येति, तथा च कैश्चित् अचेतना मुक्ता गुणवियोगमोक्षवादिभिरिष्यन्त एवेति गाथार्थः ॥५९९॥ इत्थं नामगोत्रसंलप्तस्य तस्य चिन्ताऽभवत्—अहो नामापि मे विजानाति, अथवा प्रसिद्धोऽहं, को मां न वेत्ति?, यदि मे हृद्गतं संशयं ज्ञास्यति अपनेष्यति वा, स्यान्मम विस्मय इति, अत्रान्तरे भगवानाह—

किं मन्नि अत्थि जीवो उआहु नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥६००॥

व्याख्या—हे गौतम ! किं मन्यसे—अस्ति जीव उत नास्तीति, ननु अयमनुचितस्ते संशयः, अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनः, तेषां वेदपदानां चार्थं न जानासि, यथा न जानासि तथा वक्ष्यामः, तेषामयमर्थो—वक्ष्यमाणलक्षण इति। अन्ये तु—किंशब्दं परिप्रश्नार्थे व्याचक्षते, तच्च न युज्यते,भगवतः सकलसंशयातीतत्वात्, संशयवतश्च तत्प्रयोगदर्शनात्, किमित्थमन्यथेति वा, अथवा किमस्ति जीव उत नास्ति इति मन्यसे,अयं संशयस्तव, शेषं पूर्ववदिति गाथार्थः ॥६००॥ यदुक्तम्—'संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धन' इति, तान्यमूनि वेदपदानि—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न प्रेत्य सञ्ज्ञाऽस्ती" त्यादीनि, तथा 'स वै अयमात्मा ज्ञानमय' इत्यादीनि च, एतेषां चायमर्थो भवत चेतसि विपरिवर्त्तते—विज्ञानमेव चैतन्यं, नीलादिरूपत्वात्, चैतन्यविशिष्टं यन्नीलादि तस्मात्, तेन घनो विज्ञानघनः, स एव 'एतेभ्यः' अध्यक्षतः परिच्छिद्यमानस्वरूपेभ्यः, केभ्यः ?—'भूतेभ्यः' पृथिव्यादिलक्षणेभ्यः,किम् ?—'समुत्थाय' उत्पद्य, पुनस्तानि

एव 'अनु विनश्यति' अनु–पश्चाद्विनश्यति विज्ञानघनः, 'न प्रेत्य संज्ञाऽस्ति' प्रेत्य मृत्वा न पुनर्जन्म न परलोकसञ्ज्ञाऽस्ति इति भावार्थः। ततश्च कुतो जीवः ?, युक्त्युपपन्नश्च अयमर्थः, ( इति ) ते मतिः–यतः प्रत्यक्षेणासौ न परिगृह्यते, यतः 'सत्संप्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षं' न चास्य इन्द्रियसम्प्रयोगोऽस्ति, नाप्ययमनुमानगोचरः, यतः -प्रत्यक्षपुरस्सरं पूर्वोपलब्धलिङ्गलिङ्गिसम्बन्धस्मृतिमुखेन तत्प्रवर्त्तते, गृहीताविनाभावस्य धूमादनलज्ञानवत्, न च इह तल्लिङ्गाविनाभावग्रहः, तस्याप्रत्यक्षत्वात्, नापि सामान्यतोदृष्टादनुमानात् सूर्येन्दुगतिपरिच्छेदवत् तदवगमो युज्यते, दृष्टान्तेऽपि तस्याप्यक्षतोऽग्रहणात्, न चागमगम्योऽपि, आगमस्यानुमानादभिन्नत्वात्, तथा च–घटे घटशब्दप्रयोगोपलब्धावुत्तरत्र घटध्वनिश्रवणाद् (ग्रन्था० ६०००) अन्वयव्यतिरेकमुखेन घट एवानुमितिरुपजायते, न च इत्थमात्मशब्दः शरीरादन्यत्र प्रयुज्यमानो दृष्टो यमात्मशब्दात् प्रतिपद्येमहि इति, किं च–आगमानामेकज्ञेयेऽपि परस्परविरोधेन प्रवृत्तेरप्रमाणत्वात्, तथा च–'एतावानेव पुरुषो, यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य, यद्वदन्ति बहुश्रुताः ॥ १ ॥' इत्यागमः, तथा 'न रूपं भिक्षवः पुद्गल' इत्याद्यपरः, पुद्गले रूपं निषिध्यते, अमूर्त्त आत्मा इत्यर्थः, तथा 'अकर्त्ता निर्गुणो भोक्ता' इत्यादिश्चान्यः, तथा 'स वै अयमात्मा ज्ञानमय' इत्याद्यपर इति, एते च सर्वे एव प्रमाणं न भवन्ति, परस्परविरोधेन एकार्थाभिधायकत्वात्, पाटलिपुत्रस्वरूपाभिधायकपरस्परविरुद्धवाक्यपुरुषव्रातवत्, अतो न विद्मः—किमस्ति नास्ति ?, इत्ययं ते अभिप्रायः, तत्र वेदपदानां चार्थं न जानासि, चशब्दात् युक्तिं हृदयं च, तेषामेकवाक्यतायामयमर्थः–'विज्ञानघन एवे'ति ज्ञानदर्शनोपयोगरूपं विज्ञानं ततोऽनन्यत्वात् आत्मा विज्ञानघनः, प्रतिप्रदेशमनन्तविज्ञानपर्यायसङ्घातात्मकत्वाद्वा विज्ञानघनः, एवशब्दोऽवधारणे, विज्ञानघनानन्यत्वात् विज्ञानघन एव, 'एतेभ्यो भूतेभ्यः' क्षित्युदकादिभ्यः 'समुत्थाय' कथञ्चिद्भूत्वा इति हृदयं, यतो न घटाद्यर्थरहितं विज्ञानमुत्पद्यते, न च भूतधर्म एव विज्ञानं, तदभावे मुक्त्यवस्थायां भावात्, तद्भावेऽपि मृतशरीरादावभावात्, न च वाच्यं–घटसत्तायामपि नवतानिवृत्तौ शरीरभावेऽपि चैतन्यनिवृत्तेः नवतावद्भूतधर्मता चैतन्यस्य, घटस्य द्रव्यपर्यायोभयरूपत्वे सति सर्वथा नवताऽनिवृत्तेः, न च इत्थं देहाच्चैतन्यस्यानिवृत्ति, तथा श्रुतावप्युक्तम्—"अस्तमिते आदित्ये याज्ञवल्क्यः चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुषः, आत्मा ज्योतिः सम्राट् इतिहोवाच," तान्येव हि भूतानि विनाशव्यवधानाभ्यां ज्ञेयभावेन विनश्यन्ति, अनु–पश्चात् विनश्यति अनुविनश्यति, स च विवक्षितविज्ञानाऽऽत्मना उपरमते भाविविज्ञानात्मना उत्पद्यते सामान्यविज्ञानसन्तत्या द्रव्यतया अवतिष्ठत इति, न च पूर्वोत्तरयोरत्यन्तभेदः, सति तस्मिन् एकस्य विज्ञानस्य विज्ञानत्वासत्त्वप्रसङ्गात्, 'न प्रेत्यसञ्ज्ञाऽस्ति' इति न प्राक्तनी घटादिविज्ञानसञ्ज्ञाऽवतिष्ठते, साम्प्रतविज्ञानोपयोगविघ्नितत्वात् इत्ययं वेदपदार्थ इति, तथा सौम्य ! प्रत्यक्षतोऽपि आत्मा गम्यत एव, तस्य ज्ञानात् अनन्यत्वात्, तद्धर्मत्वात् चैतन्यस्य, ज्ञानस्य च स्वसंविदितरूपत्वात्, तथा च नीलविज्ञानमेव उत्पन्नमासीत् इतिदर्शनात्, न च अननुभूतेऽर्थे स्मृतिप्रभवो युज्यते, न च भिन्नं ज्ञानमात्मनः, प्रमात्रन्तरवत् विवक्षितप्रमातुः संवेदनानुपपत्तेः, न च स्वात्मनि क्रियाविरोधः, प्रदीपवत् तस्य स्वपरप्रकाशकत्वात्, इत्थं तावत् भवतोऽपि अयमनन्तपर्यायात्मकत्वात् ज्ञानदेशावभासितत्वात् प्रदीपदेशोद्योतितघटवत् देशतः प्रत्यक्ष एव, ज्ञानावरणीयाद्यशेषप्रतिबन्धकापगमसमनन्तराविर्भूतकेवलज्ञानसम्पदां सर्वप्रत्यक्ष इति । अनुमानगम्योऽप्ययं–विद्यमानकर्तृकमिदं शरीरं, भोग्यत्वात्, ओदनादिवत्, व्योमकुसुमं विपक्ष इत्यनुमानं, न च लिङ्गाविनाभूतलिङ्गोपलम्भव्यतिरेकेणानुमानस्य एकान्ततोऽप्रवृत्तिः, हसितादिलिङ्गविशेषस्य ग्रहाख्यलिङ्गाविनाभावग्रहणमन्तरेणापि ग्रहगमकत्वदर्शनात्, न च देह एव ग्रहो, येन अन्यदेहदर्शनमविनाभावग्रहणनियामकं भवतीति । आगमगम्यता त्वस्याभिहितैव । इत्यलं विस्तरेण, गमनिकामात्रमेतत् इति ।

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ ६०१ ॥**

व्याख्या—एवं 'छिन्ने' निराकृते संशये जिनेन जरामरणाभ्याम्–उक्तलक्षणाभ्यां विप्रमुक्तः तेन 'स' इन्द्रभूतिः 'श्रमणः प्रव्रजितः' साधुः संवृत्त इत्यर्थः, पञ्चभिः सह खण्डिकशतैः, खण्डिकाः–छात्रा इति गाथार्थः ॥ ६०१ ॥ इह च वेदपदोपन्यासस्तदा वेदानां सञ्जातत्वात् तेन च प्रमाणत्वेन अङ्गीकृतत्वात् । इति प्रथमो गणधरः समाप्तः ॥

**तं पव्वइयं सोउं बितिओ आगच्छई अमरिसेणं । वच्चामि ण आणेमी पराजिणित्ता ण तं समणं ॥ ६०२ ॥**

व्याख्या—'तम्' इन्द्रभूतिं प्रव्रजितं श्रुत्वा 'द्वितीयः' खल्वग्निभूतिरत्रान्तरे आगच्छति अमर्षेण प्राग्व्यावर्णितस्वरूपेण हेतुभूतेन, व्रजामि णमिति वाक्यालङ्कारे, आनयामि इन्द्रभूतिमिति गम्यते, पराजित्य, णं पूर्ववत्, तं 'श्रमणम्' इन्द्रजालिककल्पमिति गाथार्थः ॥६०२॥ स हि तेन छलादिना विनिर्जित इतीदानीं तस्य का वार्त्ता ? इत्यादि चिन्तयन् जिनसकाशं प्राप्तः, दृष्ट्वा च भगवन्तं विस्मयमुपगत इति, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६०३ ॥

व्याख्या—पूर्ववत्, नामगोत्राभ्यां संलप्तश्चिन्तयामास–नामापि मे वेत्ति, अथवा प्रसिद्धोऽहं, को मां न वेत्ति ?, यदि मे हृद्गतं संशयं ज्ञास्यति अपनेष्यति वा, तदा सर्वज्ञाशङ्का स्यात् इति ॥ अत्रान्तरे भगवताऽभिहितः—

किं मण्णि अत्थि कम्मं उदाहु णत्थित्ति संसओ तुज्झ । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥६०४॥

व्याख्या—किं मन्यसे अस्ति कर्म उत नास्तीति ?, नन्वयमनुचितस्ते संशयः, अयं च संशयस्तव विरुद्धवेदपदनिबन्धनो वर्त्तते, वेदपदानां चार्थं न जानासि, यथा च न जानासि तथा वक्ष्यामः, तेषामयमर्थो–वक्ष्यमाणलक्षण इत्यक्षरार्थः ॥ तानि च अमूनि वेदपदानि–"पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य वाह्यत" इत्यादि, तथा 'पुण्यः पुण्येन' इत्यादि, तेषां चायमर्थः ते मतौ विपरिवर्त्तते–पुरुषः–आत्मा, एवशब्दोऽवधारणे, स च कर्मप्रधानादिव्यवच्छेदार्थः, 'इदं' सर्वं प्रत्यक्षवर्त्तमानं चेतनाचेतनं, ग्निमिति वाक्यालङ्कारे, 'यद् भूतं' यद् अतीतं यच्च 'भाव्यं' भविष्यं, मुक्तिसंसारावपि स एव इत्यर्थः, 'उतामृतत्वस्येशान' इति, उतशब्दोऽप्यर्थे, अपिशब्दश्च समुच्चये, 'अमृतत्वस्य' अमरणभावस्य–मोक्षस्य ईशानः–प्रभुश्चेत्यर्थः 'यत्' इति यच्चेति चशब्दलोपात्, 'अन्नेन' आहारेण 'अतिरोहति' अतिशयेन वृद्धिमुपैति, 'यद् एजति' यत् चलति–पश्वादि, 'यत् न एजति' यन्न चलति–पर्वतादि, 'यद्दूरे' मेर्वादि, 'यद् उ अन्तिके' उशब्दोऽवधारणे, 'अन्तिके' समीपे यत्, तत्पुरुष एव इत्यर्थः, 'यद् अन्तर्' मध्ये 'अस्य' चेतनाचेतनस्य सर्वस्य, यदेव सर्वस्यास्य वाह्यतः, तत्सर्वं पुरुष एव इति, अतः तदतिरिक्तस्य कर्मणः किल सत्ता दुःश्रद्धेया, ते मतिः, तथा प्रत्यक्षानुमानागमगोचरातीतं च एतत्, अमूर्त्तस्य च आत्मनो मूर्त्तकर्मणा कथं संयोग ? इति, कथं वा अमूर्त्तस्य सतः मूर्त्तकर्मकृतावुपघातानुग्रहौ स्यातामिति, लोके तन्त्रान्तरेषु च कर्मसत्ता गीयते 'पुण्यः पुण्येन' इत्यादौ, अतो न विद्मः–किमस्ति नास्ति वा ?, ते अभिप्रायः, तत्र वेदपदानां च अर्थं न जानासि, चशब्दाद्युक्तिं हृदयं च, तेषां वेदपदानामेकवाक्यतया व्यवस्थितानामयमर्थः–एतानि हि पुरुषस्तुतिपराणि वर्त्तन्ते, तथा जात्यादिमदत्यागाय अद्वैतभावनाप्रतिपादकानि वा, न कर्मसत्ताप्रतिषेधकानि, अन्यार्थानि वा, सौम्य ! इत्थं चैतदङ्गीकर्त्तव्यं, यतः नाकर्मणः कर्तृत्वं युज्यते, प्रवृत्तिनिबन्धनाभावात्, एकान्तशुद्धत्वात्, गगनवत्, इतश्च अकर्मा नारम्भते, एकत्वात्, एकपरमाणुवत्, न च अशरीरवानीशानः खल्वारम्भको युज्यते, तस्य स्वशरीरारम्भेऽपि उक्तदोषानतिवृत्तेः, न च अन्यस्तच्छरीरारम्भाय व्याप्रियते, शरीरित्वाशरीरित्वाभ्यां तस्यापि आरम्भकत्वानुपपत्तेः, न च शुद्धस्य देहकरणेच्छा युज्यते, तस्या रागविकल्पत्वात्, तस्मात् कर्मसद्वितीयः पुरुषः कर्ता इति । न च तत्कर्म प्रत्यक्षप्रमाणगोचरातीतं, मत्प्रत्यक्षत्वात्, त्वत्संशयवत्, भवतोऽपि अनुमानगोचरत्वात्, तच्चेदमनुमानम्–शरीरान्तरपूर्वकं वालशरीर, इन्द्रियादिमत्त्वात्, युवशरीरवत्, न च जन्मान्तरातीतशरीरपूर्वकमेवेदं, तस्यापान्तरालगतावभावेन तत्पूर्वकत्वानुपपत्तेः,न चाशरीरिणो नियतगर्भदेशस्थानप्राप्तिपूर्वकः शरीरग्रहो युज्यते, नियामककारणाभावात्, न स्वभाव एव नियामको, वस्तुविशेषाकारणतावस्तुधर्मविकल्पानुपपत्तेः, स्वभावो हि वस्तुविशेषो वा स्यादकारणता वा वस्तुधर्मो वा ?, न तावत् वस्तुविशेषः, अप्रमाणकत्वात्, किं च–स मूर्त्तो वा स्यादमूर्त्तो वा ?, यदि मूर्त्तः, कर्मणोऽस्य च न कश्चिद्भेदः, कर्म्मैव सञ्ज्ञान्तरवाच्यं तत्, अथ अमूर्त्तो, न तर्हि नियामको देहकारणं वा, अमूर्त्तत्वात्, गगनवत्, तथाहि–नामूर्त्तान्मूर्त्तप्रसूतिरिति,न चाकारणता स्वभावः,कारणाभावस्याविशिष्टत्वात् युगपदशेषदेहसंभवप्राप्तेः, अकारणताविशेषाभ्युपगमे च तद्भावप्रसङ्गः, न च वस्तुधर्मः स्वभावः, आत्माख्यवस्तुधर्मत्वेन अमूर्त्तत्वात्, गगनवत्, तस्य देहादिकारणत्वानुपपत्तेः, मूर्त्तवस्तुधर्मत्वे पुनरसौ न पुद्गलपर्यायमतिवर्त्तते, कर्मापि च पुद्गलपर्यायानन्यरूपमेव इत्यविप्रतिपत्तिरिति, तस्मात् यच्छरीरपूर्वकं वालशरीर तत्कार्मणमिति, आगमगम्यं च एतत्, 'पुण्यः पुण्येन पापः पापेन कर्मणा' इत्यादिश्रुतिवचनप्रामाण्यात्, तथा अमूर्त्तस्यापि आत्मनो विशिष्टपरिणामवतः मूर्त्तकर्मपुद्गलसम्बन्धोऽविरुद्ध एव, आकाशस्येव घटादिसंयोग इति, तथा अमूर्त्तस्यापि मूर्त्तकृतावुपघातानुग्रहावविरुद्धौ, विज्ञानस्य मदिरापानौषधादिभिः उपघातानुग्रहदर्शनात्, इत्यलं प्रसङ्गेनेति ।—

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ ६०५ ॥

व्याख्या—इत्थं छिन्ने संशये जिनेन जरामरणविप्रमुक्तेन स श्रमणः प्रव्रजितः पञ्चभिः सह खण्डिकशतैः, भावार्थः सुगम इति गाथार्थः ॥ ६०५ ॥ द्वितीयो गणधरः समाप्तः ॥

ते पव्वइए सोउं तइओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६०६ ॥

व्याख्या—'तौ' इन्द्रभूतिअग्निभूती प्रव्रजितौ श्रुत्वा तृतीयो वायुभूतिनामा आगच्छति जिनसकाशं, उभयनिष्क्रमणाकर्णनादपेताभिमानः सञ्जातसर्वज्ञप्रत्ययः खलु अत एवाहं व्रजामि, णमिति वाक्यालङ्कारे, वन्दे भगवन्तं,

तथा वन्दित्वा पर्युपासयामि इति गाथार्थः ॥ ६०६ ॥ इति सञ्जातसङ्कल्पो भगवत्समीपं गत्वा अभिवन्द्य च भगवन्तं तदग्रतस्तस्थौ, अत्रान्तरे—

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । णामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६०७ ॥**

व्याख्या—पूर्ववत् ॥ इत्थमपि संलप्तो हृद्गतं संशयं प्रष्टुं क्षोभादसमर्थो भगवताऽभिहितः—

**तज्जीवतस्सरीरंति संसओ णवि य पुच्छसे किंचि । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥ ६०८ ॥**

व्याख्या—स जीवः तदेव शरीरमिति, एवं संशयस्तव, नापि च पृच्छसि किञ्चित् विदिताशेषतत्त्वम्, अयं स संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनो वर्त्तते, वेदपदानां चार्थं न जानासि, तेषां तव संशयनिबन्धनानामयमर्थो—वक्ष्यमाणलक्षण इति गाथाक्षरार्थः ॥ तानि चामूनि परस्परविरुद्धानि वेदपदानि—'विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्यसञ्ज्ञाऽस्ति' इत्यादीनि, तथा 'सत्येन लभ्यः तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि शुद्धो, यं पश्यन्ति धीरा यतयः संयतात्मानः' इत्यादीनि चेति, एतेषां चायमर्थः ते बुद्धौ प्रतिभासते—'विज्ञानघने'त्यादीनां पूर्ववत् व्याख्या, नवरं न प्रेत्य सञ्ज्ञा अस्ति—न देहात्मनोः भेदसञ्ज्ञाऽस्ति, भूतसमुदायमात्रधर्मत्वात् चैतन्यस्य, ततश्चामूनि किल शरीरातिरिक्तात्मोच्छेदपराणि वर्त्तन्ते, 'सत्येन लभ्य' इत्यादीनि तु देहातिरिक्तात्मप्रतिपादकानि इति, अतः संशयः, युक्ता च भूतसमुदायमात्रधर्मता चेतनायाः, ते मतिः, तत्र एवोपलब्धेर्गौरतादिवदिति, तथा प्रत्यक्षादि-

१ बहुलमेतत्सिद्धसेनमिश्रयुक्तेश्चौरादिकोऽयं ज्ञेयो, यद्वा पर्युपादासेर्यजन्तात्क्विपो नाम्न इति णिचि रूपमेतत्, पर्युपासे इति क्वचिदस्त्यपि.

प्रमाणगोचरातिक्रान्तश्च देहातिरिक्त आत्मेति, तत्र वेदपदानां चार्थं न जानासि, चशब्दाद्युक्तिं हृदयं च, तेषामयमर्थः—तत्र 'विज्ञानघने'त्यादीना प्रथमगणधरवक्तव्यतायां व्याख्यातत्वात् न प्रदर्श्यते, 'सत्येन लभ्य' इत्यादीना तु सुगमत्वादिति । न च तत्रैव उपलब्ध्या हेतुभूतया चेतनायाः शरीरधर्मताऽनुमातुं युज्यते, तद्धर्मतया तत्रोपलम्भासिद्धेः, न च तस्मिन् सत्येव उपलम्भः तद्धर्मत्वानुमानाय अलं, व्यभिचारदर्शनाद्, यतः स्पर्शे सत्येव रूपादयः उपलभ्यन्ते, न च तद्धर्मता तेषामिति, तस्मात् शरीरातिरिक्तात्माख्यपदार्थधर्मश्चेतना इति, देशप्रत्यक्षश्चायम् , अवग्रहादीनां स्वसंवेद्यत्वात्, भावना प्रथमगणधरवत् अवसेया, अनुमानगम्योऽपि, तच्चेदम्—देहेन्द्रियातिरिक्त आत्मा, तद्विगमेऽपि तदुपलब्धार्थानुसरणात्, पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवत्, आगमगम्यता तु अस्य प्रसिद्धा एव 'सत्येन लभ्य' इत्यादिवेदपदप्रामाण्याभ्युपगमादिति, अलं विस्तरेण, गमनिकामात्रमेतत् ।

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिँ सह खंडियसएहिँ ॥ ६०९ ॥**

व्याख्या—पूर्ववत् ॥ तृतीयो गणधरः समाप्त इति । अस्य च प्रथमगणधरादिदं नानात्वं—तस्य जीवसत्ताया संशयः, अस्य तु शरीरातिरिक्ते खल्वात्मनि, न तु तस्य सत्तायामिति ॥

**ते पव्वइए सोउं वियत्तो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१० ॥**

व्याख्या—तान् प्रव्रजितान् श्रुत्वा इन्द्रभूतिप्रमुखान् व्यक्तो नाम गणधरः आगच्छति जिनसकाशं, किंविशिष्टेनाध्यवसायेन इत्याह—व्रजामि, णमिति वाक्यालङ्कारे, वन्दामि भगवन्तं जिनं, तथा वन्दित्वा पर्युपासयामि इति गाथाक्षरार्थः ॥ इत्येवंभूतेन सङ्कल्पेन गत्वा भगवन्तं प्रणम्य तत्पादान्तिके भगवत्सम्पदुपलब्ध्या विस्मयोत्फुल्लनयनस्तस्थौ, अत्रान्तरे—

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६११ ॥**

व्याख्या—पूर्ववत् ।

**किं मण्णि पंच भूया अत्थि नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥ ६१२ ॥**

व्याख्या—किं 'पञ्च भूतानि' पृथिव्यादीनि सन्ति न सन्तीति वा मन्यसे, व्याख्यान्तरं पूर्ववत् । संशयश्च तवायं विरुद्धवेदपदश्रुतिसमुत्थो वर्त्तते, शेषं पूर्ववत्, तानि चामूनि वेदपदानि वर्त्तन्ते—'स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरञ्जसा विज्ञेय' इत्यादीनि, तथा 'द्यावा पृथिवी' इत्यादीनि च, तथा 'पृथ्वी देवता आपो देवता' इत्यादीनि च, एतेषां चायमर्थः तव प्रतिभासते—'स्वप्नोपमं' स्वप्नसदृशं, वैनिपातोऽवधारणे 'सकलम्' अशेषं जगत् 'एष ब्रह्मविधिः' एष परमार्थप्रकार इत्यर्थः 'अञ्जसा' प्रगुणेन न्यायेन 'विज्ञेयो' विज्ञातव्यो भाव्य इत्यर्थः, ततश्चामूनि किल भूतनिह्नवपराणि, शेषाणि तु सत्ताप्रतिपादकानीति, अतः संशयः, तथा भूताभाव एव च युक्त्युपपन्नः, ते चित्तविभ्रमः, तेषां प्रमाणतोऽग्रहणात् , तथाहि—चक्षुरादिविज्ञानस्य आलम्बनं परमाणवो वा स्युः परमाणुसमूहो वा ?, न तावदणवो, विज्ञाने अप्रतिभासनात, नापि तत्समूहो, भ्रान्तत्वात्, द्विचन्द्रवत् , भ्रान्तता चास्य समूहिभ्यस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् अवस्तुत्वात् , अतः कुतो भूतसत्तेति, तत्र वेदपदानां चार्थं न जानासि, चशब्दाद्युक्तिं हृदयं च 'तेषां' तवसंशयनिबन्धनाना वेदपदा-

नामयमर्थः, 'स्वप्नोपमं वै सकल'मित्यादीन्यध्यात्मचिन्तायां मणिकनकाङ्गनादिसंयोगस्यानियतत्वादस्थिरत्वादसारत्वाद्विपाककटुकत्वादास्थानिवृत्तिपराणि वर्त्तन्ते, न तु तदत्यन्ताभावप्रतिपादकानि इति, तथा 'द्यावा पृथिवी'त्यादीनि तु सुगमानि, तथा सौम्य ! न च चक्षुरादिविज्ञाने परमाणवो नावभासन्ते, तेषां तुल्यातुल्यरूपत्वात्, तुल्यरूपस्य च चक्षुरादिविज्ञाने प्रतिभासनात्, न च तुल्यं रूपं नास्त्येव, तदभावे खल्वेकपरमाणुव्यतिरेकेणान्येषामणुत्वाभावप्रसङ्गात्, न च तद् अन्यव्यावृत्तिमात्रं परिकल्पितमेव, स्वरूपाभावेऽन्यव्यावृत्तिमात्रतायां तस्य खपुष्पकल्पत्वप्रसङ्गात्, तथा चाशेषपदार्थव्यावृत्तमपि खपुष्पं स्वरूपाभावान्न सत्तां धारयति, न च तद्रूपमेव सजातीयेतरासाधारणं तदन्यव्यावृत्तिः, तस्य तेभ्यः स्वभावभेदेन व्यावृत्तेः, स्वभावभेदानभ्युपगमे च सजातीयेतरभेदानुपपत्तेः, सजातीयैकान्तव्यावृत्तौ च विजातीयव्यावृत्तावनणुत्ववदणुत्वाभावप्रसङ्गः, भावे च तुल्यरूपसिद्धिरिति, न चेयमनिमित्ता तुल्यबुद्धिः, देशादिनियमेनोत्पत्तेः, न च स्वप्नबुद्ध्या व्यभिचारः, तस्या अप्यनेकविधनिमित्तबलेनैव भावात्, आह च भाष्यकारः—"अणुभूय दिट्ठ चिन्तिय सुय पयइवियार देवयाऽणूया । सुमिणस्स निमित्ताइं पुण्णं पावं च नाभावो ॥ १ ॥" न च भूताभावे स्वप्नास्वप्नगन्धर्वपुरपाटलिपुत्रादिविशेषो युज्यते, न चालयविज्ञानगतशक्तिपरिपाकसमनन्तरोपजातविकल्पविज्ञानसामर्थ्यमस्यास्तुल्यबुद्धेः कारणं, स्वलक्षणादस्वलक्षणानुपपत्तेः, नापि पारम्पर्येण तदुत्पत्तिर्युज्यते, स्वलक्षणसामान्यलक्षणातिरिक्तवस्त्वभावेन पारम्पर्यानुपपत्तेः, बाह्यनीलाद्यभावे च शक्तिविपाकनियमो न युज्यते, नियामकसहकारिकारणाभावात् ।

---

१ अनुभूत दृष्ट चिन्तित श्रुत प्रकृतिविकार. देवताऽनूप. । स्वप्नस्य निमित्तानि पुण्य पाप च नाभाव. ॥ १ ॥

किंच—आलयात्पीतादिसंवेदनजननशक्तयो भिन्ना वा स्युरभिन्ना वा ?, यद्यभिन्नाः सर्वैकत्वप्रसङ्गः, एकालयाभेदान्यथानुपपत्तेः, ततश्च कुतस्नासां पीतादिप्रतिभासहेतुता ?, प्रयोगश्च—नीलविज्ञानहेतुतया परिकल्पिता शक्तिर्न तद्धर्मा, शक्त्यन्तररूपत्वात्, शक्त्यन्तरस्वात्मवत्, अथ भिन्नास्तथाप्यवस्तुसत्यो वा स्युः वस्तुसत्यो वा ?, यद्यवस्तुसत्यः समूहवत्कुतः प्रत्ययत्वम् ?, अथ वस्तुसत्यो बाह्योऽर्थः केन वार्यत इति ?, एवमणूनां तुल्यरूपग्रहणं तदाभासज्ञानोत्पत्तेः, न च विषयबलोपजातसंवेदनाकारस्य विषयाद्भेदाभेदविकल्पद्वारेणानुपपत्तिर्भाव्या, विशिष्टपरिणामोपेतार्थसन्निधावात्मनः कालक्षयोपशमादिसव्यपेक्षस्य नीलादिविज्ञानमुत्पद्यते, तथापरिणामाद्, इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा नीलात्संवेदनान्नीलसंवेदनान्तरानुपपत्तिः, प्रागुपन्यस्तविकल्पयुगलकसम्भवादित्येवं परमाणुतुल्यरूपग्रहोऽविरुद्धः, अतुल्यरूपं तु योगिगम्यत्वात् विशिष्टक्षयोपशमाभावात्सर्वथा न परिगृह्यते, न च परमाणूनां बहुत्वेऽपि विशेषाभावाद् घटशरावादिबुद्धेः तुल्यत्वप्रसङ्गो, विशेषाभावस्यासिद्धत्वात्, तथा च परमाणव एव विशिष्टपरिणामवन्तो घट इति, न च परमाणुसमुदायातिरिक्तानि भूतानि इत्यलं प्रसङ्गेन ।

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वईओ पंचहिँ सह खंडियसएहिँ ॥ ६१३ ॥

व्याख्या—पूर्ववत् । इति चतुर्थो गणधरः समाप्तः ।

ते पव्वइए सोउं सुहमो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामी ॥ ६१४ ॥

व्याख्या—'तान्' इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा सुधर्मः पञ्चमो गणधर आगच्छति जिनसकाशं, किम्भूतेनाध्यवसायेन इत्याह—पश्चार्द्धं पूर्ववत् । स च भगवन्तं दृष्ट्वा अतीव मुमुदे, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६१५ ॥

व्याख्या—पूर्ववत् ।

किं मण्णि जारिसो इह भवंमि सो तारिसो परभवेऽवि? । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥६१६॥

व्याख्या—किं मन्यसे ? यो मनुष्यादिर्यादृश इह भवे स तादृशः परभवेऽपि, नन्वयमनुचितस्ते संशयः, व्याख्यान्तर पूर्ववत्, संशयश्च तवायं विरुद्धवेदपदश्रुतिनिबन्धनो वर्त्तते, तानि चामूनि—"पुरुषो वै पुरुषत्वमश्नुते' पुरुषत्वं प्राप्नोतीत्यर्थः 'पशवः पशुत्वम्' इत्यादीनि, तथा 'शृगालो वै एष जायते यः सपुरीषो दह्यते' इत्यादीनि च, तत्र वेदपदानां चार्थं न जानासि, चः पूर्ववत्, तेषामयमर्थो—वक्ष्यमाणलक्षण इत्यक्षरार्थः । तत्र वेदपदाना त्वमित्थमर्थं मन्यसे—पुरुषो मृतः सन् पुरुषत्वमश्नुते, पुरुषत्वमेव प्राप्नोतीत्यर्थः, तथा पशवो—गवादयः पशुत्वमेवेत्यमूनि भवान्तरसादृश्याभिधायकानि, तथा 'शृगालो वै एष' इत्यादीनि तु भवान्तरे वैसादृश्यख्यापकानीत्यतः संशयः, कारणानुरूपं च कार्यमुत्पद्यते इति तेऽभिप्रायो, यतो न शालिबीजाद्गोधूमाङ्कुरप्रसूतिः इति, तत्र वेदपदानामयमर्थः—पुरुषः खल्विह जन्मनि स्वभावमार्दवार्जवादिगुणयुक्तो मनुष्यनामगोत्रे कर्मणी बद्ध्वा मृतः सन् पुरुषत्वमश्नुते, न तु नियमतः, एवं पशवोऽपि पशुभवे मायादिगुणयुक्ताः पशुनामगोत्रे कर्मणी बद्ध्वा मृताः सन्तः पशुत्वमासादयन्ति, न तु नियोगतः इति, कर्मसापेक्षो जीवाना

गतिविशेष इत्यर्थः, शेषाणि तु सुगमानि, न च नियमतः कारणानुरूपं कार्यमुत्पद्यते, वैसादृश्यस्यापि दर्शनात्, तद्यथा-शृङ्गाच्छरो जायते, तस्मादेव सर्षपानुलिप्तात् तृणानीति, तथा गोलोमाविलोमभ्यो दूर्वेति, एवमनियमः, अथवा कारणानुरूपकार्यपक्षेऽपि भवान्तरवैचित्र्यमस्य युक्तमेव, यतो भवाङ्कुरबीजं सौम्य! सात्मकं कर्म, तच्च तिर्यङ्नरनारकामरगत्यायुष्कभेदभिन्नत्वात् चित्रमेव, अतः कारणवैचित्र्यादेव कार्य्यवैचित्र्यमिति, वस्तुस्थित्या तु सौम्य! न किञ्चिदिह लोके परलोके वा सर्वथा समानमसमानं वाऽस्ति, तथा चेह युवा निजैरप्यतीतानागतैर्बालवृद्धादिपर्यायैः सर्वथा न समानः, अवस्थाभेदग्रहणात्, नापि सर्वथाऽसमानः, सत्ताद्यनुगमदर्शनाद्, एवं परलोकेऽपि मनुजो देवत्वमापन्नो न सर्वथा समानोऽसमानो वा, इत्थं चैतदङ्गीकर्त्तव्यं, अन्यथा दानदयादीनां वैयर्थ्यप्रसङ्गात्।

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं॥ ६१७॥**

व्याख्या—पूर्ववत्॥ इति पञ्चमो गणधरः समाप्तः।

**ते पव्वइए सोउं मंडिओ आगच्छइ जिणसगासं। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि॥ ६१८॥**

व्याख्या—तानिन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा मण्डिकः षष्ठो गणधरः आगच्छति जिनसकाशं, किम्भूतेनाध्यवसायेनेत्याह—वच्चामि णमित्यादि पूर्ववत्। स च भगवत्समीपं गत्वा प्रणम्य च भुवननाथमतीव मुदितः तदग्रतस्तस्थौ, अत्रान्तरे—

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं॥ ६१९॥**

व्याख्या—पूर्ववत्।

**किं मन्नि बंधमोक्खा अत्थि ण अत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो॥ ६२०॥**

व्याख्या—किं मन्यसे वन्धमोक्षौ स्तो न वा?, नन्वयमनुचितस्ते संशयः, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिसमुत्थो वर्त्तते, वेदपदानां चार्थं न जानासि, चः पूर्ववत्, तेषामयमर्थो—वक्ष्यमाणलक्षण इत्यर्थः। तानि चामूनि वेदपदानि—'स एष विगुणो विभुर्न वध्यते संसरति वा, न मुच्यते मोचयति वा, न वा एष बाह्यमभ्यन्तरं वा वेद' इत्यादीनि, तथा 'नह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः' इत्यादीनि च, एषां चायमर्थस्ते चेतसि प्रतिभासते—स एषः—अधिकृतो जीवः विगुणः—सत्त्वादिगुणरहितः विभुः—सर्वगतः न बध्यते—पुण्यपापाभ्यां न युज्यत इत्यर्थः, संसरति वा, नेत्यनुवर्त्तते, न मुच्यते—न कर्मणा वियुज्यते, बन्धाभावात्, मोचयति वाऽन्यम्, अनेनाकर्त्तृकत्वमाह, न वा एष बाह्यम्—आत्मभिन्नं महदहङ्कारादि अभ्यन्तरं—स्वरूपमेव वेद—विजानाति, प्रकृतिधर्मत्वात् ज्ञानस्य, प्रकृतेश्चाचेतनत्वाद्बन्धमोक्षानुपपत्तिरिति भावः। ततश्चामूनि किल बन्धमोक्षाभावप्रतिपादकानि, तथा 'नह वै' नैवेत्यर्थः, सशरीरस्य प्रियाप्रिययोरपहतिरस्तीति—बाह्याध्यात्मिकानादिशरीरसन्तानयुक्तत्वात् सुखदुःखयोरपहतिः संसारिणो नास्तीत्यर्थः, अशरीरं वा वसन्तम्—अमूर्त्तमित्यर्थः, प्रियाप्रिये न स्पृशतः, कारणाभावादित्यर्थः, अमूनि च बन्धमोक्षाभिधायकानीति, अतः संशयः, तथा सौम्य! भवतोऽभिप्रायो—बन्धो हि जीवकर्मसंयोगलक्षणः, स आदिमानादिरहितो वा स्यात्?, यदि प्रथमो विकल्पस्ततः किं पूर्वमात्मप्रसूतिः पश्चात्कर्मणः उत पूर्वं कर्मणः पश्चादात्मनः आहोश्विद्युगपदुभयस्येति?, किं चातः, न तावत्पूर्वमात्मप्रसूतिर्युज्यते, निर्हेतुकत्वाद्, व्योमकुसुमवत्, नापि कर्मणः प्राक् प्रसूतिः, कर्त्तुरभावात्, न चाकर्तृकं कर्म भवति, युगपत्प्रसूतिरप्यकारणत्वादेव न युज्यते, न चानादिमत्यप्यात्मनि बन्धो युज्यते, बन्धकारणाभावाद् गगनस्येव, इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा मुक्तस्यापि बन्धप्रसङ्गः, तथा च सति नित्यमोक्षत्वान्मोक्षानुष्ठानवैयर्थ्यम्, अथ द्वितीयः पक्षः, तथापि नात्मकर्मवियोगो भवेद्, अनादित्वाद्, आत्माकाशसंयोगवद्, इत्थं मोक्षो न घटते, तथा देहकर्मसन्तानानादित्वाच्च कुतो मोक्ष इति ते मतिः। तत्र वेदपदानामयमर्थः—स एष—मुक्तात्मा विगताः छाद्मस्थिकज्ञानादयो गुणा यस्य स विगुणः विभुः—विज्ञानात्मना सर्वगतः न बध्यते—मिथ्यादर्शनादिबन्धकारणाभावात् संसरति वा—मनुजादिभवेषु कर्मबीजाभावात्, नेत्यनुवर्त्तते, न मुच्यते, मुक्तत्वात्, मोचयति वा तदा स्वल्पदेशदानत्रिकलत्वात्, नेत्यनुवर्त्तते, तथा संसारिकसुखनिवृत्त्यर्थमाह—नवा एष—मुक्तात्मा बाह्यं—स्रक्चन्दनादिजनितम् आभ्यन्तरम्—आभिमानिकं वेद—अनुभवात्मना विजानातीत्येवमेतानि मुक्तात्मस्वरूपाभिधायकान्येव, शेषाणि तु सुगमानि, तथा जीवकर्मणोरप्यनादिमतोरनादिमानेव संयोगो, धर्माधर्मास्तिकायाकाशसंयोगवदिति, न चानादित्वात्संयोगस्य वियोगाभावः, यतः काञ्चनोपलयोः संयोगोऽनादिसन्ततिगतोऽपि क्षारमृत्पुटपाकादिद्रव्यसंयोगोपायतो विघटते, एवं जीवकर्मणोरपि ज्ञानदर्शनचारित्रयोगोपायाद्वियोग इति, न चानादित्वात्सर्वस्य कर्मणो जीवकृतत्वानुपपत्तिः, यतो वर्त्तमानतया मिथ्यादर्शनादिसव्यपेक्षात्मनोपात्तं कृतमित्युच्यते, सर्वं च वर्त्तमानत्वेन मिथ्यादर्शनादिसव्यपेक्षात्मोपात्तं कर्म अनादि च, कालवत्, यथा हि यावानतीतः कालस्तेनाशेषेण वर्त्तमानत्वमनुभूतमथ चासावनादिरिति, न चामूर्त्तस्य

मूर्त्तसंयोगो न घटते, घटाकाशसंयोगदर्शनाद्, वियोगस्तु दर्शित एव, न च मुक्तस्यापि कर्मयोगः, तस्य कषायादिपरिणामाभावात्, कषायादियुक्तश्च जीवः कर्मणो योग्यान् पुद्गलानादत्ते इति, न चेत्थं भव्योच्छेदप्रसङ्गः, अनागतकालवत्तेषामनन्तत्वात्, न च परिमितक्षेत्रे तेषामवस्थानाभावः, अमूर्त्तत्वात्, प्रतिद्रव्यमनन्तकेवलज्ञानदर्शनसम्पातवन्नर्त्तकीनयनविज्ञानसम्पातवद्वा, इत्यलं प्रसङ्गेन ।

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ अद्धुट्ठहिं सह खंडियसएहिं ॥ ६२१ ॥

व्याख्या—पूर्ववत्, नवरम्-अर्द्धचतुर्थैः सह खण्डिकशतैः । इति षष्ठो गणधरः समाप्तः ।

ते पव्वइए सोउं मोरिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६२२ ॥

व्याख्या—पूर्ववत्, नवरं मौर्य आगच्छति जिनसकाशमिति नानात्वम् ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६२३ ॥

सपातनिका व्याख्या पूर्ववदेव ।

किं मन्नसि संति देवा उयाहु न सन्तीति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६२४ ॥

व्याख्या—किं सन्ति देवा उत न सन्तीति मन्यसे, व्याख्यान्तरं प्राग्वत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिप्रभवो वर्त्तते, पश्चार्द्धं पूर्ववत् । तानि चामूनि वेदपदानि-'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं गच्छती' त्यादीनि, तथा 'अपाम सोमम्, अमृता अभूम, अगमन् ज्योतिः, अविदाम देवान्, किं नूनमस्मांस्तृणवदरातिः, किमु धूर्त्तिरमृतमर्त्यस्य' त्यादीनि च, तथा 'को जानाति ? मायोपमान् गीर्वाणानिन्द्रयमवरुणकुवेरादीनि' त्यादि, एतेषां चायमर्थस्ते मतौ प्रतिभासते-यथा अपाम-पीतवन्तः सोमं-लतारसम् अमृता-अमरणधर्माणः अभूम-भूताः स्म, अगमन्-गताः ज्योतिः-स्वर्गम्, अविदाम देवान्-देवत्वं प्राप्ताः स्मः, किं नूनमस्मांस्तृणवत्करिष्यतीति, अयमर्थः-अरातिर्व्याधिः किमु-प्रश्ने धूर्त्तिः-जरा अमृतमर्त्त्यस्य-अमृतत्वं प्राप्तस्य पुरुषस्येत्येवं द्रष्टव्यम्, अमरणधर्मिणो मनुष्यस्य किं करिष्यन्ति व्याधयः ? । तथा सौम्य ! त्वमित्थं मन्यसे-नारकाः सङ्क्लिष्टासुरपरमाधार्मिकायत्ततया कर्मवशतया च परतन्त्रत्वात् स्वयं च दुःखसम्प्रतप्तत्वादिहागन्तुमशक्ता एव, अस्माकमप्यनेन शरीरेण तत्र कर्मवशतया एव गन्तुमशक्यत्वात् प्रत्यक्षीकरणोपायासम्भवाद् आगमगम्या एव, श्रुतिस्मृतिग्रन्थेषु श्रूयमाणाः श्रद्धेया भवन्तु, ये पुनर्देवाः स्वच्छन्दचारिणः कामरूपाः प्रकृष्टदिव्यप्रभावात् इहागमनसामर्थ्यवन्तस्ते किमितीह नागच्छन्ति ? यतो न दृश्यन्त इति, अतो न सन्ति ते, अस्मदाद्यप्रत्यक्षत्वात्, खरविषाणवत्, तत्र वेदपदानां चेत्यादि पूर्ववत्, तत्र वेदपदानामयमर्थः-'को जानाति ? मायोपमान् गीर्वाणानिन्द्रयमवरुणकुवेरादीनि'त्यादि, तत्र परमार्थचिन्तायां सन्ति देवाः, मत्प्रत्यक्षत्वात्, मनुष्यवत्, भवतोऽपि, आगमाच्च सर्वथा, सर्वमनित्यं मायोपमं, न तु देवनास्तित्वपराणि वेदवाक्यानीति, तथा स्वच्छन्दचारिणोऽपि चामी यदिह नागच्छन्ति तत्रेदं कारणम्-नागच्छन्तीह सदैव सुरगणाः, सङ्क्रान्तदिव्यप्रेमत्वाद्विषयप्रसक्तत्वात् प्रकृष्टरूपगुणस्त्रीप्रसक्तविच्छिन्नरम्यदेशान्तरगतमनुष्यवत्, तथाऽसमाप्तकर्त्तव्यत्वाद्, बहुकर्त्तव्यताप्रसाधनप्रयुक्तविनीतपुरुषवत्, तथाऽनधीनमनुजकार्यत्वात्, नारकवत्, अनभिमतगेहादौ निःसङ्गयतिवद्वेति, तथाऽशुभत्वान्नरभवस्य तद्गन्धासहिष्णुतया नागच्छन्ति, मृतकडेवरमिव हंसा इति, जिनजन्ममहिमादिषु पुनर्भक्तिविशेषाद् भवान्तररागतश्च क्वचिदागच्छन्त्येव, तथा चैते साम्प्रतं भवतोऽपि प्रत्यक्षा एव, शेषकालमपि सामान्यतश्चन्द्रसूर्यादिविमानालयप्रत्यक्षत्वात्तद्वासिसिद्धिः, इत्यलं प्रसङ्गेन ।

छिन्नंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ अद्धुट्ठहिं सह खंडियसएहिं ॥ ६२५ ॥

व्याख्या—पूर्ववत् । समाप्तः सप्तमो गणधरः ।

ते पव्वइए सोउं अकंपिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६२६ ॥

व्याख्या—पूर्ववन्नवरमकम्पिकः आगच्छतीति नानात्वम् ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६२७ ॥

व्याख्या—सपातनिका पूर्ववदेव ।

किं मन्ने नेरइया अत्थि न अत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६२८ ॥

व्याख्या—नरान् कायन्तीति नरकास्तेषु भवा नारकाः, कि नारकाः सन्ति न सन्तीति मन्यसे, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिसमुद्भवो वर्त्तते, शेषं पूर्ववत्, वेदपदानि चामूनि-'नारको वै एष जायते, यः शूद्रान्नमश्नाति' इत्यादि, 'एष' ब्राह्मणो नारको भवति यः शूद्रान्नमत्ति, 'नह वै प्रेत्य नरके नारकाः सन्ती' त्यादि, गतार्थं, युक्तय एवोच्यन्ते-तत्राकम्पिकाभिप्रायमाह—सौम्य ! त्वमित्थं मन्यसे-देवा हि चन्द्रादयस्तावत् प्रत्यक्षा एव, अन्येऽप्युपयाचितादिफलदर्शनानुमानतोऽवगम्यन्ते, नारकास्त्वभिधानव्यतिरिक्तार्थशून्याः कथं गम्यन्त इति ?, प्रयोगश्च-न सन्ति

नारकाः, साक्षादनुमानतो वाऽनुपलब्धेः, व्योमकुसुमवत्, व्यतिरेके देवाः, इत्थं पूर्वपक्षमाशङ्क्य भगवानेवाह—सौम्य ! ते हि नारकाः कर्मपरतन्त्रत्वादिहागन्तुमसमर्थाः, भवद्विधानामपि तत्र गमनशक्त्यभावः, कर्मपरतन्त्रत्वादेव, अतो भवद्विधानां तदनुपलब्धिरिति, क्षायिकज्ञानसम्पदुपेतानां तु वीतरागाणां प्रत्यक्षा एव, तेषां सकलज्ञानयुक्तत्वाद् अपास्तसमस्तावरणत्वात्, न चाशेषपदार्थविदः साक्षात्कारिक्षायिकभावस्था न सन्ति, यतो ज्ञस्वभाव आत्मा ज्ञानावरणीयप्रतिबद्धस्वभावत्वात् नाशेषं वस्तु विजानाति, तत्क्षयोपशमजस्तु तस्य स्वरूपाविर्भावविशेषो दृश्यते, तथा च कश्चिद्बहु जानाति कश्चिद्बहुतरमिति क्षायोपशमिकोऽयं ज्ञानवृद्धिभेद इति, न ह्ययं ज्ञानविशेषः खल्वात्मनस्तत्स्वाभाव्यमन्तरेणोपपद्यते इति, एवं चापगताशेषज्ञानावरणस्य ज्ञस्वभावत्वादशेषज्ञेयपरिच्छेदकत्वमिति, तथा चास्मिन्नेवार्थे लौकिको दृष्टान्तः, यथा हि पद्मरागादिरुपलविशेषो भास्वरस्वरूपोऽपि स्वगतमलकलङ्काङ्कितस्तदा वस्त्वप्रकाशयन्नपि क्षारमृत्पुटपाकाद्युपायतस्तदपाये प्रकाशयति, एवमात्मापि ज्ञस्वभावः कर्ममलिनः प्रागशेषं वस्त्वप्रकाशयन्नपि सम्यक्त्वज्ञानतपोविशेषसंयोगोपायतोऽपेतसमस्तावरणः सर्वं वस्तु प्रकाशयति, प्रतिबन्धकाभावात्, न चाप्रतिबद्धस्वभावस्यापि पद्मरागवत्सर्वत्र प्रकाशनव्यापाराभावः, तस्य ज्ञस्वभावत्वाद्, न हि ज्ञो ज्ञेये सति प्रतिबन्धशून्यो न प्रवर्त्तते, न च प्रकाशकस्वभावपद्मरागेणैव व्यभिचारो भावयितव्यः, तस्य सन्निकृष्टार्थप्रकाशनात्, विप्रकृष्टविषये तु देशविप्रकर्षेणैव प्रतिबद्धत्वादप्रवृत्तिः, न चात्मनोऽपि देशविप्रकर्ष एवापरिच्छेदहेतुः, तस्यागमगम्येषु सूक्ष्मव्यवहितविप्रकृष्टेष्वखिलपदार्थेष्वधिगतिसामर्थ्यदर्शनात्, तथा च परमाणुमूलकीलोदकामरलोकचन्द्रोपरागादिपरिच्छेदसामर्थ्यमस्यागमोपदेशतः क्षयोपशमवतोऽपि दृश्यते, एवं साक्षात्कारि क्षायिकमपि प्रतिपत्तव्यमिति । एवं क्षायिकज्ञानवतां नारकाः प्रत्यक्षा एव, भवतोऽप्यनुमानगम्याः, तच्चेदम्—विद्यमानभोक्तृकं प्रकृष्टपापफलं, कर्मफलत्वात्, पुण्यफलवत्, न च तिर्यङ्नरा एव प्रकृष्टपापफलभुजः, तस्यौदारिकशरीरवता वेदयितुमशक्यत्वात्, अनुत्तरसुरजन्मनिबन्धनप्रकृष्टपुण्यफलवत्, तथाऽऽगमगम्याश्च ते, यत एवमागमः—"सततानुबन्धमुक्तं दुःखं नरकेषु तीव्रपरिणामम् । तिर्यक्षूष्णभयक्षुत्तृडादिदुःखं सुखं चाल्पम् ॥ १ ॥ सुखदुःखे मनुजानां मनःशरीराश्रये बहुविकल्पे । सुखमेव तु देवानामल्पं दुःखं तु मनसि भवम् ॥ २ ॥' इत्यादि, एवम्—

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ तिहि उ सह खंडियसएहिं ॥ ६२९ ॥**

व्याख्या—पूर्ववन्नवरं त्रिभिः सह खण्डिकशतैरिति ॥ अष्टमो गणधरः समाप्तः ॥

**ते पव्वइए सोउं अयलभाया आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३० ॥**

व्याख्या—पूर्ववन्नवरम्—अचलभ्राता आगच्छति जिनसकाशमिति ।

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६३१ ॥**

व्याख्या—सपातनिका पूर्ववत् ।

**किं मन्नि पुण्णपावं अत्थि न अत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६३२ ॥**

व्याख्या—किं पुण्यपापे स्तः न वा ? मन्यसे, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिप्रभवो दर्शनान्तरविरुद्धश्रुतिप्रभवश्च, तत्र वेदपदानां चार्थं न जानासि, चशब्दाद्युक्तिं हृदयं च, तेषामयमर्थ इत्यक्षरार्थः । तानि चामूनि वेदपदानि—'पुरुष एवेदं ग्नि सर्वं' मित्यादीनि यथा द्वितीयगणधरे, व्याख्यापि तथैव, स्वभावोपन्यासोऽपि तथैव, तथा सौम्याचलभ्रातः ! त्वमित्थं मन्यसे—दर्शनविप्रतिपत्तिश्चात्र, तत्र केषाञ्चिद्दर्शनम्—पुण्यमेवैकमस्ति न पापं, तदेव चावाप्तप्रकर्षावस्थं स्वर्गाय क्षीयमाणं तु मनुष्यतिर्यङ्नारकादिभवफलाय, तदशेषक्षयाच्च मोक्ष इति, यथाऽत्यन्तपथ्याहारासेवनादुत्कृष्टमारोग्यसुखं भवति, किञ्चित्किञ्चित्पथ्याहारपरिवर्जनाच्चारोग्यसुखहानिः, अशेषाहारपरिक्षयाच्च सुखाभावकल्पोऽपवर्गः, अन्येषां तु पापमेवैकं, न पुण्यमस्ति, तदेव चोत्तमावस्थामनुप्राप्तं नारकभवायालं, क्षीयमाणं तु तिर्यङ्नरामरभवायेति, तदत्यन्तक्षयाच्च मोक्ष इति, यथा अत्यन्तापथ्याहारसेवनात्परमनारोग्यं, तस्यैव किञ्चित्किञ्चिदपकर्षादारोग्यसुखम्, अशेषपरित्यागान्मृतिकल्पो मोक्ष इति, अन्येषां तूभयमप्यन्योऽन्यानुविद्धस्वरूपकल्पं सम्मिश्रसुखदुःखाख्यफलहेतुभूतमिति, तथा च किल नैकान्ततः संसारिणः सुखं दुःखं चास्ति, देवानामपीर्ष्यादियुक्तत्वात्, नारकाणामपि च पञ्चेन्द्रियत्वानुभवाद्, इत्थंभूतपुण्यपापाख्यवस्तुक्षयाच्चापवर्ग इति, अन्येषां तु स्वतन्त्रमुभयं विविक्तसुखदुःखकारणं, तत्क्षयाच्च निःश्रेयसावाप्तिरिति, अतो दर्शनानां परस्परविरुद्धत्वात् अप्रमाणत्वादस्मिन्विषये प्रामाण्याभाव इति तेऽभिप्रायः, 'पुण्यः पुण्येने'-त्यादिना प्रतिपादिता च तत्सत्ता, अतः संशयः, तत्र वेदपदानां चार्थं न जानासि, तेषामयमर्थः यथा द्वितीयगणधरे तथा स्वभावनिराकरणयुक्तो वक्तव्यः, सामान्यकर्मसत्तासिद्धिरपि तथैव वक्तव्या, यच्च दर्शनानामप्रामाण्यं मन्यसे, परस्परविरुद्धत्वाद्, एतदसाम्प्रतम्, एकस्य प्रमाणत्वात्, तथा च पाटलिपुत्रादिस्वरूपाभिधायकाः सम्यक् तद्रूपाभिधायकयुक्ताः परस्परविरुद्धवचसोऽपि न सर्व एवाप्रमाणतां भजन्ते, तत्र यत्प्रमाणं तदप्रमाणनिरासद्वारेण प्रदर्शयिष्यामः, तत्र न

तावत्पुण्यमेवापचीयमानं दुःखकारणं, तस्य सुखहेतुत्वेनेष्टत्वात्, स्वल्पस्यापि स्वल्पसुखनिर्वर्त्तकत्वात्, तथा चाणीयसो हेमपिण्डादणुरपि सौवर्ण्ण एव घटो भवति, न मार्त्तिक इति, न च तदभावो दुःखहेतुः, तस्य निरुपाख्यत्वात्, न च सुखाभाव एव स्वसत्ताविकलो दुःखं, तस्यानुभूयमानत्वात्, ततश्च स्वानुरूपकारणपूर्विका दुःखप्रकर्षानुभूतिः, प्रकर्षानुभूतित्वात्, पुण्यप्रकर्षानुभूतिवत्, न च पुण्यलेश एवानुरूपं कारणमस्या इति, एवं दृष्टान्तोऽप्याभासितव्यः, केवलपुण्यवादनिरासः। केवलपापपक्षेऽपि विपरीतमुपपत्तिजालमिदमेव वाच्यं, नापि तत्सर्वथाऽन्योऽन्यानुविद्धस्वरूपं निरंशवस्त्वन्तरमेव, सर्वथा सम्मिश्रसुखदुःखाख्यकार्यप्रसङ्गाद्, असदृशश्च सुखदुःखानुभवो, देवानां सुखाधिक्यदर्शनात्, नारकाणां च दुःखाधिक्यदर्शनात्, न च सर्वथा सम्मिश्रैकरूपस्य हेतोरल्पबहुत्वभेदेऽपि कार्यस्य स्वरूपेण प्रमाणतोऽल्पबहुत्वं विहाय भेदो युज्यते, न हि मेचककारणप्रभवं कार्य्यमन्यतमवर्ण्णोत्कटतां बिभर्त्ति, तस्मात् सुखातिशयस्यान्यन्निमित्तमन्यच्च दुःखातिशयस्येति। न च सर्वथैकस्य सुखातिशयनिबन्धनांशवृद्धिर्दुःखातिशयकारणांशहान्या सुखातिशयप्रभवाय कल्पयितुं न्याय्या, भेदप्रसङ्गात्, तथा च यद्वृद्धावपि यस्य वृद्धिर्न भवति तत्ततो भिन्नं प्रतीतमेव, एवं सर्वथैकरूपता पुण्यपापयोर्न घटते, कर्मसामान्यतया त्वविरुद्धाऽपि, यतः–'सात (सद्वेद्य) सम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यमन्यत्पाप (तत्त्वा० अ० ८ सू० २६) मिति, सर्वं चैतत्कर्म, तस्माद्विविक्ते पुण्यपापे स्त इति। संसारिणश्च सत्त्वस्यैतदुभयमप्यस्ति, किञ्चित्कस्यचिदुपशान्तं किञ्चित्क्षयोपशमतामुपगतं किञ्चित्क्षीणं किञ्चिदुदीर्णम्, अत एव च सुखदुःखातिशयवैचित्र्यं जन्तूनामिति।—

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ तिहिं उ सह खंडियसएहिं ॥ ६३३ ॥**

व्याख्या—पूर्ववत्। नवमो गणधरः समाप्तः ॥

**ते पव्वइए सोउं मेयज्जो आगच्छई जिणसगासं। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३४ ॥**

व्याख्या—पूर्ववन्नवरं मेतार्यः आगच्छतीति।

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६३५ ॥**

सपातनिका व्याख्या पूर्ववदेव।

**किं मण्णे परलोगो अत्थि णत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६३६ ॥**

व्याख्या—किं परलोको—भवान्तरगतिलक्षणोऽस्ति नास्तीति मन्यसे, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिमित्तो वर्त्तते, शेषं पूर्ववत्, तानि चामूनि वेदपदानि–'विज्ञानघने'त्यादीनि, तथा 'स वै आत्मा ज्ञानमय' इत्यादीनि च पराभिप्रेतार्थयुक्तानि यथा प्रथमगणधर इति, भूतसमुदायधर्मत्वाच्च चैतन्यस्य कुतो भवान्तरगतिलक्षणपरलोकसम्भव इति ते मतिः, तद्विघाते चैतन्यविनाशादिति, तथा सत्यप्यात्मनि नित्येऽनित्ये वा कुतः परलोकः?, तस्यात्मनोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात् विभुत्वात् तथा निरन्वयविनश्वरस्वभावेऽप्यात्मनि कारणक्षणस्य सर्वथाऽभावोत्तरकालमिह लोकेऽपि क्षणान्तराप्रभवः कुतः परलोक इत्यभिप्रायः, तत्र वेदपदानां चार्थं न जानासि, तेषाममर्थः–तत्र 'विज्ञानघने'त्यादीनां पूर्ववद्वाच्यं, न च भूतसमुदायधर्मश्चैतन्यं, क्वचित्सन्निकृष्टदेहोपलब्धावपि चैतन्यसंशयात्, न च धर्मिग्रहणे धर्माग्रहणं युज्यते, इतश्च देहादन्यच्चैतन्यं, चलनादिचेष्टानिमित्तत्वात्, इह यद्यस्य चलनादिचेष्टानिमित्तं तत्ततो भिन्नं दृष्टं, यथा मारुतः पादपादिति, ततश्च चैतन्यस्याऽऽत्मधर्मत्वात्तस्य चानादिमत्कर्मसन्ततिसमालिङ्गितत्वात् उत्पादव्ययध्रौव्ययुक्तत्वात्कर्मपरिणामापेक्षमनुष्यादिपर्यायनिवृत्त्या देवादिपर्यायान्तरावाप्तिरस्याविरुद्धेति, नित्यानित्यैकान्तपक्षोक्तदोषानुपपत्तिश्चात्रानभ्युपगमात् इति।

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ तिहिं उ सह खंडियसएहिं ॥ ६३७ ॥**

व्याख्या—पूर्ववत्। दशमो गणधरः समाप्तः ॥

**ते पव्वइए सोउं पभासो आगच्छई जिणसगासं। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३८ ॥**

व्याख्या—पूर्ववन्नवरं प्रभासः आगच्छतीति।

**आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६३९ ॥**

सपातनिका व्याख्या पूर्ववदेव।

**किं मण्णे निव्वाणं अत्थि णत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं ण याणसि तेसिमो अत्थो ॥ ६४० ॥**

व्याख्या—किं निर्वाणमस्ति नास्तीति मन्यसे, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिसमुत्थो वर्त्तते, शेषं पूर्ववत्। तानि चामूनि वेदपदानि–'जरामर्य्यं वा एतत्सर्वं यदग्निहोत्रं' तथा 'द्वे ब्रह्मणी वेदितव्ये, परमपरं च, तत्र परं सत्यं ज्ञानमनन्तं ब्रह्मे'ति, एतेषां चायमर्थस्तव मतौ प्रतिभासते–अग्निहोत्रक्रिया भूतवधोपकारभूतत्वात्

शलाकारा, जरामर्य्यवचनाच्च तस्याः सदाकरणमुक्तं, सा चाभ्युदयफला, कालान्तरं च नास्ति यस्मिन्नपवर्गप्रापणक्रियारम्भ इति, तस्मात्साधनाभावान्नास्ति मोक्षः, ततश्चामूनि मोक्षाभावप्रतिपादकानि, शेषाणि तु तदस्तित्वख्यापकानीत्यतः संशयः, तथा संसाराभावो मोक्षः, संसारश्च तिर्यङ्नरनारकामरभवरूपः, तद्भावानतिरिक्तश्चात्मा, ततश्च तदभावे आत्मनोऽप्यभाव एवेति कुतो मोक्षः?। तत्र वेदानां चार्थं न जानासि, तेषामयमर्थः-'जरामर्यं वा' वाशब्दोऽप्यर्थे, ततश्च यावज्जीवमपि, न तु नियोगत इति, ततश्चापवर्गप्रापणक्रियारम्भकालास्तिताऽनिवार्य्या, न च संसाराभावे तदव्यतिरिक्तत्वात् आत्मनोऽप्यभावो युज्यते, तस्यात्मपर्यायरूपत्वात्, न च पर्यायनिवृत्तौ पर्यायिणः सर्वथा निवृत्तिरिति, तथा च हेमकुण्डलयोरनन्यत्वं, न च कुण्डलपर्यायनिवृत्तौ हेम्नोऽपि सर्वथा निवृत्तिः, तथाऽनुभवात्, इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा पर्यायनिवृत्तौ पर्यायिणः सर्वथा निवृत्त्यभ्युपगमे पर्यायान्तरानुपपत्तिः प्राप्नोति, कारणाभावात्, तदभावस्य च सर्वदाऽविशिष्टत्वात्, तस्मात्संसारनिवृत्तावप्यात्मनो भावात् वस्तुस्वरूपो मोक्ष इति ॥

**छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ तिहिं उ सह खंडियसएहिं ॥ ६४१ ॥**

व्याख्या—पूर्ववदेव। एकादशो गणधरः समाप्तः।

उक्ता गणधरसंशयापनयनवक्तव्यता। साम्प्रतमेतेषामेव वक्तव्यताशेषप्रतिपिपादयिषया द्वारगाथामाह—

**खेत्ते काले जम्मे गोत्तमगार छउमत्थपरियाए। केवलिय आउ आगम परिणेव्वाणे तवे चेव ॥ ६४२ ॥ दारगाहा**

एकारान्ताः शब्दाः प्राकृतशैल्या प्रथमैकवचनान्ता द्रष्टव्याः, ततश्च गणधरानधिकृत्य क्षेत्रं-जनपदग्रामनगरादि तद्वक्तव्यं जन्मभूमिः, तथा कालो नक्षत्रचन्द्रयोगोपलक्षितो वाच्यः, जन्म वक्तव्यं, तच्च मातापित्रायत्तमित्यतो मातापितरौ वाच्यौ, गोत्रं यद्यस्य तद्वाच्यम्, 'अगारछउमत्थपरियाए' त्ति पर्यायशब्दः उभयत्राप्यभिसम्बध्यते, अगारपर्यायो-गृहस्थपर्यायो वाच्यः, तथा छद्मस्थपर्यायश्चेति, तथा केवलिपर्यायो वाच्यः, सर्वायुष्कं वाच्यं, तथा आगमो वाच्यः, कः कस्यागम आसीत्?, परिनिर्वाणं वाच्यं, कस्य भगवति जीवति सति आसीत् कस्य वा मृते इति, तपश्च वक्तव्यं, किं केनापवर्गं गच्छता तप आचरितमिति?, चशब्दात्संहननादि च वाच्यम्, इति गाथासमुदायार्थः ॥ इदानीमवयवार्थः प्रतिपाद्यते-तत्र क्षेत्रद्वारावयवार्थाभिधित्सयाऽऽह—

**मगहा गोब्बरगामे जाया तिण्णेव गोयमसगोत्ता। कोल्लागसन्निवेसे जाओ विअत्तो सुहम्मो य ॥ ६४३ ॥**

व्याख्या—मगधाविषये गोर्वरग्रामे सन्निवेशे जातास्त्रय एवाद्याः 'गोयमे'त्ति एते त्रयोऽपि गौतमसगोत्रा इति, कोल्लागसन्निवेशे जातो व्यक्तः सुधर्मश्चेति गाथार्थः ॥

**मोरीयसन्निवेसे दो भायरो मंडिमोरिया जाया। अयलो य कोसलाएँ महिलाए अकंपिओ जाओ ॥ ६४४ ॥**

व्याख्या—मौर्यसन्निवेशे द्वौ भ्रातरौ मण्डिकमौर्यौ जातौ, अचलश्च कौशलायां मिथिलायामकम्पिको जात इति गाथार्थः ॥

**तुंगीय सन्निवेसे मेयज्जो वच्छभूमिएँ जाओ। भगवंपि य प्पभासो रायगिहे गणहरो जाओ ॥ ६४५ ॥ दारं ॥**

व्याख्या—तुङ्गिकसन्निवेशे मेतार्य्यो वत्सभूमौ जातः, कोशाम्बीविषय इत्यर्थः, भगवानपि च प्रभासो राजगृहे गणधरो जात इति गाथार्थः ॥ कालद्वारावयवार्थः प्रतिपाद्यते-तत्र कालो हि नक्षत्रचन्द्रयोगोपलक्षित इतिकृत्वा यद्यस्य गणभृतो नक्षत्रं तदभिधित्सुराह—

**जेट्ठा कित्तिय साई सवणो हत्थुत्तरा महाओ य। रोहिणि उत्तरसाढा मिगसिर तह अस्सिणी पूसो ॥ ६४६ ॥**

व्याख्या—ज्येष्ठाः कृत्तिकाः स्वातयः श्रवणः हस्त उत्तरो यासां ताः हस्तोत्तरा-उत्तरफाल्गुन्य इत्यर्थः, मघाश्च रोहिण्यः उत्तराषाढा मृगशिरस्तथा अश्विन्यः पुष्यः, एतानि यथायोगमिन्द्रभूतिप्रमुखानां नक्षत्राणीति गाथार्थः ॥ द्वारम्। जन्मद्वारं प्रतिपाद्यते-मातापित्रायत्तं च जन्मेतिकृत्वा गणभृतां मातापितरावेव प्रतिपादयन्नाह—

**वसुभूई धणमित्ते धम्मिल धणदेव मोरिए चेव। देवे वसू य दत्ते बले य पियरो गणहराणं ॥ ६४७ ॥**

व्याख्या—वसुभूतिः धनमित्रः धर्मिलः धनदेवः मौर्यश्चैव देवः वसुश्च दत्तः बलश्च पितरो गणधराणां, तत्र त्रयाणामाद्यानामेक एव पिता, शेषाणां तु यथासङ्ख्यं धनमित्रादयोऽवसेया इति गाथार्थः ॥

**पुहवी य वारुणी भद्दिला य विजयदेवा तहा जयंती य। णंदा य वरुणदेवा अइभद्दा य मायरो ॥ ६४८ ॥ दारं ॥**

व्याख्या—पृथिवी च वारुणी भद्रिला च विजयदेवा तथा जयन्ती च नन्दा च वरुणदेवा अतिभद्रा च मातरः, तत्र पृथिवी त्रयाणामाद्यानां माता, शेषास्तु यथासङ्ख्यमन्येषां, नवरं विजयदेवा मण्डिकमौर्य्ययोः पितृभेदेन द्वयोर्माता, धनदेवे पञ्चत्वमुपगते मौर्य्येण गृहे धृता सैव, अविरोधश्च तस्मिन् देश इति गाथार्थः ॥ गोत्रद्वारप्रतिपादनाय आह—

**तिण्णि य गोयमगोत्ता भारद्दा अग्गिवेसवासिट्ठा। कासवगोयमहारिय कोडिण्णदुगं च गोत्ताइं ॥ ६४९ ॥**

व्याख्या—त्रयश्च गौतमगोत्राः इन्द्रभूत्यादयः, भारद्वाजाग्निवैश्यायनवाशिष्ठाः यथायोगं व्यक्तसुधर्ममण्डिकाः, काश्यपगौतमहारीतसगोत्राः मौर्यकम्पिकाचलभ्रातर इति, कौण्डिन्यसगोत्रौ द्वौ मेतार्यप्रभासावित्येतानि गणधराणां गोत्राणीति गाथार्थः ॥ द्वारम् ॥ अगारपर्यायद्वारव्याचिख्यासयाऽऽह—

**पण्णा छायालीसा बायाला होइ पण्ण पण्णा य । तेवण्ण पंचसठ्ठी अडयालीसा य छायाला ॥ ६५० ॥**

व्याख्या—पञ्चाशत् षट्चत्वारिंशत् द्विचत्वारिंशत् भवति पञ्चाशत् पञ्चाशच्च त्रिपञ्चाशत् पञ्चषष्टिः अष्टचत्वारिंशत् षट्चत्वारिंशत् इति गाथार्थः ॥

**छत्तीसा सोलसगं अगारवासो भवे गणहराणं । छउमत्थयपरियागं अहक्कमं कित्तइस्सामि ॥ ६५१ ॥ दारं ॥**

व्याख्या—षट्त्रिंशत् षोडशकम् 'अगारवासो' गृहवासो यथासङ्ख्यम् एतावान् गणधराणाम् इति गाथार्द्धम् । द्वारम् । अनन्तरद्वारावयवार्थप्रतिपिपादयिषयाऽऽह पश्चार्द्धं—छद्मस्थपर्यायं 'यथाक्रमं' यथायोगं कीर्त्तयिष्यामि इति गाथार्थः ॥

**तीसा बारस दसगं बारस बायाल चोद्दसदुगं च । णवगं बारस दस अट्ठगं च छउमत्थपरियाओ ॥ ६५२ ॥ दारं ॥**

गाथेयं निगदसिद्धा ॥ केवलिपर्यायपरिज्ञानोपायप्रतिपादनायाह—

**छउमत्थपरीयागं अगारवासं च वोगसित्ता णं । सव्वाउगस्स सेसं जिणपरियागं वियाणाहि ॥ ६५३ ॥**

व्याख्या—छद्मस्थपर्यायम् अगारवासं च व्यवकलय्य सर्वायुष्कस्य शेषं जिनपर्यायं विजानीहीति गाथार्थः ॥ स चायं जिनपर्यायः—

**बारस सोलस अट्ठारसेव अट्ठारसेव अट्ठेव । सोलस सोल तहेकवीस चोद्द सोले य सोलेय ॥ ६५४ ॥ दारं ॥**

निगदसिद्धा । सर्वायुष्कप्रतिपादनायाह—

**बाणउई चउहत्तरि सत्तरि तत्तो भवे असीई य । एगं च सयं तत्तो तेसीई पंचणउई य ॥ ६५५ ॥**

**अट्ठत्तरिं च वासा तत्तो बावत्तरिं च वासाइं । बावट्ठी चत्ता खलु सव्वगणहराउयं एयं ॥ ६५६ ॥ दारं ॥**

गाथाद्वयं निगदसिद्धमेव ॥ आगमद्वारावयवार्थं प्रतिपादयन्नाह—

**सव्वे य माहणा जच्चा, सव्वे अज्झावया विऊ । सव्वे दुवालसंगी य, सव्वे चोद्दसपुव्विणो ॥ ६५७ ॥ दारं ॥**

व्याख्या—सर्वे च ब्राह्मणा जात्याः, अशुद्धा न भवन्ति, सर्वेऽध्यापकाः, उपाध्याया इत्यर्थः, 'विद्वांसः' पण्डिताः, अयं गृहस्थागमः, तथा सर्वे द्वादशाङ्गिनः, तत्र स्वल्पेऽपि द्वादशाङ्गाध्ययने द्वादशाङ्गिनोऽभिधीयन्त एव अतः सम्पूर्णज्ञापनार्थमाह—सर्वे चतुर्दशपूर्विण इति गाथार्थः ॥ परिनिर्वाणद्वारमाह—

**परिणिव्वुया गणहरा जीवंते णायए णव जणा उ । इंदभूई सुहम्मो य रायगिहे निव्वुए वीरे ॥ ६५८ ॥ दारं ॥**

निगदसिद्धा । तपोद्वारप्रतिपादनायाह—

**मासं पाओवगया सव्वेऽवि य सव्वलद्धिसंपण्णा । वज्जरिसहसंघयणा समचउरंसा य संठाणा ॥ ६५९ ॥**

व्याख्या—'मासं पायोवगय'त्ति सर्व एव गणधराः मासं पादपोपगमनं गताः—प्राप्ताः, द्वारगाथोपन्यस्तचशब्दार्थमाह—सर्वेऽपि च सर्वलब्धिसम्पन्नाः—आमर्पौषध्याद्यशेषलब्धिसम्पन्ना इत्यर्थः, वज्रऋषभसंहननाः समचतुरस्राश्च संस्थानत इति गाथार्थः ॥ उक्तः सामायिकार्थसूत्रप्रणेतॄणां तीर्थकरगणधराणां निर्गमः, साम्प्रतं क्षेत्रद्वारमवसरप्राप्तमुल्लङ्घ्य कालद्वारमुच्यते, अनन्तरमेव द्रव्यनिर्गमस्य प्रतिपादितत्वात् कालस्य च द्रव्यपर्यायत्वात् अन्तरङ्गत्वाद् 'अन्तरङ्गबहिरङ्गयोश्चान्तरङ्ग एव विधिर्बलवान्' इति परिभाषासामर्थ्यादिति, निर्युक्तिकृता तु क्षेत्रस्याल्पवक्तव्यत्वादन्यथोपन्यासः कृत इति । स च कालो नामाद्येकादशभेदभिन्नः, तत्र नामस्थापने सुज्ञाने, द्रव्यादिकालस्वरूपाभिधित्सयाऽऽह—

**दव्वे अद्ध अहाउय उवक्कमे देसकालकाले य । तह य पमाणे वण्णे भावे पगयं तु भावेणं ॥ ६६० ॥ दारगाहा ॥**

व्याख्या—तत्र 'द्रव्य' इति वर्त्तनादिलक्षणो द्रव्यकालो वाच्यः, 'अद्धे'ति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्त्यद्धाकालः समयादिलक्षणो वाच्यः, तथा यथाऽऽयुष्ककालो देवाद्यायुष्कलक्षणो वाच्यः, तथा 'उपक्रमकालः' अभिप्रेतार्थसामीप्यानयनलक्षणः सामाचारीयथायुष्कभेदभिन्नो वाच्यः, तथा देशकालो वाच्यः, देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरं, ततश्चाभीष्टवस्त्ववाप्त्यवसरकाल इत्यर्थः, तथा कालकालो वाच्यः, तत्रैकः कालशब्दः प्राग्निरूपित एव, द्वितीयस्तु सामयिकः, कालो मरणमुच्यते, मरणक्रियाकलनं कालकाल इत्यर्थः, चः समुच्चये, तथा च 'प्रमाणकालः' अद्धाकालविशेषो दिवसादिलक्षणो वाच्यः, तथा वर्ण्णकालो वाच्यः, वर्ण्णश्चासौ कालश्चेति वर्णकालः, 'भावि'त्ति औदयिकादिभावकालः सादिसपर्यवसानादिभेदभिन्नो वाच्य इति, 'प्रकृतं तु भावेने'ति भावकालेनाधिकार इति गाथासमुदायार्थः ॥ साम्प्रतमवयवार्थोऽभिधीयते—तत्राद्यद्वारावयवार्थाभिधित्सयाऽऽह—

**चेयणमचेयणस्स व दव्वस्स ठिइ उ जा चउवियप्पा । सा होइ दव्वकालो अहवा दवियं तु तं चेव ॥ ६६१ ॥**

व्याख्या—चेतनाचेतनस्य देवस्य स्कन्धादेः, बिन्दुरलाक्षणिकः, अथवा चेतनस्याचेतनस्य च द्रव्यस्य स्थानं—स्थितिरेव या सादिसपर्यवसानादिभेदेन 'चतुर्विकल्पा' चतुर्भेदा सा स्थितिर्भवति द्रव्यस्य कालो द्रव्यकालः, तत्पर्यायत्वात्, अथवा 'द्रव्यं तु' तदेव द्रव्यमेव कालो द्रव्यकाल इति गाथार्थः ॥ चेतनाचेतनद्रव्यचतुर्विधस्थितिनिदर्शनायाह—

**गइ सिद्धा भवियाया अभविय पोग्गल अणागयद्धा य। तीयद्ध तिन्नि काया जीवाजीवट्ठिई चउहा ॥६६२॥दारं॥**

व्याख्या—'गति'त्ति देवादिगतिमधिकृत्य जीवाः सादिसपर्यवसानाः, 'सिद्ध'त्ति सिद्धाः प्रत्येकं सिद्धत्वेन साद्यपर्यवसानाः 'भवियाय'त्ति भव्याश्च भव्यत्वमधिकृत्य केचनानादिसपर्यवसानाः, 'अभविय'त्ति अभव्याः खल्वभव्यतया अनाद्यपर्यवसाना इति जीवस्थितिचतुर्भङ्गिका। 'पोग्गल'त्ति पूरणगलनधर्माणः पुद्गलाः, ते हि पुद्गलत्वेन सादिसपर्यवसानाः, 'अणागयद्ध'त्ति अनागताद्धा—अनागतकालः, स हि वर्त्तमानसमयादिः सादिरनन्तत्वाच्चापर्यवसान इति, 'तीयद्ध'त्ति अतीतकालोऽनन्तत्वादनादिः साम्प्रतसमयपर्यन्तविवक्षायां सपर्यवसान इति, 'तिण्णि काय'त्ति धर्माधर्माकाशास्तिकायाः खल्वनाद्यपर्यवसाना इति, इत्थं जीवाजीवस्थितिश्चतुर्द्धेति गाथार्थः॥ द्वारम्। अद्धाकालद्वारावयवार्थं व्याचिख्यासुराह—

**समयावलिय मुहुत्ता दिवसमहोरत्त पक्ख मासा य। संवच्छर युग पलिया सागर ओसप्पि परियट्टा ॥६६३॥दारं**

व्याख्या—तत्र परमनिकृष्टः कालः समयोऽभिधीयते, स च प्रवचनप्रतिपादितपट्टशाटिकापाटनदृष्टान्तादवसेयः, आवलिका—असङ्ख्येयसमयसमुदायलक्षणा, द्विघटिको मुहूर्त्तः, दिवसश्चतुष्प्रहरात्मकः, यद्वा आकाशखण्डमादित्येन स्वभाभिर्व्याप्तं तद्दिवसं इत्युच्यते, शेषं निशेति, अहोरात्रमष्टप्रहरात्मकमहर्निशमित्यर्थः, पक्षः—पञ्चदशाहोरात्रात्मकः, मासः—तद्द्विगुणः, चः समुच्चये, संवत्सरो—द्वादशमासात्मकः, युगं पञ्चसंवत्सरम्, असङ्ख्येययुगात्मकं पलितमिति उत्तरपदलोपाद्, इत्थं सागरोपममपि, तत्र पल्योपमदशकोटीकोट्यात्मकं सागरमाख्यायते, उत्सर्पिणी—सागरोपमदशकोटीकोट्यात्मिका, एवमवसर्प्पिण्यपि, परावर्त्तोऽनन्तोत्सर्प्पिण्यवसर्पिण्यात्मकः, स च द्रव्यादिभेदभिन्नः प्रवचनादवसेय इति गाथार्थः ॥ द्वारम् ॥ यथाऽऽयुष्ककालद्वारमुच्यते—तत्राद्धाकाल एवायुष्ककर्मानुभवविशिष्टः सर्वजीवानां वर्त्तनादिमयो यथायुष्ककालोऽभिधीयते, तथा चाह—

**नेरइयतिरियमणुयादेवाण अहाउयं तु जं जेण। निव्वत्तियमण्ण भवे पालेंति अहाउकालो सो ॥ ६६४ ॥ दारं॥**

व्याख्या—नारकतिर्यग्मनुष्यदेवानां यथायुष्कमेव यद्येन निर्वर्त्तितं—रौद्रध्यानादिना कृतम् 'अन्यभवे' अन्यजन्मनि तद् यदा विपाकतस्त एवानुपालयन्ति स यथायुष्ककालस्तु, इति गाथार्थः। द्वारम् ॥ साम्प्रतमुपक्रमकालद्वारमाह—

**दुविहोवक्कमकालो सामायारी अहाउयं चेव। सामायारी तिविहा ओहे दसहा पयविभागे ॥ ६६५ ॥ दारं॥**

व्याख्या—द्विविधश्चासावुपक्रमकालश्चेति समासः, तदेव द्वैविध्यमुपदर्शयन्नाह—'सामायारी अहाउअं चेव' समाचरणं समाचारः—शिष्टाचरितः क्रियाकलापस्तस्य भावः "गुणवचनब्राह्मणादिभ्यः कर्मणि च" (पा० ५-१-१२४) ष्यञ् समाचार्यं, पुनः स्त्रीविवक्षायां षिद्गौरादिभ्यश्चे (पा० ४-१-४१) ति ङीष्, यस्ये (पा० यस्येति च ६०४-१४८) त्यकारलोपः, यस्य हल (पा० ६-४-४९) इत्यनेन तद्धितयकारलोपः, परगमनं सामाचारी, तस्या उपक्रमणम्—उपरिमश्रुतादिहानयनमुपक्रमः, सामाचार्युपक्रमश्चासौ कालश्चेति समासः, यथाऽऽयुष्कस्योपक्रमणं दीर्घकालभोग्यस्य लघुतरकालेन क्षपणमुपक्रमः, यथायुष्कोपक्रमश्चासौ कालश्चेति समासः, तत्र हि कालकालवतोरभेदात् कालस्यैव आयुष्काद्युपाधिविशिष्टस्योपक्रमो वेदितव्य इत्यभिप्रायः। तत्र सामाचारी त्रिविधा—'ओहे दसहा पदविभागे'त्ति 'ओघः' सामान्यम्, ओघः सामाचारी सामान्यतः सङ्क्षेपाभिधानरूपा, सा चौघनिर्युक्तिरिति। दशविधसामाचारी इच्छाकारादिलक्षणा, पदविभागसामाचारी छेदसूत्राणीति। तत्रौघसमाचारी नवमात्पूर्वात् तृतीयाद्वस्तुन आचाराभिधानात् तत्रापि विंशतितमात्प्राभृतात्, तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढेति, एतदुक्तं भवति—साम्प्रतकालप्रव्रजितानां तावच्छ्रुतपरिज्ञानशक्तिविकलानामायुष्कादिह्रासमपेक्ष्य प्रत्यासन्नीकृतेति। दशविधसामाचारी पुनः षड्विंशतितमादुत्तराध्ययनात्स्वल्पतरकालप्रव्रजितपरिज्ञानार्थं निर्व्यूढेति। पदविभागसामाचार्यपि छेदसूत्रलक्षणान्नवमपूर्वादेव निर्व्यूढेति गाथार्थः ॥ साम्प्रतमोघनिर्युक्तिर्वाच्या, सा च सुप्रपञ्चितत्वादेव न विव्रियते, साम्प्रत दशविधसामाचारीस्वरूपदर्शनायाह—

**इच्छा मिच्छा तहाकारो, आवस्सिया य निसीहिया। आपुच्छणा य पडिपुच्छा छंदणा य निमंतणा ॥ ६६६ ॥**
**उवसंपया य काले, सामायारी भवे दसहा। एएसिं तु पयाणं पत्तेय परूवणं वोच्छं ॥ ६६७ ॥ दारगाहाओ ॥**

व्याख्या—एषणमिच्छा करणं कारः, तत्र कारशब्दः प्रत्येकमभिसम्बध्यते, इच्छया—बलाभियोगमन्तरेण करणम् इच्छाकारः इच्छाक्रियेत्यर्थः, तथा चेच्छाकारेण ममेदं कुरु इच्छाक्रियया न च बलाभियोगपूर्विकयेति भावार्थः १, तथा मिथ्या—वितथ(ग्रन्था-६५००)मनृतमिति पर्यायाः, मिथ्याकरणं मिथ्याकारः, मिथ्याक्रियेत्यर्थः, तथा च संयमयोगवितथाचरणे विदित-

जिनवचनसाराः साधवस्तत्क्रियाया वैतथ्यप्रदर्शनाय मिथ्याकारं कुर्वते, मिथ्याक्रियेयमिति हृदयं २, तथाकरणं तथाकारः, स च सूत्रप्रश्नगोचरो यथा भवद्भिरुक्तं तथेदमित्येवंस्वरूपः ३, अवश्यकर्त्तव्यैर्योगैर्निष्पन्ना आवश्यिकी ४, चः समुच्चये, तथा निषेधेन निर्वृत्ता नैषेधिकी ५, आप्रच्छनमापृच्छा, सा विहारभूमिगमनादिप्रयोजनेषु गुरोः कार्या ६, चः पूर्ववत्, तथा प्रतिपृच्छा, सा च प्राङ्नियुक्तेनापि करणकाले कार्या, निषिद्धेन वा प्रयोजनतः कर्त्तुकामेनेति, तथा छन्दना च प्राग्गृहीतेनाशनादिना कार्या ८, तथा निमन्त्रणा अगृहीतेनैवाशनादिनाऽहं भवदर्थमशनाद्यानयामि इत्येवम्भूता ९, उपसम्पच्च विधिनाऽऽदेया १०। एवं 'काले' कालविषया सामाचारी भवेद्दशविधा तु। एवं तावत्समासत उक्ताः, साम्प्रतं प्रपञ्चतः प्रतिपदमभिधित्सुराह—एतेषां पदानां, तुर्विशेषणे, गोचरप्रदर्शनेन 'प्रत्येकं' पृथक् पृथक् प्ररूपणां वक्ष्य इति गाथाद्वयसमासार्थः॥ तत्रेच्छाकारो येष्वर्थेषु क्रियते तत्प्रदर्शनायाह—

**जइ अब्भत्थेज्ज परं कारणजाए करेज्ज से कोई। तत्थवि इच्छाकारो न कप्पई बलाभिओगो उ॥ ६६८॥**

व्याख्या—'यदी'त्यभ्युपगमे अन्यथा साधूनामकारणेऽभ्यर्थना नैव कल्पते, ततश्च यद्यभ्यर्थयेत् 'परम्' अन्यं साधुं ग्लानादौ कारणजाते कुर्यात् वा, 'से' तस्य कर्तुकामस्य 'कश्चिद्' अन्यसाधुः, तत्र कारणजातग्रहणमुभयथाऽपि सम्बध्यते, तत्रापि तेनान्येन वा साधुना तत्तस्य चिकीर्षितं कर्त्तुकामेन इच्छाकारः, कार्य इति क्रियाध्याहारः, अपिः चशब्दार्थे, अथवाऽपीत्यादिना न्यक्षेण वक्ष्यति, किमित्येवमत आह—न कल्पत एव बलाभियोग इति गाथार्थः॥ उक्तगाथावयवार्थप्रतिपादनायैवाह—

**अब्भुवगमंमि नज्जइ अब्भत्थेउं ण वट्टइ परो उ। अणिगूहियबलविरिएण साहुणा ताव होयव्वं॥ ६६९॥**

व्याख्या—'यद्यभ्यर्थयेत् पर'मित्यस्मिन् यदिशब्दप्रदर्शिते अभ्युपगमे सति ज्ञायते, किमित्याह—अभ्यर्थयितुं 'न वर्त्तते' न युज्यते एव परः, किमित्यत एवाह—न निगूहिते बलवीर्ये येनेति समासः, बलं—शारीरं वीर्यम्—आन्तरः शक्तिविशेषः, तावच्छब्दः प्रस्तुतार्थप्रदर्शक एव, अनिगूहितबलवीर्येण तावदित्थं साधुना भवितव्यमिति। पाठान्तरं वा 'अणिगूहियबलविरिएण साहुणा जेण होयव्वं'ति, अस्यायमर्थः—येन कारणेनानिगूहितबलवीर्येण साधुना भवितव्यमिति युक्तिः अतः अभ्यर्थयितुं न वर्त्तते पर इति गाथार्थः॥ आह—इत्थं तर्हि अभ्यर्थनागोचरेच्छाकारोपन्यासोऽनर्थक इति?, उच्यते,

**जइ हुज्ज तस्स अणलो कज्जस्स वियाणती ण वा वाणं। गिलाणाईहिं वा हुज्ज वियावडो कारणेहिं सो॥ ६७०॥**

व्याख्या—यदि भवेत् 'तस्य' प्रस्तुतस्य कार्यस्य, किम्?—'अनलः' असमर्थः विजानाति न वा, वाणमिति पूरणार्थो निपातः, ग्लानादिभिर्वा भवेद्व्यापृतः कारणैरसौ तदा सञ्जातद्वितीयपदोऽभ्यर्थनागोचरमिच्छाकारं रत्नाधिकं विहायान्येषां करोतीति गाथार्थः॥ आह च—

**राइणियं वज्जेत्ता इच्छाकारं करेइ सेसाणं। एयं मज्झं कज्जं तुब्भे उ करेह इच्छाए॥ ६७१॥**

व्याख्या—रत्नानि द्विधा—द्रव्यरत्नानि भावरत्नानि च, तत्र मरकतवज्रेन्द्रनीलवैडूर्यादीनि द्रव्यरत्नानि, सुखहेतुत्वमधिकृत्य तेषामनैकान्तिकत्वादनात्यन्तिकत्वाच्च, भावरत्नानि सम्यग्दर्शनज्ञानचारित्राणि, सुखनिबन्धनतामङ्गीकृत्य तेषामेकान्तिकत्वादात्यन्तिकत्वाच्च, भावरत्नैरधिको रत्नाधिकस्तं वर्जयित्वा इच्छाकारं करोति शेषाणां, कथमित्याह—इदं मम कार्यं वस्त्रसीवनादि यूयं कुरुतेच्छया न बलाभियोगेनेति गाथार्थः॥ 'जइ अब्भत्थेज्ज परं कारणजाए'त्ति एतावन्मूलगाथाया व्याख्यातं, साम्प्रतं 'करेज्ज से कोइ' त्ति अस्य गाथाऽवयवस्यावयवार्थं प्रतिपादयति, अत्रान्यकरणसम्भवे कारणप्रतिपादनायाह—

**अहवाऽवि विणासेंतं अब्भत्थेंतं च अण्ण दट्ठूणं। अण्णो कोइ भणेज्जा तं साहुं णिज्जरट्ठीओ॥ ६७२॥**

व्याख्या—तत्र 'अहवावि विणासेंतं' ति अक्षराणां व्यवहितः सम्बन्धः, स चेत्थं द्रष्टव्यः—विनाशयन्तमपि चिकीर्षितं कार्यम्, अपिशब्दात् गुरुतरकार्यकरणसमर्थमविनाशयन्तमप्यभ्यर्थयन्तं वा अभिलषितकार्यकरणाय कञ्चन अन्यं साधुं दृष्ट्वा किमित्याह—'अन्यः' तत्प्रयोजनकरणशक्तः कश्चिद्भणेत् तं साधुं निर्जरार्थीति गाथार्थः॥ किमित्याह—

**अहयं तुब्भं एयं करेमि कज्जं तु इच्छकारेणं। तत्थऽवि सो इच्छं से करेइ मज्जायमूलियं॥ ६७३॥**

व्याख्या—अहमित्यात्मनिर्देशे युष्माकम् 'इदं' कर्तुमिष्टं कार्यं करोमि 'इच्छाकारेण' युष्माकमिच्छाक्रियया, न बलादित्यर्थः, तत्रापि 'स' कारापकः साधुः 'इच्छं से करेइ'त्ति सूचनात्सूत्रम्, इच्छाकारं करोति, नन्वसौ तेनेच्छाकारेण याचितस्ततः किमर्थमिच्छाकारं करोतीत्याह—मर्यादामूलं, साधूनामियं मर्यादा—न किञ्चिदिच्छाव्यतिरेकेण कश्चित्कारयितव्य इति गाथार्थः॥ व्याख्यातोऽधिकृतगाथावयवः, साम्प्रतं 'तत्थवि इच्छाकारो'त्ति अस्यापिशब्दस्य विषयप्रदर्शनायाह—

---

१० सम्भवे कारण प्रतिपादयन्नाह प्र० २ करण कारख कारयतीति कारापयति णके च कारापक इति स्यात्, स्वचक्षद्दमदन्त वर्णयद्भि पूज्यै कचिन्नाञ्जोऽप्यदन्तस्स ञ्णिति वृद्धेरिष्टत्वात्

अहवा सयं करेन्तं किंची अण्णस्स वावि दट्ठूणं। तस्सवि करेज्ज इच्छं मज्झंपि इमं करेहित्ति ॥ ६७४ ॥

व्याख्या—अथवा 'स्वकम्' आत्मीयं कुर्वन्तं 'किञ्चित्' पात्रलेपनादि अन्यस्य वा दृष्ट्वा किम्?—तस्याप्यापन्नप्रयोजनः सन् कुर्यादिच्छाकारं, कथम्?—ममापीदं—पात्रलेपनादि कुरुतेति गाथार्थः॥ इदानीमभ्यर्थितसाधुगोचरविधिप्रदर्शनायाऽऽह—

तत्थवि सो इच्छं से करेइ दीवेइ कारणं वाऽवि। इहरा अणुग्गहत्थं कायव्वं साहुणो किच्चं ॥ ६७५ ॥

व्याख्या—तत्राप्यभ्यर्थितः सन् 'इच्छाकारं करोति' इच्छाम्यहं तव करोमीति, अथ तेन गुर्वादिकार्यान्तरं कर्त्तव्यमिति तदा दीपयति कारणं वापि, 'इहरा' अन्यथा गुरुकार्यकर्त्तव्याभावे सति अनुग्रहार्थं कर्त्तव्यं साधोः कृत्यमिति गाथार्थः॥ अपिशब्दाक्षिप्तेच्छाकारविषयविशेषप्रदर्शनायैवाह—

अहवा णाणाईणं अट्ठाए जइ करेज्ज किच्चाणं। वेयावच्चं किंची तत्थवि तेसिं भवे इच्छा ॥ ६७६ ॥

व्याख्या—अथवा ज्ञानादीनामर्थाय, आदिग्रहणाद्दर्शनचारित्रग्रहणं, यदि कुर्यात् 'कृत्यानाम्' आचार्याणां वैयावृत्त्यं 'कश्चित्' साधुः, पाठान्तरं वा 'किंचि'त्ति किञ्चिद्विश्रामणादि, तत्रापि 'तेषां' कृत्यानां तं साधुं वैयावृत्त्ये नियोजयतां 'भवे इच्छे' ति भवेदिच्छाकारः, इच्छाकारपुरःसरं योजनीय इति गाथार्थः॥ किमित्यत आह—यस्मात्—

आणाबलाभिओगो णिग्गंथाणं ण कप्पई काउं। इच्छा पउंजियव्वा सेहे राईणिए (य) तहा ॥ ६७७ ॥

व्याख्या—आज्ञापनमाज्ञा—भवतेदं कार्यमेवेति, तदकुर्वतो बलात्कारापणं बलाभियोग इति, स 'निर्ग्रन्थानां' साधूनां न कल्पते कर्त्तुमिति, किन्तु 'इच्छं'त्ति इच्छाकारः प्रयोक्तव्यः, प्रयोजने उत्पन्ने सति शैक्षके तथा रत्नाधिके चालापकादि प्रष्टुकामेन, आद्यन्तग्रहणादन्येषु चेति गाथार्थः॥ एष उत्सर्ग उक्तः, अपवादस्त्वाज्ञाबलाभियोगावपि दुर्विनीते प्रयोक्तव्यौ, तेन च सहोत्सर्गतः संवास एव न कल्पते, बहुस्वजननालप्रतिबद्धे त्वपरित्याज्ये अयं विधिः—प्रथममिच्छाकारेण योज्यते, अकुर्वन्नाज्ञया पुनर्बलाभियोगेनेति, आह च—

जह जच्चबाहिलाणं आसाणं जणवएसु जायाणं। सयमेव खलिणगहणं अहवावि बलाभिओगेणं ॥ ६७८ ॥
पुरिसज्जाएऽवि तहा विणीयविणयंमि नत्थि अभिओगो। सेसंमि उ अभिओगो जणवयजाए जहा आसे॥६७९॥

व्याख्या—यथा जात्यबाह्लीकानामश्वानां जनपदेषु च—मगधादिषु जातानां, चशब्दलोपोऽत्र द्रष्टव्यः, स्वयमेव खलिनग्रहणं भवति, अथवापि बलाभियोगेनेति, खलिनं—कविकमभिधीयते, एष दृष्टान्तः, अयमर्थोपनयः—पुरुषजातेऽपि तथा, जातशब्दः प्रकारवचनः, 'विणीयविणयंमि' त्ति विविधम्—अनेकधा नीतः—प्रापितः विनयो येन स तथाविधः तस्मिन् नास्त्यभियोगो जात्यबाह्लीकाश्ववत्, 'सेसंमि उ अभिओगो' त्ति शेषे—विनयरहिते बलाभियोगः प्रवर्त्तते, कथं?—जनपदजाते यथाऽश्वे इति गाथाद्वयसमुदायार्थः॥ अन्वयत्रार्थस्तु कथानकादवसेयः, तच्चेदम्—

वोहलविसए एगो आसकिसोरो, सो दमिज्जिउकामो वेयालियं अहिवासिऊण पहाए अग्घेऊण वाहियालिं नीतो, खलिणं से ढोइयं, सयमेव तेण गहियं विणीयोत्ति। तत्तो राया सयमेवारूढो, सो हिययइच्छियं वूढो, रण्णा उयरिऊण

१ ०णाएणाणति प्र० २ बाल्हीकविषये एकोऽश्वकिशोर, स दमयितुकामो वैकालिकमधिवास्य प्रभातेऽर्घित्वा बाह्याली नीत, कविक तस्मै ढौकित, स्वयमेव तेन गृहीत, विनीत इति। ततो राजा स्वयमेवारूढ, स हृदयेप्सित व्यूढ, राज्ञोत्तीर्य

ओहारलयणादिणा सम्मं पडियरिओ, पतिदियहं च सुद्धत्तणओ एवं वहइ, न तस्स बलाभिओगो पवत्तइ। अवरो पुण मगहादिजणवए जातो आसो, सोऽवि दमिज्जिउकामो वेयालियं अहिवासितो, मायरं पुच्छइ—किमेयंति, तीए भणियं—कल्लं वाहिज्जसि तं, सयमेव खलिणं गहाय वहंतो नरिंदं तोसिज्जासि, तेण तहा कयं, रण्णावि आहारादिणा सव्वो से उवयारो कओ, माऊए सिट्ठं, तीए भणितो—पुत्त! विणयगुणफलं ते एयं, कल्लं पुणो मा खलिणं पडिवज्जिहिसि, मा वा वहिहिसि, तेणं तहेव कयं, रण्णावि खोखरेण पिट्टित्ता बला कवियं दाऊण वाहित्ता पुणोऽवि जवसं से णिरुद्धं, तेण माऊए सिट्ठं, सा भणइ—पुत्त! दुच्चेट्ठियफलमिणं ते, तं दिट्ठोभयमग्गो जो ते रुच्चइ तं करेहिसि। एस दिट्ठंतो अयमुवणओ—जो सयं न करेइ वेयावच्चादि तत्थ बलाभिओगोऽवि पयट्टाविज्जइ जणवयजाते जहा आसेत्ति। तस्माद्बलाभियोगमन्तरेणैव मोक्षार्थिना स्वयमेव प्रत्युत इच्छाकारं दत्त्वा अनभ्यर्थितेनैव वैयावृत्त्यं कार्यम् ॥ आह—तथाऽप्यनभ्यर्थितस्य स्वयमिच्छाकारकरणमयुक्तमेवेत्याशङ्क्याह—

१ आहारल्यनादिना सम्यक् प्रतिचरित, प्रतिदिवसं च शुद्धत्वादेव वहति, न तस्य बलाभियोग प्रवर्त्तते। अपर पुनर्मगधादिजनपदजातोऽश्वः, सोऽपि दमयितुकामो वैकालिकमधिवासित, मातरं पृच्छति—किमेतदिति?, तया भणित—कल्ये वाह्यसे (वाहयिष्यतासे) त्व, (तत्) स्वयमेव कविक गृहीत्वा वहन् नरेन्द्रं तोषयितासि (षे), तेन तथा कृत, राज्ञाऽपि आहारादिना सर्वस्तस्योपचार कृत, मात्रे शिष्टं, तया भणित—पुत्र! विनयगुणफल तवैतत्, कल्ये पुनर्मा कविक प्रतिपद्यस्व, मा वा वाक्षी, तेन तथैव कृत, राज्ञाऽपि खोखरेण (प्रतोदेन कशया वा) पिट्टयित्वा बलात्कविक दत्त्वा वाहयित्वा पुनरपि यवस तस्य निरुद्ध, तेन मात्रे शिष्ट, सा भणति—पुत्र! दुश्चेष्टितफलमिद तव, तद्दृष्टोभयमार्गो यत्तुभ्य रोचते त कुर्या। एष दृष्टान्तोऽयमुपनय—य स्वय न करोति वैयावृत्त्यादि तत्र बलाभियोगोऽपि प्रवर्त्यते जनपदजाते यथाऽश्व इति।

**अब्भत्थणाए मरुओ वानरओ चेव होइ दिट्ठंतो। गुरुकरणे सयमेव उ वाणियगा दुण्णि दिट्ठंता ॥ ६८० ॥**

व्याख्या—अभ्यर्थनायां मरुकः, पुनः शिष्यचोदनायां सत्यां वानरकश्चैव भवति दृष्टान्तः, गुरुकरणे स्वयमेव तु वणिजौ द्वौ दृष्टान्त इति समासार्थः ॥ व्यासार्थः कथानकेभ्योऽवसेय इति, तानि चामूनि—

एगस्स साहुस्स लद्धी अत्थि, सो ण करेइ वेयावच्चं बालवुड्ढाणंति, आयरियपडिचोइतो भणइ–को मं अब्भत्थेइ ?, आयरिएण भणिओ–तुमं अब्भत्थणं मग्गंतो चुक्किहिसि, जहा सो मरुगोत्ति। एगो मरुगो नाणमदमत्तो कत्तियपुण्णिमाए नरिंदजणवदेसुं दाणं दाउमब्भुट्ठिएसु ण तत्थ वच्चइ, भज्जाए भणितो–जाहि, सो भणइ–एगं ताव सुद्दाणं परिग्गहं करेमि, बीयं तेसिं घरं वच्चामि ?, जस्स आसत्तमस्स कुलस्स कज्जं सो मम आणेत्ता देउ, एवं सो जावज्जीवाए दरिद्दो जातो। एवं तुमंपि अब्भत्थणं मग्गमाणो चुक्किहिसि निज्जराए, एतेसिं बालवुड्ढाणं अण्णे अत्थि करेंतगा, तुज्झवि एस लद्धी एवं चेव त्रिराहित्ति। ततो सो एवं भणिओ भणइ–एवं सुंदरं जाणंता अप्पणा कीस न करेह ?, आयरिया

१ एकस्य साधोर्लब्धिरस्ति, स न करोति वैयावृत्त्यं बालवृद्धानामिति, आचार्यप्रतिचोदितो भणति–को मामभ्यर्थयते ?, आचार्येण भणित –त्वमभ्यर्थनां मार्गयन् भ्रश्यसि, यथा स मरुकः ( ब्राह्मणः ) इति। एको ब्राह्मणो ज्ञानमदमत्तः कार्त्तिकपूर्णिमायां नरेन्द्रजनपदेषु दानं दातुमभ्युत्थितेषु न तत्र व्रजति, भार्यया भणितः–याहि, स भणति–एकं तावत् शूद्राणां प्रतिग्रहं करोमि, द्वितीयं तेषां गृहे व्रजामि, यस्यासप्तमस्य कुलस्य कार्यं स मह्यमानीय ददातु, एवं स यावज्जीवं दरिद्रो जातः। एवं त्वमप्यभ्यर्थनां मार्गयन् भ्रश्यसि निर्जरायाः, एतेषां बालवृद्धानामन्ये सन्ति कर्त्तारः, तवाप्येषा लब्धिरेवमेव नङ्क्ष्यति। ततः स एवं भणितो भणति–एवं सुन्दरं जानाना आत्मना कुतो न कुरुत ?, आचार्या

भणंति–सरिसोऽसि तुमं तस्स वानरगस्स, जहा एगो वानरो रुक्खे अच्छइ, वासासु सीतवातेहिं झडिज्झति, ताहे सुघराए सउणिगाए भणिओ–'वानर ! पुरिसोऽसि तुमं निरत्थयं वहसि बाहुदंडाइं। जो पायवस्स सिहरे न करेसि कुडिं पडालिं वा ॥ १ ॥' सो एवं तीए भणिओ तुण्हिक्को अच्छइ, ताहे सा दोच्चंपि तच्चंपि भणइ, ततो सो रुट्ठो तं रुक्खं दुरुहिउमाढत्तो, सा नट्ठा, तेण तीसे तं घरं सुंबं सुंबं विक्खित्तं, भणइ य–नविसि ममं मयहरिया नविसि ममं सोहिया व णिद्धा वा। सुघरे ! अच्छसु विघरा जा वट्टसि लोगतत्तीसु ॥ १ ॥ सुहं इदाणिं अच्छ। एवं तुमंपि मम चेव उवरिएण जाओ, किं च–मम अन्नंपि निज्जरादारं अत्थि, तेण मम बहुतरिया निज्जरा, तं लाहं चुक्कीहामि, जहा सो वाणियगो–दो वाणियगा ववहरंति, एगो पढमपाउसे मोल्लं दायव्वयं होहित्ति सयमेव आसाढपुण्णीमाए घरं पच्छ(त्थ)इतो, बीएण अद्धं वा तिभागं वा दाऊण छवावियं, सयं ववहरइ, तेण तद्दिवसं बिउणो लाहो लद्धो, इयरो चुक्को। एवं चेव जइ

१ भणन्ति–सदृशोऽसि त्वं तस्य कपेः, यथैको वानरो वृक्षे तिष्ठति, वर्षासु शीतवातैः क्लिश्यति, तदा सुगृहिकया शकुन्या भणितः–वानर ! पुरुषोऽसि त्वं निरर्थकं वहसि बाहुदण्डान्। यः पादपस्य शिखरे न करोषि कुटीं पटालिकां वा ॥ १ ॥ स एवं तया भणितस्तूष्णीकस्तिष्ठति, तदा सा द्विरपि त्रिरपि भणति, ततः स रुष्टस्तं वृक्षमारोढुमारब्धः, सा नष्टा, तेन तस्यास्तद्गृहं दवरिकादवरिकं विक्षिप्तम्, भणति च–नाप्यसि मम महत्तरिका नाप्यसि मम सुहृद्वा स्निग्धा वा। सुगृहिके ! तिष्ठ विगृहा या वर्तसे लोकतप्तौ ॥ १ ॥ सुखमिदानीं तिष्ठ। एवं त्वमपि मम चैवोपरितनो जातः, किंच–ममान्यदपि निर्जराद्वारमस्ति, तेन मम बहुतरा निर्जरा, तं लाभं भ्रश्यामि,–यथा स वणिक्–द्वौ वणिजौ व्यवहरतः, एकः प्रथमप्रावृषि मूल्यं दातव्यं भविष्यतीति स्वयमेवाषाढपूर्णिमायां स्थगयित्वा गृहं गतः, ( प्रच्छेदित ), द्वितीयेनार्धं वा त्रिभागं वा दत्त्वा स्थगितं ( स्थापित ), स्वयं व्यवहरति, तेन तद्दिवसे द्विगुणो लाभो लब्धः, इतरो भ्रष्टः। एवमेव

अहं अप्पणा वेयावच्चं करेमि तो अचिंतणेण सुत्तत्था नासंति, तेहि य नट्ठेहिं गच्छसारवणाऽभावेण गणस्सादेसादिअप्पडितप्पणेण बहुयरं मे नासेइति। आह च–सुत्तत्थेसु अचिन्तण आएसे बुड्ढसेहगगिलाणे। बाले खमए वाई इड्ढीमाइ अणिड्ढी य ॥ १ ॥ एएहिं कारणेहिं तुंबभूओ उ होति आयरिओ। वेयावच्चं ण करे कायव्वं तस्स सेसेहिं ॥ २ ॥ जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खेज्जा। न हु तुंबंमि विणट्ठे अरया साहारया होंति ॥ ३ ॥ बाले सप्पभए तहा इड्ढिमंतंमि आगए पाणगादिगए आयरिए लहुत्तं, एवं वादिम्मिवि, अणिस्सरपव्वइयगा य एएत्ति जणापवादो, सेसं कंठं। आह–इच्छाकारेणाहं तव प्रथमालिकामानयामीत्यभिधाय यदा लब्ध्यभावान्न सम्पादयति तदा निर्ज्जरालाभविकलस्तस्येच्छाकारः, इत्यतः किं तेनेत्याशङ्क्याह—

**संजमजोए अब्भुट्ठियस्स सद्धाएँ काउकामस्स। लाभो चेव तवस्सिस्स होइ अद्दीणमणसस्स ॥ ६८१ ॥**

व्याख्या—'संयमयोगे' संयमव्यापारे अभ्युत्थितस्य तथा 'श्रद्धया' मनःप्रसादेन इहलोकपरलोकाशंसां विहाय कर्त्तुकामस्य, किम् ?–'लाभो चेव तवस्सिस्स'त्ति प्रकरणान्निर्ज्जराया लाभ एव तपस्विनो भवति अलब्ध्यादौ, अदीनं मनोऽस्येति अदीनमनास्तस्यादीनमनस इति गाथार्थः ॥ द्वारं १। इदानीं मिथ्याकारविषयप्रतिपादनायाह—

१ यद्यहमात्मना वैयावृत्त्यं करोमि तदाऽचिन्तनेन सूत्रार्थौ नश्यतः, तयोश्च नष्टयोर्गच्छसारणाऽभावेन गणस्य आदेशादेरप्रतितर्पणेन बहुतरं मे नश्यतीति। सूत्रार्थयोरचिन्तनमादेशे वृद्धे शैक्षके ग्लाने। बाले क्षपके वादी ऋद्धिमदादि अनृद्धिश्च ॥१॥ एतैः कारणैस्तुम्बभूतस्तु भवत्याचार्यः। वैयावृत्त्यं न कुर्यात् कर्त्तव्यं तस्य शेषैः ॥ २ ॥ यस्य कुलमायत्तं तं पुरुषमादरेण रक्षेत्। नैव तुम्बे विनष्टे अरकाः साधारा भवन्ति ॥ ३ ॥ बाले सर्पभये तथा ऋद्धिमत्यागते पानकाद्यर्थं गते आचार्ये लघुत्वम्, एवं वादिन्यपि, अनीश्वरप्रव्रजिताश्चैत इति जनापवादः, शेषं कण्ठ्यम्।

**संजमजोए अब्भुट्ठियस्स जंकिंचि वितहमायरियं । मिच्छा एतंति वियाणिऊण मिच्छत्ति कायव्वं ॥ ६८२ ॥**

व्याख्या—संयमयोग-समितिगुप्तिरूपस्तस्मिन्विषयभूतेऽभ्युत्थितस्य सतः यत्किञ्चिद्वितथम्—अन्यथा आचरितम्—आसेवितं, भूतमिति वाक्यशेषः, 'मिथ्या एतदिति' विपरीतमेतदित्येवं विज्ञाय किम् ?—'मिच्छत्ति कायव्वं' मिथ्यादुष्कृतं दातव्यमित्यर्थः । संयमयोगविषयायां च प्रवृत्तौ वितथासेवने मिथ्यादुष्कृतं दोषापनयनायालं, न तूपेत्यकरणगोचरायां नाप्यसकृत्करणगोचरायामिति गाथाहृदयार्थः ॥ तथा चोत्सर्गमेव प्रतिपादयन्नाह—

**जइ य पडिक्कमियव्वं अवस्स काऊण पावयं कम्मं । तं चेव न कायव्वं तो होइ पए पडिक्कंतो ॥ ६८३ ॥**

व्याख्या—यदि च 'प्रतिक्रान्तव्यं' निवर्त्तितव्यं, मिथ्यादुष्कृतं दातव्यमित्यर्थः, 'अवश्यं' नियमेन कृत्वा पापकं कर्म, ततश्च 'तदेव' पापकं कर्म न कर्त्तव्यं, ततो भवति 'पदे' उत्सर्गपदविषये प्रतिक्रान्त इति । अथवा—'पदे'त्ति प्रथमं प्रतिक्रान्त इति गाथार्थः ॥ साम्प्रतं यथाभूतस्येदं मिथ्यादुष्कृतं सुदत्तं भवति तथाभूतमभिधित्सुराह—

**जं दुक्कडंति मिच्छा तं भुज्जो कारणं अपूरेंतो । तिविहेण पडिक्कंतो तस्स खलु दुक्कडं मिच्छा ॥ ६८४ ॥**

व्याख्या—'यदि'त्यनिर्दिष्टस्य निर्देशः, करणमिति योगः, ततश्च 'यत्कारणं' यद्वस्तु दुष्टु कृतं दुष्कृतम् 'इति' एवं विज्ञाय 'मिच्छ'त्ति सूचनात्सूत्रमितिकृत्वा मिथ्यादुष्कृतं दत्तं, तद् 'भूयः' पुनः प्रागुक्तं दुष्कृतकारणम् 'अपूरयन्' अकुर्वन्ननाचरन्नित्यर्थः, यो वर्त्तत इति वाक्यशेषः, 'तस्स खलु दुक्कडं मिच्छ'ंति सम्बद्ध एव ग्रन्थः, तत्र स्वयं कायेनाप्यकुर्वन्नपूरयन्नभिधीयत एवेत्यत आह—'तिविहेण पडिक्कंतो' त्ति त्रिविधेन मनोवाक्कायलक्षणेन योगेन कृतकारितानुमतिभेदयुक्तेन 'प्रतिक्रान्तो' निवृत्तो यस्तस्माद्दुष्कृतकारणात् तस्यैव, खलुशब्दोऽवधारणे, 'दुष्कृतं' प्रागुक्तं दुष्कृतफलदातृत्वमधिकृत्य 'मिथ्ये'ति मिथ्या, भवतीति क्रियाध्याहारः अथवा व्यवहितयोगात्तस्यैव मिथ्यादुष्कृत भवति नान्यस्येति गाथार्थः ॥ साम्प्रतं यस्य मिथ्यादुष्कृतं दत्तमपि न सम्यग् भवति तत्प्रतिपादनायाह—

**जं दुक्कडंति मिच्छा तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई मायानियडीपसंगो य ॥ ६८५ ॥**

व्याख्या—'यत्' पापं किञ्चिदनुष्ठानं दुष्कृतमिति विज्ञाय 'मिच्छ'त्ति मिथ्यादुष्कृतं दत्तमित्यर्थः, यस्तदेव निषेवते पुनः पापं स हि प्रत्यक्षमृषावादी वर्त्तते, कथम् ?—दुष्कृतमेतदित्यभिधाय पुनरासेवनात्, तथा मायानिकृतिप्रसङ्गश्च तस्य, स हि दुष्टान्तरात्मा निश्चयतश्चेतसाऽनिवृत्त एव गुर्वादिरञ्जनार्थं मिथ्यादुष्कृतं प्रयच्छति, कुतः ?, पुनरासेवनात्, तत्र मायैव निकृतिर्मायानिकृतिस्तस्याः प्रसङ्ग इति गाथार्थः ॥ कः पुनरस्य मिथ्यादुष्कृतपदस्यार्थ इत्याशङ्क्याह—

**मित्ति मिउमद्दवत्ते छत्ति य दोसाण छायणे होइ । मित्ति य मेराए ठिओ दुत्ति दुगुंछामि अप्पाणं ॥ ६८६ ॥**

व्याख्या—'मी' त्येवं वर्णः मृदुमार्दवत्वे वर्त्तते, तत्र मृदुत्वं—कायनम्रता मार्दवत्वं—भावनम्रतेति, 'छे'ति च दोषस्य—असंयमयोगलक्षणस्य छादने—स्थगने भवति, 'मी'ति चायं वर्णः मर्यादायां—चारित्ररूपायां स्थितोऽहमित्यस्यार्थस्याभिधायकः 'दु'इत्ययं वर्णः जुगुप्सामि—निन्दामि दुष्कृतकर्मकारिणमात्मानमित्यस्मिन्नर्थे वर्त्तत इति गाथार्थः ॥

**कत्ति कडं मे पावं डत्ति य डेवेमि तं उवसमेणं । एसो मिच्छाउक्कडपयक्खरत्थो समासेणं ॥ ६८७ ॥ दारं ॥**

व्याख्या—'क' इत्ययं वर्णः कृतं मया पापमित्येवमभ्युपगमार्थे वर्त्तते, 'ड' इति च 'डेवेमि तं'ति लङ्घयामि—अतिक्रमामि तत्, केनेत्याह—उपशमेन हेतुभूतेन, 'एषः' अनन्तरोक्तः प्राकृतशैल्या मिथ्यादुष्कृतपदस्याक्षरार्थ इति 'समासेन' सङ्क्षेपेणेति गाथार्थः ॥ आह—कथमक्षराणां प्रत्येकमुक्तार्थतेति, पदवाक्ययोरेवार्थदर्शनादिति, अत्रोच्यते, इह यथा वाक्यैकदेशत्वात्पदस्यार्थोऽस्ति तथा पदैकदेशत्वाद्वर्णार्थोऽप्यवसेय इति, अन्यथा पदस्याप्यर्थशून्यत्वप्रसङ्गः, प्रत्येकमक्षरेषु तदभावादिति, प्रयोगश्च—इह यद्यत्र प्रत्येकं नास्ति तत्समुदायेऽपि न भवति, प्रत्येकमभावात्, सिकतातैलवदिति, इष्यते च वर्णसमुदायात्मकस्य पदस्यार्थः, तस्मात्तदन्यथाऽनुपपत्तेर्वर्णार्थोऽपि प्रतिपत्तव्य इत्यलं प्रसङ्गेनेति । द्वारम् २। साम्प्रतं तथाकारो यस्य दीयते तत्प्रतिपिपादयिषयाऽऽह—

**कप्पाकप्पे परिणिट्ठियस्स ठाणेसु पंचसु ठियस्स । संजमतवड्ढगस्स उ अविकप्पेणं तहाकारो ॥ ६८८ ॥**

व्याख्या—कल्पो विधिराचार इति पर्यायाः, कल्पविपरीतस्त्वकल्पः, जिनस्थविरकल्पादिर्वा कल्पः, चरकादिदीक्षा पुनरकल्प इति, कल्पश्चाकल्पश्च कल्पाकल्पमित्येकवद्भावस्तस्मिन् कल्पाकल्पे, परि—समन्तात् निष्ठितः परिनिष्ठितो, ज्ञाननिष्ठां प्राप्त इत्यर्थः, तस्य, तथा तिष्ठन्त्येतेषु सत्सु शाश्वते स्थाने प्राणिन इति स्थानानि—महाव्रतान्यभिधीयन्ते, तेषु स्थानेषु पञ्चसु स्थितस्य, महाव्रतयुक्तस्येत्यर्थः, तथा संयमतपोभ्यामाढ्यः—सम्पन्न इत्यनेनोत्तरगुणयुक्ततामाह, तस्य किमित्याह—'अविकल्पेन' निश्चयेन, किम् ?—तथाकारः, कार्य इति क्रियाध्याहार इति गाथार्थः ॥ इदानीं तथाकारविषयप्रतिपादनायाह—

**वायणपडिसुणणाए उवएसे सुत्तअत्थकहणाए । अवितहमेयंति तहा पडिसुणणाए तहक्कारो ॥ ६८९ ॥ दारं ॥**

व्याख्या—वाचना—सूत्रप्रदानलक्षणा तस्याः प्रतिश्रवणं—प्रतिश्रवणा तस्यां वाचनाप्रतिश्रवणायां, तथाकारः कार्यः,

एतदुक्त भवति-गुरौ वाचनां प्रयच्छति सति सूत्रं गृह्णानेन तथाकारः कार्यः, तथा सामान्येनोपदेशे-चक्रवालसामाचारीप्रतिबद्धे गुरोरन्यस्य वा सम्बन्धिनि तथाकारः कार्यः, तथा 'सुत्तअत्थकहणाए'त्ति सूत्रार्थकथनायां, व्याख्यान इत्यर्थः, किम् ?-तथाकारः कार्यः, तथाकार इति कोऽर्थ इति ?, आह-अवितथमेतत् यदाहुर्यूयमिति, न केवलमुक्तेष्वेवार्थेषु तथाकारप्रवृत्तिः, तथा 'पडिसुणणाए' त्ति प्रतिपृच्छोत्तरकालमाचार्ये कथयति सति प्रतिश्रवणायां च तथाकारप्रवृत्तिरिति, चशब्दलोपोऽत्र द्रष्टव्य इति गाथार्थः ॥ साम्प्रतं स्वस्थाने स्वस्थाने खल्विच्छाकारादिप्रयोक्तुः फलप्रतिपादनायाह—

**जस्स य इच्छाकारो मिच्छाकारो य परिचिया दोऽवि । तइओ य तहक्कारो न दुल्लभा सोग्गई तस्स ॥ ६९० ॥**

व्याख्या—यस्य चेच्छाकारो मिथ्याकारश्च परिचितौ द्वावपि तृतीयश्च तथाकारो न दुर्लभा सुगतिस्तस्येति गाथा निगदसिद्धैव । द्वारं ३ ॥ साम्प्रतमावश्यकीनैषेधिकीद्वारद्वयावयवार्थमभिधित्सुः पातनिकागाथामाह—

**आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ । एयं इच्छं नाउं गणिवर ! तुब्भंतिए णिउणं ॥ ६९१ ॥**

व्याख्या—शिष्यः किलाह-'आवस्सियं'ति आवश्यिकी-पूर्वोक्ता तामावश्यिकीं च 'निन्तो' निर्गच्छन् यां च 'अतिंतो' त्ति आगच्छन्, प्रविशन्नित्यर्थः, नैषेधिकीं करोति, 'एतद्' आवश्यिकीनैषेधिकीद्वयमपि स्वरूपादिभेदभिन्नं इच्छामि ज्ञातुं हे गणिवर ! युष्मदन्तिके 'निपुणं' सूक्ष्मं ज्ञातुमिच्छामीति क्रियाविशेषणमिति गाथार्थः ॥ एवं शिष्येणोक्ते सत्याहाचार्यः—

**आवस्सियं च णिंतो जं च अइंतो णिसीहियं कुणइ । वंजणमेयं तु दुहा अत्थो पुण होइ सो चेव ॥ ६९२ ॥**

व्याख्या—आवश्यिकीं च निर्गच्छन् यां च प्रविशन्नैषेधिकीं करोति, 'व्यञ्जनं' शब्दरूपं 'एतं तु दुह'त्ति एतदेव शब्दरूपं द्विधा, अर्थः पुनर्भवत्यावश्यिकीनैषेधिक्योः 'स एव' एक एव, यस्मादवश्यंकर्त्तव्ययोगक्रियाऽऽवश्यिकी निषिद्धात्मनश्चातिचारेभ्यः क्रिया नैषेधिकीति, न ह्यसावप्यवश्यं कर्त्तव्यं व्यापारमुलङ्घ्य प्रवर्त्तते, आह-यद्येवं भेदोपन्यासः किमर्थम् ?, उच्यते, क्वचित् स्थितिगमनक्रियाभेदादभिधानभेदाच्चेति गाथार्थः ॥ आह-'आवश्यिकीं च निर्गच्छ'न्नित्युक्तं, तत्र साधोः किमवस्थानं श्रेय उताटनमिति ?, उच्यते, अवस्थानमिति, कथम् ?, यत आह—

**एगग्गस्स पसंतस्स न होंति इरियाइया गुणा होंति । गंतव्वमवस्सं कारणंमि आवस्सिया होइ ॥ ६९३ ॥**

व्याख्या—एकमग्रम्-आलम्बनमस्येत्येकाग्रस्तस्य, स चाप्रशस्तालम्बनोऽपि भवत्यत आह-'प्रशान्तस्य' क्रोधरहितस्य तिष्ठतः, किम् ?, न भवन्ति ईर्यादयः, ईरणमीर्य्या-गमनमित्यर्थ., इहेर्य्याकार्य कर्म ईर्य्याशब्देन गृह्यते, कारणे कार्योपचाराद्, ईर्य्या आदौ येषामात्मसंयमविराधनादीनां दोषाणां ते ईर्यादयो न भवन्ति, तथा 'गुणाश्च' स्वाध्यायध्यानादयो भवन्ति, प्राप्तं तर्हि संयतस्यागमनमेव श्रेय इति तदपवादमाह-न चावस्थाने खलूक्तगुणसम्भवान्न गन्तव्यमेव, किन्तु 'गन्तव्वमवस्सं कारणंमि' गन्तव्यम् 'अवश्यं' नियोगतः 'कारणे' गुरुग्लानादिसम्बन्धिनि, यतस्तत्रागच्छतो दोषा इति, तथा च

---

* गम्ययप कर्माधारे इति पञ्चमी तथा चातिचारानाश्रित्येत्यर्थः

कारणे* गच्छतः 'आवस्सिया होइ' आवश्यिकी भवतीति गाथार्थः ॥ आह-कारणेन गच्छतः किं सर्वस्यैवावश्यकी भवति उत नेति ?, नेति, कस्य तर्हि ?, उच्यते,+—

**आवस्सिया उ आवस्सएहिं सव्वेहिं जुत्तजोगिस्स । मणवयणकायगुत्तिंदियस्स आवस्सिया होइ ॥ ६९४ ॥**

व्याख्या—आवश्यिकी तु 'आवश्यकैः' प्रतिक्रमणादिभिः सर्वैर्युक्तयोगिनो भवति, शेषकालमपि निरतिचारस्य क्रियावत इति भावार्थः, तस्य च गुरुनियोगादिना प्रवृत्तिकालेऽपि 'मण'इत्यादि पश्चार्द्धं मनोवाक्कायेन्द्रियैर्गुप्त इति समासः, तस्य, किम् ?-आवश्यिकी भवति, इन्द्रियशब्दस्य गाथाभङ्गभयाद्व्यवहितोपन्यासः, कायात्पृथगिन्द्रियग्रहणं प्राधान्यख्यापनार्थम्, अस्ति चायं न्यायः-'सामान्यग्रहणे सत्यपि प्राधान्यख्यापनार्थं भेदेनोपन्यासो' यथा-ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति गाथार्थः ॥ उक्ताऽऽवश्यिकी, साम्प्रतं नैषेधिकीं प्रतिपादयन्नाह—

**सेज्जं ठाणं च जहिं चेएइ तहिं निसीहिया होइ । जम्हा तत्थ निसिद्धो तेणं तु निसीहिया होइ ॥ ६९५ ॥**

व्याख्या—शेरतेऽस्यामिति शय्या-शयनीयस्थानं तां शय्यां 'स्थानं चे'ति स्थानमूर्ध्वस्थानं†, कायोत्सर्गः, यत्र 'चेतयते' 'चिती सञ्ज्ञाने' अनुभवरूपतया विजानाति वेदयतीत्यर्थः, अथवा 'चेतयते' इति करोति, शयनक्रियां च कुर्वता निश्चयतः शय्या‡क्रिया कृता भवति, ततश्च यत्र स्वपितीत्यर्थः, चशब्दो वीरासनाद्यनुक्तसमुच्चयार्थः, अथवा तुशब्दार्थे द्रष्टव्यः, स च विशेषणार्थः, कथम् ?, प्रतिक्रमणाद्य¶शेषकृतावश्यकः सन्ननुज्ञातो गुरुणा शय्यां स्थानं च यत्र चेतयते 'तत्र' एवं-

---

* कारणात् प्र०. + किमुच्यते प्र० † नमुक्त प्र० ‡ शय्या प्र०. ¶ प्रतिक्रमणाद्यशेषे. कार्ये समापितावश्यककृत्य इत्यर्थ

विधस्थितिक्रियाविशिष्ट एव स्थाने नैषेधिकी भवति, नान्यत्र, किमित्यत आह–यस्मात्तत्र निषिद्धोऽसौ तेनैव कारणेन नैषेधिकी भवति, निषेधात्मकत्वात्तस्या इति गाथार्थः ॥ पाठान्तरं वा—

**सेज्जं ठाणं च जदा चेतेति तया निसीहिया होइ । जम्हा तदा निसेहो निसेहमइया च सा जेणं ॥ ६९६ ॥**

इयमुक्तार्थत्वात्सुगमैव । अनेन ग्रन्थेन मूलगाथायाः 'आवश्यिकीं च निर्गच्छन् यां चागच्छन् नैषेधिकीं करोति व्यञ्जनमेतद् द्वेधे' त्येतावत् स्थितिरूपनैषेधिकीप्रतिपादनं व्यञ्जनभेदनिबन्धनमधिकृत्य व्याख्यातम् । अमुमेवार्थमुपसञ्जिहीर्षुराह भाष्यकारः—

**आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ । सेज्जाणिसीहियाए णिसीहियाअभिमुहो होई ॥ १२० ॥ (भा०)**

व्याख्या—आवश्यिकीं च निर्गच्छन् यां चागच्छन् नैषेधिकीं करोति तदेतद् व्याख्यातम्, उपलक्षणत्वात्सह तृतीयपादेन 'व्यञ्जनमेतद् द्विधे' त्यनेनेति । साम्प्रतम् 'अर्थः पुनर्भवति स एवे'ति गाथावयवार्थः प्रतिपाद्यते–तत्रेत्थमेक एवार्थो भवति–यस्मान्नैषेधिक्यपि नावश्यंकर्त्तव्यव्यापारगोचरतामतीत्य वर्त्तते, यतः प्रविशन् संयमयोगानुपालनाय शेषपरिज्ञानार्थं चेत्थमाह । 'सेज्जानिसीहियाए निसीहियाअभिमुहो होइ'त्ति शय्यैव नैषेधिकी तस्यां शय्यानैषेधिक्यां विषयभूतायां, किम्?, शरीरमपि नैषेधिकीत्युच्यत इति, अत आह–शरीरनैषेधिक्या आगमनं प्रत्यभिमुखस्तु, अतः संवृतगात्रैर्भवितव्यमिति सञ्ज्ञां करोतीति गाथार्थः ॥ इतश्चैक एवार्थो यत आह—

**जो होइ निसिद्धप्पा निसीहिया तस्स भावओ होइ । अणिसिद्धस्स निसीहिय केवलमेत्तं हवइ सद्दो ॥ १२१ ॥ (भा०)**

व्याख्या—यो भवति निषिद्धात्मा–निषिद्धो मूलगुणोत्तरगुणातिचारेभ्यः आत्मा येनेति समासः, नैषेधिकी 'तस्य' निषिद्धात्मनो 'भावतः' परमार्थतो भवति, न निषिद्धोऽनिषिद्धः उक्तेभ्य एवातिचारेभ्यः तस्य अनिषिद्धस्य–अनुपयुक्तस्यागच्छतः नैषेधिकी, किम्?–'केवलमेत्तं हवइ सद्दो' केवलं शब्दमात्रमेव भवति, न भावत इति गाथार्थः ॥ आह–यदि नामैवं तत एकार्थतायाः किमायातमिति?, उच्यते, निषिद्धात्मनो नैषेधिकी भवतीत्युक्तं, स च—

**आवस्सयंमि जुत्तो नियमणिसिद्धोत्ति होइ नायव्वो ।**
**अहवाऽवि णिसिद्धप्पा णियमा आवस्सए जुत्तो ॥ १२२ ॥ दारं ( भाष्यम् )**

व्याख्या—'आवश्यके' मूलगुणोत्तरगुणानुष्ठानलक्षणे युक्तः 'नियमनिसिद्धोत्ति होइ नायव्वो' नियमेन निषिद्धो नियमनिषिद्ध 'इति' एवं भवति ज्ञातव्यः, आवश्यिक्यपि चावश्यकयुक्तस्यैवेत्यत एकार्थतेति । अथवेति प्रकारान्तरदर्शनार्थः, अपिशब्दस्य व्यवहितः सम्बन्धः, निषिद्धात्माऽपि नियमादावश्यके युक्तो यतः अतोऽप्येकार्थतेति, पाठान्तरं वा 'अहवावि निसिद्धप्पा सिद्धाणं अंतियं जाइ'त्ति, अस्यायमर्थः–एवं क्रियाया अभेदेनावश्यकीनैषेधिक्योरेकार्थतोक्ता, इह तु कार्याभेदेनोच्यते, अथवा निषिद्धात्माऽपि सिद्धानामन्तिकं–सामीप्यं 'याति' गच्छति, अपिशब्दादावश्यकयुक्तोऽपि, अतः कार्याभेदादेकार्थतेति गाथार्थः ॥ द्वारं ४–५ ॥ साम्प्रतमापृच्छादिद्वारचतुष्टयमेकगाथयैव प्रतिपादयन्नाह—

**आपुच्छणा उ कज्जे पुव्वनिसिद्धेण होइ पडिपुच्छा । पुव्वगहिएण छंदण णिमंतणा होअगहिएणं ॥ ६९७ ॥**

व्याख्या—आप्रच्छनमापृच्छा सा च कर्त्तुमभीष्टे कार्ये प्रवर्त्तमानेन गुरोः कार्या–अहमिदं करोमीति । द्वारं ६ । तथा पूर्वनिषिद्धेन सता भवतेदं न कार्यमिति, उत्पन्ने च प्रयोजने कर्त्तुकामेन 'होति पडिपुच्छ'त्ति प्रतिपृच्छा कर्त्तव्या भवति, पाठान्तरं वा–'पुव्वनिउत्तेण होइ पडिपुच्छा' पूर्वनियुक्तेन सता यथा भवतेदं कार्यमिति तत्कर्तुकामेन गुरोः प्रतिपृच्छा कर्त्तव्या भवति–अहं तत्करोमीति, तत्र हि कदाचिदसौ कार्यान्तरमादिशति समाप्तं वा तेन प्रयोजनमिति । द्वारं ७ । तथा पूर्वगृहीतेनाशनादिना छन्दना शेषसाधुभ्यः कर्त्तव्या–इदं मयाऽशनाद्यानीतं यदि कस्यचिदुपयुज्यते ततोऽसावि च्छाकारेण ग्रहणं करोत्विति । द्वारं ८ । तथा निमन्त्रणा भवत्यगृहीतेनाशनादिना अहं भवतोऽशनाद्यानयामीति गाथार्थः द्वारं ९ ॥ इदानीमुपसम्पद्द्वारावयवार्थः प्रतिपाद्यते–सा चोपसम्पद् द्विधा भवति–गृहस्थोपसम्पत्साधूपसम्पच्च, तत्रास्तां तावद् गृहस्थोपसम्पत्, साधूपसम्पत्प्रतिपाद्यते–सा च त्रिविधा–ज्ञानादिभेदाद्, आह च—

**उवसंपया य तिविहा णाणे तह दंसणे चरित्ते य । दंसणणाणे तिविहा दुविहा य चरित्तअट्ठाए ॥ ६९८ ॥**

व्याख्या—उपसम्पच्च त्रिविधा 'ज्ञाने' ज्ञानविषया तथा दर्शनविषया चारित्रविषया च, तत्र दर्शनज्ञानयोः सम्बन्धिनी त्रिविधा द्विविधा च चारित्रार्थायेति गाथार्थः ॥ तत्र यदुक्तं–'दर्शनज्ञानयोस्त्रिविधे'ति तत्प्रतिपादयन्नाह—

**वत्तणा संधणा चेव, गहणं सुत्तत्थतदुभए । वेयावच्चे खमणे, काले आवकहाइ य ॥ ६९९ ॥**

व्याख्या—वर्त्तना सन्धना चैव ग्रहणमित्येतत्त्रितयं 'सुत्तत्थतदुभए'त्ति सूत्रार्थोभयविषयमवगन्तव्यमिति, एतदर्थमुपसम्पद्यते, तत्र वर्त्तना प्राग्गृहीतस्यैवास्थिरस्य सूत्रादेर्गुणनमिति, सन्धना तु तस्यैव प्रदेशान्तरविस्मृतस्य मेलनं घटना योजना इत्यर्थः, ग्रहणं पुनः तस्यैव तत्प्रथमतया आदानमिति, एतत्त्रितयं सूत्रार्थोभयविषयं द्रष्टव्यम्, एवं ज्ञाने नव

भेदाः, दर्शनेऽपि दर्शनप्रभावनीयशास्त्रविषया एत एव द्रष्टव्या इति, अत्र च सन्दिष्टः सन्दिष्टस्योपसम्पद्यते इत्यादिचतुर्भङ्गिका, प्रथमः शुद्धः शेषास्त्वशुद्धा इति, 'द्विविधा च चारित्रार्थाये'ति यदुक्तं तत्प्रदर्शनायाह–'वेयावच्चे खमणे काले आवकहाइ य' चारित्रोपसम्पद् वैयावृत्यविषया क्षपणविषया च, इयं च कालतो यावत्कथिका च भवति, चशब्दादित्वरा च भवति, एतदुक्तं भवति–चारित्रार्थमाचार्याय कश्चिद्वैयावृत्यकरत्वं प्रतिपद्यते, स च कालत इत्वरो यावत्कथिकश्च भवतीति गाथासमासार्थः ॥ साम्प्रतमयमेवार्थो विशेषतः प्रतिपाद्यते–तत्रापि सन्दिष्टेन सन्दिष्टस्योपसम्पद्यातव्येति मौलिकोऽयं गुण इति, एतत्प्रभवत्वादुपसम्पद इति, अतः अमुमेवार्थमभिधित्सुराह—

संदिट्ठो संदिट्ठस्स चेव संपज्जई उ एमाई । चउभंगो एत्थं पुण पढमो भंगो हवइ सुद्धो ॥ ७०० ॥

व्याख्या—'सन्दिष्टो' गुरुणाऽभिहितः सन्दिष्टस्यैवाचार्यस्य यथा अमुकस्य सम्पद्यतां उपसम्पदं प्रयच्छेत इत्यर्थः, एवमादिश्चतुर्भङ्गः, स चायं–तद्यथा–सन्दिष्टः सन्दिष्टस्योक्त एव, सन्दिष्टः असन्दिष्टस्यान्यस्याऽऽचार्यस्येति द्वितीयः, असन्दिष्टः सन्दिष्टस्य, न तावदिदानीं गन्तव्यं गन्तव्यं त्वमुकस्येति तृतीयः, असन्दिष्टः असन्दिष्टस्य–न तावदिदानीं गन्तव्यं न चामुकस्येति, अत्र पुनः प्रथमो भङ्गो भवति शुद्धः, पुनःशब्दस्य विशेषणार्थत्वात् द्वितीयपदेनाव्यवच्छित्तिनिमित्तमन्येऽपि द्रष्टव्या इति गाथार्थः ॥ साम्प्रतं वर्त्तनादिस्वरूपप्रतिपादनायाह—

अथिरस्स पुव्वगहियस्स वत्तणा जं इहं थिरीकरणं । तस्सेव पएसंतरणट्ठस्सऽणुसंधणा घडणा ॥ ७०१ ॥

---

१ आचार्यस्य.

गहणं तप्पढमतया सुत्ते अत्थे य तदुभए चेव । अत्थग्गहणंमि पायं एस विही होइ णायव्वो ॥ ७०२ ॥

गाथाद्वयं निगदसिद्धमेव । नवरं–प्रायोग्रहणं सूत्रग्रहणेऽपि कश्चिज्जवत्येव प्रमार्जनादिरिति ज्ञापनार्थम् ॥ साम्प्रतमधिकृतविधिप्रदर्शनाय द्वारगाथामाह—

मज्जणणिसेज्जअक्खा कितिकम्मुस्सग्ग वंदणं जेट्ठे । भासंतो होई जेट्ठो नो परियाएण तो वन्दे ॥ ७०३ ॥

एतद्व्याचिख्यासयैवेदमाह—

ठाणं पमज्जिऊणं दोण्णि निसिज्जाउ होंति कायव्वा । एगा गुरुणो भणिया बितिया पुण होंति अक्खाणं ॥ ७०४ ॥

निगदसिद्धा, नवरम्–'अक्खाणं'ति समवसरणस्य, न चाकृतसमवसरणेन व्याख्या कर्त्तव्येत्युत्सर्गः ॥ व्याख्यातं द्वारत्रयं, कृतिकर्मद्वारव्याचिख्यासयाऽऽह—

दो चेव मत्तगाइं खेले तह काइयाए बीयं तु । जावइया य सुणेंती सव्वेऽवि य ते तु वंदंति ॥ ७०५ ॥

निगदसिद्धैव, नवरं मात्रकं–समाधिः, कृतिकर्मद्वार एव च विशेषाभिधानमदुष्टमिति, अर्द्धकृतव्याख्यानोत्थानानुत्थानाभ्यां पलिमन्थाऽऽत्मविराधनादयश्च दोषा भावनीया इति द्वारम् । अधुना कायोत्सर्गद्वारं व्याचिख्यासुराह—

सव्वे काउस्सग्गं करेंति सव्वे पुणोऽवि वंदंति । णासण्णे णाइदूरे गुरुवयणपडिच्छगा होंति ॥ ७०६ ॥

व्याख्या—सर्वे श्रोतारः 'श्रेयांसि बहुविघ्नानी'तिकृत्वा तद्विघातायानुयोगप्रारम्भनिमित्तं कायोत्सर्गं कुर्वन्ति, तं चोत्सार्य सर्वे पुनरपि वन्दन्ते, ततो नासन्ने नातिदूरे व्यवस्थिताः सन्तः, किम् ?– गुरुवचनप्रतीच्छका भवन्ति–शृण्वन्तीति गाथार्थः ॥ साम्प्रतं श्रवणविधिमतिपादनायाह—

णिद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं । भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेयव्वं ॥ ७०७ ॥

अभिकंखंतेहिं सुहासियाइँ वयणाइँ अत्थसाराइं । विम्हियमुहेहिं हरिसागएहिं हरिसं जणंतेहिं ॥ ७०८ ॥

गाथाद्वयं निगदसिद्धं । नवरं 'हरिसागएहिं' ति सञ्जातहर्षैरित्यर्थः, अन्येषां च संवेगकारणादिना हर्षं जनयद्भिः, एवं च शृण्वद्भिस्तैर्गुरोरतीव परितोषो भवतीति ॥ ततः किमित्याह—

गुरुपरिओसगएणं गुरुभत्तीए तहेव विणएणं । इच्छियसुत्तत्थाणं खिप्पं पारं समुवयंति ॥ ७०९ ॥

व्याख्या—'गुरुपरितोपगतेन' गुरुपरितोपजातेन सता गुरुभक्त्या तथैव विनयेन, किम् ?, सम्यक्सद्भावप्ररूपणया ईप्सितसूत्रार्थयोः 'क्षिप्रं' शीघ्रं पारं समुपयान्ति–निष्ठां व्रजन्तीति गाथार्थः ॥

वक्खाणसमत्तीए जोगं काऊण काइयाईणं । वंदंति तओ जेट्ठं अण्णे पुव्वं चिय भणन्ति ॥ ७१० ॥

निगदसिद्धा । नवरम्, अन्ये आचार्या इत्थमभिदधति–किल पूर्वमेव व्याख्यानारम्भकाले ज्येष्ठं वन्दन्त इति । द्वारगाथापश्चार्धमाक्षेपद्वारेण प्रपञ्चतो व्याचिख्यासुराह—

चोएति जइ हु जिट्ठो कहिंचि सुत्तत्थधारणाविगलो । वक्खाणलद्धिहीणो निरत्थयं वंदणं तंमि ॥ ७११ ॥

निगदसिद्धा । नवरं निरर्थकं वन्दनं, तस्मिंस्तत्फलस्य प्रत्युच्चारकश्रवणलाभाभावादिति भावना ।

अह वयपरियाएहिं लहुगोऽविहु भासओ इहं जेट्ठो। रायणियवंदणे पुण तस्साविं आसायणा भंते!॥७१२॥

व्याख्या—अथ वयःपर्यायाभ्यां लघुरपि भाषक एवेह ज्येष्ठः परिगृह्यते, रत्नाधिकवन्दने पुनः तस्याप्याशातना भदन्त! प्राप्नोति, तथाहि-न युज्यत एव चिरकालप्रव्रजितान् लघोर्वन्दनं दापयितुमिति गाथार्थः॥ इत्थं पराभिप्रायमाशङ्क्याह—

जइवि वयमाइएहिं लहुओ सुत्तत्थधारणापडुओ। वक्खाणलद्धिमंतो सो च्चिय इह घेप्पई जेट्ठो॥७१३॥

व्याख्या—प्रकटार्था। आशातनादोषपरिजिहीर्षया त्वाह—

आसायणावि णेवं पडुच्च जिणवयणभासयं जम्हा। वंदणयं राइणिए तेण गुणेणंपि सो चेव॥७१४॥

प्रकटार्थैव। नवरं 'तेन गुणेन' अर्हद्वचनव्याख्यानलक्षणेनेति। इदानीं प्रसङ्गतो वन्दनविषय एव निश्चयव्यवहारनयमतप्रदर्शनायाह—

न वओ एत्थ पमाणं न य परियाओऽवि णिच्छयमएणं। ववहारओ उ जुज्जइ उभयनयमयं पुण पमाणं॥७१५॥

व्याख्या—न 'वयः' अवस्थाविशेषलक्षणम् 'अत्र' वन्दनकविधौ प्रमाणं, न च 'पर्यायोऽपि' प्रव्रज्याप्रतिपत्तिलक्षणः 'निश्चयमतेन' निश्चयनयाभिप्रायेण, ज्येष्ठवन्दनादिव्यवहारलोपातिप्रसङ्गनिवृत्त्यर्थमाह-व्यवहारतस्तु युज्यते, किमत्र प्रमाणमिति सन्देहापनोदार्थमाह-उभयनयमतं पुनः प्रमाणमिति गाथार्थः॥ प्रकृतमेवार्थं समर्थयन्नाह—

निच्छयओ दुन्नेयं-को भावे कम्मि वट्टई समणो?। ववहारओ उ कीरइ जो पुव्वठिओ चरित्तंमि॥७१६॥

व्याख्या—निश्चयतो दुर्ज्ञेयं-को भावे कस्मिन्-प्रशस्तेऽप्रशस्ते वा वर्त्तते श्रमण इति, भावश्चेह ज्येष्ठः, ततश्चानतिशयिनः वन्दनकरणाभाव एव प्राप्त[*] इत्यतो विधिमभिधित्सुराह-व्यवहारतस्तु क्रियते वन्दनं 'यः पूर्वस्थितश्चारित्रे' यः प्रथमं प्रव्रजितः सन्ननुपलब्धातिचार इति गाथार्थः॥ आह-सम्यक् तद्गतभावापरिज्ञाने सति किमित्येतदेवमिति, उच्यते, व्यवहारप्रामाण्यात्, तस्यापि च बलवत्त्वाद्, आह च भाष्यकारः—

ववहारोऽविहु बलवं जं छउमत्थंपि वंदई अरहा। जा होइ अणाभिण्णो जाणंतो धम्मयं एयं॥१२३॥(भा०)

व्याख्या—व्यवहारोऽपि च बलवानेव, 'यद्' यस्मात् छद्मस्थमपि पूर्वरत्नाधिकं गुर्वादि वन्दते 'अर्हन्नपि' केवल्यपि, अपिशब्दोऽत्रापि सम्बध्यते। किं सदा?, नेत्याह-'जा होइ अणाभिन्नो'त्ति यावद् भवत्यनभिज्ञातः यथाऽयं केवलीति, किमिति वन्दत इति, अत आह-जानन् धर्मतामेतां व्यवहारनयबलातिशयलक्षणामिति गाथार्थः॥ आह-यद्येवं सुतरां वयःपर्यायहीनस्य तदधिकान् वन्दापयितुमयुक्तम्, आशातनाप्रसङ्गादिति, उच्यते,

एत्थ उ जिणवयणाओ सुत्तासायणबहुत्तदोसाओ। भासंतगजेट्ठगस्स उ कायव्वं होइ किइकम्मं॥७१७॥

व्याख्या—'अत्र तु' व्याख्याप्रस्तावचन्दनाधिकारे 'जिनवचनात्' तीर्थकरोक्तत्वात् तथा च अवन्द्यमाने सूत्राशातनादोषबहुत्वात् 'भाषमाणज्येष्ठस्यैव' प्रत्युच्चारणसमर्थस्यैवेत्यर्थः, किं?, कर्त्तव्यं भवति 'कृतिकर्म्म' वन्दनमिति गाथार्थः॥

---

[*] प्राप्नोतीत्यत प्र०.

एवं तावद् ज्ञानोपसम्पद्विधिरुक्तः, दर्शनोपसम्पद्विधिरप्यनेनैव तुल्ययोगक्षेमत्वादुक्त एव वेदितव्यः, तथा च दर्शनप्रभावनीयशास्त्रपरिज्ञानार्थमेव दर्शनोपसम्पदिति॥ अधुना चारित्रोपसम्पद्विधिमभिधातुकाम आह—

दुविहा य चरित्तंमी वेयावच्चे तहेव खमणे य। णियगच्छा अण्णंमि य सीयणदोसाइणा होति॥७१८॥

व्याख्या—द्विविधा च चारित्रविषयोपसम्पद् वैयावृत्त्यविषया तथैव क्षपणविषया च, आह-किमत्रोपसम्पदा?, स्वगच्छ एव तत्कस्मान्न क्रियत इति, उच्यते, निजगच्छादन्यस्मिन् गमनं सीदनदोषादिना भवति गच्छस्य, आदिशब्दादन्यभावादिपरिग्रह इति गाथार्थः॥

इत्तरियाइविभासा वेयावच्चंमि तहेव खमणे य। अविगिट्ठविगिट्ठंमि य गणिणो गच्छस्स पुच्छाए॥७१९॥

व्याख्या—इह चारित्रार्थमाचार्यस्य कश्चिद्वैयावृत्यकरत्वं प्रतिपद्यते, स च कालत इत्वरो यावत्कथिकश्च भवति, आचार्यस्यापि वैयावृत्यकरोऽस्ति वा न वा, तत्रायं विधिः-यदि नास्ति ततोऽसाविष्यत एव, अथास्ति स इत्वरो वा स्याद्यावत्कथिको वा, आगन्तुकोऽप्येवं द्विभेद एव, तत्र यदि द्वावपि यावत्कथिकौ ततश्च यो लब्धिमान् स कार्य्यते, इतरस्तूपाध्यायादिभ्यो दीयते इति, अथ द्वावपि लब्धियुक्तौ ततो वास्तव्य एव कार्य्यते, इतरस्तूपाध्यायादिभ्यो दीयत इति, अथ नेच्छति ततो वास्तव्य एव प्रीतिपुरस्सरं तेभ्यो दीयते, आगन्तुकस्तु कार्यत इति, अथ प्राक्तनोऽप्युपाध्यायादिभ्यो नेच्छति तत आगन्तुको विसर्ज्यत एव, अथ वास्तव्यो यावत्कथिक इतरस्त्वित्वर इत्यत्राप्येवमेव भेदाः कर्त्तव्याः यावदागन्तुको विसर्ज्यते, नानात्वं तु वास्तव्य उपाध्यायादिभ्योऽनिच्छन्नपि प्रीत्या विश्राम्यत इति, अथ वास्तव्यः खल्वित्वरः

आगन्तुकस्तु यावत्कथिकः, ततोऽसौ वास्तव्योऽवधिकालं यावदुपाध्यायादिभ्यो दीयते, शेषं पूर्ववत्, अथ द्वावपीत्वरौ तत्राप्येक उपाध्यायादिभ्यः कार्य्यते शेषं पूर्ववद्, अन्यतमो वाऽवधिकालं यावद्धार्यत इत्येवं यथाविधिना विभाषा कार्येति। उक्ता वैयावृत्योपसम्पत्, साम्प्रतं क्षपणोपसम्पत्प्रतिपाद्यते—चारित्रनिमित्तं कश्चित्क्षपणार्थमुपसम्पद्यते, स च क्षपको द्विविधः—इत्वरो यावत्कथिकश्च, यावत्कथिक उत्तरकालेऽनशनकर्त्ता, इत्वरस्तु द्विधा—विकृष्टक्षपकोऽविकृष्टक्षपकश्च, तत्राष्टमादिक्षपको विकृष्टक्षपकः, चतुर्थषष्ठक्षपकस्त्वविकृष्ट इति। तत्रायं विधिः—अविकृष्टक्षपकः खल्वाचार्येण प्रष्टव्यः—हे आयुष्मन्! पारणके त्वं कीदृशो भवसि?, यद्यसावाह—ग्लानोपमः, ततोऽसावभिधातव्यः—अलं तव क्षपणेन, स्वाध्याय-वैयावृत्यकरणे यत्नं कुरु, इतरोऽपि पृष्टः सन्नेवमेव प्रज्ञाप्यते, अन्ये तु व्याचक्षते—विकृष्टक्षपकः पारणककाले ग्लानकल्प-तामनुभवन्नपीष्यत एव, यस्तु मासादिक्षपको यावत्कथिको वा स इष्यत एव, तत्राप्याचार्येण गच्छः प्रष्टव्यो—यथाऽयं क्षपक उपसम्पद्यत इति, अनापृच्छ्य गच्छं सङ्गच्छतः सामाचारीविराधना, यतस्ते सन्दिष्टा अप्युपधिप्रत्युपेक्षणादि तस्य न कुर्वन्ति, अथ पृष्टा ब्रुवते—यथाऽस्माकं एकः क्षपकोऽस्त्येव, तस्य क्षपणपरिसमाप्तावस्य करिष्यामः, ततोऽसौ ध्रियते, अथ नेच्छन्ति ततस्त्यज्यते, अथ गच्छस्तमप्यनुमन्यते ततोऽसाविष्यत एव, तस्य च विधिना प्रतीच्छितस्योद्वर्त्तनादि कार्य, यत्पुनः प्रमादतोऽनाभोगतो वा न कुर्वन्ति शिष्यास्तदाऽऽचार्येण चोदनीया इत्यलं प्रसङ्गेन इति गाथार्थः॥ चारित्रोपस-म्पद्विधिविशेषप्रतिपादनायाह—

**उवसंपन्नो जं कारणं तु तं कारणं अपूरेंतो। अहवा समाणियंमी सारणया वा विसग्गो वा ॥ ७२० ॥ दारं॥**

व्याख्या—उपसम्पन्नो 'यत्कारणं' यन्निमित्तं, तुशब्दादन्यच्च सामाचार्य्यन्तर्गतं किमपि गृह्यते, 'तत्कारणं' वैयावृ-त्यादि 'अपूरयन्' अकुर्वन्, यदा वर्त्तत इत्यध्याहारः, किम्?—तदा 'सारणया वा विसग्गो वा' तदा तस्य 'सारणा' चोदना वा क्रियते, अविनीतस्य पुनः विसर्गो वा—परित्यागो वा क्रियत इति, तथा नापूरयन्नेव यदा वर्त्तते तदैव सारणा वा विसर्गो वा क्रियते, किं तु? 'अहवा समाणियंमि'त्ति अथवा परिसमाप्तिं नीते अभ्युपगतप्रयोजने स्मारणा वा क्रियते, यथा—समाप्तं, तद्विसर्गो वेति गाथार्थः॥ उक्ता संयतोपसम्पत्, साम्प्रतं गृहस्थोपसम्पदुच्यते—तत्र साधूनामियं सामाचारी—सर्वत्रैवा-ध्वादिषु वृक्षाद्यधोऽप्यनुज्ञाप्य स्थातव्यं, यत आह—

**इत्तरियं पि न कप्पइ अविदिन्नं खलु परोग्गहाईसुं। चिट्ठित्तु निसिइत्तु व तइयव्वयरक्खणट्ठाए ॥ ७२१ ॥**

व्याख्या—'इत्वरमपि' स्वल्पमपि, कालमिति गम्यते, न कल्पते अविदत्तं खलु परावग्रहादिषु, आदिशब्दः परावग्र-हानेकभेदप्रख्यापकः, किं न कल्पते इति?, आह—'स्थातुं' कायोत्सर्गं कर्त्तुं 'निषीदितुम्' उपवेष्टुं, किमित्यत आह—'तइय-वयरक्खणट्ठाए' अदत्तादानविरत्याख्यतृतीयव्रतरक्षणार्थं, तस्माद्भिक्षाटनादावपि व्याघातसम्भवे क्वचित् स्थातुकामेनानु-ज्ञाप्य स्वामिनं विधिना स्थातव्यम्, अटव्यादिष्वपि विश्रमितुकामेन पूर्वस्थितमनुज्ञाप्य स्थातव्यं, तदभावे देवतां, यस्या सोऽवग्रह इति गाथार्थः॥ उक्ता दशविधसामाचारी, साम्प्रतमुपसंहरन्नाह—

**एवं सामायारी कहिया दसहा समासओ एसा। संजमतवड्ढयाणं निग्गंथाणं महरिसीणं ॥ ७२२ ॥**

निगदसिद्धा। सामाचार्य्यासेवकानां फलप्रदर्शनायाह—

**एयं सामायारिं जुंजंता चरणकरणमाउत्ता। साहू खवंति कम्मं अणेगभवसंचियमणंतं ॥ ७२३ ॥**

निगदसिद्धा एव। इदानीं पदविभागसामाचार्य्याः प्रस्तावः, सा च कल्पव्यवहाररूपा बहुविस्तरा स्वस्थानादवसेया, इत्युक्तः सामाचार्युपक्रमकालः, साम्प्रतं यथाऽऽयुष्कोपक्रमकालः प्रतिपाद्यते—स च सप्तधा, तद्यथा—

**अज्झवसाणनिमित्ते आहारे वेयणा पराघाए। फासे आणापाणु सत्तविहं झिज्जए आउं ॥ ७२४ ॥**

व्याख्या—अध्यवसानमेव निमित्तम् अध्यवसाननिमित्तं तस्मिन्नध्यवसाननिमित्ते सति, अथवा अध्यवसानं राग-स्नेहभयभेदेन त्रिधा तस्मिन्नध्यवसाने सति, तथा दण्डादिके निमित्ते सति, आहारे प्रचुरे सति, वेदनायां नयनादिसम्ब-न्धिन्यां मत्यां, पराघातो गर्त्तापातादिसमुत्थस्तस्मिन् सति, स्पर्शे भुजङ्गादिसम्बन्धिनि, प्राणापानयोर्निरोधे, किम्?, सर्वत्रैव क्रियामाह—'सप्तविधं' सप्तप्रकारमेवं भिद्यते आयुरिति गाथासमुदायार्थः॥ अवयवार्थस्तूदाहरणेभ्योऽवसेयः, तानि चामूनि—रागाध्यवसाने सति भिद्यते आयुर्यथा—

[1]एगस्स गावीओ हरियाओ, ताहे कुडिया पच्छओ लग्गा, तेहिं नियत्तियाओ, तत्थेगो तरुणो अतिसयदिव्वरूवधारी

---

1 एकस्य गावो हृता, तदा ग्रामाधिपा (आरक्षका) पश्चाल्लग्ना, तैर्निवर्त्तिता, तत्रैक तरुणोऽतिशयदिव्यरूपधारी

तिसिओ गामं पविट्ठो, तस्स तरुणीए नीणियमुदगं, सो य पीतो, सा तस्स अणुरत्ता, होक्कारंतस्सवि ण ठाति, सो उठित्ता गतो, सावि तं पलोएंती तहेव उणुँयत्तेति, जाहे अद्दिस्सो जाओ ताहे तहठिया चेव रागसंमोहियमणा उयद्दा। एवं रागज्झवसाणे भिज्जति आउंति। तथा स्नेहाध्यवसाने सति भिद्यते आयुर्यथा—एगस्स वाणियगस्स तरुणी महिला, ताणि परोप्परमतीवमणुरत्ताणि, ताहे सो वाणिज्जगेण गतो, पडिनियत्तो वसहिं एक्काहेण ण पावइ, ताहे वयंसगा से भणंति—पिच्छामो किं सच्चो अणुरागो न वत्ति ?, ततो एगेणागंतूण भणिया—सो मउत्ति, तीए भणियं—किं सच्चं ?, सच्चं सच्चंति, ततो तिन्नि वारे पुच्छित्ता मया, इयरस्स कहियं, सोऽवि तह चेव मतो। एवं स्नेहाध्यवसाने सति भिद्यते आयुरिति, आह—रागस्नेहयोः कः प्रतिविशेष इति ?, उच्यते, रूपाद्याक्षेपजनितः प्रीतिविशेषो रागः, सामान्यरत्यपत्यादिगोचरः स्नेह इति, भयाध्यवसाने भिद्यते आयुर्यथा सोमिलस्येति—बारवतीए वासुदेवो राया, वसुदेवो से पिया देवई माया, सा कंचि महिलं पुत्तस्स थणं देंतिं दट्ठूण अद्धितिं पगया, वासुदेवेण पुच्छिया—अम्मो ! कीस अद्धितिं पकरेसि ?, तीए भणियं—

१ तृषितो ग्राम प्रविष्ट, तस्मै तरुण्याऽऽनीतमुदक, स च पीतवान्, सा तस्मिन्ननुरक्ता, हुङ्कारयत्यपि न तिष्ठति, स उत्थाय गत, सापि तं प्रलोकयन्ती तथैव स्थितेति (?) यदाऽदृश्यो जातस्तदा तथास्थितव रागसमूढमना मृता। एव रागाध्यवसानेन भिद्यते आयुरिति। एकस्य वणिजस्तरुणी महिला, तौ परस्परमतीव अनुरक्तौ, तदा स वाणिज्याय गत, प्रतिनिवृत्तो वसतिमेकाहेन न प्राप्स्यति, तदा वयस्यास्तस्य भणन्ति—प्रेक्षामहे किं सत्योऽनुरागो न वेति, तत एकेनागत्य भणिता—स मृत इति, तया भणितम्—किं सत्य ?, सत्य सत्यमिति, तत त्रीन् वारान् पृष्ट्वा मृता, इतरस्मै कथित, सोऽपि तथैव मृत। द्वारिकायां वासुदेवो राजा, वसुदेवस्तस्य पिता देवकी माता, सा काञ्चिन्महिला पुत्राय स्तन्य ददतीं दृष्ट्वाऽधृतिं प्रगता, वासुदेवेन पृष्टा—अम्ब ! किमधृतिं प्रकरोषि ?, तया भणितम् * ताहे पगत्तेति प्र.

जात ! न मे पुत्तभंडेण केणइ थणो पीउत्ति, वासुदेवेण भणिया—मा अद्धितिं करेसि, इण्हिं ते देवयाणुभावेण पुत्तसंपत्तिं करेमो, देवया आराहिया, तीए भणियं—भविस्सइ से दिव्वपुरिसो पुत्तोत्ति, तहेव जायं। जायस्स य से गयसुकुमालोत्ति नामं कयं। सो य सव्वजादवपितो सुहंसुहेण अभिरमइ, सोमिलमाहणधूया य रूववतित्ति परिणाविओ, अरिट्ठनेमिस्स य अंतियं धम्मं सोऊण पव्वइओ, गतो य भगवया सद्धिं, धिज्जाइयस्सवि अपत्तियं जायं। कालेण पुणो भगवया सद्धिं बारवतिमागओ, मसाणे य पडिमं ठितो, दिट्ठो य धिज्जाइएणं, ततो कुविएण कुडियंठो मत्थए दाऊण अंगाराणं से भरितो, तस्स य सम्मं अहियासेमाणस्स केवलं समुप्पण्णं, अंतगडो य संवुत्तो। वासुदेवो य भगवतो रिट्ठनेमिस्स चलणजुयलं नमिऊणं सेसे य साहू वंदिऊण पुच्छइ—भगवं ! कतो गयसुकुमालोत्ति?, भगवया कहियं—मसाणे पडिमं ठितो आसि, वासुदेवो तत्थेव गतो, मतो दिट्ठो, कुविएण भगवं पुच्छिओ—केणेस मारिउत्ति ?, भगवया भणियं—जस्सेव तुमं

१ जात ! न मम पुत्रभाण्डेन केनचित् स्तन्य पीतमिति, वासुदेवेन भणिता—माऽधृति कार्षीः, इदानीं तव देवतानुभावेन पुत्रसंपत्तिं करोमि, देवताऽऽराद्धा, तया भणित—भविष्यति तस्या दिव्यपुरुष पुत्र इति, तथैव जात। जातस्य च तस्य गजसुकुमाल इति नाम कृत। स च सर्वयादवप्रिय सुखंसुखेनाभिरमते, सोमिलमाह्मणदुहिता च रूपवतीति परिणायित, अरिष्टनेमेश्चान्तिके धर्मं श्रुत्वा प्रव्रजित, गतश्च भगवता सार्धं, धिग्जातीयस्याप्यप्रीतिक जात। कालेन पुनर्भगवता सार्धं द्वारिकायामागत, श्मशाने च प्रतिमा स्थित, दृष्टश्च धिग्जातीयेन, तत कुपितेन कुण्डिकाकण्ठ (पाली) मस्तके दत्त्वाऽङ्गारैः तस्य मृत, तस्य च सम्यगध्यस्यत केवल समुत्पन्नम्, अन्तकृच्च संवृत्त। वासुदेवश्च भगवतोऽरिष्टनेमेश्चरणयुगल नत्वा शेषांश्च साधून् वन्दित्वा पृच्छति—भगवन् ! क गजसुकुमाल इति?, भगवता कथित—श्मशाने प्रतिमया स्थित आसीत्, वासुदेवस्तत्रैव गत, मृतो दृष्ट, कुपितेन भगवान् पृष्ट—केनैष मारित इति ?, भगवता भणित—यस्यैव त्वां

नयरिं पविसंतं दट्ठूण सीसं फुट्टिहीतित्ति। धिज्जाइओऽवि माणुसाणि पट्ठाविऊण जाव नीति ताव दिट्ठो अणेण पविसंतो वासुदेवो, भयसंभंतस्स य से सीसं तडित्ति सयसिक्करं फुट्टंति। एवं भयाध्यवसाने सति भिद्यते आयुरिति। द्वारं। यदुक्तं 'निमित्ते सति भिद्यते आयु'रिति तन्निमित्तमनेकप्रकारं प्रतिपादयन्नाह—

दंडकससत्थरज्जू अग्गी उदगपडणं विसं वाला। सीउण्हं अरइ भयं खुहा पिवासा य वाही य ॥ ७२५ ॥
मुत्तपुरीसनिरोहे जिण्णाजिण्णे य भोयणे बहुसो। घंसणघोलणपीलण आउस्स उवक्कमा एए ॥ ७२६ ॥ दारं ॥

व्याख्या—दण्डकशाशस्त्ररज्जवः अग्निः उदकपतनं विषं व्यालाः शीतोष्णमरतिर्भयं क्षुत्पिपासा च व्याधिश्च मूत्रपुरीपनिरोधः जीर्णाजीर्णे च भोजनं बहुशः घर्षणघोलणपीडनान्यायुषः उपक्रमहेतुत्वादुपक्रमा एते, कारणे कार्योपचारात्, यथा—तन्दुलान् वर्षति पर्जन्यस्तथा आयुर्घृतमिति। तत्र दण्डादयः प्रसिद्धा एव, 'व्यालाः' सर्प्पा उच्यन्ते, घर्षणं चन्दनस्येव, घोलनम् अङ्गुष्ठकाङ्गुलिगृहीतसञ्चाल्यमानयूकाया इव, पीडनम् इक्ष्वादेरिवेति गाथार्थः ॥ द्वारं ॥ तथाऽऽहारे सत्यसति वा भिद्यते आयुर्यथा—एगो मरुगो छणे अट्ठारस वारे भुंजिऊण सूलेण मओ, अण्णो पुण छुहाए मओत्ति। द्वारं। वेदनायां सत्यां भिद्यते आयुर्यथा शिरोनयनवेदनादिभिरनेके मृता इति। द्वारं। तथा पराघाते सति भिद्यते आयुर्यथा—

१ नगरीं प्रविशन्त दृष्ट्वा शीर्षं स्फुटिष्यतीति। धिग्जातीयोऽपि मानुषान् प्रस्थाप्य यावद्याति तावद्दृष्टोऽनेन प्रविशन् वासुदेवः भयसंभ्रान्तस्य च तस्य शीर्षं घटदिति शतशर्करं स्फुटितमिति। २ एको माह्मण क्षणेऽष्टादश वारान्भुक्त्वा शूलेन मृत, अन्य पुनः क्षुधा मृत इति।

विञ्जले वा तडीए वा खाणीए वा पेल्लियस्सेति। द्वारं। तथा स्पर्शे सति भिद्यते आयुर्यथा—तयाविसेणं सप्पेणं छित्तस्स, जहा वा बंभदत्तस्स इत्थीरयणं, तंमि मए पुत्तेण से भणियं–मए सद्धिं भोगे भुंजाहित्ति, तीए भणियं–न तरसि मज्झं फरिसं विसहित्तए, न पत्तियइ, आसो आणिओ, सो तीए हत्थेण मुहाओ कडिं जाव छित्तो, सो गलिऊण सुक्कक्खएण मतो, तहावि अपत्तियंतेण लोहमयपुरिसो कओ, तीए अवरुंडिओ, सोऽवि विलीणोत्ति। द्वारं। तथा प्राणापाननिरोधे सति भिद्यते आयुर्यथा–छगलगाणं जण्णवाडादिसु मारिज्जंताणं। द्वारं। एवं सप्तविधं भिद्यते आयुरिति । न चैतत्सर्वेषामेव, किं तु सोपक्रमायुषां न निरुपक्रमायुषामिति। तत्र–देवा नेरइया वा असंखवासाउया य तिरिमणुया। उत्तमपुरिसा य तहा चरिमसरीरा य निरुवकमा ॥ १ ॥ सेसा संसारत्था भइया निरुवक्कमा व इतरे वा। सोवक्कमनिरुवक्कमभेदो भणिओ समासेणं ॥ २ ॥ आह—अध्यवसायादीनां निमित्तत्वापरित्यागाद्भेदोपन्यासो विरुध्यत इति, न, आन्तरेतरविचित्रोपाधिभेदेन निमित्तभेदानामेवोपन्यासात्, सकलजनसाधरणत्वाच्च शास्त्रारम्भस्य, आह–यद्येवमुपक्रम्यते

---

१ कर्दमेन वा तळ्या वा खन्या वा प्रेरितस्येति। त्वग्विषेण सर्पेण स्पृष्टस्य, यथा वा ब्रह्मदत्तस्य स्त्रीरत्नं, तस्मिन् मृते पुत्रेण तस्यै भणितं–मया सार्धं भोगान् भुङ्क्ष्वेति, तया भणितं–न शक्नोषि मम स्पर्शं विसोढुं, न प्रत्येति, अश्व आनीतः, स तया हस्तेन मुखात्कटीं यावत्स्पृष्टः, स गलित्वा (विलीय) शुक्रक्षयेण मृतः, तथाप्यप्रत्यायता लोहमयपुरुषः कृतः, तया आलिङ्गितः, सोऽपि विलीन इति। अजानां यज्ञपाटकादिषु मार्यमाणानाम्। देवा नैरयिका वा असंख्यवर्षायुषश्च तिर्यङ्नराः। उत्तमपुरुषाश्च तथा चरमशरीराश्च निरुपक्रमाः ॥ १ ॥ शेषाः संसारस्था भक्ता निरुपक्रमा वा इतरे वा। सोपक्रमनिरुपक्रमभेदो भणितः समासेन ॥ २ ॥

आयुस्ततश्च कृतनाशोऽकृताभ्यागमश्च, कथम्?, संवत्सरशतमुपनिबद्धमायुः, तस्यापान्तराल एव व्यपगमात्कृतनाशः, येन च कर्मणा तदुपक्रम्यते तस्याकृतस्यैवाभ्यागम इति, अत्रोच्यते, यथा वर्षशतभक्तमप्यग्निकव्याधितस्याल्पेनापि कालेनोपभुञ्जानस्य न कृतनाशो नाप्यकृताभ्यागमस्तद्वदिहापीति, आह च भाष्यकारः–"कम्मोवक्कामिज्जइ अपत्तकालंपि जइ ततो पत्ता। अकयागमकयनासामोक्खानासासयादोसा ॥ १ ॥ न हि दीहकालियस्सवि णासो तस्साणुभूतितो खिप्पं। बहुकालाहारस्स व दुयमग्गितरोगिणो भोगो ॥ २ ॥ सव्वं च पदेसतया भुज्जइ कम्ममणुभावतो भइतं। तेणावस्साणुभवे के कतनासादयो तस्स? ॥ ३ ॥ किंचिदकालेऽवि फलं पाविज्जइ पच्चए य कालेण। तह कम्मं पाविज्जइ कालेणवि पच्चए अण्णं ॥ ४ ॥ जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं। विततो पडोऽवि सुस्सइ पिंडीभूतो य कालेणं ॥ ५ ॥" इत्यादि। ततश्च यथोक्तदोषानुपपत्तिरिति द्वारगाथावयवार्थः। व्याख्यात उपक्रमकालः, साम्प्रतं देशकालद्वारावयवार्थ उच्यते–तत्र देशकालः प्रस्तावोऽभिधीयते, स च प्रशस्तोऽप्रशस्तश्च, तत्र प्रशस्तस्वरूपप्रतिपादनायाह—

**निद्धूमगं च गामं महिलाथूभं च सुण्णयं दट्ठुं। णीयं च कागा ओलेन्ति जाया भिक्खस्स हरहरा ॥ ७२७ ॥**

---

१ कर्मोपक्रम्यते अप्राप्तकालेऽपि यदि ततः प्राप्ता। अकृतागमकृतनाशमोक्षानाश्वासतादोषाः ॥ १ ॥ न हि दीर्घकालिकस्यापि नाशस्तस्यानुभूतितः क्षिप्रम्। बहुकालीनाहारस्येव द्रुतमग्निकरोगिणो भोगः ॥ २ ॥ सर्वं च प्रदेशतया भुज्यते कर्म अनुभावतो भक्तम्। तेनावश्यानुभवे के कृतनाशादयस्तस्य? ॥ ३ ॥ किञ्चिदकालेऽपि फलं पाच्यते पच्यते च कालेन। तथा कर्म पाच्यते कालेनापि पच्यतेऽन्यत् ॥ ४ ॥ यथा वा दीर्घा रज्जुर्दह्यते कालेन पुञ्जिता क्षिप्रम्। विततः पटोऽपि शुष्यति पिण्डीभूतश्च कालेन ॥ ५ ॥

व्याख्या—निर्द्धूमकं च ग्रामं महिलास्तूपं च कूपतटमित्यर्थः, शून्यं दृष्ट्वा, तथा नीचं च काकाः 'ओलिन्ति' त्ति गृहाणि प्रति परिभ्रमन्ति, तांश्च दृष्ट्वा विद्यात् यथा जाता भैक्षस्य 'हरहरे' त्यतीव भिक्षाप्रस्ताव इति, पाठान्तरं वा 'नीयं च काए ओलिन्ते' दृष्ट्वेत्यनुवर्तत इति गाथार्थः। अप्रशस्तदेशकालस्वरूपाभिधित्सयाऽऽह—

**निम्मच्छियं महुं पायडो णिही खज्जगावणो सुण्णो। जा यंगणे पसुत्ता पउत्थवइया य मत्ता य ॥ ७२८ ॥ दारं ॥**

व्याख्या—निर्माक्षिकं मधु, प्रकटो निधिः, खाद्यकापणः शून्यः, कुल्लूरिकापण इति भावार्थः, अतो मध्वादीना ग्रहणप्रस्तावः, तथा या चाङ्गणे प्रसुप्ता प्रोषितपतिका च मत्ता च तस्या अपि ग्रहणं प्रति प्रस्ताव एवेति, आसवेन मदनाकुलीकृतत्वात्तस्या इति गाथार्थः। दारं। इदानीं कालकालः प्रतिपाद्यते–कालस्य–सत्त्वस्य श्वादेः कालो–मरणं कालकालः, अमुमेवार्थं प्रतिपादयन्नाह—

**कालेण कओ कालो अम्हं सज्झायदेसकालंमि। तो तेण हओ कालो अकालकालं करेंतेणं ॥ ७२९ ॥**

व्याख्या—'कालेन' शुना 'कृतः कालः' कृतं मरणम् अस्माकं स्वाध्यायदेशकाले ततोऽनेन हतः कालः–भग्नः स्वाध्यायकालः, 'अकाले' अप्रस्तावे 'कालं' मरणं कुर्वतेति गाथार्थः। द्वारम्। इदानीं प्रमाणकालः प्रतिपाद्यते–तत्राद्धाकालविशेष एव मनुष्यलोकान्तर्वर्ती विशिष्टव्यवहारहेतुः अहर्निशरूपः प्रमाणकाल इति, आह च—

**दुविहो पमाणकालो दिवसपमाणं च होइ राई अ। चउपोरिसिओ दिवसो राती चउपोरिसी चेव ॥ ७३० ॥**

व्याख्या—द्विविधः प्रमाणकालः–दिवसप्रमाणं च भवति रात्रिश्च, चतुष्पौरुषिकौ दिवसः रात्रिश्चतुष्पौरुष्येव, ततश्च

प्रमाणमेव कालः प्रमाणकालः, पौरुषीप्रमाणं त्वन्यत्रोत्कृष्टहीनादिभेदभिन्नं प्रतिपादितमेवेति गाथार्थः । द्वारं । इदानीं वर्णकालस्वरूपप्रदर्शनायाह—

**पंचण्हं वण्णाणं जो खलु वण्णेण कालओ वण्णो । सो होइ वण्णकालो वण्णिज्जइ जो व जं कालं ॥ ७३१ ॥**

व्याख्या—पञ्चानां शुक्लादीनां वर्णानां यः खलु वर्णेन छायया कालको वर्णः, खलुशब्दस्यात्रधारणार्थत्वात्कृष्ण एव, अनेन गौरादेर्नामकृष्णस्य च व्यवच्छेदः, स भवति वर्णकालः, वर्णश्चासौ कालश्चेति वर्णकालः, 'वण्णिज्जइ जो व जं कालं'ति वर्णनं वर्णः, प्ररूपणमित्यर्थः, ततश्च वर्ण्यते–प्ररूप्यते यो वा कश्चित्पदार्थो यत्कालं स वर्णकालः, वर्णप्रधानः कालो वर्णकाल इति गाथार्थः॥ इदानीं भावकालः प्रतिपाद्यते–भावानामौदयिकादीनां स्थितिर्भावकाल इति, आह च—

**सादीसपज्जवसिओ चउभंगविभागभावणा एत्थं । ओदइयादीयाणं तं जाणसु भावकालं तु ॥ ७३२ ॥**

व्याख्या—सादिः सपर्यवसितश्चतुर्भङ्गविभागभावना अत्र कार्या, केषाम् ?–औदयिकादीनां भावानामिति, ततश्च योऽसौ विभागभावनाविषयस्तं जानीहि भावकालं तु, इयमक्षरगमनिका, अयं भावार्थः–औदयिको भावः सादिः सपर्यवसानः सादिरपर्यवसानः अनादिः सपर्यवसानः अनादिरपर्यवसान इत्येवमौपशमिकादिष्वपि चतुर्भङ्गिका द्रष्टव्या, इयं पुनरत्र विभागभावना–औदयिकचतुर्भङ्गिकायां द्वितीयभङ्गशून्यानां शेषभङ्गानामयं विषयः–नारकादीनां नारकादिभवः खल्वौदयिको भावः सादिसपर्यवसानः, मिथ्यात्वादयो भव्यानामौदयिको भावोऽनादिसपर्यवसानः, स एवाभव्यानां चरमभङ्ग इति । उक्तः औदयिकः, औपशमिकचतुर्भङ्गिकायां तु द्व्यादयः शून्या एव, प्रथमभङ्गस्त्वौपशमिकसम्यक्त्वादयः, औपशमिको भावः सादिसपर्यवसान इति । उक्त औपशमिकः, क्षायिकचतुर्भङ्गिकायां तु त्र्यादयः शून्या एव, क्षायिकं चारित्रं दानादिलब्धिपञ्चकं च क्षायिको भावः सादिसपर्यवसानः, सिद्धस्य चारित्र्यचारित्र्यादिविकल्पातीतत्वात्, क्षायिकज्ञानदर्शने तु सादिरपर्यवसाने इति, अन्ये तु द्वितीयभङ्ग एव सर्वमिदं प्रतिपादयन्ति । उक्तः क्षायिकः, क्षायोपशमिकचतुर्भङ्गिकायां द्वितीयभङ्गशून्यानां शेषभङ्गानामयं विषयः–चत्वारि ज्ञानानि क्षायोपशमिको भावः सादिसपर्यवसानः, मत्यज्ञानश्रुताज्ञाने भव्यानामनादिसपर्यवसाने, एते एवाभव्यानां चरमभङ्ग इति । उक्तः क्षायोपशमिकः, पारिणामिकचतुर्भङ्गिकायां द्वितीयभङ्गशून्यानां शेषभङ्गानामयं गोचरः–पुद्गलकाये द्व्यणुकादिः पारिणामिको भावः सादिसपर्यवसानः, भव्यत्वं भव्यानामनादिः सपर्यवसानः, जीवत्वं पुनः चरमभङ्ग इति, उक्तः पारिणामिकः । उक्तार्थसङ्ग्रहगाथा–बीयं दुतियादीया भंगा वज्जेत्तु बिइययं सेसे । भवमिच्छसम्मचरणे दिट्ठीनाणेतराणुभवजिए ॥ १ ॥ इति गाथार्थः—

**एत्थं पुण अहिगारो पमाणकालेण होइ नायव्वो । खेत्तंमि कंमि काले विभासियं जिणवरिंदेणं ? ॥ ७३३ ॥**

व्याख्या—'अत्र पुनः' अनेकविधकालप्ररूपणायाम् 'अधिकारः' प्रयोजनं प्रस्तावः प्रमाणकालेन भवति ज्ञातव्यः । आह–'दव्वे अद्ध' इत्यादिद्वारगाथायां 'पगयं तु भावेणंती' त्युक्तं, साम्प्रतमत्र पुनरधिकारः प्रमाणकालेन भवति ज्ञातव्य इत्युच्यमानं कथं न विरुध्यत इति ?, उच्यते, क्षायिकभावकाले भगवता प्रमाणकाले च पूर्वाह्णे सामायिकं भाषितमित्यविरोधः । अथवा प्रमाणकालोऽपि भावकाल एव, तस्याद्धाकालस्वरूपत्वादित्यलं विस्तरेणेति । 'उद्देसे निद्देसे ये' त्याद्युपोद्घातनिर्युक्तिप्रतिबद्धद्वारगाथाद्वयस्य व्याख्यातं कालद्वारमिति । साम्प्रतं यत्र क्षेत्रे भाषितं सामायिकं तदजानन् प्रमाणकालस्य चानेकरूपत्वाद्विशेषमजानन् गाथापश्चार्द्धमाह चोदकः—'खेत्तंमि कंमि काले विभासियं जिणवरिंदेणं' ? इति गाथार्थः ॥ चोदकप्रश्नोत्तरप्रतिपिपादयिषयाऽऽह—

१ ( औदयिकाद्यनुक्रमेण ) द्वितीय द्वितीयादीन् तृतीयादीन् भङ्गान् वर्जयित्वा शेषयोरपि द्वितीय वर्जयित्वा ( ३–१–२–३–३ भङ्गा ) भवे मिथ्यात्वे (भव्येऽभव्ये च) (औ०) सम्यक्त्वे(क्षा) चरणे (व्रतरूपे) (क्षायो) दर्शनज्ञानयो मत्यादौ अज्ञाने (भव्ये अभव्ये च) (पा) अणौ भव्यत्वे जीवत्वे॥ १॥

**वइसाहसुद्धएक्कारसीऍ पुव्वण्हदेसकालंमि । महसेणवणुज्जाणे अणंतरं परंपरं सेसं ॥ ७३४ ॥**

व्याख्या—वैशाखशुद्धैकादश्यां 'पूर्वाह्णदेशकाले' प्रथमपौरुष्यामिति भावार्थः । कालस्यान्तरङ्गत्वख्यापनार्थमेव प्रश्नव्यत्ययेन निर्देशः । महसेनवनोद्याने क्षेत्रे अनन्तरनिर्गमः सामायिकस्य, 'परम्परं सेसं' ति शेषं क्षेत्रजातमधिकृत्य परम्परनिर्गमस्तस्येति, आह च भाष्यकारः–"खेत्तं महसेणवणोवलक्खियं जत्थ निग्गयं पुव्विं । सामाइयमन्नेसु य परंपरविणिग्गमो तस्स ॥ १ ॥" इति गाथार्थः ॥ गतं मूलद्वारगाथाद्वयप्रतिबद्धं क्षेत्रद्वारम्, इह च क्षेत्रकालपुरुषद्वाराणां निर्गमाङ्गता व्याख्यातैव, ततश्च निर्गमद्वारव्याचिख्यासयाऽऽह–'नामं ठवणा दविए खेत्ते काले तहेव भावे य । एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ' त्ति येयं गाथोपन्यस्ता अस्या एव भावनिर्गमप्रतिपादनायाह निर्युक्तिकारः—

**खइयंमि वट्टमाणस्स निग्गयं भयवओ जिणिंदस्स । भावे खओवसमियंमि वट्टमाणेहिँ तं गहियं ॥ ७३५ ॥**

व्याख्या—क्षायिके वर्त्तमानस्य भगवतो निर्गतं जिनेन्द्रस्य भावे, भावशब्दः उभयथाऽप्यभिसम्बध्यते, भावे क्षायोप-

१ क्षेत्र महासेनवनोपलक्षित यत्र निर्गत पूर्वम् । सामायिकमन्येषु च परम्परविनिर्गमस्तस्य ॥ १ ॥

गमिके वर्त्तमानैः 'तत्' सामायिकमन्यच्च श्रुतं गृहीतं, गणधरादिभिरिति गम्यते । तत्र गौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि, प्रणिपत्य पृच्छा निषद्योच्यते, भगवांश्चाचष्टे-उप्पण्णे इ वा विगमे इ वा धुवे इ वा, एता एव तिस्रो निषद्याः, आसामेव सकाशाद्गणभृताम् 'उत्पादव्ययध्रौव्ययुक्तं सदि' ति प्रतीतिरुपजायते, अन्यथा सत्ताऽयोगात्, ततश्च ते पूर्वभवभावितमतयो द्वादशाङ्गमुपरचयन्ति, ततो भगवमणुण्णं करेइ, सक्को य दिव्वं वइरमयं थालं दिव्वचुण्णाणं भरेऊण सामिमुवागच्छइ, ताहे सामी सीहासणाओ उट्ठित्ता पडिपुण्णं मुट्ठिं केसराणं गेण्हइ, ताहे गोयमसामिप्पमुहा एक्कारसवि गणहरा इसिं ओणया परिवाडीए ठायंति, ताहे देवा आउज्जगीयसद्दं निरुंभंति, ताहे सामी पुव्वं तित्थं गोयमसामिस्स दव्वेहिं गुणेहिं पज्जवेहिं अणुजाणामित्ति भणति चुण्णाणि य से सीसे छुहइ, ततो देवावि चुण्णवासं पुप्फवासं च उवरिं वासंति, गणं च सुधम्मसामिस्स धुरे ठवेऊण अणुजाणइ। एवं सामाइयस्सवि अत्थो भगवतो निग्गओ, सुत्तं गणहरेहिंतो निग्गतं, इत्यलं विस्तरेणेति गाथार्थः । (ग्रन्थाग्रम् ७०००) साम्प्रतं पुरुषद्वारावयवार्थप्रतिपिपादयिषयाऽऽह-

**दव्वाभिलावचिंधे वेए धम्मत्थभोगभावे य । भावपुरिसो उ जीवो भावे पगयं तु भावेणं ॥ ७३६ ॥**

---

१ भगवाननुज्ञां करोति, शक्रश्च दिव्य वज्ररत्नमय स्थालं दिव्यचूर्णैर्भृत्वा स्वामिनमुपागच्छति, तदा स्वामी सिंहासनादुत्थाय प्रतिपूर्णां मुष्टिं गन्धानां गृह्णाति, तदा गौतमस्वामिप्रमुखा एकादशापि गणधरा ईषदवनता परिपाट्या तिष्ठन्ति, तदा देवा आतोद्यगीतशब्दं निरुन्धन्ति, तदा स्वामी पूर्वं तीर्थं गौतमस्वामिने द्रव्यैर्गुणैः पर्यवैरनुजानामीति भणति चूर्णानि च तस्य शीर्षे क्षिपति, ततो देवा अपि चूर्णवर्षां पुष्पवर्षां च उपरि वर्षन्ति, गणं च सुधर्मस्वामिन धुरि स्थापयित्वाऽनुजानाति । एवं सामायिकस्यापि अर्थो भगवतो निर्गतः, सूत्रं गणधरेभ्यो निर्गतम् । * मणसीकरेइ प्र०

व्याख्या-'दव' त्ति द्रव्यपुरुषः, स चागमनोआगमज्ञशरीरभव्यशरीरातिरिक्तैकभविकबद्धायुष्काभिमुखनामगोत्रभेदभिन्नो द्रष्टव्यः, अथवा व्यतिरिक्तो द्विधा-मूलगुणनिर्मितः उत्तरगुणनिर्मितश्च, तत्र मूलगुणनिर्मितः पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितस्तु तदाकारवन्ति तान्येव, अभिलप्यतेऽनेनेति अभिलापः-शब्दः, तत्राभिलापपुरुषः पुलिङ्गाभिधानमात्रं घटः पट इति वा, चिह्नपुरुषस्त्वपुरुषोऽपि पुरुषचिह्नोपलक्षितो यथा नपुंसकं श्मश्रुचिह्नमित्यादि, तथा त्रिष्वपि लिङ्गेषु स्त्रीपुन्नपुंसकेषु तृणज्वालोपमवेदानुभवकाले वेदपुरुष इति, तथा धर्मार्जनव्यापारपरः साधुर्धर्मपुरुषः, अर्थार्जनपरस्त्वर्थपुरुषो मम्मणनिधिपालवत्, भोगपुरुषस्तु सम्प्राप्तसमस्तविषयसुखभोगोपभोगसमर्थश्चक्रवर्त्तिवत्, 'भावे य' त्ति भावपुरुषश्च, चशब्दो नामाद्यनुक्तभेदसमुच्चयार्थः, 'भावपुरिसो उ जीवो भावे' त्ति पूः-शरीरं पुरि शेते इति निरुक्तवशाद् भावपुरुषस्तु जीवः, 'भावि' त्ति भावद्वारे निरूप्यमाणे भावद्वारचिन्तायामिति भावार्थः, अथवा 'भावे' त्ति भावनिर्गमप्ररूपणायामधिकृतायां, किम्?-'पगयं तु भावेणं' ति 'प्रकृतम्' उपयोगस्तु भावेनेत्युपलक्षणाद् भावपुरुषेण-शुद्धेन जीवेन, तीर्थकरेणेत्यर्थः, तुशब्दाद्वेदपुरुषेण च गणधरेणेति, एतदुक्तं भवति-अर्थतस्तीर्थकरान्निर्गतं सूत्रतो गणधरेभ्य इति, एवमन्येऽपि यथासम्भवमायोज्या इति गाथार्थः ॥ गतं पुरुषद्वारं, साम्प्रतं कारणद्वारावयवार्थव्याचिख्यासयाऽऽह--

**णिक्खेवो कारणंमी चउव्विहो दुविहु होइ दव्वंमि । तद्दव्वमण्णदव्वे अहवावि णिमित्तनेमित्ती ॥७३७॥दारं॥**

अस्या गमनिका-निक्षेपणं निक्षेपो न्यास इत्यर्थः, करोतीति कारणं, कार्यं निर्वर्त्तयतीति हृदयं, तस्मिन् कारणे-कारण-

---

* षण्ड क्लीबो नपुंसकमिति हैमयुक्ते नपुंस्त्वम्

विषयः 'चतुर्विधः' चतुर्भेदः नामस्थापनाद्रव्यभावलक्षणः, नामस्थापने सुज्ञाने, द्रव्यकारणं व्यतिरिक्तं द्विधा, यत आह-द्विविधो भवति द्रव्ये, निक्षेप इति वर्त्तते, सूचनात्सूत्रमितिकृत्वा द्रव्ये इति द्रव्यकारणविषयो द्विविधो निक्षेपः परिगृह्यते, तदेव द्रव्यकारणद्वैविध्यं दर्शयति-'तद्द्रव्य'मिति तस्यैव पटादेर्द्रव्यं तद्द्रव्यं-तन्त्वादि, तदेव कारणमिति द्रष्टव्यं तद्विपरीतं वेमाद्यन्यद्रव्यकारणमिति । अथवाऽन्यथा द्विविधत्वं-निमित्तं नैमित्तिकमपि, अपिशब्दादन्यथापि कारणनानातेति, ता वक्ष्यति । तत्र पटस्य निमित्तं तन्तवस्त एव कारणं, तद्व्यतिरेकेण पटानुत्पत्तेः, यथा च तन्तुभिर्विना न भवति पटस्तथा तद्गतातानादिचेष्टादिव्यतिरेकेणापि न भवत्येव, तस्याश्च चेष्टाया वेमादिनिमित्तं, ततो निमित्तम्येदं नैमित्तिकमिति गाथार्थः ॥

**समवाइ असमवाई छव्विह कत्ता य कम्म करणं च । तत्तो य संपयाणापयाण तह संनिहाणे य ॥ ७३८ ॥**

व्याख्या--समेकीभावे अवोऽपृथक्त्वे अय गतौ, ततश्चैकीभावेनापृथग्गमनं समवायः-संश्लेषः स येषां विद्यते ते समवायिनः-तन्तवो यस्मात्तेषु पटः समवैतीति, समवायिनश्च ते कारणं च समवायिकारणं-तन्तुसंयोगाः, कारणद्रव्यान्तरधर्मत्वात् पटाख्यकार्यद्रव्यान्तरस्य दूरवर्त्तित्वात् असमवायिनः त एव कारणमसमवायिकारणमिति । आह-अर्थाभेदे सत्यनेकधा कारणद्वयोपन्यासोऽनर्थक इति, न, सञ्ज्ञाभेदेन तन्त्रान्तरीयाभ्युपगमप्रदर्शनपरत्वात्तस्य, अथवा षड्विधं कारणम्, अनुस्वारलोपोऽत्र द्रष्टव्यः, करोतीति कर्त्तरि व्युत्पत्तेः, स्वेन व्यापारेण कार्ये यदुपयुज्यते तत्कारणं, कथं षड्वि-

---

* करण कम्म चेति व्याख्या

धमित्याह–कर्त्ता च कारणं, तस्य कार्ये स्वातन्त्र्येणोपयोगात्, तमन्तरेण विवक्षितकार्यानुत्पत्तेः अभीष्टकारणवत्, ततश्च घटोत्पत्तौ कुलालः कारणं, तथा करणं च–मृत्पिण्डादि करणं, तस्य साधकतमत्वात्, तथा कर्म च कारणं, क्रियते-निर्वर्त्यते यत्तत्कर्म–कार्यम्, आह–तत्कथमलब्धात्मलाभं तदा कारणमिति?, अत्रोच्यते, कार्यनिर्वर्त्तनक्रियाविषयत्वात्तस्योपचारात्कारणता, उक्तं च–"निर्वर्त्यं वा विकार्यं वा, प्राप्यं वा यत्क्रियाफलम्। तत् दृष्टादृष्टसंस्कारं, कर्म कर्त्तुर्यदीप्सितम् ॥ १ ॥" इत्यादि, मुख्यवृत्त्या वा सौकर्यगुणेन कर्म कारणं, तथा सम्प्रदानं च घटस्य कारणं, तस्य कर्मणाऽभिप्रेतत्वात्, तमन्तरेण तस्याभावात्, सम्यक् सत्कृत्य वा प्रयत्नेन दानं सम्प्रदानम्, अत एव च रजकस्य वस्त्रं ददातीति न सम्प्रदाने चतुर्थी, किं तु ब्राह्मणाय घटं ददातीति, तथाऽपादानं कारणं, विवक्षितपदार्थापायेऽपि तस्य ध्रुवत्वेन कार्योपकारकत्वाद्, 'दो अवखण्डने' दानं खण्डनम् अपसृत्य मर्यादया दानमपादानं, पिण्डापायोऽपि मृदो ध्रुवत्वादपादानतेति, सा च घटस्य कारणं, तामन्तरेण तस्यानुत्पत्तेः, तथा सन्निधानं च कारणं, तस्याधारतया कार्योपकारकत्वात्, सन्निधीयते यत्र कार्यं तत्सन्निधानम्–अधिकरणं, तच्च घटस्य चक्रं, तस्यापि भूः, तस्या अप्याकाशम्, आकाशस्य त्वधिकरणं नास्ति, स्वरूपप्रतिष्ठितत्वात्, घटस्य चेदं कारणम्, एतदभावे घटानुत्पत्तेरिति गाथार्थः ॥ उक्तं द्रव्यकारणम्, इदानीं भावकारणप्रतिपादनायाह—

**दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं। संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥ ७३९ ॥**

व्याख्या—भवतीति भावः, स चौदयिकादिः, स एव कारणं संसारापवर्गयोरिति भावकारणं, तत्र 'द्विविधं च' द्विप्रकारं च भवति, भावे विचार्यमाणे, कारणमिति प्रक्रमाद्गम्यते, भावविषयं वा, भावकारणमित्यर्थः, अप्रशस्तम्–अशोभनं प्रशस्तं–शोभनं च, तत्राप्रशस्तं संसारस्य सम्बन्धि एकविधम्–एकभेदं द्विविधं–द्विभेदं त्रिविधं–त्रिभेदं च ज्ञातव्यं, चशब्दश्चतुर्विधाद्यनुक्तकारणभेदसमुच्चयार्थ इति गाथार्थः ॥ यदुक्तं–'संसारस्यैकविध' मित्यादि, तदुपप्रदर्शनायाह—

**अस्संजमो य एक्को अण्णाणं अविरई य दुविहं तु। अण्णाणं मिच्छत्तं च अविरती चेव तिविहं तु ॥ ७४० ॥**

व्याख्या—'असंयमः' अविरतिलक्षणः, स ह्येक एव संसारकारणम्, अज्ञानादीनां तदुपष्टम्भकत्वादप्रधानत्वादिति, तथाऽज्ञानमविरतिश्च द्विविधं तु संसारकारणं, तत्राज्ञानं–कर्म्मोच्छादितजीवस्य विपरीतावबोध इति, अविरतिस्तु सावद्ययोगानिवृत्तिरिति, तथा मिथ्यात्वमज्ञानं चाविरतिश्चैव त्रिविधं तु संसारकारणं, तत्र मिथ्यात्वम्–अतत्त्वार्थश्रद्धानं, शेषं गतार्थम्, एवं कषायादिसम्पर्कादन्येऽपि भेदाः प्रतिपादयितव्या इति गाथार्थः ॥ उक्तमप्रशस्तं भावकारणम्, अधुना प्रशस्तमुच्यते—

**होइ पसत्थं मोक्खस्स कारणं एगदुविहतिविहं वा। तं चेव य विवरीयं अहिगारो पसत्थएणेत्थं ॥ ७४१ ॥**

व्याख्या—भवति प्रशस्तं भावकारणं मोक्षस्य कारणमिति, तच्च 'एक' मित्येकविधं द्विविधं त्रिविधं वा, इदं पुनः 'तदेव' च संसारकारणम् असंयमादि विपरीतं द्रष्टव्यम्, एकविधं संयमः, द्विविधं ज्ञानसंयमौ, त्रिविधं सम्यग्दर्शनज्ञानसंयमा इति, 'अधिकारः' प्रस्तावः 'प्रशस्तेन' भावकारणेन 'अत्र' सामायिकान्वाख्याने, मोक्षाङ्गत्वादस्येति । ततश्च प्रशस्तभावरूपं चेदं, कारणं च मोक्षस्य इति अधिकारभावनेति गाथार्थः ॥ इत्थं कारणद्वारे अधिकारं प्रदर्श्य पुनः कारणद्वारसङ्गतमेव वक्तव्यताशेषमाशङ्काद्वारेणाभिधित्सुराह—

**तित्थयरो किं कारण भासइ सामाइयं तु अज्झयणं?। तित्थयरणामगोत्तं कम्मं मे वेइयव्वंति ॥ ७४२ ॥**

व्याख्या—तीर्थकरणशीलस्तीर्थकरः, तीर्थं पूर्वोक्तं, स 'किंकारणं' किंनिमित्तं भाषते सामायिकं त्वध्ययनं?, तुशब्दादन्याध्ययनपरिग्रहः, तस्य कृतकृत्यत्वादिति हृदयम्, अत्रोच्यते–'तीर्थकरनामगोत्रं' तीर्थकरनामसञ्ज्ञं, गोत्रशब्दः सञ्ज्ञायां, कर्म मया वेदितव्यमित्यनेन कारणेन भाषत इति गाथार्थः ॥

**तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं। बज्झइ तं तु भगवओ तइयभवोसक्कइत्ता णं ॥ ७४३ ॥**

व्याख्या—पूर्ववत् ॥

**णियमा मणुयगतीए इत्थी पुरिसेयरोव्व सुहलेसो। आसेवियबहुलेहिं वीसाए अण्णयरएहिं ॥ ७४४ ॥**

व्याख्या—पूर्ववदेव । इत्थं तीर्थकृतः सामायिकभाषणे कारणमभिधायाधुना गणभृतामाशङ्काद्वारेण तच्छ्रवणकारणं प्रतिपादयन्नाह—

**गोयममाई सामाइयं तु किंकारणं निसामिन्ति?। णाणस्स तं तु सुंदरमंगुलभावाण उवलद्धी ॥ ७४५ ॥**

व्याख्या—गौतमादयो गणधराः 'किंकारणं तु' किंनिमित्तं, किंप्रयोजनमित्यर्थः, सामायिकं 'निशामयन्ति' शृण्वन्ति, अत्रोच्यते–'नाणस्स' त्ति प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी, ततश्च ज्ञानाय–ज्ञानार्थं, तादर्थ्ये चतुर्थी, तेषां हि-

भगवद्वदननिर्गतं सामायिकशब्दं श्रुत्वा तदर्थविषयं ज्ञानमुत्पद्यत इति भावना, तच्च ज्ञानं 'सुन्दरमङ्गुलभावानां' शुभेतरपदार्थानां 'उवलद्धी' त्ति उपलब्धये-उपलब्धिनिमित्तमिति गाथार्थः ॥ सा च सुन्दरमङ्गुलभावोपलब्धिः प्रवृत्तिनिवृत्त्योः कारणम्, आह च—

**होइ पवित्तिनिवित्ती संजमतव पावकम्मअग्गहणं । कम्मविवेगो य तहा कारणमसरीरया चेव ॥ ७४६ ॥**

व्याख्या—शुभेतरभावपरिज्ञानाद्भवतः 'प्रवृत्तिनिवृत्ती' शुभेषु प्रवृत्तिर्भवतीतरेभ्यो निवृत्तिरिति, ते च प्रवृत्तिनिवृत्ती 'संयमतव' इति संयमतपसोः कारणं, तत्र निवृत्तिकारणत्वेऽपि संयमस्य प्रागुपादानमपूर्वकर्मागमनिरोधोपकारेण प्राधान्यख्यापनार्थं, तत्पूर्वकं च वस्तुतः सफलं तपः, कारणान्यथोपन्यासस्तु संयमे सत्यपि तपसि प्रवृत्तिः कार्य्येत्यमुनाऽंशेन प्राधान्यख्यापनार्थमेवेत्यलं प्रसङ्गेन, तयोश्च संयमतपसोः 'पावकम्मअग्गहणं' ति पापकर्माग्रहणं कर्मविवेकश्च, तथा 'कारणं' निमित्तं प्रयोजनं यथासङ्ख्यम्, उक्तं च परममुनिभिः-'संयमे अणण्हयफले, तवे वोदाणफले' इत्यादि, अणण्हय-अनाश्रवः वोदाणं-कर्मनिर्जरा, कर्मविवेकस्य च प्रयोजनम् 'असरीरया चेवे'ति अशरीरतैव, चः पूरणार्थः, इति गाथार्थः ॥ साम्प्रतं विवक्षितमर्थमुक्तानुवादेन प्रतिपादयन्नाह—

**कम्मविवेगो असरीरयाय असरीरया अणाबाहा । होअणबाहनिमित्तं अवेयणमणाउलो निरुओ ॥ ७४७ ॥**

व्याख्या—'कर्मविवेकः' कर्मपृथग्भावः अशरीरतायाः कारणम्, अशरीरता 'अणाबाहाए' त्ति अनाबाधायाः कारणं

१ संयमोऽनाश्रवफलं तपो व्यवदानफलं

भवति, 'अनाबाधनिमित्तम्' 'अनाबाधकार्यं, निमित्तशब्दः कार्यवाचकः, तथा च वक्तारो भवन्ति—अनेन निमित्तेन—अनेन कारणेन मयेदं प्रारब्धम्, अनेन कार्येणेत्यर्थः, ततश्च भवत्यनाबाधकार्यम्, 'अवेदनः' वेदनारहितो, जीव इति गम्यते, स चावेदनत्वाद् 'अनाकुलः' अविह्वल इत्यर्थः, अनाकुलत्वाच्च नीरुग्भवतीति गाथार्थः ॥

**नीरुयत्ताए अयलो अयलत्ताए य सासओ होइ । सासयभावमुवगओ अव्वाबाहं सुहं लहइ ॥ ७४८ ॥ दारं ॥**

व्याख्या—स हि जीवः नीरुक्तया अचलो भवति, अचलतया च शाश्वतो भवति, शाश्वतभावमुपगतः किम्?, अव्याबाधं सुखं लभत इति गाथार्थः ॥ इत्थं पारम्पर्येणाव्याबाधसुखार्थं सामायिकश्रवणमिति । गतं कारणद्वारं, प्रत्ययद्वारमधुना व्याख्यायत इति, आह च—

**पच्चयणिक्खेवो खलु दव्वंमी तत्तमासगाइओ । भावंमि ओहिमाई तिविहो पगयं तु भावेणं ॥ ७४९ ॥**

व्याख्या—प्रत्याययतीति प्रत्ययः प्रत्ययनं वा प्रत्ययः, तन्निक्षेपः—तन्न्यासः, खलुशब्दोऽनन्तरोक्तकारणनिक्षेपसाम्यप्रदर्शनार्थः, ततश्च नामादिश्चतुर्विधः प्रत्ययनिक्षेपो, नामस्थापने सुगमे, 'द्रव्ये' द्रव्यविषयस्तप्तमाषकादिः, आदिशब्दाद्घटदिव्यादिपरिग्रहः, द्रव्यं च तत्प्रत्याय्यप्रतीतिहेतुत्वात् प्रत्ययश्च द्रव्यप्रत्ययः—तप्तमाषकादिरेव, तज्जो वा प्रत्याय्यपुरुषप्रत्यय इति, 'भावम्मि' त्ति भावे विचार्यमाणेऽवध्यादिस्त्रिविधो भावप्रत्ययः, तस्य बाह्यलिङ्गकारणानपेक्षत्वाद्, आदिशब्दान्मनःपर्यायकेवलपरिग्रहः, मतिश्रुते तु बाह्यलिङ्गकारणापेक्षित्वान्न विवक्षिते, बहु चात्र वक्तव्यं तच्च नोच्यते, ग्रन्थविस्तरभयादिति, 'प्रकृतम्' उपयोगस्तु सामायिकमङ्गीकृत्य 'भावेणं' ति भावप्रत्ययेनेति गाथार्थः ॥ अत एवाह—

**केवलणाणित्ति अहं अरहा सामाइयं परिकहेई । तेसिंपि पच्चओ खलु सव्वण्णू तो निसामिंति ॥७५०॥दारं ॥**

व्याख्या—केवलज्ञानी अहमिति स्वप्रत्ययादर्हन् प्रत्यक्षत एव सामायिकार्थमुपलभ्य सामायिकं परिकथयति, 'तेषामपि' श्रोतॄणां गणधरादीनां हृद्गताशेषसंशयपरिच्छित्त्या 'प्रत्ययः' अवबोधः सर्वज्ञ इत्येवंभूतो भवति, अस्मादेव यत्कैश्चिदुक्तं—'सर्वज्ञोऽसाविति ह्येतत्तत्कालेऽपि बुभुत्सुभिः । तत्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम्? ॥ १ ॥' इत्यादि, तद्युदस्तं वेदितव्यम्, अन्यथा चतुर्वेदे पुरुषे लोकस्य तद्व्यवहारानुपपत्तेः, विजृम्भितं चात्रास्मत्स्वयूथ्यैः प्रवचनसिद्ध्यादिषु, अतः सञ्जातप्रत्यया 'निशामयन्ति' शृण्वन्तीति गाथार्थः ॥ गतं प्रत्ययद्वारम्, इदानीं लक्षणद्वारावयवार्थप्रतिपादनायाह—

**नामं ठवणा दविए सरिसे सामण्णलक्खणागारे । गइरागइ णाणत्ती निमित्त उप्पाय विगमे य ॥ ७५१ ॥**

व्याख्या—लक्ष्यतेऽनेनेति लक्षणं—पदार्थस्वरूपं, तच्च द्वादशधा, तत्र नामलक्षणं लक्षणमितीयं वर्णानुपूर्वी, स्थापनालक्षणं लकारादिवर्णानामाकारविशेषः, द्रव्यलक्षणं ज्ञशरीराद्यतिरिक्तं यद्यस्य द्रव्यस्यान्यतो व्यवच्छेदकं स्वरूपं, यथा गत्यादि धर्मास्तिकायादीनाम्, इदमेव किञ्चिन्मात्रविशेषात्साद्दश्यसामान्यादिलक्षणभेदतो निरूप्यते—तत्र 'सरिसे' त्ति साद्दश्यं लक्षणम्, इहत्यघटसद्दशः पाटलिपुत्रको घट इति, 'सामन्नलक्खणं' ति सामान्यलक्षणं यथा सिद्धत्वं सिद्धानां सद्द्रव्यजीवमुक्तादिधर्मैः सामान्यमिति, 'आगारे' त्ति आक्रियतेऽनेनाभिप्रेतं ज्ञायत इत्याकारो—बाह्यचेष्टारूपः, स एवान्तराकूतगमकरूपत्वाल्लक्षणमिति, उक्तं च—"आकारैरिङ्गितैर्गत्या, चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च, गृह्यतेऽन्तर्गतं

१ जीवपुद्गलगत गत्यादि, तस्य धर्मास्तिकायादिकार्यत्वात् तल्लक्षणता

मनः ॥ १ ॥" इति, 'गइरागइ' त्ति गत्यागतिलक्षणं द्वयोर्द्वयोः पदयोर्विशेषणविशेष्यतया अनुकूलं गमनं गतिः प्रत्यावृत्त्या प्रातिकूल्येनागमनमागतिः, गतिश्चागतिश्च गत्यागती ताभ्यां ते एव वा लक्षणं गत्यागतिलक्षणं, तच्चतुर्धा–पूर्वपदव्याहतमुत्तरपदव्याहतमुभयपदव्याहतमुभयपदाव्याहतमिति, तत्र पूर्वपदव्याहतोदाहरणम्–'जीवे णं भंते! नेरइए? नेरइए जीवे?, गोयमा! जीवे सिय नेरइए सिय अनेरईए, नेरइए पुण नियमा जीवे' उत्तरपदव्याहतोदाहरणम्–'जीवइ भंते! जीवे जीवे जीवइ?, गोयमा! जीवइ ताव नियमा जीवे, जीवे पुण सिय जीवइ सिय नो जीवइ' सिद्धानां जीवनाभावादिति हृदयम्, उभयपदव्याहतोदाहरणम्–'भवसिद्धिए णं भंते! नेरइए, नेरइए भवसिद्धिए?, गोयमा भवसिद्धिए सिय नेरइए सिय अनेरइए, नेरइएवि सिय भवसिद्धिए सिय अभवसिद्धिए' उभयपदाव्याहतोदाहरणम्–जीवे भंते! जीवे जीवे जीवे?, गोयमा! जीवे नियमा जीवे जीवेऽवि नियमा जीवे' उपयोगो नियमाज्जीवः जीवोऽपि नियमादुपयोग इति भावना। लोकेऽपि गत्यागतिलक्षणं–'रूवी य घडोत्ति चूतो दुमोत्ति नीलोप्पलं च लोगंमि। जीवो सचेयणोत्ति य विगप्पनियमादयो भणिया ॥ १ ॥' तथा 'नाणत्ति' त्ति नानाभावो नानाता–भिन्नता, सा च लक्षणं, सा पुनश्चतुर्द्धा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो नानाता द्विधा–तद्द्रव्यनानाता अन्यद्रव्यनानाता च, तत्र तद्द्रव्यनानाता परमा-

१ जीवो भदन्त! नैरयिको नैरयिको जीव ?, गौतम! जीवः स्यान्नैरयिक स्यादनैरयिक, नैरयिक पुनर्नियमाज्जीवः। जीवति भदन्त! जीवो जीवो जीवति ?, गौतम! जीवति तावन्नियमाज्जीव, जीव पुनः स्याज्जीवति स्यान्नो जीवति। भवसिद्धिको भदन्त! नैरयिको नैरयिको भवसिद्धिक. ?, गौतम! भवसिद्धिक स्यान्नैरयिक स्यादनैरयिक, नैरयिकोऽपि स्याद्भव्यसिद्धिक स्यादभव्यसिद्धिक. । जीवो भदन्त! जीवो जीवो जीवो?, गौतम! जीवो नियमाज्जीव जीवोऽपि नियमाज्जीव। २ रूपी च घट इति चूतो द्रुम इति नीलोत्पल च लोके। जीव सचेतन इति च विकल्पनियमादयो भणिता ॥ १ ॥

णूनां परस्परतो भिन्नता, अन्यद्रव्यनानाता परमाणोर्द्व्यणुकादिभेदभिन्नता, एवमेकादिप्रदेशावगाढैकादिसमयस्थित्येकादिगुणशुक्लानां तदतन्नानाता वाच्या, इदं च लक्षणं पदार्थस्वरूपावस्थापकत्वात् 'निमित्तं' ति लक्ष्यते शुभाशुभमनेनेति लक्षणं निमित्तमेव लक्षणं निमित्तलक्षणं, तच्चाष्टधा, उक्तं च—"भोमंसुमिणंतरिक्खं दिव्वं अंगसर लक्खणं तह य। वंजणमट्ठविहं खलु निमित्तमेयं मुणेयव्वं ॥१॥" स्वरूपमस्य ग्रन्थान्तरादवसेयम्॥ 'उप्पाद' त्ति यतो नानुत्पन्नं वस्तु लक्ष्यते अत उत्पादोऽपि वस्तुलक्षणं, 'विगमोय' त्ति विगमश्च विनाशश्च वस्तुलक्षणं, तमन्तरेणोत्पादाभावात्, न हि वक्रतयाऽविनष्टमङ्गुलिद्रव्यं ऋजुतयोत्पद्यत इति भावनेति गाथार्थः॥

**वीरियभावे य तहा लक्खणमेयं समासओ भणियं। अहवावि भावलक्खण चउव्विहं सद्दहणमाई ॥७५२॥**

व्याख्या—'वीरियं' ति वीर्यं–सामर्थ्यं यद्यस्य वस्तुनः तदेव लक्षणं वीर्यलक्षणम्, आह च भाष्यकारः–"विरियंति वलं जीवस्स लक्खणं जं च जस्स सामत्थं। दव्वस्स चित्तरूवं जह विरिय महोसहादीणं ॥१॥" तथा भावानाम्–औदयिकादीनां लक्षणं पुद्गलविपाकादिरूपं भावलक्षणं, यथोदयलक्षणः औदयिकः, उपशमलक्षणस्त्वौपशमिकः, तथानुत्पत्तिलक्षणः क्षायिको, मिश्रलक्षणः क्षायोपशमिकः, परिणामलक्षणः पारिणामिकः, संयोगलक्षणः सान्निपातिक इति। अथवा भावाश्च ते लक्षण चात्मन इति भावलक्षणं, तत्र सामायिकस्य जीवगुणत्वात् क्षयोपशमोपशमक्षयस्वभावत्वाद् भावलक्षणता, अमु-

१ भौम स्वाप्नमान्तरीक्ष दिव्यमाङ्ग स्वरगत लक्षणगत तथा च। व्यञ्जनमष्टविध खलु निमित्तमेतद् मुणितव्यम् ॥ १ ॥ २ वीर्यमिति बल जीवस्य लक्षण यच्च यस्य सामर्थ्यम्। द्रव्यस्य चित्ररूप यथा वीर्यं महौषधादीनाम् ॥ १ ॥

मेवार्थं चेतस्यारोप्याह–'भावे य' इत्यादि, भावे च–विचार्य्यमाणे तथा लक्षणमिदं 'समासतः' सङ्क्षेपतो भणितं। सामायिकस्य वैशेषिकलक्षणाभिधित्सयाऽऽह–'अहवावि भावलक्खण चउव्विधं सद्दहणमादी' अथवाऽपि भावस्य–सामायिकस्य लक्षणमनुस्वारलोपोऽत्र द्रष्टव्यः, चतुर्विधं श्रद्धानादीति गाथार्थ ॥ यदुक्तं–'चतुर्विधं श्रद्धानादि' तत्प्रदर्शनायाह—

**सद्दहण जाणणा खलु विरती मीसा य लक्खणं कहए। तेऽवि णिसामिंति तहा चउलक्खणसंजुयं चेव॥७५३॥दारं**

व्याख्या—इह सामायिकं चतुर्विधं भवति, तद्यथा–सम्यक्त्वसामायिकं श्रुतसामायिकं चारित्रसामायिकं चारित्राचारित्रसामायिकं च, अस्य यथायोगं लक्षणं 'सद्दहणं' ति श्रद्धानं, लक्षणमिति योगः सम्यक्त्वसामायिकस्य, 'जाणण'त्ति ज्ञानं ज्ञा–संवित्तिरित्यर्थः, सा च श्रुतसामायिकस्य, खलुशब्दो निश्चयतः परस्परतः सापेक्षत्वविशेषणार्थः, 'विरति'त्ति विरमणं विरतिः–अशेषसावद्ययोगनिवृत्तिः, सा च चारित्रसामायिकस्य लक्षणं, 'मीसा य' त्ति मिश्रा–विरताविरतिः, सा च चारित्राचारित्रसामायिकस्य लक्षणं, कथयतीत्यनेन स्वमनीषिकाऽपोहेन शास्त्रपारतन्त्र्यमाह, भगवान् जिन एवं कथयति, तस्य च कथयतः 'तेऽपि' गणधरादयः 'निशामयन्ति' शृण्वन्ति 'तथा' तेनैव प्रकारेण चतुर्लक्षणसंयुक्तमेवेति गाथार्थः॥ उक्तं लक्षणद्वारम्, अधुना नयद्वारं प्रतिपिपादयिषुराह—

**णेगमसंगहववहारउज्जुसुए चेव होइ योद्धव्वे। सद्दे य समभिरूढे एवंभूए य मूलणया ॥ ७५४ ॥**

व्याख्या—नयन्तीति नयाः–वस्त्ववबोधगोचरं प्रापयन्त्यनेकधर्मात्मकज्ञेयाध्यवसायान्तरहेतव इत्यर्थः, ते च नैगमा-

दयः, नैगमः सङ्ग्रहः व्यवहारः ऋजुसूत्रश्चैव भवति वोद्धव्यः, शब्दश्च समभिरूढः एवम्भूतश्च मूलनया इति गाथासमुदायार्थो निगदसिद्धः ॥ अवयवार्थं तु प्रतिनयं नयाभिधाननिरुक्तद्वारेण वक्ष्यति, आह च—

**णेगेहिं माणेहिं मिणइत्ती णेगमस्स णेरुत्ती । सेसाणंपि णयाणं लक्खणमिणमो सुणेह वोच्छं ॥ ७५५ ॥**

व्याख्या—न एकं नैकं-प्रभूतानीत्यर्थः, नैकैर्मानैः-महासत्तासामान्यविशेषज्ञानैर्मिमीते मिनोतीति वा नैकम इति, इयं नैकमस्य निरुक्तिः, निगमेषु वा भवो नैगमः, निगमाः-पदार्थपरिच्छेदाः, तत्र सर्वं सदित्येवमनुगताकारावबोधहेतुभूतां महासत्तामिच्छति अनुवृत्तव्यावृत्तावबोधहेतुभूतं च सामान्यविशेषं द्रव्यत्वादिव्यावृत्तावबोधहेतुभूतं च विशेषं परमाणुमिति । आह-इत्थं तर्ह्ययं नैगमः सम्यग्दृष्टिरेवास्तु, सामान्यविशेषाभ्युपगमपरत्वात्, साधुवदिति, नैतदेवं, सामान्यविशेषवस्तूनामत्यन्तभेदाभ्युपगमपरत्वात्तस्येति, आह च भाष्यकारः-"जं सामण्णविसेसे परोप्परं वत्थुतो य सो भिण्णे । मन्नइ अच्चंतमतो मिच्छद्दिट्ठी कणातोव्व ॥ १ ॥ दोहिवि णएहि नीतं सत्थमुलूएण तहवि मिच्छत्तं । जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥ २ ॥" अथवा निलयनप्रस्थकग्रामोदाहरणेभ्योऽनुयोगद्वारप्रतिपादितेभ्यः खल्वयमवसेय इत्यलं विस्तरेण, गमनिकामात्रमेतत् । 'सेसाण' मित्यादि शेषाणामपि नयानां-सङ्ग्रहादीनां लक्षणमिदं शृणुत 'वक्ष्ये' अभिधास्य इत्ययं गाथार्थः ॥

१ यत् सामान्यविशेषौ परस्परं वस्तुतश्च स भिन्नौ । मन्यतेऽत्यन्तमतो मिथ्यादृष्टिः कणाद इव ॥ १ ॥ द्वाभ्यामपि नयाभ्यां नीतं शास्त्रमुलूकेन तथापि मिथ्यात्वम् । यत् स्वविषयप्रधानत्वेनान्योऽन्यनिरपेक्षौ ॥ २ ॥

**संगहियपिंडियत्थं संगहवयणं समासओ बेंति । वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसुं ॥ ७५६ ॥**

व्याख्या—आभिमुख्येन गृहीतः-उपात्तः सङ्गृहीतः पिण्डितः-एकजातिमापन्नः अर्थो-विषयो यस्य तत्सङ्गृहीतपिण्डितार्थं सङ्ग्रहस्य वचनं सङ्ग्रहवचनं 'समासतः' सङ्क्षेपतः, ब्रुवते तीर्थकरगणधरा इति, एतदुक्तं भवति-सामान्यप्रतिपादनपरः खलु अयं सदित्युक्ते सामान्यमेव प्रतिपद्यते न विशेषान्, तथा च मन्यते-विशेषाः सामान्यतोऽर्थान्तरभूताः स्युरनर्थान्तरभूता वा ?, यद्यर्थान्तरभूताः न सन्ति ते, सामान्यादर्थान्तरत्वात्, खपुष्पवत्, अथानर्थान्तरभूताः सामान्यमात्रं ते, तदव्यतिरिक्तत्वात्, तत्स्वरूपवत्, पर्याप्तं व्यासेन, उक्तः सङ्ग्रहः । 'वच्चति' इत्यादि व्रजति-गच्छति निः-आधिक्येन चयनं चयः अधिकश्चयो निश्चयः-सामान्यं विगतो निश्चयो विनिश्चयः-निःसामान्यभावः तदर्थं-तन्निमित्तं, सामान्याभावायेति भावना, व्यवहारो नयः, क्व ?-'सर्वद्रव्येषु' सर्वद्रव्यविषये, तथा च विशेषप्रतिपादनपरः खलु, अयं हि सदित्युक्ते विशेषानेव घटादीन् प्रतिपद्यते, तेषां व्यवहारहेतुत्वात्, न तदतिरिक्तं सामान्यं, तस्य व्यवहाराहेतुत्वात्, तथा च-सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यात् ?, यदि भिन्नं विशेषव्यतिरेकेणोपलभ्येत, न चोपलभ्यते, अथाभिन्नं विशेषमात्रं तत्, तदव्यतिरिक्तत्वात्, तत्स्वरूपवदिति, अथवा विशेषेण निश्चयो विनिश्चयः-आगोपालाङ्गनाद्यवबोधो न कतिपयविद्वत्सन्निबद्ध इति, तदर्थं व्रजति सर्वद्रव्येषु, आह च भाष्यकारः-"भमरादि पञ्चवण्णादि निच्छए जंमि वा जणवयस्स । अत्थे विनिच्छओ सो विनिच्छयत्थोत्ति जो गेज्झो ॥ १ ॥ वहुतरओत्ति य तं चिय गमेइ संतेऽवि सेसए मुयइ । संववहारपरतया ववहारो लोयमिच्छंतो ॥ २ ॥" इत्यादि, उक्तो व्यवहार इति गाथार्थः ॥

१ भ्रमरादीन् पञ्चवर्णादीन् नेच्छति यस्मिन् वा जनपदस्य । अर्थे विनिश्चय स विनिश्चयार्थ इति यो ग्राह्य ॥ १ ॥ बहुतर इति च तमेव गमयति

**पच्चुप्पण्णग्गाही उज्जुसुओ नयविही मुणेयव्वो । इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो ॥ ७५७ ॥**

व्याख्या—साम्प्रतमुत्पन्नं प्रत्युत्पन्नमुच्यते, वर्त्तमानमित्यर्थः, प्रति प्रति वोत्पन्नं प्रत्युत्पन्नं-भिन्नव्यक्तिस्वामिकमित्यर्थः, तद्ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही, ऋजुसूत्र ऋजुश्रुतो वा नयविधिर्विज्ञातव्यः तत्र ऋजु-वर्त्तमानमतीतानागतवक्रपरित्यागात् वस्त्वखिलं ऋजु तत्सूत्रयति-गमयतीति ऋजुसूत्रः, यद्वा ऋजु-वक्रविपर्ययादभिमुखं श्रुतं तु ज्ञानं, ततश्चाभिमुखं ज्ञानमस्येति ऋजुश्रुतः, शेषज्ञानानभ्युपगमात्, अयं हि नयः वर्त्तमानं स्वलिङ्गवचननामादिभिन्नमप्येकं वस्तु प्रतिपद्यते, शेषमवस्त्विति, तथाहि-अतीतमेष्यं वा न भावः, विनष्टानुत्पन्नत्वाद् अदृश्यत्वात्, खपुष्पवत्, तथा परकीयमप्यवस्तु निष्फलत्वात्, खपुष्पवत्, तस्माद्वर्त्तमानं स्वं वस्तु, तच्च न लिङ्गादिभेदभिन्नमपि स्वरूपमुज्झति, लिङ्गभिन्नं तु तटः तटी तटमिति, वचनभिन्नमापो जलं, नामादिभिन्नं नामस्थापनाद्रव्यभावा इत्युक्त ऋजुसूत्रः, 'इच्छति' प्रतिपद्यते 'विशेषिततरं' नामस्थापनाद्रव्यविरहेण समानलिङ्गवचनपर्यायध्वनिवाच्यत्वेन च प्रत्युत्पन्नं-वर्त्तमानं नयः, कः ?, 'शप आक्रोशे' शप्यतेऽनेनेति शब्दः, तस्यार्थपरिग्रहादभेदोपचारान्नयोऽपि शब्द एव, तथाहि-अयं नामस्थापनाद्रव्यकुम्भाः न सन्त्येवेति मन्यते, तत्कार्याकरणात्, खपुष्पवत्, न च भिन्नलिङ्गवचनमेकं, लिङ्गवचनभेदादेव, स्त्रीपुरुषवत् कुटवृक्षवद्, अतो घटः कुटः कुम्भ इति स्वपर्यायध्वनिवाच्यमेवैकमिति गाथार्थः ॥

१ सतोऽपि शेषान् मुञ्चति । सव्यवहारपरतया व्यवहारो लोकमिच्छन् ॥ २ ॥

**वत्थूओ संकमणं होइ अवत्थू णए समभिरूढे। वंजणमत्थतदुभयं एवंभूओ विसेसेइ॥ ७५८॥**

व्याख्या—वस्तुनः सङ्क्रमणं भवति अवस्तु नये समभिरूढे, वस्तुनो–घटाख्यस्य सङ्क्रमणम्–अन्यत्र कुटाख्यादौ गमनं किम्?–भवति अवस्तु–असदित्यर्थः, नये पर्यालोच्यमाने एकस्मिन्नानार्थसमभिरोहणात्समभिरूढः तस्मिन्, इयमत्र भावना–घटः कुटः कुम्भ इत्यादिशब्दान् भिन्नप्रवृत्तिनिमित्तत्वाद्भिन्नार्थगोचरानेव मन्यते, घटपटादिशब्दानिव, तथा च घटनाद् घटः, विशिष्टचेष्टावानर्थो घट इति, तथा 'कुट कौटिल्ये' कुटनात्कुटः, कौटिल्ययोगात्कुटः, तथा 'उभ उम्भ पूरणे' उम्भनात् उम्भः, कुत्सितपूरणादित्यर्थः, ततश्च यदा घटार्थे कुटादिशब्दः प्रयुज्यते तदा वस्तुनः कुटादेस्तत्र सङ्क्रान्तिः कृता भवति, तथा च सति सर्वधर्माणां नियतस्वभावत्वादन्यत्र सङ्क्रान्त्योभयस्वभावापगमतोऽवस्तुतेत्यलं विस्तरेण, उक्तः समभिरूढः। 'वञ्जण' मित्यादि व्यज्यतेऽनेन व्यनक्तीति वा व्यञ्जनं–शब्दः अर्थस्तु–तद्गोचरः, तच्च तदुभयं च तदुभयं–शब्दार्थलक्षणम् 'एवम्भूतो' यथाभूतो नयः विशेषयति, इदमत्र हृदयम्–शब्दमर्थेन विशेषयत्यर्थं च शब्देन, 'घट चेष्टाया' मित्यत्र चेष्टया घटशब्दं विशेषयति, घटशब्देनापि चेष्टां, न स्थानभरणक्रियां, ततश्च यदा योषिन्मस्तकव्यवस्थितः चेष्टावानर्थो घटशब्देनोच्यते तदा स घटः, तद्वाचकश्च शब्दः, अन्यदा वस्त्वन्तरस्येव चेष्टाऽयोगादघटत्वं तद्ध्वनेश्चावाचकत्वमिति गाथार्थः॥ एवं तावन्नैगमादीनां मूलजातिभेदेन संक्षेपलक्षणमभिधायाधुना तत्प्रभेदसङ्ख्यां प्रदर्शयन्नाह–

**एक्केक्को य सयविहो सत्त णयसया हवंति एमेव। अण्णोऽवि य आएसो पंचेव सया नयाणं तु॥ ७५९॥**

व्याख्या—अनन्तरोक्तनैगमादिनयानामेकैकश्च स्वभेदापेक्षया 'शतविधः' शतभेदः सप्त नयशतानि भवन्ति एव तु, अन्योऽपि चाऽऽदेशः पञ्च शतानि भवन्ति तु नयानां, शब्दादीनामेकत्वाद् एकैकस्य च शतविधत्वादिति हृदयम्। अपिशब्दात्षट् चत्वारि द्वे वा शते, तत्र षट् शतानि नैगमस्य सङ्ग्रहव्यवहारद्वये प्रवेशाद्, एकैकस्य च शतभेदत्वात्, तथा चत्वारि शतानि सङ्ग्रहव्यवहारऋजुसूत्रशब्दानामेकैकनयानां शतविधत्वात्, शतद्वयं तु नैगमादीनामृजुसूत्रपर्यन्ताना द्रव्यास्तिकत्वात्, शब्दादीना च पर्यायास्तिकत्वात्, तयोश्च शतभेदत्वादिति गाथार्थः॥

**एएहिं दिट्ठिवाए परूवणा सुत्तअत्थकहणा य। इह पुण अणब्भुवगमो अहिगारो तिहि उ ओसन्नं॥ ७६०॥**

व्याख्या—'एभिः' नैगमादिभिर्नयैः सप्रभेदैर्दृष्टिवादे प्ररूपणा, सर्ववस्तूना कियत इति वाक्यशेषः, सूत्रार्थकथना च. आह–वस्तूना सूत्रार्थानतिलङ्घनादध्याहारोऽनर्थक इति, न, तत्सूत्रोपनिबद्धस्यैव सूत्रार्थत्वेन विवक्षितत्वात्, तद्व्यतिरेकेणापि च वस्तसम्भवात्, 'इह पुनः' कालिकश्रुते 'अनभ्युपगमः' नावश्यं नयैर्व्याख्या कार्येति, किन्तु?, श्रोत्रपेक्षकार्या, तत्राप्यधिकारस्त्रिभिराद्यैः 'उत्सन्नं' प्रायस इति गाथार्थः॥ आह–'इह पुनरनभ्युपगम' इत्यभिधाय पुनस्त्रिनयानुज्ञा किमर्थमिति, उच्यते—

**नत्थि णएहि विहूणं सुत्तं अत्थो व जिणमए किंचि। आसज्ज उ सोयारं णए णयविसारओ बूया॥ ७६१॥**

व्याख्या—नास्ति नयैर्विहीनं सूत्रमर्थो वा जिनमते किञ्चिदित्यतस्त्रिनयपरिग्रहः, अशेषनयप्रतिषेधस्त्वाचार्यविनेयाना विशिष्टबुद्ध्यभावमपेक्ष्य इति। आह च–आश्रित्य पुनः श्रोतारं–विमलमतिं, तुशब्दः पुनःशब्दार्थे, किम्?–नयान्नयविशारदो–गुरुर्ब्रूयादिति गाथार्थः॥ उक्तं नयद्वारम्, अधुना समवतारद्वारमुच्यते–क्वैतेषां नयानां समवतारः?, क्व वाऽनवतार इति संशयापोहायाह—

**मूढनइयं सुयं कालियं तु ण णया समोयरंति इहं। अपुहुत्ते समोयारो नत्थि पुहुत्ते समोयारो॥ ७६२॥**

व्याख्या—मूढा नया यस्मिन् तन्मूढनयं तदेव मूढनयिक, स्वार्थे ठक्, अथवा अविभागस्था मूढाः, मूढाश्च ते नयाश्च मूढनयाः तेऽस्मिन्विद्यन्ते 'अत इनिठना' (पा० ५–२–११५) विति मूढनयिकं, श्रुतं 'कालिकं तु' कालिकमिति काले–प्रथमचरमपौरुषीद्वये पठ्यत इति कालिकं, न नयाः समवतरन्ति, अत्र प्रतिपदं न भण्यन्त इति भावना। आह—क्व पुनरमीषां समवतारः?, 'अपुहुत्ते समोतारो' अपृथग्भावोऽपृथक्त्वं चरणधर्मसङ्ख्याद्रव्यानुयोगानां प्रतिसूत्रमविभागेन वर्त्तनमित्यर्थः, तस्मिन्नयानां विस्तरेण विरोधाविरोधसम्भवविशेषादिना समवतारः, 'नत्थि पुहुत्ते समोतारो' नास्ति पृथक्त्वे समवतारः, पुरुषविशेषापेक्षं वाऽवतार्य्यन्त इति गाथार्थः॥ आह–कियन्तं कालमपृथक्त्वमासीत्?, कुतो वा समारभ्य पृथक्त्वं जातमिति?, उच्यते,

**जावंति अज्जवइरा अपुहुत्तं कालियाणुओगस्स। तेणारेण पुहुत्तं कालियसुअ दिट्ठिवाए य॥ ७६३॥**

व्याख्या—यावदार्यवैराः गुरवो महामतयस्तावदपृथक्त्वं कालिकानुयोगस्यासीत्, तदा साधूनां तीक्ष्णप्रज्ञत्वात, कालिकग्रहणं प्राधान्यख्यापनार्थम्, अन्यथा सर्वानुयोगस्यैवापृथक्त्वमासीदिति। तत आरतः पृथक्त्वं कालिकश्रुते दृष्टिवादे चेति गाथार्थः॥ अथ क एते आर्य्यवैरा इति?, तत्र स्तवद्वारेण तेषामुत्पत्तिमभिधित्सुराह—

तुंबवणसंनिवेसाओ निग्गयं पिउसगासमल्लीणं। छम्मासियं छसु जयं माऊयसमन्नियं वंदे ॥ ७६४ ॥

व्याख्या—तुम्बवनसन्निवेशान्निर्गतं पितुः सकाशमालीनं षाण्मासिकं षट्सु—जीवनिकायेषु यतं—प्रयत्नवन्तं मात्रा च समन्वितं वन्दे, अयं समुदायार्थः। अवयवार्थस्तु कथानकादवसेयः, तच्चेदम्—

वइरसामी पुव्वभवे सक्कस्स देवरण्णो वेसमणस्स सामाणिओ आसि। इतो य भगवं वद्धमाणसामी पिट्ठिचंपाए नयरीए सुभूमिभागे उज्जाणे समोसढो, तत्थ य सालो राया महासालो जुवराया, तेसिं भगिणी जसवती, तीसे भत्ता पिठरो, पुत्तो य से गागलीनाम कुमारो, ततो सालो भगवतो समीवे धम्मं सोऊण भणइ—जं नवरं महासालं रज्जे अभिसिंचामि ततो तुम्हं पादमूले पव्वयामि, तेण गंतूण भणितो महासालो—राया भवसु, अहं पव्वयामि, सो भणइ—अहंपि पव्वयामि, जहा तुब्भे इह अम्हाणं मेढीपमाणं तहा पव्वइयस्सवित्ति, ताहे गागिली कंपिल्लपुरातो आणेउं रज्जे अभिसिंचितो, तस्स माया जसवती कंपिल्लपुरे नगरे दिण्णिया पिठररायपुत्तस्स, तेण ततो आणिओ, तेण पुण तेसिं दो पुरिससहस्सवाहिणीओ

१ वज्रस्वामी पूर्वभवे शक्रस्य देवराजस्य वैश्रमणस्य सामानिक आसीत्। इतश्च भगवान् वर्धमानस्वामी पृष्ठचम्पायां नगर्यां सुभूमिभागे उद्याने समवसृतः, तत्र च शालो नाम राजा महाशालो युवराजः, तयोर्भगिनी यशोमती, तस्या भर्त्ता पिठरः, पुत्रश्च तस्या गागलीर्नाम कुमारः, ततः शालो भगवतः समीपे धर्मं श्रुत्वा भणति—यन्नवरं महाशालं राज्येऽभिषिञ्चामि, ततो युष्माकं पादमूले प्रव्रजामि, तेन गत्वा भणितो महाशालः—राजा भव, अहं प्रव्रजामि, स भणति—अहमपि प्रव्रजामि, यथा यूयमिह अस्माकं मेढीप्रमाणास्तथा प्रव्रजितस्यापीति, तदा गागिलीः काम्पील्यपुरादानीय राज्येऽभिषिक्तः, तस्य माता यशोमती काम्पील्यपुरे नगरे दत्ता पिठरराजपुत्राय, तेन ततः आनीतः, तेन पुनस्तयोर्द्वे सहस्रपुरुषवाहिन्यौ

सीयाओ कारियाओ, जाव ते पव्वइया, सावि तेसिं भगिणी समणोवासिया जाया, तेऽवि एक्कारसंगाइं अहिज्जिया। अण्णया य भगवं रायगिहे समोसढो, ततो भगवं निग्गतो चंपं जतो पधावितो, ताहे सालमहासाला सामिं पुच्छंति—अम्हे पिट्ठिचंपं वच्चामो, जइ नाम कोइ तेसिं पव्वएज्ज सम्मत्तं वा लभेज्ज, सामी जाणइ—जहा ताणि संबुज्झिहिन्ति, ताहे तेसिं सामिणा गोतमसामी विइज्जओ दिण्णो, सामी चंपं गतो, गोयमसामीऽवि पिट्ठिचंपं गतो, तत्थ समवसरणं, गागलि पिठरो जसवती य निग्गयाणि, ताणि परमसंविग्गाणि, धम्मं सोऊण गागलीपुत्तं रज्जे अभिसिंचिऊण मातापितिसहितो पव्वइओ, गोयमसामी ताणि घेत्तूण चंपं वच्चइ, तेसिं सालमहासालाणं चंपं वच्चंताणं हरिसो जातो—संसारातो उत्तारियाणित्ति, ततो सुभेणऽज्झवसाणेण केवलनाणं उप्पन्नं, तेसिंपि चिंता जाया—जहा अम्हे एतेहिं रज्जे ठावियाणि पुणरवि धम्मे ठावियाणि संसारातो मोइयाणि, एवं चिंतंताणं सुभेणऽज्झवसाणेण तिण्हवि केवलनाणं समुप्पण्णं, एवं ताणि उप्पण्णनाणाणि

१ शिबिके कारिते, यावत्तौ प्रव्रजितौ, साऽपि तयोर्भगिनी श्रमणोपासिका जाता, तावपि एकादशाङ्गान्यधीतवन्तौ। अन्यदा च भगवान् राजगृहे समवसृतः, ततो भगवान् निर्गतः चम्पां यतः प्रधावितः, तदा शालमहाशालौ स्वामिनं पृच्छतः—आवां व्रजावः पृष्ठचम्पां, यदि नाम कोऽपि तेषां प्रव्रजेत् सम्यक्त्वं वा लभेत, स्वामी जानाति—यथा ते संभोत्स्यन्ते, तदा तयोः स्वामिना गौतमस्वामी द्वितीयको दत्तः, स्वामी चम्पां गतः, गौतमस्वाम्यपि पृष्ठचम्पां गतः, तत्र समवसरणं, गागली पिठरो यशोमती च निर्गताः, ते परमसंविग्नाः, धर्मं श्रुत्वा गागली पुत्रं राज्येऽभिषिच्य मातापितृसहितः प्रव्रजितः, गौतमस्वामी तान् गृहीत्वा चम्पां व्रजति, तयोः शालमहाशालयोश्चम्पां व्रजतोर्हर्षो जातः—संसारादुत्तारिता इति, ततः शुभेनाध्यवसायेन केवलज्ञानमुत्पन्नं, तेषामपि चिन्ता जाता—यथा वयमेताभ्यां राज्ये स्थापिताः पुनरपि धर्मे स्थापिताः संसारान्मोचिताः, एवं चिन्तयतां शुभेनाध्यवसायेन त्रयाणामपि केवलज्ञानं समुत्पन्नम्, एवं ते उत्पन्नज्ञान

गयाणि चंपं, सामिं पदक्खिणेउं तित्थं नमिऊण केवलिपरिसं पधाविताणि, गोयमसामीऽवि भगवं पदक्खिणेऊण पादेसु पडितो उट्ठितो भणइ—कहं वच्चह ?, एह सामिं वंदह, ताहे भगवया भणिओ—मा गोयम ! केवली आसाएहि, ताहे आउट्टो खामेइ, संवेगं चागतो, चिंतेइ य—माऽहं न चेव सिज्झेज्जा। इतो य सामिणा पुव्वं वागरियं अणागए गोयमसामिम्मि—जहा जो अट्ठापदं विलग्गइ चेइयाणि य वंदइ धरणिगोयरो सो तेणेव भवग्गहणेणं सिज्झति, तं च देवा अन्नमन्नस्स कहिंति, जहा किर धरणिगोयरो अट्ठावयं जो विलग्गति सो तेणेव भवेण सिज्झइ, ततो गोयमसामी चिंतइ—जह अट्ठावयं वच्चेज्जा, ततो सामी तस्स हिययाकूतं जाणिऊण तावसा य संबुज्झिहिन्तित्ति भगवया भणितो—वच्च गोयम ! अट्ठावयं चेइयं वंदेउं, ताहे भगवं गोयमो हट्ठतुट्ठो भगवं वंदित्ता गतो अट्ठावयं, तत्थ य अट्ठावदे जणवायं सोऊण तिण्णि तावसा पंचसयपरिवारा पत्तेयं २ अट्ठावयं विलग्गामोत्ति, तंजहा—कोंडिण्णो दिण्णो सेवाली, कोंडिण्णो

१ गताश्चम्पां, स्वामिनं प्रदक्षिणय्य तीर्थं नत्वा केवलिपर्षदं प्रधाविताः, गौतमस्वाम्यपि भगवन्तं प्रदक्षिणय्य पादयोः पतितः उत्थितो भणति—क्व (क) व्रजत, एत स्वामिनं वन्दध्वं, तदा भगवता भणितः—मा गौतम ! केवलिन आशातय, तदाऽऽवृत्तः क्षमयति, संवेगं चागतः, चिन्तयति च—माऽहं नैव सैत्सम्। इतश्च स्वामिना पूर्वं व्याकृतमनागते गौतमस्वामिनि—यथा योऽष्टापदं विलगति चैत्यानि च वन्दते धरणीगोचरः स तेनैव भवग्रहणेन सिध्यति, तच्च देवा अन्योऽन्यं कथयन्ति, यथा किल धरणीगोचरोऽष्टापदं यो विलगति स तेनैव भवेन सिध्यति, ततो गौतमस्वामी चिन्तयति—यथाऽष्टापदं व्रजेयं, ततः स्वामी तस्य हृदयाकूतं ज्ञात्वा तापसाश्च संभोत्स्यन्त इति भगवता भणितः—व्रज गौतमाष्टापदं चैत्यं वन्दितुं, तदा भगवान् गौतमो हृष्टतुष्टो भगवन्तं वन्दित्वा गतोऽष्टापदं, तत्र चाष्टापदे जनवादं श्रुत्वा त्रयस्तापसाः पञ्चशतपरिवाराः प्रत्येकं प्रत्येकं अष्टापदं विलगाम इति, तद्यथा—कौण्डिन्यः दत्तः शैवालः, कौण्डिन्य

सपरिवारो चउत्थं २ काऊण पच्छा मूलकंदाणि आहारेइ सच्चित्ताणि, सो पढमं मेहलं विलग्गो, दिण्णोऽवि छट्ठस्स २ परिसडियपंडुपत्ताणि आहारेइ, सो बिइयं मेहलं विलग्गो, सेवाली अट्ठमं अट्ठमेण जो सेवालो सयंमएल्लओ तं आहारेइ, सो तइयं मेहलं विलग्गो। इओ य भगवं गोयमसामी उरालसरीरो हुतवहतडितरुणरविकिरणतेयो, ते तं एज्जंतं पासिऊण भणंति–एस किर थुलसमणओ एत्थ विलग्गिहितित्ति?, जं अम्हे महातवस्सी सुक्का लुक्खा न तरामो विलग्गिउं। भगवं च गोयमो जंघाचारणलद्धीए लूतापुडगंपि निस्साए उप्पयइ, जाव ते पलोएंति, एस आगतो २ एस अदंसणं गतोत्ति, एवं ते तिण्णिवि पसंसंति, विम्हिया अच्छंति य पलोएन्ता, जदि उत्तरति एयस्स वयं सीसा। गोयमसामीवि चेइयाणि वंदित्ता उत्तरपुरत्थिमे दिसिभाए पुढविसिलावट्टए असोगवरपादवस्स अहे तं रयणिं वासाए उवागतो। इओ य सक्कस्स लोगपालो वेसमणो अट्ठावयं चेइयवंदओ आगतो, सो चेइयाणिं वंदित्ता गोयमसामिं वंदइ, ततो से भगवं

१ सपरिवारश्चतुर्थं चतुर्थं कृत्वा पश्चात् कन्दमूलानि आहारयति सचित्तानि, स प्रथमां मेखलां विलग्नः, दत्तोऽपि षष्ठ षष्ठेन परिशटितपाण्डुपत्राण्याहारयति, स द्वितीयां मेखलां विलग्नः, शैवालोऽष्टमाष्टमेन यः शैवालः स्वयंम्लानः ( मृतः ) तमाहारयति, स तृतीयां मेखलां विलग्नः। इतश्च भगवान् गौतमस्वामी उदारशरीरो हुतवहतडित्तरुणरविकिरणतेजा, ते तमायान्तं दृष्ट्वा भणन्ति–एष किल स्थूलश्रमणकोऽत्र विलगिष्यति ? इति, यद्वयं ( च वय ) महातपस्विन शुष्का रूक्षा न शक्नुमो विलगितुम्। भगवांश्च गौतमो जङ्घाचारणलब्ध्या लूतातन्तुमपि निश्रायोत्पतति, यावत्ते प्रलोकयन्ति, एष आगत २ एषो ऽदर्शनं गत इति एव ते त्रयोऽपि प्रशंसन्ति, विस्मिताश्च तिष्ठन्ति प्रलोकयन्तो, यद्युत्तरति एतस्य वय शिष्याः। गौतमस्वाम्यपि चैत्यानि वन्दित्वा उत्तरपौरस्त्ये दिग्भागे पृथ्वीशिलापट्टके अशोकवरपादपस्याधस्तां रजनीं वासायोपागतः। इतश्च शक्रस्य लोकपालो वैश्रमणोऽष्टापदं चैत्यवन्दक आगतः, स चैत्यानि वन्दित्वा गौतमस्वामिनं वन्दते, ततस्तस्मै भगवान्

धम्मकहावसरे अणगारगुणे परिकहेइ, जहा भगवंतो साहवो अंताहारा पंताहारा एवमादि, वेसमणो चिंतेइ–एस भगवं एरिसे साहुगुणे वण्णेइ, अप्पणो य से इमा सरीरसुकुमारत्ता जा देवाणवि न अत्थि, ततो भगवं तस्साकूतं नाऊण पुंडरीयं नाममज्झयणं परूवेइ, जहा–पुंडरिगिणी नगरी पुंडरीओ राया कंडरीओ जुवराया जहा नातेसु, तं मा तुमं बलियत्तं दुब्बलियत्तं वा गेण्हाहि, जहा सो कंडरीओ तेणं दुब्बलेणं अट्टदुहट्टो कालगतो अहे सत्तमाए उववण्णो, पुंडरीओ पुण पडिपुण्णगलकपोलोऽवि सव्वट्ठसिद्धे उववण्णो, एवं देवाणुप्पिया! दुब्बलो बलिओ वा अकारणं, एत्थ झाणनिग्गहो कायव्वो, झाणनिग्गहो परं पमाणं, ततो वेसमणो अहो भगवया मम हिययाकूतं नायंति आउट्टो संवेगमावण्णो वंदित्ता पडिगतो। तत्थ वेसमणस्स एगो सामाणिओ देवो जंभगो, तेण तं पुंडरीयज्झयणं उग्गहियं पंचसयाणि, सम्मत्तं च पडिवण्णो, ततो भगवं बिइयदिवसे चेइयाणि वंदित्ता पच्चोरुहइ, ते य तावसा भणंति–तुब्भे अम्हं आयरिया अम्हे तुब्भं

१ धर्मकथावसरेऽनगारगुणान् परिकथयति, यथा भगवन्त साधवोऽन्ताहारा प्रान्ताहारा एवमादीन्, वैश्रमणश्चिन्तयति–एष भगवान् ईदृशान् साधुगुणान् वर्णयति, आत्मनश्चास्येयं शरीरसुकुमारता यादृशी देवानामपि नास्ति, ततो भगवान् तस्याकूतं ज्ञात्वा पुण्डरीक नामाध्ययनं प्ररूपयति, यथा–पुण्डरीकिणी नगरी पुण्डरीको राजा कण्डरीको युवराज यथा ज्ञातेषु, तन्मा त्व बलित्व दुर्बलत्व वा ग्राही, यथा स कण्डरीकस्तेन दौर्बल्येन आर्तदुःखार्तः कालगतोऽध सप्तम्यामुत्पन्न, पुण्डरीक पुन प्रतिपूर्णगलकपोलोऽपि सर्वार्थसिद्धे उत्पन्नः, एव देवानुप्रिय! दुर्बलो बलिको वाऽकारणम्, अत्र ध्याननिग्रह कर्तव्य, ध्याननिग्रह पर प्रमाणं, ततो वैश्रमणोऽहो भगवता मम हृदयाकूत ज्ञातमित्यावृत्त संवेगमापन्नो वन्दित्वा प्रतिगतः। तत्र वैश्रमणस्य एक सामानिको देवो जृम्भक, तेन तत् पुण्डरीकाध्ययनमवगृहीत पञ्चशतानि, सम्यक्त्व च प्रतिपन्न, ततो भगवान् द्वितीयदिवसे चैत्यानि वन्दित्वा प्रत्यवतरति, ते च तापसा भणन्ति—यूयमस्माकमाचार्या वय युष्माक

सीसा, सामी भणति—तुब्भ य अम्ह य तिलोयगुरू आयरिया, ते भणंति–तुब्भवि अण्णो?, ताहे सामी भयवतो गुणसंथवं करेइ, ते पव्वाविता, देवयाए लिंगाणि उवणीयाणि, ताहे भगवया सद्धिं वच्चंति, भिक्खावेला य जाता, भगवं भणइ–किं आणिज्जउ पारणंमित्ति?, ते भणंति–पायसो, भगवं च सव्वलद्धिसंपुण्णो पडिग्गहं घतमधुसंजुत्तस्स पायसस्स भरेत्ता आगतो, ते भगवता अक्खीणमहाणसिएण सव्वे उवट्ठिया, पच्छा अप्पणा जिमितो, ततो ते सुट्ठुतरं आउट्टा, तेसिं च सेवालभक्खाणं पंचण्हवि सयाणं गोतमसामिणो तं लद्धिं पासिऊण केवलनाणं उप्पण्णं, दिण्णस्स पुणो सपरिवारस्स भगवतो छत्तातिच्छत्तं पासिऊण केवलनाणं उप्पन्नं, कोडिण्णस्सवि सामिं दट्ठूण केवलनाणं उप्पन्नं, भगवं च पुरओ पकड्ढेमाणो सामिं पदाहिणं करेइ, ते केवलिपरिसं गता, गोयमसामी भणइ–एह सामिं वंदह, सामी भणइ–गोयमा! मा केवली आसाएहि, भगवं आउट्टो मिच्छामिदुक्कडंति करेइ, ततो भगवओ सुट्ठुतरं अद्धिती जाया, ताहे सामी गोयमं

१ शिष्याः, स्वामी भणति–युष्माकमस्माकं च त्रिलोकगुरुश्च आचार्यो, ते भणन्ति–युष्माकमपि अन्यः ?, तदा स्वामी भगवतो गुणसंस्तवं करोति, ते प्रव्राजिताः, देवतया लिङ्गान्युपनीतानि, तदा भगवता सार्धं व्रजन्ति, भिक्षावेला च जाता, भगवान् भणति–किमानीयता पारणमिति?, ते भणन्ति–पायस, भगवांश्च सर्वलब्धिसंपूर्णं पतद्ग्रह घृतमधुसंयुक्तेन पायसेन भृत्वाऽऽगत, ते भगवताऽक्षीणमहानसिकेन सर्वे उपस्थापिता, पश्चादात्मना जेमितः, ततस्ते सुष्ठुतरमावृत्ता, तेषां च शैवालभक्षकाणां पञ्चानामपि शताना गौतमस्वामिनस्तां लब्धिं दृष्ट्वा केवलज्ञानमुत्पन्न, दत्तस्य पुन सपरिवारस्य भगवतश्छत्रातिच्छत्र दृष्ट्वा केवलज्ञानमुत्पन्न, कौण्डिन्यस्यापि स्वामिन दृष्ट्वा केवलज्ञानमुत्पन्न, भगवांश्च पुरत प्रकृष्यन् स्वामिन प्रदक्षिणीकरोति, ते केवलिपर्षदं गता., गौतमस्वामी भणति–एत स्वामिन वन्दध्व, स्वामी भणति–गौतम! मा केवलिन आशातय, भगवानावृत्तो मिथ्यामेदुष्कृतमिति करोति, ततो भगवतः सुष्ठुतरमधृतिर्जाता, तदा स्वामी गौतम

भणति–किं देवाणं वयणं गेज्झं? आतो जिणवराणं?, गोयमो भणति–जिणवराणं, तो किं अद्धितिं करेसि?, ताहे सामी चत्तारि कडे पण्णवेइ, तंजहा–सुंबकडे विदलकडे चम्मकडे कंवलकडे, एवं सीसावि सुंबकडसमाणे ४, तुमं च गोयमा! मम कम्बलकडसमाणो, अविय–चिरसंसिट्ठोऽसि मे गोयमा!, पण्णत्तीआलावगा भाणियवा, जाव अविसेसमणाणत्ता अंते भविस्सामो, ताहे सामी गोयमनिस्साए दुमपत्तयं पण्णवेइ। देवो वेसमणसामाणिओ ततो चइऊण अवंतीजणवए तुंबवणसन्निवेसे धणगिरी नाम इब्भपुत्तो, सो य सड्ढो पवइउकामो, तस्स मातापितरो वारेंति, पच्छा सो जत्थ जत्थ वरिज्जइ ताणि २ विपरिणामेइ, जहाऽहं पवइउकामो। इतो य धणपालस्स इब्भस्स दुहिया सुनंदानाम, सा भणइ–ममं देह, ताहे सा तस्स दिण्णा। तीसे य भाया अज्जसमिओ नाम पुवं पवइतओ सीहगिरिसगासे। सुनंदाए सो देवो कुच्छिंसि गब्भत्ताए उववण्णो, ताहे धणगिरी भणइ–एस ते गब्भो विइज्जओ होहित्ति सीहगिरिसगासे पवइओ, इमोऽवि नवण्हं मासाणं दारगो

---

१ भणति–किं देवानां वचन ग्राह्यमातो जिनवराणाम्?, गौतमो भणति–जिनवराणां, तत किमधृतिं करोषि?, तदा स्वामी चतुर कटान् प्रज्ञापयति तद्यथा–शुम्बकटो विदलकटश्चर्मकट कम्बलकट., एव शिष्या अपि शुम्बकटसमानाः ४, त्व च गौतम! मम कम्बलकटसमान, अपिच–चिरसंसृष्टोऽसि मया गौतम!, प्रज्ञप्त्यालापका भणितव्या, यावत् अविशेषनानात्वौ अन्ते भविष्याव, तदा स्वामी गौतमनिश्रया द्रुमपत्रक प्रज्ञापयति। देवो वैश्रमणसामानिकस्ततश्च्युत्वाऽवन्तीजनपदे तुम्बवनसन्निवेशे धनगिरिर्नामेभ्यपुत्रः, स च श्राद्ध प्रव्रजितुकाम, तस्य मातापितरौ वारयत, पश्चात्स यत्र यत्र व्रियते तान् तान् विपरिणमयति यथाऽहं प्रव्रजितुकाम। इतश्च धनपालस्येभ्यस्य दुहिता सुनन्दा नाम, सा भणति–मां दत्त, तदा सा तस्मै दत्ता। तस्याश्च भ्राताऽऽर्यसमितो नाम पूर्वं प्रव्रजित सिंहगिरिसकाशे। सुनन्दाया. स देव कुक्षौ गर्भतयोत्पन्न, तदा धनगिरिर्भणति–एष तव गर्भो द्वितीयको भविष्यतीति सिंहगिरिसकाशे प्रव्रजित., अयमपि नवसु मासेषु दारको * जात

जाओ, तत्थ य महिलाहिं आगताहिं भण्णइ–जइ से पिया ण पवइओ होंतो तो लट्ठं होंतं, सो सण्णी जाणति–जहा मम पिया पवइओ, तस्सेवमणुचिंतेमाणस्स जाईसरणं समुप्पन्नं, ताहे रत्तिं दिवा य रोवइ, वरं निविज्जंती, तो सुहं पवइस्संति, एवं छम्मासा वच्चंति। अण्णया आयरिया समोसढा, ताहे अज्जसमिओ धणगिरी य आयरियं आपुच्छंति–जहा सण्णातगाणि पेच्छामोत्ति, संदिसाविंति, सउणेण य वाहित, आयरिएहिं भणियं–महति लाहो, जं अज्ज सच्चित्तं अचित्तं वा लहह तं सवं लएह, ते गया, उवसग्गिज्जिउमारद्धा, अण्णाहिं महिलाहिं भण्णइ–एयं दारगं उवट्ठेहिं, तो कहिं णेहिंति, पच्छा ताए भणियं–मए एवइयं कालं संगोविओ, एत्ताहे तुमं संगोवाहि, पच्छा तेण भणियं–मा ते पच्छायावो भविस्सइ, ताहे सक्खिं काऊण गहितो छम्मासिओ ताहे चोलपट्टएण पत्तावंधिओ, न रोवइ, जाणइ सण्णी, ताहे तेहिं आयरिएहिं भाणं भरियंति हत्थो पसारिओ, दिण्णो, हत्थो भूमिं पत्तो, भणइ–अज्जो! नज्जइ वइरंति, जाव पेच्छंति देवकुमारोवमं दारगंति,

---

१ जात, तत्र च महिलाभिरागताभिर्भण्यते–यद्येतस्य पिता न प्रव्रजितोऽभविष्यत्तदा लष्टमभविष्यत्, स संज्ञी जानाति–यथा मम पिता प्रव्रजित, तस्यैवमनुचिन्तयतो जातिस्मरण समुत्पन्न, तदा रात्रौ दिवा च रोदिति, वरं निर्विद्यते इति, तत सुख प्रव्रजिष्यामीति, एव षण्मासा व्रजन्ति। अन्यदाऽऽचार्या समवसृताः, तदाऽऽर्यसमितो धनगिरिश्चाचार्यमापृच्छतो–यथा सज्ञातीयान् पश्याव इति, सदिशतः, शकुनेन च व्याहृतम्, आचार्यैर्भणितम्–महाल्लाभो, यदद्य सचित्तमचित्त वा लभेयाथां तत्सर्वं ग्राह्यं, तौ गतौ, उपसर्गयितुमारब्धा, अन्याभिर्महिलाभिर्भण्यते–एन दारकमुपस्थापय, तत क नेष्यत, पश्चात्तया भणित–मयैतावन्त कालं सगोपितोऽधुना त्व सगोपय, पश्चात्तेन भणित–मा तव पश्चात्तापो भूत्, तदा साक्षिणः कृत्वा गृहीत षाण्मासिकस्तदा चोलपट्टकेन पात्रबन्धयित्वा (झोलिकां कृत्वा), न रोदिति, जानाति संज्ञी, तदा तैराचार्यैर्भाजन भारितमिति हस्त प्रसारित, दत्तो, हस्तो भूमि प्राप्त, भणति–आर्य! ज्ञायते वज्रमिति' यावत् प्रेक्षन्ते देवकुमारोपमं दारकमिति,

भणइ य–सारक्खह एयं, पवयणस्स आहारो भविस्सइ एस, तत्थ से वइरो चेव नामं कयं, ताहे संजईण दिण्णो, ताहिं सेज्जातरकुले, सेज्जातरगाणि जाहे अप्पणगाणि चेडरूवाणि ण्हाणेंति मंडेंति वा पीहगं वा देंति ताहे तस्स पुविं, जाहे उच्चारादी आयरति ताहे आगारं दंसेइ कूवइ वा, एवं संवड्ढइ, फासुयपडोयारो तेसिमिट्ठो, साहूवि वाहिं विहरंति, ताहे सुनंदा पमग्गिया, ताओ निक्खेवगोत्ति न देंति, सा आगंतूण थणं देइ, एवं सो जाव तिवरिसो जातो। अन्नता साहू विहरंता आगता, तत्थ राउले ववहारो जाओ, सो भणइ–मम एयाए दिण्णओ, नगरं सुनंदाए पक्खियं, ताए वहूणि खेलणगाणि गहियाणि, रण्णो पासे ववहारच्छेदो, तत्थ पुवहोत्तो राया दाहिणतो संघो सुनंदा ससयणपरियणा वामपासे णरवइस्स, तत्थ राया भणइ–ममकएण तुब्भे जतो चेडो जाति तस्स भवतु, पडिस्सुतं, को पढमं वाहरतु?, पुरिसातीओ धम्मुत्ति पुरिसो वाहरतु, ततो नगरजणो आह–एएसिं संवसितो, माता सद्दावेउ, अविय माता दुक्करकारिया

---

१ भणति च–सरक्षतैन, प्रवचनस्याधारो भविष्यत्येष, तत्र तस्य वज्र एव नाम कृत, तदा सयतीभ्यो दत्त, ताभि शय्यातरकुले, शय्यातरा यदाऽऽत्मनश्चेटरूपाणि स्नपयन्ति मण्डयन्ति वा स्तन्य वा ददति तदा तस्मै पूर्वं, यदोच्चारादि आचरति तदाऽऽकार दर्शयति कूजति वा, एव सवर्धते, प्रासुकप्रतिकारस्तेषामिष्ट, साधवोऽपि बहिर्विहरन्ति, तदा सुनन्दा मार्गयितुमारब्धा, ता निक्षेपक इति न ददति, साऽऽगत्य स्तन्य ददाति, एव स यावत्त्रिवार्षिको जात। अन्यदा साधवो विहरन्त आगता, तत्र राजकुले व्यवहारो जात, स भणति–ममैतया दत्त, नगर सुनन्दाया पाक्षिक, तया बहूनि क्रीडनकानि गृहीतानि राज्ञ पार्श्वे व्यवहारच्छेद, तत्र पूर्वाभिमुखो राजा दक्षिणस्या सङ्घ सुनन्दा सस्वजनपरिजना वामपार्श्वे नरपते, तत्र राजा भणति–ममीकृतेन युष्माक यतो दारको याति तस्य भवतु, प्रतिश्रुत, क प्रथम व्याहरतु?, पुरुषादिको धर्म इति पुरुषो व्याहरतु, ततो नगरजन आह–एतेषा परिचित, माता शब्दयतु, अपिच–माता दुष्करकारिका

[1]पुणो य पेलवसत्ता, तम्हा एसा चेव वाहरउ, ताहे सा आसाहत्थीरहवसहगेहि य मणिकणगरयणचित्तेहिं बालभावलोभावाएहि भणइ–एहि वइरसामी !, ताहे पलोइंतो अच्छइ, जाणइ–जइ संघं अवमन्नामि तो दीहसंसारिओ भविस्सामि, अविय–एसावि पव्वइस्सइ, एवं तिन्नि वारा सद्दाविओ न एइ, ताहे से पिया भणइ–जइऽसि* कयथवसाओ धम्मज्झयमूसियं इमं वइर ! । गेण्ह लहुं रयहरणं कम्मरयपमज्जणं धीर ! ॥ १ ॥ ताहेऽणेण तुरितं गंतूण गहियं, लोगेण य जयइ धम्मोत्ति उक्कट्ठिसीहनाओ कतो, ताहे से माया चिंतेइ–मम भाया भत्ता पुत्तो य पव्वइओ, अहं किं अच्छामि?, एवं सावि पव्वइया

जो गुज्झएहिं बालो णिमंतिओ भोयणेण वासंते । णेच्छइ विणीयविणओ तं वइररिसिं णमंसामि ॥७६५॥

व्याख्या—यः गुह्यकैर्देवैः बालस्सन् 'निमंतिउ' त्ति आमन्त्रितः भोजनेन वर्षति सति, पर्जन्य इति गम्यते, नेच्छति विनीतविनय इति, वर्त्तमाननिर्देशस्त्रिकालगोचरसूत्रप्रदर्शनार्थः, पाठान्तरं वा 'नेच्छिंसु विणयजुत्तो तं वइररिसिं नमंसामि' त्ति, अयं गाथासमुदायार्थः । अवयवार्थः कथानकादवसेयः, तच्चेदम्—

---

१ पुनश्च कोमलम्सत्वा, तस्मादेषैव व्याहरतु, तदा सा अश्वहस्तिरथवृषभैश्च मणिकनकरत्नचित्रैर्बालभावलोभावहैर्भणति–एहि वज्रस्वामिन् !, तदा प्रलोकयन् तिष्ठति, जानाति–यदि सङ्घमवमन्ये तदा दीर्घससारो भविष्यामि, अपिच–एषाऽपि प्रव्रजिष्यति, एवं त्रीन् वारान् शब्दितो नैति, तदा तस्य पिता भणति–यद्यसि कृतव्यवसायो धर्मध्वजमुच्छ्रितमिमं वज्र ! । गृहाण लघु रजोहरणं कर्मरजःप्रमार्जनं धीर ! ॥ १ ॥ तदाऽनेन त्वरितं गत्वा गृहीतं, लोकेन च जयति जिनधर्म इत्युत्कृष्टिसिंहनादः कृतः, तदा तस्य माता चिन्तयति–मम भ्राता भर्त्ता पुत्रश्च प्रव्रजितः, अहं किं तिष्ठामि ?, एवं साऽपि प्रव्रजिता *सुकयज्झवसाओ

[1]सोऽवि जाहे थणं न पियइत्ति पव्वाविओ, पवइयाण चेव पासे अच्छइ, तेण तासिं पासे इक्कारस अंगाणि सुयाणि पढंतीण, ताणि से उवगयाणि, पदाणुसारी सो भगवं, ताहे अट्ठवरिसिओ संजइपडिस्सयाओ निक्कालिओ, आयरियसगासे अच्छइ, आयरिया य उज्जेणिं गता, तत्थ वासं पडति अहोधारं, ते य से पुव्वसंगइया जंभगा तेणंतेण वोलेंता तं पेच्छंति, ताहे ते परिक्खानिमित्तं उत्तिण्णा वाणिययरूवेणं, तत्थ वइल्ले उल्लदेत्ता उवक्खडेंति, सिद्धे निमंतेंति, ताहे पट्ठितो, जाव फुसियमत्थि, ताहे पडिनियत्तो, ताहे तवि ठितं, पुणो सद्दावेंति, ताहे वइरो गंतूण उवउत्तो दव्वतो ४, दव्वओ पुप्फफलादि खेत्तओ उज्जेणी कालओ पढमपाउसो भावतो धरणिछिवणणयणनिमेसादिरहिता पहट्ठतुट्ठा य, ताहे देवत्तिकाऊण नेच्छति, देवा तुट्ठा भणंति–तुमं दट्ठुमागता, पच्छा वेउव्वियं विज्जं देंति,

उज्जेणीए जो जंभगेहिं आणक्खिऊण थुयमहिओ । अक्खीणमहाणसियं सीहगिरिपसंसियं वंदे ॥ ७६६ ॥

---

१ सोऽपि यदा स्तन्यं न पिबतीति (तदा) प्रव्राजितः, प्रव्रजितानां चैव पार्श्वे तिष्ठति, तेन तासां पार्श्वे एकादशाङ्गानि श्रुतानि पठन्तीनां, तानि तस्योपगतानि, पदानुसारी स भगवान्, तदाऽष्टवार्षिकः सयतीप्रतिश्रयात् निष्काशितः, आचार्यसकाशे तिष्ठति, आचार्याश्चोज्जयिनीं गताः, तत्र वर्षा पतती अहतधारं, ते च तस्य पूर्वसंगतिका जृम्भकाः तेन मार्गेण व्यतिक्राम्यन्तस्तं परीक्षन्ते, तदा ते परीक्षानिमित्तमवतीर्णा' वणिग्रूपेण, तत्र बलीवर्दान् अवलाय ( उत्तार्य ) उपस्कुर्वन्ति, सिद्धे निमन्त्रयन्ति, तदा प्रस्थितः, यावत् बिन्दुपातः ( फुसारिका ) अस्ति, तदा प्रतिनिवृत्तः, तदा सोऽपि स्थितः, पुनः शब्दयन्ति, तदा वज्रो गत्वोपयुक्तो द्रव्यत' ४ द्रव्यतः पुष्पफलादि क्षेत्रतः उज्जयिनी कालतः प्रथमप्रावृट् भावतो धरणिस्पर्शनयननिमेषादिरहिता प्रहृष्टतुष्टाश्च, तदा देवा इति कृत्वा नेच्छति, देवास्तुष्टा भणन्ति–त्वां द्रष्टुमागता', पश्चाद्वैक्रियविद्यां ददति.

व्याख्या—उज्जयिन्यां यो 'जृम्भकैः' देवविशेषैः 'आणक्खिऊणं' ति परीक्ष्य 'स्तुतमहितः' स्तुतो वाक्स्तवेन महितो विद्यादानेन अक्षीणमहानसिकं सिंहगिरिप्रशंसितं वन्दे इति गाथाक्षरार्थः । अवयवार्थः कथानकादवसेयः, तच्चेदं—

[1]पुणरवि अन्नया जेट्ठमासे सन्नाभूमिं गयं घयपुन्नेहिं निमंतेन्ति, तत्थवि दव्वादिओ उवओगो, नेच्छति, तत्थ से णहगामिणी विज्जा दिण्णा, एवं सो विहरइ । जाणि य ताणि पयाणुसारिलद्धीए गहियाणि एक्कारस अंगाणि ताणि से संजयमज्झे थिरयराणि जायाणि, तत्थ जो अज्झाति पुव्वगयं तंपि णेण सव्वं गहियं, एवं तेण बहु गहियं, ताहे वुच्चति पढाहि, ततो सो एयंतगंपि कुट्टेंतो अच्छइ, अन्नं सुणेंतो । अण्णया आयरिया मज्झण्हे साहूसु भिक्खं निग्गएसु सन्नाभूमिं निग्गया, वइरसामीवि पडिस्सयवालो, सो तेसिं साहूणं वेंटियाओ मंडलिए रएत्ता मज्झे अप्पणा ठाउं वायणं देति, ताहे परिवाडीए एक्कारसवि अंगाइं वाएइ, पुव्वगयं च, जाव आयरिया आगया चिंतेंति—लहुं साहू आगया, सुणंति सद्दं

---

१ पुनरपि अन्यदा ज्येष्ठमासे संज्ञाभूमिं गतं घृतपूर्णैर्निमन्त्रयन्ति, तत्रापि द्रव्यादिक उपयोगः, नेच्छति, तत्र तस्मै नभोगामिनी विद्या दत्ता, एवं स विहरति । यानि च तानि पदानुसारिलब्ध्या गृहीतान्येकादशाङ्गानि, तानि तस्य सयतमध्ये स्थिरतराणि जातानि, तत्र योऽध्येति पूर्वगतं तदप्यनेन सर्वं गृहीतम्, एवं तेन बहु गृहीतं, तदोच्यते पठ, ततः स आगच्छदपि ( अधीतमपि ) कुट्टयन् तिष्ठति, अन्यत् शृण्वन् । अन्यदा आचार्या मध्याह्ने साधुषु भिक्षायै निर्गतेषु संज्ञाभूमिं निर्गता', वज्रस्वाम्यपि प्रतिश्रयपालः, स तेषां साधूनां विण्टिका मण्डल्यां रचयित्वा मध्ये आत्मना स्थित्वा वाचनां ददाति, तदा परिपाट्या एकादशाप्यङ्गानि वाचयति, पूर्वगतं च, यावदाचार्या आगताश्चिन्तयन्ति–लघु साधव आगता', शृण्वन्ति शब्दं

मधोघरसियं, बहिया सुणेंता अच्छंति, नायं जहा वइरोत्ति, पच्छा ओसरिऊण सद्दपडियं निसीहियं करेइ, मा से संका भविस्सइ, ताहे तेण तुरियं विंटियाओ सट्ठाणे ठवियाओ, निग्गंतूण य दंडयं गेण्हइ, पाए य पमज्जेइ, ताहे आयरिया चिंतेन्ति–मा णं साहू परिहविस्संति ता जाणावेमि, ताहे रत्तिं आपुच्छइ–अमुगं गामं वच्चामि ? तत्थ दो वा तिन्नि वा दिवसे अच्छिस्सामि, तत्थ जोगपडिवण्णगा भणंति–अम्हं को वायणायरिओ ?, आयरिया भणंति–वइरोत्ति, विणीया तहत्ति पडिसुतं, आयरिया चेव जाणंति, ते गया. साहूवि पए वसहिं पडिलेहित्ता वसहिकालणिवेयणादि वइरस्स करेंति, निसिज्जा य से रइया, सो तत्थ निविट्ठो, तेऽवि जहा आयरियस्स तहा विणयं पउंजंति, ताहे सो तेसिं करकरसद्देण सव्वेसिं अणुपरिवाडीए आलावए देइ, जेऽवि मंदमेहावी तेवि सिग्घं पट्ठवेउमारद्धा, ततो ते विम्हिया, जोऽवि एइ आलावगो पुव्वपढिओ तंपि विण्णासणत्थं पुच्छंति, सोऽवि सव्वं आइक्खइ, ताहे ते तुट्ठा भणंति–जइ आयरिया कइवयाणि दियहाणि अच्छेज्जा ततो

१ मेघौघरसित, बहिः शृण्वन्तस्तिष्ठन्ति, ज्ञात यथा वज्र इति, पश्चादपसृत्य शब्दपतित नैषेधिकीं करोति, मा तस्य शङ्का भूत्, तदा तेन विण्टिकास्त्वरितं स्वस्थाने स्थापिता, निर्गम्य च दण्डकं गृह्णाति, पादौ च प्रमार्जयति, तदाऽऽचार्याश्चिन्तयन्ति–मैनं साधव परिभूवन् तत् ज्ञापयामि, तदा रात्रावा पृच्छति–अमुकं ग्रामं व्रजामि ?, तत्र द्वौ वा त्रीन् वा दिवसान् स्थास्यामि, तत्र योगप्रतिपन्ना भणन्ति–अस्माक को वाचनाचार्य ?, आचार्या भणन्ति–वज्र इति, विनीता ( इति ) तथेति प्रतिश्रुतम्, आचार्या एव जानन्ति, ते गता', साधवोऽपि प्रभाते वसतिं प्रतिलेख्य वसतिकालनिवेदनादि वज्राय कुर्वन्ति, निषद्या च तस्मै रचिता, स तत्र निविष्टः, तेऽपि यथा आचार्यस्य तथा विनय प्रयुञ्जन्ति, तदा स तेभ्य व्यक्तव्यक्तशब्देन सर्वेभ्योऽनुपरिपाट्या आलापकान् ददाति, येऽपि मन्दमेधसस्तेऽपि शीघ्र प्रस्थापयितुमारब्धाः, ततस्ते विस्मिता, योऽप्येति आलापक पूर्वपठितस्तमपि विन्यासनार्थं पृच्छन्ति, सोऽपि सर्वमाख्याति, तदा ते तुष्टा भणन्ति–यद्याचार्या कतिपयान् दिवसान् तिष्ठेयुस्तत

एसं सुयक्खंधो लहुं समप्पेज्जा, जं आयरियसगासे चिरेण परिवाडीए गिण्हंति तं इमो एक्काए पोरसीए सारेइ, एवं सो तेसिं बहुमओ जाओ, आयरियाऽवि जाणाविओत्तिकाऊण आगया, अवसेसं च वरं अज्झाविज्जउत्ति, पुच्छंति य –सरिओ सज्झाओ ?, ते भणंति–सरिओ, एसच्चेव अम्ह वायणायरिओ भवउ, आयरिया भणंति–होहिइ, मा तुब्भे एत परिभविस्सह अतो जाणावणाणिमित्तं अहं गओ, ण उण एस कप्पो, जओ एतेण सुयं कन्नाहेडएण गहियं, अओ एयस्स उस्सारकप्पो करेयव्वो, सो सिग्घमोस्सारेइ, बितियपोरुसीए अत्थं कहेइ, तदुभयकप्पजोगोत्तिकाऊण, जे य अन्था आयरियस्सवि संकिता तेऽवि तेण उग्घाडिया, जावइयं दिट्ठिवायं जाणंति तत्तिओ गहिओ, ते विहरंता दसपुरं गया. उज्जेणीए भद्दगुत्ता नामायरिया, थेरकप्पट्ठिता, तेसिं दिट्ठिवाओ अत्थि, संघाडओ से दिन्नो, गओ तस्स सगासं, भद्दगुत्ता य थेरा सुविणगं पासंति–जहा किर मम पडिग्गहो खीरभरिओ आगंतुएण पीऊ समासासिओ* य, पभाए साहूणं

१ एष श्रुतस्कन्धो लघु समाप्नुयात्, यदाचार्यसकाशे चिरेण परिपाट्या गृह्यते तदयमेकया पौरुष्या सारयति, एव स तेषां बहुमतो जात, आचार्या अपि ज्ञापित इतिकृत्वा आगता, अवशेष च वरमध्याप्यतामिति, पृच्छन्ति च–स्मृत स्वाध्याय ?, ते भणन्ति–स्मृत, एष एवास्माकं वाचनाचार्यो भवतु, आचार्या भणन्ति–भविष्यति, मा यूयमेन परिभूत अतो ज्ञापनानिमित्तमह गत, न पुनरेष कल्प', यत एतेन श्रुत कर्णाहेटकेन गृहीतम्, अत एतस्योत्सारकल्प कर्तव्य, स शीघ्रमुत्सारयति, द्वितीयपौरुष्यामर्थं कथयति, तदुभयकल्पयोग्य इतिकृत्वा, ये चार्था आचार्यस्यापि शङ्कितास्तेऽपि तेनोद्घाटिता, यावन्त दृष्टिवाद जानन्ति तावान् गृहीत, ते विहरन्तो दशपुरं गता', उज्जयिन्यां भद्रगुप्तनामान आचार्या स्थविरकल्पस्थिता, तेषां दृष्टिवादोऽस्ति, सघाटकोऽस्मै दत्त., गतस्तस्य सकाश, भद्रगुप्ताश्च स्थविरा स्वप्न पश्यन्ति–यथा किल मम पतद्ग्रह क्षीरभृत आगन्तुकेन पीत समाश्वासितश्च, प्रभाते साधुभ्य

* समागिओ अ प्र०

साहेंति, ते अन्नमन्नाणि वागरेंति, गुरू भणंति–ण याणह तुब्भे, अज्ज मम पाडिच्छओ एहिति, सो सव्वं सुत्तत्थं घेत्थिहित्ति, भगवंपि बाहिरियाए वुच्छो, ताहे अइगओ दिट्ठो, सुयपुव्वो एस सो वइरो, तुट्ठेहिं उवगूहिओ, ताहे तस्स सगासे दस पुव्वाणि पढिताणि, तो अणुण्णानिमित्तं जहिं उद्दिट्ठो तहिं चेव अणुजाणियव्वोत्ति दसपुरमागया । तत्थ अणुण्णा आरद्धा ताव नवरि तेहिं जंभगेहिं अणुण्णा उवट्ठविया, दिव्वाणि पुप्फाणि चुण्णाणि य से उवणीयाणित्ति ॥ अमुमेवार्थं चेतस्यारोप्याह ग्रन्थकृत्—

**जस्स अणुन्नाए वायगत्तणे दसपुरंमि नयरंमि । देवेहिं कया महिमा पयाणुसारिं नमंसामि ॥ ७६७ ॥**

व्याख्या—यस्यानुज्ञाते 'वाचकत्वे' आचार्यत्वे दसपुरे नगरे 'देवैः' जृम्भकैः कृता महिमा, सम्पादिता पूजेति भावना, तं पदानुसारिणं नमस्य इति गाथार्थः ॥ ४४ ॥

अण्णया य सीहगिरि वइरस्स गणं दाऊण भत्तं पच्चक्खाइऊणं देवलोगं गओ । वइरसामीऽवि पंचहिं अणगारसएहिं संपरिवुडो विहरइ, जत्थ जत्थ वच्चइ तत्थ तत्थ ओरालवण्णकित्तिसद्दा परिब्भमंति, अहो भगवंति, एवं भगवं

१ कथयन्ति, ते अन्यदन्यत् व्याकुर्वन्ति, गुरवो भणन्ति–न जानीथ यूयम्, अद्य मम प्रतीच्छक एष्यति, स सर्वं सूत्रार्थं ग्रहीष्यतीति, भगवानपि बाहिरिकायामुषितः, तदा आगतो दृष्ट, श्रुतपूर्व एष स वज्र, तुष्टैरुपगूहित, तदा तस्य सकाशे दश पूर्वाणि पठितानि, ततोऽनुज्ञानिमित्त यत्रोद्दिष्टस्तत्रैवानुज्ञातव्य इति दशपुरमागताः तत्राऽनुज्ञाऽऽरब्धा तावन्नवरं तैर्जृम्भकैरनुज्ञा उपस्थापिता, दिव्यानि पुष्पाणि चूर्णानि चास्मै उपनीतानीति । २ अन्यदा च सिंहगिरिर्वज्रस्वामिन गण दत्त्वा भक्त प्रत्याख्याय देवलोक गत । वज्रस्वाम्यपि पञ्चभिरनगारशतै सपरिवृतो विहरति, यत्र यत्र व्रजति तत्र तत्र उदारवर्णकीर्तिशब्दा परिभ्राम्यन्ति, अहो भगवानिति, एव भगवान्

भवियजणविबोहणं करेंतो विहरइ । इओ य पाडलिपुत्ते नयरे धणो सेट्ठी, तस्स धूया अईव रूववती, तस्स य जाणसालाए साहुणीओ ठियाओ, ताओ पुण वइरस्स गुणसंथवं करेंति, सभावेण य लोगो कामियकामिओ, सिट्ठिधूया चिंतेइ—जइ मम सो पति होज्ज तोऽहं भोगे भुंजिस्सं, इयरहा अलं भोगेहिं, वरगा एंति, सा पडिसेहावेइ, ताहे साहेंति पव्वइयाओ सो ण परिणेइ, सा भणइ—जइ न परिणेइ अहंपि पव्वज्जं गिण्हिस्सं, भगवंपि विहरंतो पाडलिपुत्तमागओ, तत्थ से राया सपरियणो अम्मोगइयाए निग्गओ, ते पव्वइगा फड्डुगफड्डुगेहिं एंति, तत्थ बहवो उरालसरीरा, राया पुच्छइ—इमो भगवं वइरसामी ?, ते भणंति—न हवइ, इमो तस्स सीसो, जाव अपच्छिमं विंदं, तत्थ पविरलसाहुसहितो दिट्ठो, राइणा वंदिओ, ताहे उज्जाणे ठिओ, धम्मोऽणेण कहिओ, खीरासवलद्धी भगवं, राया हयहियओ कओ, अंतेउरे साहइ, ताओ भणंति—अम्हेऽवि वच्चामो, सव्वं अंतेउरं निग्गयं, सा य सेट्ठिधूया लोगस्स पासे सुणेत्ता किह पेच्छिज्जामित्ति चिंतेंती

१ भव्यजनविबोधनं कुर्वन् विहरति । इतश्च पाटलीपुत्रे नगरे धनः श्रेष्ठी, तस्य दुहिता अतीव रूपवती, तस्य च यानशालायां साध्व्यः स्थिताः, ताः पुनः वज्रस्य गुणसंस्तवं कुर्वन्ति, स्वभावेनैव लोकः कामितकामुकः, श्रेष्ठिदुहिता चिन्तयति-यदि मम स पतिर्भवेत् तदाऽहं भोगान् भोक्ष्ये, इतरथाऽलं भोगैः, वरा आयान्ति, सा प्रतिषेधयति, तदा साधयन्ति प्रव्रजितकाः—स न परिणेष्यति, सा भणति-यदि न परिणेष्यति अहमपि प्रव्रज्यां ग्रहीष्यामि, भगवानपि विहरन् पाटलीपुत्रमागतः, तत्र तस्य ( स ) राजा सपरिजनः अभ्युद्गत्या निर्गतः, ते प्रव्रजितकाः स्पर्धकस्पर्धकैरायान्ति, तत्र बहव उदारशरीराः, राजा पृच्छति-अयं भगवान् वज्रस्वामी ?, ते भणन्ति-न भवति, अयं तस्य शिष्यः, यावदपश्चिमं वृन्दं, तत्र प्रविरलसाधुसहितो दृष्टः, राज्ञा वन्दितः, तदोद्याने स्थितो, धर्मोऽनेन कथितः, क्षीराश्रवलब्धिको भगवान्, राजा हृतहृदयः कृतः, अन्तःपुराय कथयति, ता भणन्ति-वयमपि यामः, सर्वमन्तःपुरं निर्गतं, सा च श्रेष्ठिदुहिता लोकस्य पार्श्वे श्रुत्वा कथं प्रेक्षिष्य इति चिन्तयन्ती

अच्छति, बितियदिवसे पिया विन्नविओ—तस्स देहि, अण्णहा अप्पाणं विवाएमि, ताहे सव्वालंकारभूसियसरीरा कया, अणेगाहिं धणकोडिहिं सहिया णीणिया, धम्मो कहिओ, भगवं च खीरासवलद्धीओ, लोओ भणति—अहो सुस्सरो भगवं सव्वगुणसंपन्नो, णवरि रूवविहूणो, जइ रूवं होंतं सव्वगुणसंपया होंता, भगवं तेसिं मणोगयं नाउं तत्थ सयसहस्सपत्तपउमं विउव्वति, तस्स उवरि निविट्ठो, रूवं विउव्वति अतीव सोमं, जारिसं परं देवाणं, लोगो आउट्टो भणति—एयं एयस्स साहाविय रूवं, मा पत्थणिज्जो होहामित्ति विरूवेण अच्छइ सातिसउत्ति, रायाऽवि भणति—अहो भगवओ एयमवि अत्थि, ताहे अणगारगुणे वण्णेइ—पभू य असंखेज्जे दीवसमुद्दे विउव्वित्ता आइन्नविइन्नए करेत्तएत्ति, ताहे तेण रूवेण धम्मं कहेति, ताहे सेट्ठिणा निमंतिओ भगवं विसए निंदति, जइ ममं इच्छइ तो पव्वयउ, ताहे पव्वतिया ॥ अमुमेवार्थं हृदि व्यवस्थाप्याह—

**जो कन्नाइ धणेण य निमंतिओ जुव्वणंमि गिहवइणा । नयरंमि कुसुमनामे तं वइररिसिं नमंसामि ॥ ७६८ ॥**

१ तिष्ठति, द्वितीयदिवसे पिता विज्ञप्तः -तस्मै देहि, अन्यथा आत्मानं व्यापादयामि, तदा सर्वालङ्कारभूषितशरीरा कृता, अनेकाभिर्धनकोटिभिः सहिता नीता, धर्मः कथितः, भगवांश्च क्षीराश्रवलब्धिकः, लोको भणति-अहो सुस्वरो भगवान् सर्वगुणसंपन्नः, नवरं रूपविहीनः, यदि रूपमभविष्यत् सर्वगुणसंपद-भविष्यत्, भगवान् तेषां मनोगतं ज्ञात्वा तत्र शतसहस्रपत्रपद्मं विकुर्वति, तस्योपरि निविष्टः, रूपं विकुर्वति अतीव सौम्यं, यादृशं परं देवानां, लोक आवृत्तो भणति-एतदेतस्य स्वाभाविकं रूपं, मा प्रार्थनीयो भूवमिति विरूपस्तिष्ठति सातिशय इति, राजाऽपि भणति-अहो भगवत एतदप्यस्ति, तदा अनगारगुणान् वर्णयति-प्रभुश्चासंख्येयान् द्वीपसमुद्रान् विकुर्व्य आकीर्णविप्रकीर्णान् कर्तुमिति, तदा तेन रूपेण धर्मं कथयति, तदा श्रेष्ठिना निमन्त्रितो, भगवान् विषयान् निन्दति, यदि मामिच्छति तदा प्रव्रजतु, तदा प्रव्रजिता ।

व्याख्या—यः कन्यया धनेन च निमन्त्रितो यौवने 'गृहपतिना' धनेन नगरे 'कुसुमनाम्नि' पाटलिपुत्र इत्यर्थः, तं वइररिसिं नमस्य इति गाथार्थः ॥

तेणं य भगवया पयाणुसारित्तणओ पम्हुट्ठा महापरिण्णाओ अज्झयणाओ आगासगामिणी विज्जा उद्धरिया, तीए य गयणगमणलद्धिसंपण्णो भगवंति ॥ उक्तार्थाभिधित्सयाऽऽह—

**जेणुद्धरिया विज्जा आगासगमा महापरिन्नाओ । वंदामि अज्जवइरं अपच्छिमो जो सुअहराणं ॥ ७६९ ॥**

व्याख्या—येनोद्धृता विद्या 'आगासगम' त्ति गमनं—गमः आकाशेन गमो यस्यां सा तथाविधा महापरिज्ञाऽध्ययनात्, वंदे 'आर्यवइरं' आराद्यातः सर्वहेयधर्मेभ्य इत्यार्यः आर्यश्चासौ वैरश्चेति समासः, तं अपश्चिमो यः श्रुतधराणामिति गाथार्थः ॥ साम्प्रतमन्येभ्योऽधिकृतविद्याया आज्ञानिषेधख्यापनाय प्रदाननिराचिकीर्षया तदनुवादतस्तावदित्थमाह—

**भणइ अ आहिंडिज्जा जंबुद्दीवं इमाइ विज्जाए । गंतुं च माणुसनगं विज्जाए एस मे विसओ ॥ ७७० ॥**

व्याख्या—भणति च, वर्तमाननिर्देशप्रयोजनं प्राग्वत्, 'आहिण्डेत' इति पाठान्तरं वा 'अभाणिंसु य हिंडेज्ज' त्ति अभाणं च हिण्डेत-पर्यटेत् जम्बूद्वीपमनया विद्यया, तथा गत्वा च 'मानुषनगं' मानुषोत्तरं पर्वतं, तिष्ठेदिति वाक्यशेषः, विद्याया मे 'विषयो' गोचर इति गाथार्थः ॥

१ तेन च भगवता पदानुसारितया विस्मृता महापरिज्ञाध्ययनादाकाशगामिनी विद्योद्धृता, तया च गगनगमनलब्धिसंपन्नो भगवानिति ।

**भणइ अ धारेअव्वा न हु दायव्वा इमा मए विज्जा । अप्पिड्ढिया उ मणुआ होहिंति अओ परं अन्ने ॥ ७७१ ॥**

व्याख्या—'भणति च' इत्यस्य पूर्ववद्व्याख्या, 'धारयितव्या' प्रवचनोपकाराय न पुनर्दातव्या इयं मया विद्या, हुशब्दः पुनःशब्दार्थः, किमिति ?—'अप्पिड्ढिया उ मणुया होहिंति अतो परं अण्णे' अल्पर्द्धय एव मनुष्या भविष्यन्ति अतः परमन्ये एष्या इति गाथार्थः ॥ ४८ ॥ सो भगवं एवं गुणविज्जाजुत्तो विहरंतो पुव्वदेसाओ उत्तरावहं गओ, तत्थ दुब्भिक्खं जायं, पंथावि वोच्छिण्णा, ताहे संघो उवागओ नित्थारेहित्ति, ताहे पडविज्जाए संघो चडिओ, तत्थ य सेज्जायरो चारीए गओ एइ, ते य उप्पतिते पासइ, ताहे सो असियएण सिहं छिंदित्ता भणति—अहंपि भगवं! तुम्ह साहम्मिओ, ताहे सोऽवि लइओ इमं सुत्तं सरंतेण—'साहम्मियवच्छलंमि उज्जुया उज्जुया य सज्झाए। चरणकरणंमि य तहा, तित्थस्स पभावणाए य ॥ १ ॥' ततो पच्छा उप्पइओ भगवं पत्तो पुरियं नयरिं, तत्थ सुभिक्खं, तत्थ य सावया बहुया, तत्थ राया तच्चण्णिओ सड्ढओ, तत्थ अम्हच्चयाणं सड्ढयाणं तच्चण्णिओवासगाण य विरुद्धेण मल्लारुहणाणि वट्टंति, सव्वत्थ ते उवासगा पराइज्जंति, ताहे तेहिं राया पुप्फाणि

१ स भगवान् एव गुणविद्यायुक्तो विहरन् पूर्वदेशात् उत्तरापथं गतः, तत्र दुर्भिक्षं जातं, पन्थानोऽपि व्युच्छिन्नाः, तदा सङ्घ उपागतः निस्तारयेति (निस्तारयिष्यतीति), तदा पटविद्यया (धार्या) सङ्घश्चटितः, तत्र च शय्यातरश्चार्यै गत आयाति, तांश्चोत्पतितान् पश्यति, तदा स दात्रेण शिखां छित्त्वा भणति—अहमपि भगवन्! तव साधर्मिकः, तदा सोऽपि लगित इदं सूत्रं स्मरता—'साधर्मिकवात्सल्ये उद्युक्ता उद्युक्ताश्च स्वाध्याये। चरणकरणे च तथा तीर्थस्य प्रभावनायां च ॥ १ ॥' ततः पश्चादुत्पतितो भगवान् प्राप्तः पुरिकां नगरीं, तत्र सुभिक्षं, तत्र च श्रावका बहवः, तत्र च राजा तच्चनिकः (बौद्धः) श्राद्धः, तत्रास्माकीनानां श्राद्धानां तच्चनिकोपासकानां च विरुद्धतया माल्यारोहणानि वर्त्तन्ते, सर्वत्र ते उपासकाः पराजीयन्ते, तदा तै राज्ञा पुष्पाणि

वाराविंओ पज्जोसवणाए, सड्ढा अद्दण्णा जाया नत्थि पुप्फाणित्ति, ताहे सबालवुड्ढा वइरसामिं उवट्ठिया, तुब्भे जाणह, जइ तुब्भेहिं नाहेहिं पवयणं ओहामिज्जइ, एवं भणितो बहुप्पयारं ताहे उप्पइऊण माहेस्सरिं गओ, तत्थ हुयासणं नाम वाणमंतरं, तत्थ कुंभो पुप्फाण उट्ठेइ, तत्थ भगवतो पितिमित्तो तडिओ, सो संभंतो भणइ—किमागमणप्पओयणं ?, ताहे भणति—पुप्फेहिं पओयणं, सो भणइ—अणुग्गहो, भगवया भणिओ—ताव तुब्भे गहेह जाव एमि, पच्छा चुल्लहिमवंते सिरिसगासं गओ, सिरीए य चेतियअच्चणियनिमित्तं पउमं छिन्नगं, ताहे वंदित्ता सिरीए निमंतिओ, तं गहाय एइ अग्गिघरं, तत्थऽणेणं विमाणं विउव्वियं, तत्थ कुंभं छोढुं पुप्फाणं ततो सो जंभगगणपरिवुडो दिव्वेणं गीयगंधव्वनिनाएणं आगासेणं आगओ, तस्स पउमस्स बेंटे वइरसामी ठिओ, ततो ते तच्चण्णिया भणंति—अम्ह एयं पाडिहेरं, अग्घं गहाय निग्गया, तं वोलेत्ता विहारं अरहंतघरं गया, तत्थ देवेहिं महिमा कया, तत्थ लोगस्स अतीव बहुमाणो जाओ, रायावि आउट्टो समणोवासओ जाओ ॥ उक्तमेवार्थं बुद्धबोधायाह—

१ निवारितानि पर्युषणायां, श्राद्धा खिन्ना जाता, न सन्ति पुष्पाणीति, तदा सबालवृद्धा वज्रस्वामिनमुपस्थिताः यूयं जानीथ यदि युष्मासु नाथेषु प्रवचनमवधाव्यते, एवं भणितो बहुप्रकारं तदोत्पत्य माहेश्वरीं गतः, तत्र हुताशनं नाम व्यन्तरायतनं, तत्र कुम्भः पुष्पाणामुत्तिष्ठते, तत्र भगवतः पितृमित्रमारामिकः, स सम्भ्रान्तो भणति—किमागमनप्रयोजनम् ?, तदा भणति—पुष्पैः प्रयोजनं, स भणति—अनुग्रहः, भगवता भणितः—तावद्यूयं गृह्णीत यावदायामि, पश्चात्क्षुल्लहिमवति श्रीसकाशं गतः, श्रिया च चैत्यार्चनिकानिमित्तं पद्मं छिन्नं, तदा वन्दित्वा श्रिया निमन्त्रितः, तद् गृहीत्वाऽऽयाति अग्निगृहं, तत्रानेन विमानं विकुर्वितं, तत्र कुम्भं निक्षिप्य पुष्पाणां ततः स जृम्भकगणपरिवृतो दिव्येन गीतगन्धर्वनिनादेनाकाशेनागतः, तस्य पद्मस्य वृन्ते वज्रस्वामी स्थितः, ततस्ते तच्चनिका भणन्ति— अस्माकमेतत् प्रातिहार्यम्, अर्घं गृहीत्वा निर्गताः, तं व्यतिक्रम्य विहारमर्हद्गृहं गताः, तत्र देवैर्महिमा कृतः, तत्र लोकस्यातीव बहुमानो जातः, राजाऽप्यावृत्तः श्रमणोपासको जातः ।

**माहेसरीउ सेसा पुरिअं नीआ हुआसणगिहाओ । गयणयलमइवइत्ता वइरेण महाणुभागेण ॥ ७७२ ॥**

व्याख्या—'माहेश्वर्याः' नगर्याः 'सेस'त्ति पुष्पसमुदायलक्षणा, सा पुरिकां नगरीं नीता 'हुताशनगृहात्' व्यन्तरदेवकुलसमन्वितोद्यानात्, कथम् ?—गगनतलमतिव्यतीत्य—अतीवोलङ्घ्य, वइरेण महानुभागेन, भागः—अचिन्त्या शक्तिरिति गाथाक्षरार्थः ॥ एवं सो विरहंतो चेव सिरिमालं गओ। एवं जाव अपुहत्तमासी, एत्थ गाहा—

**अपुहुत्ते अणुओगो चत्तारि दुवार भासई एगो । पुहुत्ताणुओगकरणे ते अत्थ तओ उ वुच्छिन्ना ॥ ७७३ ॥**

व्याख्या—अपृथक्त्वे सति अनुयोगः चत्वारि द्वाराणि—चरणधर्मकालद्रव्याख्यानि भाषते एकः, वर्तमाननिर्देशफलं प्राग्वत्, पृथक्त्वानुयोगकरणे पुनस्तेऽर्थाः—चरणादयः तत एव—पृथक्त्वानुयोगकरणाद् व्यवच्छिन्ना इति गाथार्थः ॥ साम्प्रतं येन पृथक्त्वं कृतं तमभिधातुकाम आह—

**देविंदवंदिएहिं महाणुभागेहिं रक्खिअज्जेहिं । जुगमासज्ज विभत्तो अणुओगो तो कओ चउहा ॥ ७७४ ॥**

व्याख्या—देवेन्द्रवन्दितैर्महानुभागैः रक्षितार्यैर्दुर्बलिकापुष्पमित्रं प्राज्ञमप्यतिगुपिलत्वादनुयोगस्य विस्मृतसूत्रार्थमवलोक्य युगमासाद्य प्रवचनहिताय 'विभक्तः' पृथक् पृथगवस्थापितोऽनुयोगः, ततः कृतश्चतुर्द्धा—चरणकरणानुयोगादिरिति गाथार्थः ॥ साम्प्रतमार्यरक्षितस्वामिनः प्रसूतिं प्रतिपिपादयिषयाऽऽह—

**माया य रुद्दसोमा पिआ य नामेण सोमदेवुत्ति । भाया य फग्गुरक्खिअ तोसलिपुत्ता य आयरिया ॥ ७७५ ॥**
**निज्जवण भद्दगुत्ते वीसुं पढणं च तस्स पुव्वगयं । पव्वाविओ अ भाया रक्खिअखमणेहिं जणओ अ ॥ ७७६ ॥**

१ एव स विहरन्नेव श्रीमालं गतः, एवं यावदपृथक्त्वमासीत्, अत्र गाथा

व्याख्या—गाथाद्वयार्थः कथानकादवसेयः, तच्चेदम्—तेणं कालेणं तेणं समएणं दसपुरं नाम नयरं, तत्थ सोमदेवो माहणो, तस्स रुद्दसोमा भारिया, तीसे पुत्तो रक्खिओ, तस्साणुजो फग्गुरक्खिओ। अच्छंतु ताव अज्जरक्खिया, दसपुरनयरं कहमुप्पन्नं ?,—तेणं कालेणं तेणं समएणं चंपाए नयरीए कुमारनंदी सुवण्णकारो इत्थिलोलो परिवसति, सो जत्थ जत्थ सुरूवं दारियं पासति सुणेति वा तत्थ पंच सुवण्णसयाणि दाऊण तं परिणेइ ( ग्रन्थाग्रम् ७५०० ) एवं तेण पंचसया पिंडिया, ताहे सो ईसालुओ एक्कक्खंभं पासादं कारित्ता ताहिं समं ललइ, तस्स य मित्तो णाइलो णाम समणोवासओ। अण्णया य पंचसेलगदीववत्थव्वाओ वाणमंतरीओ सुरवतिनिओएण नंदीस्सरवरदीवं जत्ताए पत्थियाओ, ताणं च विज्जुमाली नाम पंचसेलाहिपती सो चुओ, ताओ चिंतेति—कंचि वुग्गाहेमो जोऽम्हं भत्ता भविज्जत्ति, नवरं वच्चंतीहिं चंपाए कुमारणंदी पंचमहिलासयपरिवारो ललंतो दिट्ठो, ताहिं चिंतियं—एस इत्थिलोलो एयं वुग्गाहेमो, ताहे ताहिं उज्जाणगयस्स अप्पा दंसिओ,

१ तस्मिन् काले तस्मिन् समये दशपुरं नाम नगरं, तत्र सोमदेवो ब्राह्मण, तस्य रुद्रसोमा भार्या, तस्याः पुत्रो रक्षितः, तस्यानुज फल्गुरक्षित । तिष्ठन्तु तावदार्यरक्षिता, दशपुरनगरं कथमुत्पन्नम् ?-तस्मिन् काले तस्मिन् समये चम्पायां नगर्यां कुमारनन्दी सुवर्णकारः स्त्रीलोलुप परिवसति, स यत्र यत्र सुरूपां दारिकां पश्यति शृणोति वा तत्र पञ्चसुवर्णशतानि दत्त्वा तां परिणयति, एव तेन पञ्चशती पिण्डिता, तदा स ईर्ष्यालुरेकस्तम्भं प्रासाद कारयित्वा ताभि सम ललि-तस्य च मित्र नागिलो नाम श्रमणोपासक । अन्यदा च पञ्चशैलकद्वीपवास्तव्ये व्यन्तर्यौ सुरपतिनियोगेन नन्दीश्वरवरद्वीप यात्रायै प्रस्थिते, तयोश्च विद्युन्माली नाम पञ्चशैलाधिपति ( पति ) स च्युत, ते चिन्तयतः—कञ्चित् व्युद्ग्राहयाव य आवयोर्भर्ता भवेदिति, नवरं व्रजन्तीभ्यां चम्पायां कुमारनन्दी पञ्चमहि-लाशतपरिवारो ललन् दृष्टः, ताभ्यां चिन्तितम्—एष स्त्रीलोलुपः एन व्युद्ग्राहयावः, तदा ताभ्यामुद्यानगताय आत्मा दर्शित ,

ताहे सो भणति—काओ तुब्भे ?, ताओ भणंति—देवयाओ, सो मुच्छिओ ताओ पत्थेइ, ताओ भणंति—जइ अम्हाहिं कज्जं तो पंचसेलगं दीवं एज्जाहित्ति भणिऊणं उप्पतित्ता गयाओ, सो तासु मुच्छिओ राउले सुवण्णगं दाऊण पडहगं णीणेति—कुमारणंदि जो पंचसेलगं णेइ तस्स धणकोडिं देइ, थेरेण पडहओ वारिओ, वहणं कारियं, पत्थयणस्स भरियं, थेरो त दव्वं पुत्ताण दाऊण कुमारणंदिणा सह जाणवत्तेण पत्थिओ, जाहे दूरे समुद्देण गओ ताहे थेरेण भण्णइ—किंचिवि पेच्छसि ?, सो भणति—किंपि कालयं दीसइ, थेरो भणति—एस वडो समुद्दकूले पव्वयपादे जाओ, एयस्स हेट्ठेण एयं वहणं जाहिति, तो तुमं अमूढो वडे विलग्गेज्जासि, ताहे पंचसेलगाओ भारंडपक्खी एहिंति, तेसिं जुगलस्स तिन्नि पाया, ततो तेसु सुत्तेसु मज्झिल्ले पादे सुलग्गो होज्जाहि पडेण अप्पाणं बंधिउं, तो ते तं पंचसेलयं णेहिंति, अह तं वडं न विलग्गसि तो एयं वहणं वलयामुहं पविसिहित्ति तत्थ विणस्सिहिमि, एवं सो विलग्गो, णीओ य पक्खीहिं, ताहे ताहिं वाणमंतरीहिं

१ तदा स भणति—के युवा ?, ते भणत —देवते, स मूर्च्छित ते प्रार्थयते, ते भणत —यद्यावाभ्यां कार्यं तत् पञ्चशैल द्वीपमाया इति भणित्वोत्पत्य गते, स तयोर्मूर्च्छितो राजकुले सुवर्णं दत्त्वा पटह निष्काशयति—कुमारनन्दी य पञ्चशैल नयति तस्मै धनकोटीं ददाति, स्थविरेण पटहो धारित , प्रवहण कारित, पथ्यदनेन भृत, स्थविरस्तत् द्रव्य पुत्रेभ्यो दत्त्वा कुमारनन्दिना सह यानपात्रेण प्रस्थित , यदा दूरं समुद्रेण गतस्तदा स्थविरेण भण्यते—किञ्चिदपि प्रेक्षसे ?, स भणति—किमपि कृष्ण दृश्यते, स्थविरो भणति—एष वट समुद्रकूले पर्वतमूले जात , एतस्याधस्तात् एतत् प्रवहण यास्यति, तत् त्वममूढो वटे विलगे , तत्र पञ्चशैलात् भारण्डपक्षिण एष्यन्ति, तयोर्युगलयोस्त्रय पादा , ततस्तेषु सुप्तेषु मध्यमे पादे सुलग्नो भवे पटेनात्मान बद्ध्वा, ततस्ते त्वां पञ्चशैल नेष्यन्ति, अथ त वट न विलगिष्यसि तदा एतत् प्रवहण वलयामुख प्रवेक्ष्यति इति तत्र विनङ्क्ष्यसि, एव स विलग्न , नीतश्च पक्षिभि , तदा ताभ्यां व्यन्तरीभ्या

दिट्ठो, रिद्धी य से दाइया, सो पगहिओ, ताहिं भणिओ—न एएण सरीरेण अम्हे भुंजामो, किंचिज्जलणपवेसादि करेहि, जहा पंचसेलाधिपती होहिसि, तोऽहं किह जामि ?, ताहिं करयलपुडेण नीओ सउज्जाणे छड्डिओ, ताहे लोगो आगंतूण पुच्छइ ताहे सो भणति—'दिट्ठं सुयमणुभूयं जं वित्तं पंचसेलए दीवे' त्ति, ताहे मित्तेण वारिज्जंतोवि इंगिणिमरणेण मओ पंचसेलाहिवई जाओ, सड्ढस्स निव्वेदो जाओ—भोगाण कज्जे किलिस्सइ, अम्हे जाणंता कीस अच्छामोत्ति पव्वइओ, कालं काऊण अच्चुए उववन्नो, ओहिणा तं पेच्छइ, अण्णया णंदिस्सरवरजत्ताए पलायंतस्स पडहो गले ओलइओ, ताहे वायंतो णंदिस्सरं गओ, सड्ढो आगओ तं पेच्छइ, सो तस्स तेयं असहमाणो पलायति, सो तेयं साहरेत्ता भणति—भो ममं जाणसि? सो भणति—को सक्कादी इंदे ण याणति ?, ताहे तं सावगरूवं दंसेइ, जाणाविओ य, ताहे संवेगमावन्नो भणति—संदिसह इयाणिं किं करेमि?, भणति—वद्धमाणसामिस्स पडिमं करेहि, ततो ते सम्मत्तवीयं होहित्ति, ताहे महाहिमवंताओ

१ दृष्ट , ऋद्धिश्चास्मै दर्शिता, स प्रगृद्ध , ताभ्यां भणित —नैतेन शरीरेणावां भुञ्ज्वहे, किञ्चिज्ज्वलनप्रवेशादि कुरु, यथा पञ्चशैलाधिपतिर्भविष्यसि इति, तदह कथ यामि, ताभ्यां करतलपुटेन नीतः स्वोद्याने त्यक्त , तदा लोक आगत्य पृच्छति, तदा स भणति—'दृष्ट श्रुतमनुभूत यद्वृत्त पञ्चशैले द्वीपे' इति तदा मित्रेण वार्यमाणोऽपि इङ्गिनीमरणेन मृतः पञ्चशैलाधिपतिर्जातः, श्राद्धस्य निर्वेदो जातः, भोगानां कृते ( कार्ये ) क्लिश्यते, वय जानान किं तिष्ठाम इति प्रव्रजित , काल कृत्वाऽच्युते उत्पन्न , अवधिना त पश्यति, अन्यदा नन्दीश्वरवरयात्रायां पलायमानस्य पटहो गले ऽवलगित ,तदा वादयन् नन्दीश्वरं गत , श्राद्ध आगत त प्रेक्षते, स तस्य तेजोऽसहमान पलायते, स तेजःसहृत्य भणति—भो मां जानासि ?, स भणति—क शक्रादीन् इन्द्रान् न जानाति, ? तदा तत् श्रावकरूप दर्शयति, ज्ञापितश्च, तदा संवेगमापन्नो भणति—संदिशत इदानीं किं करोमि ?, भणति—वर्धमानस्वामिनः प्रतिमा कुरु, ततस्ते सम्यक्त्वबीज भवि-इति, तदा महाहिमवतो

वेति ?, ते उक्तवन्तः—संस्तृतमिति, स चोत्थितो जिगमिषुरर्धसंस्तृतं दृष्ट्वा क्रुद्धः, सिद्धान्तवचनं स्मृत्वा 'क्रियमाणं कृत'-मित्यादि कर्मोदयतो वितथमिति चिन्तयामास, 'क्रियमाणं कृत' मित्येतद् भगवद्वचनं वितथं, प्रत्यक्षविरुद्धत्वात्, अश्रावणशब्दवचनवत्, प्रत्यक्षविरुद्धता चास्यार्धसंस्तृतसंस्तारासंस्तृतदर्शनात्, ततश्च क्रियमाणत्वेन प्रत्यक्षसिद्धेन कृतत्वधर्मोऽपनीयत इति भावना, ततो यद् भगवानाह तदनृतं, किन्तु कृतमेव कृतमिति, एवं पर्यालोच्यैवमेव प्ररूपणां चकारेति, स चेत्थं प्ररूपयन् स्वगच्छस्थविरैरिदमुक्तः—हे आचार्य ! 'क्रियमाणं कृत' मित्यादि भगवद्वचनमवितथमेव, नाध्यक्षविरुद्धं यदि क्रियमाणं क्रियाविष्टं कृतं नेष्यते ततः कथं प्राक् क्रियाऽनारम्भसमय इव पश्चादपि क्रियाऽभावे तदिष्यत इति, सदा प्रसङ्गात्, क्रियाऽभावस्याविशिष्टत्वात्, तथा यच्चोक्तं भवता 'अर्द्धसंस्तृतसंस्तारासंस्तृतदर्शनात्' तदप्ययुक्तं, यतो यद् यदा यत्राकाशदेशे वस्त्रमास्तीर्यते तत्तदा तत्रास्तीर्णमेव, एवं पाश्चात्यवस्त्रास्तरणसमये खल्वसावास्तीर्ण एव, विशिष्टसमयापेक्षीणि च भगवद्वचनानि, अतोऽदोष इति ॥ एवं सो जाहे न पडिवज्जइ ताहे केइ असद्दहंता तस्स वयणं गया सामिसगासं, अण्णे तेणेव समं ठिया, पियदंसणावि, तत्थेव ढंको नाम कुंभगारो समणोवासओ, तत्थ ठिया, सा वंदितुं आगया, तंपि तहेव पण्णवेइ, सा य तस्साणुराएण मिच्छत्तं विपडिवण्णा, अज्जाणं परिकहेइ, तं च ढंकं भणति, सो जाणति—एसाऽवि विप्पडिवण्णा नाहवयणं, ताहे सो भणति—सम्मं अहं न याणामि एयं विसेसतरं, अण्णया

१ एवं स यदा न प्रतिपद्यते तदा केचिदश्रद्दधतस्तस्य वचन स्वामिसकाश गता, अन्ये तेनैव सम स्थिता, प्रियदर्शनाऽपि, तत्रैव ढङ्को नाम कुम्भकार श्रमणोपासक, तत्र स्थिता, सा वन्दितुमागता, तामपि तथैव प्रज्ञापयति, सा च तस्यानुरागेण मिथ्यात्व विप्रतिपन्ना, आर्याभ्य परिकथयति, त च ढङ्क भणति, स जानाति—एषाऽपि विप्रतिपन्ना नाथवचनेन, तदा स भणति—सम्यगह न जानामि एतत् विशेषतरम्, अन्यदा

कयाई सज्झायपोरुसिं करेइ, ततो ढंकेण भायणाणि उवत्तंतेण ततोहुत्तो इंगालो छूढो, ततो तीसे संघाडीए एगदेसो दड्ढो, सा भणइ—सावय ! किं ते संघाडी दड्ढा ?, सो भणइ—तुब्भे चेव पण्णवेह जहा—दज्झमाणे अडड्ढे, केण तुब्भ संघाडी दड्ढा ?, ततो सा संबुद्धा भणइ—इच्छामि संमं पडिचोयणा, ताहे सा गंतूण जमालिं पण्णवेइ बहुविहं, सो जाहे न पडिवज्जइ ताहे सा सेससाहुणो य सामिं चेव उवसंपण्णाइं, इतरोऽवि एगागी अणालोइयपडिक्कंतो कालगतो ॥ एष सङ्ग्रहार्थः, अक्षराणि त्वेवं नीयन्ते, जेट्ठा सुदंसणा अणोज्जति जमालिघरणीए नामाइं, सावत्थीए नयरीए तेंदुगुज्जाणे जमालिस्स एसा दिट्ठी उप्पण्णा, तत्थ पंचसया य साहूणं सहस्सं च संजईणं, एतेसिं जे सतं ण पडिबुद्धं तं ढंकेण पडिबोहियंति वक्कसेसं, जमालिं मोत्तूणंति ॥ अन्ये त्वेवं व्याचक्षते—जेट्ठा महत्तरिगा सुदंसणाऽभिहाणा भगवतो भगिणी, तीसे जमाली पुत्तो, तस्स अण्णोज्जा नाम भगवतो दुहिता भारिया ॥ शेषं पूर्ववत् । गतः प्रथमो निह्नवः, साम्प्रतं द्वितीयं प्रतिपादयन्नाह—

१ कदाचित्स्वाध्यायपौरुषीं करोति, ततो ढङ्केन भाजनान्युद्वर्त्तयता ततोऽङ्गारः क्षिप्त, ततस्तस्या सघाट्या एकदेशो दग्ध, सा भणति—श्रावक ! किं त्वया सघाटी दग्धा ?, स भणति—यूयमेव प्रज्ञापयत यथा—दह्यमानमदग्ध, केन युष्माक सघाटी दग्धा ?, तत सा सबुद्धा भणति—इच्छामि सम्यक् प्रतिचोदनां, तदा सा गत्वा जमालिं प्रज्ञापयति बहुविध, स यदा न प्रतिपद्यते तदा सा शेषसाधवश्च स्वामिनमेवोपसपन्ना., इतरोऽपि एकाक्यनालोचितप्रतिक्रान्तः कालगत.। २ ज्येष्ठा सुदर्शना अनवद्येति जमालिगृहिण्या नामानि, श्रावस्त्या नगर्यां तिन्दुकोद्याने जमालेरेषा दृष्टिरुत्पन्ना, तत्र पञ्चशतानि च साधूना सहस्र च सयतीनां, एतेषां ये स्वय न प्रतिबुद्धास्ते ढङ्केन प्रतिबोधिता इति वाक्यशेष, जमालिं मुक्त्वेति । अन्ये त्वेव व्याचक्षते—ज्येष्ठा—महत्तरा सुदर्शनाभिधाना भगवतो भगिनी, तस्या जमालि पुत्रः, तस्य अनवद्या नाम भगवतो दुहिता भार्या ।

सोलस वासाणि तया जिणेण उप्पाडियस्स णाणस्स । जीवपएसियदिट्ठी उसभपुरंमी समुप्पण्णा ॥१२७॥(भा०)

व्याख्या—षोडश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य जीवप्रदेशिकदृष्टिस्तत ऋषभपुरे समुत्पन्ना इति गाथार्थः ॥ कथमुत्पन्ना ? रायगिहं नगरं गुणसिलयं चेइयं, तत्थ वसू नामायरिओ चोद्दसपुव्वी समोसढो, तस्स सीसो तीसगुत्तो नाम, सो आयप्पवायपुव्वे इमं आलावयं अज्झावेइ—एगे भंते ! जीवपएसे जीवेत्ति वत्तव्वं सिया ?, नो इणमट्ठे समट्ठे, एवं दो जीवपएसा तिण्णि संखेज्जा असंखेज्जा वा, जाव एगेणावि पदेसेण ऊणो णो जीवोत्ति वत्तव्वं सिया, जम्हा कसिणे पडिपुण्णे लोगागासपदेसतुल्लपएसे जीवेत्ति वत्तव्व' मित्यादि, एवमज्झावितो मिथ्यात्वोदयतो व्युत्थितः सन्नित्थमभिहितवान्—यद्येकादयो जीवप्रदेशाः खल्वेकप्रदेशहीना अपि न जीवाख्यां लभन्ते, किन्तु चरमप्रदेशयुक्ता एव लभन्त इति, ततः स एवैकः प्रदेशो जीव इति, तद्भावभावित्वात् जीवत्वस्येति, स खल्वेवं प्रतिपादयन् गुरुणोक्तो—नैतदेवं, जीवाभावप्रसङ्गात्, कथम् ?, भवदभिमतोऽन्त्यप्रदेशोऽप्यजीवः, अन्यप्रदेशतुल्यपरिमाणत्वात्, प्रथमादिप्रदेशवत्, प्रथमादिप्रदेशो वा जीवः, शेषप्रदेशतुल्यपरिमाणत्वाद्, अन्त्यप्रदेशवत्, न च पूरण इतिकृत्वा तस्य जीवत्वं युज्यते, एकैकस्य पूरणत्वाविशेषाद्, एकमपि विना तस्यासम्पूर्णत्वमित्येवमप्युक्तो यदा न प्रतिपद्यते ताहे से काउस्सग्गो कतो, एवं सो बहूहि

१ राजगृहं नगरं गुणशील चैत्य, तत्र वसुनामा आचार्यश्चतुर्दशपूर्वी समवसृत, तस्य शिष्यस्तिष्यगुप्तो नाम, स आत्मप्रवादपूर्वे इममालापक अध्येति—एको भदन्त ! जीवप्रदेशो जीव इति वक्तव्यं स्यात् ?, नैषोऽर्थ समर्थ, एवं द्वौ जीवप्रदेशौ त्रय सख्येया असख्येया वा, यावदेकेनापि प्रदेशेनोनो न जीव इति वक्तव्यं स्यात्, यस्मात् कृत्स्नप्रतिपूर्णलोकाकाशप्रदेशतुल्यप्रदेशो जीव इति वक्तव्य" एवमधीयान । २ तदा तस्य कायोत्सर्गं कृत, एव स बहुभिर-

असब्भावुब्भावणाहिं मिच्छत्ताभिनिवेसेण य अप्पाणं च परं च तदुभयं च वुग्गाहेमाणो वुप्पाएमाणो गतो आमलकप्पं नगरिं, तत्थ अंबसालवणे ठितो, तत्थ मित्तसिरी नाम समणोवासओ, सो जाणइ–जहेस निण्हओ, अण्णया कयाइ तस्स संखडी जाता, ताहे तेण निमंतिओ–तुब्भेहिं सयमेव घरं आगंतवं, ते गता, ताहे तस्स निविट्ठस्स विउला खज्जगविही नीणिता, ताहे सो ताओ एक्केक्काओ खंडं खंडं देइ, एवं कूरस्स कुसणस्स वत्थस्स, पच्छा पादेसु पडितो, सयणं च भणइ–एह वंदह, साहू पडिलाभिया, अहो अहं धण्णो सपुण्णो जं तुब्भे मम घरं सयमेवागता, ताहे ते भणंति–किं धरिसियामो अम्हे एवं तुमे ?, सो भणति–ससिद्धंतेण तुम्हे मया पडिलाभिया, जइ नवरं वद्धमाणसामिस्स तणएण सिद्धंतेण पडिला-भेमि, तत्थ सो संवुद्धो भणइ–इच्छामि अज्जो ! सम्मं पडिचोयणा, ताहे पच्छा सावएण विहिणा पडिलाभितो, मिच्छामि दुक्कडं च कत, एवं ते सवे संवोहिया, आलोइय पडिकंता विहरंति ॥ अमुमेवार्थमुपसंजिहीर्षुराह—

१०सद्भावोद्भावनाभिर्मिथ्यात्वाभिनिवेशेन चात्मानं परं च तदुभयं च व्युद्ग्राहयन् व्युत्पादयन् गत आमलकल्पां नगरीं, तत्र आम्रशालवने स्थितः, तत्र मित्रश्रीर्नाम श्रमणोपासकः, स जानाति–यथैष निह्नवः, अन्यदा कदाचित् तस्य (गृहे) संखडी जाता, तदा तेन निमन्त्रितः–युष्माभिः स्वयमेव गृहमागन्तव्यं, ते गताः, तदा तस्य निविष्टस्य विपुलः खाद्यकविधिरानीतः, तदा स तस्मात् एकैकस्मात् खण्डं खण्डं ददाति, एवं कूरस्य कुसिणस्य (व्यञ्जनस्य) वस्त्रस्य, पश्चात्पादयोः पतितः, स्वजनं च भणति–आयात वन्दध्वं, साधवः प्रतिलाभिताः, अहो अहं धन्यः सपुण्यो यस्मात् यूयमेव मम गृहमागताः, तदा ते भणन्ति–किं धर्षिताः स्मो वयमेव त्वया ?, स भणति–स्वसिद्धान्तेन यूयं मया प्रतिलाभिताः, यदि परं वर्धमानस्वामिसत्केन सिद्धान्तेन प्रतिलम्भयामि, तत्र स सम्बुद्धो भणति–इच्छाम्यार्य ! सम्यक् प्रतिचोदनां, तदा पश्चात् श्रावकेण विधिना प्रतिलम्भितो, मिथ्या मे दुष्कृतं च कृतम्, एवं ते सर्वे संबोधिताः, आलोचितप्रतिक्रान्ता विहरन्ति।

रायगिहे गुणसिलए वसु चोद्दसपुव्वि तीसगुत्ताओ। आमलकप्पा णयरी मित्तसिरी कूरपिंडाई ॥१२८॥(भा०)

व्याख्या—अस्याः प्रपञ्चार्थ उक्त एव, अक्षरगमनिका तु उसभपुरंति वा रायगिहंति वा एगट्ठा, तत्थ रायगिहे गुण-सिलए उज्जाणे वसु चोद्दसपुवी आयरिओ समोसढो, तस्स सीसाओ तीसगुत्ताओ एसा दिट्ठी समुप्पण्णा, सो मिच्छत्ता-भिभूओ आमलकप्पा नाम नयरी तं गओ, मित्तसिरी सावओ, तेण कूरपुवगादि [देशीयवचनत्वात् कूरसिक्थादिनेत्यर्थः] दिट्ठंतेहि पडिवोहिउत्ति ॥ गतो द्वितीयो निह्नवः, साम्प्रतं तृतीयं प्रतिपादयन्नाह—

चोद्दा दोवाससया तइया सिद्धिं गयस्स वीरस्स। अव्वत्तयाण दिट्ठी सेयवियाए समुप्पन्ना ॥ १२९ ॥ (भा०)

व्याख्या—चतुर्दशाधिके द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य ततोऽव्यक्तकदृष्टिः श्वेतव्यां नगर्यां समुत्पन्नेति गाथार्थः ॥ कथमुत्पन्ना ?—सेयवियाए नयरीए पोलासे उज्जाणे अज्जासाढा नामायरिया समोसढा, तेसिं सीसा बहवे आगाढजोगं पडिवन्ना, स एवायरिओ तेसिं वायणायरिओ, अन्नो तत्थ नत्थि, ते य रत्तिं हिययसूलेण मया सोहम्मे नलिणिगुम्मे विमाणे देवा उववन्ना, ओहिं पउंजंति, जाव पेच्छंति तं सरीरगं, ते य साहू आगाढजोगाही, तेवि न

१ ऋषभपुरमिति वा राजगृहमिति वा एकार्थौ, तत्र राजगृहे गुणशीले उद्याने वसुश्चतुर्दशपूर्वी आचार्यः समवसृतः, तस्य शिष्यात्तिष्यगुप्तात् एषा दृष्टिः समुत्पन्ना, स मिथ्यात्वाभिभूत आमलकल्पा नाम नगरी तां गतः, मित्रश्रीः श्रावकः, तेन कूरसिक्थादिदृष्टान्तैः प्रतिबोधित इति। २ श्वेतविकायां नगर्यां पोलासोद्यानमार्याषाढा नाम आचार्याः समवसृताः, तेषां शिष्या बहव आगाढयोगं प्रतिपन्नाः, स एवाचार्यस्तेषां वाचनाचार्यः, अन्यस्तत्र नास्ति, ते च रात्रौ हृदयशूलेन मृताः सौधर्मे नलिनीगुल्मे विमाने देवा उत्पन्नाः, अवधिं प्रयुञ्जन्ति, यावत्प्रेक्षन्ते तच्छरीरकं, ते च साधव आगाढयोगवाहिनस्तेऽपि न

थाणंति–जहा आयरिया कालगता, ताहे तं चेव सरीरगं अणुप्पविसित्ता ते साहुणो उट्ठवेंति, वेरत्तियं करेह, एवं तेण तेसिं दिवपभावेण लहुं चेव सारियं, पच्छा सो ते भणइ–खमह भंते ! जं भे मए अस्संजएण वंदाविया, अहं अमुगदि-वसे कालगतो, तुज्झं अणुकंपाए आगतो, एवं सो खामेत्ता पडिगतो, तेवि तं सरीरगं छड्डेऊण चिंतेंति–एच्चिरं कालं अस्संजतो वंदितो, ततो ते अवत्तभावं भावेंति–को जाणइ किं साहू देवो वा ? तो न वंदणिज्जोत्ति। होज्जासंजतनमणं होज्ज मुसावायममुगोत्ति ॥ १ ॥ थेरवयणं जदि परे संदेहो किं सुरोत्ति। साहुत्ति देवे कहं न संका किं सो देवो अदेवोत्ति ॥ २ ॥ तेण कहिएत्ति व मती देवोऽहं रूवदरिसणाओ य। साहुत्ति अहं कहिए समाणरूवंमि किं संका ? ॥ ३ ॥ देवस्स व किं वयणं सच्चंति न साहुरूवधारिस्स। न परोप्परंपि वंदह ज जाणंतावि जययोत्ति ॥ ४ ॥ एवं भण्णमाणावि जाहे ण पडिवज्जंति ताहे उग्घाडिया, ततो विहरंता रायगिहं गया, तत्थ मोरियवंसपसूओ बलभद्दो नाम राया समणोवासओ,

१ जानन्ति–यथा आचार्याः कालगताः, तदा तदेव शरीरमनुप्रविश्य तान् साधूनुत्थापयन्ति, वैरात्रिकं कुरुत, एवं तेन तेषां दिव्यप्रभावेण लघ्वेव सारितं, पश्चात्स तान् भणति–क्षमध्वं भदन्ताः ! यन्मया भवन्तोऽसंयतेन वन्दिताः, अहममुकस्मिन् दिवसे कालगतः, युष्माकमनुकम्पया आगतः, एवं स क्षमयित्वा प्रतिगतः, तेऽपि तच्छरीरकं त्यक्त्वा चिन्तयन्ति–इयच्चिरं कालमसंयतो वन्दितः, ततस्तेऽव्यक्तभावं भावयन्ति–को जानाति किं साधुर्देवो वा ?, ततो न वन्दनीय इति। भवेदसंयतनमनं भवेन्मृषावादोऽमुक इति ॥ १ ॥ स्थविरवचनं यदि परस्मिन् संदेहः किं सुर इति ॥ साधुरिति देवे कथं न शङ्का ? किं स देवोऽदेव इति ॥ २ ॥ तेन कथित इति च मतिर्देवोऽहं रूपदर्शनाच्च। साधुरहमिति कथिते समानरूपे का शङ्का ? ॥ ३ ॥ देवस्यैव किं वचनं सत्यमिति न साधुरूपधारिणः। न परस्परमपि वन्दध्वं यज्जानाना अपि यतय इति ॥ ४ ॥ एवं भण्यमाना अपि यदा न प्रतिपद्यन्ते तदोद्घाटिताः, ततो विहरन्तो राजगृहं गताः, तत्र मौर्यवंशप्रसूतो बलभद्रो नाम राजा श्रमणोपासकः,

तेण ते आगमिया–जहा इहमागतत्ति, ताहे तेण गोहा आणत्ता–वच्चह गुणसिलगातो पवइयए आणेह, तेहिं आणीता, रण्णा पुरिसा आणत्ता- सिग्घं एते कडगमद्देण मारेह, ततो हत्थी कडगेहि य आणीएहिं ते पभणिया–अम्हे जाणामो जहा तुमं सावओ, तो कहं अम्हे माराविहि ?, राया भणइ–तुम्हे चोरा णु चारिया णु अभिमरा णु ?, को जाणइ ?, ते भणंति– अम्हे साहुणो, राया भणइ–किह तुब्भे समणा ?, जं अवत्ता परोप्परस्सवि न वंदह, तुब्भे समणा वा चारिया वा ?, अहंपि सावगो वा न वा ?, ताहे ते संबुद्धा लज्जिया पडिवन्ना निस्संकिया जाया, ताहे अंबाडिया खरेहिं मउएहि य, संबोहणट्ठाए तुब्भं इमं मए एयाणुरूवं कयं, मुक्का खामिया य ॥ अमुमेवार्थमुपसंहरन्नाह—

**सेयवि पोलासाढे जोगे तद्दिवसहिययसूले य । सोहंमि णलिणिगुम्मे रायगिहे मुरिय बलभद्दे ॥ १३० ॥ (भा०)**

व्याख्या—श्वेतव्यां नगर्यां पोलासे उद्याने आषाढाख्य आचार्यः, योग उत्पाटिते सति तद्दिवस एव हृदयशूले च, उत्पन्ने मृत इति वाक्यशेषः, स च सौधर्मे कल्पे नलिनिगुल्मे विमाने, समुत्पद्यावधिना पूर्ववृत्तान्तमवगम्य विनेयानां

---

१ तेन ते ज्ञाता–यथेहागता इति, तदा तेन आरक्षा आज्ञप्ता–व्रजत गुणशीलात् प्रव्रजितान् आनयत, तैरानीता., राज्ञा पुरुषा आज्ञप्ता –शीघ्रमेतान् कटकमर्देन मर्दयत, ततो हस्तिषु कटकेषु चानीतेषु ते प्रभणिता.–वय जानीमो यथा त्व श्रावक , तत् कथ अस्मान् मारयिष्यसि ?, राजा भणति–यूय चौरा नु चारिका नु अभिमरा नु ?, को जानाति ?, ते भणन्ति–वयं साधव , राजा भणति–कथ यूय श्रमणाः ?, यदव्यक्ता. परस्परमपि न वन्दध्व, यूय श्रमणा वा चारिका वा ? अहमपि श्रावको वा न वा ?, तदा ते सबुद्धा लज्जिता प्रतिपन्ना निश्शङ्किता जाता , तदा निर्भर्त्सिता खरैर्मृदुभिश्च, सबोधनार्थाय युष्माक मयेदमेतदनुरूप कृतं, मुक्ताः क्षामिताश्च.

योगान् सारितवानिति वाक्यशेषः, सुरलोकगते तस्मिन्नव्यक्तमतास्तद्विनेया विहरन्तो राजगृहे नगरे मौर्ये बलभद्रो राजा, तेन सम्बोधिता इति वाक्यशेषः, एवमन्या अपि सङ्ग्रहगाथा स्वबुद्ध्या व्याख्येया इति । उक्तस्तृतीयो निह्नवः, चतुर्थं व्याचिख्यासयाऽऽह—

**वीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स । सामुच्छेइयदिट्ठी मिहिलपुरीए समुप्पण्णा ॥ १३१ ॥ (भा०)**

व्याख्या—विंशत्युत्तरे द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य ततोऽन्तरे सामुच्छेदिकदृष्टिः मिथिलापुर्यां समुत्पन्नेति गाथार्थः ॥ यथोत्पन्ना तथा प्रदर्शयन्नाह—

**मिहिलाए लच्छिघरे महगिरिकोडिण्ण आसमित्ते य । णेउणियाणुप्पवाए रायगिहे खंडरक्खा य ॥१३२॥ (भा०)**

व्याख्या—मिहिलाए नयरीए लच्छिहरे चेतिए महागिरीआयरियाण कोडिण्णो नाम सीसो ठितो, तस्स आसमित्तो सीसो, सो अणुप्पवादपुवे नेउणियं वत्थुं पढति, तत्थ छिण्णछेदणयवत्तवयाए आलावगो जहा पडुप्पन्नसमयनेरइया वोच्छिज्जिस्संति, एवं जाव वेमाणियत्ति, एवं बिइयादिसमएसु वत्तवं, एत्थ तस्स वितिगिच्छा जाया–जहा सवे पडुप्पन्नसमयसंजाता वोच्छिज्जिस्संति–'एवं च कतो कम्माणुवेयणं सुकयदुकयाणंति ? । उप्पादाणंतरतो सवस्स विणाससब्भावा ॥१॥

---

१ मिथिलायां नगर्यां लक्ष्मीगृहे चैत्ये महागिर्याचार्याणा कोण्डिन्यो नाम शिष्य स्थित , तस्याश्वमित्र शिष्य , सोऽनुप्रवादपूर्वे नैपुणिक वस्तु पठति, तत्र छिन्नच्छेदनकवक्तव्यतायामालापको यथा–प्रत्युत्पन्नसमयनैरयिका व्युच्छेत्स्यन्ति, एव यावद्वैमानिका इति, एव द्वितीयादिसमयेष्वपि वक्तव्यम्, अत्र तस्य विचिकित्सा जाता–यथा सर्वे प्रत्युत्पन्नसमयसजाता व्युच्छेत्स्यन्ति–एव च कुत कर्माणुवेदन सुकृतदुष्कृतानामिति । उत्पादानन्तर सर्वस्य विनाशसद्भावात् ॥ १ ॥

[१]सो एवमादि परुवेंतो गुरुणा भणिओ–'एगनयमएणमिणं सुत्तं वच्चाहि मा हु मिच्छत्तं । निरवेक्खो सेसाणवि नयाण हिदयं वियारेहि ॥ २ ॥ नहि सवहा विणासो अद्धापज्जायमेत्तणासंमि । सपरप्पज्जाया अणतधम्मिणो वत्थुणो जुत्ता ॥ ३ ॥ अह सुत्तातोत्ति मती णणु सुत्ते सासयंपि निद्दिट्ठं । वत्थुं दवट्ठाए असासयं पज्जवट्ठाए ॥ ४ ॥ तत्थवि ण सवनासो समयादिविसेसणं जतोऽभिहितं । इहरा ण सवनासे समयादिविसेसणं जुत्तं ॥ ५ ॥' जाहे पण्णविओवि नेच्छति ताहे उग्घाडितो, ततो सो समुच्छेदं वागरेंतो कंपिल्लपुरं गतो, तत्थ खंडरक्खा नाम समणोवासया, ते य सुंकपाला, तेहिं ते आगमिएल्लगा, तेहिं ते गहिया, ते मारेउमारद्धा, ते भणंति भयभीया–अम्हेहिं सुयं जहा तुब्भे सावगा, तहावि एते साहू मारेह, ते भणंति–जे ते साहू ते वोच्छिण्णा तुज्झं चेव सिद्धंतो एस, अतो तुब्भे अण्णे केवि चोरा, ते भणंति— मा मारेह, एवं तेहिं संबोहिया पडिवण्णा सम्मत्तं । अयं गाथार्थः ॥ अक्षराणि तु क्रियाध्याहारतः स्वधिया ज्ञेयानि । गतश्चतुर्थो निह्नवः, साम्प्रतं पञ्चममभिधित्सुराह—

---

१ स एवमादि प्ररूपयन् गुरुणा भणित –एकनयमतेनेद सूत्र व्राजीर्मा मिथ्यात्वम् । निरपेक्ष शेषाणामपि नयानां हृदय विचारय ॥ २ ॥ न हि सर्वथा विनाशोऽद्धापर्यायमात्रनाशे । स्वपरपर्यायैरनन्तधर्मिणो वस्तुनो युक्त ॥ ३ ॥ अथ सूत्रादिति मतिर्ननु सूत्रे शाश्वतमपि निर्दिष्टम् । वस्तु द्रव्यार्थतयाऽशाश्वत पर्यवार्थतया ॥ ४ ॥ तत्रापि न सर्वनाश समयादिविशेषण यतोऽभिहितम् । इतरथा न सर्वनाशे समयादिविशेषण युक्तम् ॥ ५ ॥ यदा प्रज्ञापितोऽपि नेच्छति तदोद्घाटित , तत स सामुच्छेद व्याकुर्वन् काम्पील्यपुर गत , तत्र खण्डरक्षा नाम श्रमणोपासका , ते च शुल्कपाला , तैस्ते ज्ञाता , तैस्ते गृहीता , ते मारयितुमारब्धा , ते भणन्ति भयभीता –अस्माभि श्रुत यथा यूय श्रावका , तथापि एतान् साधून् मारयथ, ते भणन्ति–ये ते साधवस्ते व्युच्छिन्ना युष्माकमेव सिद्धान्त एष., अतो यूयमपरे, केऽपि चौरा , ते भणन्ति–मा मीमरत, एव तै सबोधिता प्रतिपन्ना सम्यक्त्वम् ।

अट्ठावीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स। दो किरियाणं दिट्ठी उलुगतीरे समुप्पण्णा॥१३३॥(भा०)

व्याख्या—अष्टाविंशत्यधिके द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य, अत्रान्तरे द्वैक्रियाणां दृष्टिः उलुकातीरे समुत्पन्नेति गाथार्थः॥ यथा समुत्पन्ना तथा निदर्शनायाह—

णइखेडजणव उलुग महगिरिधणगुत्त अज्जगंगे य। किरिया दो रायगिहे महातवो तीरमणिणाए॥१३४॥ (भा०)

व्याख्या—उलुका नाम नदी, तीए उवलक्खिओ जणवतोवि सो चेव भण्णइ, तीसे य नदीए तीरे एगंमि खेडठाणं, बीयंमि उलुगातीरं नगरं, अण्णे तं चेव खेडं भणंति, तत्थ महागिरीण सीसो धणगुत्तो नाम, तस्सवि सीसो गंगो नाम आयरिओ, सो तीसे नदीए पुव्विमे तडे, आयरिया से अवरिमे तडे, ततो सो सरयकाले आयरियं वंदओ उच्चलिओ, सो य खल्लाडो, तस्स उल्लुगं नदिं उत्तरंतस्स सा खल्ली उण्हेण डज्झइ, हिट्ठा य सीयलेण पाणिएण सीतं, ततो सो चिंतेइ—सुत्ते भणियं जहा एगा किरिया वेदिज्जइ—सीता उसिणा वा, अहं च दोकिरियाओ वेएमि, अतो दोऽवि किरियाओ एगसमएण वेदिज्जंति, ताहे आयरियाण साहइ, ताहे भणिओ—मा अज्जो! एवं पन्नवेहि, नत्थि एगसमएण दो किरियाओ

१ उल्लूकानाम्नी नदी, तयोपलक्षितो जनपदोऽपि स एव भण्यते, तस्याश्च नद्यास्तीरे एकस्मिन् खेटस्थानं, द्वितीये उल्लुकातीरं नगरम्, अन्ये तदेव खेटमिति भणन्ति, तत्र महागिरीणां शिष्यो धनगुप्तो नाम, तस्यापि शिष्यो गङ्गो नामाचार्यः, स तस्या नद्याः पौरस्त्ये तीरे, आचार्यास्तस्य पाश्चात्ये तटे, ततः स शरत्काले आचार्यं वन्दितुमुच्चलितः, स च खल्वाटः, तस्योल्लुकां नदीमुत्तरतः सा खलतिरुष्णेन दह्यते, अधस्ताच्च शीतलेन पानीयेन शीतं, ततः स चिन्तयति—सूत्रे भणितं यथा एका क्रिया वेद्यते—शीतोष्णा वा, अहं च द्वे क्रिये वेदयामि, अतो द्वे अपि क्रिये एकसमयेन वेद्येते, तदाऽऽचार्येभ्यः कथयति, तदा भणितः—मा आर्य! एवं प्रज्ञीपः, नास्ति ( एतत् यत् ) एकसमयेन द्वे क्रिये

वेदिज्जंति, जतो समओ मणो य सुहुमा ण लक्खिज्जंति उत्पलपत्रशतवेधवत्, एवं सो पण्णवितोऽवि जाहे न पडिवज्जइ ताहे उग्घाडितो, सो हिंडंतो रायगिहं गतो, महातवो तीरप्पभे नाम पासवणे, तत्थ मणिणागो नाम नागो, तस्स चेतिए ठाति, सो तत्थ परिसामज्झे कहेति—जहा एगसमएण दो किरियाओ वेदिज्जंति, ततो मणिनागेण भणियं तीसे परिसाए मज्झे—अरे दुट्ठसेहा! कीस एयं अपण्णवणं पण्णवेसि?, एत्थ चेव ठाणे ठिएण भगवता वद्धमाणसामिणा वागरियं—जहा एगं किरियं वेदेति, तुमं तेसिं किं लट्ठतरओ जाओ?, छड्डेहि एयं वादं, मा ते दोसेणासेहामि—'मणिनागेणारद्धो भयोववत्तिपडिबोहिओ वोत्तुं। इच्छामो गुरुमूलं गंतूण ततो पडिक्कंतो॥१॥त्ति गाथार्थः॥ गतः पञ्चमो निह्नवः, षष्ठमधुनोपदर्शयन्नाह—

पंचसया चोयाला तइया सिद्धिं गयस्स वीरस्स। पुरिमंतरंजियाए तेरासियदिट्ठी उववण्णा॥१३५॥(भा०)

व्याख्या—पञ्च वर्षशतानि चतुश्चत्वारिंशदधिकानि तदा सिद्धिं गतस्य वीर (ग्रंथाग्रं ८०००) स्य, अत्रान्तरे पुर्यन्तरञ्जिकायाम्, अनुस्वारोऽलाक्षणिकः, त्रैराशिकदृष्टिरुत्पन्नेति गाथार्थः॥ कथमुत्पन्नेति प्रदर्श्यते—तत्र

१ वेद्येते, यतः समयो मनश्च सूक्ष्मे न लक्ष्येते, एवं स प्रज्ञापितोऽपि यदा न प्रतिपद्यते तदोद्घाटितः, स हिण्डमानो राजगृहं गतः, महातपस्तीरप्रभं नाम प्रश्रवणं, तत्र मणिनागो नाम नागः, तस्य चैत्ये तिष्ठति, स तत्र पर्षन्मध्ये कथयति—यथा एकसमयेन द्वे क्रिये वेद्येते, ततो मणिनागेन भणितं तस्याः पर्षदो मध्ये—अरे दुष्टशैक्ष! कथमेतामप्रज्ञापनां प्रज्ञापयसि?, अत्रैव स्थाने स्थितेन भगवता वर्धमानस्वामिना व्याकृतं—यथैकां क्रियां वेदयति, त्वं तेभ्यः किं लष्टतरो जातः?, त्यजैनं वादं, मा त्वां ( ते ) दोषेण शिक्षयामि—मणिनागेनारब्धो भयोपपत्तिप्रतिबोधितो वक्तुं। इच्छामः ( इति ) गुरुमूलं गत्वा ततः प्रतिक्रान्तः॥१॥

पुरिमंतरंजि भूयगुह बलसिरि सिरिगुत्त रोहगुत्ते य। परिवायपोट्टसाले घोसणपडिसेहणा वाए॥१३६॥(भा०)

व्याख्या—सङ्ग्रहगाथा। अस्याश्च कथानकादर्थोऽवसेयः, तच्चेदम्—अंतरंजिया नाम पुरी, तत्थ भूयगुहं नाम चेतियं, तत्थ सिरिगुत्ता नाम आयरिया ठिता, तत्थ बलसिरी नाम राया, तेसिं सिरिगुत्ताणं थेराणं संड्ढियरो रोहउत्तो नाम सीसो, अण्णगामे ठितओ, ततो सो उवज्झायं वंदओ एति, एगो य परिवायओ पोट्टं लोहपट्टएण बंधिउं जंबुसालं गहाय हिंडइ, पुच्छितो भणइ—नाणेण पोट्टं फुट्टइ तो लोहपट्टेण बद्धं, जंबुडालं च जहा एत्थ जंबूदीवे णत्थि मम पडिवादित्ति, ततो तेण पडहतो णीणावितो—जहा सुण्णा परप्पवादा, तस्स लोगेण पोट्टसालो चेव नामं कतं, सो पडहतो रोहगुत्तेण वारिओ, अहं वादं देमित्ति, ततो सो पडिसेहित्ता गतो आयरियसगासं, आलोएइ—एवं मए पडहतो विणिवारिओ, आयरिया भणंति—दुट्ठु कयं, जतो सो विज्जाबलिओ, वादे पराजितोऽवि विज्जाहिं उवट्ठाइत्ति तस्स इमाओ सत्त विज्जाओ, तंजहा—

विच्छुय सप्पे मूसग मिई वराही य कायपोआई। एयाहिं विज्जाहिं सो उ परिव्वायओ कुसलो॥१३७॥(भा०)

१ अन्तरञ्जिका नाम पुरी, तत्र भूतगुहं नाम चैत्यं, तत्र श्रीगुप्ता नाम आचार्याः स्थिताः, तत्र बलश्रीर्नाम राजा, तेषां श्रीगुप्तानां स्थविराणां भतिश्राद्धो रोहगुप्तो नाम शिष्यः, अन्यग्रामे स्थितः, ततः स उपाध्यायं वन्दितुमायाति, एकश्च परिव्राट् लोहपट्टेनोदरं बद्ध्वा, जम्बूशालां गृहीत्वा हिण्डते, पृष्टो भणति—ज्ञानेनोदरं स्फुटति तत् लोहपट्टेन बद्धं, जम्बूशाखां च यथाऽत्र जम्बूद्वीपे नास्ति मम प्रतिवादीति, ततस्तेन पटहो निष्काशितो—यथा शून्याः परप्रवादाः, तस्य लोकेन पोट्टशाल एव नाम कृतं, स पटहो रोहगुप्तेन वारितः, अहं वादं ददामीति, ततः स प्रतिषिध्य गतः आचार्यसकाशम्, आलोचयति—एवं मया पटहो विनिवारितः, आचार्या भणन्ति—दुष्टु कृतं, यतः स विद्याबली, वादे पराजितोऽपि विद्याभिरुत्तिष्ठते, तस्येमाः सप्त विद्याः, तद्यथा—+ सर्द्धि एगो

व्याख्या—तत्र वृश्चिकेति वृश्चिकप्रधाना विद्या गृह्यते, सर्पेति सर्पप्रधाना, 'मूसग' त्ति मूषकप्रधाना, तथा मृगी नाम विद्या, मृगीरूपेणोपघातकारिणी, एवं वाराही च, 'कागपोत्ति' त्ति—काकविद्या, पोताकीविद्या च, पोताक्यः सकुनिका भण्यन्ते, एतासु विद्यासु, एताभिर्वा विद्याभिः स परिव्राजकः कुशल इति गाथार्थः ॥ सो भणइ—किं सक्का एत्ताहे निलुक्किउं ?, ततो सो आयरिएण भणिओ—पढियसिद्धाउ इमाउ सत्त पडिवक्खविज्जाओ गेण्ह, तंजहा—

मोरी नउलि बिराली वग्घी सीही उलूगि ओवाई । एयाओ विज्जाओ गेण्ह परिवायमहणीओ ॥ १३८ ॥ (भा०)

व्याख्या—मोरी नकुली बिराली व्याघ्री सिंही च उलूकी 'ओवाइ' त्ति ओलावयप्रधाना, एता विद्या गृहाण परिव्राजकमथिन्य इति गाथार्थः ॥ रयहरणं च से अभिमंतेउं दिण्णं, जइ अन्नंपि उट्ठेइ तो रयहरणं भमाडिज्जासि, तो अजेयो होहिसि, इंदेणावि सक्किहिसि नो जेतुं, ताहे ताओ विज्जाओ गहाय गओ सभं, भणियं चऽणेण—एस किं जाणति ?, एयस्स चेव पुव्वपक्खो होउ, परिव्वाओ चिंतेइ—एए निउणा तो एयाण चेव सिद्धंतं गेण्हामि, जहा—मम दो रासी, तंजहा- जीवा य अजीवा य, ताहे इयरेण चिंतियं—एतेण अम्ह चेव सिद्धंतो गहिओ, तेण तस्स बुद्धिं परिभूय तिन्नि

१ स भणति—किं शक्या अधुना निलातुम् ?, तत. स आचार्येण भणित —पठितसिद्धा इमा सप्त प्रतिपक्षविद्या गृहाण, तद्यथा— । रजोहरण च तस्मादभिमन्त्र्य दत्त, यद्यन्यदपि उत्तिष्ठते तदा रजोहरण भ्रामयेस्ततोऽजय्यो भविष्यसि, इन्द्रेणापि शक्ष्यसे नो जेतु, तदा ता विद्या गृहीत्वा गत सभां, भणित चानेन—एप किं जानाति ?, एतस्यैव पूर्वपक्षो भवतु, परिव्राट् चिन्तयति—एते निपुणास्तत एतेषामेव सिद्धान्त गृह्णामि, यथा मम द्वौ राशी, तद्यथा—जीवाश्च अजीवाश्च, तदा इतरेण चिन्तितम्—एतेनास्माकमेव सिद्धान्तो गृहीत , तेन तस्य बुद्धि परिभूय त्रयो

रासी ठविया—जीवा अजीवा नोजीवा, तत्थ जीवा संसारत्था, अजीवा घडादि, नोजीवा घिरोलियाछिन्नपुच्छाई, दिट्ठंतो दंडो, जहा दंडस्स आदिमज्झं अग्गं च, एवं सव्वे भावा तितिहा, एवं सो तेण निप्पट्ठपसिणवागरणो कओ, ताहे सो परिवायओ रुट्ठो विच्छुए मुयइ, ताहे सो तेसिं पडिवक्खे मोरे मुयइ, ताहे तेहिं हएहिं विंछिएहि पच्छा सप्पे मुयइ, इयरो तेसिं पडिघाए नउले मुयइ, ताहे उंदुरे तेसिं मज्जारे, मिए तेसिं वग्घे, ताहे सूयरे तेसिं सीहे, काके तेसिं उलुगे, ताहे पोयागीं मुयइ तेसिं ओलाइं, एवं जाहे न तरइ ताहे गद्दभी मुक्का, तेण य सा रयहरणेण आहया, सा परिवायगस्स उवरिं छेरित्ता गया, ताहे सो परिवायगो हीलिज्जंतो निच्छूढो, ततो सो परिवायगं पराजिणित्ता गओ आयरियसगासं, आलोएइ—जहा जिओ एवं आयरिया आह—कीस तए उट्ठिएण न भणियं ?—नत्थित्ति तिन्नि रासी, एयस्स मए बुद्धिं परिभूय पण्णविया, इयाणिंपि गंतुं भणाहि, सो नेच्छइ, मा मे ओहावणा होउत्ति, पुणो पुणो भणिओ भणइ—को वा एत्थ

१ राशय स्थापिता —जीवा अजीवा नोजीवा , तत्र जीवा ससारस्था , अजीवा घटादय , नोजीवा गृहकोकिलाछिन्नपुच्छादय , दृष्टान्तो दण्ड , यथा दण्डस्यादिर्मध्यमग्रं च, एव सर्वे भावास्त्रिविधा , एवं स तेन निष्पृष्टप्रश्नव्याकरण कृत , तदा स परिव्राट् रुष्टो वृश्चिकान् मुञ्चति, तदा स तेषां प्रतिपक्षान् मयूरान् मुञ्चति, तदा तैर्हतेषु वृश्चिकेषु पश्चात्सर्पान् मुञ्चति, इतरस्तेषा प्रतिघाताय नकुलान् मुञ्चति, तदोन्दुरान् तेषां मार्जारान्, मृगान् तेषां व्याघ्रान्, तदा शूकरान् तेषा सिंहान्, काकास्तेषामुलूकान्, तदा पोताक्यस्तासामोलवकान् , एव यदा न शक्नोति तदा गर्दभी मुक्ता, तेन च सा रजोहरणेनाहता, सा परिव्राज उपरि हदित्वा गता, तदा स परिव्राट् हील्यमानो निष्काशित , तत स परिव्राजक पराजित्य गत आचार्यसकाशम्, आलोचयति—यथा जित एवम्, आचार्या आहु —कथ तदोत्थितेन न भणित—न सन्ति राशयस्त्रय इति, एतस्य बुद्धि परिभूय मया प्रज्ञापिता , इदानीमपि गत्वा भण, स नेच्छति, मा मेऽपभ्राजना भूदिति, पुन पुनर्भणितो भणति—को वाऽत्र

दोसो ? जइ तिन्नि रासी भणिया, अत्थि चेव तिन्नि रासी, आयरिया आह—अज्जो ! असब्भावो तित्थगरस्स आसायणा य, तहावि न पडिवज्जइ, ततो सो आयरिएण समं वायं लग्गो, ताहे आयरिया राउलं गया भणंति—तेण मम सिस्सेण अवसिद्धंतो भणिओ, अम्हं दुवे चेव रासी, इयाणिं सो विप्पडिवन्नो, तो तुब्भे अम्हं वायं सुणेह, पडिस्सुयं राइणा, ततो तेसिं रायसभाए रायपुरओ आवडियं, जहेगदिवसं उट्ठाय २ छम्मासा गया, ताहे राया भणइ—मम रज्जं अवसीदति, ताहे आयरिएहिं भणियं—इच्छाए मए एच्चिरं कालं धरिओ, एत्ताहे पासह कल्लं दिवसं आगए निगिण्हामि, ताहे पभाए भणइ—कुत्तियावणे परिक्खिज्जउ, तत्थ सव्वदव्वाणि अत्थि, आणेह जीवे अजीवे नोजीवे य, ताहे देवयाए जीवा अजीवा य दिण्णा, नोजीवा नत्थि, एवमादिचोयालसएणं पुच्छाणं निग्गहिओ ॥ अमुमेवार्थमुपसंहरन्नाह—

सिरिगुत्तेणऽवि छलुगो छम्मासे कड्ढिऊण वाय जिओ । आहरणकुत्तियावण चोयालसएण पुच्छाणं ॥१३९॥ भा०

१ दोष ? यदि त्रयो राशयो भणिता , सन्त्येव त्रयो राशय , आचार्या आहु —आर्य ! असद्भावस्तीर्थकरस्याशातना च, तथापि न प्रतिपद्यते, तत स आचार्येण सम वाद ( कर्तुं ) लग्न , तदा आचार्या राजकुल गता भणन्ति—तेन मम शिष्येणापसिद्धान्तो भणित , अस्माक द्वौ एव राशी, इदानीं स विप्रतिपन्न:, तत् यूयम् अस्माकं वाद शृणुत, प्रतिश्रुत राज्ञा, ततस्तयो राजसभाया राज पुरत आपतित ( वाद ), यथैको दिवसस्तथोत्थाय २ षण्मासी गता, तदा राजा भणति—मम राज्य अवसीदति, तदाचार्यैर्भणितम्—इच्छया मयेयच्चिरं काल धृत ,अधुना पश्यत कल्ये दिवसे आगते निगृह्णामि,तदा प्रभाते भणति—कुत्रिकापणे परीक्ष्यता, तत्र सर्वद्रव्याणि सन्ति, आनय जीवान् अजीवान् नोजीवांश्च, तदा देवतया जीवा अजीवाश्च दत्ता, नोजीवा न सन्ति, एवमादिचतुश्चत्वारिंशेन शतेन पृच्छानां निगृहीत ।

व्याख्या—निगदसिद्धा, नवरं चोयालसयं–तेण रोहेण छम्मूलपयत्था गहिया, तंजहा—दव्वगुणकम्मसामन्नविसेसा छट्ठओ य समवाओ, तत्थ दव्वं नवहा, तंजहा–भूमी उदयं जलणो पवणो आगासं कालो दिसा अप्पओ मणो यत्ति, गुणा सत्तरस, तंजहा–रूवं रसो गंधो फासो संखा परिमाणं पुहुत्तं संजोगो विभागो परापरत्तं बुद्धी सुहं दुक्खं इच्छा दोसो पयत्तो य, कम्मं पंचधा–उक्खेवणं अवक्खेवणं आउंचणं पसारणं गमणं च, सामण्णं तिविहं–महासामण्णं १ सत्तासामण्णं त्रिपदार्थसद्बुद्धिकारि २ सामण्णविसेसो द्रव्यत्वादि ३, अन्ये त्वेवं व्याख्यानयन्ति—त्रिपदार्थसत्करी सत्ता, मामण्णं द्रव्यत्वादि, सामन्नविसेसो पृथिवीत्वादि, विसेसा अंता ( अणंता य ), इहपच्चयहेऊ य समवाओ, एए छत्तीसं भेया, एत्थ एक्केक्के चत्तारि भंगा भवंति, तंजहा–भूमी अभूमी नोभूमी नोअभूमी, एवं सव्वत्थ, तत्थ कुत्तियावणे भूमी मग्गिया लेट्ठुओ लद्धो, अभूमीए पाणियं, नोभूमीए जलाद्येव तु नो राश्यन्तरं, नोअभूमीए लेट्ठुए चेव एवं सव्वत्थ ॥ आह च भाष्यकारः–*जीवमजीवं दाउं णोजीवं जाइओ पुणो अजीवं देइ चरिमंमि जीवं न उ णोजीवं सजीवदलं

१ चतुश्चत्वारिंशं शत–तेन रोहगुप्तेन षट् मूलपदार्थां गृहीता', तद्यथा–द्रव्यगुणकर्मसामान्यविशेषा पञ्चम समवाय , तत्र द्रव्य नवधा, तद्यथा–भूमि रुदक ज्वलन पवन आकाश कालो दिक् आत्मा मनश्चेति, गुणा सप्तदश, तद्यथा–रूप रसो गन्ध स्पर्शः सख्या परिमाण पृथक्त्वं सयोगो विभाग परत्वमपरत्व बुद्धि सुख दु खमिच्छा द्वेष प्रयत्नश्च, कर्म पञ्चधा–उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारण गमन च, सामान्य त्रिविध–महासामान्य सत्तासामान्य सामान्यविशेष , सामान्य सामान्यविशेष विशेषा अन्त्या ( अनन्त्याश्च ), इहप्रत्ययहेतुश्च समवायः, एते षट्त्रिंशत् भेदा , अत्रैकैकस्मिन् चत्वारो भङ्गा भवन्ति, तद्यथा–भूमिरभूमिर्नोभूमिर्नोअभूमि , एव सर्वत्र, तत्र कुत्रिकापणे भूमिर्मार्गिता लेष्टुर्दत्त , अभूमे. ( मार्गणे ) पानीय, नोभूमेर्जलाद्येव, नोअभूमेर्लेष्टुरेव, एव सर्वत्र । जीवमजीव दत्वा नोजीव याचित पुनरजीवम् । ददाति चरमे जीव नतु नो जीव सजीवदळम् ॥ १ ॥ * भाष्यगता दश गाथा अत्र

ततो निग्गहिओ छलूगो, गुरुणा से खेलमल्लो मत्थए भग्गो, ततो निद्धाडिओ, गुरूवि पूतिओ णगरे य गोसणयं कयं—वद्धमाणसामी जयइत्ति ॥ अमुमेवार्थमुपसहरन्नाह—

वाए पराजिओ सो निव्विसओ कारिओ नरिंदेणं। घोसावियं च णगरे जयइ जिणो वद्धमाणोत्ति॥१४०॥(भा०)

निगदसिद्धा, तेणोवि सरक्खरडिएणं चेव वइसेसियं पणीयं, तं च अण्णमण्णेहिं ख्याइं णीयं, तं चोलूयपणीयन्ति वुच्चइ, जओ सो गोत्तेणोलूओ आसि ॥ गतः षष्ठो निह्नवः, साम्प्रतं सप्तमं प्रतिपादयितुमाह—

पंचसया चुलसीया तइया सिद्धिं गयस्स वीरस्स। अबद्धियाण दिट्ठी दसपुरनयरे समुप्पण्णा ॥ १४१ ॥( भा० )

व्याख्या—पञ्च वर्षशतानि चतुरशीत्यधिकानि तदा सिद्धिं गतस्य वीरस्य, ततोऽबद्धिकदृष्टिः दशपुरनगरे समुत्पन्नेति गाथार्थः ॥ कथमुत्पन्ना ?, तत्रार्यरक्षितवक्तव्यतायां कथानकं प्रायः कथितमेव, यावद् गोष्ठामाहिलः प्रत्युच्चारके कर्मबन्धचिन्तायां कर्मोदयादभिनिविष्टो विप्रतिपन्न इति । तथा च कथानकानुसन्धानाय प्रागुक्तानुवादपरां सङ्ग्रहगाथामाह—

दसपुरे नगरुच्छुघरे अज्जरक्खियपूसमित्ततियगं च । गोट्ठामाहिल नवमट्ठमेसु पुच्छा य विंझस्स ॥१४२॥ (भा०)

इयमर्थतः प्राग्व्याख्यातैवेति न विव्रियते, प्रकृतसम्बन्धस्तु–विंझो[3] अट्ठमे कम्मप्पवायपुव्वे कम्मं परूवेति, जहा

१ ततो निगृहीत षडुलूक ; गुरुणा तस्य मस्तके श्लेष्मकुण्डिका भग्ना, ततो निर्धाटित , गुरुरपि पूजितो, नगरे च घोषणं कृत–वर्धमानस्वामी जयतीति। २ तेनापि स्वभस्मखरण्टितेनैव वैशेषिक प्रणीत, तच्चान्यान्यै ख्याति नीत, तच्चोलूकप्रणीतमित्युच्यते, यत. स गोत्रेणोलूक आसीत् । ३ विन्ध्योऽष्टमे कर्मप्रवादपूर्वे कर्म प्ररूपयति, यथा

किंचि कम्मं जीवपदेसेहिं बद्धमेत्तं कालन्तरट्ठितिमपप्प विहडइ शुष्ककुड्यापतितचूर्णमुष्टिवत्, किंचिपुण बद्धं पुट्ठं च कालंतरेण विहडइ, आर्द्रलेपकुड्ये सस्नेहचूर्णवत्, किंचि पुण बद्धं पुट्ठं निकाइयं जीवेण सह एगत्तमावन्नं कालान्तरेण वेइज्जइत्ति ॥ एवं श्रुत्वा गोष्ठामाहिल आह–नन्वेवं मोक्षाभावः प्रसज्यते, कथम् ?, जीवात् कर्म न वियुज्यते, अन्योऽन्याविभागबद्धत्वात्, स्वप्रदेशवत्, तस्मादेवमिष्यतां—

पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समन्नेइ । एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ १४३ ॥ ( मू० भाष्यम् )

व्याख्या—स्पृष्टो यथाऽबद्धः कञ्चुकिनं पुरुषं कञ्चुकः 'समन्वेति' समनुगच्छति, एवं स्पृष्टमबद्धं कर्म जीवं समन्वेति, प्रयोगश्च–जीवः कर्मणा स्पृष्टो न च बध्यते, वियुज्यमानत्वात् , कञ्चुकेनेव तद्वानिति गाथार्थः । एवं गोट्ठामाहिलेण भणिते विंझेण भणियं–अम्हं एवं चेव गुरुणा वक्खाणियं, गोट्ठामाहिलेण भणियं–सो य ण याणति, किं वक्खाणेइ ?, ताहे सो संकिओ समाणो गओ पुच्छिउं, मा मए अन्नहा गहियं हवेज्ज, ताहे पुच्छिओ सो भणइ–जहा मए भणियं तहा तुमएवि अवगयं, तहेवेदं, ततो विंझेण माहिलवुत्ततो कहिओ, ततो गुरुर्भणति–माहिलभणिती मिच्छा, कहं ? यदुक्तम्–जीवात्

१ किञ्चित्कर्म जीवप्रदेशैर्बद्धमात्र कालान्तरस्थितिमप्राप्य पृथग्भवति किञ्चित्पुनर्बद्धस्पृष्ट ( स्पृष्टबद्ध ) च कालान्तरेण पृथग्भवति, किञ्चित्पुनर्बद्धस्पृष्ट ( स्पृष्टबद्ध ) निकाचित जीवेन सहैकत्वमापन्न कालान्तरेण वेद्यत इति । २ एव गोष्ठमाहिलेन भणिते विन्ध्येन भणितम्–अस्माकमेवमेव गुरुणा व्याख्यात, गोष्ठमाहिलेन भणित–स च न जानाति, किं व्याख्यानयति ?, तदा स शङ्कित. सन् गत प्रष्टु, मा मयाऽन्यथा गृहीत भूद्, तदा पृष्ट स भणति—यथा मय भणित तथा त्वयापि अवगत, तथैवेद, ततो विन्ध्येन माहिलवृत्तान्त. कथित , ततो गुरुर्भणति–माहिलभणितिर्मिथ्या, कथम् ?

कर्म न वियुज्यत इत्यादि, अत्र प्रत्यक्षविरोधिनी प्रतिज्ञा, यस्मादायुष्ककर्मवियोगात्मकं मरणमध्यक्षसिद्धमिति, हेतुरप्यनैकान्तिकः, अन्योऽन्याविभागसम्बद्धानामपि क्षीरोदकादीनामुपायतो वियोगदर्शनात्, दृष्टान्तोऽपि न साधनधर्मानुगतः, स्वप्रदेशस्य युक्तत्वासिद्धेः, ताद्रूप्येणानादिरूपत्वाद्भिन्नं च जीवात् कर्मेति, तथा यच्चोक्तम्–'जीवः कर्मणा स्पृष्टो न बध्यत इत्यादि' अत्रापि किं प्रतिप्रदेशं स्पृष्टो नभसेव उत त्वङ्मात्रे कंचुकेनेव, यदि प्रतिप्रदेशं दृष्टान्तदार्ष्टान्तिकयोरसाम्यं, कंचुकेन प्रतिप्रदेशमस्पृष्टत्वात्, अथ त्वग्मात्रे स्पृष्ट इति, ततो नापान्तरालगत्यनुयायि कर्म, पर्यन्तमात्रवर्त्तित्वाद्, बाह्याङ्गमलवत्, एवं च सर्वो जीवो मोक्षभाक्, कर्मानुगमरहितत्वात्, मुक्तवत्, तथाऽन्तर्वेदनाऽभावप्रसङ्गः, तन्निमित्तकर्माभावात्, सिद्धस्येव, न च भिन्नदेशस्यापि वेदनाहेतुत्वं युज्यते, शरीरान्तरगतेनातिप्रसङ्गात्, न च स्वकृतत्वं निबन्धनम्, अत्रान्तर्वर्तिप्रदेशानां कर्मयोगरहितानां कर्तृत्वानुपपत्तेः, तस्माद् यत् किञ्चिदेतदिति। [1]एवं गेण्हिऊण सो विंझेण भणितो– एवं आयरिया भणंति, ततो सो तुण्हिक्को ठिओ चिंतेइ–समप्पउ तो खोडेहामि, अन्नया नवमे पुव्वे साहूण पच्चक्खाणं वण्णिज्जइ, जहा–पाणाइवायं पच्चक्खामि जावज्जीवाए इत्यादि, गोष्ठामाहिलो भणति–नैवं सोहणं, किं तर्हि ?

**पच्चक्खाणं सेयं अपरिमाणेण होइ कायव्वं। जेसिं तु परीमाणं तं दुट्ठं आससा होइ ॥ १४४ ॥ (मू० भा०)**

व्याख्या—प्रत्याख्यानं श्रेयः, 'अपरिमाणेन' कालावधिं विहाय कर्तव्यं, एवं क्रियमाणं श्रेयो भवति, येषां तु परिमाणं

1 एव गृहीत्वा स विन्ध्येन भणित –एवमाचार्या भणन्ति, तत स तूष्णीक स्थितश्चिन्तयति–समाप्यता तत स्खलयिष्यामि, अन्यदा नवमे पूर्वे साधूनां प्रत्याख्यान वर्ण्यते, यथा प्राणातिपात प्रत्याख्यामि यावज्जीव, नैव शोभनम्।

प्रत्याख्याने तत् प्रत्याख्यानं 'दुष्टम्' अशोभनं, किमिति ?, यतस्तत्र 'आससा होइ' त्ति अनुस्वारलोपादाशंसा भवति. प्रयोगश्च–यावज्जीवकृतावधिप्रत्याख्यानमाशंसादोषदुष्टं, परिमाणपरिच्छिन्नावधित्वात्, श्वः सूर्योदयात् परतः पारयिष्यामीत्युपवासप्रत्याख्यानवत्, तस्मादपरिमाणमेव प्रत्याख्यानं श्रेयः, आशंसारहितत्वात्, तीरितादिविशुद्धोपवासादिवदिति गाथार्थः॥ [1]एवं पन्नवेंतो विंझेण भणिओ–न होति एयं एवं जं तुमे भणियं, सुण, एत्थंतरंमि य जं तस्स अवसेसं नवमपुव्वस्स तं समत्तं, ततो सो अभिनिवेसेण पूसमित्तसयासं चेव गंतूण भणइ–अण्णहा आयरिएहिं भणियं अन्नहा तुमं पण्णवेसि॥ उपन्यस्तश्चानेन तत्पुरतः स्वपक्षः, तत्राऽऽचार्य आह–ननु यदुक्तं भवता–'यावज्जीवं कृतावधिप्रत्याख्यानमाशंसादोषदुष्टमित्यादि' एतदयुक्तं, यतः कृतप्रत्याख्यानानां साधूनां नाशंसा–मृताः सेविष्याम इति, किन्तु मृताना देवभवे मा भूद् व्रतभङ्ग इति कालावधिकरणम्, अपरिमाणपक्षे तु भूयांसो दोषाः, कथम् ?, अपरिमाणमिति कोऽर्थः ?, किं यावच्छक्तिः उत अनागताद्धा आहोश्विदपरिच्छेदः ?, यदि यावच्छक्तिरस्ति, एवं सति शक्तिमितकालावध्युपगमादस्मन्मतानुवाद एव, आशंसादोषोऽपि काल्पनिकस्तुल्यः, अनागताद्धापक्षेऽपि भवान्तरेऽवश्यंभावी व्रतभङ्गः, अपरिच्छेदपक्षेऽपि कालानियमात् व्रतभङ्गादयो दोषा इति। [2]एवं आयरिएहिं भणिए न पडिवज्जइ, ततो जेऽवि

1 एव प्रज्ञापयन् विन्ध्येन भणित –न भवत्येतत् एव यत्त्वया भणित, श्रृणु, अत्रान्तरे च यत्तस्यावशिष्ट नवमपूर्वस्य तत्समाप्त, तत सोऽभिनिवेशेन पुष्पमित्रसकाशमेव गत्वा भणति–अन्यथाऽऽचार्यैर्भणितमन्यथा त्व प्रज्ञापयसि 2 एवमाचार्यैर्भणिते न प्रतिपद्यते, ततो येऽपि

[1]अण्णगच्छेल्लया थेरा बहुस्सुया ते पुच्छिया भणंति–एत्तियं चेव, ततो सो भणति–तुब्भे किं जाणह ?, तित्थगरेहिं एत्तियं भणियं जहाऽहं भणामि, ते भणंति–तुमं न याणसि, मा तित्थगरे आसाएहि, जाहे न ठाइ ताहे संघसमवाओ कओ, ततो सव्वसंघेण देवयाए काउस्सग्गो कओ जा भद्दिया सा आगया भणति–संदिसहत्ति, ताहे सा भणिया–वच्च तित्थगरं पुच्छ –किं जं गोट्ठामाहिलो भणति तं सच्चं किं जं दुब्बलियापूसमित्तप्पमुहो संघोत्ति, ताहे सा भणइ–मम अणुग्गहं देह काउस्सग्गं गमणापडिघायनिमित्तं, तओ ठिया काउस्सग्गं, ताहे सा भगवंतं पुच्छिऊण आगया भणति–जहा संघो सम्मावादी, इयरो मिच्छावादी, निह्नओ एस सत्तमओ, ताहे सो भणति–एसा अप्पिड्ढिया वराई, का एयाए सत्ती गंतूणं ?, तोवि न सद्दहइ, ताहे संघेण वज्झो कओ, ततो सो अणालोइयपडिक्कंतो कालगतो॥ गतः सप्तमो निह्नवः, भणिताश्च देशविसंवादिनो निह्नवाः, साम्प्रतमनेनैव प्रस्तावेन प्रभूतविसंवादिनो बोटिका भण्यन्ते, तत्र कदैते सञ्जाता इति प्रतिपादयन्नाह–

**छव्वाससयाइं नवुत्तराइं तइया सिद्धिं गयस्स वीरस्स। तो बोडियाण दिट्ठी रहवीरपुरे समुप्पण्णा ॥१४५॥ (भा०)**

1 अन्यगच्छीया स्थविरा बहुश्रुतास्ते पृष्टा भणन्ति–एतावदेव, तत स भणति–यूय किं जानीथ, तीर्थकरैरेतावद्भणित यथाऽहं भणामि, ते भणन्ति–त्व न जानासि, मा तीर्थकरान् आशातय, यदा न तिष्ठति तदा सङ्घसमवाय. कृत, तत सर्वसङ्घेन देवताया कायोत्सर्गे कृतो, या भद्रिका सा आगता भणति–सदिशतेति, तदा सा भणिता–व्रज तीर्थकर पृच्छ–किं यत् गोष्ठमाहिलो भणति तत्सत्य किं यद्दुर्बलिकापुष्पमित्रप्रमुख सङ्घ इति ?, तदा सा भणति–ममानुग्रह दत्त कायोत्सर्ग गमनाप्रतिघातनिमित्त, तत स्थिता कायोत्सर्गे, तदा सा भगवन्त पृष्ट्वा आगता भणति—यथा सङ्घ सम्यग्वादी, इतरो मिथ्यावादी, निह्नव एष सप्तमक, तदा स भणति–एषाऽल्पर्द्धिका वराकी कैतस्या शक्तिर्गन्तु, ततोऽपि न श्रद्दधाति, तदा सङ्घेन बाह्य कृत, तत सोऽनालोचितप्रतिक्रान्त. कालगत

निगदसिद्धैव, तत्र यथा बोटिकानां दृष्टिरुत्पन्ना तथा संग्रहगाथयोपदर्शयन्नाह—

रहवीरपुरं नयरं दीवगमुज्जाण अज्जकण्हे य। सिवभूइस्सुवहिंमि य पुच्छा थेराण कहणा य ॥१४६॥ (मू० भा०)

व्याख्या—[1]रहवीरपुरं नगरं, तत्थ दीवगमुज्जाणं, तत्थ अज्जकण्हा णामायरिया समोसढा, तत्थ य एगो सहस्समल्लो सिवभूती नाम, तस्स भज्जा, सा तस्स मायं वड्डेइ—तुज्झ पुत्तो दिवसे २ अड्डरत्ते एइ, अहं जग्गामि छुहातिया अच्छामि, ताहे ताए भण्णति—मा दारं देज्जाहि, अहं अज्ज जग्गामि, सा पसुत्ता, इयरा जग्गइ, अड्डरत्ते आगओ बारं मग्गइ, मायाए अंबाडिओ—जत्थ एयाए वेलाए उग्घाडियाणि दाराणि तत्थ वच्च, सो निग्गओ, मग्गतेण साहुपडिस्सओ उग्घाडिओ दिट्ठो, वंदित्ता भणति—पव्वावेह मं, ते नेच्छंति, सयं लोओ कओ, ताहे से लिंगं दिण्णं, ते विहरिया। पुणो आगयाणं रण्णा कंबलरयणं से दिण्णं, आयरिएण किं एएण जतीणं ?, किं गहियंति भणिऊण तस्स अणापुच्छाए फालियं निसिज्जाओ य कयाओ, ततो कसाईओ। अन्नया जिणकप्पिया वण्णिज्जंति, जहा—'जिणकप्पिया य दुविहा पाणीपाया

1 रथवीरपुर नगरं, तत्र दीपकाख्यमुद्यान, तत्र आर्यकृष्णा नामाचार्या. समवसृता, तत्र चैक सहस्रमल्ल शिवभूतिर्नाम, तस्य भार्या, सा तस्य मातर कलहयति—तव पुत्रो दिवसे दिवसेऽर्धरात्रे आयाति, अह जागर्मि क्षुधार्दिता तिष्ठामि, तदा तया भण्यते—मा द्वार पिधा, अहमद्य जागर्मि, सा प्रसुप्ता, इतरा जागर्ति, अर्धरात्रे आगतो द्वार मार्गयति, मात्रा निर्भर्त्सितः—यत्रैतस्यां वेलायामुद्घाटितानि द्वाराणि तत्र व्रज, स निर्गत, मार्गयता साधुप्रतिश्रय उद्घाटितो दृष्ट, वन्दित्वा भणति—प्रव्राजयत मां, ते नेच्छन्ति, स्वय लोच कृत, तदा तस्मै लिङ्ग दत्त, ते विहृता। पुनरागतेषु राज्ञा कम्बलरत्न तस्मै दत्तम्, आचार्येण किमेतेन यतीनाम् ? किं गृहीतमिति भणित्वा तमनापृच्छ्य स्फाटित निषद्याश्च कृता, तत कषायित। अन्यदा जिनकल्पिका वर्ण्यन्ते, यथा—जिनकल्पिकाश्च द्विविधा पाणिपात्रा

पडिग्गहधरा य। पाउरणमपाउरणा एक्केक्का ते भवे दुविहा ॥ १ ॥ दुगतिगचउक्कपणगं नवदसएक्कारसेव बारसगं। एए अट्ठ विकप्पा जिणकप्पे होंति उवहिस्स ॥२॥ केसिंचि दुविहो उवही रयहरणं पोत्तिया य, अन्नेसिं तिविहो—दो ते चेव कप्पो वड्ढिओ, चउविहे दो कप्पा, पंचविहे तिण्णि, नवविहे रयहरणमुहपत्तियाओ, तहा—'पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया। पडलाइं रयत्ताणं च गोच्छओ पायणिज्जोगो ॥ १ ॥' दसविहे कप्पो वड्ढितो, एगारसविहे दो, बारसविहे तिन्नि। एत्थंतरे सिवभूइणा पुच्छिओ—किमियाणिं एत्तिओ उवही धरिज्जति ?, जेण जिणकप्पो न कीरइ, गुरुणा भणियं—ण तीरइ, सो इयाणि वोच्छिन्नो, ततो सो भणति—किं वोच्छिज्जति ?, अहं करेमि, सो चेव परलोगत्थिणा कायव्वो, किं उवहिपडिग्गहेण ?, परिग्गहसब्भावे कसायमुच्छाभयाइया बहुदोसा, अपरिग्गहत्तं च सुए भणियं, अचेला य जिणिंदा, अतो अचेलया सुंदरत्ति, गुरुणा भणिओ—देहसब्भावेऽवि कसायमुच्छाइया कस्सवि हवंति, तो देहोऽवि परिच्चइयव्वोत्ति,

1 पतद्ग्रहधराश्च। सप्रावरणा अप्रावरणा एकैकास्ते भवेयुर्द्विविधाः ॥ १ ॥ द्विक त्रिक चतुष्क पञ्चको नवको दशक एकादशक एव द्वादशक। एत ८ विकल्पा जिनकल्पे भवन्त्युपधे ॥ २ ॥ केषाञ्चिद्द्विविध उपधि रजोहरण मुखवस्त्रिका च, अन्येषा त्रिविध—द्वौ तावेव कल्पो वर्धित, चतुर्विधे द्वौ कल्पौ, पञ्चविधे त्रय, नवविधे रजोहरणमुखवस्त्रिके, तथा—पात्र पात्रबन्ध पात्रस्थापन च पात्रकेशरिका। पटला रजस्त्राण च गोच्छक पात्रनिर्योग ॥ १ ॥ दशविध कल्पो वर्धित, एकादशविधे द्वौ, द्वादशविधे त्रय। अत्रान्तरे शिवभूतिना पृष्ट—किमिदानीमेतावानुपधिर्धियते, येन जिनकल्पो न क्रियते, गुरुणा भणित—न शक्यते, स इदानीं व्युच्छिन्न, तत स भणति—किं व्युच्छिद्यते ?, अह करोमि, स एव परलोकार्थिना कर्तव्य, किमुपधिपरिग्रहेण ?, परिग्रहसद्भावे कषायमूर्च्छाभयादिका बहवो दोषा, अपरिग्रहत्व च श्रुते भणितम्, अचेलाश्च जिनेन्द्रा, अतोऽचेलता सुन्दरेति, गुरुणा भणित—देहसद्भावेऽपि कषायमूर्च्छादय कस्यचित् भवन्ति, ततो देहोऽपि परित्यक्तव्य इति,

[1]अपरिग्गहत्तं च सुते भणियं, धम्मोपकरणेवि मुच्छा न कायव्वत्ति, जिणावि णेगंतेण अचेला, जओ भणियं—'सव्वेवि एगदूसेण निग्गया जिणवरा इत्यादि' एवं थेरेहिं कहणा से कतत्ति गाथार्थः ॥ एवपि पण्णविओ कम्मोदएण चीवराणि छड्डेत्ता गओ, तस्सुत्तरा भइणी, उज्जाणे ठियस्स वंदिया गया, तं दट्ठूण तीएवि चीवराणि छड्डियाणि, ताहे भिक्खस्स पविट्ठा, गणियाए दिट्ठा, मा अम्ह लोगो विरज्जिहित्ति उरे से पोत्ती बद्धा, ताहे सा नेच्छइ, तेण भणियं—अच्छउ एसा तव देवयाए दिण्णा, तेण य दो सीसा पव्वाविया—कोडिन्नो कोट्टवीरे य, ततो सीसाण परंपराफासो जाओ, एवं बोडिया उप्पण्णा ॥ अमुमेवार्थमुपसंजिहीर्षुराह मूलभाष्यकारः—

ऊहाए पण्णत्तं बोडियसिवभूइउत्तराहि इमं। मिच्छादंसणमिणमो रहवीरपुरे समुप्पण्णं ॥ १४७ ॥
बोडियसिवभूईओ बोडियलिंगस्स होइ उप्पत्ती। कोडिण्णकोट्टवीरा परंपराफासमुप्पण्णा ॥१४८॥ (मू० भा०)

व्याख्या—'ऊहया' स्वतर्कबुद्ध्या 'प्रज्ञप्तं' प्रणीतं बोटिकशिवभूत्युत्तराभ्यामिदं मिथ्यादर्शनम्, 'इणमो'त्ति एतच्च क्षेत्रतो रथवीरपुरे समुत्पन्नमिति गाथार्थः ॥ बोटिकशिवभूतेः सकाशात् बोटिकलिङ्गस्य भवत्युत्पत्तिः, वर्तमाननिर्देशप्रयोजनं पूर्ववत्, पाठान्तरं वा 'बोडियलिगस्स आसि उप्पत्ती' ततः कौडिन्यः कुट्टवीरश्च, 'सर्वो द्वन्द्वो विभाषया एकवद्भव-

1 अपरिग्रहत्व च सूत्रे भणित, धर्मोपकरणेऽपि मूर्च्छा न कर्तव्येति, जिना अपि नैकान्तेनाचेला, यतो भणित—'सर्वेऽपि एकदूष्येण निर्गता जिना श्चतुर्विंशति, एव स्थविरै कथना तस्मै कृतेति। एवमपि प्रज्ञापित. कर्मोदयेन चीवराणि त्यक्त्वा गत, तस्योत्तरा भगिनी, उद्यानस्थिताय वन्दितु गता, त दृष्ट्वा तयाऽपि चीवराणि त्यक्तानि, तदा भिक्षायै प्रविष्टा, गणिकया दृष्टा, माऽस्मासु लोको विरङ्क्षीदिति उरसि तस्या वस्त्र बद्ध, तदा सा नेच्छति, तेन भणित—तिष्ठत्वेतत् तुभ्य देवतया दत्त, तेन च द्वौ शिष्यौ प्रव्राजितौ—कौण्डिन्य कोट्टवीरश्च, तत. शिष्याणां परम्परास्पर्शो जात, एव बोटिका उत्पन्ना।

ती' ति कौण्डिन्यकोट्टवीरं तस्मात्, परम्परास्पर्शम्–आचार्यशिष्यसम्बन्धलक्षणमधिकृत्योत्पन्ना–सञ्जाता, बोटिकदृष्टिरध्याहरणीयेति गाथार्थः ॥ साम्प्रतं निह्नववक्तव्यतां निगमयन्नाह—

**एवं एए कहिया ओसप्पिणीए उ निण्हया सत्त । वीरवरस्स पवयणे सेसाणं पव्वयणे णत्थि ॥ ७८४ ॥**

व्याख्या—'एवम्' उक्तेन प्रकारेण 'एते' अनन्तरोक्ताः 'कथिताः' प्रतिपादिताः, अवसर्पिण्यामेव निह्नवाः सप्त अमी वीरवरस्य 'प्रवचने' तीर्थे, 'शेषाणाम्' अर्हतां प्रवचने 'नत्थि'त्ति न सन्ति, यद्वा नास्ति निह्नवसत्तेति गाथार्थः ॥

**मोत्तुणमेसिमिक्कं सेसाणं जावजीविया दिट्ठी । एक्केक्कस्स य एत्तो दो दो दोसा मुणेयव्वा ॥ ७८५ ॥**

व्याख्या—मुक्त्वैषामेकं गोष्ठामाहिलं निह्नवाधमं 'शेषाणां' जमालिप्रभृतीनां प्रत्याख्यानमङ्गीकृत्य यावज्जीविका दृष्टिः, नापरिमाणं प्रत्याख्यानमिच्छन्तीति भावना, आह–प्रकरणादेवेदमवसीयते किमर्थमस्योपन्यास इति ?, उच्यते, प्रत्यहमुपयोगेन प्रत्याख्यानस्योपयोगित्वान्मा भूत् कश्चित् तथैव प्रतिपद्येत(तेति), अतो ज्ञाप्यते–निह्नवानामपि प्रत्याख्याने इयमेव दृष्टिः, एकैकस्य च 'एत्तो' त्ति अतोऽमीषां मध्ये द्वौ द्वौ दोषौ विज्ञातव्यौ, मुक्त्वैकमिति वर्तते, भावार्थं तु वक्ष्यामः. परस्परतो यथाऽऽहुर्बहुरता जीवप्रदेशिकान्–भवन्तः कारणद्वयान्मिथ्यादृष्टयः, यद्भणथ–एकप्रदेशो जीवः, तथा क्रियमाणं च कृतमित्येवं सर्वत्र योज्यं, गोष्ठामाहिलमधिकृत्यैकैकस्य त्रयो दोषा इति यथाहुर्बहुरतान् गोष्ठामाहिलाः–दोषत्रयाद् भवन्तो मिथ्यादृष्टयः यत् कृतं कृतमिति भणतः तथा बद्धं कर्म वेद्यते यावज्जीवं च प्रत्याख्यानमिति गाथार्थः ॥ तदेता दृष्टयः किं संसाराय आहोस्विदपवर्गायेत्याशङ्कानिवृत्त्यर्थमाह—

**सत्तेया दिट्ठीओ जाइजरामरणगब्भवसहीणं । मूलं संसारस्स उ भवंति निग्गंथरूवेणं ॥ ७८६ ॥**

व्याख्या—सप्तैता दृष्टयः, बोटिकास्तु मिथ्यादृष्टय एवेति न तद्विचारः, 'जातिजरामरणगर्भवसतीना'मिति, जातिग्रहणान्नारकादिप्रसूतिग्रह इत्यतो गर्भवसतिग्रहणमदुष्टं 'मूलं' कारणं, भवन्तीति योगः, मा भूत् सकृद्भाविनीनां जातिजरामरणगर्भवसतीनां मूलमिति प्रत्ययः अत आह—'संसारस्स उ' संसरणं संसारः–तिर्यग्नरनारकामरभवानुभूतिरूपः प्रदीर्घो गृह्यते, तस्यैव तुशब्दस्यावधारणार्थत्वात्, निर्ग्रन्थरूपेणेति गाथार्थः ॥ आह–एते निह्नवाः किं साधवः ? उत तीर्थान्तरीयाः ? उत गृहस्था इति ?, उच्यते, न साधवः, यस्मात् साधूनामेकस्याप्यर्थाय कृतमशनादि शेषाणामकल्प्यं, नैवं निह्नवानामिति, आह च—

**पवयणनीहूयाणं जं तेसिं कारियं जहिं जत्थ । भज्जं परिहरणाए मूले तह उत्तरगुणे य ॥ ७८७ ॥**

व्याख्या—'पवयणनीहूयाणं'ति निहूयंति देशीवचनमकिञ्चित्करार्थे, ततश्च प्रवचनं–यथोक्तं क्रियाकलापं प्रत्यकिञ्चित्कराणा 'यद्' अशनादि तेषां कारितं यस्मिन् काले यत्र क्षेत्रे तद् 'भाज्यं' विकल्पनीयं परिहरणया, कदाचित परिह्रियते कदाचिन्नेति, यदि लोको न जानाति यथैते निह्नवाः साधुभ्यो भिन्नास्तदा परिह्रियते, अथ च जानाति तदा न परिह्रियत इति, अथवा परिहरणा–परिभोगोऽभिधीयते, यत उक्तम्—"धारणा उवभोगो परिहरणा तस्स परिभोगो" तत्र भाज्यं 'मूले' मुलगुणविषयमाधाकर्मादि तथा उत्तरगुणविषयं च क्रीतकृतादीत्यतो नैते साधवः, नापि गृहस्था गृहीतल्लिङ्गत्वात्, नापि तीर्थान्तरीयाः, नान्यतीर्थ्याः, यतस्तदर्थाय यत् कृतं तत् कल्प्यमेव भवति, अतोऽव्यक्ता एत इति गाथार्थः ॥ आह–बोटिकानां यत् कारितं तत्र का वार्ता ?, उच्यते—

**मिच्छादिट्ठीयाणं जं तेसिं कारियं जहिं जत्थ । सव्वंपि तयं सुद्धं मूले तह उत्तरगुणे य ॥ ७८८ ॥ दारं ॥**

व्याख्या—'मिथ्यादृष्टीनां' बोटिकानां 'यद्' अशनादि तेषां कारितं यस्मिन् काले यत्र क्षेत्रे सर्वमपि तत् शुद्धं–कल्प्यमिति भावना, मूलगुणविषयं तथोत्तरगुणविषयं चेति गाथार्थः ॥ उक्तं समवतारद्वारम्, अधुनाऽनुमतद्वारं व्याख्यायते–तत्र यद्यस्य नयस्य सामायिकं मोक्षमार्गत्वेनानुमतं तदुपदर्शयन्नाह—

**तवसंजमो अणुमओ निग्गंथं पवयणं च ववहारो । सद्दुज्जुसुयाणं पुण निव्वाणं संजमो चेव ॥ ७८९ ॥ दारं ॥**

व्याख्या—तापयतीति तपः तपःप्रधानः संयमस्तपःसंयमः असौ 'अनुमतः' अभीष्टो मोक्षाङ्गतयेति, निर्ग्रन्थानामिदं नैर्ग्रन्थ्यम्–आर्हतमिति भावना, किं ?–प्रवचनं श्रुतमित्यर्थः, चशब्दोऽनुक्तसम्यक्त्वसामायिकसमुच्चयार्थः, 'ववहारो' त्ति एवं व्यवहारो व्यवस्थितः, व्यवहारग्रहणाच्च तदधोवर्तिनैगमसंग्रहनयद्वयमपि गृहीतं वेदितव्यं, ततश्चैतदुक्तं भवति—नैगमसंग्रहव्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते, तपःसंयमग्रहणाच्चारित्रसामायिकं, प्रवचनग्रहणाद् श्रुतसामायिकं, चशब्दात् सम्यक्त्वसामायिकम्, आह–यद्येवं किमिति मिथ्यादृष्टयः ?, उच्यते, यतो व्यस्तान्यप्यनुमन्यन्ते, न सापेक्षाण्येव, शब्दऋजुसूत्रयोः पुनः कारणे कार्योपचारात् निर्वाणमार्ग एव निर्वाणं संयम एवेत्यनुमतम् ऋजुसूत्रमुल्लङ्घ्यादौ शब्दोपन्यासः शेषोपरितननयानुमतसंग्रहार्थः, एतदुक्तं भवति–ऋजुसूत्रादयः सर्वे चारित्रसामायि-

१ धारणमुपभोग परिहरण तस्य परिभोग

कमेव मोक्षमार्गत्वेनानुमन्यन्ते, नेतरे द्वे, तद्भावेऽपि मोक्षाभावात्, तथाहि—सम्यग्ज्ञानदर्शनलाभेऽपि नानन्तरमेव मोक्षः, किन्तु सर्वसंवररूपचारित्रावाप्त्यनन्तरमेव, अतस्तद्भावभावित्वात् तदेव मोक्षमार्ग इति गाथार्थः ॥ द्वारं ॥ 'उद्देसे निद्देसे य' इत्याद्युपोद्घातनिर्युक्तिप्रथमद्वारगाथावयवार्थो गतः, इदानीं द्वितीयद्वारगाथाप्रथमावयवः किमिति द्वारं व्याख्यायते—किं सामायिकं ?, किं तावज्जीवः ? उताजीवः ? अथोभयम् ? उतानुभयं ?, जीवाजीवत्वेऽपि किं द्रव्यं ? उत गुण इत्याशङ्कासम्भवे सत्याह—

**आया खलु सामइयं पच्चक्खायंतओ हवइ आया । तं खलु पच्चक्खाणं आवाए सव्वदव्वाणं ॥ ७९० ॥**

व्याख्या—'आत्मा' जीवः खलुशब्दोऽवधारणे, आत्मैव—जीव एव सामायिकमित्यजीवादिपूर्वोक्तविकल्पव्यवच्छेदः, 'पच्चक्खायंतओ हवइ आय' त्ति स च प्रत्याचक्षाणः—प्रत्याख्यानं कुर्वन् 'क्रियमाणं कृत' मिति क्रियाकालनिष्ठाकालयोरभेदाद् वर्तमानस्यैवातीतापत्तेः कृतप्रत्याख्यानोऽपि गृह्यते, स एव च परमार्थत आत्मा, श्रद्धानज्ञानसावद्यनिवृत्तिस्वस्वभावावस्थितत्वात्, शेषः संसारी पुनरात्मैव न भवति, प्रचुरघातिकर्मभिस्तस्य स्वाभाविकगुणतिरस्करणात्, अतो द्वितीयाऽऽत्मग्रहणं, 'तं खलु पच्चक्खाणं' ति खलुशब्दः सामायिकस्य जीवपरिणतित्वज्ञापनार्थः, तत् प्रत्याख्यानं जीवपरिणतिरूपत्वाद्विषयमधिकृत्य 'आवाए सव्वदव्वाणं' ति सर्वद्रव्याणामापाते—आभिमुख्येन समवाये, निष्पद्यत इति वाक्यशेषः, तस्य श्रद्धेयज्ञेयक्रियोपयोगित्वात् सर्वद्रव्याणामिति । आह—किं सामायिकमिति स्वरूपप्रश्ने प्रस्तुते सति विषयनिरूपणमस्यान्याय्यम्, अप्रस्तुतत्वाद्, वाह्यशास्त्रवत्, उच्यते, अप्रस्तुतत्वादित्यसिद्धं, तथाहि—सामायिकस्य विषयनिरूपणं प्रस्तुतमेव, सामायिकस्याङ्गभूतत्वात्, सामायिकस्वात्मवदित्यलं विस्तरेण, इति गाथार्थः ॥ तत्र यदुक्तम् 'आत्मा खलु सामयिक' मिति, तत्र यथाभूतोऽसौ सामायिकं तथाभूतमभिधित्सुराह मूलभाष्यकारः—

**सावज्जजोगविरओ तिगुत्तो छसु संजओ । उवउत्तो जयमाणो आया सामाइयं होई ॥१४९॥ ( मू० भा )**

व्याख्या—सावद्ययोगविरतः अवद्यं मिथ्यात्वकषायनोकषायलक्षणं सहावद्येन सावद्यो योगस्तद्विरतः—तद्विनिवृत्तः, त्रिभिः—मनोवाक्कायैर्गुप्तः षट्सु—जीवनिकायेषु संयतः—प्रयत्नवान्, तथाऽवश्यकर्तव्येषु योगेषु सदोपयुक्तः, यतमानश्च तेष्वेवासेवनया, इत्थम्भूत एवात्मा सामायिकं भवतीति गाथार्थः ॥ साम्प्रतं यदुक्तम् 'तं खलु पच्चक्खाणं आवाए सव्वदव्वाणं' ति, तत्र साक्षान्महाव्रतरूपं चारित्रसामायिकमधिकृत्य सर्वद्रव्यविषयतामस्योपदर्शयन्नाह—

**पढमंमि सव्वजीवा बिइए चरिमे य सव्वदव्वाइं । सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं ॥ ७९१ ॥**

व्याख्या—'प्रथमे' प्राणातिपातनिवृत्तिरूपे व्रते विषयद्वारेण चिन्त्यमाने 'सर्वजीवाः' त्रसस्थावरसूक्ष्मेतरभेदा विषयत्वेन द्रष्टव्याः, तदनुपालनरूपत्वात् तस्येति, तथा 'द्वितीये' मृषावादनिवृत्तिरूपे 'चरिमे च' परिग्रहनिवृत्तिरूपे सर्वद्रव्याणि विषयत्वेन द्रष्टव्यानि, कथम् ?, नास्ति पञ्चास्तिकायात्मको लोक इति मृषावादस्य सर्वद्रव्यविषयत्वात्, तन्निवृत्तिरूपत्वाच्च द्वितीयव्रतस्य, तथा मूर्च्छाद्वारेण परिग्रहस्यापि सर्वद्रव्यविषयत्वाच्चरमव्रतस्य च तन्निवृत्तिरूपत्वादशेषद्रव्यविषयतेति पूर्वार्द्धभावना । 'सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं' ति शेषाणि महाव्रतानि, खल्वित्यवधारणार्थः, तस्य च व्यवहितः सम्बन्धः, तेषामेकदेशस्तदेकदेशस्तेन तदेकदेशेनैव हेतुभूतेन द्रव्याणा, भवन्तीति क्रियाध्याहारः, कथम् ?—तृतीयस्य ग्रहणधारणीयद्रव्यादत्तादानविरतिरूपत्वात्, चतुर्थस्य च रूपरूपसहगतद्रव्यसम्बन्धब्रह्मविरतिरूपत्वात्, षष्ठस्य च रात्रिभोजनविरतिरूपत्वादिति पश्चार्द्धभावना, इति गाथार्थः ॥ एवं चारित्रसामायिकं निवृत्तिद्वारेण सर्वद्रव्यविषयं श्रुतसामायिकमपि श्रुतज्ञानात्मकत्वात् सर्वद्रव्यविषयमेव सम्यक्त्वसामायिकमपि सर्वद्रव्याणा सगुणपर्यायाणां श्रद्धानरूपत्वात् सर्वविषयमेवेत्यलं प्रसङ्गेन, प्रकृत प्रस्तुमः—तत्र सामायिकमजीवादिव्युदासेन जीव एवेत्युक्तं, तस्य च नयमतभेदेन द्रव्यगुणतासौ सकलनयाधारद्रव्यार्थिकपर्यायार्थिकाभ्यां स्वरूपव्यवस्थोपस्थापनायाह—

**जीवो गुणपडिवन्नो णयस्स दव्वट्ठियस्स सामइयं । सो चेव पज्जवणयट्ठियस्स जीवस्स एस गुणो ॥ ७९२ ॥**

व्याख्या—'जीवः' आत्मा, गुणैः प्रतिपन्नः—आश्रितः—गुणप्रतिपन्नः, गुणाश्च सम्यक्त्वादयः खल्वौपचारिकाः, 'नयस्य' द्रव्यार्थिकस्य सामायिकमिति वस्तुत आत्मैव सामायिकं, गुणास्तु तद्व्यतिरेकेणानन्यगम्यमानत्वान्न सन्त्येव, तत्प्रतिपत्तिरपि तस्य भ्रान्ता, चित्रे निम्नोन्नतभेदप्रतिपत्तिवदिति भावना, स एव सामायिकादिर्गुणः पर्यायार्थिकनयस्य, परमार्थतो यस्माज्जीवस्य एष गुण इति, उत्तरपदप्रधानत्वात् तत्पुरुषस्य, यथा तैलस्य धारेति, न तत्र धाराऽतिरेकेणापरं तैलमस्ति, एवं न गुणातिरिक्तो जीव इति, इत्थं चेदमङ्गीकर्तव्यमिति मन्यते, तथाहि—गुणातिरिक्तो जीवो नास्ति, प्रमाणानुपलब्धेः, रूपाद्यर्थान्तररूपघटवत्, तस्माद्गुणः सामायिकमिति हृदयं, न तु जीव इति गाथार्थः ॥ साम्प्रतं पर्यायार्थिक एव स्वं पक्ष समर्थयन्नाह—

**उप्पज्जंति वयंति य परिणम्मंति य गुणा ण दव्वाइं । दव्वप्पभवा य गुणा ण गुणप्पभवाइं दव्वाइं ॥७९३॥**

व्याख्या—उत्पद्यन्ते व्ययन्ते च, अनेनोत्पादव्ययरूपेण परिणमन्ति च गुणाः, चशब्द एवकारार्थः स चावधारणे, तस्य चैवं प्रयोगः-गुणा एव न द्रव्याण्युत्पादव्ययरूपेण परिणमन्तीति, अतस्त एव सन्ति, उत्पादव्ययपरिणामत्वात्, पत्रनीलतारक्ततादिवत्, तदतिरिक्तस्तु गुणी नास्त्येव, उत्पादव्ययपरिणामरहितत्वाद्, वान्ध्येयादिवत्, किञ्च 'दव्वप्पभवा य गुणा न' द्रव्यात् प्रभवो येषां ते द्रव्यप्रभवाः, चशब्दो युक्त्यन्तरसमुच्चये, गुणा न भवन्ति, तथा गुणप्रभवाणि द्रव्याणि, नैवेति वर्तते, अतो न कारणत्वं नापि कार्यत्वं द्रव्याणामित्यभावः, सतः कार्यकारणरूपत्वात्, अथवा द्रव्यप्रभवाश्च गुणा न, किन्तु गुणप्रभवाणि द्रव्याणि, प्रतीत्यसमुत्पादोपजातगुणसमुदये द्रव्योपचारात्, तस्माद् गुणः सामायिकमिति गाथार्थः ॥ एवं पर्यायार्थिकेन स्वमते प्रतिपादिते सति द्रव्यार्थिक आह—द्रव्यं प्रधानं न गुणाः, यस्मात्—

**जं जं जे जे भावे परिणमइ पओगवीससा दव्वं। तं तह जाणाइ जिणो अपज्जवे जाणणा नत्थि ॥७९४॥ दारं ॥**

व्याख्या—यद् यद् यान् यान् भावान् विज्ञानघटादीन् परिणमति प्रयोगविस्रसातो द्रव्यं तत्, प्रयोगेन घटादीन् विश्रसातोऽभ्रेन्द्रधनुरादीन्, द्रव्यमेव तदुत्प्रेक्षितपर्यायमुत्फणविफणकुण्डलितादिपर्यायसमन्वितसर्पद्रव्यवत्, तथाहि-न तत्र केचनोत्फणादयः सर्पद्रव्यातिरिक्ताः सन्ति, निर्मूलत्वात्, किन्तु तदेव तत्र परमार्थसदिति, किञ्च-तत् 'तथैव' अन्वयप्रधानं पर्यायोपसर्जनं जानाति परिच्छिनत्ति जिनः 'अपज्जवे जाणणा णत्थि' त्ति अपर्याये-निराकारे 'जाणणा नत्थि' त्ति परिज्ञा नास्ति, न च ते पर्यायाः तत्र वस्तुनि सन्तो द्रव्यमेव, तदाकारवत्, ततश्च तदेव सत्, केवलिनाऽप्यवगम्यमानत्वात्, केवलस्वात्मवत्, तस्माज्जीव एव सामायिकमिति गाथार्थः॥ अथवा 'उप्पज्जंति' त्ति इयमेव गाथा द्रव्यार्थिकमतेन व्याख्यायते-द्रव्यार्थिकवादी पर्यायार्थिकवादिनं प्रत्याह-गुणा न सन्त्येव, कुतो ?, यस्मादुत्पद्यन्ते व्ययन्ते च, अनेनोत्पादव्ययपरिणामेन परिणमन्ति गुणा एव, न द्रव्याणि, ततश्च तान्येव सन्ति, सततमवस्थितत्वाद्, अपरोपादेयत्वात्, द्रव्यप्रभवाश्च गुणाः परोपादाना वर्तन्ते, न गुणप्रभवाणि द्रव्याण्यपरोपादानत्वात्, तस्मादात्मैव सामायिकमिति गाथार्थः ॥ एवमवगतोभयनयमतश्चोदक आह-किमत्र तत्त्वमिति ?, अत्रोच्यते-सामायिकभावपरिणतः आत्मा सामायिकं, यस्माद् यत् सत् तद् द्रव्यपर्यायोभयरूपमिति, तथा चागमः—

**जं जं जे जे भावे परिणमइ पओगवीससा दव्वं। तं तह जाणाइ जिणो अपज्जवे जाणणा नत्थि ॥ ७९५ ॥**

व्याख्या—यद् यद् यान् यान् 'भावान्' आध्यात्मिकान् बाह्यांश्च परिणमति प्रयोगविस्रसा(तो) द्रव्यं, भावार्थः पूर्ववत्, तत्तथापरिणाममेव जानाति जिनः, अपर्याये परिज्ञा नास्ति, तस्मादुभयात्मकं वस्तु, केवलिना तथाऽवगतत्वादिति गाथार्थः ॥ साम्प्रतं कतिविधमिति द्वारमिति व्याख्यायते, तत्र—

**सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं च। दुविहं चेव चरित्तं अगारमणगारियं चेव ॥ ७९६ ॥**

व्याख्या—'सामायिकं' प्रागनिरूपितशब्दार्थं, 'चः' पूरणे 'त्रिविधं' त्रिभेदं, सम्यक्त्वम्, अनुस्वारलोपात्, श्रुतं तथा चारित्रं, चशब्दः स्वगतानेकभेदप्रदर्शनार्थः, तत्र सम्यक्त्वमिति सम्यक्त्वसामायिकं, तद् द्विविधं-नैसर्गिकमधिगमजं च, अथवा दशविधम्-एकैकस्यौपशमिकसास्वादनक्षायोपशमिकवेदकक्षायिकभेदभिन्नत्वात्, अथवा त्रिविधं-क्षायिकं क्षायोपशमिकमौपशमिकं च, कारकरोचकव्यञ्जकभेदं वा, श्रुतमिति श्रुतसामायिकं, तच्च सूत्रार्थोभयात्मकत्वात् त्रिविधम्, अक्षरानक्षरादिभेदादनेकविधं चेति, 'चारित्रम्' इति चारित्रसामायिकं, तच्च क्षायिकादि त्रिविधं, सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातभेदेन वा पञ्चविधम्, अथवा गृहीताशेषविकल्पं द्विविधम्-अगारसामायिकमनगारसामायिकं च, तथा चाह—'दुविधं चेव चरित्तं अगारमणगारियं चेव' द्विविधमेव चारित्रं मूलभेदेन, अगाः-वृक्षास्तैः कृतमगारं-गृहं तदस्यास्तीति मतुब्लोपादगारः-गृहस्थस्तस्येदम्- आगारिकम्, इदं चानेकभेदं, देशविरतेश्चित्ररूपत्वात्, अनगारः-साधुस्तस्येदम्-आनगारिकं चैव । आह—सम्यक्त्वश्रुतसामायिके विहाय चारित्रसामायिकभेदस्य साक्षादभिधानं किमर्थम् ?, उच्यते, अस्मिन् सति तयोर्नियमेन भाव इति ज्ञापनार्थं, चरमत्वाद्वा यथाऽस्य भेद उक्त एवं शेषयोरपि वाच्य इति ज्ञापनार्थमिति गाथार्थः ॥ साम्प्रतं मूलभाष्यकारः श्रुतसामायिकं व्याचिख्यासुस्तस्याध्ययनरूपत्वादाह—

**अज्झयणंपि य तिविहं सुत्ते अत्थे य तदुभए चेव। सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती ॥ १५० ॥ (भा०)**

व्याख्या—अध्ययनमपि च त्रिविध सूत्रविषयमर्थविषयं च तदुभयविषयं चैव, अपिशब्दात् सम्यक्त्वसामायिकमप्यौपशमिकादिभेदात् त्रिविधमिति । प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयन्नाह-'शेषेष्वपि' चतुर्विंशतिस्तवादिष्वन्येषु वाऽध्ययनेषु भवति एषैव निर्युक्तिः-उद्देशनिर्देशादिका निरुक्तिपर्यवसानेति । आह—अशेषद्वारपरिसमाप्तावतिदेशो न्याय्यः, अपान्तराले किमर्थमिति?, उच्यते, 'मध्यग्रहणे आद्यन्तयोर्ग्रहणं भवती' ति न्यायप्रदर्शनार्थ इति गाथार्थः ॥ द्वारं ॥ अधुना कस्येति द्वारं प्रतिपाद्यते, तत्र यस्य तद् भवति तदभिधित्सयाऽऽह—

**जस्स सामाणिओ अप्पा, संजमे नियमे तवे। तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ७९७ ॥**

व्याख्या—यस्य 'सामानिकः' सन्निहितः, अप्रत्रसित इत्यर्थः, 'आत्मा' जीवः, क?–'संयमे' मूलगुणेषु 'नियमे' उत्तरगुणेषु 'तपसि' अनशनादिलक्षणे 'तस्य' एवम्भूतस्याप्रमादिनः सामायिकं भवति, 'इति' एवं केवलिभिर्भाषितमिति गाथार्थः ॥

**जो समो सव्वभूएसु, तसेसु थावरेसु य। तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ७९८ ॥**

व्याख्या—यः 'समः' मध्यस्थः, आत्मानमिव परं पश्यतीत्यर्थः, 'सर्वभूतेषु' सर्वप्राणिषु 'त्रसेषु' द्वीन्द्रियादिषु 'स्थावरेषु च' पृथिव्यादिषु, तस्य सामायिकं भवति, एतावत् केवलिभाषितमिति गाथार्थः ॥ साम्प्रतं फलप्रदर्शनद्वारेणास्य करणविधानं प्रतिपादयन्नाह—

**सावज्जजोगप्परिवज्जणट्ठा, सामाइयं केवलियं पसत्थं। गिहत्थधम्मा परमंति णच्चा, कुज्जा बुहो आयहियं परत्थं।**

व्याख्या—सावद्ययोगपरिवर्जनार्थं सामायिकं 'कैवलिकं' परिपूर्णं 'प्रशस्तं' पवित्रम्, एतदेव हि गृहस्थधर्मात् 'परमं' प्रधानम् 'इति' एवं ज्ञात्वा कुर्याद् 'बुधः' विद्वान् 'आत्महितम्' आत्मोपकारकं 'परार्थम्' इति परः–मोक्षस्तदर्थं, न तु सुरलोकाद्यवाप्त्यर्थम्, अनेन निदानपरिहारमाह, इति वृत्तार्थः ॥ ७९९ ॥ परिपूर्णसामायिककरणशक्त्यभावे गृहस्थोऽपि गृहस्थसामायिकं 'करेमि भंते! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव नियमं पज्जुवासामी'त्येवं कुर्यात्, आह–तस्य सर्वं त्रिविधं त्रिविधेन प्रत्याचक्षाणस्य को दोष इति?, उच्यते, प्रवृत्तकर्मारम्भानुमत्यनिवृत्त्या करणासम्भव एव, तथा भङ्गप्रसङ्गदोषश्चेति। आह च—

**सव्वंति भाणिऊणं विरई खलु जस्स सव्विया णत्थि। सो सव्वविरइवाई चुक्कइ देसं च सव्वं च ॥ ८०० ॥**

व्याख्या—'सर्व' ति उपलक्षणात् सर्वं सावद्यं योगं प्रत्याख्यामि त्रिविधं त्रिविधेन, इत्येवं 'भाणिऊण' अभिधाय 'विरतिः' निवृत्तिः खलु यस्य 'सर्विका' सर्वा नास्ति, प्रवृत्तकर्मारम्भानुमतिसद्भावात्, स सर्वविरतिवादी 'चुक्कइ'त्ति भ्रश्यति 'देसं च सव्वं चे' ति देशविरतिं सर्वविरतिं च, प्रतिज्ञाताकरणात्। आह–आगमे त्रिविधं त्रिविधेनेति गृहस्थप्रत्याख्यानमुक्तं तत्कथमिति?, उच्यते, स्थूलसावद्ययोगविषयमेव तत्, आह च भाष्यकारः—"जति किंचिदप्पजोयणमपप्पं वा विसेसिउं वत्थुं। पच्चक्खेज्ज ण दोसो सयंभुरमणादिमच्छव्व ॥ १ ॥ जो वा निक्खमिउमणो पडिमं पुत्तादिसंतइणिमित्तं। पडिवज्जिज्ज तओ वा करिज्ज तिविहंपि तिविहेणं ॥ २ ॥ जो पुण पुव्वारद्धाणुज्झियसावज्जकम्मसंताणो। तदणुमतिपरिणतिं सो ण तरति सहसा णियत्तेउं ॥ ३ ॥ इत्यादि" तथाऽपि गृहस्थसामायिकमपि परलोकार्थिना कार्यमेव, तस्यापि विशिष्टफलसाधकत्वाद्, आह च निर्युक्तिकारः—

**सामाइयंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ ८०१ ॥**

---

१ यदि किञ्चिदप्रयोजनमप्राप्य वा विशेष्य वस्तु। प्रत्याचक्षीत न दोष स्वयम्भूरमणादिमत्स्य इव ॥१॥ यो वा निष्क्रमितुमनाः प्रतिमा पुत्रादिसन्ततिनिमित्तम्। प्रतिपद्येत सको वा कुर्यात्त्रिविधमपि त्रिविधेन ॥२॥ य पुन पूर्वारब्धानुज्झितसावद्यकर्मसतानः। तदनुमतिपरिणतिं स न शक्नोति सहसा निवर्त्तयितुम् ३॥

व्याख्या—सामायिक एव कृते सति श्रमण इव श्रावको भवति, यस्मात् प्रायोऽशुभयोगरहितत्वात्, कर्मवेदक इत्यर्थः, अनेन कारणेन 'बहुशः' अनेकधा सामायिकं कुर्यादिति गाथार्थः ॥ किञ्च—

**जीवो पमायबहुलो बहुसोऽवि अ बहुविहेसु अत्थेसुं। एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ ८०२ ॥**

व्याख्या—जीवः प्रमादबहुलः 'बहुशः' अनेकधाऽपि च बहुविधेष्वर्थेषु–शब्दादिषु प्रमादवांश्चैकान्तेनाशुभबन्धक एव, अतोऽनेन कारणेन तत्परिजिहीर्षया बहुशः सामायिकं कुर्यात्–मध्यस्थो भूयादिति गाथार्थः ॥ द्वारं ॥ साम्प्रत सङ्क्षेपेण सामायिकवतो मध्यस्थस्य लक्षणमभिधित्सुराह—

**जो णवि वट्टइ रागे णवि दोसे दोण्ह मज्झयारंमि। सो होइ उ मज्झत्थो सेसा सव्वे अमज्झत्था ॥ ८०३ ॥**

व्याख्या—यो नापि वर्तते रागे नापि द्वेषे, किं तर्हि?–'दोण्ह मज्झयारंमि' द्वयोर्मध्य इत्यर्थः, स भवति मध्यस्थः, शेषाः सर्वेऽमध्यस्था इति गाथार्थः ॥ द्वारं ॥ साम्प्रतं क किं सामायिकमिति निरूपयन् द्वारगाथात्रयमाह—

**खेत्तदिसाकालगइभवियसण्णिऊसासदिट्ठिमाहारे। पज्जत्तसुत्तजम्मट्ठितिवेयसण्णाकसायाऊ ॥ ८०४ ॥**

**णाणे जोगुवओगे सरीरसंठाणसंघयणमाणे। लेसा परिणामे वेयणा समुग्घाय कम्मे य ॥ ८०५ ॥**

**णिव्वेढणमुव्वट्टे आसवकरणे तहा अलंकारे। सयणासणठाणत्थे चंकम्मंते य किं कहियं ॥८०६॥ दारगाहाओ**

व्याख्या—आसां समुदायार्थः क्षेत्रदिकालगतिभव्यसंज्ञिउच्छ्वासदृष्ट्याहारकानङ्गीकृत्याऽऽलोचनीयं, किं क सामायिकमिति योगः, तथा पर्याप्तसुप्तजन्मस्थितिवेदसंज्ञाकषायायूंषि चेति, तथा ज्ञानं योगोपयोगौ शरीरसंस्थानसंहननमा-

नानि लेश्याः परिणामं वेदनां समुद्घातं कर्म च क्रिया पूर्ववत्, तथा निर्वेष्टनोद्वर्त्तने अङ्गीकृत्यालोचनीयं—क किमिति? आश्रवकरणं तथाऽलङ्कारं तथा शयनासनस्थानस्थानधिकृत्येति, तथा चङ्क्रमनञ्च विषयीकृत्य किं सामायिकं क इत्यालोचनीयमिति समुदायार्थः। अवयवार्थं तु प्रतिद्वारं स्वयमेव वक्ष्यति—तत्रोर्ध्वलोकादिक्षेत्रमङ्गीकृत्य सम्यक्त्वादिसामायिकानां लाभादिभावमभिधित्सुराह—

**संमसुआणं लंभो उड्ढं च अहे अ तिरिअलोए अ। विरई मणुस्सलोए विरयाविरई य तिरिएसुं॥ ८०७॥**

व्याख्या—सम्यक्त्वश्रुतसामायिकयोः 'लाभः' प्राप्तिः 'उड्ढं च' इत्यूर्ध्वलोके च 'अधे य' त्ति अधोलोके च तिर्यग्लोके च, इयमत्र भावना—ऊर्ध्वलोके मेरुसुरलोकादिषु ये सम्यक्त्वं प्रतिपद्यन्ते जीवास्तेषां श्रुताज्ञानमपि तदैव सम्यक्श्रुतं भवतीति, एवमधोलोकेऽपि महाविदेहाधोलौकिकग्रामेषु नरकेषु च ये प्रतिपद्यन्ते, एवं तिर्यग्लोकेऽपीति, 'विरई मणुस्सलोगे' त्ति विरतिशब्देन सर्वविरतिसामायिकं गृह्यते, तच्च लाभापेक्षया मनुष्यलोक एव भवति, नान्यत्र, मनुष्या एवास्य प्रतिपत्तार इति भावना, क्षेत्रनियमं तु विशिष्टश्रुतविदो विदन्ति, 'विरयाविरई य तिरिएसुं' ति विरताविरतिश्च देशविरतिसामायिकलक्षणा लाभविचारे तिर्यक्षु भवति, मनुष्येषु च केषुचित्॥

**पुव्वपडिवन्नगा पुण तीसुवि लोएसु निअमओ तिण्हं। चरणस्स दोसु निअमा भयणिज्जा उड्ढलोगंमि॥८०८॥**

व्याख्या—पूर्वप्रतिपन्नकास्तु त्रयाणां नियमेन त्रिष्वपि लोकेषु विद्यन्ते, चारित्रसामायिकं त्वधोलोकतिर्यग्लोकयोरेव, ऊर्ध्वलोके तु भाज्या इत्यलं प्रसङ्गेनेति गाथार्थः॥ द्वारं॥ साम्प्रतं दिग्द्वारावयवार्थाभिधित्सया दिक्स्वरूपप्रतिपादनायाह—

**नामं ठवणा दविए खेत्तदिसा तावखेत्त पन्नवए। सत्तमिया भावदिसा सा होअट्ठारसविहा उ॥ ८०९॥ दारं॥**

व्याख्या—नामस्थापने सुगमे 'दविए' त्ति द्रव्यविषया दिक् द्रव्यदिक्, सा च जघन्यतस्त्रयोदशप्रदेशिकं दशदिक्प्रभवं द्रव्यं, तत्रैकः प्रदेशो विदिक्ष्वेते चत्वारः, मध्ये त्वेक इत्येते पञ्च, चतसृषु च दिक्ष्वायतावस्थितौ द्वौ द्वाविति, आह च भाष्यकारः—'तेरसपदेसियं खलु तावतिएसुं भवे पदेसेसुं। जं दव्वं ओगाढं जहण्णगं तं दसदिसागं॥ १॥' अस्य चेयं स्थापनेति.

उत्कृष्टतस्त्वनन्तप्रदेशिकमिति, 'खेत्तदिस' त्ति क्षेत्रदिक्, सा चानेकभेदा मेरुमध्याष्टप्रादेशिकरुचकाद् बहिर्द्व्यादिद्व्युत्तरश्रेण्या शकटोर्द्धिसंस्थानाश्चतस्रो दिशः, चतसृणामप्यन्तरालकोणावस्थिता एकप्रदेशिकाच्छिन्नावलिसंस्थानाश्चतस्र एव विदिशः ऊर्ध्वं चतुःप्रदेशिकचतुरस्रदण्डसंस्थाना एकैव, अधोऽप्येवंप्रकारा द्वितीयेति, उक्तं च—'अट्ठपदेसो रुयगो तिरियं लोगस्स मज्झयारंमि। एस पभवो दिसाणं एसेव भवेऽणुदिसाणं॥ १॥ दुपदेसादिदुरुत्तर एगपदेसा अणुत्तरा चेव। चउरो चउरो य दिसा चउरादि अणुत्तरा दोण्णि॥२॥ सगडुद्धिसंठिताओ महादिसाओ भवंति चत्तारि। मुत्तावली य चउरो दो चेव य होन्ति रुयगनिभा॥३॥

१ त्रयोदशप्रादेशिकं खलु तावत्सु भवेत्प्रदेशेषु। यद्द्रव्यमवगाढं जघन्यं तद्दशदिक्कम्॥१॥ २ अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्ये। एष प्रभवो दिशामेष एव भवेदनुदिशाम्॥ १॥ द्विप्रदेशादिद्व्युत्तरैकप्रदेशाऽनुत्तरैव। चतस्रश्चतस्रो दिशश्च। चतुराद्ये अनुत्तरे द्वे॥ २॥ शकटोर्द्धिसंस्थिता महादिशो भवन्ति चतस्रः। मुक्तावलीव चतस्रो द्वे एव भवतो रुचकनिभे॥ ३॥

इयं च स्थापनेति

आसां च नामानि—'इंदग्गेई जम्मा य णेरती वारुणी य वायव्वा। सोमा ईसाणाऽवि य विमला य तमा य बोद्धव्वा॥ १॥ इंदा विजयद्दाराणुसारतो सेसिया पदक्खिणतो। अट्ठवि तिरियदिसाओ उड्ढं विमला तमा चाधो॥ २॥ 'तावखेत्त' त्ति, तापः—सविता तदुपलक्षिता क्षेत्रदिक् तापक्षेत्रदिक्, सा चानियता—'जेसिं जत्तो सूरो उदेति तेसिं तई हवइ पुव्वा। तावक्खेत्तदिसाओ पदाहिणं सेसियाओसिं॥ १॥' 'पण्णवए' त्ति प्रज्ञापकस्य दिक् प्रज्ञापकदिक्—'पण्णवओ जदभिमुहो सा पुव्वा सेसिया पदाहिणतो। तस्सेवणुगंतव्वा अग्गेयादी दिसा नियमा॥ १॥' सप्तमी भावदिक् सा भवत्यष्टादशविधैव, दिश्यते अयममुक इति संसारी यया सा भावदिक्, सा चेत्थं भवत्यष्टादशविधा—पुढविजलजलण वाया मूला खंधग्गपोरवीया य। वितिचउपंचेंदिय तिरियनारगा देवसंघाया॥ १॥ संमुच्छिमकंमाकम्मभूमगणरा तहऽन्तरद्दीवा। भावदिसा दिस्सइ जं संसारी णिययमेताहिं॥ २॥'

१ ऐन्द्री आग्नेयी यमा च नैर्ऋती वारुणी च वायव्या। सोमा ईशानाऽपि च विमला च तमा (मी) च बोद्धव्या॥ १॥ ऐन्द्री विजयद्वारानुसारत शेषा प्रदक्षिणतः। अष्टापि तिर्यग्दिश ऊर्ध्वं विमला तमा चाधः॥ २॥ २ येषां यत सूर्य उदेति तेषां सा भवति पूर्वा। तापक्षेत्रदिशः प्रादक्षिण्येन शेषा अनयोः॥ १॥ ३ प्रज्ञापको यदभिमुखः सा पूर्वा शेषाः प्रदक्षिणतः। तस्या एवानुगन्तव्या आग्नेय्याद्या दिशो नियमात्॥ १॥ ४ पृथ्वीजलज्वलनवाता मूलानि स्कन्धाग्रपर्वबीजानि च। द्वित्रिचतुष्पञ्चेन्द्रिया तिर्यञ्चो नारका देवसङ्घाताः॥ १॥ संमूर्छजकर्माकर्मभूमिकनरास्तथान्तर्द्वीपाः। भावदिक् दिश्यते यत् संसारी नियतमेताभिः॥ २॥

ति गाथार्थः ॥ इह च नामस्थापनाद्रव्यदिग्भिरनधिकार एव, शेषासु यथासम्भवं सामायिकस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नो वा वाच्यः, तत्र क्षेत्रदिशोऽधिकृत्य तावदाह—

**पुव्वाईआसु महादिसासु पडिवज्जमाणओ होइ । पुव्वपडिवन्नओ पुण अन्नयरीए दिसाए उ ॥ ८१० ॥**

व्याख्या—पूर्वाद्यासु महादिक्षु विवक्षिते काले सर्वेषां सामायिकानां प्रतिपद्यमानको भवति, न तु विदिक्षु, तास्वेकप्रदेशिकत्वेन जीवावगाहनाभावात्, आह च भाष्यकारः—"छिण्णावलिरुयगागिइदिसासु सामाइयं ण जं तासु । सुद्धासु णावगाहइ जीवो ताओ पुण फुसेज्जा ॥ १ ॥" पूर्वप्रतिपन्नकः पुनरन्यतरस्यां दिशि भवत्येव, पुनःशब्दस्यैवकारार्थत्वादिति गाथार्थः ॥ ८११ ॥ तापक्षेत्रप्रज्ञापकदिक्षु पुनरष्टसु चतुर्णामपि सामायिकानां पूर्वप्रतिपन्नोऽस्ति, प्रतिपद्यमानकश्च सम्भवति, अधऊर्ध्वदिग्द्वये तु सम्यक्त्वश्रुतसामायिकयोरेवमेव, देशविरतिसर्वविरतिसामायिकयोस्तु पूर्वप्रतिपन्नकः सम्भवति, प्रतिपद्यमानकस्तु नैवेति, उक्तं च—"अट्ठसु चउण्ह नियमा पुव्वपवण्णो उ दोसु दोण्हेव । दोण्ह तु पुव्वपवण्णो सिय णण्णो तावपण्णवए ॥१॥" भावदिक्षु पुनरेकेन्द्रियेषु न प्रतिपद्यमानको नापि पूर्वप्रतिपन्नश्चतुर्णामपि, विकलेन्द्रियेषु सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्नः सम्भवति नेतरः, पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्जानां पूर्वप्रतिपन्नोऽस्ति, प्रतिपद्यमानको भाज्यः, विवक्षितकाले नारकामराकर्मभूमिजान्तरद्वीपकनरेषु सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्नकोऽस्त्येव,

१ छिन्नावलीरुचकाकृतिदिक्षु सामायिक न यस्मात्तासु । शुद्धासु नावगाहते जीव ता. पुन स्पृशेत् ॥ १ ॥ २ अष्टसु चतुर्णां नियमात्पूर्वप्रपन्नस्तु द्वयोर्द्वयोरेव । द्वयोस्तु पूर्वप्रपन्न. स्यात् नान्यस्तापप्रज्ञापकयो' ॥ १ ॥

इतरस्तु भाज्य., कर्मभूसिजमनुष्येषु चतुर्णामपि पूर्वप्रतिपन्नोऽस्त्येव, प्रतिपद्यमानकस्तु भाज्यः, सम्मूर्च्छिमेषु तूभयाभाव इति, उक्तं च—"उभयाभावो पुढवादिएसु विगलेसु होज्ज उववण्णो । पंचेंदियतिरिएसुं णियमा तिण्हं सिय पवज्जे ॥ १ ॥ णारगदेवाकम्मगअंतरदीवेसु दोण्ह भयणा उ । कम्मगणरेसु चउसुं मुच्छेसु तु उभयपडिसेहो ॥ २ ॥ द्वारं ॥ कालद्वारमधुना, तत्र कालस्त्रिविधः—उत्सर्पिणीकालः अवसर्पिणीकालः उभयाभावतोऽवस्थितश्चेति, तत्र भरतैरावतेषु विंशतिसागरोपमकोटीकोटिमानः कालचक्रभेदोत्सर्पिण्यवसर्पिणीगतः प्रत्येकं षड्विधो भवति, तत्रावसर्पिण्यां सुषमसुषमाख्यश्चतुःसागरोपमकोटीकोटिमानः प्रवाहतः प्रथमः, सुषमाख्यस्त्रिसागरोपमकोटिकोटिमानो द्वितीयः, सुषमदुष्षमाख्यस्तु सागरोपमकोटीकोटिद्वयमानस्तृतीयः, दुष्षमसुषमाख्यस्तु द्विचत्वारिंशद्वर्षसहस्रन्यूनसागरोपमकोटीकोटिमानश्चतुर्थः, दुष्षमाख्यस्त्वेकविंशतिवर्षसहस्रमानः पञ्चमः, दुष्षमदुष्षमाख्यः पुनरेकविंशतिवर्षसहस्रमान एव षष्ठ इति, अयमेव चोत्क्रमेणोत्सर्पिण्यामपि यथोक्तसङ्ख्योऽवसेयः काल इति, अवस्थितस्तु चतुर्विधः, तद्यथा—सुषमसुषमाप्रतिभागः सुषमाप्रतिभागः सुषमदुषमाप्रतिभागः दुष्षमसुषमाप्रतिभागश्चेति, तत्र प्रथमो देवकुरूत्तरकुरुषु द्वितीयो हरिवर्षरम्यकयोः तृतीयो हैमवतैरण्यवतयोः चतुर्थो विदेहेष्विति, तत्रेत्थमनेकधा काले सति यस्य सामायिकस्य यस्मिन् काले प्रतिपत्तिरित्येतदभिधित्सुराह—

१ उभयाभाव पृथ्व्यादिकेषु विकलेषु भवेत् उपपन्न । पञ्चेन्द्रियतिर्यक्षु नियमात् त्रयाणां स्यात्प्रतिपद्यमाने ॥ १ ॥ नारकदेवाकर्मकान्तरद्वीपेषु द्वयो र्भजना तु । कर्मजनरेषु चतुर्णां समूर्छेषु तूभयप्रतिषेधः ॥ २ ॥

**संमत्तस्स सुयस्स य पडिवत्ती छव्विहंमि कालंमि । विरइं विरयाविरइं पडिवज्जइ दोसु तिसु वावि ॥८११॥**

व्याख्या—सम्यक्त्वस्य श्रुतस्य च द्वयोरप्यनयोः सामायिकयोः प्रतिपत्तिः षड्विधे—सुषमसुषमादिलक्षणे काले सम्भवति, स च प्रतिपत्ता सुषमसुषमादिषु देशन्यूनपूर्वकोट्यायुष्क एव प्रतिपद्यते, पूर्वप्रतिपन्नकास्त्वनयोर्विद्यन्त एव, 'विरतिं' समग्रचारित्रलक्षणां तथा 'विरताविरतिं' देशचारित्रात्मिकां प्रतिपद्यते कश्चित् द्वयोः कालयोस्त्रिषु वाऽपि कालेषु, अपिः सम्भावने, अस्य चार्थमुपरिष्टाद्वक्ष्यामः, तत्रेयं प्रकृतभावना—उत्सर्पिण्यां द्वयोर्दुष्षमसुषमायां सुषमदुष्षमायां च, अवसर्पिण्यां त्रिषु सुषमदुष्षमायां दुष्षमसुषमायां दुष्षमायां चेति, पूर्वप्रतिपन्नस्तु विद्यत एव, अपिशब्दात् संहरणं प्रतीत्य पूर्वप्रतिपन्नकः सर्वकालेष्वेव सम्भवति, प्रतिभागकालेषु तु त्रिषु सम्यक्त्वश्रुतयोः प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नकस्त्वस्त्येव, चतुर्थे तु प्रतिभागे चतुर्विधस्यापि प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नकस्तु विद्यत एव, बाह्यद्वीपसमुद्रेषु तु काललिङ्गरहितेषु त्रयाणां प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येवेति गाथार्थः ॥८११॥ द्वारं ॥ साम्प्रतं गतिद्वारमुच्यते—

**चउसुवि गतीसु णियमा सम्मत्तसुयस्स होइ पडिवत्ती । मणुएसु होइ विरती विरयाविरई य तिरिएसुं ८१२**

व्याख्या—चतसृष्वपि गतिषु, नियमात् इति नियमग्रहणमवधारणार्थे चतसृष्वेव न मोक्षगताविति हृदयं, सम्यक्त्वश्रुतयोर्भवति प्रतिपत्तिः, सम्भवति विवक्षिते काल इत्यर्थः, अपिशब्दः पृथिव्यादिषु गत्यन्तर्गतेषु न भवत्यपीति सम्भावयति, पूर्वप्रतिपन्नकस्त्वनयोर्विद्यत एव, तथा मनुष्येषु भवति विरतिः—प्रतिपत्तिमङ्गीकृत्य मनुष्येष्वेव सम्भवति

'विरतिः' समग्रचारित्रात्मिका, पूर्वप्रतिपन्नापेक्षया तु सदा भवत्येव, 'विरताविरतिश्च' देशचारित्रात्मिका तिर्यक्षु, भवतीत्यनुवर्तते, भावना मनुष्यतुल्येति गाथार्थः ॥ ८१२ ॥ भव्यसंज्ञिद्वारावयवार्थाभिधित्सयाऽऽह—

**भवसिद्धिओ उ जीवो पडिवज्जइ सो चउण्हमण्णयरं । पडिसेहो पुण असण्णिमीसए सण्णि पडिवज्जे ॥८१३॥**

व्याख्या—भवसिद्धिको भव्योऽभिधीयते, भवसिद्धिकस्तु जीवः प्रतिपद्यते 'चतुर्णां' सम्यक्त्वसामायिकादीनाम् 'अन्यतरत् एकं द्वे त्रीणि सर्वाणि वा, व्यवहारनयापेक्षयेत्थं प्रतिपाद्यते, न तु निश्चयतः केवलसम्यक्त्वसामायिकसम्भवोऽस्ति, श्रुतसामायिकानुगतत्वात् तस्य, एवं संज्ञ्यपि, यत आह—संज्ञि पडिवज्जे, पूर्वप्रतिपन्नकस्तु भव्यसंज्ञिषु नियम एव, प्रतिषेधः पुनरसंज्ञिनि मिश्रकेऽभव्ये च, इदमत्र हृदयम्—अन्यतमसामायिकस्य प्रतिपद्यमानकान् प्राक्प्रतिपन्नान् वाऽऽश्रित्य प्रतिषेधः असंज्ञिनि 'मिश्रके' सिद्धे, यतोऽसौ न संज्ञी नाप्यसंज्ञी न भव्यो नाप्यभव्यः अतो मिश्रः, अभव्ये च, पुनःशब्दस्तु पूर्वप्रतिपन्नोऽसंज्ञी सास्वादनो जन्मनि सम्भवतीति विशेषणार्थः, संज्ञी प्रतिपद्यत इति व्याख्यातमेवेति गाथार्थः ॥ ८१३ ॥ गतं द्वारद्वयम् ॥ उच्छ्वासदृष्टिद्वारद्वयाभिधित्सयाऽऽह—

**ऊसासग णीसासग मीसग पडिसेह दुविह पडिवण्णो । दिट्ठीइ दो णया खलु ववहारो निच्छओ चेव ॥८१४॥दारं**

व्याख्या—उच्छ्वसितीति उच्छ्वासकः, निःश्वसितीति निःश्वासकः, आनापानपर्याप्तिपरिनिष्पन्न इत्यर्थः, स हि चतुर्णामपि प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येवेति वाक्यशेषः, मिश्रः खल्वानापानपर्याप्त्याऽपर्याप्तो भण्यते, तत्र प्रतिपत्तिमङ्गीकृत्य प्रतिषेधः, नासौ चतुर्णामपि प्रतिपद्यमानकः सम्भवतीति भावना, 'दुविहपडिवन्नो' त्ति स एव द्विविधस्य सम्यक्त्वश्रुतसामायिकस्य प्रतिपन्नः—पूर्वप्रतिपन्नो भवति, देवादिर्जन्मकाल इति, अथवा 'मिश्रः' सिद्धः, तत्र चतुर्णामप्युभयथाऽपि प्रतिषेधः, द्विविधस्य दर्शनचारित्रसामायिकस्य शैलेशीगतः पूर्वप्रतिपन्नो भवति, असावपि च तात्त्विकमिश्र एवेति । दृष्टौ विचार्यमाणायां द्वौ नयौ खलु विचारकौ—व्यवहारो निश्चयश्चैव, तत्राद्यस्य सामायिकरहितः सामायिकं प्रतिपद्यते, इतरस्य तद्युक्त एव, क्रियाकालनिष्ठाकालयोरभेदादिति गाथार्थः ॥ ८१४ ॥ गतं द्वारद्वयं, साम्प्रत माहारकपर्याप्तकद्वारद्वयं प्रतिपादयन्नाह—

**आहारओ उ जीवो पडिवज्जइ सो चउण्हमण्णयरं । एमेव य पज्जत्तो सम्मत्तसुए सिया इयरो ॥ ८१५ ॥**

व्याख्या—आहारकस्तु जीवः प्रतिपद्यते स चतुर्णामन्यतरत्, पूर्वप्रतिपन्नस्तु नियमादस्त्येव, एवमेव च पर्याप्तः षड्भिरप्याहारादिपर्याप्तिभिश्चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव, 'सम्मत्तसुए सिया इयरो' त्ति इतरः—अनाहारकोऽपर्याप्तकश्च, तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्वश्रुते अङ्गीकृत्य स्यात्—भवेत् पूर्वप्रतिपन्नः, प्रतिपद्यमानकस्तु नैवेति वाक्यशेषः, केवली तु समुद्घातशैलेश्यवस्थायामनाहारको दर्शनचरणसामायिकद्वयस्येति, अपर्याप्तोऽपि सम्यक्त्वश्रुते अधिकृत्य स्यात् पूर्वप्रतिपन्न इति गाथार्थः ॥ ८१५ ॥ गतं द्वारद्वयं, साम्प्रतं सुप्तजन्मद्वारद्वयव्याचिख्यासयेदमाह—

**णिद्दाए भावओऽवि य जागरमाणो चउण्हमण्णयरं । अंडयपोयजराउय तिग तिग चउरो भवे कमसो ॥८१६॥**

व्याख्या—इह सुप्तो द्विविधः—द्रव्यसुप्तो भावसुप्तश्च, एवं जाग्रदपीति, तत्र द्रव्यसुप्तो निद्रया, भावसुप्तस्त्वज्ञानी, तथा द्रव्यजागरो निद्रया रहितः, भावजागरः सम्यग्दृष्टिः, तत्र निद्रया भावतोऽपि च जाग्रत् चतुर्णां सामायिकानामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येवेत्यध्याहारः, अपिशब्दो विशेषणे, किं विशिनष्टि ?—भावजागरः द्वयोः प्रथमयोः पूर्वप्रतिपन्न एव, द्वयस्य तु प्रतिपत्ता भवतीति, निद्रासुप्तस्तु चतुर्णामपि पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः भावसुप्तस्तूभयविकलः, नयमताद्वा प्रतिपद्यमानको भवति, अलं विस्तरेण । जन्म त्रिविधम्—अण्डजपोतजजरायुजभेदभिन्नं, तत्र यथासङ्ख्यं 'तिग तिग चउरो भवे कमसो' त्ति अण्डजाः—हंसादयः त्रयाणां प्रतिपद्यमानकाः सम्भवन्ति, पूर्वप्रतिपन्नास्तु सन्त्येव, पोतजाः—हस्त्यादयोऽप्येवमेव, जरायुजाः—मनुष्यास्तेऽपि चतुर्णामित्थमेव, औपपातिकास्तु प्रथमयोर्द्वयोरेवमिति गाथार्थः ॥ ८१६ ॥ स्थितिद्वारमधुनाऽऽह—

**उक्कोसयट्ठितीए पडिवज्जंते य णत्थि पडिवण्णो । अजहण्णमणुक्कोसे पडिवज्जंते य पडिवण्णे ॥ ८१७ ॥**

व्याख्या—आयुर्वर्जानां सप्तानां कर्मप्रकृतीनामुत्कृष्टस्थितिर्जीवश्चतुर्णामपि सामायिकानां 'पडिवज्जंते य णत्थि पडिवण्णो' त्ति प्रतिपद्यमानको नास्ति प्रतिपन्नश्च नास्तीति, चशब्दस्य व्यवहितः सम्बन्धः, आयुषस्तूत्कृष्टस्थितौ द्वयोः पूर्वप्रतिपन्न इति, अजघन्योत्कृष्टस्थितिरेवाजघन्योत्कृष्टः स्थितिशब्दलोपात्, 'पडिवज्जंते य पडिवण्णो' त्ति, स हि चतुर्णामपि प्रतिपद्यमानकः सम्भवति, प्रतिपन्नश्चास्त्येव, जघन्यायुष्कस्थितिस्तु न प्रतिपद्यते, न पूर्वप्रतिपन्नः, क्षुल्लकभवगत इति, शेषकर्मराशिजघन्यस्थितिस्तु देशविरतिरहितस्य सामायिकत्रयस्य पूर्वप्रतिपन्नः स्याद्, दर्शनसप्तकातिक्रान्तः क्षपकः अन्तकृत् केवली, तस्य तस्यामवस्थायां देशविरतिपरिणामाभावात्, जघन्यस्थितिकर्मबन्धकत्वाच्च जघन्यस्थितित्वं तस्य

न तूपात्तकर्मग्रन्थाद्यपेक्षयेति, आह च भाष्यकारः–"ण जहण्णाउठिईए पडिवज्जइ णेव पुव्वपडिवण्णो। सेसे पुव्वपवण्णो देसविरतिवज्जिए होज्ज ॥ १ ॥" त्ति गाथार्थः ॥ ८१७ ॥ द्वारं ॥ साम्प्रतं वेदसंज्ञाकषायद्वारत्रयं व्याचिख्यासुराह—

**चउरोऽवि तिविहवेदे चउसुवि सण्णासु होइ पडिवत्ती। हेट्ठा जहा कसाएसु वण्णियं तह य इहयंपि॥८१८॥**

व्याख्या—'चत्वार्यपि' सामायिकानि 'त्रिविधवेदे' स्त्रीपुंनपुंसकलक्षणे उभयथाऽपि, भवन्तीति वाक्यशेषः, इयं भावना-चत्वार्यपि सामायिकान्यधिकृत्य त्रिविधवेदे विवक्षिते काले प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव, अवेदस्तु देशविरतिरहितानां त्रयाणां पूर्वप्रतिपन्नः स्यात्, क्षीणवेदः क्षपको, न तु प्रतिपद्यमानकः। द्वारं। तथा चतसृष्वपि संज्ञासु-आहारभयमैथुनपरिग्रहरूपासु चतुर्विधस्यापि सामायिकस्य भवति 'प्रतिपत्तिः' प्रतिपद्यमानको भवति, न न भवति, इतरस्त्वस्त्येव। द्वारम्। अधो यथा 'पढमिल्लुगाण उदये' इत्यादिना कषायेषु वर्णितम्, इहापि तथैव वर्णितव्यं, समुदायार्थस्त्वयम्–सकषायी चतुर्णामप्युभयथाऽपि भवति, अकषायी तु छद्मस्थवीतरागस्त्रयाणां पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः। द्वारमिति गाथार्थः ॥ ८१८ ॥ गतं द्वारत्रयं, साम्प्रतमायुर्ज्ञानद्वारद्वयाभिधित्सयाऽऽह—

**संखिज्जाऊ चउरो भयणा सम्मसुयऽसंखवासीणं। ओहेण विभागेण य नाणी पडिवज्जई चउरो ॥ ८१९ ॥**

व्याख्या—सङ्ख्येयायुर्नरः चत्वारि प्रतिपद्यते, प्रतिपन्नस्त्वस्त्येवेति वाक्यशेषः, 'भयणा सम्मसुयऽसंखवासीणं' ति भजना–विकल्पना सम्यक्त्वश्रुतसामायिकयोरसङ्ख्येयवर्षायुषाम्, इयं भावना–विवक्षितकालेऽसङ्ख्येयवर्षायुषां सम्यक्त्व-

१ न जघन्यायुःस्थितौ प्रतिपद्यते नैव पूर्वप्रतिपन्नः। शेषे पूर्वप्रतिपन्नो देशविरतिवर्जिते भवेत् ॥ १ ॥

श्रुतयोः प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येवेति। द्वारम्। 'ओहेण विभागेण य णाणी पडिवज्जए चउरो'त्ति ओघेन–सामान्येन ज्ञानी प्रतिपद्यते चत्वार्यपि नयमतेन, पूर्वप्रतिपन्नस्त्वस्त्येव, विभागेन चाभिनिबोधिकश्रुतज्ञानी युगपदाद्यसामायिकद्वयप्रतिपत्ता सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येवेति, उपरितनसामायिकद्वयस्यापि प्रतिपद्यमानकः सम्भवति, इतरस्त्वस्त्येवेति, अवधिज्ञानी सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्न एव न प्रतिपद्यमानकः, देशविरतिसामायिकं तु न प्रतिपद्यते, गुणपूर्वकत्वात् तदवाप्तेः, स्यात् पुनः पूर्वप्रतिपन्नः, सर्वविरतिसामायिकं तु प्रतिपद्यते, पूर्वप्रतिपन्नोऽपि भवति, मनःपर्यायज्ञानी देशविरतिरहितस्य त्रयस्य पूर्वप्रतिपन्न एव, न प्रतिपद्यमानकः, युगपद्वा सह तेन चारित्रं प्रतिपद्यते तीर्थकृद्, उक्तं च–"पडिवन्नंमि चरित्ते चउणाणी जाव छउमत्थो" त्ति, भवस्थः केवली पूर्वप्रतिपन्नः सम्यक्त्वचारित्रयोः न तु प्रतिपद्यमानक इति गाथार्थः ॥ ८१९ ॥ गतं द्वारद्वयं, साम्प्रतं योगोपयोगशरीरद्वाराभिधित्सयाऽऽह—

**चउरोऽवि तिविहजोगे उवओगदुगंमि चउर पडिवज्जे। ओरालिए चउक्कं सम्मसुय विउव्विए भयणा ॥८२०॥**

व्याख्या—'चत्वार्यपि' सामायिकानि सामान्यतः 'त्रिविधयोगे' मनोवाक्कायलक्षणे सति प्रतिपत्तिमाश्रित्य विवक्षितकाले सम्भवन्ति, ( ग्रंथाग्रम् ८५०० ) प्राक्प्रतिपन्नतां त्वधिकृत्य विद्यन्त एव, विशेषतस्त्वौदारिककाययोगवति योगत्रये चत्वार्युभयथाऽपि, वैक्रियकाययोगवति तु सम्यक्त्वश्रुते उभयथाऽपि, आहारककाययोगवति तु देशविरतिरहितानि त्रीणि सम्भवन्ति, तैजसकार्मणकाययोग एव केवले अपान्तरालगतावाद्यं सामायिकद्वयं प्राक्प्रतिपन्नतामधिकृत्य स्यात्,

१ प्रतिपन्ने चारित्रे चतुर्ज्ञानी यावच्छद्मस्थः

मनोयोगे केवले न किञ्चित्, तस्यैवाभावाद्, एवं वाग्योगेऽपि, कायवाग्योगद्वये तु स्याद् द्वयमाद्यं प्राक्प्रतिपन्नतामधिकृत्य, सम्यक्त्वात् प्रतिपततो विकलेन्द्रियोपपातिषु घण्टालालान्यायेनेति विस्तरेणालम्। द्वारम्। 'उवओगदुगंमि चउरो पडिवज्जे' त्ति उपयोगद्वये–साकारानाकारभेदे चत्वारि प्रतिपद्यते, प्राक्प्रतिपन्नस्तु विद्यत एव, अत्राह–'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स भवन्ती' त्यागमादनाकारोपयोगे सामायिकलब्धिविरोधः, उच्यते, प्रवर्धमानपरिणामजीवविषयत्वात् तस्यागमस्य, अवस्थितौपशमिकपरिणामापेक्षया चानाकारोपयोगे सामायिकलब्धिप्रतिपादनादविरोध इति, आह च भाष्यकारः–"ऊसरदेसं दड्ढेल्लयं च विज्झाइ वणदवो पप्प। इय मिच्छस्स अणुदए उवसमसंमं लहइ जीवो ॥ १ ॥" अवस्थितपरिणामता चास्य–'जं मिच्छस्साणुदओ ण हायए तेण तस्स परिणामो। जं पुण सयमुवसंतं ण वड्ढएऽवट्ठितो तेणं ॥२॥ दारं। 'ओरालिए चउक्कं सम्मसुत विउव्विए भयण' त्ति औदारिके शरीरे सामायिकचतुष्कमुभयथाऽप्यस्ति, सम्यक्त्वश्रुतयोर्वैक्रियशरीरे भजना–विकल्पना कार्या, एतदुक्तं भवति–सम्यक्त्वश्रुतयोर्वैक्रियशरीरी प्रतिपद्यमानकः पूर्वप्रतिपन्नश्चास्ति, उपरितनसामायिकद्वयस्य तु प्राक्प्रतिपन्न एव, विकुर्वितवैक्रियशरीरश्चारणश्रावकादिः श्रमणो वा, न प्रतिपद्यमानकः, प्रमत्तत्वात्, शेषशरीरविचारो योगद्वारानुसारतोऽनुसरणीय इति गाथार्थः ॥८२०
द्वारत्रयं गतं, साम्प्रतं संस्थानादिद्वारत्रयावयवार्थप्रतिपादनायाह—

१ ऊषरदेशं दग्धं च विध्याति वनदवः प्राप्य। इति मिथ्यात्वस्यानुदये औपशमिकसम्यक्त्वं लभते जीवः ॥ १ ॥ २ यन्मिथ्यात्वस्यानुदयो न हीयते तेन तस्य परिणामः। यत्पुनः स्वयमुपशान्तं न वर्धते अवस्थितस्तेन ॥ १ ॥

सव्वेसुवि संठाणेसु लहइ एमेव सव्वसंघयणे । उक्कोसजहण्णं वज्जिऊण माणं लहे मणुओ ॥ ८२१ ॥ दारं ॥

व्याख्या—संस्थितिः संस्थानम्—आकारविशेषलक्षणं, तच्च षोढा भवति, उक्तं च—"समचउरंसे णग्गोहमंडले साइ वामणे खुज्जे । हुंडेऽवि य संठाणे जीवाणं छम्मुणेयव्वा ॥१॥ तुल्लं वित्थडबहुलं उस्सेहबहुं च मडहकुट्ठं च । हेट्ठिलकायमडहं सव्वत्थासंठियं हुंडं ॥ २ ॥" इत्यादि, तत्र सर्वेष्वपि संस्थानेषु 'लभते' प्रतिपद्यते चत्वार्यपि सामायिकानि, प्राक्प्रतिपन्नोऽप्यस्तीत्यध्याहारः, 'एमेव सव्वसंघयणे' त्ति एवमेव सर्वसंहननविषयो विचारो वेदितव्यः, तानि च षट् संहननानि भवन्तीति, उक्तं च—"वज्जरिसभणारायं पढमं बितियं च रिसभणारायं । णाराय अद्धणारायं कीलिया तहय छेवट्टं ॥ १ ॥ रिसभो उ होइ पट्टो वज्जं पुण कीलिया मुणेयव्वा । उभओमक्कडबंधं णारायं तं वियाणाहि ॥ २ ॥" इह चेत्थंभूतास्थिसञ्चयोपमितः शक्तिविशेषः संहननमुच्यते न त्वस्थिसञ्चय एव, देवानामस्थिरहितानामपि प्रथमसंहननयुक्तत्वात् । 'उक्कोसजहण्णं वज्जिऊण माणं लभे मणुओ' त्ति उत्कृष्टं जघन्यं च वर्जयित्वा मानं—शरीरप्रमाणं लभते—प्रतिपद्यते मनुजः प्रकरणादनुवर्तमानं चतुर्विधमपि सामायिकं, प्राक् प्रतिपन्नोऽपि विद्यत इति गाथार्द्धहृदयम्, अन्यथा नारकादयोऽपि सामान्येन सामायिकद्वयं त्रीणि वा लभन्त एवेति, उक्तं च—"किं[3] जहण्णोगाहणगा पडिवज्जंति उक्कोसोगाहणगा अजहण्णुक्कोसोगाहणग त्ति पुच्छा ?, गोतमा ! णेरइयदेवा ण जहण्णोगाहणगा किंचि पडिवज्जंति, पुव्वपडिवण्णगा पुण सिया सम्मत्तसुताण, ते चेव अजहण्णुक्कोसोगाहणगा उक्कोसोगाहणगा य सम्मत्तसुते पडिवज्जंति, णो सेसेत्ति । पुव्वपडिवण्णगा दोवि दोण्हं चेव । तिरिएसु पुच्छा ?, गोतमा ! एगेंदिया तिसुवि ओगाहणासु ण किंचि पडिवज्जंति, णावि पुव्वपडिवण्णगा । जहण्णोगाहणगा विगलिंदिया सम्मत्तसुयाणं पुव्वपडिवण्णगा हवेज्जा ण पडिवज्जमाणगा, अजहण्णुक्कोसोगाहणगा उक्कोसोगाहणगा पुण ण पुव्वपडिवण्णा णावि पडिवज्जमाणगा, सेसतिरिया जहण्णोगाहणगा सम्मत्तसुयाण पुव्वपडिवण्णगा होज्जा णो पडिवज्जमाणगा, अजहण्णुक्कोसोगाहणगा पुण तिण्हं दुहावि संति, उक्कोसोगाहणगा दोण्हं दुहावि । मणुएसु पुच्छा ?, गोतमा ! संमुच्छिममणुस्से पडुच्च तिसुवि ओगाहणासु चउण्हंपि सामाइयाणं ण पुव्वपडिवण्णगा नो पडिवज्जमाणगा । गब्भवक्कंतिय जहण्णोगाहणमणूसा सम्मत्तसुयाण पुव्वपडिवण्णगा होज्जा णो पडिवज्जमाणगा, अजहण्णुक्कोसोगाहणगा पुण चउण्हवि दुधावि संति, उक्कोसोगाहणगा पुण दुण्हं दुधावी' त्यादि, अलं प्रसङ्गेन ॥ गतं द्वारत्रयम्, अधुना लेश्याद्वारावयवार्थमभिधित्सुराह—

सम्मत्तसुयं सव्वासु लहइ सुद्धासु तीसु य चरित्तं । पुव्वपडिवण्णगो पुण अण्णयरीए उ लेसाए ॥ ८२२ ॥

व्याख्या—सम्यक्त्वं च श्रुतं चेति एकवद्भावस्तत् सम्यक्त्वश्रुतं 'सर्वासु' कृष्णादिलेश्यासु 'लभते' प्रतिपद्यते, 'शुद्धासु' तेजोलेश्याद्यासु तिसृष्वेव, चशब्दस्यावधारणार्थत्वात्, 'चारित्रं' विरतिलक्षणं, लभत इति वर्तते, एवं प्रतिपद्यमानकमभिकृत्य लेश्याद्वारं निरूपितम्, अधुना प्राक्प्रतिपन्नमधिकृत्याऽऽह—'पुव्वपडिवण्णओ पुण अण्णतरीए उ लेसाए' पूर्वप्रतिपन्नकः पुनरन्यतरस्यां तु लेश्यायां—कृष्णाद्यभिधानायां भवति । आह—मतिश्रुतज्ञानलाभचिन्तायां शुद्धासु तिसृषु प्रतिपद्यमानक उक्तः कथमिदानीं सर्वास्वभिधीयमानः सम्यक्त्वश्रुतप्रतिपत्ता न विरुध्यत इति ?, उच्यते, तत्र कृष्णादिद्रव्यसाचिव्यजनिताऽऽत्मपरिणामरूपां भावलेश्यामाश्रित्यासावुक्तः, इह त्ववस्थितकृष्णादिद्रव्यरूपा द्रव्यलेश्यामेव इत्यतो न विरोधः, उक्तं च—"से[2] णूणं भंते ! किण्हलेसा णीललेस्सं पप्प णो तारूवत्ताए णो तावण्णत्ताए णो तागंधत्ताए णो तारसत्ताए णो ताफासत्ताए भुज्जो भुज्जो परिणमति ?, हंता गोतमा ! किण्णलेस्सा णीललेस्सं पप्प णो तारूवत्ताए जाव परिणमति, से केणट्ठेणं भंते ! एवं वुच्चति—किण्हलेस्सा णीललेस्सं पप्प जाव णो परिणमइ ?, गोतमा !

---

१ समचतुरस्रं न्यग्रोधमण्डलं सादि वामनं कुब्जम् । हुण्डमपि च संस्थानानि जीवानां षड् ज्ञातव्यानि ॥१॥ तुल्यं विस्तारबहुलमुत्सेधबहुलं च मडभकोष्ठं च । अधस्तनकायमडभं सर्वत्रासंस्थितं हुण्डम् ॥ २ ॥ २ वज्रर्षभनाराचं प्रथमं द्वितीयं च ऋषभनाराचम् । नाराचमर्धनाराचं कीलिका तथैव सेवार्तम् ॥ १ ॥ ऋषभस्तु भवति पट्टो वज्रं पुनः कीलिका ज्ञातव्या । उभयतो मर्कटबन्धो नाराचं तत् विजानीहि ॥ २ ॥ ३ किं जघन्यावगाहना प्रतिपद्यन्ते उत्कृष्टावगाहनका

१ अजघन्योत्कृष्टावगाहना इति पृच्छा ?, गौतम ! नैरयिकदेवा न जघन्यावगाहना किञ्चित्प्रतिपद्यन्ते, पूर्वप्रतिपन्नकाः पुनः स्युः सम्यक्त्वश्रुतयोः त एवाजघन्योत्कृष्टावगाहना उत्कृष्टावगाहनाश्च सम्यक्त्वश्रुते प्रतिपद्यन्ते, न शेषे इति । पूर्वप्रतिपन्नका द्वयेऽपि द्वयोरेव । तिर्यक्षु पृच्छा ?, गौतम ! एकेन्द्रिया तिसृष्वप्यवगाहनासु न किञ्चित् प्रतिपद्यन्ते, नापि पूर्वप्रतिपन्ना । जघन्यावगाहना विकलेन्द्रिया सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्ना भवेयुर्न प्रतिपद्यमाना, अजघन्योत्कृष्टावगाहना उत्कृष्टावगाहना पुनर्न पूर्वप्रतिपन्ना नापि प्रतिपद्यमाना, शेषतिर्यञ्चो जघन्यावगाहना सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्ना भवेयुर्न प्रतिपद्यमाना, अजघन्योत्कृष्टावगाहना पुनस्त्रयाणां द्विधाऽपि सन्ति, उत्कृष्टावगाहना द्वयोर्द्विधाऽपि । मनुजेषु पृच्छा ?, गौतम ! सम्मूर्छनजमनुष्यान् प्रतीत्य तिसृष्वप्यवगाहनासु चतुर्णामपि सामायिकादीनां न पूर्वप्रतिपन्ना न प्रतिपद्यमाना । गर्भव्युत्क्रान्तिकजघन्यावगाहनमनुष्या

१ सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्ना भवेयुर्न प्रतिपद्यमाना, अजघन्योत्कृष्टावगाहना पुनश्चतुर्णामपि द्विधाऽपि सन्ति, उत्कृष्टावगाहना पुनर्द्वयोर्द्विधाऽपि । २ अथ नूनं भदन्त ! कृष्णलेश्या नीललेश्यां प्राप्य न तद्रूपतया नो तद्वर्णतया न तद्गन्धतया न तद्रसतया न तत्स्पर्शतया भूयो भूयः परिणमति ?, हन्त गौतम कृष्णलेश्या नीललेश्यां प्राप्य न तद्रूपतया यावत्परिणमति, अथ केनार्थेन भदन्त ! एवं प्रोच्यते—कृष्णलेश्या नीललेश्यां प्राप्य यावन्न परिणमति ?, गौतम !

आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया, किण्हलेस्सा णं सा णो खलु णीललेसा, तत्थ गता उसक्कति वा अहिसक्कइ वा, से तेणट्ठेणं गोतमा! एवं वुच्चति–किण्हलेस्सा णीललेस्सं पप्प जाव णो परिणमति, अयमस्यार्थः–'आगार' इत्यादि, आकार एव भाव आकारभावः, आकारभाव एव आकारभावमात्रं, मात्रशब्दः खल्वाकारभावव्यतिरिक्तप्रतिविम्बादिधर्मान्तरप्रतिषेधवाचकः, अतस्तेनाकारभावमात्रेणैवासौ नीललेश्या स्यात्, न तु तत्स्वरूपापत्तितः, तथा प्रतिरूपो भागः प्रतिभागः, प्रतिविम्बमित्यर्थः, प्रतिभाग एव प्रतिभागमात्रं, मात्रशब्दो वास्तवपरिणामप्रतिषेधवाचकः, अतस्तेन प्रतिभागमात्रेणैव असौ नीललेश्या स्यात्, न तु तत्स्वरूपत एवेत्यर्थः, स्फटिकवदुपधानवशादुपधानरूप इति दृष्टान्तः ततश्च स्वरूपेण कृष्णलेश्यैवासौ न नीललेश्या, किं तर्हि?, तत्र गतोऽत्सर्पति, किमुक्तं भवति?–तत्रस्थैव–स्वरूपस्थैव नीललेश्यादि लेश्यान्तरं प्राप्योत्सर्पते इत्याकारभावं प्रतिविम्बभागं वा नीललेश्यासम्बन्धिनमासादयतीत्यर्थः "एवं नीलेलेसा काउलेसं पप्प जाव णीललेसा णं सा णो खलु काउलेसा, तत्थ गता उस्सक्कइ वा ओसक्कइ वा" अयं भावार्थः–तत्र गतोत्सर्पति, किमुक्तं भवति?–तत्रस्थैव स्वरूपस्थैवोत्सर्पति, आकारभावं प्रतिविम्बभागं वा कापोतलेश्यासम्बन्धिनमासादयति, तथाऽपसर्पति वा–नीललेश्यैव कृष्णलेश्यां प्राप्य, भावार्थस्तु पूर्ववत्, 'एवं काउलेसा तेउलेसं पप्प,

१ आकारभावमात्रेण वा तस्याः स्यात् प्रतिभागमात्रेण वा तस्याः स्यात्, कृष्णलेश्या सा, न खलु नीललेश्या सा, तत्र गता अवष्वष्कति वा अभिष्वष्कति वा, तत् तेनार्थेन गौतम! एवमुच्यते–कृष्णलेश्या नीललेश्यां प्राप्य यावन्न परिणमति। २ एव नीललेश्या कापोतलेश्यां प्राप्य यावन्नीललेश्या सा न खलु कापोतलेश्या, तत्र गतोत्सर्पति वा अपसर्पति वा। ३ एव कापोतलेश्या तेजोलेश्या प्राप्य,

तेउलेसा पम्हलेसं पप्प, पम्हलेसा सुक्कलेसं पप्प, एवं सुक्कलेसा पम्हलेसं पप्प' भावार्थस्तु पूर्ववत्, 'एवं किण्हेलसा नीललेसं पप्प, किण्हलेसा काउलेसं पप्पे, किण्हलेसा तेउलेसं पप्प, एवं जाव सुक्कलेसं पप्प, 'एवमेगेगा सव्वाहिं चारिज्जति', ततश्च सम्यक्त्वश्रुतं सर्वास्ववस्थितकृष्णादिद्रव्यलेश्यासु लभते नारकादिरपि, शुद्धासु तेजोलेश्याद्यासु तत्तद्द्रव्यसाचिव्यसञ्जातात्मपरिणामलक्षणासु तिसृषु च चारित्रं, शेषं पूर्ववदिति गाथार्थः॥ ८२२॥ द्वारं॥ साम्प्रतं परिणामद्वारावयवार्थं प्रतिदर्शयन्नाह–

**वड्ढंते परिणामे पडिवज्जइ सो चउण्हमण्णयरं। एमेवऽवट्ठियंमिवि हायंति न किंचि पडिवज्जे॥ ८२३॥**

व्याख्या–परिणामः–अध्यवसायविशेषः, तत्र शुभशुभतररूपतया वर्द्धमाने परिणामे प्रतिपद्यते स 'चतुर्णां' सम्यक्त्वादिसामायिकानामन्यतरत्, 'एमेवऽवट्ठियंमिवि' त्ति एवमेवावस्थितेऽपि शुभे परिणामे प्रतिपद्यते स चतुर्णामन्यतरदिति, 'हायंति ण किंचि पडिवज्जे' त्ति क्षीयमाणे शुभे परिणामे न किञ्चित् सामायिकं प्रतिपद्यते, प्राक्प्रतिपन्नस्तु त्रिष्वपि परिणामेषु भवतीति गाथार्थः॥ ८२३॥ द्वारम्॥ अधुना वेदनासमुद्घातकर्मद्वारद्वयव्याचिख्यासयाऽऽह–

**दुविहाएँ वेयणाए पडिवज्जइ सो चउण्हमण्णयरं। असमोहओऽवि एमेव पुव्वपडिवण्णए भयणा॥ ८२४॥**

व्याख्या–द्विविधायां वेदनायां–सातासातरूपाया सत्यां प्रतिपद्यते स चतुर्णामन्यतरत्, प्राक्प्रतिपन्नश्च भवति,

१ तेजोलेश्या पद्मलेश्यां प्राप्य, पद्मलेश्या शुक्लेश्यां प्राप्य, एव शुक्लेश्या पद्मलेश्यां प्राप्य। एव कृष्णलेश्या नीललेश्यां प्राप्य कृष्णलेश्या कापोतलेश्या प्राप्य कृष्णलेश्या तेजोलेश्यां प्राप्य, एव यावत् शुक्लेश्या प्राप्य, एवमेकैका सर्वाभिश्चार्यते

'असमोहतोऽवि एमेव' त्ति असमवहतोऽप्येवमेव प्रतिपद्यते स चतुर्णामन्यतरत्, प्राक्प्रतिपन्नश्च भवति, समवहतस्तु केवलिसमुद्घातादिना सप्तविधेन प्रतिपद्यते, किन्तु 'पुव्वपडिवण्णए भयण' त्ति पूर्वप्रतिपन्नके समवहते विचारयितुमारब्धे भजना सेवना समर्थना कार्या, पूर्वप्रतिपन्नो भवतीत्यर्थः, सप्तविधत्वं पुनः समुद्घातस्य, यथोक्तम्–'केवलि कसायमरणे वेदण वेउव्वि तेय आहारे। सत्तविह समुग्घातो पन्नत्तो वीयरागेहिं॥ १॥' इह च पूर्वप्रतिपन्नके भजना, समवहतो हि सामायिकद्वयस्य त्रयस्य वा पूर्वप्रतिपन्नको भावनीय इति गाथार्थः॥ ८२४॥ गतं द्वारद्वयं, निर्वेष्टनद्वारप्रतिपादनायाह–

**दव्वेण य भावेण य निव्वेढ्ढंतो चउण्हमण्णयरं। नरएसु अणुव्वट्टे दुगं चउक्कं सिया उ उव्वट्टे॥ ८२५॥**

व्याख्या–द्रव्यतो भावतश्च निर्वेष्टयन् चतुर्णामन्यतरत् प्रतिपद्यते प्राक्प्रतिपन्नश्चास्ति, द्रव्यनिर्वेष्टनं कर्मप्रदेशविसङ्घातरूपं भावनिर्वेष्टनं क्रोधादिहानिलक्षणं, तत्र सर्वमपि कर्म निर्वेष्टयंश्चतुष्टयं लभते, विशेषतस्तदावरणं ज्ञानावरणं निर्वेष्टयन् श्रुतसामायिकमाप्नोति मोहनीयं तु शेषत्रयमिति, संवेष्टयंस्त्वनन्तानुबन्ध्यादीन् न प्रतिपद्यते, शेषकर्म त्वङ्गीकृत्योभयथाऽप्यस्ति। द्वारम्। उद्वर्तनाद्वारमधुना–नरकेषु–अधिकरणभूतेष्वनुद्वर्तयन्, तत्रस्थ एवेत्यर्थः, नरकाद्वेति पाठान्तरं, 'दुगं' ति आद्यं सामायिकद्विकं प्रतिपद्यते, तदेव चाधिकृत्य पूर्वप्रतिपन्नो भवति, उद्वृत्तस्तु 'स्यात्' कदाचित् चतुष्कं प्रतिपद्यते कदाचित् त्रिकं, पूर्वप्रतिपन्नोऽप्यस्त्येवेति गाथार्थः॥ ८२५॥

**तिरिएसु अणुव्वट्टे तिगं चउक्कं सिया उ उव्वट्टे। मणुएसु अणुव्वट्टे चउरो ति दुगं तु उव्वट्टे॥ ८२६॥**

१ केवली कषायो मरण वेदना वैक्रियं तैजस आहारक। सप्तविध. समुद्घात. प्रज्ञप्तो वीतरागै॥ १॥

व्याख्या—'तिर्यक्षु' गर्भव्युत्क्रान्तिकेषु संज्ञिष्वनुद्वृत्तः सन् 'त्रिकम्' आद्यं सामायिकत्रयमधिकृत्य प्रतिपत्ता प्राक्प्रतिपन्नश्च भवतीत्यध्याहारः, 'चउक्कं सिया उ उवट्टे' उद्वृत्तस्तु मनुष्यादिष्वायातः 'स्यात्' कदाचिच्चतुष्टयं स्यात् त्रिकं स्यात् द्विकमधिकृत्योभयथाऽपि भवतीति, 'मणुएसु अणुवट्टे चउगो त्ति दुगं तु उवट्टे' मनुष्येष्वनुद्वृत्तः सन् चत्वारि प्रतिपद्यते प्राक्प्रतिपन्नश्च भवति, त्रीणि द्विकं, तुशब्दो विशेषणे, उद्वृत्तस्तिर्यग्नारकामरेष्वायातः त्रीणि द्विकं वाऽधिकृत्योभयथाऽपि भवतीति गाथार्थः ॥ ८२६ ॥

**देवेसु अणुव्वट्टे दुगं चउक्कं सिया उ उव्वट्टे। उव्वट्टमाणओ पुण सव्वोऽवि न किंचि पडिवज्जे ॥ ८२७ ॥**

व्याख्या—देवेष्वनुद्वृत्तः सन् 'द्विकम्' आद्यं सामायिकद्वयमाश्रित्योभयथाऽपि भवतीति क्रिया, 'चउक्कं सिया उ उवट्टे' त्ति पूर्ववत्, उद्वर्तमानकः पुनरपान्तरालगतौ सर्वोऽप्यमरादिर्न किञ्चित् प्रतिपद्यते, प्राक्प्रतिपन्नस्तु द्वयोर्भवतीति गाथार्थः ॥ ८२७ ॥ द्वारम् ॥ आश्रवकरणद्वारप्रतिपादनायाह—

**णीसवमाणो जीवो पडिवज्जइ सो चउण्हमण्णयरं। पुव्वपडिवण्णओ पुण सिय आसवओ व णीसवओ ॥८२८॥**

व्याख्या—निश्रावयन् यस्मात् सामायिकं प्रतिपद्यते, तदावरणं कर्म निर्जरयन्नित्यर्थः, शेषकर्म तु बध्नन्नपि जीव—आत्मा प्रतिपद्यते स चतुर्णामन्यतरत्, पूर्वप्रतिपन्नकः पुनः स्यादाश्रवको बन्धक इत्यर्थः, निःश्रावको वा, वाशब्दस्य व्यवहितः सम्बन्धः, आह–निर्वेष्टनद्वारादस्य को विशेष इति?, उच्यते, निर्वेष्टनस्य कर्मप्रदेशविसङ्घातरूपत्वात् क्रियाकालो गृहीतः, निःश्रवणस्य तु निर्जरारूपत्वान्निष्ठाकाल इति, अथवा तत्र संवेष्टनवक्तव्यताऽर्थतोऽभिहिताः, इह तु साक्षादिति गाथार्थः ॥ ८२८ ॥ द्वारम् ॥ अधुनाऽलङ्कारशयनासनस्थानचङ्क्रमणद्वारकदम्बकव्याचिख्यासयाऽऽह—

**उम्मुक्कमणुम्मुक्के उम्मुंचंते य केसलंकारे। पडिवज्जेज्जऽन्नयरं सयणाईसुंपि एमेव ॥ ८२९ ॥**

व्याख्या—'उन्मुक्ते' परित्यक्ते 'अनुन्मुक्ते' अपरित्यक्ते अनुस्वारोऽलाक्षणिकः, उन्मुञ्चंश्च केशालङ्कारान्, केशग्रहणं कटककेयूराद्युपलक्षणं, प्रतिपद्येत अन्यतरच्चतुर्णां 'सयणादीसुंपि एमेव' त्ति शयनादिष्वपि द्वारेषु तिसृष्वप्यवस्थास्वेवमेव योजना कार्या, उन्मुक्तशयनोऽनुन्मुक्तशयनः तथोन्मुञ्चन् चतुर्णामन्यतरत् प्रतिपद्यते प्राक्प्रतिपन्नश्च भवति, एवं शेषयोजना कार्या, इति गाथार्थः ॥ ८२९ ॥ उपोद्घातनिर्युक्तौ द्वितीयद्वारगाथायां क्वेति द्वारं गतम्, अधुना केष्विति द्वारं व्याचिख्यासुराह—

**सव्वगयं सम्मत्तं सुए चरित्ते ण पज्जवा सव्वे। देसविरइं पडुच्चा दोण्हवि पडिसेहणं कुज्जा ॥ ८३० ॥**

व्याख्या—अथ केषु द्रव्येषु पर्यायेषु वा सामायिकमिति?, तत्र सर्वगतं सम्यक्त्वं, सर्वद्रव्यपर्यायरुचिलक्षणत्वात् तस्य, तथा 'श्रुते' श्रुतसामायिके 'चारित्रे' चारित्रसामायिके न पर्यायाः सर्वे विषयाः, श्रुतस्याभिलाप्यविषयत्वाद्, द्रव्यस्य चाभिलाप्यानभिलाप्यपर्याययुक्तत्वात्, चारित्रस्यापि 'पढमंमि सव्वजीवा' इत्यादिना सर्वद्रव्यासर्वपर्यायविषयतायाः प्रतिपादितत्वात, देशविरतिं प्रतीत्य द्वयोरपि–सकलद्रव्यपर्यायोः प्रतिषेधनं कुर्यात्, न सर्वद्रव्यविषयं नापि सर्वपर्यायविषयं देशविरतिसामायिकमिति भावना। आह–अयं सामायिकविषयः किंद्वारे प्ररूपित एवेति किं पुनरभिधानम्?, उच्यते, किं तदिति तत्र सामायिकं जातिमात्रमुक्तं, विषयविषयिणोरभेदेन, इह पुनः सामायिकस्य किंद्वार एव द्रव्यत्वगुणत्वनिरूपितस्य ज्ञेयभावेन विषयाभिधानमिति, आह च भाष्यकारः–"कि तन्ति जातिभावेण तत्थ इह णेयभावतोऽभिहित। इह विसयविसयिभेदो तत्थाभेदोवयारो त्ति ॥ १ ॥" गाथार्थः ॥ ८३१ ॥ केष्विति गतं, कथं पुनः सामायिकमवाप्यते?, तत्र चतुर्विधमपि मनुष्यादिस्थानावाप्तौ सत्यामवाप्यत इतिकृत्वा तत्क्रमदुर्लभताख्यापनायाह निर्युक्तिकारः—

**माणुस्स खेत्त जाई कुलरूवारोग्गमाउयं बुद्धी। सवणोग्गह सद्धा संजमो य लोगंमि दुलहाइं ॥ ८३१ ॥**

इंदियलद्धी निव्वत्तणा य पज्जत्ति निरुवहयखेमं। धायारोग्गं सद्धा गाहगउवओग अट्ठो य (अन्यदीया)

**चोल्लग पासग धण्णे जूए रयणे य सुमिण चक्के य। चम्मजुगे परमाणू दस दिट्ठन्ता मणुयलंभे ॥ ८३२ ॥**

व्याख्या—'मानुष्यं' मनुजत्वं 'क्षेत्रम्' आर्यं 'जातिः' मातृसमुत्था 'कुलं' पितृसमुत्थं 'रूपम्' अन्यूनाङ्गता 'आरोग्यं' रोगाभावः 'आयुष्कं' जीवितं 'बुद्धिः' परलोकप्रवणा 'श्रवणं' धर्मसम्बद्धम् 'अवग्रहः' तदवधारणम् अथवा श्रवणावग्रहो–यत्यवग्रहः 'श्रद्धा' रुचिः 'संयमश्च' अनवद्यानुष्ठानलक्षणः, एतानि स्थानानि लोके दुर्लभानि, एतदवाप्तौ च विशिष्टसामायिकलाभ इति गाथार्थः ॥ ८३२ ॥ अथ चैतानि दुर्लभानि–'इन्द्रियलब्धिः' पञ्चेन्द्रियलब्धिरित्यर्थः, निर्वर्त्तना च इन्द्रियाणामेव, पर्याप्तिः–स्वविषयग्रहणसामर्थ्यलक्षणा, 'निरुवहत'त्ति निरुपहतेन्द्रियता, 'क्षेमं' विषयस्य 'ध्मातं' सुभिक्षम् 'आरोग्यं' नीरोगता 'श्रद्धा' भक्तिः 'ग्राहक' गुरु 'उपयोगः' श्रोतुस्तदभिमुखता 'अट्ठो य' त्ति अर्थित्वं च

---

१ किं तदिति (द्वारे) जातिद्वारेण तत्रेह ज्ञेयभावतोऽभिहितम्। अत्र विषयविषयिभेद' तत्राभेदोपचार इति ॥ १ ॥ * भावना प्र०

धर्म इति गाथार्थः ॥ भिन्नकर्तृकी किलेयम् । जीवो मानुष्यं लब्ध्वा पुनस्तदेव दुःखेन लप्स्यते, बह्वन्तरायान्तरितत्वात्, ब्रह्मदत्तचक्रवर्तिमित्रब्राह्मणचोल्लकभोजनवत्, अत्र कथानकम्–बंभदत्तस्स एगो कप्पडिओ ओलग्गओ, बहुसु आवतीसु अवत्थासु य सव्वत्थ सहायो आसि, सो य रज्जं पत्तो, बारससंवच्छरिओ अभिसेओ कओ, कप्पडिओ तत्थ अलियावंपि ण लहति, ततोऽणेण उवाओ चिन्तितो, उवाहणाओ धए बंधिऊण धयवाहएहिं समं पधावितो, रण्णा दिट्ठो, उत्तिण्णेणं अवगूहितो, अण्णे भणंति–तेण दारवाले सेवमाणेण बारसमे संवच्छरे राया दिट्ठो, ताहे राया तं दट्ठूण संभंतो, इमो सो वराओ मम सुहदुक्खसहायगो, एत्ताहे करेमि विर्त्ति, ताधे भणति– किं देमि त्ति ?, सो भणति–देह करचोल्लए घरे घरे जाव सव्वमि भरहे, जाधे णिट्ठितं होज्जा ताहे पुणोवि तुब्भ घरे आढवेऊण भुंजामि, राया भणति–किं ते एतेण ?, देसं ते देमि, तो सुहं छत्तछायाए हत्थिखंधवरगतो हिंडिहिसि, सो भणति–किं मम एद्दहेण आहट्टेण ?, ताहे सो दिण्णो चोल्लगो, ततो पढमदिवसे राइणो घरे जिमितो, तेण से जुवलयं दीणारो य दिण्णो, एवं सो परिवाडीए सव्वेसु राउलेसु

१ ब्रह्मदत्तस्यैक. कार्पटिकोऽवलगक, बह्वीष्वापत्सु अवस्थासु च सर्वत्र सहाय आसीत्, स च राज्यं प्राप्तः, द्वादशवार्षिकोऽभिषेक कृतः, कार्पटिकस्तत्र प्रवेशमपि न लभते, ततोऽनेनोपायश्चिन्तित, उपानहो ध्वजे बद्ध्वा ध्वजवाहकैः समं प्रधावितः, राज्ञा दृष्ट, उत्तीर्णेनावगूढ, अन्ये भणन्ति–तेन द्वारपालान् सेवमानेन द्वादशे संवत्सरे राजा दृष्ट, तदा राजा त दृष्ट्वा सभ्रान्त, अयं स वराको मम सुखदुःखसहायक, अधुना करोमि वृत्तिं, तदा भणति–किं ददामीति, स भणति–देहि करभोजन (करतया यद्भोजनं) गृहे गृहे यावत् सर्वस्मिन् भरते, यदा निष्ठित भवेत्तदा पुनरपि तव गृहादारभ्य भुञ्जे, राजा भणति–किं ते एतेन ?, देश तुभ्य ददामि, तत. सुख छत्रच्छायायां वरहस्तिस्कन्धगतो हिण्डिष्यसे, स भणति–किं ममैतावता आडम्बरेण (उपाधिना) ?, तदा तत्तस्मै दत्त (कर) भोजनं, तत. प्रथमदिवसे राज्ञो गृहे जिमित., तेन तस्मै युगल दीनारश्च दत्त, एवं स परिपाट्या सर्वेषु राजकुलेषु

बत्तीसाए रायवरसहस्सेसु तेसिं च जे भोइया, तत्थ य णगरे अणेगाओ कुलकोडीओ, णगरस्स च्चेव सो कता अंतं काहिति, ताधे गामेसु ताहे पुणो भरहवासस्स, अवि सो वच्चेज्ज अंतं ण य माणुसत्तणातो भट्ठो पुणो माणुसत्तणं लहइ ?, 'पासग' त्ति, चाणक्कस्स सुवण्णं नत्थि, ताधे केण उवाएण विढविज्ज सुवण्णं ?, ताधे जंतपासया कता, केइ भणंति—वरदिण्णगा, ततो एगो दक्खो पुरिसो सिक्खावितो, दीणारथालं भरियं, सो भणति–जति ममं कोइ जिणति सो थालं गेण्हतु, अह अहं जिणामि तो एगं दीणारं जिणामि, तस्स इच्छाए जंतं पडति अतो ण तीरइ जिणितुं, जहा सो ण जिप्पइ एवं माणुसलंभोऽवि, अवि णाम सो जिप्पेज्ज ण य माणुसातो भट्ठो पुण माणुसत्तणं २ । 'धण्णे' त्ति जत्तियाणि भरहे धण्णाणि ताणि सव्वाणि पिण्डिताणि, तत्थ पत्थो सरिसवाणं छूढो, ताणि सव्वाणि आडुआलित्ताणि, तत्थेगा जुण्णथेरी सुप्पं गहाय ते विणिज्ज पुणोऽविय पत्थं पूरेज्ज, अवि सा देवप्पसादेण पूरेज्ज ण य माणुसत्तणं ३ । 'जूए' जधा एगो

१ द्वात्रिंशति वरराज्यसहस्रेषु तेषां च ये भोजिकाः (ग्रामाधिपतय), तत्र च नगरेऽनेकाः कुलकोट्यः, नगरस्यैव स कदाऽन्त करिष्यति ?, तदा ग्रामेषु तदा पुनर्भरतवर्षस्य, अपि स व्रजेदन्त न च मानुष्याद्भ्रष्ट पुनर्मानुष्य लभते १ । 'पाशक' इति, चाणक्यस्य सुवर्णं नास्ति, तदा केनोपायेन उपार्जयामि सुवर्णं ?, तदा यन्त्रपाशकाः कृता., केचिद्भणन्ति–वरदत्ता, तत एको दक्ष पुरुष. शिक्षित., दीनारस्थालं भृतं, स भणति–यदि मां कोऽपि जयति स स्थाल गृह्णातु, अथाहं जयामि तदैक दीनारं जयामि, तस्येच्छया यन्त्र पतति अतो न शक्यते जेतु, यथा स न जीयते एवं मानुष्यलाभोऽपि, अपि नाम स जीयेत न च मानुष्याद्भ्रष्ट पुनर्मानुष्यम् २ । 'धान्यानी'ति, यावन्ति भरते धान्यानि तानि सर्वाणि पिण्डितानि, तत्र प्रस्थः सर्षपाणां क्षिप्तः, तानि सर्वाणि मिश्रितानि (विलोडितानि) तत्रैका जीर्णस्थविरा सूर्पं गृहीत्वा तानि उच्चिनुयात् पुनरपि च पूरयेत्प्रस्थम्, अपि सा देवप्रसादेन पूरयेत् न च मानुष्यम् ३ । 'द्यूत' यथा एको

राया, तस्स सभा अट्ठखंभसतसंनिविट्ठा जत्थ अत्थायणयं देति, एक्केक्को य खंभो अट्ठसयंसिओ, तस्स रण्णो पुत्तो रज्जकंखी चिंतेति–थेरो राया, मारिऊण रज्जं गिण्हामि, तं च अमच्चेण णायं, तेण रण्णो सिट्ठं, ततो राया तं पुत्तं भणति—अम्ह जो ण सहइ अणुक्कमं सो जूतं खेलति, जति जिणति रज्जं से दिज्जति, कह पुण जिणियव्वं ?, तुज्झ एगो आओ, अवसेसा अम्हं आया, जति तुमं एगेण आएण अट्ठसतस्स खंभाणं एक्केक्कं अंसियं अट्ठसते वारा जिणासि तो तुज्झ रज्जं, अवि य देवताविभासा ४ । 'रयणे' त्ति, जहा एगो वाणियओ बुड्ढो, रयणाणि से अत्थि, तत्थ य महे महे अण्णे वाणियया कोडिपडागाओ उब्भेंति, सो ण उब्भवेति, तस्स पुत्तेहिं थेरे पउत्थे ताणि रयणाणि देसी वाणिययाण हत्थे विक्कीताणि, वरं अम्हेऽवि कोडिपडागाओ उब्भवेन्ता, ते य वाणियगा समंततो पडिगया पारसकूलादीणि, थेरो आगतो, सुतं जधा विक्कीताणि, ते अंबाडेति, लहुं रयणाणि आणेह, ताहे ते सव्वतो हिंडितुमारद्धा, किं ते सव्वरयणाणि पिंडिज्ज ?, अविय

१ राजा, तस्य सभाऽष्टोत्तरस्तम्भशतसन्निविष्टा यत्रास्थानिकां ददाति, एकैकश्च स्तम्भोऽष्टशतास्रिक, तस्य राज्ञ. पुत्रो राज्यकाङ्क्षी चिन्तयति–वृद्धो राजा, मारयित्वा राज्य गृह्णामि, तच्चामात्येन ज्ञातं, तेन राज्ञे शिष्ट, ततो राजा त पुत्र भणति–अस्माक यो न सहतेऽनुक्रम स द्यूत क्रीडति, यदि जयति राज्य तस्मै दीयते, कथं पुनर्जेतव्यम् ? तवैक आय. अवशेषा अस्माकमाया, यदि त्वमेकेनायेनाष्टशतस्य स्तम्भानामेकैकमस्रिमष्टशतवारान् जयसि तदा तव राज्यम्, अपिच देवताविभाषा ४ । 'रत्नानी'ति, यथैको वणिक् वृद्ध, रत्नानि तस्य सन्ति, तत्र च महे महेऽन्ये वणिज कोटीपताका उच्छ्रयन्ति, स नोच्छ्रयति, तस्य पुत्रै स्थविरे प्रोषिते तानि रत्नानि देशीयवणिजां हस्ते विक्रीतानि, वरं वयमपि कोटीपताका उच्छ्रयन्त, ते च वणिज समन्तत प्रतिगता. पारसकूलादीनि (स्थानानि), स्थविर आगत, श्रुत यथा विक्रीतानि, तान् निर्भर्त्सयति, लघु रत्नानि आनयत, तदा ते सर्वतो हिण्डितुमारब्धा, किं ते सर्वरत्नानि पिण्डयेयुः ?, अपि च

देवप्पभावेण विभासा ५। 'सुविणए' त्ति–एगेण कप्पडिएण सुमिणए चंदो गिलितो, कप्पडियाण कथितं, ते भणंति– संपुण्णचंदमंडलसरिसं पोवलियं लभिहिसि, लद्धा घरच्छादणियाए, अण्णेणवि दिट्ठो, सो ण्हाइऊण पुप्फफलाणि गहाय सुविणपाढगस्स कथेति, तेण भणितं–राया भविस्ससि। इत्तो य सत्तमे दिवसे तत्थ राया मतो अपुत्तो, सो य णिव्विण्णो अच्छति, जाव आसो अधियासितो आगतो, तेण तं दट्ठूण हेसितं पदक्खिणीकतो य, ततो विलइओ पुट्ठे, एवं सो राया जातो, ताहे सो कप्पडिओ तं सुणेति, जधा–तेणऽवि दिट्ठो एरिसो सुविणओ, सोवि आदेसफलेण किर राया जातो, सोय चिंतेति–वच्चामि जत्थ गोरसो तं पिवेत्ता सुवामि, जाव पुणो तं चेव सुमिणं पेच्छामि, अत्थि पुण सो पेच्छेज्जा ?, अवि य सो ण माणुसातो ६। 'चक्क'त्ति दारं, इंदपुरं नगरं, इंददत्तो राया, तस्स इट्ठाणं वराणं देवीणं बावीसं पुत्ता, अण्णे भणंति–एक्काए चेव देवीए पुत्ता, राइणो पाणसमा, अण्णा एक्का अमच्चधूया, सा परं परिणिंतेण दिट्ठेल्लिया,

---

१ देवप्रभावेण विभाषा ५। स्वप्नक इति, एकेन कार्पटिकेन स्वप्ने चन्द्रो गिलित., कार्पटिकेभ्य कथित, ते भणन्ति–संपूर्णचन्द्रमण्डलसदर्शी पोलिका लप्स्यसे, लब्धा गृहच्छादनिकया, अन्येनापि दृष्ट', स स्नात्वा पुष्पफलानि गृहीत्वा स्वप्नपाठकाय कथयति, तेन भणित–राजा भविष्यसि। इतश्च सप्तमे दिवसे तत्र राजा मृतोऽपुत्र, स च निर्विण्णस्तिष्ठति, यावदश्वोऽध्यासित (ऽधिवासित) आगत, तेन त दृष्ट्वा हेषित प्रदक्षिणीकृतश्च, ततो विलगित पृष्ठे, एवं स राजा जात, तदा स कार्पटिकस्तत् शृणोति, यथा–तेनापि दृष्ट ईदृश स्वप्न, स स्वादेशफलेन किल राजा जात, स च चिन्तयति–व्रजामि यत्र गोरसस्त पीत्वा स्वपिमि, यावत्पुनस्तमेव स्वप्न प्रेक्षयिष्ये, अस्ति पुन स प्रेक्षेत ?, अपि च स न मानुष्यात् ६। चक्रमिति द्वारम्, इन्द्रपुर नगरम्, इन्द्रदत्तो राजा, तस्येष्टानां वराणा देवीनां द्वाविंशति पुत्रा, अन्ये भणन्ति–एकस्या एव देव्या पुत्रा, राज्ञ प्राणसमा', अन्या एकाऽमात्यदुहिता, सा परं परिणयता दृष्टा,

सा अण्णता कताइ रिउण्हाता समाणी अच्छति, रायणा य दिट्ठा, का एसत्ति ?, तेहिं भणितं–तुब्भे देवी एसा, ताहे सो ताए समं रत्तिं एक्कं वसितो, सा य रितुण्हाता, तीसे गब्भो लग्गो, सा य अमच्चेण भणिएल्लिता–जया तुमं गब्भो आहूतो भवति तदा ममं साहिज्जसु, ताए तस्स कथितं–दिवसो मुहुत्तो जं च रायाएण उल्लवितं सातियंकारो, तेण तं पत्तए लिहितं, सो सारवेति, णवण्हं मासाणं दारओ संजातो, तस्स दासचेडाणि तद्दिवसं जाताणि, तंजहा–अग्गियओ पव्वतओ बहुलियो सागरो य, ताणि यं सहजातगाणि, तेण कलायरियस्स उवणीतो, तेण लेहाइताओ गणियप्पहाणाओ कलाओ गाहितो, जाहे ताओ गाहिंति आयरिया ताधे ताणि तं कड्ढंति वाउलेंति य, पुव्वपरिच्चएणं ताणि रोडेंति, तेण ताणि ण चेव गणिताणि, गहिताओ कलाओ, ते य अण्णे बावीसं कुमारा गाहिज्जंता तं आयरियं पिट्टंति अवयणाणि य भणंति, जति सो आयरिओ पिट्टेति ताहे गंतूण मातूणं साहेंति, ताहे ताओ तं आयरियं खिंसंति–कीस आहणसि ?, किं सुलभाणि

---

१ साऽन्यदा कदाचित् ऋतुस्नाता सती तिष्ठति, राज्ञा च दृष्टा, कैषेति ?, तैर्भणित–युष्माक देव्येषा, तदा स तया सह रात्रिमेकामुषित, सा च ऋतुस्नाता तस्या गर्भो लग्न, सा चामात्येन भणितपूर्वा–यदा तव गर्भ तत्पन्नो भवति तदा मह्य कथये, तया तस्मै कथित–दिवसो मुहूर्तो यच्च राज्ञोल्लप्त सत्यङ्कार, तेन तत्पत्रे लिखित, स संरक्षति, नवसु मासेषु दारकः संजात, तस्य दासचेटास्तद्दिवसे जाता, तद्यथा–अग्नि पर्वतो बाहुलिक सागरश्च, ते च सहजाता, तेन कलाचार्यायोपनीत', तेन लेखादिका गणितप्रधाना कला ग्राहित, यदा ता ग्राहयन्त्याचार्यास्तदा ते त निन्दयन्ति व्याकुलयन्ति च, पूर्वपरिचयेन ते तिरस्कुर्वन्ति तेन ते नैव गणिता, गृहीता कला:, ते चान्ये द्वाविंशति कुमारा ग्राह्यमाणास्तमाचार्यं पिट्टयन्ति अवचनानि च भणन्ति, यदि स आचार्य पिट्टति तदा गत्वा मातृभ्य कथयन्ति, तदा ता तमाचार्यं हीलयन्ति (उपालभन्ते) कथमाहसि?, किं सुलभानि

पुत्तजम्माणि?, अतो ते ण सिक्खिता। इओ य महुराए पव्वयओ राया, तस्स सुता णिव्वुती णाम दारिया, सा रण्णो अलंकिया उवणीता, राया भणति–जो तव रोयति भत्तारो, तो ताए भणितं–जो सूरो वीरो विक्कंतो सो मम भत्ता होउ, से पुण रज्जं दिज्जा, ताधे सा तं बलवाहणं गहाय गता इंदपुरं नगरं, तस्स इंददत्तस्स बहवे पुत्ता, इंददत्तो तुट्ठो चिंतेइ– णूणं अहं अण्णेहिंतो राईहिंतो लट्ठो तो आगता, ततो तेण उस्सितपडागं नगरं कारितं, तत्थ एक्कंमि अक्खे अट्ठ चक्काणि, तेसिं पुरतो धिइल्लिया ठविया, सा अच्छिम्मि विंधितव्वा, ततो इंददत्तो राया सन्नद्धो णिग्गतो सह पुत्तेहिं, सावि कण्णा सव्वालंकारभूसिया एगंमि पासे अच्छति, सो रंगो ते य रायाणो ते य दंडभडभोइया जारिसो दोवतीए, तत्थ रण्णो जेट्ठो पुत्तो सिरिमालीणाम कुमारो, सो भणितो–पुत्त ! एस दारिया रज्जं च घेत्तव्वं, अतो विंध एतं पुत्तलियंति, ताधे सोऽकतकरणो तस्स समूहस्स मज्झे धणुं चेव गेण्हित्तुं ण तरति, कहऽविऽणेण गहितं, तेण जतो वच्चतु ततो वच्चतुत्ति मुक्को

---

१ पुत्रजन्मानि?, अतस्ते न शिक्षिता। इतश्च मथुराया पर्वतो राजा, तस्य सुता निर्वृतिर्नाम दारिका, सा राज्ञेऽलङ्कृतोपनीता, राजा भणति–यस्तुभ्य रोचते भर्त्ता स, ततस्तया भणित–य शूरो वीरो विक्रान्त स मम भर्त्ता भवतु, स पुना राज्य दद्यात्, तदा सा तद्बलवाहन गृहीत्वा गता इन्द्रपुर नगर, तस्येन्द्रदत्तस्य बहव पुत्रा, इन्द्रदत्तस्तुष्टश्चिन्तयति–नूनमहमन्येभ्यो राजभ्यो लष्टस्तत आगता, ततस्तेनोच्छ्रितपताक नगर कारित, तत्रैकस्मिन् अक्षे (अक्षाटके) अष्ट चक्राणि, तेषां पुरत शालभञ्जिका स्थापिता, साऽक्ष्णि वेधितव्या, तत इन्द्रदत्तो राजा सन्नद्धो निर्गत सह पुत्रै, साऽपि कन्या सर्वालङ्कारभूषितैकस्मिन् पार्श्वे तिष्ठति, स रङ्ग ते च राजानस्ते च दण्डभटभोजिका यादृशो द्रौपद्या, तत्र राज्ञो ज्येष्ठ पुत्र श्रीमाली नाम कुमार, स भणित–पुत्र ! एषा दारिका राज्य च ग्रहीतव्यम्, अतो विध्यैनां शालभञ्जिकां इति, तदा सोऽकृतकरण तस्य समूहस्य मध्ये धनुरेव ग्रहीतु न शक्नोति, कथमप्यनेन गृहीतं, तेन यतो व्रजतु ततो व्रजत्विति मुक्त * पण्से प्र.

सेरो, सो चक्के अप्फिडिऊण भग्गो, एवं कस्सइ एक्कं अरगंतरं वोलीणो कस्सइ दोण्णि कस्सइ तिण्णि अण्णेसिं बाहिरेण च्चेव णीति, ताधे राया अधितिं पगतो—अहोऽहं एतहि धरिसितोत्ति, ततो अमच्चेण भणितो—कीस अधितिं करेह ?, राया भणति—एतेहिं अहं अप्पधाणो कतो, अमच्चो भणति—अत्थि अण्णो तुब्भ पुत्तो मम धूताए तणइओ सुरिंददत्तो णाम, सो समत्थो विंधितुं, अभिण्णाणाणि से कहिताणि, कहिं सो ?, दरिसितो, ततो सो राइणा अवगूहितो, भणितो—सेयं तव एए अट्ठ रहचक्के भेत्तूण पुत्तलियं अच्छिम्मि विंधित्ता रज्जसुक्कं णिव्वुतिदारियं संपावित्तए, ततो कुमारो जधाऽऽणवेहत्ति भणिऊण ठाणं ठाइतूण धणुं गेण्हति, लक्खाभिमुहं सरं सज्जेति, ताणि य दासरूवाणि चउद्दिसं ठिताणि रोडेंति, अण्णे य उभयतो पासिं गहितखग्गा, जति कहवि लक्खस्स चुक्कति ततो सीसं छिंदितव्वंति, सोऽवि से उवज्झाओ पासे ठितो भयं देति—मारिज्जसि जति चुक्कसि, ते बावीसंपि कुमारा मा एस विन्धिस्सतित्ति विसेसउल्लंठाणि विग्घाणि करेंति,

१ शर , स चक्रे आस्फाल्य भग्न , एव कस्यचित् एकमरकान्तरं व्यतिक्रान्त. कस्यचित् द्वे कस्यचित्त्रीणि, अन्येषा बाह्य एव निर्गच्छति, तदा राजाऽधृतिं प्रगत –अहो अहमेतैर्धर्षित इति, ततोऽमात्येन भणित –किमधृति करोषि ?, राजा भणति–एतैरहमप्रधान. कृत , अमात्यो भणति–अस्त्यन्यो युष्माक पुत्रो मम दुहितुस्तनुज सुरेन्द्रदत्तो नाम, स समर्थो वेधितुम्, अभिज्ञानानि तस्मै कथितानि, कुत्र स ?, दर्शितः, ततः स राज्ञाऽवगूहितो, भणित –श्रेयस्तवैतानि अष्ट रथचक्राणि भित्त्वा शालभञ्जिकामक्ष्णि विद्ध्वा राज्यशुल्कां निर्वृतिदारिकां सम्प्राप्तु, तत कुमारो यथाऽऽज्ञापयतेति भणित्वा स्थान स्थित्वा धनुर्गृह्णाति, लक्ष्याभिमुख्य शर निसृजति ( सज्जयति ), ते च दासाश्चतुर्दिश स्थिता स्खलनां कुर्वन्ति, अन्यौ चोभयत पार्श्वयोर्गृहीतखड्गौ, यदि कथमपि लक्ष्याद्भ्रश्यति तदा शीर्ष छेत्तव्यमिति, सोऽपि तस्योपाध्याय पार्श्वे स्थित भय ददाति–मारयिष्यसे यदि भ्रश्यसि, ते द्वाविंशतिरपि कुमारा मा एष व्यात्सीदिति विशेषोच्छृङ्खला विघ्नान् कुर्वन्ति

ततो ताणि चत्तारि ते य दो पुरिसे बावीसं च कुमारे अगणंतेण ताणं अट्ठण्हं रहचक्काणं अंतरं जाणिऊणं तंमि लक्खे णिरुद्धाए दिट्ठीए अण्णमति अकुणमाणेण सा धिइल्लिया वामे अच्छिम्मि विद्धा, ततो लोगेण उक्किट्ठिसीहणादकलकलुमिस्सो साधुकारो कतो, जधा तं चक्कं दुक्खं भेत्तुं एवं माणुसत्तणंपि ७। 'चम्मे'त्ति—जधा एगो दहो जोयणमयसहस्सविच्छिण्णो चम्मेण णद्धो, एगं से मज्झे छिड्डं जत्थ कच्छभस्स गीवा मायति, तत्थ कच्छभो वासस ते वाससते गते गीवं पसारेति, तेण कहवि गीवा पसारिता, जाव तेण छिड्डेण निग्गता, तेण जोतिसं दिट्ठं कोमुदीए पुप्फफलाणि य, सो आगतो, सयणिज्जयाणं दाएमि, आणेत्ता सव्वतो पलोयति, ण पेच्छति, अवि सो, ण य माणुसातो ८। युगदृष्टान्तप्रतिपादनायाऽऽह—

पुव्वंते होज्ज जुगं अवरंते तस्स होज्ज समिला उ। जुगछिड्डंमि पवेसो इय संसइओ मणुयलंभो ॥ ८३३ ॥

व्याख्या—जलनिधेः पूर्वान्ते भवेद् युगम्, अपरान्ते तस्य भवेत् समिला तु, एवं व्यवस्थिते सति यथा युगच्छिद्रप्रवेशः संशयितः, 'इय' एवं संशयितो मनुष्यलाभो, दुर्लभ इति गाथार्थः ॥

१ ततस्तांश्चतुरस्तौ च द्वौ पुरुषौ द्वाविंशतिं च कुमारानगणयता तेषामष्टाना रथचक्राणामन्तरं ज्ञात्वा तस्मिल्लक्ष्ये निरुद्धया दृष्ट्या अन्यत्र मतिमकुर्वता सा शालभञ्जिका वामेऽक्ष्णि विद्धा, ततो लोकेनोत्कृष्टिसिंहनादकलकलोन्मिश्र साधुकार कृत , यथा तच्चक्र दु ख भेत्तुमेव मानुष्यमपि ७। चर्मेति–यथैको ह्रदो योजनशतसहस्रविस्तीर्णश्चर्मणा नद्ध , एक तस्य मध्ये छिद्र यत्र कच्छपस्य ग्रीवा माति, तत्र कच्छपो वर्षशते वर्षशते गते ग्रीवां प्रसारयति, तेन कथमपि ग्रीवा प्रसारिता यावत्तेन छिद्रेण निर्गता, तेन ज्योतिर्दृष्ट कौमुद्या पुष्पफलानि च, स आगत , स्वजनाना दर्शयामि, आनीय सर्वत प्रलोकयति, न प्रेक्षते, अपि स', न च मानुष्यात् ८।

जह समिला पब्भट्ठा सागरसलिले अणोरपारंमि। पविसेज्ज जुग्गछिड्डुं कहवि भमंती भमंतंमि ॥ ८३४ ॥

व्याख्या—यथा समिला प्रभ्रष्टा 'सागरसलिले' समुद्रपानीये 'अणोरपार'मिति देशीवचनं प्रचुरार्थे उपचारत आराद्भागपरभागरहित इत्यर्थः, प्रविशेत् युगच्छिद्रं कथमपि भ्रमन्ती भ्रमति युग इत्येवं दुर्लभं मानुष्यमिति गाथार्थः ॥

सा चंडवायवीचीपणुल्लिया अवि लभेज्ज युगछिड्डुं। ण य माणुसाउ भट्ठो जीवो पडिमाणुसं लहइ ॥ ८३५ ॥

व्याख्या—सा समिला चण्डवातवीचीप्रेरिता सत्यपि लभेत युगच्छिद्रं, न च मानुष्याद् भ्रष्टो जीवः प्रतिमानुषं लभत इति गाथार्थः ॥ इदानीं परमाणू , जहा एगो खंभो महापमाणो, सो देवेणं चुण्णेऊणं अविभागिमाणि खंडाणि काऊण णालियाए पक्खितो, पच्छा मंदरचूलियाए ठितेण फुमितो, ताणि णट्ठाणि, अत्थि पुण कोवि ?, तेहिं चेव पोग्गलेहिं तमेव खंभं णिव्वत्तेज्ज ?, णो त्ति, एस अभावो, एवं भट्ठो माणुसातो ण पुणो। अहवा सभा अणेगखंभसतसहस्ससंनिविट्ठा, सा कालंतरेण झामिता पडिता, अत्थि पुण कोइ ?, तेहिं चेव पोग्गलेहिं करेज्जा, णोत्ति, एवं माणुस्सं दुल्लहं।

इय दुल्लहलंभं माणुसत्तणं पाविऊण जो जीवो। ण कुणइ पारत्तहियं सो सोयइ संकमणकाले ॥ ८३६ ॥

व्याख्या—'इय' एवं दुर्लभलाभं मानुषत्वं प्राप्य यो जीवो न करोति परत्र हितं—धर्मं, दीर्घत्वमलाक्षणिकं, स शोचति 'सङ्क्रमणकाले' मरणकाल इति गाथार्थः ॥

१ इदानीं परमाणु –यथैक स्तम्भो महाप्रमाण , स चूर्णयित्वा देवेनाविभागानि खण्डानि कृत्वा नालिकाया प्रक्षिप्त , पश्चान्मन्दरचूलायां स्थितेन फूत्कृत , तानि नष्टानि, अस्ति पुन कोऽपि ?, तैरेव पुद्गलैस्तमेव स्तम्भ निर्वर्तयेत्, नेति, एषोऽभाव , एव भ्रष्टो मानुष्यान्न पुन । अथवा सभा अनेकस्तम्भशतसहस्रसन्निविष्टा, सा कालान्तरेण दग्धा पतिता, अस्ति पुन कोऽपि ?, तैरेव पुद्गलै कुर्यात्, नेति, एव मानुष्य दुर्लभम्।

**जह वारिमज्झछूढोव्व गयवरो मच्छउव्व गलगहिओ। वग्गुरपडिउव्व मओ संवट्टइओ जह व पक्खी ॥ ८३७॥**

व्याख्या—यथा वारिमध्यक्षिप्त इव गजवरो मत्स्यो वा गलगृहीतः वागुरापतितो वा मृगः संवर्ते—जालम् इतः—प्राप्तो यथा वा पक्षीति गाथार्थः ॥

**सो सोयइ मच्चुजरासमोच्छुओ तुरियणिद्दपक्खित्तो। तायारमविंदंतो कम्मभरपणोल्लिओ जीवो ॥ ८३८ ॥**

व्याख्या—सोऽकृतपुण्यः शोचति, मृत्युजरासमास्तृतो—व्यासः, त्वरितनिद्रया प्रक्षिप्तः, मरणनिद्रयाऽभिभूत इत्यर्थः, त्रातारम् 'अविन्दन्' [1]अलभन्नित्यर्थः, कर्मभरप्रेरितो जीव इति गाथार्थः ॥ स चेत्थं मृतः सन्—

**काऊणमणेगाइं जम्ममरणपरियट्टणसयाइं। दुक्खेण माणुसत्तं जइ लहइ जहिच्छया जीवो ॥ ८३९ ॥**

व्याख्या—कृत्वाऽनेकानि जन्ममरणपरावर्तनशतानि दुःखेन मानुषत्वं लभते जीवो यदि यदृच्छया, कुशलपक्षकारी पुनः सुखेन मृत्वा सुखेनैव लभत इति गाथार्थः ॥

**तं तह दुल्लहलंभं विज्जुलयाचंचलं माणुसत्तं। लद्धूण जो पमायइ सो कापुरिसो न सप्पुरिसो ॥ ८४० ॥**

व्याख्या—तत्तथा दुर्लभलाभं विद्युल्लताचञ्चलं मानुषत्वं लब्ध्वा यः 'प्रमाद्यति' प्रमादं करोति स कापुरुषो न सत्पुरुष इति

[1] वारिर्वा गजबन्धन्योरिति मदिन्याम् । आत्मनेपदमनित्यमित्यत्र प्राप्तमपि न स्याद् अप्राप्तमपि च स्यादित्यनित्यस्यार्थस्तेन 'सम्यक् प्रणम्य न लभन्ति कदाचनापि' इत्यत्रेवात्र परस्मैपदित्वापेक्षया न शब्दविरोधावहः + मणुसयत्तं प्र०

गाथार्थः ॥ इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः—यथैभिर्दशभिर्दृष्टान्तैर्मानुष्यं दुर्लभं तथाऽऽर्यक्षेत्रादीन्यपि स्थानानि, ततश्च सामायिकमपि दुष्प्रापमिति, अथवा मानुष्ये लब्धेऽप्येभिः कारणैर्दुर्लभं सामायिकमिति प्रतिपादयन्नाह—

**आलस्स मोहऽवण्णा थंभा कोहा पमाय किवणत्ता। भयसोगा अण्णाणा वक्खेव कुतूहला रमणा ॥८४१॥**

व्याख्या—आलस्यान्न साधुसकाशं गच्छति शृणोति वा, मोहाद् गृहकर्तव्यतामूढो वा, अवज्ञातो वा किमेते विजानन्तीति, स्तम्भाद् वा जात्याद्यभिमानात् क्रोधाद् वा साधुदर्शनादेव कुप्यति, 'प्रमादात्' वा मद्यादिलक्षणात् 'कृपणत्वात्' वा दातव्यं किञ्चिदिति, 'भयात्' वा नरकादिभयं वर्णयन्तीति, 'शोकात्' वा इष्टवियोगजात् 'अज्ञानात्' कुदृष्टिमोहितः, 'व्याक्षेपाद्' बहुकर्तव्यतामूढः, 'कुतूहलात्' नटादिविषयात्, 'रमणात्' लावकादिखेड्डेनेति गाथार्थः ॥८४१॥

**एतेहिं कारणेहिं लद्धूण सुदुल्लहंपि माणुस्सं। ण लहइ सुतिं हियकरिं संसारुत्तारिणिं जीवो ॥ ८४२ ॥**

व्याख्या—एभिः 'कारणैः' आलस्यादिभिर्लब्ध्वा सुदुर्लभमपि मानुष्यं न लभते श्रुतिं हितकारिणीं संसारोत्तारिणीं जीव इति गाथार्थः ॥ यानादिसामग्रीयुक्तस्तु कर्मरिपून् विजित्याविकलचारित्रसामायिकलक्ष्मीमवाप्नोति, यानादिगुणयुक्तयोधवज्जयलक्ष्मीमिति ॥ आह च—

**जाणावरणपहरणे जुद्धे कुसलत्तणं च णीती य। दक्खत्तं ववसाओ सरीरमारोग्गया चेव ॥ ८४३ ॥**

व्याख्या—यानं हस्त्यादि, आवरणं-कवचादि, प्रहरणं-खड्गादि, यानावरणप्रहरणानि, युद्धे कुशलत्वं च-सम्यग् ज्ञानमित्यर्थः, 'नीतिश्च' निर्गमप्रवेशरूपा 'दक्षत्वम्' आशुकारित्वं 'व्यवसायः' शौर्यं शरीरम् अविकलम् 'आरोग्यता, व्याधिविमुक्तता चैवेति। एतावद्गुणसामग्र्यविकल एव योधो जयश्रियमाप्नोतीति दृष्टान्तः, दार्ष्टान्तिकयोजना त्वियं—'[1]जीवो जोहो जाणं वयाणि आवरणमुत्तमा खंती। झाणं पहरणमिट्ठं गीयत्थत्तं च कोसल्लं ॥ १ ॥ दव्वाइजहोवाया-णुरूवपडिवत्तिवत्तिया णीति। दक्खत्तं किरियाणं जं करणमहीणकालंमि ॥ २ ॥ करणं सहणं च तवोवसग्गदुग्गावतीएँ ववसाओ। एतेहिं सुणिरोगो कम्मरिउं जिणाति सव्वेहिं ॥ ३ ॥' विजित्य च समग्रसामायिकश्रियमासादयतीति गाथार्थः ॥ ८४३ ॥ अथवाऽनेन प्रकारेणाऽऽमाप्यत इति—

**दिट्ठे सुएऽणुभूए कम्माण खए कए उवसमे अ। मणवयणकायजोगे अ पसत्थे लब्भए बोही ॥ ८४४ ॥**

व्याख्या—दृष्टे भगवतः प्रतिमादौ सामायिकमवाप्यते, यथा श्रेयांसेन भगवद्दर्शनादवाप्तमिति, कथानकं चाधः कथितमेव, श्रुते चावाप्यते यथाऽऽनन्दकामदेवाभ्यामवाप्तमिति, अत्र कथानकमुपरितनाङ्गादवसेयम्, अनुभूते क्रियाकलापे सत्यवाप्यते, यथा वल्कलचीरिणा पित्रुपकरणं प्रत्युपेक्षमाणेनेति, कथानकं कथिकातोऽवसेयं, कर्मणां क्षये कृते सति प्राप्यते, यथा चण्डकौशिकेन प्राप्तम्, उपशमे च सत्यवाप्यते यथाऽङ्गऋषिणा, मनोवाक्काययोगे च प्रशस्ते लभ्यते बोधिः, सामायिकमनर्थान्तरमिति गाथार्थः ॥ अथवाऽनुकम्पादिभिरवाप्यते सामायिकमित्याह—

**अणुकंपऽकामणिज्जर बालतवे दाणविणयविब्भंगे। संयोगविप्पओगे वसणूसवइड्ढि सक्कारे ॥ ८४५ ॥**

[1] जीवो योधो यान व्रतानि आवरणमुत्तमा क्षान्तिः। ध्यानं प्रहरणमिष्टं गीतार्थत्वं च कौशल्यम् ॥ १ ॥ द्रव्यादियथोपायानुरूपप्रतिपत्तिवर्तिता नीतिः। दक्षत्वं क्रियाणां यत्करणमहीनकाले ॥ २ ॥ करणं सहनं च तपस. उपसर्गदुर्गापत्तौ व्यवसायः। एतैः सुनीरोगः कर्मरिपुं जयति सर्वैः ॥ ३ ॥

वेज्जे मेंठे तह इंदणाग कयउण्ण पुप्फसालसुए। सिवदुमहुरवणिभाउय आहीरदसण्णिलापुत्ते ॥ ८४६ ॥

व्याख्या—अनुकम्पाप्रवणचित्तो जीवः सामायिकं लभते, शुभपरिणामयुक्तत्वाद्, वैद्यवत्, प्रतिज्ञेयमेव मनाग् विशेषितव्या, हेतुदृष्टान्तान्यत्वं तु प्रतिप्रयोगं भणिष्यामः—अकामनिर्जरावान् जीवः सामायिकं लभते, शुभपरिणामयुक्तत्वान्मिण्ठवत्, बालतपोयुक्तत्वादिन्द्रनागवत्, सुपात्रप्रयुक्तयथाशक्तिश्रद्धादानत्वात् कृतपुण्यकवत्, आराधितविनयत्वात् पुष्पशालसुतवत्, अवाप्तविभङ्गज्ञानत्वात् तापसशिवराजऋषिवत्, दृष्टद्रव्यसंयोगविप्रयोगत्वात् मथुराद्वयवासिवणिग्द्वयवत्, अनुभूतव्यसनत्वाद् भ्रातृद्वयशकटचक्रव्यापादितमलण्डीलब्धमानुपत्वस्त्रीगर्भजातप्रियद्वेष्यपुत्रद्वयवत्, अनुभूतोत्सवत्वादाभीरवत्, दृष्टमहर्द्धिकत्वाद्दशार्णभद्रराजवत्, सत्कारकाङ्क्षिणोऽप्यलब्धसत्कारत्वादिलापुत्रवत्, इयमक्षरगमनिका, साम्प्रतमुदाहरणानि प्रदर्श्यन्ते—बारवतीए कण्हस्स वासुदेवस्स दो वेजा—धन्नंतरी वेतरणी य, धन्नंतरी अभविओ, वेतरणी भविओ, सो साधूण गिलाणाणं पिएण साहति, जं जस्स कायव्वं तं तस्स फासुएण पडोआरेण साहति, जति से अप्पणो अत्थि ओसधाणि तो देति, धण्णंतरी पुण जाणि सावज्जाणि ताणि साहति असाधुपाओग्गाणि, ततो साहुणो भणंति—अम्हं कतो एताणि ?, सो भणति—ण मए समणाणं अट्ठाए अज्झाइतं वेज्जसत्थं, ते दोवि महारंभा महापरिग्गहा

१ द्वारिकायां कृष्णस्य वासुदेवस्य द्वौ वैद्यौ—धन्वन्तरी वैतरणिश्च, धन्वन्तरयभव्यो, वैतरणिर्भव्य., स साधुभ्यो ग्लानेभ्य. प्रीत्या कथयति, यद्यस्य कर्त्तव्य तत्तस्मै प्रासुकेन प्रतीकारेण कथयति, यदि तस्यात्मनोऽस्ति ( सन्ति ) औषधानि तदा ददाति, धन्वन्तरी पुनर्यानि सावद्यानि तानि कथयति असाधुप्रायोग्याणि, तत साधवो भणन्ति—अस्माक कुत एतानि?, स भणति—न मया श्रमणानामर्थाय वैद्यकशास्त्रमधीत, तौ द्वावपि महारम्भौ महापरिग्रहौ

य॑सबाए बारवतीए तिगिच्छं करेंति, अण्णदा कण्हो वासुदेवो तित्थगरं पुच्छति—एते बहूणं ढंकादीणं वधकरणं काऊण कहिं गमिस्संति?, ताधे सामी साधति—एस धण्णंतरी अप्पतिट्ठाणे णरए उववज्जिहिति, एस पुण वेतरणी कालंजरवत्तिणीए गंगाए महाणदीए विंझस्स य अंतरा वाणरत्ताए पच्चायाहिति, ताधे सो वयं पत्तो सयमेव जूहवतित्तणं काहिति, तत्थ अण्णया साहुणो सत्थेण समं धाविस्संति, एगस्स य साधुस्स पादे सल्लो लग्गिहिति, ताधे ते भणंति—अम्हे पडिच्छामो, सो भणति—मा सब्वे मरामो, वच्चह तुब्भे अहं भत्तं पच्चक्खामि, ताहे णिव्वंधं काउं सोऽवि ठिओ, ण तीरति सल्लं णीणेतुं, पच्छा थंडिलं पावितो छायं च, तेऽवि गता, ताहे सो वाणरजूहवती तं पदेसं एति जत्थ सो साधू, जाव पुरिल्लेहिं तं दट्ठूण किलिकिलाइतं, तो तेण जूहाहिवेण तेसिं किलिकिलाइतसद्दं सोऊण रूसितेण आगंतूण दिट्ठो सो साधू, तस्स तं दट्ठूण ईहापूहा करेंतस्स कहिं मया एरिसो दिट्ठोत्ति ?, जाती संभरिता, बारवइं संभरति, ताहे तं साधुं वंदति, तं च से सल्लं

१ च सर्वस्या द्वारिकाया चिकित्सां कुरुत, अन्यदा कृष्णो वासुदेवस्तीर्थकरं पृच्छति—एतौ बहूना ढङ्कादीना वधकरण कृत्वा क्व गमिष्यत ?, तदा स्वामी कथयति—एष धन्वन्तरी अप्रतिष्ठाने नरके उत्पत्स्यते, एष पुनर्वैतरणी कालञ्जरवर्त्तिन्या ( अटव्या ) गङ्गाया महानद्या विन्ध्यस्य चान्तरा वानरतया प्रत्यायास्यति, तदा स वय प्राप्त स्वयमेव यूथपतित्व करिष्यति, तत्रान्यदा साधव. सार्थेन सममागमिष्यन्ति, एकस्य च साधो पादे शल्य लगिष्यति, तदा ते भणन्ति—वय प्रतीक्षामहे, स भणति—मा सर्वे म्रियामहे, व्रजत यूयमह भक्त प्रत्याख्यामि, तदा सोऽपि निर्बन्ध कृत्वा स्थित , न शक्नोति शल्य निर्गमितु, पश्चात् स्थण्डिल प्रापित छाया च, तेऽपि गता , तदा स वानरयूथाधिपतिस्त प्रदेशमेति यत्र स साधु., यावत् पौरस्त्यैस्त दृष्ट्वा किलकिलायित, ततस्तेन यूथाधिपेन तेषां किलकिलायितशब्द श्रुत्वा रुष्टेनागत्य दृष्ट. स साधु , तस्य त दृष्ट्वा ईहापोहौ कुर्वत क्व मयेदृशो दृष्ट इति ?, जाति स्मृता, द्वारिका सस्मरति, तदा त साधु वन्दते, तच्च तस्य शल्य

पासति, ताहे तिगिच्छं सधं संभरति, ततो सो गिरिं विलग्गिऊण सलुद्धरणिसल्लरोहणीओ ओसहीओ य गहाय आगतो, ताधे सलुद्धरणीए पादो आलित्तो, ततो एँगमुहुत्तेण पडिओ सल्लो, पउणावितो संरोहणीए, ताहे तस्स पुरतो अक्खराणि लिहति, जधा—अहं वेतरणी नाम वेज्जो पुव्वभवे बारवतीए आसि, तेहिंवि सो सुतपुव्वो, ताधे सो साधू धम्मं कधेति, ताहे सो भत्तं पच्चक्खाति, तिण्णि रातिंदियाणि जीवित्ता सहस्सारं गतो ॥ तथा चाऽऽह—

सो वाणरजूहवती कंतारे सुविहियाणुकंपाए। भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥ ८४७ ॥

व्याख्या—निगदसिद्धा। ओहिं पयुंजति जाव पेच्छति तं सरीरगं तं च साधुं, ताहे आगंतूण देविड्ढिं दाएति, भणति य—तुज्झप्पसादेण मए देविड्ढी लद्धत्ति, ततोऽणेण सो साधू साहरितो तेसिं साधूणं सगासंति, ते पुच्छंति—किहऽसि आगतो ?, ताहे साहति। एवं तस्स वाणरस्स सम्मत्तसामाइयसुयसामाइयचरित्ताचरित्तसामाइयाण अणुकंपाए लाभो जातो, इतरधा णिरयपायोग्गाणि कम्माणि करेत्ता णरयं गतो होन्तो। ततो चुतस्स चरित्तसामाइयं भविस्सति सिद्धी य १।

१ पश्यति, तदा चिकित्सां सर्वां सस्मरति, तत स गिरिं विलग्य शल्योद्धरणीशल्यरोहिण्योषध्यौ च गृहीत्वाऽऽगत , तदा शल्योद्धरण्या पाद आलिप्त , तत एकेन मुहूर्त्तेन पतित शल्य, प्रगुणित सरोहण्या, तदा तस्य पुरतोऽक्षराणि लिखति—यथाऽह वैतरणिर्नाम वैद्य पूर्वभवे द्वारिकायामास, तैरपि श्रुतपूर्व स , तदा स साधुर्धर्मं कथयति, तदा स भक्त प्रत्याख्याति, त्रीन् रात्रिन्दिवान् जीवित्वा सहस्रार गत ॥ अवधि प्रयुनक्ति यावत्प्रेक्षते तच्छरीर त च साधु, तदाऽऽगत्य देवर्धिं दर्शयति, भणति च—युष्मत्प्रसादेन मया देवर्धिर्लब्धेति, ततोऽनेन स साधु सहृतस्तेषां साधूनां सकाशमिति, ते पृच्छन्ति—कथमस्यागत ?, तदा कथयति। एव तस्य वानरस्य सम्यक्त्वसामायिकश्रुतसामायिकचारित्राचारित्रसामायिकानामनुकम्पया लाभो जात , इतरथा नरकप्रायोग्याणि कर्माणि कृत्वा नरक गतोऽभविष्यत्, ततश्च्युतस्य चारित्रसामायिक भविष्यति सिद्धिश्च १। * एगते

अकामणिज्जराए, वसंतपुरे नगरे इब्भवधुगा णदीए ण्हाति, अण्णो य तरुणो तं दठ्ठूण भणति–सुण्हातं ते पुच्छति एस णदी मत्तवारणकरोरु ! । एते य णदीरुक्खा अहं च पादेसु ते पडिओ ॥ १ ॥ सा भणति–'सुभगा होंतु णदीओ चिरं च जीवंतु जे णदीरुक्खा । सुण्हातपुच्छगाण य घत्तिहामो पियं काउं ॥ २ ॥ ततो सो तीए घरं वा दारं वा अयाणन्तो चिन्तेति–"अन्नपानैर्हरेद्बालां, यौवनस्थां विभूषया । वेश्यां स्त्रीमुपचारेण, वृद्धां कर्कशसेवया ॥ १ ॥" तीसे विइज्जियाणि चेडरूवाणि रुक्खे पलोएंताणि अच्छति, तेण तेसिं पुप्फाणि फलाणि य दाऊण पुच्छिताणि–का एसा ?, ताणि भणंति–अमुगस्स सुण्हा, ताहे सो चिंतेति–केण उवाएण एतीए समं मम संपयोगो भवेज्जा ?, ततो णेण चरिका दाणमाणसंगहीता काऊण विसज्जिता तीए सगासं, ताए गंतूण सा भणिता–जधा अमुगो ते पुच्छति, तीए रुट्ठाए पत्तुलगाणि धोवंतीए मसिलित्तेण हत्थेण पिट्ठीए आहता, पंचंगुलीओ जाताओ, ओवारेण य णिच्छूढा, सा गता साहति–णामंपि ण

१ अकामनिर्जरया, वसन्तपुरे नगरे इभ्यवधूर्नद्यां स्नाति, अन्यश्च तरुणस्तां दृष्ट्वा भणति–सुस्नात ते पृच्छति एषा नदी मत्तवारणकरोरु ! । एते च नदीवृक्षा अहं च पादयोस्ते पतित ॥ १ ॥ सा भणति–सुभगा भवन्तु नद्यश्चिरं च जीवन्तु ये नदीवृक्षाः । सुस्नातपृच्छकेभ्यश्च प्रियं कर्तुं यतिष्यामहे ॥ १ ॥ ततः स तस्या गृहं वा द्वारं वा अजानानश्चिन्तयति–तस्या द्वितीयानि ( तया सहागतानि ) चेटरूपाणि वृक्षान् प्रलोकयन्ति तिष्ठन्ति, तेन तेभ्यः पुष्पाणि फलानि च दत्त्वा पृष्टानि–कैषा ?, तानि भणन्ति–अमुकस्य स्नुषा, तदा स चिन्तयति–केनोपायेनैतया समं मम संप्रयोगो भवेत् ?, ततोऽनेन चरिका दानमानसंगृहीता कृत्वा विसृष्टा तस्याः सकाशं, तया गत्वा सा भणिता–यथाऽमुकस्त्वां पृच्छति, तया रुष्टया भाजनान्युद्घर्षयन्त्या मषीलिप्तेन हस्तेन पृष्ठौ आहता, पञ्चाङ्गुल्यो जाता अपद्वारेण च निष्काशिता, सा गता कथयति–नामापि न

सहति, तेण णातं जहा–कालपक्खपंचमीए, ताहे तेण पुणरवि पेसिता पवेसजाणणानिमित्तं, ताहे सलज्जाए आहणिऊण असोगवणियाए छिंडियाए निच्छूढा, सा गता साहति–णामंपि ण सहति, तेण णातो पवेसो, तेणावदारेण अइगतो, असोगवणियाए सुत्ताणि, जाव ससुरेण दिट्ठा, तेण णातं, जधा–ण मम पुत्तोत्ति, पच्छा से पादातो णेउरं गहितं, चेतितं च तीए, भणितो य णाए–णास लहुं, सहायकिच्चं करेज्जासि, इतरी गंतूण भत्तारं भणति–इत्थं घम्मो, जामो असोगवणियं, गताणि, असोगवणियाए पसुत्ताणि, ताहे भत्तारं उट्ठवेत्ता भणति–तुज्झं एतं कुलाणुरूवं ?, जं मम पादातो ससुरो णेउरं गेण्हति, सो भणति–सुवसु लभिहिसि पभाते, थेरेण सिट्ठं, सो रुट्ठो भणति–विवरीतोऽसि थेरा ?, सो भणति–मए दिट्ठो अण्णो, ताहे विवादे सा भणति–अहं अप्पाणं सोहेमि, एवं करेहि, ण्हाता, ताहे जक्खघरं अइगता, जो कारी सो लग्गति दोण्हं जंघाणं अंतरेण वोलंतओ, अकारी मुच्चति, सा पधाविता, ताहे सो विडो पिसायरूवं काऊण सागतएणं गेण्हति,

१ सहते, तेन ज्ञातं यथा–कृष्णपक्षपञ्चम्यां, तदा तेन पुनरपि प्रेषिता प्रवेशज्ञानार्थं, तदा सलज्जया आहत्याशोकवनिकायाश्छिण्डिकया निष्काशिता, सा गता कथयति–नामापि न सहते, तेन ज्ञातः प्रवेशः, तेनापद्वारेणातिगतोऽशोकवनिकायां सुप्तौ, यावत् श्वशुरेण दृष्टौ, तेन ज्ञातं–यथा न मम पुत्र इति, पश्चात्तस्याः पादात् नूपुरं गृहीतं, चेतितं च तया, भणितश्चानया–नश्य लघु, सहायकृत्यं कुर्याः, इतरा गत्वा भर्तारं भणति–अत्र घर्मः, यावोऽशोकवनिकां, गतौ, अशोकवनिकायां प्रसुप्तौ, तदा भर्तारमुत्थाप्य भणति–युष्माकमेतत् कुलानुरूपं ?, यन्मम पादाच्छ्वशुरो नूपुरं गृह्णाति, स भणति–स्वपिहि लप्स्यसे प्रभाते, स्थविरेण शिष्टं, स रुष्टो भणति–विपरीतोऽसि स्थविर ?, स भणति–मया दृष्टोऽन्यः, तदा विवादे सा भणति–अहमात्मानं शोधयामि, एवं कुरु, स्नाता, तदा यक्षगृहमतिगता, योऽपराधी स लगति द्वयोर्जङ्घयोरन्तरा व्यतिक्रामन्, अनपराधो मुच्यते, सा प्रधाविता, तदा स विटोऽपि पिशाचरूपं कृत्वा आलिङ्गनेन गृह्णाति,

ताहे तत्थ गंतूण जक्खं भणति–जो मम पितिदिण्णओ तं च पिसायं मोत्तूण जइ अण्णं जाणामि तो मे तुमं जाणासित्ति जक्खो विलक्खो चिंतेति–पेच्छह केरिसाणि मंतेति ?, अहंपि वंचितो णाए, णत्थि सतित्तणं धुत्तीए, जाव चिंतेति ताव णिप्फिडिता, ताहे सो थेरो सव्वेण लोगेण हीलितो, तस्स ताए अद्धितीए निद्दा नट्ठा, ताहे रण्णो तं कण्णे गतं, रायाणएण अंतेउरवालओ कतो, आभिसिक्कं च हत्थिरयणं रण्णो वासघरस्स हेट्ठा बद्धं अच्छति, देवी य हत्थिमेंठे आसत्तिया णवरं रत्तिं हत्थिणा हत्थो पसारितो, सा पासायाओ ओयारिया, पुणरवि पभाए पडिविलइता, एवं वच्चति कालो, अण्णता चिरं जातंति हत्थिमेंठेण हत्थिसंकलाए हता, सा भणति–सो पुरिसो तारिसो ण सुवति, मा रूसह, तं थेरो पेच्छति, सो चिंतेति–जति एताओवि एरिसिओ, किंनु ताओ भद्दियाउत्ति सुत्तो, पभाते सव्वो लोगो उट्ठितो, सो न उट्ठितो, राया भणति–सुवउ, सत्तमे दिवसे उट्ठितो, राइणा पुच्छितेण कहितं–जहेगा देवी ण याणामि कतरत्ति, ताहे

१ तदा तत्र गत्वा यक्षं भणति–यो मम पितृदत्तस्तं च पिशाचं मुक्त्वा यद्यन्यं जानामि तदा मां त्वं जानासि इति, यक्षो विलक्षश्चिन्तयति–प्रेक्षध्वं कीदृशानि मन्त्रयति ?, अहमपि वञ्चितोऽनया, नास्ति सतीत्वं धूर्तायाः, यावच्चिन्तयति तावन्निर्गता, तदा स स्थविरः सर्वेण लोकेन हीलितः, तस्य तयाऽधृत्या निद्रा नष्टा, तदा राज्ञस्तत् कर्णं गतं, राज्ञाऽन्तःपुरपालकः कृतः, आभिषेक्यं च हस्तिरत्नं राज्ञो वासगृहस्याधस्ताद्बद्धं तिष्ठति, देवी च हस्तिमेण्ठे आसक्ता, नवरं रात्रौ हस्तिना हस्तः प्रसारितः, सा प्रासादात् अवतारिता, पुनरपि प्रभाते प्रतिविलगिता, एवं व्रजति कालः, अन्यदा चिरं जातमिति हस्तिमेण्ठेन हस्तिशृङ्खलया हता, सा भणति–स पुरुषस्तादृशो न स्वपिति, मा रुष, तत् स्थविरः पश्यति, स चिन्तयति–यद्येता अपि ईदृश्यः किंनु ता भद्रिका इति सुप्तः, प्रभाते सर्वो लोक उत्थितः, स नोत्थितः, राजा भणति–स्वपितु, सप्तमे दिवसे उत्थितः, राज्ञा पृष्टेन कथितं–यथैका देवी न जानामि कतरेति, तदा

* परिस करति

राइणा भेंडमओ हत्थी कारितो, सवाओ अंतेपुरियाओ भणियाओ-एयस्स अच्चणियं करेत्ता ओलंडेह, सवाहिं ओलंडितो, सा णेच्छति, भणति-अहं बीहेमि, ताहे राइणा उप्पलणालेण आहता, जाव उमुच्छिता पडिया ततो से उवगतं-जधेसा कारित्ति, भणिता-'मत्तं गयमारुहंतीए भेंडमयस्स गयस्स भयतिए। इह मुच्छित उप्पलाहता तत्थ न मुच्छित संकलाहता ॥ १ ॥' पुट्टी से जोइया, जाव संकलपहारा दिट्ठा, ताहे राइणा हत्थिमेंठो सा य दुयगाणि वि तम्मि हत्थिम्मि विलग्गाविऊण छण्णकडए विलइताणि, भणितो मिंठो-एत्थ अप्पततीओ गिरिप्पवातं देहि, हत्थिस्स दोहिवि पासेहिं वेलुग्गाहा ठविता, जाव हत्थिणा एगो पादो आगासे कतो, लोगो भणति-किं तिरिओ जाणति ?, एताणि मारेतव्वाणि, तहावि राया रोसं ण मुयति, ततो दो पादा आगासे ततियवारए तिन्नि पादा आगासे एक्केण पादेण ठितो, लोगेण अक्कंदो कतो-किं एतं हत्थिरयणं विणासेहि ?, रण्णो चित्तं ओआलितं, भणितो-तरसि णियत्तेउं?,

१ राज्ञा भिण्डमयो हस्ती कारितः, सर्वा अन्तःपुरिका भणिता -एतस्यार्चनिकां कृत्वोल्लङ्घयत, सर्वाभिरुल्लङ्घितः, सा नेच्छति, भणति-अहं बिभेमि, तदा राज्ञोत्पलनालेनाहता, यावन्मूर्छिता पतिता, ततस्तेनोपगतं-यथैषाऽपराधिनीति, भणिता-मत्तं गजमारोहन्ति !, भिण्डमयात् गजात् बिभ्यन्ति !। इह मूर्छितोत्पलाहता, तत्र न मूर्च्छिता शृङ्खलाहता ॥ १ ॥ पृष्ठिस्तस्या अवलोकिता, यावत् शृङ्खलाप्रहारा दृष्टाः, तदा राज्ञा हस्तिमेण्ठ सा च द्वे अपि तस्मिन् हस्तिनि विलगय्य छिन्नकटके विलगितानि, भणितो मेण्ठ -अत्रात्मतृतीयो गिरिप्रपातं देहि, हस्तिनो द्वयोरपि पार्श्वयोः कुन्तग्राहाः स्थापिताः, यावद्धस्तिना एकः पाद आकाशे कृतः, लोको भणति-किं तिर्यङ् जानाति ?, एतौ मारयितव्यौ, तथाऽपि राजा रोषं न मुञ्चति, ततो द्वौ पादावाकाशे तृतीयवारे त्रयः पादा आकाशे एकेन पादेन स्थितः, लोकेनाक्रन्दः कृतः-किमेतत् हस्तिरत्नं विनाशयत ?, राज्ञश्चित्तं द्रावितं, भणितः-शक्नोषि निवर्त्तयितुं ?,

भणति-जति अभयं देह, दिण्णं, तेण णियत्तितो अंकुसेण जहा भमित्ता थले ठितो, ताहे उत्तारेत्ता णिव्विसताणि कयाणि। एगत्थ पच्चंतगामे सुन्नघरे ठिताणि, तत्थ य गामेल्लयपारद्धो चोरो तं सुन्नघरं अतिगतो, ते भणंति-वेढेतुं अच्छामो, मा कोवि पविसउ, गोसे घेच्छामो, सोऽवि चोरो लुढंतो किहवि तीसे ढुक्को, तीसे फासो वेदितो, सा ढुक्का भणति-कोऽसि तुमं ?, सो भणति-चोरोऽहं, तीए भणियं-तुमं मम पती होहि, जा एतं साहामो जहा एस चोरोत्ति, तेहिं कल्लं पभाए मेंठो गहिओ, ताहे उविद्धो सूलाए भिण्णो, चोरेण समं सा वच्चति, जावंतरा णदी, सा तेण भणिता-जधा एत्थ सरत्थंभे अच्छ, जा अहं एताणि वत्थाभरणाणि उत्तारेमि, सो गतो, उत्तिण्णो पधावितो, सा भणति-"पुण्णा णदी दीसइ कागपेज्जा, सव्वं पियाभंडग तुज्झ हत्थे। जधा तुमं पारमतीतुकामो, धुवं तुमं भंड गहीउकामो ॥ १ ॥ सो भणति-चिरसंथुतो बालि ! असंथुएणं, मेल्हे पिया ताव धुओऽधुवेणं। जाणेमि तुज्झ प्पयइस्सभावं, अण्णो णरो

१ भणति-यद्यभयं दत्त, दत्त, तेन निवर्त्तितोऽङ्कुशेन यथा भ्रान्त्वा स्थले स्थितः, तदोत्तार्य निर्विषयीकृतौ । एकत्र प्रत्यन्तग्रामे शून्यगृहे स्थितौ, तत्र च ग्रामेयकप्रारब्धश्चौरस्तत् शून्यगृहमतिगतः, ते भणन्ति-वेष्टयित्वा तिष्ठामः, मा कोऽपि प्रविक्षत्, प्रत्यूषे ग्रहीष्याम', सोऽपि चौरो गच्छन् ( लुठन् ) कथमपि तया स्पृष्ट , तस्या स्पर्शो विदित , सा स्पृष्टा भणति-कोऽसि त्व ?, स भणति-चौरोऽहं, तया भणितं-त्वं मम पतिर्भव, यावदेनं कथयावो यथैष चौर इति, तै कल्ये प्रभाते मेण्ठो गृहीतः, तदाववद्ध' शूलाया भिन्न , चौरेण समं सा व्रजति, यावदन्तरा नदी, सा तेन भणिता-यथाऽत्र शरस्तम्बे तिष्ठ, यावदहमेतानि वस्त्राभरणान्युत्तारयामि, स गत , उत्तीर्ण' प्रधावित , सा भणति-पूर्णा नदी दृश्यते काकपेया, सर्वं प्रियाभाण्डकं तव हस्ते । यथा त्व पारमतिगन्तुकामो ध्रुव त्व भाण्ड ग्रहीतुकाम ॥ १ ॥ स भणति-चिरसंस्तुतो बाले ! असस्तुतेन, त्यजसि प्रिय तावत् ध्रुवोऽध्रुवेन । जानामि तव प्रकृतिस्वभावमन्यो नरः * पेच्छामो + उवद्धो.

को तुह विस्ससेज्जा ? ॥ १ ॥" सा भणति-किं जाहि?, सो भणति-जहा ते सो माराबितो एवं ममंपि कहंचि मारेहिसि। इतरोचि तत्थ विद्धो उदगं मग्गति, तत्थेगो सड्ढो, सो भणति-जति नमोक्कारं करेसि तो देमि, सो उदगस्स अट्ठा गतो, जाव तंमि एंते चेव सो णमोक्कारं करेंतो चेव कालगतो, वाणमंतरो जातो, सड्ढोवि आरक्खियपुरिसेहिं गहितो, सो देवो ओहिं पयुंजति, पेच्छति सरीरगं सड्ढं च वद्धं, ताहे सो सिलं विउव्वित्ता मोएति, तं च पेच्छंति सरथंभे णिलुक्कं, ताहे से घिणा उप्पण्णा, सियालरूवं विउव्वित्ता मंसपेसीए गहियाए उदगतीरेण वोलेति, जाव णदीतो मच्छो उच्छलिऊण तडे पडितो ततो सो मंसपेसिं मोत्तूण मच्छस्स पधावितो, सो पाणिए पडितो, मंसपेसीवि सेणेण गहिता, ताहे सियालो झायति, ताए भण्णति-मंसपेसी परिच्चज्ज मच्छं पेच्छसि जंबुआ !। चुक्को मंसं च मच्छं च कलुणं झायसि कोण्हुआ! ॥ १ ॥ तेण भण्णति-'पत्तपुडपडिच्छण्णे ! जणयस्स अयसकारिए !। चुक्का पत्तिं च जारं च

१ कस्यापि विश्वस्यात् ? ॥ १ ॥ सा भणति-किं यासि ?, स भणति-यथा त्वया स मारित एव मामपि कथञ्चिन्मारयिष्यसीति । इतरोऽपि तत्र विद्ध उदक मार्गयति, तत्रैक श्राद्ध , स भणति-यदि नमस्कारं करोषि तदा ददामि, स उदकार्थं गत , यावत्तस्मिन्नागच्छति चैव स नमस्कार कुर्वन्नेव कालगत , व्यन्तरो जात , श्राद्धोऽप्यारक्षकपुरुषैर्गृहीत , स देवोऽवधि प्रयुनक्ति, पश्यति शरीर श्राद्ध च बद्ध, तदा स शिलां विकुर्व्य मोचयति, तां च पश्यति शरस्तम्बे निलीना, तदा तस्य घृणोत्पन्ना, शृगालरूप विकुर्व्य गृहीतमासपेशीक उदकतीरेण व्यतिव्रजति यावत्तथा मत्स्य उच्छल्य तटे पतित , तत' स मांसपेशीं मुक्त्वा मत्स्याय प्रधावित , स पानीये पतित , मासपेश्यपि श्येनेन गृहीता, तदा शृगालो ध्यायति, तया भण्यते-मासपेशीं परित्यज्य मत्स्य प्रार्थयसे जम्बूक !। भ्रष्टो मांसाच्च मत्स्याच्च करुणं ध्यायसि जम्बूक ! ॥ १ ॥ तेन भण्यते-पत्रपुटप्रतिच्छन्ने ! जनकस्य अयशस्कारिके ?। भ्रष्टा पत्युश्च जाराच्च

कलुणं झायसि बंधकी ! ॥ २ ॥ एवं भणिया ता विलिया जाता, ताहे सो सयं रूवं दंसेति, पण्णवित्ता वुत्ता-पवयाहि, ताहे सो राया तज्जितो, तेण पडिवण्णा, सक्कारेण णिक्खंता, देवलोयं गता एवमकामनिज्जराए मेण्ठस्स २ ॥ बालतवेण-वसंतपुर नगरं, तत्थ सिट्ठिघरं मारिए उच्छादितं, इंदणागो नाम दारओ, सो छुट्टो, छुहितो गिलाणो पाणितं मग्गति, जाव सव्वाणि मताणि पेच्छति, बारंपि लोगेण कंटियाहिं ढक्कियं, ताहे सो सुणइयच्छिद्देण णिग्गंतूण तंमि णगरे कप्परेण भिक्खं हिंडति. लोगो से देइ सदेसभूतपुवोत्तिकाउं, एवं सो संवड्डइ । इतो य एगो सत्थवाहो रायगिहं जाउकामो घोसणं घोसावेति, तेण सुतं, सत्थेण समं पत्थितो, तत्थ तेण सत्थे कूरो लद्धो, सो जिमितो, ण जिण्णो, बितियदिवसे अच्छति, सत्थवाहेण दिट्ठो, चिंतेति-णूणं एस उववासिओ. सो य अवत्तलिंगो, बितियदिवसे हिंडंतस्स सेट्ठिणा बहुं णिद्धं च दिण्णं, सो तेण दुवे दिवसा अजिण्णएण अच्छति, सत्थवाहो जाणति-एस छट्ठण्णकालिओ, तस्स सद्धा जाता,

१ करुण ध्यायसि पुंश्चलि ? ॥ १ ॥ एवं भणिता तदा व्यलीका जाता, तदा स स्वकीय रूप दर्शयति, प्रज्ञाप्योक्ता-प्रव्रज, तदा स राजा तर्जित , तेन प्रतिपन्ना, सत्कारेण निष्क्रान्ना, देवलोक गता एवमकामनिर्जरया मेण्ठस्य २ ॥ बालतपसा-वसन्तपुर नगर, तत्र श्रेष्ठिगृह मार्योत्सादितम्, इन्द्रनागो नाम दारक , स त्रुटित , बुभुक्षितो ग्लान पानीय मार्गयति, यावत्सर्वान् मृतान् पश्यति, द्वारमपि लोकेन कण्टकैराच्छादित, तदा स शून्यच्छिद्रेण निर्गत्य तस्मिन्नगरे कर्परेण भिक्षां हिण्डते, लोकस्तस्मै ददाति स्वदेशे भूतपूर्व इतिकृत्वा, एव स संवर्धते । इतश्चैक' सार्थवाहो राजगृह यातुकामो घोषणां घोषयति, तेन श्रुत, सार्थेन सम प्रस्थित , तत्र सार्थ तेन कूरा लब्ध , स जिमित , न जीर्ण , द्वितीयदिवसे तिष्ठति, सार्थवाहेन दृष्ट , चिन्तयति-नूनमेष उपोषित , स चाव्यक्त लिङ्गो, द्वितीयदिवसे हिण्डम ।।य श्रेष्ठिना बहु स्निग्ध च दत्त, स तेन द्वौ दिवसौ अजीर्णेन तिष्ठति, सार्थवाहो जानाति-एष षष्ठान्नकालिक , तस्य श्रद्धा जाता, * सत्कारेण दीक्षाग्रहणाय.

सो ततियदिवसे हिंडंतो सत्थवाहेण सद्दावितो, कीसऽसि कल्लं णागतो ?, तुण्हिक्को अच्छति, जाणइ, जधा-छट्ठं कतेल्लयं, ताहे से दिण्णं, तेणवि अण्णेवि दो दिवसे अच्छावितो, लोगोवि परिणतो, अण्णस्स णिमंतेंतस्सवि ण गेण्हति, अण्णे भणंति-एसो एगपिंडिओ, तेण तं अट्ठापदं लद्धं, वाणिएण भणितो-मा अण्णस्स खणं गेण्हेज्जासि, जाव णगरं गम्मति ताव अहं देमि, गता णगरं, तेण से णियघरे मढो कतो, ताधे सीसं मुंडावेति कासायाणि य चीवराणि गेण्हति, ताधे विक्खातो जणे जातो, ताधे तस्सवि घरे णेच्छति, ताधे जद्दिवसं से पारणयं तद्दिवसं से लोगो आणेइ भत्तं, एगस्स पडिच्छति, ततो लोगो ण याणति-कस्स पडिच्छितंति ?, ताधे लोगेण जाणणाणिमित्तं भेरी कता, जो देति सो ताडेति, ताहे लोगो पविसति, एवं वच्चति कालो । सामी य समोसरितो, ताहे साधू संदिसावेत्ता भणिता-मुहुत्तं अच्छह, अणेसणा, तंमि जिमिते भणिता-ओयरह, गोतमो य भणितो-मम वयणेणं भणेज्जासि-भो अणेगपिंडिया ! एगपिंडितो ते

१ स तृतीयदिवसे हिण्डमान सार्थवाहेन शब्दित , किमासी'' कल्ये नागत ?, तूष्णीकस्तिष्ठति, जानाति, यथा-षष्ठ कृत, तदा तस्मै दत्त, तेनाप्यन्यावपि द्वौ दिवसौ स्थापित , लोकोऽपि परिणत , अन्यस्य निमन्त्रयतोऽपि न गृह्णाति, अन्ये भणन्ति-एष एकपिण्डिक , तेन तत् अर्थास्पद लब्ध, वणिजा भणित -माऽन्यस्य पारण गृह्णीया , यावन्नगर गम्यते तावदह दास्यामि, गता नगर, तेन तस्य निजगृहे मठ' कृत ,तदा शीर्षे मुण्डयति काषायिकाणि च चीवराणि गृह्णाति, तदा विख्यातो जने जात , तदा तस्यापि गृहे नेच्छति, तदा यस्मिन् दिवसे तस्य पारण तस्मिन् दिवसे तस्य लोक आनयति भक्तम्, एकस्य प्रतीच्छति, ततो लोको न जानाति-कस्य प्रतीष्टमिति, तदा लोकेन ज्ञापनानिमित्त भेरी कृता, यो ददाति स ताडयति, तदा लोक प्रविशति, एव व्रजति काल । स्वामी च समवसृत , तदा साधव सदिशान्तो भणिताः-मुहूर्त तिष्ठत, अनेषणा तस्मिन् जिमिते भणिता'-अवतरत, गौतमश्च भणितो-मम वचनेन भणे -भो अनेकपिण्डिक ! एकपिण्डिकस्त्वां * अष्टापद प्र०

दट्ठुमिच्छति, ताहे गोतमसामिणा भणितो रुट्ठो, तुब्भे अणेगाणि पिंडसताणि आहारेह, अहं एगं पिंडं भुंजामि, तो अहं चेव एगपिंडिओ, मुहुत्तन्तरस्स उवसंतो चिंतेति-ण एते मुसं वदंति, किह होज्जा ?, लद्धा सुती, होमि अणेगपिंडितो, जद्दिवसं मम पारणयं तद्दिवसं अणेगाणि पिंडसताणि कीरंति, एते पुण अकतमकारितं भुंजंति, तं सच्चं भणति, चिन्तंतेण जाती सरिता, पत्तेयबुद्धो जातो, अज्झयणं भासति, इंदणागेण अरहता वुत्तं, सिद्धो य । एवं बालतवेण सामाइयं लद्धं तेण ३ । दाणेण, जधा-एगाए वच्छवालीए पुत्तो, लोगेण उस्सवे पायसं ओवक्खडितं, तत्थासन्नघरे दारगरूवाणि पासति पायसं जिमिंताणि, ताधे सो मायरं भणेइ-ममऽवि पायसं रंधेहि, ताहे णत्थित्ति सा अद्धितीए परुण्णा, ताओ सएज्झियाओ पुच्छंति, णिब्बंधे कथितं, ताहिं अणुकंपाए अण्णाएवि अण्णाएवि आणीतं खीरं साली तंदुला य, ताधे थेरीए पायसो रद्धो, ततो तस्स दारयस्स ण्हायस्स पायसस्स घतमधुसंजुत्तस्स थालं भरेऊण उवट्ठितं, साधू य

१ द्रष्टुमिच्छति, तदा गौतमस्वामिना भणितो रुष्ट , यूयमनेकानि पिण्डशतान्याहारयत, अहमेक पिण्ड भुञ्जे, ततोऽहमेवैकपिण्डिक , मुहूर्तान्तरेणोपशान्तश्चिन्तयति-नैते मृषा वदन्ति, कथ भवेत् ?, लब्धा श्रुति , भवाम्यनेकपिण्डिको, यद्दिवसे मम पारण तद्दिवसेऽनेकानि पिण्डशतानि क्रियन्ते, एते पुनरकृतमकारित भुञ्जन्ति, तत्सत्य भणन्ति, चिन्तयता जाति स्मृता, प्रत्येकबुद्धो जात , अध्ययन भाषते, इन्द्रनागेन अर्हता वृत्ता, सिद्धश्च। एव बालतपसा सामायिक लब्ध तेन ३ । दानेन, यथा-एकस्या वत्सपाल्या पुत्र , लोकेनोत्सवे पायसमुपस्कृत, तत्रासन्नगृहे दारकरूपाणि पश्यति पायसं जिमन्ति, तदा स मातर भणति-ममापि पायस पच, तदा नास्तीति साऽधृत्या प्ररुदिता, ता सख्य पृच्छन्ति, निर्बन्धे कथित, ताभिरनुकम्पया अन्ययाऽपि अन्ययाऽपि आनीत क्षीर शालयस्तन्दुलाश्च, तदा स्थविरया पायस पक्व, तत दारकाय स्नाताय घृतमधुसयुक्तेन पायसेन स्थालो भृत्वोपस्थापित , साधुश्च * चद्धेइ

मासखवणपारणते आगतो, जाव थेरी अंतो वाउला ताव तेण धम्मोऽवि मे होउत्ति तस्स पायसस्स तिभागो दिण्णो, पुणो चिंतितं-अतिथोवं, त्रितिओ तिभागो दिण्णो, पुणोवि णेण चिंतितं-एत्थ जति अण्णं अंबक्खलगादि छुभति तोऽवि णस्सति, ताहे तइओ तिभागो दिण्णो, ततो तस्स तेण दव्वसुद्धेण दायगसुद्धेण गाहगसुद्धेण तिविहेण तिकरणसुद्धेण भावेणं देवाउए णिबद्धे, ताधे माता से जाणति-जिमिओ, पुणरवि भरितं, अतीव रंकत्तणेण भरितं पोट्टं, ताधे रत्तिं विसूइयाए मतो देवलोगं गतो, ततो चुतो रायगिहे नगरे पधाणस्स धणावहस्स पुत्तो भद्दाए भारियाए जातो, लोगो य गब्भगते भणति-कयपुण्णो जीवो जो उववण्णो, ततो से जातस्स णामं कतं कतपुण्णोत्ति, वड्ढितो, कलाओ गहियातो, परिणीतो, माताए दुल्ललियगोट्ठीए छूढो, तेहिं गणियाघरं पवेसितो, बारसहिं वरिसेहिं णिद्धणं कुलं कतं, तोऽवि सो ण णिग्गच्छति, मातापिताणि से मताणि, भज्जा य से आभरणगाणि चरिमदिवसे पेसेति, गणितामायाए णातं-णिस्सारो

१ मासक्षपणपारणाय आगत, यावत्स्थविराऽन्तर्व्याकुला (व्यापृता) तावत्तेन धर्मोऽपि मम भवत्विति तस्य पायसस्य त्रिभागो दत्त, पुनश्चिन्तितम्-अतिस्तोक, द्वितीयस्त्रिभागो दत्त, पुनरप्यनेन चिन्तितम्-अत्र यद्यन्यदम्लखलादि क्षिप्यते तदपि नश्यति, तदा तृतीयस्त्रिभागो दत्त, ततस्तस्यानेन द्रव्यशुद्धेन दायकशुद्धेन ग्राहकशुद्धेन त्रिविधेन त्रिकरणशुद्धेन भावेन देवायुर्निबद्ध, तदा माता तस्य जानाति-जिमितः, पुनरपि भृत, अतीव रङ्कतया भृत मुदर, तदा रात्रौ विसूचिकया मृतो देवलोक गतः, ततश्च्युतो राजगृहे नगरे प्रधानस्य धनावहस्य पुत्रो भद्रायां भार्यायां जात, लोकश्च गर्भगते भणति-कृतपुण्यो जीवो य उत्पन्न, ततस्तस्य जातस्य नाम कृत कृतपुण्य इति, वृद्ध, कला गृहीता, परिणीत, मात्रा दुर्ललितगोष्ठ्यां क्षिप्त, तैर्गणिकागृह प्रवेशितो, द्वादशभिर्वर्षैर्निर्धन कुल कृत, तदाऽपि स न निर्गच्छति, मातापितरौ तस्य मृतौ, भार्या च तस्याभरणानि चरमदिवसे प्रेषते, गणिकामात्रा ज्ञात-निस्सार * धणसत्थवाहस्स प्र०

कतो, ताधे ताणि अण्णं च सहस्सं पडिविसज्जितं, गणियामाताए भण्णइ-णिच्छुभउ एसो, सा णेच्छति, ताहे चोरियं णीणिओ घरं सज्जिज्जति, उत्तिण्णो बाहिं अच्छति, ताहे दासीए भण्णति-णिच्छूढोऽवि अच्छसि?, ताहे णियघरयं सडियपडियं गतो, ताहे से भज्जा संभमेण उट्ठिता, ताहे से सव्वं कथितं, सोगेणं अप्फुण्णो भणति-अत्थि किंचि? जा अण्णहिं जाइत्ता ववहरामि, ताहे जाणि आभरणगाणि गणितामाताए जं च सहस्सं कप्पासमोल्लं दिण्णं ताणि से दंसिताणि, सत्थो य तद्दिवसं कंपि देसं गंतुकामओ, सो तं भंडमोल्लं गहाय तेण सत्थेण समं पधावितो, बाहिं देउलियाए खट्टं पाडिऊणं सुत्तो। अण्णस्स य वाणिययस्स माताए सुतं, जधा-तव पुत्तो मतो वाहणे भिन्ने, तीए तस्स दव्वं दिण्णं, मा कस्सइ कधिज्जसि, तीए चिंतितं-मा दव्वं जाउ राउलं, पविसिहिति मे अपुत्ताए, ताहे रत्तिं तं सत्थं एति, जा कंचि अणाहं पासेमि, ताहे तं पासति, पडिबोधित्ता पवेसितो, ताहे घरं नेतूण रोवति-चिरणट्ठगत्ति पुत्ता!, सुण्हाणं चउण्हं ताणं कधेति-एस देवरो भे

१ कृत, तदा तानि अन्यच्च सहस्र प्रतिविसृष्ट, गणिकामात्रा भण्यते-निष्काश्यतां एष, सा नेच्छति, तदा चौर्येण निनीषित, गृह सज्यते, उत्तीर्णोऽस्ति बहिः, तदा दास्या भण्यते-निष्काशितोऽपि तिष्ठसि?, तदा निजगृह शटितपतित गत, तदा तस्य भार्या संभ्रमेणोत्थिता, तदा तस्मै स कथित, शोकेन व्याप्तो भणति-अस्ति किञ्चित ? यावदन्यत्र याचित्वा व्यवहरामि, तदा यान्याभरणानि गणिकामात्रा यच्च सहस्र कर्पासमूल्य दत्त तानि तस्मै दर्शितानि, सार्थश्च तस्मिन् दिवसे कमपि देश गन्तुकाम, स तत् भाण्डमूल्य गृहीत्वा तेन सार्थेन सम प्रधावित., बहिर्देवकुलिकायां खट्वां पातयित्वा सुप्त। अन्यस्य च वणिजो मात्रा श्रुत, यथा-तव पुत्रो मृतो वाहने भिन्ने, तया तस्मै द्रव्य दत्त, मा कस्मैचित् कथय, तया चिन्तित-मा द्रव्य यासीत् राजकुल, प्रवेक्ष्यति ममापुत्रायाः, तदा रात्रौ त सार्थमेति, यद् कञ्चिदनाथ पश्यामि, तदा स पश्यति, प्रतिबोध्य प्रवेशित, तदा गृह नीत्वा रोदिति-चिरनष्ट पुत्र! स्नुषाभ्यश्च तसृभ्यस्ताभ्य कथयति-एष देवा भवन्तीनां

चिरणट्ठओ, ताओ तस्स लाइताओ, तत्थवि बारस वरिसाणि अच्छति, तत्थ एक्केक्काए चत्तारि पंच चेडरूवाणि जाताणि, थेरीए भणितं-एत्ताहे णिच्छुभतु, ताओ ण तरंति धरितुं, ताधे ताहिं संबलमोदगा कता, अंतो रयणाण भरिता, वरं से एयं पाओग्गं होति, ताधे वियडं पाएत्ता ताए चेव देवउलियाए ओसीसए से संबलं ठवेत्ता पडियागता, सोऽवि सीतलएण पवणेणं संबुद्धो पभातं च, सोवि सत्थो तद्दिवसमागतो, इमाएवि गवेसओ पेसिओ, ताहे उट्ठवित्ता घरं णीतो, भज्जा से संभमेण उट्ठिता, संबलं गहितं, पविट्ठो, अब्भंगादीणि करेति, पुत्तो य से तदा गब्भिणीए जातो, सो एक्कारसवरिसो जाओ, लेहसालाओ आगतो रोयति-देहि मे भत्तं, मा उवज्झाएण हम्मिहामित्ति, ताए ताओ संबलथइयातो मोयगो दिण्णो, णिग्गतो खायंतो, तत्थ रयणं पासति, लेहचेडएहिं दिट्ठं, तेहिं पूवियस्स दिण्णं, दिवे दिवे अम्ह पोलियाओ देहित्ति, इमोवि जिमिते मोयगे भिंदति, तेण दिट्ठाणि, भणति-सुंकभएण कताणि, तेहिं रयणेहिं तहेव

१ चिरनष्ट, तास्तस्मिन् लग्ना, तत्रापि द्वादश वर्षाणि तिष्ठति, तत्रैकैकस्याश्चत्वार पञ्च पुत्रा जाता, स्थविरया भणितम्-अधुना निष्काशयन्तु, ता न धर्तुं शक्नुवन्ति, तदा ताभि शम्बलमोदका कृता, अन्तो रत्नैर्भृता, वर तस्यैतत् प्रायोग्य भवति, तदा विकट पाययित्वा तस्यामेव देवकुलिकायामुच्छीर्षके तस्य शम्बल स्थापयित्वा प्रत्यागता, सोऽपि शीतलेन पवनेन संबुद्ध प्रभात च, सोऽपि सार्थस्तस्मिन् दिवसे आगतः, अनयाऽपि गवेषक प्रेषित, तदोत्थाप्य गृह नीत, भार्या तस्य सम्भ्रमेण उत्थिता, शम्बल गृहीत, प्रविष्ट, अभ्यङ्गादीनि करोति, पुत्रश्च तस्य तदा गर्भिण्या जात, स एकादशवार्षिको जात, लेखशालाया आगतो रोदिति-देहि मह्य भक्त मोपाध्यायेन घानिषम्, तया तस्मा शम्बलस्थगिकातो मोदको दत्तः, निर्गत खादन्, तत्र रत्न पश्यति, लेखदारकैर्दृष्ट, तैरापूपिकाय दत्त, दिवसे दिवसेऽस्माक पोलिका दद्या इति, अयमपि जिमिते मोदकान् भिनत्ति, तेन दृष्टानि, भणति-शुल्कभयेन कृतानि, तै रत्नैस्तथैव

पवित्थरितो। सेतणओ य गंधहत्थी णदीए तंतुएण गहितो, राया आदण्णो, अभयो भणति–जइ जलकंतो अत्थि तो छड्डेति, सो राउले अतिबहुअत्तणेण रतणाण चिरेण लब्भिहितित्तिकाऊण पडहओ णिप्फिडितो–जो जलकंतं देति तस्स राया रज्जं अद्धं धूतं च देति, ताधे पुविएण दिण्णो,णीतो, उदगं पगासितं, तंतुओ जाणति–थलं णीतो, मुक्को, णट्ठो, राया चिंतेति–कतो ?, पुवियस्स पुच्छति–कतो एस तुज्झं ?, निब्बंधे सिट्ठं–कयपुण्णगपुत्तेण दिण्णो, राया तुट्ठो, कस्स अण्णस्स होहिति?, रण्णा सद्दाविऊण कतपुण्णओ धूताए विवाहितो, विसओ से दिण्णो, भोगे भुंजति, गणितावि आगता भणति–एच्चिरं कालं अहं वेणीबंधेण अच्छिता, सबवेतालीओ तुमं अट्ठाए गवेसाविताओ, एत्थ दिट्ठोत्ति, कतपुण्णओ अभयं भणति–एत्थ मम चत्तारि महिलाओ, तं च घरं ण याणामि, ताहे चेतियघरं कतं, लेप्पगजक्खो कतपुण्णगसरिसो कतो, तस्स अच्चणिया घोसाविता, दो य वाराणि कताणि, एगेण पवेसो एगेण णिप्फेडो, तत्थ अभओ

१ प्रविस्तृत । सेचनकश्च गन्धहस्ती नद्यां तन्तुकेन गृहीत , राजा खिन्न , अभयो भणति–यदि जलकान्तो भवेत् तदा त्यजेत्, स राजकुलेऽतिबहुत्वेन रत्नानां चिरेण लप्स्यत इतिकृत्वा पटहो दापित –यो जलकान्त ददाति तस्मै राजा राज्यमर्धं दुहितरं च ददाति, तदाऽऽपूपिकेन दत्तो, नीत , उदक प्रकाशित, तन्तुको जानाति–स्थल नीत , मुक्तो, नष्ट , राजा चिन्तयति–कुत ?, आपूपिक पृच्छति–कुत एप तव?, निर्बन्धे शिष्ट–कृतपुण्यकपुत्रेण दत्त , राजा तुष्ट , कस्यान्यस्य भवेत् ?, राज्ञा शब्दयित्वा कृतपुण्यको दुहित्रा विवाहित , विषयस्तस्मै दत्त., भोगान् भुनक्ति, गणिकाऽप्यागता, भणति–इयच्चिर कालमहं वेणीबन्धेन स्थिता, सर्ववैतालिकास्त्वदर्थं गवेषिता , अत्र दृष्ट इति, कृतपुण्यकोऽभय भणति–अत्र मम चतस्रो महेला , तच्च गृह न जानामि, तदा चैत्यगृह कृत, लेप्ययक्ष. कृतपुण्यकसदृश. कृत , तस्यार्चनिका घोषिता, द्वे च द्वारे कृते, एकेन प्रवेश एकेन निर्गम', तत्राभय.

कतपुण्णओ य एगत्थ बारब्भासे आसणवरगया अच्छंति, कोमुदी आणत्ता, जधा पडिमपवेसो अच्चणियं करेह, णयरे घोसितं–सबमहिलाहिं एत्तबं, लोगोऽवि एति, ताओऽवि आगताओ, चेडरूवाणि तत्थ बप्पोत्ति उच्छंगे णिविसंति, णाताओ तेण, थेरी अंबाडिता, ताओऽवि आणिताओ, भोगे भुंजति सत्तहिवि सहितो। वद्धमाणसामी य समोसरितो, कतपुण्णओ सामिं वंदिऊण पुच्छति–अप्पणो संपत्तिं विपत्तिं च, भगवता कथितं–पायसदाणं, संवेगेण पबइतो। एवं दाणेण सामाइयं लब्भति ४। इदाणि विणएणं, मगधाविसए गोबरगामे पुप्फसालो गाहावती, तस्स भद्दा भारिया, पुत्तो से पुप्फसालसुओ, सो मातापितरं पुच्छति–को धम्मो ?, तेहिं भण्णति–मातापितरं सुस्सूसितबं–दो चेव देवताइं माता य पिता य जीवलोगंमि। तत्थवि पिया विसिट्ठो जस्स वसे वट्टते माता ॥ १ ॥ सो ताण एप मुहधोवणादिविभासा, देवताणि व ताणि सुस्सूसति। अण्णता गामभोइओ आगतो, ताणि संभंताणि पाहुण्णं करेंति, सो चिंतेति–एताणवि एस देवतं, एतं

१ कृतपुण्यकश्चैकत्र द्वाराभ्यासे आसनवरगतौ तिष्ठत , कौमुदी आज्ञप्ता, यथा प्रतिमाप्रवेशोऽर्चनां कुरुत, नगरे घोषित–सर्वमहिलाभिरागन्तव्य, लोकोऽप्यायाति, ता अपि आगता , चेटरूपाणि तत्र बप्प इति उत्सङ्गे निविशन्ते, ज्ञातास्तेन, स्थविरा निर्भर्त्सिता, ता अपि आनीता , भोगान् भुनक्ति सप्तभिरपि सहित । वर्धमानस्वामी च समवसृत , कृतपुण्यक स्वामिन वन्दित्वा पृच्छति–आत्मन सम्पत्तिं विपत्तिं च, भगवता कथित–पायसदान, संवेगेन प्रव्रजित । एव दानेन सामायिक लभ्यते । इदानीं विनयेन , मगधाविषये गूर्बरग्रामे पुष्पशालो गाथापति , भद्रा तस्य भार्या, पुत्रस्तस्य पुष्पशालसुत , स मातरपितर पृच्छति–को धर्म ?, ताभ्यां भण्यते–मातरपितरौ शुश्रूषितव्यौ, द्वे एव दैवते माता च पिता च जीवलोके । तत्रापि पिता विशिष्टो यस्य वशे वर्त्तते माता ॥ १ ॥ स तयो प्रगे मुखधावनादिविभाषा, दैवते इव तौ शुश्रूषते । अन्यदा ग्रामभोजिक आगत , तौ सम्भ्रान्तौ प्राघूर्ण्यं कुरुत , स चिन्तयति–एतयोरपि एतद्दैवतम् , एत

पूएमि तो धम्मो होहिति, तस्स सुस्सूसं पकतो। अण्णता तस्स भोइओ, तस्सवि अण्णो, तस्सवि अण्णो, जाव सेणियं रायाणं ओलग्गिउमारद्धो, सामी समोसढो, सेणिओ इड्ढीए गंतूण वंदति, ताहे सो सामिं भणति–अहं तुब्भे ओलग्गामि?, सामिणा भणितं–अहं रयहरणपडिग्गहमत्ताए ओलग्गिज्जामि, ताणं सुणणाए संबुद्धो, एव विणएण सामाइयं लब्भति ५। इदानीं विभंगेण लब्भति, जधा–अत्थि मगधाजणवए सिवो राया, तस्स धणधन्नहिरण्णाइ पइदियहं वड्ढति, चिंता जाया–अत्थि धम्मफलंति, तो मह हिरण्णादि वड्ढति, ता पुण्णं करेमित्तिकलिऊण भोयणं कारितं, दाणं च णेण दिण्णं, ततो पुत्तं रज्जे ठवेऊण सकततंबमयभिक्खाभायणकडुच्छुगोवगरणो दिसापोक्खियतावसाण मज्झे तावसो जातो, छट्ठठमातो परिसडियपंडुपत्ताणि आणिऊण आहारेति, एव से चिट्ठमाणस्स कालेण विभंगणाणं समुप्पन्नं सखेज्जदीवसमुद्दविसयं, ततो णगरमागंतूण जधोवलद्धे भावे पण्णवेति। अण्णता साधवो दिट्ठा, तेसिं किरियाकलावं विभंगाणुसारेण

१ पूजयामि ततो धर्मो भविष्यति, तस्य शुश्रूषा प्रकृत । अन्यदा तस्य भोजिक , तस्याप्यन्य ,तस्याप्यन्य यावच्छ्रेणिक राजानमवलगितुमारब्ध , स्वामी समवसृत , श्रेणिक ऋद्ध्या गत्वा वन्दते, तदा स स्वामिन भणति–अह त्वामवलगामि?, स्वामिना भणितम्–अह रजोहरणप्रतिग्रहमात्रयाऽवलग्ये, तेषा श्रवणेन सबुद्ध । एव विनयेन सामायिक लभ्यते । इदानीं विभङ्गेन लभ्यते, यथाऽस्ति मगधाजनपदे शिवो राजा, तस्य धनधान्यहिरण्यादि प्रतिदिवस वर्धते चिन्ता जाता–अस्ति धर्मफलमिति, ततो मम हिरण्यादि वर्धते, तत् पुण्य करोमीति कलयित्वा भोजन कारित, दान चानेन दत्त, तत पुत्र राज्ये स्थापयित्वा स्वकृतताम्रमयभिक्षाभाजनकडुच्छुकोपकरणो दिक्प्रोक्षिततापसानां मध्ये तापसो जात , षष्ठाष्टमात् परिशटितपाण्डुपत्राणि आनीय आहारयति, एव तस्य तिष्ठत कालेन विभङ्गज्ञान समुत्पन्न सख्येयद्वीपसमुद्रविषय, ततो नगरमागत्य यथोपलब्धान् भावान् प्रज्ञापयति । अन्यदा साधवो दृष्टा , तेषा क्रियाकलाप विभङ्गानुसारेण

लोगमाणस्स विसुद्धपरिणामस्स अपुव्वकरणं जातं, ततो केवली संवुत्तोत्ति ६। संयोगविओगओऽवि लब्भति, जधा दो मधुराओ–दाहिणा उत्तरा य, तत्थ उत्तराओ वाणियओ दक्खिणं गतो, तत्थ एगो वाणियओ तप्पडिमो, तेण से पाहुण्णं कतं, ताहे ते णिरतरं मित्ता जाता. अम्हं थिरतरा पीती होहितित्ति जति अम्ह पुत्तो धूता य जायति तो संयोगं करेस्सामो, ताहे दक्खिणेण उत्तरस्स धूता वरिता, दिण्णाणि बालाणि, एत्थंतरे दक्खिणमधुरावाणियओ मतो, पुत्तो से तंमि ठाणे ठितो, अण्णता सो ण्हाति, चउद्दिसं चत्तारि सोवण्णिया कलसा ठविता, ताण बाहिं रोप्पिया, ताणं बाहिं तंबिया, ताण बाहिं मट्टिया, अण्णा य ण्हाणविधी रइता, ततो तस्स पुवाए दिसाए सोवण्णिओ कलसो णट्ठो, एवं चउद्दिसंपि, एवं सवे णट्ठा, उट्ठितस्स ण्हाणपीढंपि णट्ठं, तस्स अद्धिती जाता, णाडइज्जाओ वारिताओ, जाव घरं पविट्ठो ताधे उवट्ठविता भोयणविही, ताधे सोवण्णियरूप्पमताणि रइयाणि भायणाणि, ताधे एक्केक्कं भायणं णासिउमारद्धं, ताहे सो

१ लोकमानस्य विशुद्धपरिणामस्यापूर्वकरण जात, तत केवली सवृत्त इति। संयोगवियोगतोऽपि लभ्यते, यथा द्वे मधुरे- दक्षिणोत्तरा च, तत्रोत्तरस्या वणिक् दक्षिणां गत, तत्र एको वणिक् तत्प्रतिम', तेन तस्य प्राघूर्ण्यं कृत, तदा तौ निरन्तर मित्रे जातौ, आवयोः स्थिरतरा प्रीतिर्भविष्यतीति यद्यावयो पुत्रो दुहिता वा जायते तदा सयोग करिष्याव, तदा दाक्षिणात्येनौत्तरस्य दुहिता वृता, दत्ता बालिका। अत्रान्तरे दक्षिणमधुरावणिक् मृतः, पुत्रस्तस्य तस्मिन् स्थाने स्थित, अन्यदा स स्नाति, चतुर्दिश चत्वारः सौवर्णिकाः कलशा' स्थापिताः, तेभ्यो बहिः रौप्यका तेभ्यो बहिस्ताम्रास्तेभ्यो बहिः मार्त्तिका, अन्यथ स्नानविधी रचित, ततस्तस्य पूर्वस्या दिश सौवर्ण कलशो नष्ट, एव चतुर्दिग्भ्योऽपि, एव सर्वे नष्टाः, उत्थितस्य स्नानपीठमपि नष्ट, तस्याधृतिर्जाता, नाटकीया वारिता, यावद्गृह प्रविष्टस्तदोपस्थितो भोजनविधिः, तदा सौवर्णरूप्यमयानि रचितानि भाजनानि, तदा एकैकं भाजनं नंष्टुमारब्ध, तदा स

पेच्छति णासंति, जावि से मूलपत्ती सावि णासिउमाढत्ता, ताहे तेण गहिता, जत्तियं गहियं तत्तियं ठितं, सेसं नट्ठं, ताधे गतो सिरिघरं जोएति, सोऽवि रित्तओ, जंपि णिहाणपउत्तं तंपि णट्ठं, जंपि आभरणं तंपि णत्थि, जंपि वुड्ढिपउत्तं तेवि भणंति–तुमं ण याणामो, जोऽवि दासीवग्गो सोऽवि णट्ठो, ताधे चिंतेति–अहो अहं अधण्णो, ताधे चिंतेति–पव्वयामि, पव्वइतो। थोवं पढित्ता हिंडति तेण खंडेण हत्थगयेण कोउहल्लेणं, जइ पेच्छिज्जामि, विहरंतो उत्तरमधुरं गतो। ताणिऽवि रयणाणि ससुरकुलं गताणि, ते य कलसा, ताहे सो मज्जति, उत्तर माथुरो वाणिओ उवगिज्जंतो जाव ते आगया कलसा, ताहे सो तेहिं चेव पमज्जितो, ताहे भोयणवेलाए तं भोयणभंडं उवट्ठवितं, जहापरिवाडीय ठितं, ततो सोऽवि साधू तं घरं पविट्ठो, तत्थ तस्स सत्थवाहस्स धूया पढमजोव्वणे वट्टमाणी वीयणयं गहाय अच्छति, ताहे सो साधू तं भोयणभंडं पेच्छति, (ग्रं० ९००० ) सत्थवाहेण भिक्खा णीणाविता, गहितेवि अच्छति, ताहे पुच्छइ–किं भगवं! एयं चेडिं पलोएह,

१ प्रेक्षते नश्यन्ति, यापि च तस्य मूलपात्री साऽपि नष्टुमारब्धा, तदा तेन गृहीता, यावद्गृहीत तावत्स्थित, शेषं नष्ट, तदा गतः श्रीगृहं पश्यति, सोऽपि रिक्त, यदपि निधानप्रयुक्त तदपि नष्ट, यदप्याभरण तदपि नास्ति, यदपि वृद्धिप्रयुक्त तेऽपि भणन्ति–त्वां न जानीमः, योऽपि दासीवर्गः सोऽपि नष्टः, तदा चिन्तयति–अहो अहमधन्य, तदा चिन्तयति–प्रव्रजामि, प्रव्रजितः। स्तोकं पठित्वा हिण्डते तेन खण्डेन हस्तगतेन कौतूहलेन, यदि प्रेक्षेय, विहरन् उत्तरमधुरा गत,। तान्यपि रत्नानि श्वशुरकुल गतानि, ते च कलशा', तदा स मज्जति उत्तरमाथुरवणिगुपगीयमानः यावत्त आगता कलशाः, तदा स तैरेव प्रमद्धक्त, तदा भोजनवेलाया तदेव भोजनभाण्डमुपस्थित यथापरिपाटि च स्थित, ततः सोऽपि साधुस्तद्गृह प्रविष्टः, तत्र तस्य सार्थवाहस्य दुहिता प्रथमयौवने वर्तमाना व्यजनं गृहीत्वा तिष्ठति, तदा स साधुस्तद् भोजनभाण्ड प्रेक्षते, सार्थवाहेन भिक्षा आनायिता, गृहीतायामपि तिष्ठति, तदा पृच्छति–किं भगवन्! एना चेटीं प्रलोकयति?

ताहे सो भणति–ण मम चेडीए पयोयणं, एयं भोयणभंडं पलोएमि, ततो पुच्छति–कत्तो एतस्स तुज्झ आगमो?, सो भणति–अज्जयपज्जयागतं, तेण भणितं–सब्भावं साह, तेण भणियं–मम ण्हायंतस्स एवं चेव ण्हाणविही उवट्ठिता, एवं सव्वाणिऽवि जेमणभोयणविही सिरिघराणिऽवि भरिताणि, णिक्खित्ताणि दिट्ठाणि, अदिट्ठपुव्वा य धारिया आणेत्ता देंति, साहू भणति–एयं मम आसी, किह?, ताहे कहेति–ण्हाणादि, जइ ण पत्तियसि ततो णेण तं भोयणवत्तीखंडं ढोइतं, चडत्ति लग्गं, पिउणो य णामं साहति, ताहे णातं जहा एस सो जामातुओ, ताहे उट्ठेऊण अवयासित्ता परुण्णो भणति–एयं सव्वं तदवत्थं अच्छति, एसा ते पुव्वदिण्णा चेडी पडिच्छसुत्ति, सो भणति–पुरिसो वा पुव्वं कामभोगे विप्पजहति, कामभोगा वा पुव्वं पुरिसं विप्पजहंति, ताहे सोऽवि संवेगमावण्णो ममंपि एमेव विप्पयहिस्संतित्ति पव्वइतो। तत्थेगेण विप्पयोगेण लद्धं, एगेण संयोगेण सामाइयं लद्धंति। इदाणिं वसणेण, दो भाउगा सगडेण वच्चंति, चक्कुलेण्डा य

१ तदा स भणति–न मम चेट्या प्रयोजन, एतत् भोजनभाण्ड प्रलोकयामि, तत पृच्छति–कुत एतस्य तवागम?, स भणति–आर्यकप्रार्यकागत (पितृपितामहागत), तेन भणित–सद्भाव कथय, तेन भणित–मम स्नायमानस्यैवमेव स्नानविधिरुपस्थित', एव सर्वोऽपि जेमनभोजनविधि, श्रीगृहाण्यपि भृतानि, निखातानि दृष्टानि, अदृष्टपूर्वाश्च धारका आनीय ददति, साधुर्भणति–एतन्ममासीत्, कथम्?, तदा कथयति–स्नानादि, यदि न प्रत्येषि (यदा न प्रत्यगात्) तदाऽनेन तद्भोजनपात्रीखण्डं ढौकितं, झटिति लग्न, पितुश्च नाम कथयति, तदा ज्ञातं यथा एष स जामाता, तदोत्थायावकाश्य प्ररुदितो भणति–एतत् सर्वं तदवस्थ तिष्ठति, एषा त्वया पूर्वं दत्ता चेटी प्रतीच्छेति, स भणति–पुरुषो वा पूर्वं कामभोगान् विप्रजहाति, कामभोगा वा पूर्वं पुरुष विप्रजहति, तदा सोऽपि संवेगमापन्नो मामप्येवमेव विप्रहास्यन्तीति प्रव्रजित। तत्रैकेन विप्रयोगेन लब्धमेकेन सयोगेन सामायिकं लब्धमिति। इदानीं व्यसनेन, द्वौ भ्रातरौ शकटेन व्रजत, चक्रोकण्डिका (द्विमुखः सर्पः) च.

सगडवट्टाए लोलति, महल्लेण भणियं-उँबत्तेहि भंडिं, इतरेण वाहिया भंडी, सा सन्नी सुणेति, छिण्णा चक्केण, मता इत्थिया जाया हत्थिणापुरे णगरे, सो महल्लतरो पुब्वं मरित्ता तीसे पोट्टे आयाओ पुत्तो जाओ, इट्ठो, इतरोऽवि तीसे चेव पोट्टे आयाओ, जं सो उववण्णो तं सा चिंतेति-सिलं व हाविज्जामि, गब्भपाडणेहिं वि ण पडति, तओ सो जाओ दासीए हत्थे दिण्णो, छड्डेहि, सो सेट्ठिणा दिट्ठो णिज्जंतो, तेण घेत्तूण अण्णाए दासीए दिण्णो, सो तत्थ संवड्ढइ। तत्थ महल्लगस्स णाम रायललिओ इयरस्स गंगदत्तो, सो महल्लो जं किंचि लहइ ततो तस्सवि देति, माऊए पुण अणिट्ठो, जहिं पेच्छइ तहिं कट्ठादीहिं पहणइ। अण्णया इंदमहो जाओ, तओ पियरेण अप्पसागारियं आणीओ, आसंदगस्स हेट्ठा कओ, जेमाविज्जइ, ओहाडिओ, ताहे कहवि दिट्ठो, ताहे हत्थे घेत्तूण कड्ढिओ, चंदणियाए पक्खित्तो, ताहे सो रुवइ, पिउणा ण्हाणिओ, एत्थंतरे साहू भिक्खस्स अतियओ, सिट्ठिणा पुच्छिओ-भगवं! माउए पुत्तो अणिट्ठो भवइ ?, हंता भवइ, किह पुण ?,

---

१ शकटवर्त्मन्यां लुठति, महता भणित-उद्वर्तय गन्त्रीम्, इतरेण वाहिता गन्त्री, सा सञ्ज्ञिनी शृणोति, छिन्ना चक्रेण, मृता स्त्री जाता हस्तिनागपुरे नगरे, स महान् पूर्वं मृत्वा तस्या उदरे आयात पुत्रो जात, इष्ट, इतरोऽपि तस्या एवोदरे आयात, यदा स उत्पन्नस्तदा सा चिन्तयति-शिलामिव हापयामि, गर्भपातनैरपि न पतति, तत स जातो दास्या हस्ते दत्त, त्यज, स श्रेष्ठिना दृष्टो नीयमान, तेन गृहीत्वाऽन्यस्यै दास्यै दत्त, स तत्र संवर्धते। तत्र महतो नाम राजललित इतरस्य गङ्गदत्त, स महान् यत्किञ्चिल्लभते ततस्तस्मायपि ददाति, मातु पुनरनिष्ट, यत्र प्रेक्षते तत्र काष्ठादिभि प्रहन्ति। अन्यदा इन्द्रमहो जात, तत पित्राऽल्पसागारिकमानीत, पल्यङ्कस्याधस्तात्कृतः, जेम्यते, निष्काशित (प्रच्छन्न) तदा कथमपि दृष्ट, तदा हस्ते गृहीत्वा कर्षित, चन्दनिकायां (वर्चोगृहे) प्रक्षिप्त', तदा स रोदिति, पित्रा स्नपितः-अत्रान्तरे साधुर्भिक्षायै अतिगत, श्रेष्ठिना पृष्ट-भगवन्! मातु पुत्रोऽनिष्टो भवति?, अं म् (एवमेव) भवति, कथं पुनः ?, * उवट्टेज प्र०

ताहे भणति-'यं दृष्ट्वा वर्धते क्रोधः, स्नेहश्च परिहीयते। स विज्ञेयो मनुष्येण, एष मे पूर्ववैरिकः ॥ १ ॥ यं दृष्ट्वा वर्धते स्नेहः, क्रोधश्च परिहीयते। स विज्ञेयो मनुष्येण, एष मे पूर्वबान्धवः ॥ २ ॥ ताहे सो भणइ-भगवं ! पव्वावेह एयं?, बाढंति विसज्जिओ पव्वइओ। तेसिं आयरियाण सगासे भायावि से णेहाणुरागेण पव्वइओ, ते साहू जाया इरियासमिया, अणिस्सितं तवं करेंति, ताहे सो तत्थ णिदाणं करेइ-जइ अत्थि इमस्स तवणियमसंजमस्स फलं तो आगमेस्साणं जणमणणयणाणंदो भवामि, घोरं तवं करेत्ता देवलोयं गओ। ततो चुओ वसुदेवपुत्तो वासुदेवो जाओ, इयरोऽवि बलदेवो, एवं तेण वसणेण सामाइयं लद्धं ७। उस्सवे, एगंमि पच्चंतियगामे आभीराणि, ताणि साहूणं पासे धम्मं सुणेंति, ताहे देवलोए वण्णेंति, एवं तेसिं अत्थि धम्मे सुबुद्धी। अण्णदा कयाइ इंदमहे वा अण्णंमि वा उस्सवे गयाणि णगरिं, जारिसा बारवइ, तत्थ लोयं पासन्ति मंडितपसाहियं सुगंधं विचित्तणेवत्थं, ताणि तं दट्ठूण भणंति-एस सो देवलोओ जो साहूहिं वण्णिओ,

---

१ तदा भणति-तदा स भणति-भगवन्! प्रव्राजयैनं?, बाढमिति, विसृष्ट प्रव्रजित। तेषामाचार्याणां सकाशे भ्राताऽपि तस्य स्नेहानुरागेण प्रव्रजित, तौ साधू जातौ ईर्यासमितौ, अनिश्रित तप कुरुत, तदा स तत्र निदान करोति-यद्यस्ति अस्य तपोनियमसंयमस्य फल तदायत्यां जनमनोनयनानन्दो भवेय, घोरं तप कृत्वा देवलोक गत। ततश्च्युतो वसुदेवपुत्रो वासुदेवो जात, इतरोऽपि बलदेव, एव तेन व्यसनेन सामायिक लब्धम्। उत्सवे, एकस्मिन् प्रत्यन्तग्रामे आभीरा, ते साधूनां पार्श्वे धर्मं शृण्वन्ति, तदा देवलोकान् वर्णयन्ति, एव तेषामस्ति धर्मे सुबुद्धिः। अन्यदा कदाचित् इन्द्रमहे वाऽन्यस्मिन्वोत्सवे गता नगरीं, यादृशा द्वारिका, तत्र लोक पश्यन्ति मण्डितप्रसाधित सुगन्ध विचित्रनेपथ्य, ते त दृष्ट्वा भणन्ति-एष स देवलोको य. साधुभिर्वर्णित'

एत्ताहे जइ वच्चामो सुंदरं करेमो, अम्हेवि देवलोए उववज्जामो, ताहे ताणि गंतूण साहूण साहंति-जो तुब्भेहिं अम्ह कहिओ देवलोओ सो पच्चक्खो अम्हेहिं दिट्ठो, साहू भणंति-ण तारिसो देवलोओ, अण्णारिसो, अतो अणंतगुणो, तओ ताणि अब्भहियजातविम्हयाणि पव्वइयाणि। एवं उस्सवेण सामाइयलंभो ९। इड्ढित्ति, दसण्णपुरे णगरे दसण्णभद्दो राया, तस्स पंच देवीसयाणि ओरोहो, एवं सो रूवेण जोव्वणेण बलेण य वाहणेण य पडिबद्धो एरिसं णत्थित्ति अण्णस्स चिंतेइ, सामी समोसरिओ दसण्णकूडे पव्वते। ताहे सो चिंतेइ-तहा कल्लं वंदामि जहा ण केणइ अण्णेण वंदियपुव्वो, तं च अब्भत्थिय सक्को णाऊण चिंतेइ-वराओ अप्पाणयं ण याणति, तओ राया महया समुदएण णिग्गओ वंदिउं सव्विड्ढिए, सक्को य देवराया एरावणं विलग्गो, तस्स अट्ठ मुहे विउव्वइ, मुहे २ अट्ठ अट्ठ दंते विउव्वेइ, दंते २ अट्ठ अट्ठपुक्खरणिओ विउव्वेइ, एक्केक्काए पुक्करणीए अट्ठ २ पउमे विउव्वेइ, पउमे २ अट्ठ अट्ठ पत्ते विउव्वेइ, पत्ते २ अट्ठ २ बत्तीसबद्धाणि दिव्वाणि णाडगाणि विउव्वइ,

---

१ अधुना (अत्र) यदि आयास्याम सुन्दरमकरिष्याम, वयमपि देवलोके उत्पत्स्यामहे, तदा ते गत्वा साधून् कथयन्ति-यो युष्माभिरस्मान् कथितो देवलोक स प्रत्यक्षोऽस्माभिर्दृष्ट, साधवो भणन्ति-न तादृशो देवलोक, अन्यादृश, अतोऽनन्तगुण, ततस्तेऽभ्यधिकजातविस्मया प्रव्रजिता। एवमुत्सवेन सामायिकलाभ'। ऋद्धिरिति, दशार्णपुरे नगरे दशार्णभद्रो राजा, तस्य पञ्च देवीशतानि अवरोध, एव स रूपेण यौवनेन बलेन च वाहनेन च प्रतिबद्ध ईदृश नास्त्यन्यस्येति चिन्तयति, स्वामी समवसृतो दशार्णकूटे पर्वते। तदा स चिन्तयति-तथा कल्ये वन्दिताहे यथा न केनचिदन्येन वन्दितपूर्व, तच्चाभ्यर्थित शक्रो ज्ञात्वा चिन्तयति-वराक आत्मान न जानाति, ततो राजा महता समुदयेन निर्गतो वन्दितु सर्वर्द्ध्या, शक्रश्च देवराज ऐरावण विलग्न, तस्याष्टौ मुखानि विकुर्वति, मुखे २ अष्टाष्ट दन्तान् विकुर्वति, दन्ते २ अष्ट अष्ट पुष्करिणीर्विकुर्वति, एकैकस्यां पुष्करिण्यामष्टाष्ट पद्मानि विकुर्वति, पद्मे २ अष्टाष्ट पत्राणि विकुर्वति, पत्रे २ अष्टाष्ट द्वात्रिंशद्बद्धानि दिव्यानि नाटकानि विकुर्वति,

एवं सो सव्विड्डीए उवगिज्जमाणो आगओ, तओ एरावणं विलग्गो चेव तिक्खुत्तो आदाहिणं पयाहिणं सामिं करेइ, ताहे सो हत्थी अग्गपादेहिं भूमीए ठिओ, ताहे तस्स हत्थिस्स दसण्णकूडे पव्वते देवताप्पसाएण अग्गपायाणि उट्ठिताणि, तओ से णामं कतं गयग्गपादगोत्ति, ताहे सो दसण्णभद्दो चिंतेइ–एरिसा कओ अम्हाणं इड्ढित्ति ?, अहो कएलओऽणेण धम्मो, अहमवि करेमि, ताहे सो सव्वं छड्डेऊण पव्वइओ। एवं इड्ढीए सामाइयं लहइ १०। इयाणिं असक्कारेणं, एगो धिज्जाइओ तहारूवाणं थेराणं अंतिए धम्मं सोच्चा समहिलिओ पव्वइओ, उग्गं २ पव्वज्जं करेंति, णवरमवरोप्परं पीती ण ओसरइ, महिला मणागं धिज्जाइणित्ति गव्वमुव्वहति, मरिऊण देवलोयं गयाणि, जहाउगं भुत्तं। अतो य इलावद्धणे णगरे इलादेवया, तं एगा सत्थवाही पुत्तकामा ओलग्गति, सो चविऊण पुत्तो से जाओ, णामं च से कयं इलापुत्तो त्ति, इयरीवि गव्वदोसेणं तओ चुया लंखगकुले उप्पण्णा, दोऽवि जोव्वणं पत्ताणि, अण्णया तेण सा लंखगचेडी दिट्ठा, पुव्वभवरागेण अज्झोववण्णो,

---

१ एव स सर्वर्ध्योपगीयमान आगत , तत ऐरावणे विलग्न एव त्रिकृत्व आदक्षिणप्रदक्षिण स्वामिन करोति, तदा स हस्ती अग्रपादै॰ भूमौ स्थित , तदा तस्य हस्तिनो दशार्णकूटे पर्वते देवताप्रसादेन अग्रपादा उत्थिता , ततस्तस्य कृत नाम गजाग्रपादक इति, तदा स दशार्णभद्रश्चिन्तयति–ईदृशा कुतोऽस्माकमृद्धिरिति अहो कृतोऽनेन धर्म , अहमपि करोमि, तदा स सर्व त्यक्त्वा प्रव्रजित । एवमृद्ध्या सामायिक लभ्यते । इदानीमसत्कारेण–एको धिग्जाती यथारूपाणां स्थविराणामन्तिके धर्मं श्रुत्वा समहिल प्रव्रजित , उग्रामुग्रा प्रव्रज्यां कुरुत , नवर परस्पर प्रीतिर्नापसरति, महेला धिग्जातीयेति मनाक् गर्वमुद्वहति, मृत्वा देवलोक गतौ, यथायुष्क भुक्तम् । इतश्चेलावर्धने नगरे इलादेवता, तामेका सार्थवाही पुत्रकामाऽवलगति, स च्युत्वा पुत्रस्तस्य जातः, नाम च तस्य कृतमिलापुत्र इति, इतरापि गर्वदोषेण ततश्च्युता लङ्खककुले उत्पन्ना, द्वावपि यौवन प्राप्तौ, अन्यदा तेन सा लङ्खकचेटी दृष्टा, पूर्वभवरागेणाध्युपपन्न ,

सा मग्गिज्जंतीवि ण लब्भइ जत्तिएण तुलइ तत्तिएण सुवण्णेण ताणि भणंति–एसा अम्ह अक्खयणिही, जइ सिप्पं सिक्खसि अम्हेहि य समं हिंडसि तो ते देमो, सो तेहिं समं हिंडिओ सिक्खिओ य, ताहे विवाहणिमित्तं रण्णो पेच्छयणं करेहित्ति भणितो, वेण्णातडं गयाणि, तत्थ राया पेच्छति संतेपुरो, इलापुत्तो य खेड्डाउ करेइ, रायाए दिट्ठी दारियाए, राया ण देइ, रायाणए अदेन्ते अण्णेऽवि ण देंति, साहुक्काररावं वट्टति, भणिओ–लंख ! पडणं करेह, तं च किर वंससिहरे अड्डुं कट्ठं कतेल्लयं, तत्थ खीलयाओ, सो पाउआउ *आहिंधइ मूले विंधियाओ, तओऽसिखेडगहत्थगओ आगासं उप्पइत्ता ते खीलगा पाउआणाल्यियाहि पवेसेतव्वा सत्त अग्गिमाइद्धे सत्त पच्छिमाइद्धे काऊण, जइ फिडइ तओ पडिओ सयहा खंडिज्जइ, तेण कयं, राया दारियं पलोएइ, लोएण कलकलो कओ, ण य देइ राया राया ण पेच्छइ, राया चिंतेइ–जइ मरइ तो अहं एयं दारियं परिणेमि, भणइ–ण दिट्ठं, पुणो करेहि, पुणोऽवि कयं, तत्थऽवि ण दिट्ठं, ततियंपि वाराकयं, तत्थवि ण दिट्ठं,

---

१ सा मार्ग्यमाणापि न लभ्यते यावता तोल्यते तावता सुवर्णेन, ते भणन्ति–एषाऽस्माकमक्षयनिधि., यदि शिल्प शिक्षसे अस्माभिश्च सम हिण्डसे तदा तुभ्य दद्म , स तै सम हिण्डित शिक्षितश्च, तदा विवाहनिमित्त राज्ञ प्रेक्षणक कुर्विति भणितो, वेन्नातट गता , तत्र राजा प्रेक्षते सान्त पुर , इलापुत्रश्च क्रीडा करोति, राज्ञो दृष्टिर्दारिकायां, राजा न ददाति, राज्यददति अन्येऽपि न ददति, साधुकाररवो वर्त्तते, भणितो–लङ्खक ! पतन कुरु, तत्र च वंशशिखरे तिर्यक्काष्ठ कृत, तत्र कीलिका , स पादुके परिदधाति मूलविद्धे, ततोऽसिखेटकहस्तगत आकाशमुत्पत्य ता कीलिका पादुकानलिकासु प्रवेशयितव्या सप्ताग्राविद्धा सप्त पश्चादाविद्धा कृत्वा, यदि स्खलति तत पतित शतधा खण्ड्यते, तेन कृत, राजा दारिका प्रलोकयति, लोकेन कलकल. कृत , राजा न च ददाति राजा न प्रेक्षते, राजा चिन्तयति–यदि म्रियते तदाऽहमेतां दारिकां परिणयामि, भणति–न दृष्ट, पुन. कुरु, पुनरपि कृत, तत्रापि न दृष्ट, तृतीयवारमपि कृत, तत्रापि न दृष्ट, * पाउ आयधति प्र०

चउत्थियाए वाराए भणिओ–पुणो करेहि, रंगो विरत्तो, ताहे सो इलापुत्तो वंसग्गे ठिओ चिंतेइ–धिरत्थु भोगाणं, एस राया एत्तियाहि ण तित्तो, एताए रंगोवजीवियाए लग्गिउं मग्गइ, एताए कारणा ममं मारेउमिच्छइ, सो य तत्थ ठियओ एगत्थ सेट्ठिघरे साहुणो पडिलाभिज्जमाणे पासति सव्वालंकाराहि इत्थियाहिं, साहू य विरत्तत्तेण पलोयमाणे पेच्छति, ताहे भणइ–'अहो धन्या निःस्पृहा विषयेषु' अहं सेट्ठिसुओ एत्थंपि एसअवत्थो, तत्थेव विरागं गयस्स केवलणाणं उप्पण्णं। ताएऽवि चेडीए विरागो विभासा, अग्गमहिसीएऽवि, रण्णोऽवि पुणरावत्ती जाया विरागो विभासा, एवं ते चत्तारिऽवि कवली जाया, सिद्धा य। एवं असक्कारेण सामाइयं लब्भइ, ११ अहवा तित्थगराणं देवासुरे सक्कारे करेमाणे दट्ठूण जहा मरियस्स ॥ अहवा इमेहिं कारणेहिं लंभो—

अब्भुट्ठाणे विणए परक्कमे साहुसेवणाए य। संमदंसणलंभो विरयाविरईइ विरईए ॥ ८४८ ॥

---

चतुर्थवारे भणित –पुन कुरु, रङ्गो विरक्त , तदा स इलापुत्रो वंशाग्रे स्थितश्चिन्तयति–धिगस्तु भोगान् , एष राजा एतावतीभिर्न तृप्त , एतया रङ्गोपजीविकया लगितुमभिलष्यति, एतस्या कारणात् मा मारयितुमिच्छति, स च तत्रस्थित एकत्र श्रेष्ठिगृहे साधून् प्रतिलम्भ्यमानान् पश्यति सर्वालङ्काराभि॰, स्त्रीभि , साधूंश्च विरक्तत्वे प्रलोकयन् प्रेक्षते, तदा भणति–अहं श्रेष्ठिसुत अत्रापि एतदवस्थ , तत्रैव वैराग्य गतस्य केवलज्ञानमुत्पन्नम् । तस्या अपि चेट्या वैराग्य विभाषा, अग्रमहिष्या अपि, राज्ञोऽपि पुनरावृत्तिर्जाता वैराग्य विभाषा, एव ते चत्वारोऽपि केवलिनो जाता सिद्धाश्च । एवमसत्कारेण सामायिक लभ्यते । अथवा तीर्थकराणां देवासुरान् सत्कारान् कुर्वतो दृष्ट्वा यथा मरीचे । अथवा एभि कारणैर्लाभ

व्याख्या—अभ्युत्थाने सति सम्यग्दर्शनलाभो भवतीति क्रिया, विनीतोऽयमिति साधुकथनात्, तथा 'विनये' अञ्जलिप्रग्रहादाविति, 'पराक्रमे' कषायजये सति, साधुसेवनायां च सत्यां कथञ्चित् तत्क्रियोपलब्ध्यादेः सम्यग्दर्शनलाभो भवतीत्यध्याहारः, विरताविरतेश्च विरतेश्चेति गाथार्थः ॥ ८४८ ॥ कथमिति द्वारं गतं । तदित्थं लब्धं सत् कियच्चिरं भवति कालं ?, जघन्यत उत्कृष्टतश्चेति प्रतिपादयन्नाह—

**सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइं ठिई । सेसाण पुव्वकोडी देसूणा होइ उक्कोसा ॥ ८४९ ॥**

व्याख्या—सम्यक्त्वस्य श्रुतस्य च षट्षष्टिः सागरोपमाणि स्थितिः, कथं ? 'विजयाइसु दो वारे गयस्स तिण्णच्चुए व छावट्ठी । णरजम्मपुव्वकोडी मुहुत्तमुक्कोसओ अहियं ॥ १ ॥' 'शेषयोः' देशविरतिसर्वविरतिसामायिकयोः पूर्वकोटी देशोना भवति, 'उक्कोस'त्ति उत्कृष्टस्थितिकालः, जघन्यतस्त्वाद्यत्रयस्यान्तर्मुहूर्तं, सर्वविरतिसामायिकस्य समयः, चारित्रपरिणामारम्भसमयानन्तरमेवाऽऽयुष्कक्षयसम्भवात्, देशविरतिप्रतिपत्तिपरिणामस्त्वान्तर्मौहूर्तिक एव, नियमितप्राणातिपातादिनिवृत्तिरूपत्वात्, उपयोगापेक्षया तु सर्वेषामन्तर्मुहूर्त्तः सर्वजीवानां तु सर्वाणि सर्वदैवेति गाथार्थः ॥ ८४९ ॥ द्वारम् ॥ अधुना कइत्ति द्वारं व्याख्यायते—कतीति कियन्तः वर्तमानसमये सम्यक्त्वादिसामायिकानां प्रतिपत्तारः प्राक्प्रतिपन्नाः प्रतिपतिता वेति, अत्र प्रतिपद्यमानकेभ्यः प्राक्प्रतिपन्नप्रतिपतितसम्भवात्तानेव प्रतिपादयन्नाह—

**सम्मत्तदेसविरया पलियस्स असंखभागमेत्ता उ । सेढीअसंखभागो सुए सहस्सग्गसो विरई ॥ ८५० ॥**

व्याख्या—सम्यक्त्वदेशविरताः प्राणिनः क्षेत्रपलितस्यासङ्ख्येयभागमात्रा एव, इयं भावना—क्षेत्रपलितासङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त एव उत्कृष्टतः सम्यक्त्वदेशविरतिसामायिकयोरेकदा प्रतिपत्तारो भवन्ति, किन्तु देशविरतिसामायिकप्रतिपत्तृभ्यः सम्यक्त्वप्रतिपत्तारोऽसङ्ख्येयगुणा इति, जघन्यतस्त्वेको द्वौ वेति । 'सेढीअसंखभागो सुए'त्ति इह संवर्तितचतुरस्रीकृतलोकैकप्रदेशनिर्वृत्ता सप्तरज्ज्वात्मिका श्रेणिः परिगृह्यते, तदसङ्ख्येयभाग इति, तस्याः खल्वसङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त एव एकदोत्कृष्टतः सामान्यश्रुते—अक्षरात्मके सम्यग्मिथ्यात्वानुगते विचार्ये प्रतिपत्तारो भवन्तीति हृदयं, जघन्यतस्त्वेको द्वौ वेति । 'सहस्सग्गसो विरई' सहस्राग्रशो विरतिमधिकृत्य उत्कृष्टतः प्रतिपत्तारो ज्ञेया इत्यध्याहारः, जघन्यतस्त्वेको द्वौ वेति गाथार्थः ॥ ८५० ॥ प्राक्प्रतिपन्नानिदानीं प्रतिपादयन्नाह—

**सम्मत्तदेसविरया पडिवन्ना संपई असंखेज्जा । संखेज्जा य चरित्ते तीसुवि पडिया अणंतगुणा ॥ ८५१ ॥**

व्याख्या—सम्यक्त्वदेशविरताः प्रतिपन्नाः 'साम्प्रतं' वर्तमानसमयेऽसङ्ख्येया उत्कृष्टतो जघन्यतश्च, किन्तु जघन्यपदादुत्कृष्टपदे विशेषाधिकाः, एते च प्रतिपद्यमानकेभ्योऽसङ्ख्येयगुणा इति । अत्रैवान्तरे सामान्यश्रुतापेक्षया प्राक्प्रतिपन्नान् प्रतिपादयता 'सुयपडिवण्णा संपइ पयरस्स असंखभागमेत्ता उ' इदमेप्यगाथाशकलं व्याख्येयं, द्वितीयं तूत्तरत्र, तत्राक्षरात्मकाविशिष्टश्रुतप्रतिपन्नाः साम्प्रतं प्रतरस्य सप्तरज्ज्वात्मकस्यासङ्ख्येयभागमात्राः, असङ्ख्येयासु श्रेणिषु यावन्तः प्रदेशास्तावन्त इत्यर्थः, सङ्ख्येयाश्च चारित्रे प्राक्प्रतिपन्ना इति, 'त्रिभ्योऽपि' चरणदेशचरणसम्यक्त्वेभ्यः पतिताः 'अणंतगुण'त्ति प्राप्य प्रतिपतिता अनन्तगुणाः प्रतिपद्यमानकप्राक्प्रतिपन्नेभ्यः, तत्र चरणप्रतिपतिता अनन्ताः, तदसङ्ख्येयगुणास्तु देशविरतिप्रतिपतिताः, तदसङ्ख्येयगुणाश्च सम्यक्त्वप्रतिपतिता इति । अत्रान्तरे सामान्यश्रुतप्रतिपतितानधिकृत्यैप्यगाथापश्चार्द्धं व्याख्येयं 'सेसा संसारत्था सुयपरिवडिया हु ते सव्वे' ॥८५२॥ सम्यक्त्वप्रतिपतितेभ्यस्तेऽनन्तगुणा इति गाथार्थः ॥ ८५२ ॥ द्वारम् ॥ अधुनाऽन्तरद्वारावयवार्थ उच्यते—सकृदवाप्तमपगतं पुनः सम्यक्त्वादि कियता कालेनावाप्यते ?, कियदन्तरं भवतीति, तत्राक्षरात्मकाविशिष्टश्रुतस्यान्तरं जघन्यमन्तर्मुहूर्तम्, उत्कृष्टं त्वाह—

**कालमणंतं च सुए अद्धापरियट्टओ उ देसूणो । आसायणबहुलाणं उक्कोसं अंतरं होइ ॥ ८५३ ॥**

व्याख्या—एकं जीवं प्रति कालोऽनन्त एव, चशब्दस्यावधारणार्थत्वादनुस्वारस्य चालाक्षणिकत्वात्, 'श्रुते' सामान्यतोऽक्षरात्मके 'उक्कोसं अंतरं होइ' त्ति योगः । तथा सम्यक्त्वादिसामायिकेषु तु जघन्यमन्तर्मुहूर्तकाल एव, उत्कृष्टं त्वाह—+उपार्द्धपुद्गलपरावर्त एव देशोनः, किम् ?—उत्कृष्टमन्तरं भवतीति योगः, केषाम् ?—आशातनाबहुलानाम्, उक्तं च—†"तित्थगरपवयणसुयं आयरियं गणहरं महिड्ढीयं । आसाइन्तो बहुसो अणंतसंसारिओ होइ ॥ १ ॥" त्ति गाथार्थः ॥ ८५३ ॥ द्वारं ॥ साम्प्रतमविरहितद्वारार्थमाह—अथ कियन्तं कालमविरहेणैको द्व्यादयो वा सामायिकं प्रतिपद्यन्त इत्याह—

**सम्मसुयअगारीणं आवलियअसंखभागमेत्ता उ । अट्ठसमया चरित्ते सव्वेसु जहन्न दो समया ॥ ८५४ ॥**

व्याख्या—'सम्यक्त्वश्रुतागारिणा' सम्यक्त्वश्रुतदेशविरतिसामायिकानामित्यर्थः, नैरन्तर्येण प्रतिपत्तिकालः आवलिकाअसङ्ख्येयभागमात्राः समया इति, तथाऽष्टौ समयाः चारित्रे निरन्तरं प्रतिपत्तिकाल इति, 'सर्वेषु' सम्यक्त्वादिषु

---

+ अपार्धेति प्र० † तीर्थंकर प्रवचन श्रुतमाचार्यं गणधरं महर्धिकम् । आशातयन् बहुशोऽनन्तसांसारिको भवति ॥ १ ॥

'जघन्यः' अविरहप्रतिपत्तिकालो द्वौ समयाविति गाथार्थः ॥ ८५४ ॥ तत्राल्पादेशविरहद्वाराद् विरहकालः प्रतिपद्य इति गम्यमानत्वादनुद्दिष्टोऽपि द्वारगाथायां प्रदर्श्यते—

सुयसम्म सत्तयं खलु विरयाविरईय होइ बारसगं । विरईए पन्नरसगं विरहियकालो अहोरत्ता ॥ ८५५ ॥

व्याख्या—श्रुतसम्यक्त्वयोरुत्कृष्टः प्रतिपत्तिविरहकालः 'सप्तकं खलु' इत्यहोरात्रसप्तकं, ततः परमवश्यं कश्चित् कश्चित् प्रतिपद्यत इति, जघन्यस्त्वेकसमय इति, 'विरताविरतेश्च भवति द्वादशकं' देशविरतेरुत्कृष्टः प्रतिपत्तिविरहकालोऽहोरात्रद्वादशकं भवति, जघन्यतस्तु त्रयः समया इति, 'विरतेः पञ्चदशकं विरहितकालः अहोरात्राणि' सर्वविरतेरुत्कृष्टः प्रतिपत्तिविरहकालोऽहोरात्रपञ्चदशकं, जघन्यतस्तु समयत्रयमेवेति गाथार्थः ॥ ८५५ ॥ साम्प्रतं भवद्वारमुच्यते—कियतो भवानेको जीवः सामायिकचतुष्टयं प्रतिपद्यत इति निदर्शयन्नाह—

सम्मत्तदेसविरई पलियस्स असंखभागमेत्ताओ । अट्ठ भवा उ चरित्ते अणंतकालं च सुयसमए ॥ ८५६ ॥

व्याख्या—सम्यक्त्वदेशविरतिमन्तः मतुब्लोपात् सम्यक्त्वदेशविरतास्तेषां तत्सामायिकद्वयं प्रतिपत्तिमङ्गीकृत्य भवानां प्रक्रान्तत्वात् क्षेत्रपल्योपमस्यासङ्ख्येयभागमात्रे यावन्तः प्रदेशास्तावन्त उत्कृष्टतः प्रतिपत्तिभवाः, जघन्यतस्त्वेकः, अष्टौ भवाः 'चारित्रे' चारित्रे विचार्ये, उत्कृष्टतस्त्वादानभवाः खल्वष्टौ, ततः सिध्यतीति, जघन्यतस्त्वेक एव, 'अणंतकालं च सुयसमए' त्ति 'अनन्तकालः' अनन्तभवरूपस्तमनन्तकालमेव प्रतिपत्ता भवत्युत्कृष्टतः सामान्यश्रुतसामायिके, जघन्यस्त्वेकभवमेव, मरुदेवीवेति गाथार्थः ॥ ८५६ ॥ द्वारम् ॥ साम्प्रतमाकर्षद्वारमधिकृत्याह—

तिण्ह सहस्सपुहुत्तं सयप्पुहुत्तं च होइ विरईए । एगभवे आगरिसा एवतिया होंति नायव्वा ॥ ८५७ ॥

व्याख्या—आकर्षणम् आकर्षः—प्रथमतया मुक्तस्य वा ग्रहणमित्यर्थः, तत्र त्रयाणां—सम्यक्त्वश्रुतदेशविरतिसामायिकानां सहस्रपृथक्त्वं, पृथक्त्वमिति द्विप्रभृतिरा नवभ्यः, शतपृथक्त्वं च भवति विरतेरेकभवे आकर्षा एतावन्तो भवन्ति ज्ञातव्या उत्कृष्टतः, जघन्यतस्त्वेक एवेति गाथार्थ. ॥ ८५७ ॥

तिण्ह सहस्समसंखा सहसपुहुत्तं च होइ विरईए । णाणभवे आगरिसा एवइया होंति णायव्वा ॥ ८५८ ॥

व्याख्या—त्रयाणा—सम्यक्त्वश्रुतदेशविरतिसामायिकानां सहस्राण्यसङ्ख्येयानि, सहस्रपृथक्त्वं च भवति विरतेः, एतावन्तो नानाभवेष्वाकर्षाः । अन्ये पठन्ति—'दोण्ह सहस्समसंखा' तत्रापि श्रुतसामायिकं सम्यक्त्वसामायिकानान्तरीयकत्वादनुक्तमपि प्रत्येतव्यम्, अनन्ताश्च सामान्यश्रुते ज्ञातव्या इत्यक्षरार्थः । इयं भावना—त्रयाणां एकभवे सहस्रपृथक्त्वमाकर्षाणामुक्तं, भवाश्च पल्योपमासङ्ख्येयभागसमयतुल्याः, ततश्च सहस्रपृथक्त्वं भवति तैर्गुणितं सहस्राण्यसङ्ख्येयानीति, सहस्रपृथक्त्वं चेत्थं भवति—विरतेः खल्वेकभवे शतपृथक्त्वमाकर्षाणामुक्तं, भवाश्चाष्टौ, ततश्च शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं भवतीत्यवयवार्थः ॥ ८५८ ॥ द्वारं ॥ स्पर्शनाद्वारमधुना, तत्रेयं गाथा—

सम्मत्तचरणसहिया सव्वं लोगं फुसे णिरवसेसं । सत्त य चोद्दसभागे पंच य सुयदेसविरईए ॥ ८५९ ॥

व्याख्या—'सम्यक्त्वचरणसहिताः' सम्यक्त्वचरणयुक्ताः प्राणिन उत्कृष्टतः सर्वं लोकं स्पृशन्ति, किं बहिर्व्याप्त्या ?, नेत्याह—'निरवशेषम्' असङ्ख्यातप्रदेशमपि, एते च केवलिसमुद्घातावस्थायामिति, जघन्यतस्त्वसङ्ख्येयभागमिति । तथा—'सत्त य चोद्दसभागे पंच य सुयदेसविरईए' त्ति श्रुतसामायिकसहिताः सप्त चतुर्दशभागान् स्पृशन्ति, अनुत्तरसुरेष्विलिकागत्या समुत्पद्यमानाः, चशब्दात् पञ्च तमःप्रभायां देशविरत्या सहिताः पञ्च चतुर्दशभागान् स्पृशन्तीति, अच्युते उत्पद्यमानाः, चशब्दात् द्व्यादींश्चान्यत्रेति, अधस्तु ते न गच्छन्त्येव घण्टालालान्यायेनापि तं परिणाममपरित्यज्येति गाथार्थः ॥ ८५९ ॥ एवं क्षेत्रस्पर्शनोक्ता, साम्प्रतं भावस्पर्शनोच्यते—किं श्रुतादिसामायिकं ? कियद्भिर्जीवैः स्पृष्टमित्याह—

सव्वजीवेहि सुयं सम्मचरित्ताइं सव्वसिद्धेहिं । भागेहि असंखेज्जेहिं फासिया देसविरईओ ॥ ८६० ॥

व्याख्या—सर्वजीवैः सांव्यवहारिकराश्यन्तर्गतैः सामान्यश्रुतं स्पृष्टं, सम्यक्त्वचारित्रे सर्वसिद्धैः स्पृष्टे, तदनुभवमन्तरेण सिद्धत्वानुपपत्तेः, भागैरसङ्ख्येयैः सिद्धभागैः स्पृष्टा देशविरतिस्तु, इदमत्र हृदयं—सर्वसिद्धानां बुद्ध्याऽसङ्ख्येयभागीकृतानामसङ्ख्येयभागैर्भागोनैर्देशविरतिः स्पृष्टा, असङ्ख्येयभागेन तु न स्पृष्टा, यथा—मरुदेवास्वामिन्येति गाथार्थः ॥ ८६० ॥ द्वारम् ॥ इदानीं निरुक्तिद्वारं, चतुर्विधस्यापि सामायिकस्य निर्वचनं, क्रियाकारकभेदपर्यायैः शब्दार्थकथनं निरुक्तिः, तत्र सम्यक्त्वसामायिकनिरुक्तिमभिधित्सुराह—

सम्मद्दिट्ठि अमोहो सोही सब्भाव दंसणं बोही । अविवज्जओ सुदिट्ठित्ति एवमाई निरुत्ताइं ॥ ८६१ ॥

व्याख्या—सम्यक् इति प्रशंसार्थः, दर्शनं—दृष्टिः, सम्यग्—अविपरीता दृष्टिः—सम्यग्दृष्टिः, अर्थानामिति गम्यते,

* प्रतिमदेशव्याप्त्येत्यर्थ ,

मोहनं मोहः—वितथग्रहः न मोहः अमोहः—अवितथग्रहः, शोधनं—शुद्धिः मिथ्यात्वमलापगमात् सम्यक्त्वं शुद्धिः, सत्—जिनाभिहितं प्रवचनं तस्य भावः सद्भावः तस्य दर्शनम्—उपलम्भः सद्भावदर्शनमिति, बोधनं बोधिरित्यौणादिक इत्, परमार्थसम्बोध इत्यर्थः, अतस्मिंस्तदध्यवसायो विपर्ययः न विपर्ययः अविपर्ययः, तत्त्वाध्यवसाय इत्यर्थः, सुशब्दः प्रशंसायां, शोभना दृष्टिः सुदृष्टिरिति, एवमादीनि सम्यग्दर्शनस्य निरुक्तानीति; गाथार्थः ॥ ८६१ ॥ श्रुतसामायिकनिरुक्तिप्रदर्शनायाऽऽह—

**अक्खर सन्नी सम्मं सादियं खलु सपज्जवसियं च । गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ॥ ८६२ ॥**

व्याख्या—इयं च गाथा पीठे व्याख्यातत्वान्न विव्रियते ॥ देशविरतिसामायिकनिरुक्तिमाह—

**विरयाविरई संवुडमसंवुडे बालपंडिए चेव । देसेक्कदेसविरई अणुधम्मो अगारधम्मो य ॥ ८६३ ॥**

व्याख्या—विरमणं विरतं, भावे निष्ठाप्रत्ययः, न विरतिः—अविरतिः, विरतं चाविरतिश्च यस्यां निवृत्तौ सा विरताविरतिः, संवृतासंवृताः सावद्ययोगा यस्मिन् सामायिके तत् तथा, संवृतासंवृताः—स्थगितास्थगिताः परित्यक्तापरित्यक्ता इत्यर्थः, एवं बालपण्डितम्, उभयव्यवहारानुगतत्वाद्, देशैकदेशविरतिः प्राणातिपातविरतावपि पृथिवीकायाद्यविरतिर्गृह्यते, अणुधर्मो बृहत्साधुधर्मापेक्षया देशविरतिरिति, अगारधर्मश्चेति न गच्छन्तीत्यगाः—वृक्षास्तैः कृतमगारं—गृहं तद्योगादगारः—गृहस्थः तद्धर्मश्चेति गाथार्थः ॥ ८६३ ॥ सर्वविरतिसामायिकनिरुक्तिमुपदर्शयन्नाह—

**सामाइयं समइयं सम्मावाओ समास संखेवो । अणवज्जं च परिण्णा पच्चक्खाणे य ते अट्ठ ॥ ८६४ ॥**

व्याख्या—'सामायिकम्' इति रागद्वेषान्तरालवर्ती समः मध्यस्थ उच्यते, 'अय गता' विति अयनम् अयः—गमनमित्यर्थः, समस्य अयः समायः स एव विनयादिपाठात् स्वार्थिकठक्प्रत्ययोपादानात् सामायिकम्, एकान्तोपशान्तिगमनमित्यर्थः, समयिकं समिति सम्यक्शब्दार्थ उपसर्गः, सम्यगयः समयः—सम्यग् दयापूर्वकं जीवेषु गमनमित्यर्थः, समयोऽस्यास्तीति, 'अत इनि ठना ( पा० ५–२–११५ ) विति ठन् समयिकं, सम्यग्वादः रागादिविरहः सम्यक् तेन तत्प्रधानं वा वदनं सम्यग्वादः, रागादिविरहेण यथावद् वदनमित्यर्थः, समासः 'असु क्षेपण' इति असनम् आसः—क्षेप इत्यर्थ, संशब्दः प्रशंसार्थः शोभनमसनं समासः, अपवर्गे गमनमात्मनः कर्मणो वा जीवात् †पदत्रयप्रतिपत्तिवृत्त्या क्षेपः समासः, 'संक्षेपः' संक्षेपणं संक्षेपः स्तोकाक्षरं सामायिकं महार्थं च द्वादशाङ्गपिण्डार्थत्वात्, अनवद्यं चेति अवद्यं पापमुच्यते नास्मिन्नवद्यमस्तीत्यनवद्यं सामायिकमिति, परिः—समन्ताज्ज्ञानं पापपरित्यागेन परिज्ञा सामायिकमिति, परिहरणीयं वस्तु वस्तु प्रति आख्यानं प्रत्याख्यानं च, त एते सामायिकपर्याया अष्टाविति गाथार्थः ॥ ८६४ ॥ एतेषामष्टानामप्यर्थानामनुष्ठातॄन् यथासङ्ख्येनाष्टावेव दृष्टान्तभूतान् महात्मनः प्रतिपादयन्नाह—

**दमदंते मेयज्जे कालयपुच्छा चिलाय अत्तेये । धम्मरुइ इला तेयलि सामाइए अट्ठुदाहरणा ॥ ८६५ ॥**

व्याख्या—दमदन्तः मेतार्यः कालकपृच्छा चिलातः आत्रेयः धर्मरुचिः इला तेतलिः, सामायिकेऽष्टावुदाहरणानीति गाथासमुदायार्थः ॥ ८६५ ॥ अवयवार्थस्तु कथानकेभ्योऽवसेय इति, तत्र यथोद्देशं निर्देश इति सामायिकमर्थतो दमद-

* इण् गतौ इति प्र० + आयः प्र० † उपशमविवेकसंवररूप

न्तानगारेण कृतमिति तच्चरितानुवर्णनमुपदेशार्थमद्यकालमनुष्याणां संवेगजननार्थं कथ्यते–हत्थिसीसए णगरे राया दमदंतो नाम, इओ य गयपुरे णगरे पंच पंडवा, तेसिं तस्स य वइरं, तेहिं तस्स दमदमंतस्स जरासंधमूलं रायगिहं गयस्स सो विसयो लूडितो दड्ढो य, अण्णदा दमदंतो आगओ, तेण हत्थिणापुरं रोहितं, ते भएण ण णिंति, तओ दमदंतेण ते भणिया–सियाला चेव सुण्णगत्तिसए जहिच्छियं आहिंडह, जाव अहं जरासंधसगासं गओ ताव मम विसयं लुडेह, इदाणिं णिप्फिडह, ते ण णिंति ताहे सविसयं गओ । अण्णया णिविण्णकामभोगो पव्वइओ, तओ एगल्लविहारं पडिवण्णो विहरंतो हत्थिणापुरं गओ, तस्स बाहिं पडिमं ठिओ, जुहिट्ठिलेण अणुजत्ताणिग्गएण वंदिओ, पच्छा सेसेहिंवि चउहि पंडवेहिं वंदिओ, ताहे दुज्जोधणो आगओ, तस्स मणुस्सेहिं कहियं जहा–एस सो दमदंतो, तेण सो मातुलिंगेण आहओ, पच्छा खंधावारेण एंतेण पत्थरं २ खिवंतेण पत्थररासीकओ, जुधिट्ठिलो नियत्तो पुच्छइ–एत्थ साहू आसि

१ हस्तिशीर्षे नगरे राजा दमदन्तो नाम, इतश्च गजपुरे नगरे पञ्च पाण्डवाः, तेषां तस्य च वैरं, तैस्तस्य दमदन्तस्य जरासन्धमूलं राजगृहं गतस्य स विषयो लुण्ठितो दग्धश्च, अन्यदा दमदन्त आगत, तेन हस्तिनागपुरं रुद्धं, ते भयेन न निर्यान्ति, ततो दमदन्तेन ते भणिता –शृगाला इव शून्यविषये यथेच्छमाहिण्डध्व, यावदहं जरासन्धसकाशं गतस्तावन्मम विषयं लुण्टयत, इदानीं निर्गच्छत, ते न निर्गच्छन्ति तदा स्वविषयं गत । अन्यदा निर्विण्णकामभोगः प्रव्रजित, तत एकाकिविहारं प्रतिपन्नो विहरन् हस्तिनागपुरं गत, तस्मात् बहिः प्रतिमया स्थितः । युधिष्ठिरेणानुयात्रानिर्गतेन वन्दित, पश्चात् शेषैरपि चतुर्भिः पाण्डवैर्वन्दित, तदा दुर्योधन आगत, तस्य मनुष्यैः कथित–यथा एष स दमदन्त, तेन स बीजपूरेणाहतः, पश्चात्स्कन्धावारेणागच्छता प्रस्तर २ क्षिपता प्रस्तरराशीकृत, युधिष्ठिरो निवृत्त पृच्छति–साधुरत्रासीत् * दमदमतो प्र० + आहिंडिया प्र०

केहिं सो ?, लोएण कहियं—जहा एसो पत्थररासी दुज्जोहणेण कओ, ताहे सो अंबाडिओ, ते य अवणिया पत्थरा, तेल्लेण अब्भंगिओ खामिओ य । तस्स किर भगवओ दमदंतस्स दुज्जोहणे पंडवेसु य समो भावो आसि, एवं कातव्वं ॥ अमुमेवार्थं प्रतिपादयन्नाह भाष्यकारः—

**निक्खंतो हत्थिसीसा दमदंतो कामभोगमवहाय । णवि रज्जइ रत्तेसुं दुट्ठेसु ण दोसमावज्जे ॥१५१॥ (भा०)**

व्याख्या—निष्क्रान्तो हस्तिशीर्षात् नगराद्दमदन्तो राजा कामभोगानपहाय, कामः—इच्छा भोगाः—शब्दाद्यनुभवाः कामप्रतिबद्धा वा भोगाः कामभोगा इति, स च नापि रज्यते रक्तेषु न प्रीतिं करोति, अप्रीतेषु द्विष्टेषु न द्वेषमापद्यते, वर्तमाननिर्देशप्रयोजनं प्राग्वदिति गाथार्थः ॥ तथाहि—मुनयः खल्वेवम्भूता एव भवन्ति, तथा चाह—

**वंदिज्जमाणा न समुक्कसंति, हीलिज्जमाणा न समुज्जलंति । दंतेण चित्तेण चरंति धीरा, मुणी समुग्घाइयरागदोसा**

व्याख्या—वन्द्यमानाः 'न समुक्कसंति' न समुत्कर्षं यान्ति, तथा हील्यमाना 'न समुज्जलन्ति' न कोपाग्निं प्रकटयन्ति, किं तर्हि?—'दान्तेन' उपशान्तेन चित्तेन चरन्ति धीराः मुनयः समुद्घातितरागद्वेषा इति गाथार्थः ॥ ८६६ ॥ तथा

**तो समणो जइ सुमणो भावेण य जइ ण होइ पावमणो । सयणे य जणे य समो समो य माणावमाणेसुं**

व्याख्या—ततः 'समणो'त्ति प्राकृतशैल्या यदि सुमनाः, शोभनं धर्मध्यानादिप्रवृत्तं मनोऽस्येति सुमनाः समणोत्ति

---

१ क स. ?, लोकेन कथित—यथैष प्रस्तरराशिर्दुर्योधनेन कृत, तदा स निर्भर्त्सितः, ते चापनीता प्रस्तराः, तैलेनाभ्यक्तः क्षमितश्च । तस्य किल भगवतो दमदन्तस्य दुर्योधने पाण्डवेषु च समभाव आसीत्, एवं कर्तव्य ।

---

भण्यते, किमित्थम्भूत एव ?, नेत्याह—'भावेन च' आत्मपरिणामलक्षणेन यदि न भवति पापमनाः—अवस्थितमना अपीत्यर्थः अथवा भावेन च यदि न भवति पापमनाः, निदानप्रवृत्तपापमनोरहित इति भावना, तथा स्वजने च मात्रादिके जने चान्यस्मिन् समः—तुल्यः, समश्च मानापमानयोरिति गाथार्थः ॥ ८६७ ॥

**णत्थि य सि कोइ वेसो पिओ व सव्वेसु चेव जीवेसु । एएण होइ समणो एसो अण्णोवि पज्जाओ ॥ ८६८ ॥**

व्याख्या—नास्ति च 'से' तस्य कश्चिद् द्वेष्यः प्रियो वा सर्वेष्वेव जीवेषु, एतेन भवति समणः, सम् अणति—गच्छतीति समणः, एषोऽन्योऽपि पर्याय इति गाथार्थः ॥ द्वारम् ॥ इदानीं समयिकं, तत्र कथानकम्—

साएते णगरे चंडवडंसओ राया, तस्स दुवे पत्तीओ—सुदंसणा पियदंसणा य, तत्थ सुदंसणाए दुवे पुत्ता—सागरचंदो मुणिचंदो य पियदंसणाएवि दो पुत्ता—गुणचंदो बालचंदो य, सागरचंदो जुवराया, मुणिचंदस्स उज्जेणी दिण्णा कुमारभुत्तीए । इओ य चंडवडंसओ राया माहमासे पडिमं ठिओ वासघरे जाव दीवगो जलइत्ति, तस्स सेज्जावाली चिंतेइ—दुक्खं सामी अंधतमसे अच्छिहिति, ताए बितिए जामे विज्झायंते दीवगे तेल्लं छूढं, सो ताव जलिओ जाव अद्धरत्तो, ताहे

---

१ साकेते नगरे चन्द्रावतंसको राजा, तस्य द्वे पत्न्यौ—सुदर्शना प्रियदर्शना च, तत्र सुदर्शनाया द्वौ पुत्रौ—सागरचन्द्रो मुनिचन्द्रश्च, प्रियदर्शनाया अपि द्वौ पुत्रौ—गुणचन्द्रो बालचन्द्रश्च, सागरचन्द्रो युवराज, मुनिचन्द्रायोज्जयिनी कुमारभुक्त्यां दत्ता । इतश्च चन्द्रावतंसको राजा माघमासे प्रतिमया स्थितो वासगृहे यावद्दीपो ज्वलतीति, तस्य शय्यापालिका चिन्तयति—दुःखं स्वामी अन्धतमसे स्थास्यति, तया द्वितीये यामे विध्मायति दीपे तैलं क्षिप्तं, स तावत्प्रज्वलितो यावदर्धरात्रं, तदा * अनवस्थित० प्र०

---

पुणोवि तेल्लं छूढं ताव जलिओ जाव पच्छिमपहरो, तत्थवि छूढं, ततो राया सुकुमारो विहायंतीए रयणीए वेयणाभिभूओ कालगओ, पच्छा सागरचंदो राया जाओ । अण्णया सो माइसवत्तिं भणइ—गेण्ह रज्जं पुत्ताण ते भवउत्ति, अहं पव्वयामि, सा णेच्छइ एएण रज्जं आयत्तंति, तओ सा अतिज्जाणनिज्जाणेसु रायलच्छीए दिप्पंतं पासिऊण चिंतेइ—मए पुत्ताण रज्जं दिज्जंतं ण इच्छियं, तेवि एवं सोभन्ता, इयाणीवि णं मारेमि, छिद्दाणि मग्गइ, सो य छुहालू, तेण सूतस्स संदेसओ दिण्णो, एत्तो च्चेव पुव्वण्हियं पट्ठविज्जासि, जइ विरावेमि, सूएण सीहकेसरओ मोदओ चेडीए हत्थेण विसज्जिओ, पियदंसणाए दिट्ठो, भणइ—पेच्छामि णं ति, तीए अप्पितो, पुव्वं णाए विसमक्खिया हत्था कया, तेहिं सो विसेण मक्खिओ, पच्छा भणइ—अहो सुरभी मोयगोत्ति पडिअप्पिओ, चेडीए ताए गंतूण रण्णो समप्पिओ, ते य दोवि कुमारा रायसगासे अच्छंति, तेण चिंतियं—किह अहं एतेहिं छुहाइएहिं खाइस्सं?, तेण दुहा काऊण तेसिं दोण्हवि सो दिण्णो, ते खाइउमारद्धा,

---

१ पुनरपि तैलं क्षिप्तं तावज्ज्वलितो यावत्पश्चिमप्रहर, तदापि क्षिप्तं, ततो राजा सुकुमारो विभातायां रजन्यां वेदनाभिभूत कालगत, पश्चात्सागरचन्द्रो राजा जात । अन्यदा स मातृसपत्नीं भणति—गृहाण राज्य पुत्रयोस्ते भवत्विति, अहं प्रव्रजामि, सा नेच्छति एतेन राज्यमायत्तमिति, तत सा अतियान निर्याणयो राजलक्ष्म्या दीप्यमान दृष्ट्वा चिन्तयति—मया पुत्रयो राज्य दीयमान नेष्ट, तावप्येवमशोभिष्यत, इदानीमप्येन मारयामि छिद्राणि मार्गयति, स च क्षुधार्त, तेन सूदाय संदेशो दत्त, अत्रैव पौर्वाह्णिक प्रस्थापयेर्यद् भक्षयामि, सूदेन सिंहकेशरिको मोदकश्चेट्या हस्तेन विसृष्ट, प्रियदर्शनया दृष्ट, भणति—प्रेक्षे तमिति, तयाऽर्पित, पूर्वमनया विषम्रक्षितौ हस्तौ कृतौ, ताभ्यां स विषेण म्रक्षित, पश्चात् भणति—अहो सुरभिर्मोदक इति प्रत्यर्पित, चेट्या तया गत्वा राज्ञे समर्पित, तौ च द्वावपि कुमारौ राजसकाशे तिष्ठत, तेन चिन्तित—कथमहमेतयो क्षुधार्त्तयो खादयामि?, तेन द्विधा कृत्वा ताभ्यां द्वाभ्यामपि स दत्त तौ खादितुमारब्धौ,

जाव विसवेगा आगंतुं पवत्ता, राइणा संभंतेण वेज्जा सद्दाविता, सुवण्णं पाइया, सज्जा जाया, पच्छा दासी सद्दाविया, पुच्छिया भणइ–ण केणवि दिट्ठो, णवरं एयाणं मायाए परामुट्ठो, सा सद्दाविया भणिया–पावे! तदा णेच्छसि रज्जं दिज्जंतं, इयाणिमिमि णाहं ते अकयपरलोयसंबलो संसारे छूढोहोंतोत्ति तेसिं रज्जं दाऊण पव्वइओ। अण्णया संघाडओ साहूण उज्जेणीओ आगओ, सो पुच्छिओ–तत्थ णिरुवसग्गं?, ते भणंति–णवरं रायपुत्तो पुरोहियपुत्तो य बाहिन्ति पासंडत्थे साहूणो य, सो गओ अमरिसेणं तत्थ, विस्सामिओ साहूहिं, ते य संभोइया साहू, भिक्खावेलाए भणिओ –आणिज्जउ, भणइ–अत्तलाभिओ अहं, णवरं ठवणकुलाणि साहह, तेहिं से चेल्लओ दिण्णो, सो तं पुरोहियघरं दंसित्ता पडिगओ, इमोवि तत्थेव पइट्ठो वड्डुवड्डेणं सद्देणं धम्मलाभेइ, अंतउरिआओ निग्गयाओ हाहाकारं करेंतीओ, सो वड्डुवड्डेणं सद्देणं भणइ–किं एयं साविएत्ति, ते णिग्गया बाहिं बारं बंधंति, पच्छा भणंति–भगवं! पणच्चसु, सो पडिग्गहं ठवेऊण पणच्चिओ,

१ यावत् विषवेगा आगन्तु प्रवृत्ता, राज्ञा संभ्रान्तेन वैद्याः शब्दिता, सुवर्णं पायितौ, सज्जौ जातौ, पश्चाद्दासी शब्दिता, पृष्टा भणति–न केनापि दृष्टः नवरमेतयोर्मात्रा परामृष्टः, सा शब्दिता भणिता–पापे! तदा नैषीद्राज्यं दीयमानम्, इदानीमनेनाहं त्वयाऽकृतपरलोकशम्बलः संसारे क्षिप्तोऽभविष्यदिति तयो राज्यं दत्त्वा प्रव्रजितः। अन्यदा संघाटकः साध्वोरुज्जयिनीत आगतः, स पृष्टस्तत्र निरुपसर्गं, तौ भणतः–नवरं राजपुत्रः पुरोहितपुत्रश्च बाधेते पाषण्डस्थान् साधूंश्च, स गतोऽमर्षेण तत्र, साधुभिर्विश्रमितः, ते च सांभोगिकाः साधवो भिक्षावेलायां भणितः आनीयतां?, भणति–आत्मलब्धिकोऽहं, नवरं स्थापनाकुलानि कथयत, तैस्तस्मै क्षुल्लको दत्तः, स तत्पुरोहितगृहं दर्शयित्वा प्रतिगतः, अयमपि तत्रैव प्रविष्टो बृहता बृहता शब्देन धर्मलाभयति, अन्तःपुरिका निर्गता हाहाकारं कुर्वत्यः, स बृहता बृहता शब्देन भणति–किमेतत् श्राविके? इति, तौ निर्गतौ बहिर्द्वारं बध्नीतः, पश्चात् भणतः–भगवन्! प्रनर्त्तय, स प्रतिग्रहं स्थापयित्वा प्रनर्त्तितः,

ते' ण याणंति वाएउं, भणंति–जुज्झामो, दोवि एक्कसरा ते आगया, मम्मेहिं आहया, जहा जंताणि तहा खलखलाविआ, तओ णिसिट्ठं हणिऊण बाराणि उग्घाडित्ता गओ, उज्जाणे अच्छति, राइणो कहियं, तेण मग्गाविओ, साहू भणंति–पाहूणओ आगओ, ण याणामो, गवेसंतेहिं उज्जाणे दिट्ठो, राया गओ खामिओ य, णेच्छइ मोत्तुं, जइ पव्वयंति तो मुयामि, ताहे पुच्छिया, पडिसुयं, एगत्थ गहाय चालिया जहा सट्ठाणे ठिया संधिणो, लोयं काऊण पव्वाविया, रायपुत्तो सम्मं करेति मम पित्तियत्तोत्ति, पुरोहियसुयो दुगंछइ–अम्हे एएण कवडेण पव्वाविया, दोवि मरिऊण देवलोगं गया, संगार करेंति–जो पढमं चयइ तेण सो संबोहेयव्वो, पुरोहियसुओ चइऊण तीए दुगुंछाए रायगिहे मेईए पोट्टे आगओ, तीसे सिट्ठिणी वयंसिया, सा किह जाया?, सा मंसं विक्किणइ, ताए भण्णइ–मा अण्णत्थ हिंडाहि, अहं सव्वं किणामि, दिवसे २ आणेइ, एवं तासिं पीई घणा जाया, तेसिं चेव घरस्स समोसीइयाणि ठियाणि, सा य सेट्ठिणी णिंदू, ताहे मेईए रहस्सियं

१ तौ न जानीतो वादयितु, भणतः–युध्यावहे, द्वावपि तौ सहैवागतौ, मर्मस्वाहतौ, यथा यन्त्राणि तथा अस्थिरसन्धिकौ कृतौ, ततो निसृष्टं हत्वा द्वाराणि उद्घाट्य गतः, उद्याने तिष्ठति, राज्ञे कथितं, तेन मार्गितः, साधवो भणन्ति–प्राघूर्णक आगतः, न जानीमः, गवेषयद्भिरुद्याने दृष्टः, राजा गतः क्षामितश्च, नेच्छति मोक्तुं, यदि प्रव्रजतस्तदा मुञ्चामि, तदा पृष्टौ, प्रतिश्रुतम्, एकत्र गृहीत्वा चालितौ यथा स्वस्थाने सन्धयः स्थिताः, लोचं कृत्वा प्रव्राजितौ, राजपुत्रः सम्यक् करोति–मम पैतृक (पितृव्यः) इति, पुरोहितसुतो जुगुप्सते–आवामेतेन कपटेन प्रव्राजितौ, द्वावपि मृत्वा देवलोकं गतौ, सङ्केतं कुरुतः यः प्रथमं च्यवते तेन स संबोद्धव्यः, पुरोहितसुतश्च्युत्वा तया जुगुप्सया राजगृहे मातङ्ग्या उदरे आगतः, तस्याः श्रेष्ठिनी वयस्या, सा कथं जाता?, सा मांसं विक्रीणाति, तया भण्यते–माऽन्यत्र हिण्डिष्ठाः अहं सर्वं क्रीणिष्यामि, दिवसे २ आनयति, एवं तयोः प्रीतिर्घना जाता, तेषामेव गृहस्य समवसृतानि स्थितानि, सा च श्रेष्ठिनी–निन्दूः, तदा मातङ्ग्या राहस्यिकमेव. * संगर प्र० + आयातो प्र० † मातिवेरिमकानि ‡ मृतापत्यप्रसूः

चेव तीसे पुत्तो दिण्णो, सेट्ठिणीए धूया मइया जाया, सा मेईए गहिया, पच्छा सा सेट्ठिणी तं दारगं मेईए पाएसु पाडेति, तुब्भपभावेण जीवउत्ति, तेण से नामं कयं मेयज्जोत्ति, संवड्ढिओ, कलाओ गाहिओ, संबोहिओ देवेण, ण संबुज्झइ, ताहे अट्ठण्हं इब्भकण्णगाणं एगदिवसेण पाणी गेण्हाविओ, सिवियाए णगरिं हिंडइ, देवोवि मेयं अणुपविट्ठो रोइउमारद्धो, जइ ममवि धूया जीवंतिया तीसेवि अज्ज विवाहो कओ होंतो, भत्तं च मेताण कयं होंतं, ताहे ताए मेईए जहावत्तं सिट्ठं, तओ रुट्ठो देवाणुभावेण य ताओ सिवियाओ पाडिओ तुमं असरिसीओ परिणेसित्ति खड्डाए छूढो, ताहे देवो भणइ–किह?, सो भणइ–अवण्णो, भणइ–एत्तो मोएहि किंचिकालं, अच्छामि बारस वरिसाणि, तो भणइ–किं करेमि?, भणइ–रण्णो धूयं दवावेहि, तो सव्वाओ अकिरियाओ ओहाडियाओ भविस्संति, ताहे से छगलओ दिण्णो, सो रयणाणि वोसिरइ, तेण रयणाण थालं भरियं, तेण पिया भणिओ रण्णो धूयं वरेहि, रयणाणं थालं भरेत्ता गओ, किं

१ तस्यै पुत्रो दत्तः, श्रेष्ठिन्या दुहिता मृता जाता, सा मातङ्ग्या गृहीता, पश्चात्सा श्रेष्ठिनी दारकं तं मातङ्ग्याः पादयोः पातयति, तव प्रभावेण जीवत्विति, तेन तस्य नाम कृतं मेतार्य (मातङ्ग्यात्मज) इति, संवृद्धः, कलाः ग्राहितः, संबोधितो देवेन, न संबुध्यते, तदाऽष्टानामिभ्यकन्यानामेकदिवसेन पाणिर्ग्राहितः, शिबिकया नगर्यां हिण्डते, देवोऽपि मातङ्गमनुप्रविष्टो रोदितुमारब्ध, यदि ममापि दुहिताऽजीविष्यत् तस्या अपि विवाहः अद्याकृतोऽभविष्यत्, भक्तं च मेतानां कृतमभविष्यत्तदा तया मेत्या यथावृत्तं शिष्टं, ततो रुष्टो देवानुभावेन च तस्याः शिबिकातः पातितः त्वमसदृशं परिणयसि इति गर्तायां क्षिप्तः, तदा देवो भणति–कथं?, स भणति–अवर्णः, भणति–इतो मोचय कञ्चित्कालं, तिष्ठामि द्वादश वर्षाणि, ततो भणति–किं करोमि?, भणति–राज्ञो दुहितरं दापय, तत् सर्वा अक्रिया अपस्फेटिता भविष्यन्ति, तदा तस्मै छगलको दत्तः, स रत्नानि व्युत्सृजति, तेन रत्नानां स्थालो भृतः, तेन पिता भणितः–राज्ञो दुहितरं वृणुष्व, रत्नैः स्थालं भृत्वा गतः, किं

भग्गसि?, धूयं, णिच्छूढो, एवं थालं दिवसे २ गेण्हइ, ण य देइ, अभओ भणइ—कओ रयणाणि ?, सो भणइ—छगलओ हगइ, अम्हवि दिज्जउ, आणीओ, मडगगंधाणि वोसिरइ, अभओ भणइ—देवाणुभावो, किं पुण ?, परिक्खिज्जउ, किह ?, भणइ—राया दुक्खं वेब्भारपव्वतं सामिं वंदओ जाति, रहमग्गं करेहि, सो कओ, अज्जवि दीसइ, भणिओ—पागारं सो वण्णं करेहि, कओ, पुणोवि भणिओ—जइ समुद्दं आणेसि तत्थ ण्हाओ सुद्धो होहिसि तो ते दाहामो, आणीओ, वेलाए ण्हाविओ, विवाहो कओ सिविवियाए हिंडंतेण, ताओवि से अण्णाओ आणियाओ, एवं भोगे भुंजति बारस वरिसाणि, पच्छा बोहितो, महिलाहिवि बारस वरिसाणि मग्गियाणि, दिण्णाणि य, चउव्वीसाए वासेहिं सव्वाणिवि पव्वइयाणि, णवपुव्वी जाओ, एक्कल्लविहारपडिमं पडिवण्णो, तत्थेव रायगिहे हिंडइ, सुवण्णकारगिहमागओ, सो य सेणियस्स सोवण्णियाणं जवाणमट्ठसतं करेइ, चेइयच्चणियाए परिवाडिए सेणिओ कारेइ तिसंझं, तस्स गिहं साहू अइगओ, तस्स एगाए वायाए

१ मार्गयसि ?, दुहितर, तिरस्कृतः, एवं स्थाल दिवसे २ गृह्णाति, न च ददाति, अभयो भणति—कुतो रत्नानि ?, स भणति—छगलो हदति, अस्माकमपि ददातु, आनीतः, मृतकगन्धानि व्युत्सृजति, अभयो भणति—देवानुभाव, किं पुन ? परीक्ष्यते, कथ ?, भणति—राजा दु ख वैभारपर्वत स्वामिवन्दको याति, रथमार्गं कुरु, स कृत, अद्यापि दृश्यते, भणित—प्राकारं सौवर्णं कुरु, कृत, पुनरपि भणित—यदि समुद्रमानयसि तत्र स्नात शुद्धो भविष्यसि तदा ते दास्याम, आनीत, वेलायां स्नापितो, विवाहः कृत शिबिकया हिण्डमानेन, ता अपि तस्यान्या आनीताः, एव भोगान् भुनक्ति द्वादश वर्षाणि, पश्चाद्बोधितः, महेलाभिरपि द्वादश वर्षाणि मार्गितानि दत्तानि च, चतुर्विंशत्या वर्षैः सर्वेऽपि प्रव्रजिता, नवपूर्वी जातः, एकाकिविहारप्रतिमां प्रतिपन्न, तत्रैव राजगृहे हिण्डते, सुवर्णकारगृहमागतः, स च श्रेणिकस्य सौवर्णिकानां यवानामष्टशत करोति, चैत्यार्चनिकायै परिपाट्या श्रेणिक कारयति त्रिसन्ध्य, तस्य गृह साधुरतिगत, तस्यैकया वाचा

भिक्खा ण णीणिया, सो य अइगओ, ते य जवा कोंचएण खइया, सो आगओ ण पेच्छइ, रण्णो य चेतियच्चणियवेला ढुक्कइ, अज्ज †अट्ठिखंडाणि कीरागित्ति, साधुं संकइ, पुच्छइ, तुण्हिक्को अच्छइ, ताहे सीसावेढेण बंधति, भणिओ य—साह जेणं* गहिया, †तहा आवेढिओ जहा अच्छीणि भूमीए पडियाणि, कोंचओ य दारुं फोडेंतेण सिलिंकाए आहओ गलए, तेण वन्ता, लोगो भणइ—पाव ! एए ते जवा, सोवि भगवं कालगओ सिद्धो य, लोगो आगओ, दिट्ठो मेत्तज्जो, रण्णो कहिउं, वज्झाणि आणत्ताणि, दारं ठइत्ता पव्वइयाणि भणंति—सावग ! धम्मेण वड्ढाहि, मुक्काणि, भणइ—जइ उप्पव्वयह तो भे कविल्लीए कड्ढेमि, एवं समइयं अप्पए य परे य कायव्वं ॥ तथा च कथानकार्थैकदेशप्रतिपादनायाह—

जो कोंचगावराहे पाणिदया कोंचगं तु णाइक्खे । जीवियमणपेहंतं मेयज्जरिसिं णमंसामि ॥ ८६९ ॥

व्याख्या—यः क्रौञ्चकापराधे सति प्राणिदयया 'क्रौञ्चकं तु' क्रौञ्चकमेव नाचष्टे, अपितु स्वप्राणत्यागं व्यवसितः, तमनुकम्पया जीवितमनपेक्षमाणं मेतार्यऋषिं नमस्य इति गाथार्थः ॥ ८६९ ॥

णिप्फेडियाणि दोण्णिवि सीसावेढेण जस्स अच्छीणि । ण य संजमाउ चलिओ मेयज्जो मंदरगिरिव्व ॥८७०॥

१ भिक्षा नानीता, स चातिगत, ते च यवा क्रौञ्चेन खादिता, स आगतो न प्रेक्षते, राज्ञश्च चैत्यार्चनिकावेला ढौकते, अद्यास्थिखण्डानि क्रियेे इति, साधु शङ्कते, पृच्छति, तूष्णीकस्तिष्ठति, तदा शिरआवेष्टनेन बध्नाति, भणितश्च—कथय येन गृहीता, तथाऽऽवेष्टितो यथाऽक्षिणी भूमौ पतिते, क्रौञ्चश्च दारु पाटयता शलाकयाऽऽहतो गले, तेन वान्ता, लोको भणति—पाप ! एते ते यवा, सोऽपि भगवान् कालगत सिद्धश्च, लोक आगत, दृष्टो मेतार्य, राज्ञ कथित वध्या आज्ञप्ता, द्वार स्थगित्वा प्रव्रजिता भणन्ति—श्रावक ! धर्मेण वर्धस्व, मुक्ता, भणति—यदि उत्प्रव्रजत तदा भवत कटाहे क्वथयिष्यामि । एव समयिकमात्मनि परस्मिश्च कर्त्तव्यम् । † अट्ठ प्र० * केणं प्र० + ताहे प्र०

व्याख्या—'निष्कासिते' भूमौ पातिते द्वे अपि शिरोवन्धनेन यस्याक्षिणी, एवमपि कदर्थ्यमानोऽनुकम्पया 'न च' नैव संयमाच्चलितो यस्तं मेतार्यऋषिं नमस्य इति गाथाभिप्रायः ॥८७०॥ द्वारम् ॥ इदानीं सम्यग्वादस्तत्र कथानकम्—१तुरुविणीए णयरीए जियसत्तू राया, तत्थ भद्दा धिज्जाइणी, पुत्तो से दत्तो, मामगो से अज्जकालगो तस्स दत्तस्स सोअ पव्वइओ । सो दत्तो जूयपसंगी मज्जपसंगी य, उल्लगिउमारद्धो, पहाणो दंडो जाओ, कुलपुत्तए भिंदित्ता राया धाडिओ, सो य राया जाओ, जण्णा णेण सुबहू *इट्ठा । अण्णता तं मामगं पेच्छइ, अह भणइ—तुट्ठो धम्मं सुणेमित्ति, जण्णाण किं फलं ?, सो भणइ—किं धम्मं पुच्छसि?, धम्मं कहेइ, पुणोवि पुच्छइ, णरगाणं पंथं पुच्छसि ?, अधम्मफलं साहइ, पुणोवि पुच्छइ, असुभाणं कम्माणं उदयं पुच्छसि ?, तं पि परिकहेइ, पुणोवि पुच्छइ, ताहे भणइ—णिरया फलं जण्णस्स, कुद्धो भणइ—को पच्चओ ?, जहा तुमं सत्तमे दिवसे सुणयकुंभीए पच्चिहिसि, को पच्चओ ?, जहा तुज्झ सत्तमे दिवसे सण्णा मुहं अइगच्छिहिति, रुट्ठो भणइ—तुज्झ को मच्चू ?, भणइ—अहं सुइरं कालं पव्वज्जं काउं देवलोगं गच्छामि, रुट्ठो भणइ—रुंभह, ते दंडा निव्विण्णा, तेहिं सो चेव राया आवाहिओ—

१ तुरुमिण्यां नगर्यां जितशत्रू राजा, तत्र भद्रा धिग्जातीया, पुत्रस्तस्या दत्त , मातुलोऽस्यार्यकालकस्तस्य दत्तस्य, स च प्रव्रजित । स च दत्तो द्यूतप्रसङ्गी मद्यप्रसङ्गी च, अवलगितुमारब्ध , प्रधानो दण्डिको जात , कुलपुत्रान् भेदयित्वा राजा निष्काशित , स च राजा जात , यज्ञा अनेन सुबहव इष्टा । अन्यदा मातुल प्रेक्षते, अथ भणति—तुष्टो धर्मं शृणोमीति, यज्ञाना किं फलम् ?, स भणति—किं धर्मं पृच्छसि ?, धर्मं कथयति, पुनरपि पृच्छति, नरकाणा पन्थान पृच्छसि ?, अधर्मफल कथयति, पुनरपि पृच्छति, अशुभाना कर्मणामुदय पृच्छसि ?, तमपि परिकथयति, पुनरपि पृच्छति, तदा भणति—नरका फल यज्ञस्य, क्रुद्धो भणति—क प्रत्यय ?, यथा त्व सप्तमदिवसे श्वकुम्भ्यां पक्ष्यसे, क प्रत्यय ?, यथा तव सप्तमे दिवसे सज्ञा मुखमतिगमिष्यति, रुष्टो भणति—तव कथ मृत्यु ?, भणति—अह सुचिर काल प्रव्रज्या कृत्वा देवलोक गमिष्यामि, रुष्टो भणति—रुन्द्ध, ते दण्डिका निर्विण्णा , तै स चैव राजाऽऽहूत —* कया प्र०

एहि जाव एवं ते बंधित्ता अप्पेमो, सो य पच्छन्नो अच्छइ, तस्स दिवसा विस्सरिया, सत्तमे दिवसे रायपथं सोहावेइ, मणुस्सेहि य रक्खावेइ। एगो य देवकुलिगो पुप्फकरंडगहत्थगओ पच्चूसे पविसइ, सन्नाडो" वोसरित्ता पुप्फेहि ओहाडेइ, रायावि सत्तमे दिवसे आसचडगरेणं णीति, जामि तं समणयं मारेमि, जाति, वोलंतो जाव अण्णेणं आसकिसोरेणं सह पुप्फेहि उक्खिविया खुरेणं मुहं सण्णा अइगआ, तेण णातं जहा मारेज्जामि, ताहे दंडाण अणापुच्छाए णियत्तिउमारद्धो ते जाणंति दंडा—णूणं रहस्सं भिण्णं, जाव घरं ण पवेसइ ताव गेण्हामो, गहिओ, इयरो य राया आणीओ, ताहे तेण कुंभीए सुणए छुभित्ता बारं बद्धं, हेट्ठा अग्गी जालिओ, ते सुणया ताविज्जन्ता तं खंडाखंडेहिं छिंदंति। एवं सम्मावाओ कायव्वो, जहा कालगज्जेणं ॥ तथा चामुमेवार्थमभिधित्सुराह—

दत्तेण पुच्छिओ जो जण्णफलं कालओ तुरुमिणीए। समयाए आहिएणं संमं वुइयं भदंतेणं ॥ ८७१ ॥

व्याख्या—'दत्तेन' धिग्जातिनृपतिना पृष्टो यो यज्ञफलं कालको मुनिस्तुरुमिण्यां नगर्यां तेन 'समतयाऽऽहितेन' मध्यस्थतया गृहीतेन, इहलोकभयमनपेक्ष्य 'संमं वुइयं भयंतेणं' ति सम्यगुदितं भदन्तेन, मा भूद् मद्वचनादधिकरणप्रवृत्तिरिति गाथार्थः ॥ ८७१ ॥ द्वारं ॥ समासद्वारमिदानीं, तत्र कथानकम्—खिइपइट्ठिए णगरे एगो धिज्जाइओ पंडियमाणी सासणं खिसइ. सो वाए पइण्णाए उग्गाहिऊण पराइणित्ता पव्वाविओ, पच्छा देवयाचोइयस्स उवगयं, दुगुंछं न मुंचइ, सण्णातया से उवसंता, अगारी णेहं ण छड्डुइ, कम्मणं दिण्णं, किह मे वसे होज्जा?, मओ देवलोए उववण्णो। सावि तण्णिव्वेएण पव्वइया, अणालोइया चेव कालं काऊण देवलोए उववण्णा। तओ चइऊण रायगिहे णयरे धणो नाम सत्थवाहो, तस्स चिलाइया नाम चेडी, तीसे पुत्तो उववण्णो, णामं से कयं चिलायगोत्ति। इयरीवि तस्सेव धणस्स पंचण्हं पुत्ताणमुवरि दारिया जाया, सुंसुमा से णामं कयं, सो य से बालग्गाहो दिण्णो, अणालिओ करेइ, ताहे णिच्छूढो सीहगुहं चोरपल्लिं गओ, तत्थ अग्गप्पहारी नीसंसो य, चोरसेणावई मओ, सो य सेणावई जाओ, अण्णया चोरे भणइ—रायगिहे धणो णाम सत्थवाहो, तस्स धूया सुंसुमा दारिया, तहिं वच्चामो, धणं तुम्ह सुंसुमा मज्झ. ओसोवणिं दाउं अइगओ, णामं साहित्ता धणो सह पुत्तेहिं आधरिसितो, तेऽवि तं घरं पविसित्ता धणं चेडिं च गहाय पहाविया, धणेण णयरगुत्तिया सद्दाविया, मम धूयं णियत्तेह, दव्वं तुब्भं, चोरा भग्गा, लोगो धणं गहाय णियत्तो, इयरो सह पुत्तेहिं चिलायगस्स मग्गओ लग्गो, चिलाओवि दारियं गहाय णस्सइ, जाहे चिलाओ ण तरइ सुंसुमं वहिउं, इमेवि ढुक्का, ताहे सुंसुमाए सीसं गहाय पत्थिओ, इयरे धाडिया णियत्ता, छुहाए य परियाविज्जंति, ताहे धणो पुत्ते भणइ—ममं मारित्ता खाह, ताहे वच्चह णयरं, ते नेच्छंति, जेट्ठो भणइ—ममं खायह, एवं जाव डहरओ, ताहे पिया से भणइ—मा अण्णमण्णं मारेमो, एयं चिलायएण ववरोवियं सुंसुमं खामो, एवं आहारित्ता पुत्तिमंसं। एवं साहूणवि आहारो पुत्तिमंसोवमो कारणिओ, तेण आहारेण णयरं गया, पुणरवि भोगाणमाभागी जाया, एवं साहूवि णिव्वाणसुहस्स आभागी भवति। सोवि चिलायओ

---

1 एहि यावदेन युष्मभ्यं बद्ध्वाऽर्पयाम, स च प्रच्छन्नस्तिष्ठति, तस्य दिवसा विस्मृता, सप्तमे दिवसे राजपथं शोधयति, मनुष्यैश्च रक्षयति। एकश्च देवकुलिक हस्तगतपुष्पकरण्डकः प्रत्यूषसि प्रविशति, सञ्ज्ञाकुलो व्युत्सृज्य पुष्पैराच्छादयति, राजाऽपि सप्तमे दिवसे अश्वसमूहेन निर्गच्छति, यामि तं श्रमणकं मारयामि, याति, व्यतिव्रजन् यावदन्येनाश्वकिशोरेण सह पुष्पैरुत्क्षिप्ता खुरेण मुखं सञ्ज्ञाऽतिगता, तेन ज्ञातं यथा मार्ये, तदा दण्डिकाननापृच्छ्य निवर्तितुमारब्ध, ते जानन्ति दण्डिका—नूनं रहस्यं भिन्नं, यावद्गृहं न प्रविशति तावद्गृह्णीम, गृहीतः, इतरश्च राजा आनीत, तदा तेन कुम्भ्यां शुनः क्षिप्त्वा द्वारं बद्धम्, अधस्तादग्निर्ज्वालित, ते श्वानस्ताप्यमानास्तं खण्डशश्छिन्दन्ति। एव सम्यग्वाद कर्तव्य, यथा कालकार्येण * इत्थो प्र० ॥ पोट्टो प्र०

1 क्षितिप्रतिष्ठिते नगरे एको धिग्जातीय पण्डितम्मन्य शासनं निन्दति, स वादे प्रतिज्ञया उद्ग्राह्य पराजित्य प्रव्राजितः, पश्चाद्देवताचोदितस्योपगत, जुगुप्सां न मुञ्चति, सजातीयास्तस्योपशान्ता, अगारी स्नेहं न त्यजति, कार्मणं दत्त, कथं मे वशो भवेत्?, मृतो देवलोक उत्पन्न। साऽपि तन्निर्वेदेन प्रव्रजिता, अनालोचितैव (एवंव) काल कृत्वा देवलोक उत्पन्ना। ततश्च्युत्वा राजगृहे नगरे धनो नाम सार्थवाह, तस्य चिलाता नाम दासी, तस्या पुत्र उत्पन्न, नाम तस्य कृत चिलातक इति। इतराऽपि तस्यैव धनस्य पञ्चानां पुत्राणामुपरि दारिका जाता, सुसुमा तस्या नाम कृत, स च तस्यै बालग्राहो दत्त, अचेष्टा करोति, तदा निष्काशित सिंहगुहां चौरपल्लीं गत, तत्राग्रप्रहारी निस्तृशश्च, चौरसेनापतिर्मृतः, स च सेनापतिर्जातः, अन्यदा चौरान् भणति— * मोहि यस्स प्र० + तच्चिट्ठे चिकिया

1 राजगृहे धनो नाम सार्थवाह, तस्य दुहिता सुसुमा दारिका, तत्र व्रजाम, धनं युष्माकं सुसुमा मम, अवस्वापिनीं दत्त्वाऽतिगत, नाम साधयित्वा धन सह पुत्रैराधर्षितः, तेऽपि तद्गृहं प्रविश्य धनं चेटीं च गृहीत्वा प्रधाविता, धनेन नगरगुप्तिका शब्दिता, मम दुहितरं निवर्त्तयत, द्रव्यं युष्माकं, चौरा भग्ना, लोको धनं गृहीत्वा निवृत्त, इतर सह पुत्रैश्चिलातस्य पृष्ठतो लग्नश्चिलातोऽपि दारिकां गृहीत्वा नश्यति, यदा चिलातो न शक्नोति सुसुमां वोढुम्, इमेऽपि आसन्नीभूताः, तदा सुसुमाया शीर्षं गृहीत्वा प्रस्थित, इतरे धाटिता निवृत्ता, क्षुधा च परिताप्यन्ते, तदा धन पुत्रान् भणति—मां मारयित्वा खादत, तदा व्रजत नगरं, ते नेच्छन्ति, ज्येष्ठो भणति—मां खादत, एवं यावल्लघु, तदा पिता तेषां भणति—मा अन्योऽन्यं मारयाव (मीमराम), एना चिलातेन व्यपरोपितां सुसुमां खादाम, एवमाहार्यं पुत्रीमांसम्। एवं साधूनामप्याहार पुत्रीमांसोपम कारणिक, तेनाहारेण नगरं गता, पुनरपि भोगानामाभागिनो जाता, एवं साधवोऽपि निर्वाणसुखानामाभागिनो भवन्ति। सोऽपि चिलात

सीसेण गहिएणं दिसामूढो जाओ, जाव एगं साहुं पासइ आयावितं, तं भणइ–समासेण धम्मं कहेहि, मा एवं चेव तुब्भवि सीसं पाडेमि, तेण भणियं–उवसमविवेयसंवरं, सो एयाणि पयाणि गहाय एगंते चिंतिउमारद्धो–उवसमो कायव्वो कोहाईणं, अहं च कुद्धओ, विवेगो धणसयणस्स कायव्वो, तं सीसं असिं च पाडेइ, संवरो–इंदियसंवरो नोइंदियसंवरो य, एवं झायइ जाव लोहियगंधेण कीडिगाओ खाइउमारद्धाओ, सो ताहिं जहा चालिणी तहा कओ, जाव पायच्छिराहिं जाव सीसकरोडी ताव गयाओ, तहवि ण झाणाओ चलिओत्ति ॥ तथा चामुमेवार्थं प्रतिपिपादयिषुराह—

**जो तिहि पएहि सम्मं समभिगओ संजमं समारूढो । उवसमविवेयसंवरचिलायपुत्तं णमंसामि ॥ ८७२ ॥**

व्याख्या—यस्त्रिभिः पदैः सम्यक्त्वं 'समभिगतः' प्राप्तः, तथा संयमं समारूढः, कानि पदानि ? उपशमविवेकसंवराः उपशमः–क्रोधादिनिग्रहः, विवेकः–स्वजनसुवर्णादित्यागः, संवर–इन्द्रियनोइन्द्रियगुप्तिरिति, तमित्थम्भूतमुपशमविवेकसंवरचिलातपुत्रं नमस्ये, उपशमादिगुणानन्यत्वाच्चिलातपुत्र एवोपशमविवेकसंवर इति, स चासौ चिलातपुत्रश्चेति समानाधिकरण इति गाथार्थः ॥ ८७२ ॥

---

१ शीर्षे गृहीते ( गृहीतशीर्षे ) दिङ्मूढो जातः, यावदेकं साधुं पश्यति आतापयन्त, स भणति–समासेन धर्मं कथय, मैवमेव तवापि शीर्षं पातये, तेन भणितम्–उपशमविवेकसंवरं, स एतानि पदानि गृहीत्वा एकान्ते चिन्तितुमारब्धः–उपशमः कर्तव्यः क्रोधादीनाम्, अहं च क्रुद्धः, विवेको धनस्वजनस्य कर्तव्य तत् शीर्षमसिं च पातयति, संवर इन्द्रियसंवरो नोइन्द्रियसंवरश्च, एवं ध्यायति यावद्रुधिरगन्धेन कीटिकाः खादितुमारब्धाः, स ताभिर्यथा चालनी तथा कृत , यावत् पादशिरातो यावत् शीर्षकरोटिका तावद्गता., तथापि न ध्यानाच्चलित इति ।

**अहिसरिया पाएहिं सोणियगंधेण जस्स कीडीओ । खायंति उत्तमंगं तं दुक्करकारयं वंदे ॥ ८७३ ॥**

व्याख्या—अभिसृताः पद्भ्यां शोणितगन्धेन यस्य कीटिका अविचलिताध्यवसायस्य भक्षयन्त्युत्तमाङ्गं, पद्भ्यां शिरावेधगता इत्यर्थः, तं दुष्करकारकं वन्दे इति गाथार्थः ॥ ८७३ ॥

**धीरो चिलायपुत्तो मूयइंगलियाहिं चालिणिव्व कओ । सो तहवि खज्जमाणो पडिवण्णो उत्तमं अट्ठं ॥८७४॥**

व्याख्या—'धीरः' सत्त्वसम्पन्नश्चिलातीपुत्रः 'मूतिंगलियाहिं' कीटिकाभिर्भक्ष्यमाणश्चालनीव कृतो यः, तथापि खाद्यमानः प्रतिपन्न उत्तममर्थ, शुभपरिणामापरित्यागादिति हृदयम् ।

**अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेणं । देविंदामरभवणं अच्छरगणसंकुलं रम्मं ॥ ८७५ ॥**

व्याख्या—अर्द्धतृतीयैः रात्रिन्दिवैः प्राप्तं चिलातीपुत्रेण देवेन्द्रस्येव अमरभवनं देवेन्द्रामरभवनम् , अप्सरोगणसङ्कुलं रम्यमिति गाथार्थः ॥ ८७५ ॥ द्वारं ॥ संक्षेपद्वारमधुना—

**सयसाहस्सा गंथा सहस्स पंच य दिवड्ढमेगं च । ठविया एगसिलोए संखेवो एस णायव्वो ॥ ८७६ ॥**

व्याख्या—[1]चत्तारि रिसी गंथे सतसाहस्से काउं जियसत्तुं रायाणमुवत्थिया, अम्ह सत्थाणि सुणेहि तुमं पंचमो लोगपालो, तेण भणियं–केत्तियं ?, ते भणंति–सयसाहस्सियाओ संधियाओ चत्तारि, भणइ–मम रज्जं सीयइ, एवं अद्धद्धं ओसरंतं

---

१ चत्वार ऋषयो ग्रन्थान् शतसाहस्रान् कृत्वा जितशत्रुराजानमुपस्थिता , अस्माकं शास्त्राणि शृणु त्वं पञ्चमो लोकपाल , तेन भणितम्–कियत् ?, ते भणन्ति–शतसाहस्रिका संहिताश्चतस्र , भणति–मम राज्य सीदति, एवमर्धार्धमपसरत् * गाथाहृदयम् प्र

जावेक्केक्को सिलोगो ठिओ, तंपि न सुणइ, ताहे चउहिवि णियमतपदरिसणसहितो सिलोगो कओ, स चायम्–'जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया । बृहस्पतिरविश्वासः पञ्चालः स्त्रीषु मार्दवम् ॥ १ ॥' आत्रेय एवमाह–जीर्णे भोजनमासेवनीयमारोग्यार्थिनेति, एवं प्रत्येकं योजना कार्या, एवं सामायिकमपि चतुर्दशपूर्वार्थसंक्षेपो वर्तत इति ॥ द्वारम् ॥ अधुनाऽनवद्यद्वारं, तत्राऽऽख्यानकम्–[2]वसंतपुरे नगरे जियसत्तू राया धारिणी देवी तेसिं पुत्तो धम्मरुई, सो य राया थेरो ताव सो पव्वइउकामो धम्मरुइस्स रज्जं दाउमिच्छइ, सो माउं पुच्छइ–कीस ताओ रज्जं परिच्चयइ ?, सा भणइ–संसारवद्धणं, सो भणइ–ममवि न कज्जं, सह पियरेण तावसो जाओ, तत्थ अमावसा होहितित्ति गंडओ उग्घोसेइ–आसमे कल्लं अमावसा होहिति तो पुप्फफलाण संगहं करेह, कल्लं ण वट्टइ छिंदिउं, धम्मरुई चिंतेइ–जइ सव्वकालं ण छिज्जेज्ज तो सुंदरं होज्जा । अण्णया साहू अमावासाए तावसासमस्स अदूरेण वोलेंति, ते धम्मरुई पिच्छिऊण भणइ–भगवं ! किं-

---

१ यावदेकैक श्लोक स्थित., तमपि न शृणोति, तदा चतुर्भिरपि निजमतप्रदर्शनसहित श्लोक कृत । २ वसन्तपुरे नगरे जितशत्रू राजा, धारणी देवी, तयो पुत्रो धर्मरुचि , स च राजा स्थविरस्तावत्स प्रव्रजितुकामो धर्मरुचये राज्य दातुमिच्छति, स मातरं पृच्छति–कुतस्तातो राज्य परित्यजति ?, सा भणति–संसारवर्धनं, स भणति–ममापि न कार्यं, सह पित्रा तापसो जात , तत्रामावस्या भविष्यतीति गण्डक उद्घोषयति–आश्रमे कल्येऽमावास्या भविष्यति अतः पुष्पफलानां संग्रह कुरुध्व, कल्ये न वर्तते छेत्तुं, धर्मरुचिश्चिन्तयति–यदि सर्वकाल न छिद्येत तदा सुन्दरं भवेत् । अन्यदा साधवोऽमावास्याया तापसाश्रमस्यादूरेण व्यतिव्रजन्ति, तान् धर्मरुचिः प्रेक्ष्य भणति–भगवन्तः ! किं

तुज्झं अणाउट्टी णत्थि ? तो अडविं जाह, ते भणंति–अम्हं जावज्जीवाए अणाउट्टी, सो संभंतो चिंतेउमारद्धो, साहूवि गया, जाई संभरिया, पत्तेयबुद्धो जाओ ॥ अमुमेवार्थमभिधित्सुराह—

**सोऊण अणाउट्टिं अणभीओ वज्जिऊण अणगं तु । अणवज्जयं उवगओ धम्मरुई णाम अणगारो ॥ ८७७ ॥**

व्याख्या—'श्रुत्वा' आकर्ण्य, आकुट्टनम् आकुट्टिश्छेदनं हिंसेत्यर्थः, न आकुट्टिः–अनाकुट्टिस्तां सर्वकालिकीमाकर्ण्य, 'अणभीतः' 'अण रण' इति दण्डकधातुः, अणति–गच्छति तासु तासु जीवो योनिष्वनेनेत्यणं–पापं तद्भीतः, वर्जयित्वाऽणं तु–परित्यज्य सावद्ययोगम् 'अणवज्जयं उवगओ'त्ति वर्जनीयः वर्ज्यः अणस्य वर्ज्यः अणवर्ज्यस्तद्भावस्तामणवर्ज्यतामुपगतः साधुः संवृत्त इत्यर्थः, धर्मरुचिर्नामानगार इति गाथार्थः ॥ ८७७ ॥ द्वारं ॥ साम्प्रतं परिज्ञाद्वारावयवार्थः प्रतिपाद्यत इति, तत्र कथानकं प्रागुक्तम्, इदानीं गाथोच्यते—

**परिजाणिऊण जीवे अज्जीवे जाणणापरिण्णाए । सावज्जजोगकरणं परिजाणइ सो इलापुत्तो ॥ ८७८ ॥**

व्याख्या—परिज्ञाय जीवानजीवांश्च 'जाणणापरिण्णाए' त्ति ज्ञपरिज्ञया 'सावद्ययोगकरणं' सावद्ययोगक्रियां 'परिजाणइ' त्ति प्रत्याख्यानपरिज्ञया स इलापुत्र इति गाथार्थः ॥ ८७८ ॥ द्वारं ॥ प्रत्याख्यानद्वारं, तत्र कथानकम्–तेतलिपुरणयरे कणगरहो राया, पउमावई देवी, राया भोगलोलो जाते २ पुत्ते वियंगेइ, तेतलिसुओ अमच्चो, कलाओ

१ युष्माकमनाकुट्टिर्नास्ति ?, ततोऽटवीं याथ, ते भणन्ति–अस्माकं यावज्जीवमनाकुट्टी, स संभ्रान्तश्चिन्तयितुमारब्धः, साधवोऽपि गताः, जातिः स्मृता, प्रत्येकबुद्धो जातः । २ तेतलीपुरे नगरे कनकरथो राजा, पद्मावती देवी, राजा भोगलोलुपः जातान् जातान् पुत्रान् व्यङ्गयति, तेतलीसुतोऽमात्यः, कलाद

पूसियारसेट्ठी, तस्स धूया पोट्टिला आगासतलगे दिट्ठा, मग्गिया, लद्धा य, अमच्चो य एगंते पउमावईय भण्णइ–एगं कहवि कुमारं सारक्खह तो तव य मम य भिक्खाभायणं भविस्सइत्ति, मम उयरे पुत्तो, एवं रहस्सगयं सारवेमो, संपत्ती य पोट्टिला देवी य समं चेव पसूया, पोट्टिलाए दारिया देवीए दिण्णा, कुमारो पोट्टिलाए, सो संवड्ढइ, कलाओ य गेण्हइ । अण्णया पोट्टिला अणिट्ठा जाया, णाममवि ण गेण्हइ, अण्णया पव्वइयाओ पुच्छइ–अत्थि किंचि जाणह, जेणं अहं पिया होज्जा, ताओ भणंति–ण वट्टइ एयं कहेउं, धम्मो कहिओ, संवेगमावण्णा, आपुच्छइ–पव्वयामि, भणइ–जइ संबोहेसि, ताए पडिस्सुयं, सामण्णं काउं देवलोगं गया । सो राया मओ, ताहे पउरस्स दंसेइ कुमारं, रहस्सं च भिंदइ, ताहे सोऽभिसित्तो, कुमारं माया भणइ–तेतलिसुयस्स सुट्ठु वट्टेज्जाहि, तस्स पहावेण तंसि राया जाओ, तस्स णामं कणगज्झओ, ताहे सव्वट्ठाणेसु अमच्चो ठविओ, देवो तं बोहेइ, ण संबुज्झइ, ताहे रायाणगं विपरिणामेइ, जओ जओ ठाइ तओ तओ

१ पुष्पकारः श्रेष्ठी, तस्य दुहिता पोट्टिलाऽऽकाशतले दृष्टा, मार्गिता, लब्धा च, अमात्यश्चैकान्ते पद्मावत्या भण्यते–एकं कथमपि कुमारं संरक्षय तदा तव मम च भिक्षाभाजनं भविष्यतीति, ममोदरे पुत्रः, एवं रहस्यगतं सारयामः, समापत्त्या, पोट्टिला देवी च सममेव प्रसूते, पोट्टिलाया दारिका देव्यै दत्ता, कुमारः पोट्टिलायै, स संवर्धते, कलाश्च गृह्णाति । अन्यदा पोट्टिलाऽनिष्टा जाता, नामापि न गृह्णाति, अन्यदा प्रव्रजिता पृच्छति–अस्ति किञ्चिज्जानीथ येनाहं प्रिया भवेयं, ता भणन्ति–न वर्तते एतत्कथयितुं, धर्मः कथितः, संवेगमापन्ना, आपृच्छति–प्रव्रजामि, भणति–यदि संबोधयसि, तया प्रतिश्रुतं, श्रामण्यं कृत्वा देवलोकं गता । स राजा मृतः, तदा पौरेभ्यो दर्शयति कुमारं, रहस्यं च भिनत्ति, तदा सोऽभिषिक्तः, कुमारं माता भणति–तेतलीसुते सुष्ठु वर्तेथाः, तस्य प्रभावेण त्वमसि राजा जातः, तस्य नाम कनकध्वजः, तदा सर्वस्थानेष्वमात्यः स्थापितः, देवस्तं बोधयति, न संबुध्यते, तदा राजानं विपरिणमयति, यतो यतस्तिष्ठति, ततस्ततो राजा

राया परंमुहो ठाइ, भीओ घरमागओ, सोऽवि परियणो णाढाइ, सुट्ठुतरं भीओ, ताहे तालपुडं विसं खाइ, ण मरइ, कंको असी खंधे णिसिओ, ण छिंदइ, उब्बंधइ, रज्जु छिंदइ, पाहाणं गलए बंधित्ता अत्थाहं पाणियं पविट्ठो, तत्थवि थाहो जाओ, ताहे तणकूडे अग्गिं काउं पविट्ठो, तत्थवि ण डज्झइ, ताहे णयराओ णिप्फिडइ जाव पिट्ठओ हत्थी धाडेइ, पुरओ पवातखड्डा, दुहओ अचक्खुफासे मज्झे सराणि पडंति, तत्थ ठिओ, ताहे भणइ–हा पोट्टिले साविगे २ जइ णित्थारेज्जा, आउसो पोट्टिले ! कओ वयामो ?, ते आलावगे भणइ जहा तेतलिणाते, ताहे सा भणइ–भीयस्स खलु भो पव्वज्जा, आलावगा, तं दट्ठूण संबुद्धो भणइ–रायाणं उवसामेहि, मा भणिहिवि–रुट्ठो पव्वइओ, ताहे साहरियं जाव समंततो मग्गिज्जइ, रण्णो कहियं–सह मायाए णिग्गओ, खामेत्ता पवेसिओ, निक्खमणसिबियाए णीणिओ, पव्वइओ, तेण दढं आवइगहिएणावि पच्चक्खाणे समया कया ॥ अत्र गाथा—

१ पराङ्मुखस्तिष्ठति, भीतो गृहमागतः, सोऽपि परिजनो नाद्रियते, सुष्ठुतरं भीतः, तदा तालपुटं विषं खादति, न म्रियते, कङ्कोऽसिः स्कन्धे वाहितः न छिनत्ति, उद्बध्नाति, रज्जूः छिनत्ति, पाषाणान् गले बद्ध्वाऽस्ताघे पानीये प्रविष्टः, तत्रापि स्ताघो जातः, तदा तृणकूटेऽग्निं कृत्वा प्रविष्टः, तत्रापि न दह्यते, तदा नगरान्निर्गच्छति, यावत्पृष्ठतो हस्ती धाटयति, पुरतः प्रपातगर्तो, उभयतोऽचक्षुःस्पर्शो मध्ये शराः पतन्ति, तत्र स्थितः, तदा भणति–हा पोट्टिले श्राविके ! २ यदि निस्तारयिष्यसि, आयुष्मति ! पोट्टिले कुतो व्रजामः ?, तानालापकान् भणति यथा तेतलिज्ञाते, तदा सा भणति–भीतस्य खलु भोः प्रव्रज्या, आलापकाः, स दृष्ट्वा संबुद्धो भणति–राजानमुपशमय, मा वीभणत–रुष्टः प्रव्रजितः, तदा संहृतं यावत्समन्ततो मार्ग्यते, राज्ञः कथितं, सह मात्रा निर्गतः, क्षमयित्वा प्रवेशितः, निष्क्रमणशिबिकया निर्गतः, प्रव्रजितः, तेन दृढमापद्गृहीतेनापि प्रत्याख्याने समता कृता ।

पच्चक्खे दट्ठूणं जीवाजीवे य पुण्णपावं च । पच्चक्खाया जोगा सावज्जा तेनऽलिसुगणं ॥ ८७९ ॥

व्याख्या—प्रत्यक्षानिव दृष्ट्वा देवसंदर्शनेन, कान्?—जीवाजीवान् पुण्यपापं च प्रत्याख्याता योगाः सावद्यास्तेनऽलिसुतेनेति गाथार्थः ॥ ८७९ ॥ गतं निरुक्तिद्वारं, समाप्ता चोपोद्घातनिर्युक्तिरिति ॥

अथ सूत्रस्पर्शिकनिर्युक्त्यवसरः, सा च प्राप्तावसराऽपि नोच्यते, यस्मादसति सूत्रे कस्यासाविति, ततश्च सूत्रानुगमे वक्ष्यामः । आह—यद्येवं किमिति तस्याः खल्विहोपन्यासः?, उच्यते, निर्युक्तिमात्रसामान्यात्, एवं सूत्रानुगमोऽप्यवसरप्राप्त एव, तत्र च सूत्रमुच्चारणीयं, तच्च किम्भूतं?, तत्र लक्षणगाथा—

अप्पग्गंथमहत्थं बत्तीसादोसविरहियं जं च । लक्खणजुत्तं सुत्तं अट्ठहिं य गुणेहिं उववेयं ॥ ८८० ॥

व्याख्या—अल्पग्रन्थं च महार्थं चेति विग्रहः, 'उत्पादव्ययध्रौव्ययुक्तं सदि'त्यादिवत्, अधिकृतसामायिकसूत्रवद्वा, द्वात्रिंशद्दोषविरहितं यच्च, क एते द्वात्रिंशद्दोषाः?, उच्यन्ते—

अलियमुवघायजणयं निरत्थयमवत्थयं छलं दुहिलं । निस्सारमहियमूणं पुणरुत्तं वाहयमजुत्तं ॥ ८८१ ॥

कमभिण्णवयणभिण्णं विभत्तिभिन्नं च लिंगभिन्नं च । अणभिहियमपयमेव य सभावहीणं ववहियं च ॥८८२॥

कालजतिच्छविदोसा समयविरुद्धं च वयणमित्तं च । अत्थावत्तीदोसो य होइ असमासदोसो य ॥ ८८३ ॥

उवमारूवगदोसाऽनिद्देस पयत्थसंधिदोसो य । एए उ सुत्तदोसा बत्तीसं होंति णायव्वा ॥ ८८४ ॥

व्याख्या—तत्र 'अनृतम्' अभूतोद्भावनं भूतनिह्नवश्च, अभूतोद्भावनं—प्रधानं कारणमित्यादि, भूतनिह्नवः—नास्त्यात्मेत्यादि १, 'उपघातजनकं' सत्त्वोपघातजनकं, यथा वेदविहिता हिंसा धर्मायेत्यादि २, वर्णक्रमनिर्देशवत् निरर्थकमारादेसादिवत्, आर् आत् एस् इत्येते आदेशाः, एतेषु वर्णानां क्रमनिदर्शनमात्रं विद्यते, न पुनरभिधेयतया कश्चिदर्थः प्रतीयते, इत्येवंभूतं निरर्थकमभिधीयते, डित्थादिवद्वा ३, पौर्वापर्यायोगादप्रतिसम्बन्धार्थमपार्थकं, तथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः त्वर कीटिके! दिशमुदीचीं, स्पर्शनकस्य पिता प्रतिसीन इत्यादि ४, वचनविघातोऽर्थविकल्पोपपत्त्या छलं वाक्छलादि, यथा नवकम्बलो देवदत्त इत्यादि ५, द्रोहस्वभावं द्रुहिलं, यथा—'यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत् । आकाशमिव पङ्केन, नासौ पापेन युज्यते ॥ १ ॥' कलुषं वा द्रुहिलं, येन पुण्यपापयोः समताऽऽपाद्यते, यथा—'एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः' इत्यादि ६, 'निःसारं' परिफल्गु वेदवचनवत् ७, वर्णादिभिरभ्यधिकम्—अधिकं ८, तैरेव हीनम्—ऊनम् ९, अथवा हेतूदाहरणाधिकमधिकं, यथाऽनित्यः शब्दः कृतकत्वप्रयत्नानन्तरीयकत्वाभ्यां घटपटवदित्यादि, एताभ्यामेव हीनम्—ऊनं यथा—अनित्यः शब्दो घटवत् अनित्यः शब्दः कृतकत्वादित्यादि ८-९, शब्दार्थयोः पुनर्वचनं पुनरुक्तम् अन्यत्रानुवादात्, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं, तत्र शब्दपुनरुक्तम्—इन्द्र इन्द्र इति, अर्थपुनरुक्तम्—इन्द्रः शक्र इति, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं, यथा—पीनो देवदत्तो दिवा न भुङ्क्ते बलवान् पट्विन्द्रियश्च, अर्थादापन्नं रात्रौ भुङ्क्ते इति, तत्र यो ब्रूयात्—दिवा न भुङ्क्ते रात्रौ भुङ्क्ते इति स पुनरुक्तमाह १०, 'व्याहतं' यत्र पूर्वेण परं विहन्यते, यथा—'कर्म चास्ति फलं चास्ति, कर्ता नास्ति च कर्मणा' मित्यादि ११, 'अयुक्तम्' अनुपपत्तिक्षमं, यथा—'तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः । प्रावर्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥ १ ॥' इत्यादि १२, 'क्रमभिन्नं' यत्र यथासङ्ख्यमनुदेशो न क्रियते, यथा 'स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामर्थाः स्पर्शरसगन्धवर्णशब्दा' इति वक्तव्ये स्पर्शरूपशब्दगन्धरसा इति ब्रूयात् इत्यादि १३, 'वचनभिन्नं' वचनव्यत्ययः, यथा वृक्षावेतौ पुष्पिताः इत्यादि १४, विभक्तिभिन्नं विभक्तिव्यत्ययः, यथैष वृक्ष इति वक्तव्ये एष वृक्षमित्याह १५, लिङ्गभिन्नं लिङ्गव्यत्ययः, यथेयं स्त्रीति वक्तव्येऽयं स्त्रीत्याह १६, 'अनभिहितम्' अनुपदिष्टं स्वसिद्धान्ते, यथा सप्तमः पदार्थो दशमं द्रव्यं वा वैशेषिकस्य, प्रधानपुरुषाभ्यामभ्यधिकं साङ्ख्यस्य, चतुःसत्यातिरिक्तं शाक्यस्येत्यादि १७, अपदं पद्यविधौ पद्ये विधातव्येऽन्यच्छन्दोऽभिधानं, यथाऽऽर्यापदे वैतालीयपदाभिधानं १८, 'स्वभावहीनं' यद्वस्तुनः स्वभावतोऽन्यथावचनं, यथा शीतोऽग्निर्मूर्तिमदाकाशमित्यादि १९, 'व्यवहितम्' अन्तर्हितं, यत्र प्रकृतमुत्सृज्याप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमभिधीयते, यथा हेतुकथनमधिकृत्य सुप्तिङन्तपदलक्षणप्रपञ्चमर्थशास्त्रं वाऽभिधाय पुनर्हेतुवचनमित्यादि २०, कालदोषः अतीतादिकालव्यत्ययः, यथा रामो वनं प्राविशदिति वक्तव्ये विशतीत्याह २१, यतिदोषः—अस्थानविच्छेदः तदकरणं वा, २२, 'छविः' अलङ्कारविशेषस्तेन शून्यमिति २३, 'समयविरुद्धं च' स्वसिद्धान्तविरुद्धं यथा साङ्ख्यस्यासत् कारणे कार्यं सद् वैशेषिकस्येत्यादि २४, वचनमात्रं निर्हेतुकं यथेष्टभूदेशे लोकमध्याभिधानवत् २५, 'अर्थापत्तिदोषः' यत्रार्थादनिष्टापत्तिः, यथा 'ब्राह्मणो न हन्तव्य' इति, अर्थादब्राह्मणघातापत्तिः २६, 'असमासदोषः' समासव्यत्ययः, यत्र वा समासविधौ सत्यसमासवचनं, यथा राजपुरुषोऽयमित्यत्र तत्पुरुषे समासे कर्त्तव्ये विशेषणसमासकरणं बहुव्रीहिसमासकरणं यदि वा असमासकरणं राज्ञः पुरुषोऽयमित्यादि २७, 'उपमादोषः' हीनाधिकोपमानाभिधानं, यथा मेरुः सर्षपोपमः, सर्षपो

मेरुसमो बिन्दुः समुद्रोपम इत्यादि २८, रूपकदोषः स्वरूपावयवव्यत्ययः, यथा पर्वतरूपावयवानां पर्वतेनानभिधानं, समुद्रावयवानां चाभिधानमित्यादि २९, 'अनिर्देशदोषः' यत्रोद्देश्यपदानामेकवाक्यभावो न क्रियते, यथेह देवदत्तः स्थाल्यामोदनं पचतीति वक्तव्ये पचतिशब्दानभिधानं ३०, 'पदार्थदोषः' यत्र वस्तुपर्यायवाचिनः पदस्यार्थान्तरपरिकल्पनाऽऽश्रीयते, यथेह द्रव्यपर्यायवाचिनां सत्तादीनां द्रव्यादर्थान्तरपरिकल्पनमुलूकस्य ३१, 'सन्धिदोषः' विश्लिष्टसंहितत्वं व्यत्ययो वेति ३२ । एभिर्विमुक्तं द्वात्रिंशद्दोषरहितं लक्षणयुक्तं सूत्रं तदिति वाक्यशेषः, 'द्वात्रिंशद्दोषरहितं यच्च' इति वचनात्तच्छन्दनिर्देशो गम्यते ॥ अष्टाभिश्च गुणैरुपेतं यत् तल्लक्षणयुक्तमिति वर्तते, ते चेमे गुणाः—

**निद्दोसं सारवन्तं च हेउजुत्तमलंकियं । उवणीयं सोवयारं च मियं महुरमेव य ॥ ८८५ ॥**

व्याख्या—'निर्दोषं' दोषमुक्तं 'सारवत्' बहुपर्यायं, गोशब्दवत्सामायिकवद्वा, अन्वयव्यतिरेकलक्षणा हेतवस्तद्युक्तम्, 'अलङ्कृतम्' उपमादिभिरुपेतम्, 'उपनीतम्' उपनयोपसंहृतं, 'सोपचारम्' अग्राम्याभिधानं, 'मितं' वर्णादिनियतपरिमाणं, 'मधुरं' श्रवणमनोहरम् । अथवाऽन्ये सूत्रगुणाः—

**अप्पक्खरमसंदिद्धं सारवं विस्सओमुहं । अत्थोभमणवज्जं च सुत्तं सव्वण्णुभासियं ॥ ८८६ ॥**

व्याख्या—'अल्पाक्षरं' मिताक्षरं, सामायिकाभिधानवत्, 'असंदिग्धं' सैन्धवशब्दवल्लवणघोटकाद्यनेकार्थसंशयकारि न भवति, 'सारवत्' बहुपर्यायं, 'विश्वतोमुखम्' अनेकमुखं प्रतिसूत्रमनुयोगचतुष्टयाभिधानात्, प्रतिमुखमनेकार्थाभिधायकं वा सारवत्, 'अस्तोभकं' वैहिहकारादिपदच्छिद्रपूरणस्तोभकशून्यं, स्तोभकाः—निपाताः, 'अनवद्यम्' अगर्ह्यं, न हिंसाभिधायकं—'षट् शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥' इत्यादिवचनवत्, एवंभूतं सूत्रं सर्वज्ञभाषितमिति । ततश्च सूत्रानुगमात् सूत्रेऽनुगतेऽनवद्यमिति निश्चिते पदच्छेदानन्तरं सूत्रपदनिक्षेपलक्षणः सूत्रालापकन्यासः, ततः सूत्रस्पर्शनिर्युक्तिश्चरमानुयोगद्वारविहिता नयाश्च भवन्ति, समकं चैतदनुगच्छतीति, आह च भाष्यकारः—"सुत्तं सुत्ताणुगमो सुत्तालावगकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ती णया य समगं तु वच्चंति ॥ १ ॥" सूत्रानुगमादीनां चायं विषयः—सपदच्छेदं सूत्रमभिधाय अवसितप्रयोजनो भवति सूत्रानुगमः, सूत्रालापकन्यासोऽपि नामादिनिक्षेपमात्रमेवाभिधाय, सूत्रस्पर्शनिर्युक्तिस्तु पदार्थविग्रहविचारप्रत्यवस्थानाद्यभिधायेति, तच्च प्रायो नैगमादिनयमतविषयमिति वस्तुतस्तदन्तर्भाविन एव नया इति, न चैतत् स्वमनीषिकयोच्यते, यत आह भाष्यकारः—"होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो । सुत्तालावयनासो नामाइण्णासविणिओगं ॥ १ ॥ सुत्तफासियनिज्जुत्तिविनिओगो सेसओ पयत्थाई । पायं सो च्चिय नेगमणयाइमयगोयरो होइ ॥ २ ॥" आह—यद्येवमुत्क्रमतो निक्षेपद्वारे किमिति सूत्रालापकन्यासोऽभिहित?, उच्यते, निक्षेपसामान्याल्लाघवार्थमित्यलं प्रसङ्गेन । एवं विनेयजनानुग्रहायानुगमादीनां प्रसङ्गतो विषयविभागः प्रदर्शितः, अधुना प्रकृतं प्रस्तुमः, तत्र सूत्रं सूत्रानुगमे सत्युच्चारणीयं, तच्च पञ्चनमस्कारपूर्वकं, तस्याशेषश्रुतस्कन्धान्तर्गतत्वात्, अतोऽसावेव सूत्रादौ व्याख्येयः, सर्वसूत्रादित्वात्, सर्वसम्मतसूत्रादिवत्, सूत्रादित्वं चास्य सूत्रादौ व्याख्यायमानत्वात्, निर्युक्तिकृतोपन्यस्तत्वाद्, अन्ये तु व्याचक्षते—मङ्गलत्वादेवायं सूत्रादौ व्याख्यायत इति, तथाहि—त्रिविधं मङ्गलम्—आदौ मध्येऽवसाने च, तत्राऽऽदिमङ्गलार्थं नन्दी व्याख्याता, मध्यमङ्गलार्थं तु तीर्थकरादिगुणाभिधायकः 'तित्थकरे' इत्यादि गाथासमूहः, नमस्कारस्त्ववसानमङ्गलार्थं इति, एतच्चायुक्तं, शास्त्रस्यापरिसमाप्तत्वादवसानत्वानुपपत्तेः, न चाऽऽदिमङ्गलत्वमप्यस्य युज्यते, तस्य कृतत्वात्, कृतकरणे चानवस्थाप्रसङ्गात्, अलं च परबुद्धिमान्द्यप्रदर्शनेन, नैष सतां न्यायः, सर्वथा गुरुवचनाद् यथाऽवधारितं तत्त्वार्थमेव प्रतिपादयामः । सूत्रादिश्च नमस्कारः, अतस्तमेव प्राग् व्याख्याय सूत्रं व्याख्यास्यामः, स चोत्पत्त्याद्यनुयोगद्वारानुसारतो व्याख्येयः, तत्र नमस्कारनिर्युक्तिप्रस्ताविनीमिमामाह गाथां निर्युक्तिकारः—

**उप्पत्ती ( १ ) निक्खेवो ( २ ) पयं ( ३ ) पयत्थो ( ४ ) परूवणा ( ५ ) वत्थुं ( ६ ) ।**
**अक्खेव ( ७ ) पसिद्धि ( ८ ) कमो ( ९ ) पओयणफलं नमोक्कारो ॥ ८८७ ॥**

व्याख्या—उत्पादनम् उत्पत्तिः, प्रसूतिः उत्पाद इत्यर्थः, सोऽस्य नमस्कारस्य नयानुसारतश्चिन्त्यः, तथा निक्षेपणं निक्षेपो न्यास इत्यर्थः, स चास्य कार्यः, पद्यतेऽनेनेति पदं तच्च नामिकादि, तच्चास्य वाच्यं, तथा 'पदार्थः' पदस्यार्थः पदार्थः, स च वाच्यः, तस्य च निर्देशः सदाद्यनुयोगद्वारविषयत्वात्, प्रकर्षेण रूपणा—प्ररूपणा कार्येति, वसन्त्यस्मिन् गुणा इति वस्तु तदर्हं वाच्यम्, आक्षेपणम् आक्षेपः आशङ्केत्यर्थः, सा च कार्या, प्रसिद्धिः तत्परिहाररूपा वाच्येति, क्रमः अर्हदादिरभिधेयः, 'प्रयोजनं' तद्विषयमेव, अथवा येन प्रयुक्तः प्रवर्तते —अपवर्गाख्यं, तथा 'फलं' तच्च क्रियाऽनन्तरभाविस्वर्गादिकम्, अन्ये तु व्यत्ययेन प्रयोजनफलयोरर्थं प्र कारः ( ९५०० ग्रन्थाग्रं ) खल्वेभिर्द्वारैश्चिन्त्य इति गाथासमुदायार्थः ॥ ८८७ ॥ 'यथोद्देशं निर्देश' इति रनिरूपणायाऽऽह निर्युक्तिकारः—

उप्पन्नाऽणुप्पन्नो इत्थ नयाऽऽइनिगमस्सऽणुप्पन्नो। सेसाणं उप्पन्नो जइ कत्तो ?, तिविहसामित्ता ॥ ८८८ ॥

व्याख्या—उत्पन्नश्चासावनुत्पन्नश्च स इति समानाधिकरणः, केन नञ्विशिष्टेनानञ् ( पा–२–१–६ ) कृताकृतादिवदुत्पन्नानुत्पन्नः, स्याद्वादिन एव एवंप्रकारः समासो युज्यते, नान्यस्यैकान्तवादिनः, एकत्रैकदा परस्परविरुद्धधर्मानभ्युपगमात्, आह—स्याद्वादिनोऽपि कथमेकत्रैकदा परस्परविरुद्धधर्माध्यास इति, उच्यते, 'एत्थ णय'त्ति अत्र नयाः प्रवर्तन्ते, ते च नैगमादयः सप्त, नैगमोऽपि द्विभेदः—सर्वसङ्ग्राही देशसङ्ग्राही च, तत्रादिनैगमस्य सामान्यमात्रावलम्बित्वात् तस्य चोत्पादव्ययरहितत्वान्नमस्कारस्यापि तदन्तर्गतत्वादनुत्पन्नः, 'सेसाणं उप्पण्णो'त्ति शेषाः—विशेषग्राहिणस्तेषां शेषाणां विशेषग्राहित्वात् तस्य चोत्पादव्ययवत्त्वात् उत्पादव्ययशून्यस्य वान्ध्येयादिवदवस्तुत्वात् नमस्कारस्य च वस्तुत्वादुत्पन्न इति, आह—शेषाः सङ्ग्रहादयः, सङ्ग्रहस्य च विशेषग्राहित्वं नास्तीति, उच्यते, तस्यादिनैगम एवान्तर्भावान्न दोष इति, अतः शेषाणामुत्पन्नः, 'जइ कत्तो'त्ति यद्युत्पन्नः कुतः? इति, आह—'तिविह-सामित्ता' त्रिविधं च तत् स्वामित्वं चेति समासः, तस्मात्त्रिविधस्वामित्वात्—त्रिविधस्वामिभावात् त्रिविधकारणादित्यर्थः। आह—एवमप्येकत्रैकदा परस्परविरुद्धधर्माध्यासदोषस्तदवस्थ एव, न, अशेषवस्तुन एव तत्त्वतः सामान्यविशेषात्मकत्वात्, सामान्यधर्मैः सत्त्वादिभिरनुत्पादाद् विशेषधर्मैः संस्थानानुपूर्व्यादिभिरुत्पादाद्, विजृम्भितं चात्र भाष्यकृता तत्तु नोच्यते ग्रन्थविस्तरभयाद्, गमनिकामात्रमेवैतदिति गाथार्थः ८८८

यदुक्तं—'त्रिविधस्वामित्वादि'ति, तत् त्रिविधस्वामित्वमुपदर्शयन्नाह —

समुट्ठाण १ वायणा २ लद्धिओ ३ पढमे नयत्तिए तिविहं। उज्जुसुय पढमवज्जं सेसनया लद्धिमिच्छंति ॥८८९॥

व्याख्या—समुत्थानतो वाचनातो लब्धितश्च नमस्कारः समुत्पद्यत इति वाक्यशेषः, सम्यक् सङ्गतं प्रशस्तं वोत्थानं समुत्थानं तन्निमित्तं नमस्कारस्य, कस्य समुत्थानम् ?, अन्यस्याश्रुतत्वात्तदाधारभूतत्वात् प्रत्यासन्नत्वाद् देहस्यैव गृह्यते इति, युक्तं च देहसमुत्थानं नमस्कारकारणं, तद्भावभावित्वान्यथाऽनुपपत्तेरिति, अतः समुत्थानतः १, वाचनं वाचना—परतः श्रवणम् अधिगम उपदेश इत्यनर्थान्तरं, सा च नमस्कारकारणं, तद्भावभावित्वादेवेति, अतो वाचनातः २, लब्धिः—तदावरणकर्मक्षयोपशमलक्षणा, सा च कारणं. तद्भावभावित्वादेव, अतो लब्धितश्च ३, पदान्तप्रयुक्तश्चशब्दो नयापेक्षया त्रयाणामपि प्राधान्यख्यापनार्थः। अत एवाह—'पढमे णयत्तिए तिविहं'ति प्रथमे नयत्रिकेऽशुद्धनैगमसङ्ग्रहव्यवहाराख्ये विचार्ये समुत्थानादि त्रिविधं नमस्कारकारणमिति, आह—प्रथमे नयत्रिकेऽशुद्धनैगमसङ्ग्रहौ कथं त्रिविधं कारणमिच्छतः ?, तयोः सामान्यमात्रावलम्बित्वाद्, उच्यते, 'आदिनैगमस्सऽणुप्पन्न' इत्यत्रैव प्रथमानयत्रिकात् तयोरुत्कलितत्वान्न दोषः, 'उज्जुसुयपढमवज्जंति' ऋजुसूत्रः प्रथमवर्जं—समुत्थानाख्यकारणशून्यं कारणद्वयमेवेच्छति, समुत्थानस्य व्यभिचारित्वात्, तद्भावेऽपि वाचनालब्धिशून्यस्यासम्भवात्, 'सेस नया लद्धिमिच्छंति'त्ति शेषनयाः—शब्दादयो लब्धिमेव एकां कारणमिच्छन्ति, वाचनाया अपि व्यभिचारित्वात्, तथाहि—सत्यामपि वाचनायां लब्धिरहितस्य गुरुकर्मणोऽभव्यस्य वा नैवोत्पद्यते नमस्कारः, तस्यां सत्यामेवोत्पद्यते, ततोऽसाधारणत्वात्सैव कारणमिति गाथार्थः ॥ ८८९ ॥ द्वारम् १॥ इदानीं निक्षेपः, स च चतुर्धा—नामनमस्कारः स्थापनानमस्कारः द्रव्यनमस्कारः भावनमस्कारश्च, नामस्थापने सुगमे, ज्ञभव्यशरीरातिरिक्तद्रव्यनमस्काराभिधित्सयाऽऽह—

निह्नाइ दव्व भावोवउत्तु जं कुज्ज सम्मदिट्ठी उ। (मूलदारं २) नेवाइअं पयं (मू० ३) दव्वभावसंकोअणपयत्थो ८९०

व्याख्या—निह्नवादिर्द्रव्यनमस्कारः, नमस्कारनमस्कारवतोरव्यतिरेकात्, आदिशब्दात् द्रव्यार्थो वा यो मन्त्रदेवताद्याराधनादाविति एत्थ दव्वनमोक्कारे उदाहरणं—वसंतपुरे णयरे जियसत्तू राया, धारिणीसहिओ ओलोयणं करेइ, द्मगपासणं, अणुकंपाए नइसरिसा रायाणोत्ति भणइ देवी, रण्णा आणाविओ, कयालंकारो दिण्णवत्थो तेहिं उवणीओ, सो य कच्छूए गहिएल्लओ, भासुरं ओलग्गाविज्जइ, कालंतरेण रायाणए से रज्जं दिण्णं, पेच्छइ दंडभडभोइए देवयाययणपूयाओ करेमाणे, सो चिंतेइ अह कस्स करेमि?, रण्णो आययणं करेमि, तेण देउलं कयं, तत्थ रण्णो देवीए य पडिमा कया, पडिमापवेसे आणीयाणि पुच्छंति, साहइ, तुट्ठो राया सक्कारेइ, सो तिसंझं अच्चेइ, पडियरणं, तुट्ठेण राइणा से सव्वट्ठाणगाणि दिण्णाणि, अन्नया राया दंडयत्ताए गओ तं सव्वंतेउरट्ठाणेसु ठवेऊणं, तत्थ य अंतेउरियाओ निरोहं असहमाणिओ तं चेव उवचरंति, सो नेच्छइ, ताहे ताओ भत्तगं नेच्छंति, पच्छा सणियं पविट्ठो, विट्टालिओ य, राया आगओ, सिट्ठे विणासिओ।

१ अत्र द्रव्यनमस्कारे उदाहरणम्—वसन्तपुरे नगरे जितशत्रू राजा, धारणीसहितोऽवलोकनं करोति, द्रमकदर्शनम्, अनुकम्पया नदीसदृशा राजान इति भणति देवी, राज्ञाऽऽनीत , कृतालङ्कारो दत्तवस्त्रस्मै उपनीत , स च कच्छ्वा गृहीत , भास्वरमवलग्यते, कालान्तरेण राज्ञा तस्मै राज्य दत्त, दण्डभटभोजिकान देवतायतनपूजा कुर्वत प्रेक्षते, स चिन्तयति—अहं कस्य करोमि ?, राज्ञ आयतन करोमि, तेन देवकुल कृत, तत्र राज्ञो देव्याश्च प्रतिमा कृता, प्रतिमाप्रवेश आनीते पृच्छत , कथयति, तुष्टो राजा सत्कारयति, स त्रिसन्ध्यमर्चयति, प्रतिचरण, तुष्टेन राज्ञा तस्मै सर्वस्थानानि दत्तानि, अन्यदा राजा दण्डयात्रायै गत त सर्वेष्वन्त पुरस्थानेषु स्थापयित्वा, तत्र चान्त पुर्यः निरोधमसहमानास्तमेवोपचरन्ति, स नेच्छति, तदा ता भक्त नेच्छन्ति, पश्चात् शनै प्रविष्ट , विनष्टश्च, राजा आगत , शिष्टे विनाशित । * नेद् प्र०

रायत्थाणीओ तित्थयरो, अंतेउरत्थाणीया छक्काया, अहवा ण छक्काया किंतु संकादओ पदा, मा सेणियादीणवि दव्वनमोक्कारो भविस्सइ, दमगत्थाणिया साहू, कच्छूल्लत्थाणीयं मिच्छत्तं, भासुरत्थाणीयं सम्मत्तं, डंडो विनिवाओ संसारे, एस दव्वनमोक्कारो। 'भावोवउत्तु जं कुज्ज सम्मद्दिट्ठी उ' नोआगमतो भावनमस्कारः 'यत् कुर्यात्' यत् करोति शब्दक्रियादि सम्यग्दृष्टिरेवेति, अत्र च नामादिनिक्षेपाणां यो नयो यं निक्षेपमिच्छति तदेतद्विशेषावश्यकादाशङ्कापरिहारसहितं विज्ञेयम्, इह तु ग्रन्थविस्तरभयादल्पमतिविनेयजनानुग्रहार्थं च नोक्तमिति ॥ द्वारं ॥ पदद्वारमधुना—पद्यतेऽनेनेति पदं, तच्च पञ्चधा—नामिकं नैपातिकम् औपसर्गिकम् आख्यातिकं मिश्रं चेति, तत्राश्व इति नामिकं, खल्विति नैपातिकं, परीत्यौपसर्गिकं, धावतीत्याख्यातिकं, संयत इति मिश्रं, एवं नामिकादिपञ्चप्रकारपदसम्भवे सत्याह—'नेवाइयं पयं' ति निपतत्यर्हदादिपदादिपर्यन्तेष्विति निपातः, निपातादागतं तेन वा निर्वृत्तं स एव वा स्वार्थिकप्रत्ययविधानात् नैपातिकमिति, तत्र 'नम' इति नैपातिकं पदं ॥ द्वारम् ॥ पदार्थद्वारमधुना—तत्र गाथावयवः 'दव्वभावसंकोयणपयत्थो' त्ति नम इत्येतत् पूजार्थं 'णम प्रह्वत्वे' धातुः 'उणादयो बहुल' ( पा० ३-३-१ ) मित्यसुन्, नमोऽर्हद्भ्यः, स च द्रव्यभावसङ्कोचनलक्षण इति, तत्र द्रव्यसंकोचनं करशिरःपादादिसङ्कोचः, भावसङ्कोचनं विशुद्धस्य मनसो नियोगः, द्रव्यभावसङ्कोचनप्रधानः पदार्थो द्रव्यभावसङ्कोचनपदार्थः, शाकपार्थिवादेराकृतिगणत्वात् प्रधानपदलोपः, अत्र च भङ्गचतुष्टयं—द्रव्यसङ्कोचो न भावसङ्कोच इत्येकः, यथा पालकस्य, भावसङ्कोचो न द्रव्यसङ्कोच इत्यनुत्तरदेवानां द्वितीयः, द्रव्यभावयोः सङ्कोच इति शाम्बस्य तृतीयः, न

१ राजस्थानीयस्तीर्थंकर , अन्तःपुरस्थानीया: षट् काया , अथवा न षट् काया किं तु शङ्कादीनि पदानि, मा श्रेणिकादीनामपि द्रव्यनमस्कारो भूद् द्रमकस्थानीया: साधव , कच्छूस्थानीयं मिथ्यात्वं, भास्वरस्थानीयं सम्यक्त्वं, दण्डो विनिपात: संसारे, एष द्रव्यनमस्कार. * यजनानु० प्र०

द्रव्यसङ्कोचो न भावसङ्कोच इति शून्यः। इह च भावसङ्कोचः प्रधानो द्रव्यसङ्कोचोऽपि तच्छुद्धिनिमित्त इति गाथार्थः ॥ ८९० ॥ द्वारं ॥ प्ररूपणाद्वारप्रतिपादनायाऽऽह—

दुविहा परूवणा छप्पया य १ नवहा य २ छप्पया इणमो।
किं १ कस्स २ केण व ३ कहिं ४ किच्चिरं ५ कइविहो व ६ भवे ॥ ८९१ ॥

व्याख्या—'द्विविधा' द्विप्रकारा प्रकृष्टा—प्रधाना प्रगता वा रूपणा—वर्णना प्ररूपणेति, द्वैविध्यं दर्शयति—षट्पदा च नवधा च—नवप्रकारा नवपदा चेत्यर्थः, चशब्दात् पञ्चपदा च, तत्र 'छप्पया इणमो' षट्पदेयं षट्पदा इदानीं वा, किं? कस्य? केन वा? क्व वा? कियच्चिरं? कतिविधो वा भवेन्नमस्कार इति गाथासमुदायार्थः ॥ ८९१ ॥ तत्राऽऽद्यद्वारावयवार्थाभिधित्सयाऽऽह—

किं? जीवो तप्परिणओ (दा०१) पुव्वपडिवन्नओ उ जीवाणं। जीवस्स व जीवाण व पडुच्च पडिवज्जमाणं तु॥८९२॥

व्याख्या—किंशब्दः क्षेपप्रश्ननपुंसकव्याकरणेषु, तत्रेह प्रश्ने, अयं च प्राकृतेऽलिङ्गः सर्वनामनपुंसकनिर्देशः सर्वलिङ्गैः सह यथायोगमभिसम्बध्यते, किं सामायिकं? को नमस्कारः?, तत्र नैगमाद्यशुद्धनयमतमधिकृत्याजीवादिव्युदासेनाह—जीवो नाजीवः, स च सङ्ग्रहनयापेक्षया मा भूदविशिष्टः स्कन्धः, यथाऽऽहुस्तन्मतावलम्बिनः—'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्, उतामृतत्वस्येशानो यदन्नेनातिरोहती'त्यादि, तथा तन्नयविशेषापेक्षयैव मा भूदविशेषो ग्राम इत्यतो नोस्कन्धो नोग्राम इति वाक्यशेषः, सर्वास्तिकायमयः स्कन्धः, तद्देशो जीवः, स चैकदेशत्वात् स्कन्धो न भवति, अनेकस्कन्धापत्तेः, अस्कन्धोऽपि न भवति, स्कन्धाभावप्रसङ्गाद्, अनभिलाप्योऽपि न भवति, वस्तुविशेषत्वात्, तस्मान्नोस्कन्धः, स्कन्धैकदेश इत्यर्थः, स्कन्धदेशविशेषार्थद्योतको नोशब्दः, एवं नोग्रामोऽपि भावनीयः, नवरं ग्रामः—चतुर्दशभूतग्रामसमुदायः, यथोक्तम्—"एगिंदिय सुहुमियरा सन्नियरपणिंदिया सबितिचऊ। पज्जत्तापज्जत्ता भेदेणं चोद्दसग्गामा ॥ १ ॥" अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः—सामान्येनाशुद्धनयानां जीवस्तज्ज्ञानलब्धियुक्तो योग्यो वा नमस्कारः, शब्दादिशुद्धनयमतं त्वधिकृत्याह—'तप्परिणओ' जीव इति वर्तते, स हि नमस्कारपरिणामपरिणत एव नमस्कारो नापरिणत इत्यर्थः। एकत्वानेकत्वचिन्तायां तु नैगमस्य सङ्ग्रहव्यवहारान्तर्गतत्वात् सङ्ग्रहादिभिरेव विचारः, तत्र सङ्ग्रहस्य नमस्कारजातिमात्रापेक्षत्वादेको नमस्कारः, व्यवहारस्य व्यवहारपरत्वाद् बहवो नमस्काराः, ऋजुसूत्रादीनां वर्तमानमात्रग्राहित्वाद् बहव एवोपयुक्ताश्चेति समासार्थः, व्यासार्थो विशेषावश्यकादवसेयः, किमितिद्वारं गतं। साम्प्रतं कस्य? इति द्वारम्, इह च प्राक्प्रतिपन्नप्रतिपद्यमानकाङ्गीकरणतोऽभीष्टमर्थं निरूपयन्नाह—'पुव्वपडिवन्नओ उ जीवाणं' इत्यादि, प्रकृतचिन्तायामिह पूर्वप्रतिपन्न एव यदाऽधिक्रियते तदा व्यवहारनयमताश्रित्य जीवानां जीवस्वामिक इत्यर्थः, प्रतिपद्यमानं तु प्रतीत्य जीवस्य जीवानां (वा) इत्यक्षरगमनिका, भावार्थस्तु नयैश्चिन्त्यते—यस्मान्नमस्कार्यनमस्कर्तृद्वयाधीनं नमस्कारकरणं, तत्र नैगमव्यवहारमतं नमस्कार्यस्य नमस्कारः, न कर्तुः, यद्यपि नमस्कारक्रियानिष्पादकः कर्ता तथाऽपि नासौ तस्य, स्वयमनुपयुज्यमानत्वात्, यतिभिक्षावत्, तथाहि—न दातुर्भिक्षा निष्पादकस्य, अपि तु भिक्षोर्भिक्षेति प्रतीतम्, अत्र च सम्बन्धविशेषापेक्षावशप्रापिता

१ एकेन्द्रियाः सूक्ष्मेतरा: सञ्ज्ञीतरा: पञ्चेन्द्रिया: सद्वित्रिचतुष्का: । पर्याप्तापर्याप्तभेदेन चतुर्दश ग्रामा: ॥ १ ॥ * क्षविवक्षावश० प्र०

अष्टौ भङ्गा भवन्ति, तद्यथा—जीवस्य १ अजीवस्य २ जीवानां ३ अजीवानां ४ जीवस्य चाजीवस्य च ५ जीवस्य चाजीवानां च ६ जीवानामजीवस्य च ७ जीवानामजीवानां च ८, अत्रोदाहरणानि—"जीवस्स सो जिणस्स व अजीवस्स उ जिणिंदपडिमाए। जीवाण जतीणं पिव अज्जीवाणं तु पडिमाणं॥ १॥ जीवस्साजीवस्स य जइणो बिंबस्स चेगओ समयं। जीवस्साजीवाण य जइणो पडिमाण चेगत्थं॥ २॥ जीवाणमजीवस्स य जईण बिंबस्स चेगओ समयं। जीवाणमजीवाण य जईण पडिमाण चेगत्थं॥ ३॥" सङ्ग्रहमतं तु नमःसामान्यमात्रं तत्स्वामिमात्रस्य च वस्तुनो जीवो नम इति च तुल्याधिकरणम्, अभेदपरमार्थत्वात् तस्य, कश्चित्तु शुद्धतरः पूज्यजीवपूजकजीवसम्बन्धाज्जीवस्यैव नमस्कार इत्येकं भङ्गं प्रतिपद्यते, ऋजुसूत्रमतं तु नमस्कारस्य ज्ञानक्रियाशब्दरूपत्वात् तेषां च कर्तुरनर्थान्तरत्वात् कर्तृस्वामिक एव, शब्दादिमतमपीदमेव, केवलमुपयुक्तकर्तृस्वामिकोऽसौ, तस्य ज्ञानमात्रत्वात् ज्ञानमात्रता चास्योपयोगादेव फलप्राप्तेः, शब्दक्रियाव्यभिचारात्, एकत्वानेकत्वविचारस्तु नैगमादिनयापेक्षया पूर्ववदायोजनीय इति गाथार्थः॥ ८९२॥ कस्येति गतं, केन? इत्यधुना निरूप्यते—केन साधनेन साध्यते नमस्कारः?, तत्रेयं गाथा—

**नाणावरणिज्जस्स य दंसणमोहस्स तह खओवसमे। (दा०३) जीवमजीवे अट्ठसु भंगेसु उ होइ सव्वत्थ॥८९३॥**

१ जीवस्य स जिनस्येव अजीवस्य तु जिनेन्द्रप्रतिमायाः। जीवानां यतीनामपि अजीवानां तु प्रतिमानाम्॥ १॥ जीवस्याजीवस्य च यतेर्बिम्बस्य चैकत्र समकम्। जीवस्याजीवानां च यतेः प्रतिमानां चैकत्र॥ २॥ जीवानामजीवस्य च यतीनां बिम्बस्य चैकत्र समकम्। जीवानामजीवानां च यतीनां प्रतिमानां चैकत्र॥ ३॥

व्याख्या—'ज्ञानावरणीयस्य' इति सामान्यशब्देऽपि मतिश्रुतज्ञानावरणीयं गृह्यते, मतिश्रुतज्ञानान्तर्गतत्वात् तस्य, तथा सम्यग्दर्शनसाहचर्याज्ज्ञानस्य दर्शनमोहनीयस्य च क्षयोपशमेन साध्यते, प्राकृतशैल्या तृतीयानिर्देशो द्रष्टव्यः, तस्य चावरणस्य द्विविधानि स्पर्धकानि भवन्ति—सर्वोपघातीनि देशोपघातीनि च, तत्र सर्वेषु सर्वघातिषूद्घातितेषु देशोपघातिनां च प्रतिसमयं विशुद्ध्यपेक्षं भागैरनन्तैः क्षयमुपगच्छद्भिर्विमुच्यमानः क्रमेण प्रथममक्षरं लभते, एवमेकैकवर्णप्राप्त्या समस्तनमस्कारमिति, क्षयोपशमस्वरूपं पूर्ववद्। गतं केनेति द्वारं, कस्मिन्नित्यधुना, तत्र कस्मिन्निति सप्तम्यधिकरणे, अधिकरणं चाधारः, स च चतुर्भेदः, तद्यथा—व्यापकः तैऔपश्लेषिकः सामीप्यको वैषयिकश्च, तत्र व्यापकः तिलेषु तैलम्, औपश्लेषिकः—कटे आस्ते, सामीप्यकः—गङ्गायां घोषः, वैषयिकः—रूपे चक्षुः, तत्राद्योऽभ्यन्तरः, शेषा बाह्याः, तत्र नैगमव्यवहारौ बाह्यमिच्छतः, तन्मतानुवादि च साक्षादिदं गाथाशकलं—'जीवमजीवेत्यादि' जीवमजीव इति प्राकृतशैल्याऽनुस्वारस्याभूतस्यैवागमः, तत्त्वतस्तु जीवे अजीवे इत्याद्यष्टसु भङ्गेषु भवति सर्वत्रेति भावना, नमस्कारो हि जीवगुणत्वाज्जीवः, स च यदा गजेन्द्रादौ तदा जीवे, यदा कटादौ तदाऽजीवे, यदोभयाऽऽत्मके तदा जीवाजीवयोः, एवमेकवचनबहुवचनभेदादष्टौ भङ्गाः प्रागुक्ता एव योज्याः। आह—पूज्यस्य नमस्कार इति नैगमव्यवहारौ, स एव च किमित्याधारो न भवति? येन पृथगिष्यते, उच्यते, नावश्यं स्वेन स्वात्मन्येव भवितव्यम्, अन्यत्रापि भावात्, यथा देवदत्तस्य धान्यं क्षेत्र इति, तुशब्दाच्छेषनयाक्षेपः कृतः, संक्षेपतो दर्श्यते—तत्र सङ्ग्रहोऽभेदपरमार्थत्वात् कश्चिद्वस्तुमात्रे अभीच्छति, कश्चित्तद्धर्मत्वाज्जीव इति, ऋजुसूत्रस्तु जीवगुणत्वाज्जीव एव मन्यते, आह—ऋजुसूत्रोऽन्याधारमपीच्छत्येव, 'आकाशे वसती'ति वचनाद्, उच्यते, द्रव्यविवक्षायामेवं न गुणविवक्षायामिति, शब्दादयस्तूपयुक्ते ज्ञानरूपे जीव एवेच्छन्ति नान्यत्र, न वा शब्दक्रियारूपमिति गाथार्थः॥ ८९३॥ कस्मिन्निति द्वारमुक्तं, साम्प्रतं कियच्चिरमसौ भवतीति निरूप्यते, तत्रेयं गाथा—

**उवओग पडुच्चंतोमुहुत्त लद्धीइ होइ उ जहन्नो। उक्कोसट्ठिइ छावट्ठि सागरा (दा०५) ऽरिहाइ पंचविहो॥८९४॥**

व्याख्या—उपयोगं प्रतीत्य अन्तर्मुहूर्तं स्थितिरिति सम्बध्यते जघन्यतः उत्कृष्टतश्च, 'लद्धीए होइ उ जहन्नो' लब्धेश्च क्षयोपशमस्य च भवति तु जघन्या स्थितिरन्तर्मुहूर्त एव, उत्कृष्टस्थितिर्लब्धेः षट्षष्टिसागरोपमाणि, सम्यक्त्वकाल इत्यर्थः, एकं जीवं प्रतीत्यैषा, नानाजीवान् पुनरधिकृत्योपयोगापेक्षया जघन्येनोत्कृष्टतश्च स एव, लब्धितश्च सर्वकालमिति॥ द्वारम्॥ कतिविधो वा? इत्यस्य प्रश्नस्य निर्वचनार्थो गाथावयवः—'अरिहाइ पंचविहो'त्ति अर्हत्सिद्धाचार्योपाध्यायसाधुपदादिसन्निपातात् पञ्चविधार्थसम्बन्धात् अर्हदादिपञ्चविध इत्यनेन चार्थान्तरेण वस्तुस्थित्या नमःपदस्याभिसम्बन्धमाहेति गाथार्थः॥ ८९४॥ द्वारम्॥ गता षट्पदप्ररूपणेति, साम्प्रतं नवपदाया अवसरः, तत्रेयं गाथा—

**संतपयपरूवणया १ दव्वपमाणं च २ खित्त ३ फुसणा य ४। कालो अ ५ अंतरं ६ भाग ७ भाव ८ अप्पाबहुं चेव ९**

व्याख्या—सत् इति सद्भूतं विद्यमानार्थमित्यर्थः, सच्च तत्पदं च सत्पदं तस्य प्ररूपणा सत्पदप्ररूपणा, कार्येति वाक्यशेषः, यतश्च नमस्कारो जीवद्रव्यादभिन्न इत्यतो द्रव्यप्रमाणं च वक्तव्यं, कियन्ति नमस्कारवन्ति जीवद्रव्याणि?, तथा 'क्षेत्रम्' इति कियति क्षेत्रे नमस्कारः?, एवं स्पर्शना च कालश्च अन्तरं च वक्तव्यं, तथा भाग इति नमस्कारवन्तः शेष-

जीवानां कतिथे भागे वर्तन्त इति, 'भावे' त्ति कस्मिन् भावे ? 'अप्पाबहुं चेव' त्ति अल्पबहुत्वं च वक्तव्यं, आकृप्रतिप-
न्नप्रतिपद्यमानकापेक्षयेति समासार्थः ॥ ८९५ ॥ व्यासार्थस्तु प्रतिद्वारं वक्ष्यते, तत्राद्यद्वाराभिधित्सयाऽऽह—

**संतपयं पडिवन्ने पडिवज्जंते अ मग्गणं गइसुं १। इंदिअ २ काए ३ वेए ४ जोए अ ५ कसाय ६ लेसासु ७ ॥८९६॥**

**सम्मत्त ८ नाण ९ दंसण १० संजय ११ उवओगओ अ १२ आहारे १३।**

**भासग १४ परित्त १५ पज्जत्त १६ सुहुमे १७ सन्नी अ १८ भव १९ चरमे २० ॥ ८९७ ॥**

व्याख्या—इदं गाथाद्वयं पीठिकायां व्याख्यातत्वान्न विव्रियते। द्वारम्। अनुक्तद्वारत्रयावयवार्थप्रतिपादनायाह—

**पलिआसंखिज्जइमे पडिवन्नो हुज्ज ( दा०२ ) खित्तलोगस्स। सत्तसु चउदसभागेसु हुज्ज ( दा०३ ) फुसणावि एमेव**

व्याख्या—'पलियासंखेज्जइमे पडिवन्नो होज्ज' त्ति इयं भावना—सूक्ष्मक्षेत्रपल्योपमस्यासङ्ख्येयतमे भागे यावन्तः
प्रदेशा एतावन्तो नमस्कारप्रतिपन्ना इति॥ द्वारम्॥ 'खित्तलोगस्स सत्तसु चोद्दसभागेसु होज्ज' त्ति गतार्थं, नवरमधोलोके
पञ्चस्विति ॥ द्वारम्॥ 'फुसणावि एमेव' त्ति नवरं पर्यन्तवर्तिनोऽपि प्रदेशान् स्पृशतीति भेदेनाभिधानमिति गाथार्थः॥८९८
द्वारं ॥ कालद्वारावयवार्थव्याचिख्यासयाऽऽह—

**एगं पडुच्च हिट्ठा तहेव नाणाजिआण सव्वद्धा ( द्वारं ५ )। अंतर पडुच्च एगं जहन्नमंतोमुहुत्तं तु ॥ ८९९ ॥**

व्याख्या—एकं जीवं प्रतीत्याधस्तात् षट्पदप्ररूपणायां यथा काल उक्तस्तथैव ज्ञातव्यः, नानाजीवानप्यधिकृत्य तथैव,
यत आह—'तहेव नाणाजीवाण सवद्धा भाणियव्वा' काक्का नीयते॥ द्वारम्॥ 'अंतर पडुच्च एगं जहन्नमन्तोमुहुत्तं तु' कण्ठ्यं,
नवरं प्रतीत्यशब्दस्य व्यवहितो योगः, एकं प्रतीत्यैवमिति गाथार्थः ॥ ८९९ ॥

**उक्कोसेणं चेयं अद्धापरिअट्टओ उ देसूणो। णाणाजीवे णत्थि उ (द्वारं६) भावे य भवे खओवसमे (द्वारं८) ॥९००॥**

व्याख्या—उक्कोसेणं चेयं, तमेव दर्शयति—'अद्धापरियट्टओ उ देसूणो णाणाजीवे णत्थि उ' नानाजीवान् प्रतीत्य
नास्त्यन्तरं, सदाऽव्यवच्छिन्नत्वात् तस्य॥ द्वारं॥ 'भावे य भवे खओवसमे' त्ति, प्राचुर्यमङ्गीकृत्यैतदुक्तम् , अन्यथा क्षायि-
कौपशमिकयोरप्येके वदन्ति, क्षायिके यथा—श्रेणिकादीनाम् , औपशमिके श्रेण्यन्तर्गतानामिति, यथासङ्ख्यं च भागद्वारा-
वयवार्थानभिधानमदोषायैव, विचित्रत्वात् सूत्रगतेरिति गाथार्थः ॥ ८९० ॥ द्वारं ॥ भागद्वारं व्याचिख्यासुराह—

**जीवाणऽणंतभागो पडिवण्णो सेसगा अणंतगुणा (द्वारं७)। वत्थुं तऽरिहंताइ पञ्च भवे तेसिमो हेऊ ॥९०१॥**

व्याख्या—जीवाणणन्तभागो पडिवण्णे सेसगा अपडिवन्नगा अणंतगुणत्ति ॥ द्वारम् ॥ अल्पबहुत्वद्वारं यथा पीठिकायां
मतिज्ञानाधिकार इति। साम्प्रतं चशब्दाक्षिप्तं पञ्चविधप्ररूपणामनभिधाय पश्चार्धेन वस्तुद्वारनिरूपणायेदमाह—'वत्थु'
इति वस्तु द्रव्यं दलिकं योग्यमर्हमित्यनर्थान्तरं, वस्तु नमस्कारार्हा अर्हदादयः पञ्चैव भवन्ति, तेषां वस्तुत्वेन नमस्कारा-
र्हत्वेऽयं हेतुः—वक्ष्यमाणलक्षण इति गाथार्थः ॥ ९०१ ॥ अधुना चशब्दसूचितां पञ्चविधां प्ररूपणां प्रतिपादयन्नाह—

**आरोवणा य भयणा पुच्छा तह दायणा य निज्जवणा। नमुक्कारऽनमुक्कारे नोआइजुएँ व नवहा वा ॥९०२॥**

व्याख्या—आरोपणा च भजना पृच्छा तथा 'दायना' दर्शना दापना वा, निर्यापना, तत्र किं जीव एव नमस्कार ?
आहोस्विन्नमस्कार एव जीवः ? इत्येवं परस्परावधारणम् आरोपणा, तथा जीव एव नमस्कार इत्युत्तरपदावधारणम् १,
अजीवाद्व्यवच्छिद्य जीव एव नमस्कारोऽवधार्यते, जीवस्त्वनवधारितः, नमस्कारो वा स्यादनमस्कारो वा, एषा एकपद-
व्यभिचाराद्भजना २, किंविशिष्टो जीवो नमस्कारः ? किंविशिष्टस्त्वनमस्कार इति पृच्छा ३, अत्र प्रतिव्याकरणं दापना
—नमस्कारपरिणतः जीवो नमस्कारो नापरिणत इति ४, निर्यापना त्वेष एव नमस्कारपर्यायपरिणतो जीवो नमस्कारः,
नमस्कारोऽपि जीवपरिणाम एव नाजीवपरिणाम इति, एतदुक्तं भवति—दापना प्रश्नार्थव्याख्यानं निर्यापना तु तस्यैव
निगमनमिति, अथवेयमन्या चतुर्विधा प्ररूपणेति, यत आह—'नमोकारऽनमोकारे णोआदिजुए व णवधा वा' तत्र प्रकृ-
त्यकारनोकारोभयनिषेधसमाश्रयाच्चातुर्विध्यं, प्रकृतिः—स्वभावः शुद्धता यथा नमस्कार इति, स एव नञा सम्बन्धादका-
रयुक्तः अनमस्कारः, स एव नोशब्दोपपदे नोनमस्कारः, उभयनिषेधात्तु नोअनमस्कार इति, तत्र नमस्कारस्तत्परिणतो
जीवः, अनमस्कारस्त्वपरिणतो लब्धिशून्यः अन्यो वा, 'नोआइजुए व'त्ति नोआदियुक्तो वा नमस्कारः अनमस्कारश्च,
अनेन भङ्गकद्वयाक्षेपो वेदितव्यः, नोशब्देनाऽऽदिर्युक्तो यस्य नमस्कारस्येतरस्य चेत्यक्षरगमनिका, तत्र नोनमस्कारो विव-
क्षया नमस्कारदेशः अनमस्कारो वा, देशसर्वनिषेधपरत्वान्नोशब्दस्य, नोअनमस्कारोऽपि अनमस्कारदेशो वा नमस्कारो
वा, देशसर्वनिषेधत्वादेव, एषा चतुर्विधा, नैगमादिनयाभ्युपगमस्त्वस्याः पूर्वोक्तानुसारेण प्रदर्शनीयः, 'नवधा वे' ति
प्रागुक्ता पञ्चविधा इयं चतुर्विधा च सङ्कलिता सती नवविधा प्ररूपणा प्रकारान्तरतो द्रष्टव्येति गाथार्थः ॥ ९०२ ॥
प्ररूपणाद्वारं गतम्, इदानीं निःशेषमिति, साम्प्रतं 'वत्थुं तऽरहंताई पंच भवे तेसिमो हेउ' त्ति गाथाशकलोपन्यस्तमवस्-

रायातं च वस्तुद्वारं विस्तरतो व्याख्यायत इति, तत्रानन्तरोक्तं गाथाशकलं व्याख्यातमेव, नवरं तत्र यदुक्तं 'तेषां वस्तुत्वेऽयं हेतु' रिति, स खल्विदानीं हेतुरुच्यते, तत्रेयं गाथा—

**मग्गे १ अविप्पणासो २ आयारे ३ विणयया ४ सहायत्तं ५। पंचविहनमुक्कारं करेमि एएहिं हेऊहिं॥९०३॥**

व्याख्या—मार्गः अविप्रणाशः आचारः विनयता सहायत्वम् अर्हदादीनां नमस्कारार्हत्वे एते हेतवः, यदाह—पञ्चविधनमस्कारं करोमि एभिर्हेतुभिरिति गाथासमासार्थः॥ इयमत्र भावना—अर्हतां नमस्कारार्हत्वे मार्गः—सम्यग्दर्शनादिलक्षणो हेतुः, यस्मादसौ तैः प्रदर्शितस्तस्माच्च मुक्तिः, ततश्च पारम्पर्येण मुक्तिहेतुत्वात् पूज्यास्त इति। सिद्धानां तु नमस्कारार्हत्वेऽविप्रणाशः, शाश्वतत्वं हेतुः, तथाहि—तदविप्रणाशमवगम्य प्राणिनः संसारवैमुख्येन मोक्षाय घटन्ते। आचार्याणां तु नमस्कारार्हत्वे आचार एव हेतुः, तथाहि—तानाचारवत आचाराख्यापकांश्च प्राप्य प्राणिन आचारपरिज्ञानानुष्ठानाय भवन्ति। उपाध्यायानां तु नमस्कारार्हत्वे विनयो हेतुः, यतस्तान् स्वयं विनीतान् प्राप्य कर्मविनयनसमर्थविनयवन्तो (प्र)भवन्ति देहिन इति। साधूनां तु नमस्कारार्हत्वे सहायत्वं हेतुः, यतस्ते सिद्धिवधूसङ्गमैकनिष्ठानां तदवाप्तिक्रियासाहाय्यमनुतिष्ठन्तीति गाथार्थः॥ ९०३॥ एवं तावत्समासेनार्हदादीनां नमस्कारार्हत्वद्वारेण मार्गप्रणयनादयो गुणा उक्ताः साम्प्रतं प्रपञ्चेनार्हतां गुणानुपदर्शयन्नाह—

**अडवीइ देसिअत्तं १ तहेव निज्जामया समुद्दंमि २। छक्कायरक्खणट्ठा महगोवा तेण वुच्चंति ३॥ ९०४॥**

व्याख्या—अटव्यां देशकत्वं कृतमर्हद्भिः, तथैव निर्यामकाः समुद्रे, भगवन्त एव षट्कायरक्षणार्थं यतः प्रयत्नं चक्रुः महागोपास्तेनोच्यन्त इति गाथासमासार्थः॥ ९०४॥ अवयवार्थं तु प्रतिद्वारं वक्ष्यति, तत्र द्वारावयवार्थोऽभिधीयते—

**अडविं सपच्चवायं वोलित्ता देसिओवएसेणं। पावंति जहिट्ठपुरं भवाडविंपी तहा जीवा॥ ९०५॥**

**पावंति निव्वुइपुरं जिणोवइट्ठेण चेव मग्गेणं। अडवीइ देसिअत्तं एवं नेअं जिणिंदाणं॥ ९०६॥**

व्याख्या—'अटवीं' प्रतीतां 'सप्रत्यपायाम्' इति व्याघ्रादिप्रत्यपायबहुलां 'वोलेत्त' त्ति उल्लङ्घ्य 'देशिकोपदेशेन' निपुणमार्गज्ञोपदेशेन प्राप्नुवन्ति 'यथा 'इष्टपुरम्' इष्टपत्तनं, भवाटवीमप्युल्लङ्घ्येति वर्तते, तथा जीवाः किं प्राप्नुवन्ति?—'निर्वृतिपुरं' सिद्धिपुरं जिनोपदिष्टेनैव मार्गेण, नान्योपदिष्टेन, ततश्चाटव्या देशिकत्वमेवं 'ज्ञेयं' ज्ञातव्यं, केषां?—जिनेन्द्राणामिति गाथाद्वयसमासार्थः॥ ९५-९६॥ व्यासार्थस्तु कथानकादवसेयः, तच्चेदम्—[1]एत्थं अडवी दुविहा—दव्वाडवी भावाडवी य, तत्थ दव्वाडवीए ताव उदाहरणं—वसंतपुरं णयरं, धणो सत्थवाहो, सो पुरंतरं गंतुकामो घोसणं कारेइ जहा णंदिफलणाए, तओ तत्थ बहवे तडिगकप्पडिगादयो संपिंडिया, सो तेसिं मिलियाणं पंथगुणे कहेइ—एगो पंथो उज्जुओ एगो वंको, जो सो वंको तेण मणागं सुहंसुहेण गम्मइ, बहुणा य कालेण इच्छियपुरं पाविज्जइ, अवसाणे सोवि उज्जुगं चेव ओयरइ, जो

---

1 अत्राटवी द्विविधा—द्रव्याटवी भावाटवी च, तत्र द्रव्याटव्या तावदुदाहरणम्—वसन्तपुरं नगरं, धनः सार्थवाहः, स पुरान्तरं गन्तुकामो घोषणां कारयति—यथा नन्दीफलज्ञाते, ततस्तत्र बहवस्तटिककार्पटिकादयः संपिण्डिताः, स तेभ्यो मिलितेभ्यः पथिगुणान् कथयति—एकः पन्थाः ऋजुरेको वक्रः, यः स वक्रस्तेन मनाक् सुखसुखेन गम्यते, बहुना च कालेन ईप्सितपुरं प्राप्यते, अवसाने सोऽपि ऋजुमेवावतरति, यः

---

[1]पुण उज्जुगो तेण लहुं गम्मइ, किच्छेण य, कहं?, सो अईव विसमो सण्हो य, तत्थ ओतारे चेव दुवे महाघोरा वग्घसिंहा परिवसंति, ते तओ पाए च्चेव लग्गंति, अमुयंताण य पहं न पहवंति, अवसाणं च जाव अणुवट्टंति, रुक्खा य एत्थ एगे मणोहरा, तेसिं पुण छायासु न वीसमियव्वं, मारणप्पिया खु सा छाया, परिसडियपंडुपत्ताणं पुण अहो मुहुत्तगं वीसमियव्वं, मणोहररूवधारिणो महुरवयणेणं एत्थ मग्गंतरट्ठिया बहवे पुरिसा हक्कारेंति, तेसिं वयणं न सोयव्वं, सत्थिगा खणंपि ण मोत्तव्वा, एगागिणो नियमा भयं, दुरंतो य घोरो दवग्गी अप्पमत्तेहिं उल्हवेयव्वो, अणोल्हविज्जंतो य नियमेण डहइ, पुणो य दुग्गुच्चपव्वओ उवउत्तेहिं चेव लंघेयव्वो, अलंघणे नियमा मरिज्जंति, पुणो महती अइगुविलगव्वरा वंसकुडंगी सिग्घं लंघियव्वा, तंमि ठियाणं बहू दोसा, तओ य लहुगो खड्डो, तस्स समीवे मणोरहो णाम बंभणो णिच्चं सण्णिहिओ अच्छइ, सो भणइ—मणागं पूरेहि एयंति, तस्स न सोयव्वं, सो ण पूरेयव्वो, सो खु पूरिज्जमाणो महल्लतरो

---

1 पुनः ऋजुकस्तेन लघु गम्यते, कृच्छ्रेण च, कथं?, सोऽतीव विषमः श्लक्ष्णश्च, तत्रावतार एव द्वौ महाघोरौ व्याघ्रसिंहौ परिवसतः, तौ ततः पादयोरेव लगतः, अमुञ्चतोश्च पन्थानं न प्रभवन्ति, अवसानं च यावदनुवर्त्तेते, वृक्षाश्चात्रैके मनोहराः, तेषां पुनश्छायासु न विश्रमितव्यं, मारणप्रियैव सा छाया, परिशटितपाण्डुपत्राणामधो मुहूर्त्तं विश्रमितव्यं, मनोहररूपधारिणश्च बहवो मधुरवचनेनात्र मार्गान्तरस्थिताः पुरुषा आकारयन्ति, तेषां वचनं न श्रोतव्यं, सार्थिकाः क्षणमपि न मोक्तव्याः, एकाकिनो नियमाद्भयं, दुरन्तो घोरश्च दवाग्निरप्रमत्तैर्विध्यापयितव्यः, अविध्यापितश्च नियमेन दहति, पुनश्च दुर्गोच्चपर्वत उपयुक्तैरेव लङ्घयितव्यः, अनुल्लङ्घने च नियमात् म्रियते, पुनर्महती अतिगुपिलगह्वरा वंशकुडङ्गी शीघ्रं लङ्घयितव्या, तस्यां स्थितानां बहवो दोषाः, ततश्च लघुगर्त्तः, तस्य समीपे मनोरथो नाम ब्राह्मणो नित्यं संनिहितस्तिष्ठति, स भणति—मनाक् पूरयैनमिति, तस्य न श्रोतव्यं, स न पूरयितव्यः स हि पूर्यमाणो महत्तरो

भवइ पंथाओ य भज्जिज्जइ, फलाणि य एत्थ दिव्वाणि पंचप्पयाराणि णेत्ताइसुहंकराणि किंपागाणं न पेक्खियव्वाणि ण भोत्तव्वाणि, बावीसं च णं एत्थ घोरा महाकराला पिसाया खणं खणमभिद्दवंति तेऽवि णं ण गणेयव्वा, भत्तपाणं च तत्थ विभागओ विरसं दुल्लभं चत्ति, अप्पयाणयं च ण कायव्वं, अणवरयं च गंतव्वं, रत्तीए वि दोण्णि जामा सुवियव्वं, सेसदुगे य गंतव्वमेव, एवं च गच्छंतेहिं देवाणुप्पिया ! खिप्पमेव अडवी लंघिज्जइ, लंघित्ता य तमेगंतदोगच्चवज्जियं पमत्थं सिवपुरं पाविज्जइ, तत्थ य पुणो ण होंति केइ किलेसत्ति । तओ तत्थ केइ तेण समं पयट्टा जे उज्जुगेण पधाविया, अण्णे पुण इयरेण, तओ सो पसत्थे दिवसे उच्चलिओ, पुरओ वच्चंतो मग्गं आहणइ, सिलाइसु य पंथस्स दोसगुणपिसुणगाणि अक्खराणि लिहइ, एत्तियं गयमेत्तियं सेसंति विभासा, एवं जे तस्स निद्देसे वट्टिया ते तेण समं अचिरेण तं पुरं पत्ता, जेऽवि लिहियाणुसारेण संमं गच्छंति तेऽवि पावंति, जे न वट्टिया न वा वट्टंति छायादिसु पडिसेविणो ते न पत्ता न

१ भवति पन्थानश्च भज्यन्ते, फलानि चात्र दिव्यानि पञ्चप्रकाराणि नेत्रादिसुखकराणि किम्पाकानां न प्रेक्षयितव्यानि न भोक्तव्यानि, द्वाविंशतिश्चात्र घोरा महाकराला पिशाचा क्षण क्षणमभिद्रवन्ति तेऽपि न गणयितव्या , भक्तपान च तत्र विभागतो विरस दुर्लभ चेति, अप्रयाण च न कर्त्तव्यम्, अनवरत च गन्तव्य, रात्रावपि द्वौ यामौ स्वप्तव्य शेषद्विके च गन्तव्यमेव, एव गच्छद्भिरेव देवानुप्रिया ! क्षिप्रमेवाटवी लङ्घ्यते, लङ्घयित्वा च तदेकान्तदौर्गत्यवर्जित प्रशस्त शिवपुरं प्राप्यते, तत्र च पुनर्न भवन्ति केचित्क्लेशा इति । ततस्तत्र केचित्तेन सम प्रवृत्ता ये ऋजुना प्रधाविता , अन्ये पुनरितरेण, तत स प्रशस्ते दिवसे उच्चलित , पुरतो व्रजन् मार्गं आहन्ति ( समीकरोति ), शिलादिषु च पथो गुणदोषपिशुनान्यक्षराणि लिखति, एतावद्गतमेतावच्छेषमिति विभाषा, एव ये तस्य निर्देशे वृत्तास्ते तेन सममचिरेण तत्पुर प्राप्ता , येऽपि लिखितानुसारेण सम्यग्गच्छन्ति तेऽपि प्राप्नुवन्ति, ये न वृत्ता न वा वर्त्तन्ते छायादिषु प्रतिसेविनस्ते न प्राप्ता न

यावि पावंति । एवं दव्वाडवीदेसिगणायं, इयाणिं भावाडवीदेसिगणाए जोइज्जइ—सत्थवाहत्थाणीया अरहंता, उग्घोसणाथाणीया धम्मकहा तडिगाइथाणीया जीवा, अडवीत्थाणीओ संसारो, उज्जुगो साहुमग्गो, वंको य सावगमग्गो, पप्पपुरत्थाणीओ मोक्खो, वग्घसिंघतुल्ला रागद्दोसा, मणोहररुक्खच्छायाथाणीया इत्थिगाइसंसत्तवसहीओ, परिसडियाइत्थाणीआओ अणवज्जवसहीओ, मग्गतडत्थहक्कारणपुरिसथाणगा पासत्थाई अकल्लाणमित्ता, सत्थिगाथाणीया साहू, दवग्गाइथाणिया कोहादओ कसाया, फलथाणीया विसया, पिसायथाणीया बावीसं परीसहा भत्तपाणाणि एसणिज्जाणि, अपयाणगथाणीओ निच्चुज्जमो, जामदुगे सज्झाओ, पुरपत्ताणं च णं मोक्खसुहंति । एत्थय तं पुरं गंतुकामो जणो उवएसदाणाइणा उवगारी सत्थवाहोत्ति नमंसति, एवं मोक्खत्थीहिवि भगवं पणमियव्वो ॥ तहा चाह—

अह तमिह सत्थवाहं नमइ जणो तं पुरं तु गंतुमणो । परमुवगारित्तणओ निव्विग्घत्थं च भत्तीए ॥ ९०७ ॥

अरिहो उ नमुक्कारस्स भावओ खीणरागमयमोहो । मुक्खत्थीणंपि जिणो तहेव जम्हा अओ अरिहा ॥९०८॥

१ चापि प्राप्नुवन्ति । एव द्रव्याटवीदेशिकज्ञातम्, इदानीं भावाटवीदेशिकज्ञाते योज्यते—सार्थवाहस्थानीया अर्हन्तः, उद्घोषणास्थानीया धर्मकथा तटिकादिस्थानीया जीवा., अटवीस्थानीय संसार , ऋजु साधुमार्गः, वक्रश्च श्रावकमार्ग , प्राप्यपुरस्थानीयो मोक्ष व्याघ्रसिंहतुल्यौ रागद्वेषौ, मनोहरवृक्षच्छायास्थानीया स्त्र्यादिससक्तवसतय., परिशटितादिस्थानीया अनवद्यवसतय , मार्गतटस्थाह्वायकपुरुषस्थानीया पार्श्वस्थादयोऽकल्याणमित्राणि, सार्थिकस्थानीया साधव', दवाग्न्यादिस्थानीया क्रोधादय कषाया , फलस्थानीया विषया , पिशाचस्थानीया द्वाविंशति परीषहा , भक्तपानान्येषणीयानि, अप्रयाणस्थानीयो नित्योद्यम , यामद्विके स्वाध्याय , पुरप्राप्तानां च मोक्षसुखमिति । अत्र च तत्पुरं गन्तुकामो जन उपदेशदानादिनोपकारी सार्थवाह इति नमस्यति, एव मोक्षार्थिभिरपि भगवान् प्रणन्तव्यः ।

गाथाद्वय निगदसिद्धं, नवरं मदशब्देन द्वेषोऽभिधीयते इति ॥

संसाराअडवीए मिच्छत्तऽन्नाणमोहिअपहाए । जेहिं कय देसिअत्तं ते अरिहंते पणिवयामि ॥ ९०९ ॥

व्याख्या—संसाराटव्यां, किंविशिष्टायां ?—'मिथ्यात्वाज्ञानमोहितपथायां' तत्र मिथ्यात्वाज्ञानाभ्यां मोहितः पन्था यस्यामिति विग्रहः, तस्यां, यैः कृतं देशिकत्वं तानर्हत. 'प्रणौमि' अभ्यर्थयामीति* गाथार्थ. ॥ ९०९ ॥ दृष्ट्वा ज्ञात्वा च सम्यक् पन्थानमासेव्य च कृतं नान्यथा, तथा चाऽऽह—

सम्मद्दंसणदिट्ठो नाणेण य सुट्ठु तेहिं उवलद्धो । चरणकरणेण पहओ निव्वाणपहो जिणिंदेहिं ॥ ९१० ॥

व्याख्या—'समग्दर्शनेन' अविपरीतदर्शनेन दृष्टः, ज्ञानेन च 'सुष्ठु' यथाऽवस्थितः तैरर्हद्भिर्ज्ञातः, चरणं च करणं चेत्येकवद्भावस्तेन 'प्रहतः' आसेवितः 'निर्वाणपथः' मोक्षमार्गो जिनेन्द्रैः । तत्र व्रतादि चरणं, पिण्डविशुद्ध्यादि च करण, यथोक्तम्—"वय समणधम्म संजम वेयावच्च च बंभगुत्तीओ । णाणादितियं तव कोह निग्गहाई चरणमेयं ॥ १ ॥ पिंडविसोही समिई भावण पडिमा य इंदियनिरोहो । पडिलेहणगुत्तीओ अभिग्गहा चेव करणं तु ॥ २ ॥" इति गाथार्थः ॥ ९१० ॥ न केवलं प्रहत एव, किन्तु ते खल्वनेन पथा निर्वृतिपुरमेव प्राप्ता इति, आह च—

सिद्धिवसहिमुवगया निव्वाणसुहं च ते अणुप्पत्ता । सासयमव्वाबाहं पत्ता अयरामरं ठाणं ॥ ९११ ॥

व्याख्या—'सिद्धिवसतिं' मोक्षालयम् 'उपगताः' सामीप्येन—कर्मविगमलक्षणेन प्राप्ता इति, अनेनैकेन्द्रियव्यवच्छेद-

* अभ्यर्थयामि प्र०

माह, केषाञ्चित् सुखदुःखरहिता एव ते तत्र तिष्ठन्तीति दर्शनम्, अत आह—'निर्वाणसुखं च तेऽनुप्राप्ता' निरतिशयसुखं प्राप्ता इत्यर्थः, ते च केषाञ्चिद्दर्शनपरिभवादिनेहाऽऽगच्छन्तीति दर्शनं, तन्निवृत्त्यर्थमाह—'शाश्वतं' नित्यम् 'अव्याबाधं' व्याबाधारहितं प्राप्ताः 'अजरामरं स्थानं' जरामरणरहितं स्थानमिति गाथार्थः ॥ ९११ ॥ द्वारं १ ॥ साम्प्रतं द्वितीयद्वारव्याचिख्यासयाऽऽह—

**पावेंति जहा पारं सम्मं निज्जामया समुद्दस्स । भवजलहिस्स जिणिंदा तहेव जम्हा अओ अरिहा ॥ ९१२ ॥**

व्याख्या—'प्रापयन्ति' नयन्ति 'यथा' येन प्रकारेण 'पारं' पर्यन्तं 'सम्यक्' शोभनेन विधिना 'निर्यामकाः' प्रतीताः, कस्य ?–समुद्रस्य, 'भवजलधेः' भवसमुद्रस्य जिनेन्द्रास्तथैव, पारं प्रापयन्तीति वर्तते, यस्मादेवमतस्तेऽर्हाः, नमस्कारस्येति गम्यते, अयं संक्षेपार्थः ॥ ९१२ ॥ [1]भावत्थो पुण एत्थ निज्जामया दुविहा, तंजहा—दव्वनिज्जामया भावनिज्जामया य, दव्वनिज्जामए उदाहरणं तहेव घोसणगं विभासा । एत्थ अट्ठवाया वण्णेयव्वा, तंजहा—पाईणं वाए पडीणं वाए ओईणं वाए दाहिणं वाए, जो उत्तरपुरत्थिमेण सो सत्तासुओ, दाहिणपुव्वेणं तुंगारो, अवरदाहिणेणं *वीआओ, अवरुत्तरेण गज्जभो, एवेते अट्ठ वाया, अन्नेवि दिसासुं अट्ठ चेव, तत्थ उत्तरपुव्वेणं दोन्नि, तंजहा—उत्तरसत्तासुओ पुरत्थिमसत्तासुओ य [1]एवं दाहिणपुव्वेण दोन्नि पुरत्थिमतुंगारो दाहिणतुंगारो य, दाहिणवीयावो अवरवीयावो य, अवरगज्जभो उत्तरगज्जभो य, एए सोलस वाया । तत्थ जहा जलहिंमि कालियावायरहिए गज्जहाणुकूलवाए निउणनिज्जामगसहिया निच्छिड्डपोता जहिट्ठियं पट्टणं पावेंति, एवं च—

**मिच्छत्तकालियावायविरहिए सम्मत्तगज्जभपवाए । एगसमएण पत्ता सिद्धिवसहिपट्टणं पोया ॥ ९१३ ॥**

व्याख्या—मिथ्यात्वमेव कालिकावातः तेन विरहिते भवाम्भोधौ तथा सम्यक्त्वगर्जभप्रवाते, कालिकावातो ह्यसाध्यः गर्जभस्त्वनुकूलः, एकसमयेन प्राप्ताः सिद्धिवसतिपत्तनं 'पोताः' जीवबोहित्थाः, तन्निर्यामकोपकारादिति भावना ॥ ततश्च यथा सायात्रिकसार्थः प्रसिद्ध निर्यामकं चिरगतमपि यात्रासिद्ध्यर्थं पूजयति, एवं ग्रन्थकारोऽपि सिद्धिपत्तनं प्रति प्रस्थितोऽभीष्टयात्रासिद्धये निर्यामकरत्नेभ्यस्तीर्थकृद्भ्यः स्तवचिकीर्षयेदमाह—

**निज्जामगरयणाणं अमूढनाणमइकण्णधाराणं । वंदामि विणयपणओ तिविहेण तिदंडविरयाणं ॥ ९१४ ॥**

व्याख्या—'निर्यामकरत्नेभ्यः' अर्हद्भ्यः 'अमूढज्ञाना' यथावस्थितज्ञाना मननं मतिः—संविदेव सैव कर्णधारो येषां ते तथाविधास्तेभ्यो वन्दामि विनयप्रणतस्त्रिविधेन त्रिदण्डविरतेभ्य इति गाथार्थ ॥ ९१४ ॥ द्वारं २ ॥ साम्प्रतं तृतीयद्वारव्याचिख्यासयाऽऽह—

**पालंति जहा गावो गोवा अहिसावयाइदुग्गेहिं । पउरतणपाणिआणि अ वणाणि पावेंति तह चेव ॥ ९१५ ॥**

**जीवनिकाया गावो जं ते पालंति ते महागोवा । मरणाइभया उ जिणा निव्वाणवणं च पावेंति ॥ ९१६ ॥**

**तो उवगारित्तणओ नमोऽरिहा भविअजीवलोगस्स । सव्वस्सेह जिणिंदा लोगुत्तमभावओ तह य ॥९१७॥**

व्याख्या—गाथात्रयं निगदसिद्धमेव ॥ द्वारम् ३ ॥ एवं तावदुक्तेन प्रकारेण नमोऽर्हत्वहेतवे गुणाः प्रतिपादिताः, साम्प्रतं प्रकारान्तरेण नमोऽर्हत्वहेतुगुण ।भिधित्सयाऽऽह—

**रागद्दोसकसाए, इंदिआणि अ पंचवि । परीसहे उवसग्गे, नामयंता नमोऽरिहा ॥ ९१८ ॥**

व्याख्या—रागद्वेषकषायेन्द्रियाणि च पञ्चापि परीषहानुपसर्गान्नामयन्तो नमोऽर्हा इति । तत्र 'रञ्ज रागे' रज्यते अनेन अस्मिन् वा रञ्जनं वा रागः, स च नामादिश्चतुर्विधः, तत्र नामस्थापने सुगमे, द्रव्यरागो द्वेधा— आगमतो नोआगमतश्च, आगमतो रागपदार्थज्ञस्तत्रानुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदस्त्रिविधः, व्यतिरिक्तोऽपि कर्मद्रव्यरागो नोकर्मद्रव्यरागश्च, कर्मद्रव्यरागश्चतुर्विधः—रागवेदनीयपुद्गला योग्याः १ बध्यमानका २ बद्धाः ३ उदीरणावलिकाप्राप्ताश्च ४, बन्धपरिणामाभिमुखा योग्याः, बन्धपरिणामप्राप्ता बध्यमानकाः, निर्वृत्तबन्धपरिणामाः सत्कर्मतया स्थिता जीवेनाऽऽत्मसात्कृता बद्धाः, उदीरणाकरणेनाऽऽकृष्योदीरणावलिकामानीताश्चरमा इति, नोकर्मद्रव्यरागस्तु कर्मरागैकदेशस्तदन्यो वा, तदन्यो द्विविधः—प्रायोगिको वैश्रसिकश्च, प्रायोगिको कुसुम्भरागादिः, वैश्रसिकः सन्ध्याभ्ररागादिः, भावरागोऽप्यागमेतरभेदाद् द्विधैव. आगमतो रागपदार्थज्ञ उपयुक्तः, नोआगमतो रागवेदनीयकर्मोदयप्रभवः परिणामविशेष , स च द्वेधा—प्रशस्तोऽप्रशस्तश्च, अप्रशस्तस्त्रिविधः—दृष्टिरागो विषयरागः स्नेहरागश्च, तत्र त्रयाणां त्रिषष्ट्यधिकाना

---

[1] भावार्थ पुनरत्र निर्यामका द्विविधा , तद्यथा—द्रव्यनिर्यामका भावनिर्यामकाश्च, द्रव्यनिर्यामके उदाहरणं तथैव घोषण विभाषा । अत्राष्टौ वाता वर्णयितव्या , तद्यथा—प्राचीनवात प्रतीचीनवात उदीचीनवातो दाक्षिणात्यवात', य उत्तरपौरस्त्यः स सत्वासुकः दक्षिणपूर्वस्यां तुङ्गार , अपरदक्षिणस्यां बीजापः अपरोत्तरस्यां गर्जभ , एवमेतेऽष्टवाता., अन्येऽपि दिक्ष्वष्टैव, तत्रोत्तरपूर्वस्यां द्वौ, तद्यथा—उत्तरसत्वासुक पूर्वसत्वासुकश्च, * विभावो. विज्जाओ

[1] उत्तरस्यामपि द्वावेव—पूर्वतुङ्गारो दक्षिणतुङ्गारश्च, दक्षिणबीजापोऽपरबीजापश्च, अपरगर्जभ उत्तरगर्जभश्च, एते षोडश वाता. । तत्र यथा जलधौ कालिकावातरहिते गर्जभानुकूलवाते निपुणनिर्यामकसहिता निश्छिद्रपोता यथेप्सित पत्तन प्राप्नुवन्ति ।

प्रावादुकशतानामात्मीयात्मीयदर्शनानुरागो दृष्टिरागः, यथोक्तम्–"असियसयं किरियाणं अकिरियवाईणमाहु चुलसीई। अन्नाणिय सत्तट्ठी वेणइयाणं च वत्तीसा ॥ १ ॥ जिणवयणबाहिरमई मूढा णियदंसणाणुराएण। सव्वण्णुकहियमेते मोक्खपहं न उ पवज्जंति ॥ २ ॥" विषयरागस्तु शब्दादिविषयगोचरः, स्नेहरागस्तु विषयादिनिमित्तविकलोऽविनीतेष्वप्यपत्यादिषु यो भवति, तत्रेह रागे उदाहरणम्–खितिपतिट्ठियं णयरं, तत्थ दो भाउगा–अरहन्नओ अरहमित्तो य, महंतस्स भारिया खुड्डुलए रत्ता, सो नेच्छइ, वहुसो उवसग्गेइ, भणिया य अणेण–किं न पेच्छसि भाउगंति ?, भत्तारो मारिओ, सा पच्छा भणइ–इयाणिं पि न इच्छसि ?, सो तेण निव्वेएण पव्वइओ, साहू जाओ, सावि अट्टवसट्टा मया सुणिया जाया, साहुणो य तं गामं गया, सुणियाए दिट्ठो, लग्गा मग्गं मग्गिं, उवसग्गोत्ति नट्ठो रत्तीए। तत्थवि मया मक्कडी जाया अडवीए, तेऽवि कम्मधम्मसंजोगेण तीसे अडवीए मज्झेणं वच्चंति, तीए दिट्ठो, लग्गा कंठे, तत्थवि किलेसेण पलाओ, तत्थवि मया जक्खिणी जाया, ओहिणा पेच्छइ, छिद्दाणि मग्गइ, सोऽवि अप्पमत्तो, सा छिद्दं न लहइ, सा य सव्वादरेणं तस्स छिद्दं मग्गेइ,

१ अशीत शत क्रियावादिनामक्रियावादिनामाहुश्चतुरशीतिम्। अज्ञानिकानां सप्तषष्टिं वैनयिकानां च द्वात्रिंशत ॥१॥ जिनवचनबाह्यमतयो मूढा निजदर्शनानुरागेण। सर्वज्ञकथितमेते मोक्षपथं नैव प्रपद्यन्ते ॥ २ ॥ २ क्षितिप्रतिष्ठित नगरं, तत्र द्वौ भ्रातरौ–अरहन्नकोऽर्हन्मित्रश्च, महतो भार्या क्षुल्लके रक्ता, स नेच्छति, बहुशः उपसर्गयति, भणिता चानेन–किं न पश्यसि भ्रातरमिति?, भर्त्ता मारितः, सा पश्चाद्भणति–इदानीमपि नेच्छसि ?, स तेन निर्वेदेन प्रव्रजित, साधुर्जात, साऽपि आर्त्तवशार्त्ता मृता शुनी जाता, साधवश्च त ग्राम गता, शुन्या दृष्ट, लग्ना पृष्ठत पृष्ठत, उपसर्ग इति नष्टो रात्रौ। तत्रापि मृता मर्कटी जाता अटव्यां, तेऽपि कर्मधर्मसंयोगेन तस्या अटव्या मध्येन व्रजन्ति, तया दृष्ट', लग्ना कण्ठे, तत्रापि क्लेशेन पलायित तत्रापि मृता यक्षिणी जाताऽवधिना प्रेक्षते, छिद्राणि मार्गयति, सोऽप्यप्रमत्त, सा छिद्र न लभते, सा च सर्वादरेण तस्य छिद्र मार्गयति, * तदैवाऽऽगत्य साक्षेप मुहुर्भर्तुरियाकरोत्

एवं च जाइ कालो, तेण किर जे समवया समणा ते तं भणंति–हसिऊण तरुणसमणा भणंति धन्नोऽसि अरहमित्त ! तुमं। जंसि पिओ सुणियाणं वयंस ! गिरिमक्कडीणं च ॥ १ ॥ अण्णया सो साहू वियरयं उत्तरइ, तत्थ य पायविक्खंभं पाणियं, तेण पादो पसारिओ गइभेएण, तत्थ य ताए छिद्दं लहिऊण ऊरुओ छिन्नो, मिच्छामि दुक्कडंति–पडिओ माहं आउक्काए पडिओ होज्जत्ति, सम्मद्दिट्ठियाए सा धाडिया, तहेव सप्पएसो लाइओ रूढो य देवयप्पहावेणं, अन्ने भणंति–सो भिक्खस्स गओ अन्नगामे, तत्थ ताए वाणमंतरीए तस्स रूवं छाएत्ता तस्स रूवेणं पंथे तलाए ण्हाइ, अन्नेहिं दिट्ठो, सिट्ठं गुरूणं, आवस्सए आलोएइ, गुरूहिं भणियं–सव्वं आलोएहि अज्जो !, सो उवउत्तो मुहणंतगमाइ, भणइ–न संभरामि खमासमणा !, तेहिं पडिभिण्णो भणइ–नत्थित्ति, आयरिया अणुवट्ठियस्स न दिंति पायच्छित्तं, सो चिंतेइ–किं कह वत्ति ? सा उवसंता साहइ–एयं मए कयं, सा साविया जाया, सव्वं परिकहेइ। एस तिविहो अप्पसत्थो, तस्स अप्पसत्थस्स इमा

१ एवं च याति काल तेन ( सह ) किल ये समवयस श्रमणास्ते त भणन्ति–हसित्वा तरुणश्रमणा भणन्ति धन्योऽसि अर्हन्मित्र ! त्वम्। यदसि प्रियः शुन्या वयस्य ! गिरिमर्कट्याश्च ॥ १ ॥ अन्यदा स साधुर्वितरकमुत्तरति, तत्र च पादविष्कम्भ पानीयं, तेन पाद प्रसारितो गतिभेदेन, तत्र च तया छिद्र लब्ध्वोरु छिन्न, मिथ्या मे दुष्कृतमिति पतितो माऽहमप्काये पतितो भूवमिति, सम्यग्दृष्ट्या सा धाटिता, तथैव सप्रदेशो लगितो रूढश्च देवताप्रभावेण अन्ये भणन्ति–स भिक्षायै गतोऽन्यग्रामे, तत्र तया व्यन्तर्या तस्य रूप छादयित्वा तस्य रूपेण पथि तडागे स्नाति, अन्यैर्दृष्टः, शिष्ट गुरुभ्य, आवश्यके आलोचयति, गुरुभिर्भणित–सर्वमालोचय आर्य !, स उपयुक्तो मुखानन्तकादि (केषु) भणति–न संस्मरामि क्षमाश्रमणा. !, तै प्रतिभिन्नो भणति–नास्तीति, आचार्या अनुपस्थिताय न ददते प्रायश्चित्त, स चिन्तयति–किं कथ वेति, सोपशान्ता कथयति–एतन्मया कृतं, सा श्राविका जाता, सर्व परिकथयति। एष त्रिविधः अप्रशस्त, तस्याप्रशस्तस्येमा * सम प्र० जाव पडिक्कमण देवसियं ताव आभोएति प्र०

णिरुत्तगाहा–'रज्जंति असुभकलिमलकुणिमाणिट्ठेसु पाणिणो जेणं। रागोत्ति तेण भण्णइ जं रज्जइ तत्थ रागत्थो ॥ १ ॥' एषोऽप्रशस्तः, प्रशस्तस्त्वर्हदादिविषयः, यथोक्तं–"अरहंतेसु य रागो रागो साहुसु बंभयारीसु। एस पसत्थो रागो अज्ज सरागाण साहूणं ॥ १ ॥" एवंविधं रागं नामयन्तः–अपनयन्तः, क्रियाकालनिष्ठाकालयोरभेदादपनीत एव गृह्यते, आह–'एस पसत्थो' इत्यादि कथं ?, सरागसंयतानां कूपखननोदाहरणात् प्राशस्त्यमित्यलं प्रसङ्गेन। इदानीं दोषो द्वेषो वा, 'दुष वैकृत्ये' दुष्यतेऽनेन अस्मिन्नस्माद्दूषणं वा दोषः, 'द्विष अप्रीतौ' वा द्विष्यतेऽनेनेत्यादिना द्वेषः, असावपि नामादिश्चतुर्विधो न्यक्षेण रागवदवसेयः, तथाऽपि दिग्मात्रतो निर्दिश्यते–नोआगमतो द्रव्यद्वेषः ज्ञशरीरेतरव्यतिरिक्तः कर्मद्रव्यद्वेषो नोकर्मद्रव्यद्वेषश्च, कर्मद्रव्यद्वेषः योग्यादिभेदाच्चतुर्विधा एव पुद्गलाः, नोकर्मद्रव्यदोषो दुष्टव्रणादिः, भावद्वेषस्तु द्वेषकर्मविपाकः, स च प्रशस्तेतरभेदः, प्रशस्तोऽज्ञानादिगोचरः, तथा ह्यज्ञानमविरतिमित्यादि द्वेष्टि, अप्रशस्तस्तु सम्यक्त्वादिगोचरः, तत्राप्रशस्ते उदाहरणं–णंदो नाम नाविओ गंगाए लोगं उत्तारेइ, तत्थ य धम्मरुई णाम अणगारो तीए नावाए उत्तिण्णो, जणो मोल्लं दाऊण गओ, साहू रुद्धो, फिडिया भिक्खावेला, तहावि न विसज्जेइ, वालुयाए उण्हाए तिसाइओ य अमुंचंतो रुट्ठो, सो य दिट्ठीविसलद्धिओ,

१ निरुक्तगाथा–'रज्यन्ति अशुभकलिमलकुणिमानिष्टेषु प्राणिनो येन। राग इति तेन भण्यते यद्रज्यति तत्र रागस्थ ॥१॥ २ अर्हत्सु च रागो राग साधुषु ब्रह्मचारिषु। एष प्रशस्तो रागोऽद्य सरागाणां साधूनाम् ॥ १ ॥ ३ नन्दो नाम नाविको गङ्गायां लोकानुत्तारयति, तत्र च धर्मरुचिर्नाम अनगारस्तया नावोत्तीर्णः, जनो मूल्य दत्वा गत, साधू रुद्ध, स्फिटिता भिक्षावेला, तथाऽपि न विसर्जयति, वालुकायामुष्णायां तृषार्दितश्चामुच्यमानो रुष्ट, स च दृष्टिविषलब्धिमान्,

तेण डड्ढो मओ एगाए सभाए घरकोइलओ जाओ, साहूवि विहरंतो तं गामं गओ, भत्तपाणं गहाय भोत्तुकामो सभं अइगओ, तेण दिट्ठो, सो पेक्खंतओ चेव तस्स आसुरत्तो, भोत्तुमारद्धस्स कयवरं पाडेइ, अन्नं पासं गओ, तत्थवि, एवं कहिंचि न लब्भइ, सो तं पलोएइ, को रे एस ? नाविगनंदमंगुलो ?, दड्ढो, समुद्दं जओ गंगा पविसइ तत्थ वरिसे २ अण्णण्णेणं मग्गेणं वहइ, चिराणगं जं तं मयगंगा भण्णइ, तत्थ हंसो जाओ, सोऽवि माहमासे सत्थेण पहाईए जाइ, तेण दिट्ठो, पाणियस्स पक्खे भरिऊण सिंचइ, तत्थवि उद्दविओ पच्छा सीहो जाओ अंजणगपव्वए, सोऽवि सत्थेण तं वीईवयइ, सीहो उट्ठिओ, सत्थो भिन्नो, सो इमं न मुयइ, तत्थवि दड्ढो, मओ य वाणारसीए बडुओ जाओ, तत्थवि भिक्खं हिंडंतं अन्नेहि डिंभरूवेहिं समं हणइ, छुभइ धूली, रुट्ठेण दड्ढो, तत्थेव राया जाओ, जाई संभरइ, सव्वाओ अइयजाईओ सरइ असुभाओ, जइ संपयं मारेइ तो बहुगाओ फीट्टो होमित्ति तस्स जाणणाणिमित्तं समस्सं समालंबेइ, जो एयं पूरइ तस्स रज्जस्स अद्धं देमि, तस्स इमो अत्थो—गंगाए नाविओ नंदो, सहाए घरकोइलो। हंसो मयंगतीराए, सीहो अंजणपव्वए ॥ १ ॥ वाणारसीए बडुओ, राया तत्थेव आगओ' एवं गोवगावि पढंति, सो विहरंतो तत्थ समोसढो, आरामे ठिओ, आरामिओ पढइ, तेण पुच्छिओ साहइ, तेण भणियं—अहं पूरेमि 'एएसिंघायओ जो उ सो इत्थेव समागओ' सो घेत्तूणं रण्णो अग्गओ पढइ, राया सुणंतओ मुच्छिओ, सो हम्मइ—सो भणइ हम्ममाणो कव्वं काउं अहं न याणामि। लोगस्स कलिकलंडो एसो समणेण मे दिन्नो ॥१॥ राया आसत्थो वारेइ, केणंति पुच्छति, साहइ—समणेणं, राया तत्थ मणुस्से विसज्जेइ, जइ अणुजाणह वंदओ एमि, आगओ सड्ढो जाओ, साहूवि आलोइयपडिक्कंतो सिद्धो ॥ एवंविधं द्वेषं नामयन्त इत्यादि रागवदायोज्यं, इह रागद्वेषौ क्रोधाद्यपेक्षया नयैः पर्यालोच्येते—नैगमस्य सङ्ग्रहव्यवहारान्तर्गतत्वात् सङ्ग्रहादिभिरेव विचारः, तत्र सङ्ग्रहस्याप्रीतिजातिसामान्यात् क्रोधमानौ द्वेषः, मायालोभौ तु प्रीतिजातिसामान्याद् रागः, व्यवहारस्य तु क्रोधमानमाया द्वेषः, मायाया अपि परोपघातार्थं प्रवृत्तिद्वारेणाप्रीतिजातावन्तर्भावात्, लोभस्तु रागः, ऋजुसूत्रस्य त्वप्रीतिरूपत्वात् क्रोध एव परगुणद्वेषः, मानादयस्तु भाज्याः, कथं ?, यदा मानः स्वाहङ्कारे प्रयुज्यते तदाऽऽत्मनि बहुमानप्रीतियोगाद् रागः, यदा तु स एव परगुणद्वेषे प्रयुज्यते तदाऽप्रीतिरूपत्वाद् द्वेषः, एवं मायालोभावप्यात्मनि मूर्च्छार्पणाद् रागः, तावेव परोपघातनिमित्तयोगादप्रीतिरूपत्वाद् द्वेषः, शब्दादीनां तु लोभ एव मानमाये स्वगुणोपकारमूर्च्छात्मकत्वात् प्रीत्यन्तर्गतत्वाल्लोभस्वरूपवदतस्त्रितयमपि रागः, स्वगुणोपकारांशरहितास्तु मानाद्यंशाः क्रोधश्च परोपघातात्मकत्वात् द्वेष इत्यलं प्रसङ्गेन, विशेषभावना विशेषावश्यकादवसेयेति ॥ द्वारम् ॥ अथ कषायद्वारं, शब्दार्थः प्राग्वत्, तेषामष्टधा निक्षेपः, नामस्थापनाद्रव्यसमुत्पत्तिप्रत्ययादेशरसभावलक्षणः, आह च—"णामं ठवणा दविए उप्पत्ती पच्चए य आएसे। रसभावकसायाणं णएहिं छहिं मग्गणा तेसिं ॥ १ ॥" तत्र नामस्थापने क्षुण्णे, द्रव्यकषायो व्यतिरिक्तः कर्मद्रव्यकषायो नोकर्मद्रव्यकषायश्च, कर्मद्रव्यकषायो योग्यादिभेदाः कषायपुद्गलाः, नोकर्मद्रव्यकषायस्तु सर्जकषायादिः, उत्पत्तिकषायो यस्माद् द्रव्याद्वोह्यात् कषायप्रभवस्तदेव कषायनिमित्तत्वाद् उत्पत्तिकषाय इति, उक्तं च—"किं[2] एत्तो कट्ठयरं जं मूढो खाणुगंमि अप्फिडिओ। खाणुस्स तस्स रूसइ ण अप्पणो दुप्पओगस्स ॥ १ ॥' प्रत्ययकषायः खल्वान्तरकारणविशेषः तत्पुद्गललक्षणः, आदेशकषायः कैतवकृतभ्रूकुटिभङ्गुराकारः, तस्य हि कषायमन्तरेणापि तथादेशदर्शनात्, रसकषायो हरीतक्यादीनां रसः, भावकषायो द्विविधः—आगमतस्तदुपयुक्तो नोआगमतस्तदुदय एव,

१ तेन दग्धो मृत एकस्यां सभायां गृहकोकिलो जात, साधुरपि विहरन् तं ग्रामं गतः, भक्तपानं गृहीत्वा भोक्तुकामः सभामतिगतः, तेन दृष्टः, स पश्यन्नेव तस्मै क्रुद्धः, भोक्तुमारब्धे कचवरं पातयति, अन्यं पार्श्वं गतः, तत्रापि, एवं कुत्रापि न लभते, स तं प्रलोकयति—को रे एषः नाविको नन्दोऽमङ्गलः ?, दग्धः, समुद्रं यतो गङ्गा प्रविशति तत्र वर्षे वर्षेऽन्यान्येन मार्गेण वहति, चिरन्तनो यः स मृतगङ्गेति भण्यते, तत्र हंसो जातः, सोऽपि माघमासे सार्थेन प्रभाते (पथातीतो) याति, तेन दृष्टः, पानीयेन पक्षौ भृत्वा सिञ्चति, तत्राप्यपद्रावितः पश्चात् सिंहो जातोऽञ्जनकपर्वते, सोऽपि सार्थेन तं व्यतिव्रजति, सिंह उत्थितः, सार्थो भिन्नः, स एनं न मुञ्चति, तत्रापि दग्धो मृतश्च वाराणस्यां बटुको जातः, तत्रापि भिक्षां हिण्डमानमन्यैर्डिम्भरूपैः समं हन्ति, क्षिपति धूलिं, रुष्टेन दग्धः, तत्रैव राजा जातः, जातिं स्मरति, सर्वा अतीतजातीरशुभाः स्मरति, यदि सम्प्रति मारयेयं तदा बहोः स्फिटितोऽभविष्यम् इति तस्य ज्ञाननिमित्तं समस्यां समालम्बयति, य एनां

१ पूरयति तस्मै राज्यस्यार्धं ददामि, तस्यैषोऽर्थः—गङ्गायां नाविको नन्दः सभायां गृहकोकिलः। हंसो मृतगङ्गातीरे सिंहोऽञ्जनपर्वते ॥ १ ॥ वाराणस्यां बटुको राजा तत्रैवागतः' एवं गोपा अपि पठन्ति, स विहरन् तत्र समवसृतः, आरामे स्थितः, आरामिकः पठति, तेन पृष्टः कथयति, तेन भणितम्—अहं पूरयामि, 'एतेषां घातको यस्तु सोऽत्रैव समागतः' स गृहीत्वा राज्ञोऽग्रतः पठति, राजा शृण्वन् मूर्छितः, स हन्यते, स भणति हन्यमानः काव्यं कर्तुमहं न जाने। लोकस्य कलिकारक एष श्रमणेन मह्यं दत्तः ॥१॥ राजा आश्वस्तो वारयति, केनेति पृच्छति, कथयति—श्रमणेन, राजा तत्र मनुष्यान् विसृजति—यदि अनुजानीत वन्दितुमायामि, आगतः श्राद्धो जातः, साधुरप्यालोचितप्रतिक्रान्तः सिद्धः।

१ नामस्थापनाद्रव्ये उत्पत्तौ प्रत्यय आदेशे च। रसभावकषायाणां नयैः षड्भिर्मार्गणा तेषाम् ॥ १ ॥ २ किमेतस्मात्कष्टतरं यन्मूढः स्थाणावास्फालितः। स्थाणवे तस्मै रुष्यति नात्मनो दुष्प्रयोगाय ॥ १ ॥

स च क्रोधादिभेदाच्चतुर्विधः, क्रोधोऽपि नामादिभेदाच्चतुर्विधः कषायप्ररूपणायां भावित एव, तथापि व्यतिरिक्तो द्रव्य-क्रोधः प्राकृतशब्दसामान्यापेक्षत्वात् चर्मकारकोत्थः रजकनीलिकोत्थश्च क्रोध इति गृह्यते, भावक्रोधस्तु क्रोधोदय एव, स च चतुर्भेदः, यथोक्तं भाष्यकृता—"जलरेणुभूमिपव्वयराईसरिसो चउव्विहो कोहो" प्रभेदफलमुत्तरत्र वक्ष्यामः। तत्थ कोहे उदाहरणं—वसंतपुरे णयरे उच्छन्नवंसो एगो दारगो देसंतरं संकममाणो सत्थेण उज्झिओ तावसपल्लिं गओ, तस्स नामं अग्गिओत्ति, तावसेण संवड्ढिओ, जम्मो नामं सो तावसो, जमस्स पुत्तोत्ति जमदग्गिओ जाओ, सो घोरं तवच्चरणं करेइ, विक्खाओ जाओ। इओ य दो देवा वेसाणरो सड्ढो धन्नंतरी तावसभत्तो, ते दोवि परोप्परं पन्नवेंति, भणंति य—साहुतावसे परिक्खामो, आह सड्ढो—जो अम्हं सव्वअंतिगओ तुब्भ य सव्वप्पहाणो ते परिक्खामो। इओ य मिहिलाए णयरीए तरुणधम्मो पउमरहो राया, सो चंपं वच्चइ वसुपुज्जसामिस्स पामूलं पव्वयामित्ति, तेहिं सो परिक्खिज्जइ भत्तेणं पाणेण य, पंथे य विसमे सो सुकुमालओ दुक्खाविज्जइ, अणुलोमे य से उवसग्गे करिंति, सो धणियतरागं थिरो जाओ,

---

१ जलरेणुभूमिपर्वतराजीसदृशश्चतुर्विध क्रोध । २ तत्र क्रोधे उदाहरणम्—वसन्तपुरे नगरे उत्सन्नवंश एको दारको देशान्तर सक्रामन् सार्थेनोज्झितस्ता-पसपल्लीं गत, तस्य नामाग्निक इति, तापसेन संवर्धित, यमो नाम स तापस, यमस्य पुत्र इति जामदग्न्यो जात, स घोरं तपश्चरण करोति, विख्यातो जात। इतश्च द्वौ देवौ—वैश्वानर श्राद्धो धन्वन्तरी (च) तापसभक्त, तौ द्वावपि परस्पर प्रज्ञापयत, भणतश्च—साधुतापसौ परीक्षावहे, आह श्राद्ध—योऽस्माकं सर्वान्तिको युष्माक च सर्वप्रधानस्तौ परीक्षावहे। इतश्च मिथिलायां नगर्यां तरुणधर्मा पद्मरथो राजा, स चम्पां व्रजति वासुपूज्यस्वामिन पादमूले प्रव्रजा-मीति, ताभ्यां स परीक्ष्यते भक्तेन पानेन च, पथि च विषमे स सुकुमारो दुःख्यते, अनुलोमांश्च तस्योपसर्गान् कुरुत, स बाढ स्थिरो जात,

सो तेहिं न खोभिओ, अन्ने भणंति—*सावओ भत्तपच्चक्खाइओ, ते सिद्धपुत्तरूवेणं गया, अइसए साहिंति, भणंति य—मा इमं करेहि जहा चिरं जीवियव्वं, सो भणइ—बहुओ मे धम्मो होहीति, न सक्को खोभेउं। गया जमदग्गिस्स मूलं, सउ-णरूवाणि कयाणि, कुच्चे से घरओ कओ, सउणओ भणइ—भद्दे! जामि हिमवंतं, सा न देइ मा ण एहिसित्ति, सो सवहे करेइ—गोघायकाइ जहा एमित्ति, सा भणइ—न एएहिं पत्तियामित्ति, जइ एयस्स रिसिस्स दुक्कियं पियसित्ति तो ते विस-ज्जेमि, सो रुट्ठो, तेण दोवि दोहिंवि हत्थेहिं गहियाणि, पुच्छियाणि भणंति—महरिसि! अणवच्चोसित्ति, सो भणइ—सच्चयं, खोभिओ, एवं सो सावगो जाओ देवो। इमोऽवि ताओ आयावणाउ ओत्तिन्नो मिगकोट्ठगं णयरं जाइ, तत्थ जियसत्तू राया, सो उट्ठिओ—किं देमि?, धूयं देहित्ति, तस्स धूयासयं, जा तुमं इच्छइ सा तुज्झत्ति, कन्नंतेउरं गओ, ताहिं दट्ठूण निच्छूढं, न लज्जिसित्ति भणिओ, ताओ खुज्जीकयाओ, तत्थेगा रेणुएणं रमइ तस्स धूया, तीए णेणं फलं पणामियं,

---

१ स ताभ्यां न क्षोभित, अन्ये भणन्ति—श्रावको भक्तप्रत्याख्यायक, तौ सिद्धपुत्ररूपेण गतौ, अतिशयान् कथयत, भणतश्च—मा इम कार्षी यथा चिर जीवितव्यं, स भणति—बहुर्मे धर्मो भविष्यति, न शक्यः (कः) क्षोभयितु। गतौ जमदग्नेर्मूल, शाकुनरूपे कृते, कूर्चे तस्य गृह कृत, शाकुनको भणति—भद्रे! यामि हिमवन्त, सा न ददाति मा न गा इति, स शपथान् करोति—गोघातकादीन् यद्येष्यामीति, सा भणति—नैतै प्रत्येमि इति, यद्येतस्य ऋषेर्दुष्कृत पिबसीति तदा त्वां विसृजामि, स रुष्ट, तेन द्वावपि द्वाभ्यामपि हस्ताभ्यां गृहीतौ, पृष्टौ भणत —महर्षे! अनपत्योऽसीति, स भणति—सत्यं, क्षोभित, एष स श्रावको जातो देव। अयमपि तस्या आतापनाया अवतीर्णो मृगकोष्ठक नगर याति, तत्र जितशत्रू राजा, स उत्थित —किं ददामि?, दुहितर देहीति, तस्य दुहितृशत, या त्वामिच्छति सा तवेति, कन्यान्त पुर गत, ताभिर्दृष्ट्वा निष्ठ्यूत, न लज्जसीति भणित, ता कुब्जीकृता, तत्रैका रेणौ रमते तस्य दुहिता, तस्यै अनेन फल दत्तम्, * नेद वाक्य प्रत्यन्तरे

इच्छिसित्ति य भणिया, तीए हत्थो पसारिओ, निज्जंतीए उवट्ठियाओ खुज्जाओ, सालियरूवए देहि, ताओ अखुज्जाओ कयाओ, कन्नकुज्जं नयरं संवुत्तं, इयरीवि णीया आसमं, सगोमाहिसो परियणो दिन्नो, संवड्ढिया, जोव्वणपत्ता जाहे जाया ताहे वीवाहधम्मो जाओ, अण्णया उदुंमि जमदग्गिणा भणिया—अहं ते चरुगं साहेमि जेणं ते पुत्तो बंभणस्स पहाणो होहिति, तीए भणियं—एवं कज्जउत्ति, मज्झ य भगिणी हत्थिणापुरे अणंतवीरियस्स भज्जा, तीसेऽवि साहेहि खत्तियचरुगंति, तेण साहिओ, सा चिंतेइ—अहं ताव अडविमिगी जाया, मा मम पुत्तोवि एवं नासउत्ति तीए खत्तियचरू जिमिओ, इयरीए इयरो पेसिओ, दोण्हवि पुत्ता जाया, तावसीए रामो, इयरीए कत्तवीरिओ, सो रामो तत्थ संवड्ढइ। अन्नया एगो विज्जाहरो तत्थ समो-सढो, तत्थ एसो पडिलग्गो, तेण सो पडिचरिओ, तेण से परसुविज्जा दिण्णा, सरवणे साहिया, अण्णे भणंति—जमद-ग्गिस्स परंपरागयत्ति परसुविज्जा सा रामो पाढिओत्ति। सा रेणुगा भगिणीघरं गयत्ति तेण रण्णा समं संपलग्गा, तेण

---

१ इच्छसीति च भणिता, तया हस्त प्रसारित, नीयमानायामुपस्थिता कुब्जा, श्यालीनां रूप देहि, ता अकुब्जा कृता, कन्यकुब्ज नगर सवृत्तं, इतराऽपि नीता आश्रम, सगोमाहिष परिजनो दत्त, संवर्धिता, यौवनप्राप्ता यदा जाता, तदा वीवाहधर्मो जात, अन्यदा ऋतौ यामदग्न्येन भणिता—अह तव चरु साध-यामि येन तव पुत्रो ब्राह्मणानां प्रधानो भवतीति, तया भणितम्—एव क्रियतामिति, मम च भगिनी हस्तिनागपुरेऽनन्तवीर्यस्य भार्या, तस्या अपि साधय क्षत्रियचरु-मिति, तेन साधित, सा चिन्तयति—अह तावदटवीमृगी जाता, मा मम पुत्रोऽपि एव भीनेशत् इति तया क्षत्रियचरुर्जिमित, इतरस्यामपि इतरः प्रेषितः, द्वयोरपि पुत्रौ जातौ, तापस्या रामः, इतरस्या कार्त्तवीर्य, स रामस्तत्र संवर्धते। अन्यदा एको विद्याधरस्तत्र समवसृत, तत्रैष प्रतिलग्न, तेन स प्रतिचरितः, तेन तस्मै परशुविद्या दत्ता, शरवणे साधिता, अन्ये भणन्ति—यामदग्न्यस्य परम्परागतेति परशुविद्या तां राम पाठित इति। सा रेणुका भगिनीगृहं गतेति तेन राज्ञा सम संप्रलग्ना, तेन

से पुत्तो जाओ, सपुत्ता जमदग्गिणा आणिया, रुट्ठो, सा रामेण सपुत्तिया मारिया, सो य किर तत्थेव इसुसत्थं सिक्खिओ, तीस भगिणीए सुयं, रण्णो कहियं, सो आगओ आसमं विणासित्ता गावीए घेत्तूणं पहाविओ, रामस्स कहियं, तेण पहाविऊण परसुणा मारिओ, कत्तवीरिओ य राया जाओ, तस्स देवी तारा। अन्नया से पिउमरणं कहियं, तेण आगएणं जमदग्गी मारिओ, रामस्स कहियं, तेणागएणं जलंतेणं परसुणा कत्तवीरिओ मारिओ, सयं चेव रज्जं पडिवन्नं। इओ य सा तारा देवी तेण संभमेण पलायंती तावसासमं गया, पडिओ से मुहेणं गब्भो, नामं कयं सुभूमो, रामस्स परसू जहिं २ खत्तियं पेच्छइ तहिं तहिं जलइ, अन्नया तावसासमस्स पासेणं वीईवयइ, परसू पज्जलिओ, तावसा भणंति—अम्हेच्चिय खत्तिया, तेण रामेण सत्तवारा निक्खत्ता पुहवी कया, हणूणं थालं भरियं, एवं किर रामेणं कोहेणं खत्तिया वहिया॥ एवंविधं क्रोधं नामयन्त इत्यादि पूर्ववत्। मानोऽपि नामादिश्चतुर्विध एव, कर्मद्रव्यमानस्तथैव नोकर्मद्रव्यमानस्तु स्तब्धद्रव्यलक्षणः, भावमानस्तु तद्विपाकः, स च चतुर्धा, यथाऽऽह—'तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो

१ तस्याः पुत्रो जातः, सपुत्रा जामदग्न्येनानीता, रुष्टः, सा रामेण सपुत्रा मारिता, स च किल तत्रैवेषुशास्त्रं शिक्षितः, तस्या भगिन्या श्रुतं, राज्ञे कथितं, स आगत आश्रमं विनाश्य गा गृहीत्वा प्रधावितः, रामाय कथितं, तेन प्रधाव्य पर्शुना मारितः, कार्त्तवीर्यश्च राजा जातः, तस्य देवी तारा। अन्यदा तस्य पितृमरणं कथितं, तेनागतेन जमदग्निर्मारितः, रामाय कथितं, तेनागतेन ज्वलन्त्या पर्शुना कार्त्तवीर्यो मारितः, स्वयमेव राज्यं प्रतिपन्नम्। इतश्च सा तारादेवी तेन सम्भ्रमेण पलायमाना तापसाश्रमं गता, पतितश्च तस्याः स्वमुखेन गर्भः, नाम कृतं सुभूमः, रामस्य पर्शुः यत्र २ क्षत्रियं पश्यति तत्र तत्र ज्वलति, अन्यदा तापसाश्रमस्य पार्श्वेन व्यतिव्रजति, पर्शुर्ज्वलिता, तापसा भणन्ति—वयमेव क्षत्रियाः, तेन रामेण सप्त वारान् निःक्षत्रिया पृथ्वी कृता, दंष्ट्राभिः स्थालं भृतं, एवं किल रामेण क्रोधेन क्षत्रिया हताः। २ तिनिशलताकाष्ठास्थिशैलस्तम्भोपमो मानः।

माणो'त्ति, अत्रोदाहरणं—सो सुभूमो तत्थ संवड्ढइ विज्जाहरपरिग्गहिओ, अन्नया परिक्खिज्जइ विसाईहिं, इओ य रामो नेमित्तं पुच्छइ—कओ मम विणासोत्ति?, भणियं—जो एयंमि सीहासणे निवेसिहिति एयाउ दाढाओ पायसीभूयाओ खाहिति तओ भयं, तो तेणं अवारियं भत्तं कयं, तत्थ सीहासणं धुरे ठवियं, दाढाओ से अग्गओ कयाओ। इत्तो य मेहणाओ विज्जाहरो सो पउमसिरिधूयाए नेमित्तियं पुच्छइ—कस्सेसा दायव्वा?, सो सुभोमं साहइ, तप्पभिइओ मेहनाओ सुभोमं ओलग्गइ, एवं वच्चइ कालो। इओ य सुभूमो मायरं पुच्छइ—किं एत्तिगो लोगो? अन्नोवि अत्थि?, तीए सव्वं कहियं, तो मा णीहि मा मारिज्जिहिसित्ति, सो तं सोऊणमभिमाणेण हत्थिणाउरं गओ तं सभं, सीहासणे निविट्ठो, देवया रडिऊण नट्ठा, ताओ दाढाओ परमण्णं जायाओ, तो तं माहणा पहया, तेणं विज्जाहरेणं तेसिमुवरिं पाडिज्जंति, सो वीसत्थो भुंजइ, रामस्स परिकहियं, सन्नद्धो तत्थागओ परसुं मुयइ, विज्झाओ, इमो य तं चेव थालं गहाय उट्ठिओ, चक्करयणं जायं, तेण

१ स सुभूमस्तत्र संवर्धते विद्याधरपरिगृहीतः, अन्यदा परीक्ष्यते विषादिभिः, इतश्च रामो नैमित्तिकं पृच्छति—कुतो मम विनाश इति, भणितं—य एतस्मिन्सिंहासने निवेक्ष्यति एता दंष्ट्राः पायसीभूताः खादिष्यति ततो भयं, ततस्तेनावारितं भक्तं कृतं, तत्र सिंहासनं धुरि स्थापितं, दंष्ट्राश्च तस्याग्रतः कृताः। इतश्च मेघनादो विद्याधरः स पद्मश्रीदुहितुर्नैमित्तिकं पृच्छति—कस्मै एषा दातव्या?, स सुभूमं कथयति, तत्प्रभृति मेघनादः सुभूममवलगति, एवं व्रजति कालः। इतश्च सुभूमो मातरं पृच्छति—किमियान् लोकः? अन्योऽप्यस्ति?, तया सर्वं कथितं, ततो मा गा मा मारिषि इति, स तत् श्रुत्वाऽभिमानेन हस्तिनागपुरं गतस्तां (च) सभां, सिंहासने निविष्टः, देवता रटित्वा नष्टा, ता दंष्ट्राः परमान्नं जाताः, ततस्तं ब्राह्मणा हन्तुमारब्धास्तेन विद्याधरेण तेषामुपरि पात्यन्ते (प्रहाराः), स विश्वस्तो भुङ्क्ते, रामाय परिकथितं, सन्नद्धस्तत्रागतः पर्शुं मुञ्चति, विध्यातः, अयं च तमेव स्थालं गृहीत्वोत्थितः, चक्ररत्नं जातं, तेन * पहाया प्र०

सीसं छिण्णं रामस्स, पच्छा तेण सुभोमेण माणेणं एक्कवीसं वारा निब्बंभणा पुहवी कया, गब्भावि फालिया॥ एवंविधं मानं नामयन्त इत्यादि पूर्ववत्। माया चतुर्विधा, कर्मद्रव्यमाया योग्यादिभेदाः पुद्गला इति, नोकर्मद्रव्यमाया निधानादिप्रयुक्तानि द्रव्याणि, भावमाया तत्कर्मविपाकलक्षणा, तस्याश्चैते भेदाः—'मायावलेहिगोमुत्तिमिंढसिंगघणवंसिमूलसमा' मायाए उदाहरणं पंडरज्जा—जहा तीए भत्तपच्चक्खाइयाए पूयाणिमित्तं तिन्नि वारे लोगो आवाहिओ, तं आयरिएहिं नायं आलोआविया, ततियं च णालोविया, भणइ—एस पुव्वब्भासेणागच्छइ, सा य मायासल्लदोसेण किव्विसगा जाया, एरिसी दुरंता मायेति॥ अहवा सव्वंगसुंदरित्ति, वसंतपुरं णयरं, जियसत्तू राया, धणवईधणावहा भायरो सेट्ठी, धणसिरी य से भगिणी, सा य बालरंडा परलोगरया य, पच्छा मासकप्पागयधम्मघोसायरियसगासे पडिबुद्धा, भायरोवि सिनेहेणं तहेव, सा पव्वइउमिच्छइ, ते तं संसारनेहेणं न देंति, सा य धम्मवयं खद्धं खद्धं करेइ, भाउज्जायाओ से कुरुकुरायंति, तीए

१ शीर्षं छिन्नं रामस्य, पश्चात्तेन सुभूमेन मानेनैकविंशतिं वारान् निर्ब्राह्मणा पृथ्वी कृता, गर्भा अपि पाटिताः। २ माया अवलेखगोमूत्रिकामेषशृङ्गघनवंशीमूलसमा। मायायामुदाहरणं पण्ड्वार्या (पाण्डुरार्या)—यथा तया भक्तप्रत्याख्यातभक्तया पूजानिमित्तं त्रीन् वारान् लोक आहूतः, तद् आचार्यैर्ज्ञातम्, आलोचिता, तृतीयं च नालोचिता, भणति—एष पूर्वाभ्यासेनागच्छति, सा च मायाशल्यदोषेण किल्बिषिकी जाता, ईदृशी दुरन्ता मायेति। अथवा सर्वाङ्गसुन्दरीति, वसन्तपुरं नगरं, जितशत्रू राजा धनपतिर्धनावहो भ्रातरौ श्रेष्ठिनौ, धनश्रीश्च तयोर्भगिनी, सा च बालरण्डा परलोकरता च, पश्चात् मासकल्पागतधर्मघोषाचार्यसकाशे प्रतिबुद्धा, भ्रातरावपि स्नेहेन (तस्याः स्नेहेन) तथैव, सा प्रव्रजितुमिच्छति, तौ तां संसारस्नेहेन न ददाते, सा च धर्मव्ययं प्रचुरं प्रचुरं करोति, भ्रातृजाये हिंसीतः, तया

विचिंतियं-पेच्छामि ताव भाउगाण चित्तं, किमेयाहिंति ?, पच्छा नियडीए आलोइऊण सोवणयपवेसकाले वीसत्थं वीसत्थं बहुं धम्मगयं जंपिऊण तओ नट्ठखिड्डेणं जहा से भत्ता सुणेइ तहेगा भाउज्जाया भणिया-किं बहुणा ? साडियं रक्खेज्जासि, तेण चिंतियं-नूणमेसा दुच्चारिणित्ति, वारियं च भगवया असईपोसणंति, तओ णं परिट्ठवेमित्ति पलंके उवविसंती वारिया, सा चिंतेइ-हा ! किमेयंति, पच्छा तेण भणियं-घराओ मे णीहि, सा चिंतेइ-किं मए दुक्कडं कयंति, न किंचि पासइ, तओ तत्थेव भूमिगयाए किच्छेण णीया रयणी, पभाए उलुगंगी निग्गया, धणसिरीए भणिया-कीस उलुगंगित्ति, सा रुयंती भणइ-न याणामो अवराहं, गेहाओ य धाडिया, तीए भणियं-वीसत्था अच्छह, अहं ते भलिस्सामि, भाया भणिओ-किमेयमेवंति, तेण भणियं-अलं मे दुट्ठसीलाए, तीए भणियं-कहं जाणासि ?, तेण भणियं-तुज्झ चेव सगासाओ, सुया से धम्मदेसणा निवारणं च, तीए भणियं-अहो ते पंडियत्तणं वियारक्खमत्तं च धम्मे य परिणामो, मए सामन्नेण बहुदोसमेयं

१ विचिन्तित-पश्यामि तावद्भ्रात्रोश्चित्त, किमेताभ्यामिति, पश्चान्निकृत्याऽऽलोच्य शयनप्रवेशकाले विश्वस्त विश्वस्त बहु धर्मगत जल्पित्वा ततो नष्टक्रीडया यथा तस्या भर्त्ता शृणोति तयैका भ्रातृजाया भणिता-किं बहुना ? शाटिकां रक्षे, तेन चिन्तित-नूनमेषा दुश्चारिणीति, निवारित च भगवता असतीपोषणमिति, तत एनां परिष्ठापयामीति पल्यङ्के उपविशन्ती वारिता, सा चिन्तयति-हा किमेतदिति, पश्चात्तेन भणित-गृहान्मे निर्गच्छ, सा चिन्तयति-किं मया दुष्कृत कृतमिति, न किञ्चित्पश्यति, ततस्तत्रैव भूमिगतया कृच्छ्रेण नीता रजनी, प्रभाते म्लानाङ्गी निर्गता, धनश्रिया भणिता-कथ म्लानाङ्गीति, सा रुदन्ती भणति-न जानाम्यपराधम्, गृहाच्च निर्घाटिता, तया भणित-विश्वस्ता तिष्ठ, अह त्वां मिलयिष्यामि, भ्राता भणित -किमेतदेवमिति, तेन भणितम्-अलं मे दुष्टशीलया, तया भणित-कथ जानासि ?, तेन भणित-तवैव सकाशात्, श्रुता तस्या धर्मदेशना निवारण च, तया भणितम्-अहो तव पाण्डित्य विचारक्षमत्व च धर्मे च परिणाम, मया सामान्येन बहुदोषमेतद्

भगवया भणियं तीसे उवइट्ठं वारिया य, किमेतावतैव दुच्चारणी होइ, तओ सो लज्जिओ, मिच्छादुक्कडं से दवाविओ, चिंतियं च णाए-एस ताव मे कसिणधवलपडिवज्जगो, बीओवि एवं चेव विण्णासिओ, नवरं सा भणिया-किं बहुणा ?, हत्थं रक्खिज्जासित्ति, सेसविभासा तहेव, जाव एसोऽवि मे कसिणधवलपडिवज्जगोत्ति एत्थ पुण इमाए नियडिए अभक्खाणदोसओ तिव्वं कम्ममुवनिबद्धं, पच्छा एयस्स अपडिक्कमिय भावओ पव्वइया, भायरोऽवि से सह जायाहिं पव्वइया, अहाउयं पालइत्ता सव्वाणि सुरलोगं गयाणि, तत्थवि अहाउयं पालयित्ता भायरो से पढमं चुया सागेए णयरे असोगदत्तस्स इब्भस्स समुद्ददत्तसायरदत्ताभिहाणा पुत्ता जाया, इयरीवि चविऊण गयपुरे णयरे संखस्स इब्भसावगस्स धूया आयाया, अईवसुंदरित्ति सव्वंगसुंदरी से नामं कयं, इयरीओ वि भाउज्जायाओ चविऊणं कोसलाउरे णंदणाभिहाणस्स इब्भस्स सिरिमइकंतिमइणामाओ धूयाओ आयाओ, जोव्वणं पत्ताणि, सव्वंगसुंदरी कहवि सागेयाओ गयपुरमागएण असोगदत्तसिट्ठिणा

१ भगवता भणित तस्यै उपदिष्ट वारिता च, किमेतावतैव दुश्चारिणी भवति, तत स लज्जित, मिथ्यामेदुष्कृत तस्यै दापित, चिन्तित चानया-एष तावन्मे कृष्णधवलप्रतिपत्ता, द्वितीयोऽपि एवमेव जिज्ञासित ( परीक्षित ), नवरं सा भणिता-किं बहुना ?, हस्त रक्षेरिति, शेषविभाषा तथैव, यावदेषोऽपि मे कृष्णधवलप्रतिपत्तेति, अत्र पुनरनया माययाऽभ्याख्यानदोषतस्तीव्र कर्मोपनिबद्ध, पश्चादेतस्मादप्रतिक्रम्य भावत. प्रव्रजिता, भ्रातरावपि तस्याः सह जायाभ्यां (प्रव्रजिताभ्यां) प्रव्रजितौ, यथायुष्क पालयित्वा सर्वे सुरलोक गताः, तत्रापि यथायुष्क पालयित्वा भ्रातरौ तस्या प्रथम च्युतौ साकेते नगरेऽशोकदत्तस्येभ्यस्य समुद्रदत्तसागरदत्ताभिधानौ पुत्रौ जातौ, इतरापि च्युत्वा गजपुरे नगरे शङ्खस्येभ्यश्रावकस्य दुहिता आयाता, अतीव सुन्दरीति सर्वाङ्गसुन्दरी तस्या नाम कृतम्, इतरे अपि भ्रातृजाये च्युत्वा कोशलपुरे नन्दनाभिधानस्येभ्यस्य श्रीमतिकान्तिमतिनाम्न्यौ दुहितरौ जाते, यौवन प्राप्ता, सर्वाङ्गसुन्दरी कथमपि साकेताद्गजपुरमागतेनाशोकदत्तश्रेष्ठिना

दिट्ठा, कस्सेसा कन्नगत्ति, संखस्स सिट्ठिस्स सबहुमाणं समुद्ददत्तस्स मग्गिया लद्धा विवाहो य कओ, कालंतरेण सो विसज्जावगो आयओ, उवयारो से कओ, वासघरं सज्जियं। एत्थंतरंमि य सव्वंगसुंदरीए उइयं तं नियडिनिबंधणं पढमकम्मं, तओ भत्तारेण से वासघरट्ठिएण वोलेंती देविगी पुरिसच्छाया दिट्ठा, तओऽणेण चिंतियं-दुट्ठसीला मे महिला, कोवि अवलोएउं गओत्ति, पच्छा साऽऽगया, ण तेण बोलाविया, तओ अट्टदुहट्टयाए धरणीए चेव रयणी गमिया, पहाए से भत्तारो अणापुच्छिय सयणवग्गं एगस्स धिज्जाइयस्स कहेत्ता गओ सागेयं णयरं, परिणीया यऽणेण कोसलाउरे णंदणस्स धूया सिरिमइत्ति, भाउणा य से तीसे भइणी कंतिमई, सुयं च णेहिं, तओ गाढमद्धिई जाया, विसेसओ तीसे, पच्छा ताणं गमागमसंववहारो वोच्छिन्नो, सा धम्मपरा जाया, पच्छा पव्वइया, कालेण विहरंती पवत्तिणीए समं साकेयं गया, पुव्वभाउज्जायाओ उवसंताओ भत्तारा य तासिं न सुट्ठु। एत्थंतरंमि य से उदियं नियडिनिबंधणं बितियकम्मं, पारणगे

१ दृष्टा, कस्यैषा कन्यकेति, शङ्खस्य श्रेष्ठिन सबहुमान समुद्रदत्ताय मार्गिता लब्धा वीवाहश्च कृत, कालान्तरेण स नेतुमागत, उपचारस्तस्य कृतः, वासगृह सज्जितम्। अत्रान्तरे च सर्वाङ्गसुन्दर्या उदित तत् मायानिबन्धन प्रथमकर्म, ततो भर्त्रा तस्या वासगृहस्थितेन व्रजन्ती दैविकी पुरुषच्छाया दृष्टा, ततोऽनेन चिन्तित-दुष्टशीला मम महिला, कोऽप्यवलोक्य गत इति, पश्चात्साऽऽगता, न तेनालापिता, तत आर्त्तदु खस्थितया ( खार्त्तया ) धरण्यामेव रजनी गमिता, प्रभाते तस्या भर्त्ताऽनापृच्छ्य स्वजनवर्गमेक धिग्जातीय कथयित्वा गत साकेत नगर, परिणीता चानेन कोशलपुरे नन्दनस्य दुहिता श्रीमतिरिति, भ्रात्रा च तस्य तस्या भगिनी कान्तिमति, श्रुत चैभि, ततो गाढमधृतिर्जाता, विशेषतस्तस्याः, पश्चात्तयोर्गमागमसव्यवहारो व्युच्छिन्न, सा धर्मपरा जाता, पश्चात्प्रव्रजिता, कालेन विहरन्ती प्रवर्त्तिन्या समं साकेत गता, पूर्वभ्रातृजाये उपशान्ते भर्त्तारौ च तयोर्न सुष्ठु। अत्रान्तरे च तस्या उदित निकृतिनिबन्धन द्वितीय कर्म, पारणके

भिक्खट्टं पविट्ठा, सिरिमई य वासघरं गया हारं पोयति, तीए अब्भुट्ठिया, सा हारं मोत्तूण भिक्खत्थमुट्ठिया, एत्थंतरंमि चित्तकम्मोइण्णेणं मयूरेणं सो हारो गिलिओ, तीए चिंतियं–अच्छरीयमिणं, पच्छा साडगद्धेण ठइयं, भिक्खा पडिग्गाहिया निग्गया य, इयरीए जोइयं–जाव नत्थि हारोत्ति, तीए चिंतियं–किमेयं वड्डुलेडुं ?, परियणो पुच्छिओ, सो भणइ–न कोइ एत्थ अज्जं मोत्तूण पविट्ठो अन्नो, तीए अंबाडिओ, पच्छा फुट्टं। इयरीएवि पवत्तिणीए सिट्ठं, तीए भणियं–विचित्तो कम्मपरिणामो, पच्छा उग्गतरतवरया जाया, तेसिं चाणत्थभीयाणं तं णेडुं ण उग्गाहइ, सिरिमई कंतिमइओ भत्तारेहिं हसिज्जंति, ण य विप्परिणमंति, तीएवि उग्गतवरयाए कम्मसेसं कयं, एत्थंतरंमि सिरिमई भत्तारसहगया वासहरे चिट्ठइ, जाव मोरेण चित्ताओ ओयरिऊण निग्गिलिओ हारो, ताणि संवेगमावण्णाणि, अहो से भगवईए महत्थता जं न सिट्ठमिदंति खामेउं पयट्टाणि, एत्थंतरंमि से केवलमुप्पण्णंति, देवेहि य महिमा कया, तेहिं पुच्छियं, तीएऽवि साहिओ

१ भिक्षार्थं प्रविष्टा, श्रीमतिश्च वासगृहगता हारं प्रोतति, तयाऽभ्युत्थिता, सा हारं मुक्त्वा भिक्षार्थमुत्थिता, अत्रान्तरे चित्रकर्मोत्तीर्णेन मयूरेण स हारो गिलित , तया चिन्तितम्–आश्चर्यमिदं, पश्चात् शाटकार्धेन स्थगितं, भिक्षा प्रतिगृहीता निर्गता च, इतरया दृष्ट–यावन्नास्ति हार इति, तया चिन्तित–किमेषा वृद्धती क्रीडा, परिजन पृष्टः, स भणति–न कोऽपि अत्रार्यां मुक्त्वा प्रविष्टोऽन्य., तया निर्भर्सित , पश्चात् स्फुटितम् । इतरयाऽपि प्रवर्तिन्याः शिष्ट, तया भणित–विचित्र कर्मपरिणाम , पश्चात् उग्रतरतपोरता जाता, तैश्चानर्थभीतै तद्गृहं नावगाह्यते, श्रीमतिकान्तिमत्यौ भर्तृभ्यां हस्येते, न च विपरिणमतः, तया ऽप्युग्रतपोरतया कर्मशेष कृतम् , अत्रान्तरे श्रीमतिर्भर्त्रा सह गता वासगृहे तिष्ठति, यावन्मयूरेण चित्रादवतीर्य निर्गिलितो हार , तौ संवेगमापन्नौ, अहो तस्या भगवत्या गाम्भीर्यं यन्न शिष्टमिदमिति क्षमयितुं प्रवृत्तौ, अत्रान्तरे तस्या. केवलज्ञानमुत्पन्नमिति, देवैश्च महिमा कृत , तै पृष्ट, तयाऽपि कथित

परभववुत्तंतो, ताणि पव्वइयाणि, एरिसी दुहावहा मायत्ति । अहवा सूयओ–एगस्स खंतस्स पुत्तो खुड्डुओ सुहसीलओ जाव भणइ–अविरतियत्ति, खंतेण धाडिओ लोयस्स पेसणं करेंतो हिंडिऊण अट्टवसट्टो मओ, मायादोसेण रुक्खकोट्टरे सूतओ जाओ, सो य अक्खाणगाणि धम्मकहाओ जाणइ जातिसरणेणं, पढइ, वणचरएण गहिओ, कुंटितो पाओ अच्छि च काणियं, विधीए उज्झिओ, ण कोइ इच्छइ, सो सावगस्स आवणे ठवित्ता मुल्लस्स गओ, तेण अप्पओ जाणाविओ, कीओ, पंजरगे छूढो, सयणो मिच्छदिट्ठिओ, तेसिं धम्मं कहेइ, तस्स पुत्तो महेसरधूयं दट्ठूणं उम्मत्तो, तं दिवसं धम्मं ण सुणेति ण वा पच्चक्खायंति, पुच्छियाणि साहंति, वीसत्थाणि अच्छह, सो दारओ सद्दाविओ, भणिओ य ससरक्खाणं ढुक्काहि, ठिक्किरियं अच्चेहि, ममं च पच्छतो इट्टगं उक्खणिऊणं णिहणाहि, तहा कयं, सो अविरतओ पायपडितो विन्नवेइ–धूयाए वरं देहि, सूयओ भणइ महेसरस्स–जिणदासस्स देहि, दिन्ना, सा गव्वं वहइ–देवदिन्नत्ति, अन्नया तेण हसियं, निब्बंधे

१ परभववृत्तान्त , तौ प्रव्रजितौ, ईदृशी दु खावहा मायेति । अथवा शुक –एकस्य वृद्धस्य पुत्र क्षुल्लक. सुखशीलो यावद्भणति–अविरतिकेति, वृद्धेन निर्धाटितः लोकस्य प्रेषण कुर्वन् हिण्डयित्वा आर्त्तवशार्तो मृतो, मायादोषेण वृक्षकोटरे शुको जात , स आख्यानकानि धर्मकथाश्च जानाति जातिस्मरणेन, पठति, वनचरेण गृहीतः, कुण्टित पाद अक्षि च काणित, वीथ्यामवतारितः, न कोऽपीच्छति, स श्रावकस्यापणे स्थापयित्वा मूल्याय गतः, तेनात्मा ज्ञापित , क्रीतः, पञ्जरे क्षिप्त , स्वजनो मिथ्यादृष्टिः, तेभ्यो धर्मं कथयति, तस्य पुत्रो माहेश्वरस्य दुहितर दृष्ट्वोन्मत्तस्तद्दिवसे धर्मं न शृण्वन्ति न वा प्रत्याख्यान्ति, पृष्टा कथयन्ति, विश्वस्तास्तिष्ठत, स दारकः शब्दित –भणितश्च–सरजस्कानां पार्श्वे व्रज, टिक्करिकां ( कपालं ) अर्चय, मां च पश्चात् इष्टकमुत्खाय निजहि, तथा कृत, सोऽविरतः पादपतितो विज्ञपयति–दुहितुर्वरं देहि, शुको भणति महेश्वराय–जिनदत्ताय देहि, दत्ता, सा गर्वं वहति–देवदत्तेति, अन्यदा तेन हसित, निर्बन्धे + नेदमुदाहरणं प्रत्य०

कहियं, अमरिसं वहइ, संखडीए वक्खित्ताणि हरइ, भणति–तुमंसि पंडितउत्ति पिच्छं उप्पाडियं, सो चिंतेइ–कालं हरामि, भणइ–णाहं पंडितओ सा ण्हाविई पंडितिया,–एगा ण्हाविणी कूरं छेत्तं णिती चोरेहिं गहिया, अहंपि एरिसे मग्गामि रत्तिं एह रूवए लएत्ता जाइहागो, ते आगया, वातकोणएण णक्काणि छिण्णाणि, अन्ने भणंति–खत्तमुहे खुरेण छिन्नाणि, बितियदिवसे गहिया, सीसं कोट्टेइ भणति य–केण तुब्भेत्ति?, तेहिं समं पहाविया, एगंमि गामे भत्तं आणेमिति कलालकुले विक्किया, ते रूवए घेत्तूणं पलाया, रत्तिं रुक्खं विलग्गा, तेवि पलाया उलग्गंति, महिसीओ हरिऊणं तत्थेव आवासिया मंसं खायंति, एक्को मंसं घेत्तूण रुक्खं विलग्गो दिसाओ पलोएइ, तेण दिट्ठा, रूवए दाइए, सो ढुक्को, जिब्भाए गहिओ, पडंतेण आसइत्ति भणिते आसइत्ति काऊणं णट्ठा, सा घरं गया, सा ण्हाविई पंडितिया णाहं पंडितओ। ताहे पुणोवि अण्णं लोमं उक्खणइ, पुणरवि दारियापिउणा दारिद्देण धणयओ छलाविओ रूवगा दिन्नत्ति कूडसक्खीहिं दवाविओ,

१ कथितम् , अमर्षं वहति, सत्क्यां व्याक्षिप्तेषु हरति, भणति–त्वमसि पण्डित इति पिच्छमुत्पाटित, स चिन्तयति–काल हरामि, भणति–नाह पण्डित , सा नापिती पण्डिता–एका नापिती कूर क्षेत्र नयन्ती चौरैर्गृहीता, अहमपीदृशान् मार्गयामि रात्रावायात रूप्यकान् लात्वा यास्याम., ते आगता , क्षुरप्रेण नासिका च्छिन्ना , अन्ये भणन्ति–क्षत्रमुखे क्षुरप्रेण छिन्नानि, द्वितीयदिवसे गृहीता, शीर्षं कुट्टयति भणति च–केन यूष्माकमिति?, तै समं प्रधाविता, एकस्मिन् ग्रामे भक्तमानयामीति कलालकुले विक्रीता, ते रूप्यकान् गृहीत्वा पलायिता , रात्रौ वृक्ष विलग्न., तेऽपि पलायिता अवलगन्ति, महिषीर्हृत्वा तत्रैवावासिता मांस खादन्ति, एको मांस गृहीत्वा वृक्ष विलग्नो दिश प्रलोकयन्ति, तेन दृष्टा, रूप्यकान् दर्शयति, स आगत , जिह्वया गृहीत , पतता आस्त इति भणिते आस्ते इति कृत्वा नष्टाः, सा गृह गता, सा नापिती पण्डिता नाह पण्डित । तदा पुनरपि अन्य पिच्छमुत्खनति, पुनरपि दारिका पित्रा दारिद्र्येण धनदश्छलित रूप्यका दत्ता इति, कूटसाक्षिभिर्दापित ,

दारिया मग्गिया, कूवे छूढा, सुरंगं खणाविया, पिया कप्पासं कत्ताविओ, सपुत्तया णिज्जाहि, सो गओ दिसं, इमावि गणियवेसेणं पुव्वमागया, तिलक्खागिया कोलिगिणी चोरनिमित्तं चंदपुत्तं सद्दाइस्सामित्ति असंतएणं पत्तियाविनो राया वाणियदारियाए, एवमाईणि पंच सयाणि रत्तीगयाणि, पिंच्छिता मुक्को, सेणेणं गहिओ, कुणहं सेणाणं भंडंताणं पडिओ, असोगवणियाए पेसेलियाए पुत्तेण दिट्ठो, भणिओ य-संगोवाहि, अहं ते कज्जं काहामि, संगोविओ, अण्णस्स रज्जे दिज्जमाणे भिंडमए मयूरे विलग्गेणं रत्तिं राया भणिओ, पेसिलियापुत्तस्स रज्जं दिण्णं, तेण सत्तदिवसे मग्गियं, दोवि कुला पव्वाविया, भत्तं पच्चक्खायं, सहस्सारे उववण्णो ॥ एवंविधां मायां नामयन्त इत्यादि पूर्ववत्, लोभश्चतुर्विधः-कर्मद्रव्यलोभो योग्यादिभेदाः पुद्गला इति, नोकर्मद्रव्यलोभस्त्वाकरमुक्तिश्चिकणिकेत्यर्थः, भावलोभस्तु तत्कर्मविपाकः, तद्भेदाश्चैते-'लोहो हलिद्दखंजणकद्दमकिमिरायसामाणो' सर्वेषां क्रोधादीनां यथायोगं स्थितिफलानि-पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो। देवनरतिरियनारगगइसाहणहेयवो नेया ॥ १ ॥ लोभे लुद्धनंदोदाहरणं-पाडलिपुत्ते लुद्धणंदो

1 दारिका मार्गिता ( याचिता ), कूपे क्षिप्ता, सुरङ्गा खानिता, पिता कर्पासं कर्तित, सपुत्रा निर्याहि, स गतो दिशि, इयमपि गणिकावेषेण पूर्वमागता, तिलकादिका कोलिकी चौरनिमित्तं चन्द्रपुत्रं शब्दयिष्यामीति असता प्रत्ययितो राजा वणिग्दारिकया, एवमादीनि पञ्च शतानि रात्रिगतानि, निष्पिच्छीकृत्य मुक्त, श्येनेन गृहीत, द्वयो श्येनयो कलहयतो. पतितोऽशोकवनिकायां, प्रेष्यिकापुत्रेण दृष्ट, भणितश्च-सगोपय, अहं तव कार्यं करिष्यामि, सगोपित, अन्यस्मै राज्ये दीयमाने भिण्डमये मयूरे विलग्नेन रात्रौ राजा भणित, प्रेष्यिकाया. पुत्राय राज्य दत्त, तेन सप्तमदिवसे मार्गित, द्वे अपि कुले प्रव्राजिते, भक्तं प्रत्याख्यात, सहस्रारे उत्पन्न । 2 लोभो हरिद्राखञ्जनकर्दमकृमिरागसमान । 3 पक्षचतुर्मासवत्सरयावज्जीवानुगामिनः क्रमशः। देवनरतिर्यङ्नारकगतिसाधनहेतवो ज्ञेया. ॥ 1 ॥ लुब्धनन्दोदाहरणम्-पाटलिपुत्रे लुब्धनन्दो * कोकिलिवी ५०

वाणियओ, जिणदत्तो सावओ, जियसत्तू राया, सो तलागं खणावेइ, फाला य दिट्ठा कम्मकरेहिं, ( ग्रं० १०००० ) सुरामोल्लंति दो गहाय वीहीए सावगस्स उवणीया, तेण ते णेच्छिया, णंदस्स उवणीया, गहिया, भणिया य-अण्णेवि आणेज्जह, अहं चेव गेण्हिस्सामि, दिवसे २ गिण्हइ फाले। अण्णया अब्भहिए सयणिज्जामंतणए बलामोडीएणीओ, पुत्ता भणिया-फाले गेण्हह, सो य गओ, ते य आगया, तेहिं फाला ण गहिया, अक्कुट्ठा य गया पूवियसालं, तेहिं ऊणगं मोल्लंति एगंते एढिया, किट्टं पडियं, रायपुरिसेहिं गहिया, जहावत्तं रन्नो कहियं। सो नंदो आगओ भणइ-गहिया ण वत्ति, तेहिं भण्णइ-किं अम्हेवि गहेण गहिया ?, तेण अइलोलयाए एत्तियस्स लाभस्स फिट्टोऽहंति पादाण दोसेण एक्काए कुसीए दोवि पाया भग्गा, सयणो विलवइ। तओ रायपुरिसेहिं सावओ णंदोय घेत्तूण राउलं नीया, पुच्छिया, सावओ भणइ-मज्झ इच्छापरिमाणातिरित्तं, अविय-कूडमाणंति, तेण न गहिया, सावओ पूएऊण विसज्जिओ, नंदो सूलाए

1 वणिक्, जिनदत्त श्रावक, जितशत्रू राजा, स तडाग खानयति, कुश्यश्च दृष्टा कर्मकरै, सुरामूल्यमिति द्वे गृहीत्वा वीथ्यां श्रावकायोपनीते, तेन ते नेष्टे, नन्दायोपनीते, गृहीते, भणिताश्च-अन्या अपि आनयेत अहमेव ग्रहीष्यामि, दिवसे दिवसे कुश्यौ गृह्णाति। अन्यदा अभ्यधिके स्वजनामन्त्रणे बलात्कारेण नीत, पुत्रा भणिता -कुश्यौ गृह्णीयात, स च गत, ते चागता', तै कुश्यौ न गृहीते, आक्रुष्टाश्च गता आपूपिकशाला, तैरून मूल्यमित्येकान्ते क्षिप्ते, किट्टं पतित, राजपुरुषैर्गृहीता, यथावृत्त राज्ञे कथित। स नन्द आगतो भणति-गृहीते न वेति, तैर्भण्यते-किं वयमपि ग्रहेण गृहीता ?, तेनातिलौल्यतया एतावतो लाभात् भ्रष्टोऽहमिति पादयोर्दोषेणैकया कुश्या द्वावपि पादौ भग्नौ, स्वजनो विलपति। ततो राजपुरुषै श्रावको नन्दश्च गृहीत्वा राजकुल नीतौ, पृष्टौ, श्रावको भणति-ममेच्छापरिमाणातिरिक्तम्, अपिच-कूटमानमिति, तेन न गृहीते, श्रावक पूजयित्वा विसृष्ट, नन्दः शूलायां * वीहीए नीया + कीट्टो फिट्टो दिट्ठो

भिन्नो, सकुल्लो य उच्छाइओ, सावगो सिरिघरिओ ठवियओ। एरिसो दुरंतो लोभो॥ एवंविधं लोभं नामयन्त इत्यादि पूर्ववत्। अथेन्द्रियद्वारमुच्यते, तत्रेन्द्रियमिति कः शब्दार्थः ?, 'इदि परमैश्वर्ये' इन्दनादिन्द्रः,-सर्वोपलब्धिभोगपरमैश्वर्यसम्बन्धाज्जीवः, तस्य लिङ्गं तेन दृष्टं सृष्टं चेत्यादि, 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना सूत्रेण निपातनात् सिद्धं, तच्च द्विधा-द्रव्येन्द्रियं भावेन्द्रियं च, तत्र निर्वृत्त्युपकरणे द्रव्येन्द्रियं, लब्ध्युपयोगौ भावेन्द्रियमिति, अमूनि च स्पर्शनादिभेदेन पञ्च भवन्ति अतो बहुवचनम्, उक्तं च-"स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि"(तत्त्वा० अ० २ सू० २०) एतानि च नामितानि अलं दुःखायेति, अत्रोदाहरणानि। तत्थ सोइंदिए उदाहरणं-वसंतपुरे णयरे पुप्फसालो नाम गंधव्विओ, सो अइसुस्सरो विरूवो य, तेण जणो हयहियओ कओ, तंमि णयरे सत्थवाहो दिसायत्तं गएल्लओ, भद्दा य से भारिया, तीए केणवि कारणेण दासीओ पयट्टियाओ, ताओ सुणंतीओ अच्छंति, कालं न याणंति, चिरेण आगयाओ अंबाडियाओ भणंति-मा भट्टिणी ! रूसेह, जं अज्ज अम्हाहिं सुयं तं पसूणवि लोभणिज्जं, किमंग पुण सकण्णाणं ?, कहंति ?, ताहि से कहियं, सा हियएण चिंतेइ-कहमहं पेच्छिज्जामि ?। अन्नया तत्थ णयरदेवयाए जत्ता जाया, सव्वं च णयरं गयं, सात्रि गया,

1 भिन्न, सकुलश्चोत्सादित, श्रावक श्रीगृहिक स्थापित। एतादृशो दुरन्तो लोभ। 2 तत्र श्रोत्रेन्द्रिये उदाहरण-वसन्तपुरे नगरे पुष्पशालो नाम गान्धर्विक, सोऽतीव सुस्वरो विरूपश्च, तेन जनो हृतहृदय कृत, तस्मिन्नगरे सार्थवाहो दिग्यात्रां गतोऽभूत्, भद्रा च तस्य भार्या, तया कस्मैचिदपि कारणाय दास्य प्रवर्तिताः, ताः शृण्वन्त्यस्तिष्ठन्ति, काल न जानन्ति, चिरेणागता उपालब्धा भणन्ति-मा स्वामिनि ! रुष, यदस्माभि श्रुत तत्पशूनामपि लोभनीय, किमङ्ग पुन. सकर्णानां ?, कथमिति ?, ताभिस्तस्यै कथित, सा हृदयेन चिन्तयति-कथमह प्रेक्षयिष्ये ?। अन्यदा तत्र नगरदेवताया यात्रा जाता, सर्वं च नगर गत, साऽपि गता, * जिणदत्तो

लोगोवि पणमिऊणं पडिएइ पहायदेसकालो य वट्टइ, सोवि गाइऊण परिस्संतो परिसरे सुत्तो, सा य सत्थवाही दासीए-समं आगया, पणिवइत्ता देउलं पयाहिणं करेइ, चेडीहिं दाइओ एस सोत्ति, सा संभंता, तओ गया, पेच्छइ विरूवं दंतुरं, भणइ-दिट्ठं से रूवेणं चेव गेयं, तीए निच्छूढं, चेतियं चऽणेण, कुसीलएहिं से कहियं, तस्स अमरिसो जाओ, तो से घरमूले पच्चूसकालसमए गाइउमारद्धो पउत्थवइयानिबद्धं, जह आपुच्छइ जहा तत्थ चिंतेइ जहा लेहे विसज्जइ जहा आगओ घरं पविसइ, सा चिंतेइ-सभूयं वट्टइ ताए अब्भुट्ठेमित्ति आगासतलगाओ अप्पा मुक्को, सा मया, एवं सोइंदियं दुक्खाय भवइ ॥ चक्खिदिए उदाहरणं-महुराए णयरीए जियसत्तू राया, धारिणी देवी, सा पयईए धम्मसद्धा, तत्थ भंडीरवणं चेइयं, तस्स जत्ता, राया सह देवीए णयरजणो य महाविभूईए निग्गओ, तत्थेगेणमिब्भपुत्तेण जाणसंठियाए देवीए जवणियंतरविणिग्गओ सालत्तगो सनेउरो अईव सुंदरो दिट्ठो चलणोत्ति, चिंतियं चऽणेणं-जीए एरिसो चलणो सा रूवेण

1 लोकोऽपि प्रणम्य प्रत्येति प्रभातदेशकालश्च वर्त्तते, सोऽपि गीत्वा परिश्रान्तः परिसरे सुप्तः, सा च सार्थवाही दास्या सममागता प्रणिपत्य देवकुलस्य प्रदक्षिणां करोति, चेटीभिर्दर्शित एष स इति, सा सम्भ्रान्ता, ततो गता, प्रेक्षते विरूपं दन्तुरं, भणति-दृष्टं नस्य रूपेणैव गेयं, तया निष्ठ्यूतं, चेतितं चानेन, तस्मै कुशीलवैः ( विदूषकैः ) कथितं, तस्यामर्षो जातः, ततस्तस्या गृहमूले प्रत्यूषकालसमये गातुमारब्धः प्रोषितपतिकानिबद्धं, यथा आपृच्छति यथा तत्र चिन्तयति यथा लेखान् विसृजति यथाऽऽगतो गृहं प्रविशति, सा चिन्तयति-समीपे ( भूमौ ) वर्त्तते तदभ्युत्तिष्ठामीति आकाशतलादात्मा मुक्तः, सा मृता, एवं श्रोत्रेन्द्रियं दुःखाय भवति । चक्षुरिन्द्रिये उदाहरणं-मथुरायां नगर्यां जितशत्रू राजा, धारिणी देवी, सा प्रकृत्या धर्मश्रद्धा, तत्र भण्डीरवणं चैत्यं, तस्य यात्रा, राजा सह देव्या नगरजनश्च महाविभूत्या निर्गतः, तत्रैकेनेभ्यपुत्रेण यानसंस्थिताया देव्या यवनिकान्तरविनिर्गतः सालक्तकः सनूपुरोऽतीवसुन्दरो दृष्टश्चरण इति, चिन्तितं चानेन-यस्या ईदृशश्चरणः सा रूपेण

तियससुंदरीणवि अब्भहिया, अज्झोववन्नो, पच्छा गविट्ठा-का एसत्ति ?, णाया, तग्घरपच्चासन्ने वीही गहिया, तीसे दासचेडीणं दुगुणं देइ महामणुस्सत्तणं च दाएइ, ताओ हयहिययाओ कयाओ, देवीएवि साहंति, संववहारो लग्गो, देवीएवि गंधाई तओ चेव गिण्हंति । अण्णया तेण भणियं-को एयाओ महामोल्ला गंधाइपुडियाओ उच्छोडेइ ?, चेडीए सिट्ठं-अम्हाणं सामिणित्ति, तेण एगाए पुडियाए भुज्जपत्ते लेहो लिहिऊण छूढो, जहा-'काले प्रसुप्तस्य जनार्दनस्य, मेघान्धकारासु च शर्वरीषु । मिथ्या न भाषामि विशालनेत्रे !, ते प्रत्यया ये प्रथमाक्षरेषु ॥ १ ॥' पच्छा उग्गाहिऊणं विसज्जिया, देवीए उग्घाडिया, वाचिओ लेहो, चिंतियं चऽणाए-धिरत्थु भोगाणं, पडिलेहो लिहिओ, यथा-'नेह लोके सुखं किञ्चिच्छादितस्यांहसा भृशम् । मितं च जीवितं नृणां, तेन धर्मे मतिं कुरु ॥ १ ॥' पादप्रथमाक्षरप्रतिबद्धो भावार्थः पूर्वश्लोकवदवसेयः, तओ बंधिऊण पुडिया ण सुंदरगंधत्ति विसज्जिया चेडी, तीए पडिअप्पिया पुडिया, भणियं चऽणाए-देवी आणवेइ-ण सुंदरा गंधत्ति, तुट्ठेण छोडिआ, दिट्ठो लेहो, अवगए लेहत्थे विसन्नो पोत्ताइं फालेऊण निग्गओ, चिंतियं

1 त्रिदशसुन्दरीभ्योऽप्यभ्यधिका, अभ्युपपन्नः, पश्चाद्गवेषिता-कैषेति ?, ज्ञाता तद्गृहप्रत्यासन्ने वीथी गृहीता, तस्या दासचेटीभ्यो द्विगुणं ददाति महामनुष्यत्वं च दर्शयते, ता हृतहृदया कृताः, देव्या अपि कथयन्ति, सव्यवहारो लग्नः, देव्या अपि गन्धादिकं तत एव गृह्णन्ति । अन्यदा तेन भणितं-क एता महामूल्या गन्धादिपुटिका उच्छोटयति ?, चेट्या शिष्टम्-अस्माकं स्वामिनीति, तेनैकस्यां पुटिकायां भूर्जपत्रे लेखो लिखित्वा क्षिप्तः, यथा-पश्चादुद्ग्राह्य विसृष्टा, देव्योद्घाटिता, वाचितो लेखः, चिन्तितं चानया-धिगस्तु भोगान्, प्रतिलेखो लिखितः-ततो बद्ध्वा पुटिका न सुन्दरगन्धेति विसृष्टा चेटी, तया प्रत्यर्पिता पुटिका, भणितं चानया-देव्याज्ञापयति-न सुन्दरा गन्धा इति, तुष्टेन छोटिता, दृष्टो लेखोऽवगते लेखार्थे विषण्णः पोतानि स्फाटयित्वा निर्गतः, चिन्तितं

चऽणेणं-जाव एसा न पाविया ताव कहमच्छामित्ति परिभमंतो य अन्नं रज्जं गओ, सिद्धपुत्ताण ढुक्को, तत्थ नीई वक्खाणिज्जइ, तत्थवि अयं सिलोगो-'न शक्यं त्वरमाणेन, प्राप्तुमर्थान् सुदुर्लभान् । भार्या च रूपसम्पन्नां, शत्रूणां च पराजयम् ॥ १ ॥' एत्थ उदाहरणं-वसंतपुरे णयरे जिणदत्तो णाम सत्थवाहपुत्तो, सो य समणसड्ढो, इओ य चंपाए परममाहेसरो धणो णाम सत्थवाहो, तस्स य दुवे अच्छेरगाणि-चउसमुद्दसारभूया मुत्तावली धूया य कन्ना हारप्पभत्ति, जिणदत्तेण सुयाणि, बहुप्पगारं मग्गिओ ण देइ, तओऽणेण चट्टवेसो कओ, एगागी सयं चेव चंपं गओ, अंचियं च वट्टइ, तत्थेगो अज्झावगो, तस्स उवट्ठिओ पढामित्ति, सो भणति-भत्तं मे नत्थि, जइ नवरं कहिंपी लभसित्ति, धणो य भोयणं ससरक्खाणं देइ, तस्स उवट्ठिओ, भत्तं मे देहि जा विज्जं गेण्हामि, जं किंचि देमित्ति पडिसुयं, धूया संदिट्ठा-जं किंचि से दिज्जाहित्ति, तेण चिंतियं-सोहणं संवुत्तं, बव्वूरेण दामिओ विरालोत्ति, सो तं फलाइगेहिं उवचरइ, सा ण गेण्हइ उवयारं, सो य

1 चानेन-यावदेषा न प्राप्ता तावत्कथं तिष्ठामीति परिभ्राम्यंश्चान्यत् राज्यं गतः, सिद्धपुत्रानाश्रितः, तत्र नीतिर्व्याख्यायते, तत्राप्ययं श्लोकः । अत्रोदाहरणं-वसन्तपुरे नगरे जिनदत्तो नाम सार्थवाहपुत्रः, स च श्रमणश्राद्धः, इतश्च चम्पायां परममाहेश्वरो धनो नाम सार्थवाहः, तस्य च द्वे आश्चर्ये-चतुःसमुद्रसारभूता मुक्तावली दुहिता च कन्या हारप्रभेति, जिनदत्तेन श्रुते, सुबहुप्रकारं मार्गितो न ददाति, ततोऽनेन विप्रवेषः कृतः, एकाकी स्वयमेव चम्पां गतः, अर्चितं च वर्तते, तत्रैकोऽध्यापकस्तमुपस्थितः पठामीति, स भणति-भक्तं मे नास्ति, यदि परं क्वापि लभस इति, धनश्च भोजनं सरजस्केभ्यो ददाति, तमुपस्थितः, भक्तं मे देहि यावद्विद्यां गृह्णामि, यत्किञ्चिद्ददामीति प्रतिश्रुतं, दुहिता संदिष्टा-यत्किञ्चिदस्मै देया इति, तेन चिन्तितं-शोभनं संवृत्तं, दुर्दरेण ( बव्वूरेण ) दामितो बिडाल इति, स तां फलादिकैरुपचरति, सा न गृह्णाति उपचारं, स चास्वरितो

अतुरिओ णीईगाही थक्के थक्के सम्मं उवचरइ, ससरक्खा य तं खरंटेइ, तेण सा कालेणावज्जिया अज्झोववन्ना भणइ—पलायऽम्ह, तेण भणियं—अजुत्तमेयं, किंतु तुमं उम्मत्तिगा होहि, वेज्जावि अक्कोसेज्जाहि, तहा कयं, वेज्जेहिं पडिसिद्धा, पिया से अद्धितिं गओ, चट्टेण भणियं—परंपरागया से अत्थि विज्जा, दुक्करो य से उवयारो, तेण भणियं—अहं करेमि, चट्टेण भणियं—पउंजामो, किंतु बंभयारीहिं कज्जं, तेण भणियं—अत्थि भगवंतो ससरक्खा ते आणेमी, चट्टेण भणियं—जइ कहवि अबंभयारिणो होंति तो कज्जं न सिज्झइ, ते य परियाविज्जंति, तेण भणियं—जे सुंदरा ते आणेमि, कतिहि कज्जं ?, चउहिं, आणीया सद्दवेहिणो य दिसावाला, कयं मंडलं, दिसापाला भणिया—जओ सिवासद्दो तं मणागं विंधेज्जह, स सरक्खा य भणिया हुंफुटत्तिकए सिवारुयं करेज्जह, दिक्करिगा भणिया—तुमं तह चेव अच्छेज्जह, तहा कयं, विद्धा ससरक्खाण, पउणा चेडी, विपरीणओ धण्णो, चट्टेण वुत्तं—भणियं मए—जइ कहवि अबंभयारिणो होंति कज्जं न

---

१ नीतिग्राही अवसरेऽवसरे सम्यगुपचरति, सरजस्काश्च त निर्भर्त्सयति, तेन सा कालेनावर्जिता अभ्युपपन्ना भणति—पलाय्यतेऽस्माभि, तेन भणितम्—अयुक्तमेतत्, किन्तु त्वमुन्मत्ता भव, वैद्यानपि आक्रोशे, तथा कृतं, वैद्यै प्रतिषिद्धा, पिता तस्या अधृति गत, विप्रेण भणित—परम्परागताऽस्ति मे विद्या, दुष्कश्च तस्या उपचार, तेन भणितम्—अह करोमि, विप्रेण भणित—प्रयुञ्ज्म, किन्तु ब्रह्मचारिभि. कार्य, तेन भणितम्—सन्ति भगवन्त सरजस्कास्तानानयामि, चट्टेन भणितं—यदि कथञ्चिदपि अब्रह्मचारिणो भविष्यन्ति तदा कार्य न सेत्स्यति, ते च पर्यापद्यन्ते, तेन भणित—ये सुन्दरास्तान् आनयामि, कतिभि कार्य ?, चतुर्भि, आनीता शब्दवेधिनश्च दिक्पाला, कृत मण्डल, दिक्पाला भणिता—यत शिवाशब्द आयाति त शीघ्र विध्येत, सरजस्काश्च भणिता—हुफुडितिकृते शिवारुत कुर्यात, दुहिता भणिता—त्व तथैव तिष्ठे, तथा कृत, विद्धा सरजस्का, प्रगुणीभूता पुत्री, विपरिणतो धन्य, चट्टेनोक्त—भणित मया—यदि कथमप्यब्रह्मचारिणो भवेयु कार्य न

सिज्झईत्यादि, धणेण भणियं—को उवाओ ?, चट्टेण भणियं—एरिसा बंभयारिणो हवंति, गुत्तीओ कहेइ, दगसोकराइसु गवेसिओ नत्थि, साहूण ढुक्को- तेहिं सिट्ठाओ 'वसहिकहणिसिज्जिंदियकुड्डंतरपुव्वकीलियपणीए। अइमायाहारविभूसणा य नव बंभगुत्तीओ ॥ १ ॥ एयासु वट्टमाणो सुद्धमणो जो य बंभयारी सो। जम्हा उ बंभचेरं मणोणिरोहो जिणाभिहियं ॥ २ ॥' उवगए भणिया—बंभयारीहिं मे कज्जं, साहू भणइ—न कप्पइ निग्गंथाणमेयं, चट्टस्स कहियं—लद्धा बंभयारी ण पुण इच्छंति, तेण भणियं—एरिसा चेव परिचत्तलोगवावारा मुणओ भवंति, किंतु पूजिएहिंवि तेहिं कज्जसिद्धी होइ, तंनामाणि लिक्खंति, न ताणि खुद्दवंतरी अक्कमइ, पूइया, मंडलं कयं, साहुणामाणि लिहियाणि, दिसावाला ठविया, न कूवियं सिवाए, पउणा चेडी, धणो साहूणमल्लियंतो सड्ढो जाओ, धम्मोवगारित्ति चेडी मुत्ताफलमाला य तस्सेव दिन्ना, एवं अतुरंतेण सा तेणं पावियत्ति सिलोगत्थो ॥ सो एयं सुणिऊण परिणामेइ—अहंपि सदेसं गंतुमतुरंतो तत्थेव किंचि उवायं चिंतिस्सामित्ति

---

१ सेत्स्यति, धनेन भणित—क उपाय ?, विप्रेण भणित—ईदृशो ब्रह्मचारिण स्यु, गुप्ती कथयति, परिव्राजकेषु गवेषितो नास्ति, साधूनां पार्श्वे आगत, तै. शिष्टा—वसति कथा निषद्येन्द्रियाणि कुड्यान्तर पूर्वक्रीडित प्रणीतम्। अतिमात्राहारो विभूषण च नव ब्रह्मचर्यगुप्तय ॥ १ ॥ एतासु वर्त्तमान शुद्धमना यश्च ब्रह्मचारी स। यस्माच्च ब्रह्मचर्य मनोनिरोधो जिनाभिहितम् ॥ २ ॥ उपगते भणिता—ब्रह्मचारिभिर्मे कार्य, साधवो भणन्ति—न कल्पते निर्ग्रन्थानामेतत्, चट्टाय कथित, लब्धा ब्रह्मचारिणो न पुनरिच्छन्ति, तेन भणित—ईदृशा एव परित्यक्तलोकव्यापारा मुनयो भवन्ति, किं तु पूजितैरपि तै कार्यसिद्धिर्भवति, तन्नामानि लिख्यन्ते, न तानि क्षुद्रव्यन्तर्य आक्रमन्ते, पूजिता, मण्डल कृत, साधुनामानि लिखितानि, दिक्पाला स्थापिता, न कूजित शिवया, प्रगुणा (जाता) दुहिता, धन साधूनाश्रयन् श्राद्धो जात, धर्मोपकारीति चेटी मुक्ताफलमाला च तस्मायेव दत्ता, एवमत्वरमाणेन सा तेन प्राप्तेति श्लोकार्थ ॥ स एतत् श्रुत्वा परिणमयति—अहमपि स्वदेश गत्वाऽत्वरमाणस्तत्रैव कञ्चिदुपाय चिन्तयिष्यामीति

गओ सदेसं, तत्थ य विज्जासिद्धा पाणा दंडरक्खा, तेण ते ओलग्गिया, भणंति—किं ते अम्हेहिं कज्जं ?, सिट्ठं—देविं घडेह, तेहिं चिंतियं—उच्छोभं देमो जेण राया परिच्चयइ, तेहिं मारी विउव्विया, लोगो मरिउमारद्धो, रन्ना पाणा समाइट्ठा—लभेह मारिं, तेहिं भणियं—गवेसामो विज्जाए, देवीवासघरे माणुसा हत्थपाया विउव्विया. मुहं च से रुहिरलित्तं कयं, रण्णो निवेइयं—वत्थव्वा चेव मारी, नियघरे गवेसाहि, रण्णा गविट्ठा दिट्ठा य, पाणा समाइट्ठा—सविहीए विवादेह तो खाईं मंडले मज्झरत्तंमि अप्पसागारिए वावाएयव्वा, तहत्ति पडिसुए णीया सगिहं रत्तिं मंडलं, सो य तत्थ पुव्वालोइयकवडो गओ, सखलियारं मारेउमारद्धा, तेण भणियं—किं एयाए कयंति, ते भणंति—मारी एसत्ति मारिज्जइ, तेण भणियं—कहमेयाए आगिईए मारी हवइत्ति?, केणति अवसद्दो ते दिण्णो, मा मारेह, मुयह एयं, ते नेच्छंति, गाढतरं लग्गो, अहं भे कोडिमोल्लं अलंकारं देमि मुयह एयं, मा मारेहिति, वलामोडीए अलंकारो उवणीओ, तीए चिंतियं—निक्कारणवच्छलोत्ति तंमि

---

१ गतः स्वदेश, तत्र च विद्यासिद्धाश्चण्डाला दण्डरक्षा, तेन तेऽवलगिता, भणन्ति—किं तवास्माभि कार्यम् ?, शिष्ट, देवीं मीलयत, तैश्चिन्तितम्—आत्र दद्मो यत राजा परित्यजति, तैर्मारिर्विकुर्विता, लोको मर्त्तुमारब्ध, राज्ञा चाण्डाला समादिष्टा—लभध्व मारीं, तैर्भणित—गवेषयामो विद्यया, देवीवासगृहे मानुष्या हस्तपादा विकुर्विता, मुख च तस्या रुधिरलिप्त कृत, राज्ञे निवेदित—वास्तव्यैव मारी, निजगृहे गवेषय, राज्ञा गवेषिता दृष्टा च, चाण्डाला समादिष्टा—स्वविधिना व्यापादयत तदाऽवश्य मण्डले मध्यरात्रेऽल्पसागारिके व्यापादयितव्या, तथेति प्रतिश्रुते नीता स्वगृहं रात्रौ मण्डल, स च तत्र पूर्वालोचितकपटो गतः, सोपचार मारयितुमारब्धा, तेन भणित—किमेतया कृतमिति, ते भणन्ति—मारीयेति मार्यते, तेन भणित—कथमेतयाऽऽकृत्या मारिर्भवतीति, केनचिदपशब्दो दत्त युष्माक, मा मारयत, मुञ्चतैना, ते नेच्छन्ति, गाढतर लग्न, अह युष्मभ्य कोटिमूल्यमलङ्कार ददामि मुञ्चतैनां, मा मारयतेति बलात् अलङ्कार उपनीत, तया चिन्तित—निष्कारणवत्सल इति तस्मिन्

पंडिबंधो जाओ, पाणेहिं भणियं–जइ ते निव्बंधो एयंपि न मारेमो, किंतु निव्विसयाए गंतवं, पडिसुए मुक्का, सो तं गहाय पलाओ, तो पाणप्पओ वच्छलगोत्ति दढयरं पडिवद्धा आलावाईहिं घडिया, देसंतरंमि भोगे भुंजंता अच्छंति। अण्णया सो पेच्छणगे गंतुं पयट्टो, सा नेहेण गंतुं न देइ, तेण हसियं, तीए पुच्छिओ–किमेयंति?, निबंधे सिट्ठं, निव्विण्णा, तहारूवाणं अज्जाणं अंतिए धम्मं सोच्चा पवइया, इयरोवि अट्टदुहट्टो मरिऊण तद्दिवसं चेव नरगे उववण्णो। एवं दुक्खाय चक्खिदियंति॥ घाणिंदिए उदाहरणं–कुमारो गंधप्पिओ, सो य अणवरयंणावाकडएण खेलइ, माइसवत्तीए तस्स मंजूसाए विसं छोढूण णईए पवाहियं, तेण रमंतेण दिट्ठा, उत्तारिया, उग्घाडिऊण पलोइउं पवत्तो, पडिमंजूसाईएहिं गंधेहिं समुग्गको दिट्ठो, सोऽणेण उग्घाडिऊण जिंघिओ मओ य। एवं दुक्खाय घाणिंदियन्ति॥ जिब्भिदिए उदाहरणं–सोदासो राया मंसप्पिओ, आमाघाओ, सूयस्स मंसं वीरालेण गहियं, सोयरिएसु मग्गियं, न लद्धं, डिंभरूवं मारियं, सुसंहियं

१ प्रतिबन्धो जात, चाण्डालैर्भणित– यदि ते निर्बन्ध एनां नैव मारयामः, किंतु निर्विषयतया (देशाद्बहिः) गन्तव्यं, प्रतिश्रुते मुक्ता, स तां गृहीत्वा पलायित, तत प्राणप्रदो वत्सल इति दृढतर प्रतिबद्धाऽऽलापादिभिर्मीलिता, देशान्तरे भोगान् भुञ्जानौ तिष्ठत। अन्यदा स प्रेक्षणके गन्तु प्रवृत्त, सा स्नेहेन गन्तु न ददाति, तेन हसित, तया पृष्ट –किमेतदिति, निर्बन्धे शिष्टं, निर्विण्णा, तथारूपाणामार्याणामन्तिके धर्मं श्रुत्वा प्रव्रजिता, इतरोऽप्यार्तदु खार्तो मृत्वा त द्दिवस (तद्दिवसादेव) नरके उत्पन्न। एव दु खाय चक्षुरिन्द्रियमिति॥ घ्राणेन्द्रिये उदाहरण–कुमारो गन्धप्रिय, स चानवरतं नावाकटकेन क्रीडति, मातृसपत्न्या तस्य मञ्जूषायां विषं क्षिप्त्वा नद्यां प्रवाहित, तेन रममाणेन दृष्टा, उत्तारिता, उद्घाट्य प्रलोकयितु प्रवृत्तः, प्रतिमञ्जूषादिगैर्गन्धैः समुद्गो दृष्ट सोऽनेनोद्घाट्य घ्रातो मृतश्च। एव दु खाय घ्राणेन्द्रियमिति। जिह्वेन्द्रिये उदाहरणं–सोदासो राजा मांसप्रिय, अमाघात, शुकस्य मांसं मार्जारेण गृहीत, शौकरिकेषु मार्गित, न लब्ध, डिम्भरूप मारित, सुसहित

पुच्छइ, कहियं, पुरिसा से दिन्ना–मारेहत्ति, नयरेण नाओ भिच्चेहि य रक्खसोत्ति महुं पाएत्ता अडवीए पवेसितो, चच्चरे ठिओ गयं गहाय दिणे २ माणुस्सं मारेइ, केइ भणंति–विरहे जणं मारेति, तेणंतेणं सत्थो जाइ, तेण सुत्तेण न जाणिओ, साहू य आवस्सयं करेन्ता फिडिया, ते दट्ठूणं ओलग्गइ, तवेण न सक्केइ अल्लिइउं, चिंतइ, धम्मकहणं, पव्वज्जा। अन्ने भणंति–सो भणइ वच्चंते–ठाह, साहू भणइ–अम्हे ठिया तुमं चेव ठाहि, चिंतेइ, संवुद्धो, साइसया आयरिया, ते ओहिनाणी, केत्तियाणमेवं होहि। एवं दुक्खाय जिब्भिदियंति॥ फासिंदिए उदाहरणं–वसंतपुरे णयरे जियसत्तू राया, सुकुमालिया से भज्जा, तीसे अईव सुकुमालो फासो, राया रज्जं न चिंतेइ, सो एयं निच्चमेव पडिभुज्जमाणो अच्छइ, एवं कालो वच्चइ, भिच्चेहिं सामंतोऽहिमंतेऊण तीए सह निच्छूढो, पुत्तो से रज्जे ठविओ, ते अडवीए वच्चंति, सा तिसाइया, जलं मग्गियं, अच्छीणि से वद्धाणि मा बीहेहित्ति, छिरारुहिरं पज्जिया, रुहिरे मूलिया छूढा जेण ण थिज्जइ, छुहाइया

१ पृच्छति, कथित, पुरुषास्तस्मै दत्ता–मारयतेति, नागरेण ज्ञातो भृत्यैश्च राक्षस इति मद्य पाययित्वा अटव्यां प्रवेशित, चत्वरे स्थितो गज गृहीत्वा दिने २ मनुष्य मारयति, केचिद्भणन्ति–विरहे जन मारयति, तेन मार्गेण सार्थो याति, तेन सुप्तेन न ज्ञात, साधवश्चावश्यक कुर्वन्त स्फिटिता, तेन दृष्ट्वाऽवलम्पन्ते, तपसा न शक्नोति आश्रयितु, चिन्तयति, धर्मकथन, प्रव्रज्या। अन्ये भणन्ति–स भणति व्रजत –तिष्ठत, साधवो भणन्ति–वय स्थिता त्वमेव तिष्ठ, चिन्तयति, सबुद्ध, सातिशया आचार्या, ते अवधिज्ञानिन, कियतामेव भविष्यति। एव दु खाय जिह्वेन्द्रियमिति। स्पर्शनेन्द्रिय उदाहरण–वसन्तपुर नगरे जितशत्रू राजा, सुकुमालिका तस्य भार्या, तस्या अतीव सुकुमाल स्पर्श, राजा राज्य न चिन्तयति, स एतां नित्यमेव प्रतिभुजान तिष्ठति, एव कालो व्रजति, भृत्यैश्च सामन्तोऽपि मन्त्रयित्वा तया सह निष्काशित, पुत्रस्तस्य राज्ये स्थापित, तावटव्यां व्रजतः, सा तृषार्दिता, जल मार्गितम्, अक्षिणी तस्या बद्धे मा भैषीरिति, शिरारुधिर पायिता, रुधिरे मूलिका क्षिप्ता, येन न स्त्यायति, क्षुधार्दिता

उरूमंसं दिन्नं, उरूग सराहिणीए रोहियं, जणवयं पत्ताणि, आभरणगाणि सारवियाणि, एगत्थ वाणियत्तं करेइ, पंगू य से वीहीए सोहगो, घडिओ, सा भणइ–न सक्कणोमि एगागिणी गिहे चिट्ठिउं विदिज्जियं लभाहि, चिंतियं चऽणेण–निरवाओ पंगू सोहणो, तओऽणेण सो नेडुवालगो निउत्तो, तेण य गीयछलियकहाइहिं आवज्जिया, पच्छा तस्सेव लग्गा भत्तारस्स छिद्दाणि मग्गइ, जाहे न लभइ ताहे उज्जाणियागओ सुवीसत्थो बहुं मज्जं पाएत्ता गंगाए पक्खित्तो, सावि तं दव्वं खाइऊण खंधेण तं वहइ, गायंति य घरे २, पुच्छिया भणइ–अम्मापिईहिं एरिसो दिन्नो किं करेमि?, सोऽवि राया एगत्थ णयरे उच्छलिओ, रुक्खछायाए सुत्तो, ण परावत्तति छाया, राया तत्थ मयओ अपुत्तो, अस्सो य अहिवासिओ तत्थ गओ, जयजयसद्देण पडिवोहिओ, राया जाओ, ताणिवि तत्थ गयाणि, रण्णो कहियं, आणावियाणि, पुच्छिया, साहइ–अम्मापीईहि दिन्नो, राया भणइ–'बाहुभ्यां शोणितं पीतमुरुमांसं च भक्षितम्। गङ्गायां वाहितो भर्त्ता, साधु साधु

१ ऊरुमांस दत्त, ऊरु संरोहिण्या रोहित, जनपद प्राप्तौ, आभरणानि संगोपितानि, एकत्र वणिक्त्व करोति, पङ्गुश्च तस्या वीथ्या शोधक, मीलित, सा भणति–न शक्नोमि एकाकिनी गृहे स्थातु द्वितीय लभस्व, चिन्तित चानेन–निरपाय पङ्गु शोभन, ततोऽनेन स गृहपालको नियुक्त, तेन च गीतच्छलितकथादिभिरावर्जिता, पश्चात्तस्यैव लग्ना, भर्तुश्छिद्राणि मार्गयति, यदा न लभते तदोद्यानिकागत सुविश्वस्तो बहु मद्य पाययित्वा गङ्गायां प्रक्षिप्त, साऽपि तद्द्रव्य खादयित्वा स्कन्धेन तं वहति, गायतश्च गृहे गृहे, पृष्टा भणति–मातापितृभ्यामीदृशो दत्त, किं करोमि?, सोऽपि राजा एकत्र नगरे निर्गत, वृक्षच्छायायां सुप्त, न परावर्त्तते छाया, राजा च तत्र मृतोऽपुत्र, अश्वश्चाधिवासितस्तत्र गतः, जयजयशब्देन प्रतिबोधित, राजा जात, तावपि तत्र गतौ, राज्ञे कथितम्, आनायितौ, पृष्टा, कथयति–मातापितृभ्यां दत्त, राजा भणति

पतिव्रते ? ॥ १ ॥' निर्विसयाणि आणत्ताणि । एवं दाण्हंपि विसेसओ सूमालियाए दुक्खाय फासिंदियं ॥ किञ्च—'शब्द-सङ्गे यतो दोषो, मृगादीनां शरीरहा । सुखार्थी सततं विद्वान्, शब्दे किमिति सङ्गवान् ? ॥ १ ॥ पतङ्गाना क्षयं दृष्ट्वा, सद्यो रूपप्रसङ्गतः । स्वस्थचित्तस्य रूपेषु, किं व्यर्थः सङ्गसम्भवः ? ॥ २ ॥ उरगान् गन्धदोषेण, परतन्त्रान् समीक्ष्य कः । गन्धासक्तो भवेत्कायस्वभावं वा न चिन्तयेत् ? ॥ ३ ॥ रसास्वादप्रसङ्गेन, मत्स्याद्युत्सादनं यतः । ततो दुःखादिजनने, रसे कः सङ्गमाप्नुयात् ? ॥ ४ ॥ स्पर्शाभिषक्तचित्तानां, हस्त्यादीनां समन्ततः । अस्वातन्त्र्यं समीक्ष्यापि, कः स्यात्स्पर्शनसंवशः ? ॥ ५ ॥' इत्येवंविधानीन्द्रियाणि संसारवर्द्धनानि विषयलालसानि दुर्जयानि दुरन्तानि नामयन्त इत्यादि पूर्ववत् ॥ अधुना परीषहद्वारावसरः, तत्र 'मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहा' इति निर्वचनं, तत्र मार्गाच्यवनार्थं दर्शनपरीषहः प्रज्ञापरीषहश्च, शेषास्तु निर्जरार्थमिति, एते च द्वाविंशतिः परिसङ्ख्याता एव, तद्यथा—क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याऽऽक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञा-ऽज्ञानदर्शनानि विस्तरतोऽवगन्तव्याः, अस्य भावार्थः—'क्षुधार्तः शक्तिमान् साधुरेषणां नातिलङ्घयेत् । यात्रामात्रोद्यतो विद्वानदीनोऽविप्लवश्चरेत् ॥ १ ॥ पिपासितः पथिस्थोऽपि, तत्त्वविद् दैन्यवर्जितः । शीतोदकं नाभिलषेन्मृगयेत् कल्पितोदकम् ॥ २ ॥ शीताभिघातेऽपि यतिस्त्वग्वस्त्रत्राणवर्जितः । वासोऽकल्प्यं न गृह्णीयादग्निं नोज्ज्वालयेदपि ॥ ३ ॥ उष्णतप्तो न तं निन्देच्छायामपि न संस्मरेत् । स्नानगात्राभिषेकादि, व्यजनं चापि वर्जयेत् ॥ ४ ॥ न दष्टो दंशमशकैस्त्रासं

१ निर्विषयावाज्ञप्तौ । एवं द्वयोरपि विशेषतः सुकुमालिकाया दुःखाय स्पर्शनेन्द्रियम् ।

द्वेषं मुनिर्व्रजेत् । न वारयेदुपेक्षेत, सर्वाहारप्रियत्ववित् ॥ ५ ॥ वासोऽशुभं न वा मेऽस्ति, नेच्छेत् तत्साध्वसाधु वा । लाभालाभविचित्रत्वं, जानन्नाग्न्येन विप्लुतः ॥ ६ ॥ गच्छंस्तिष्ठन्निषण्णो वा, नारतिप्रवणो भवेत् । धर्मारामरतो नित्यं, स्वस्थचेता भवेन्मुनिः ॥ ७ ॥ सङ्गपङ्कसुदुर्बोधाः, स्त्रियो मोक्षपथार्गलाः । चिन्तिता धर्मनाशाय, यतोऽतस्ता न चिन्तयेत् ॥ ८ ॥ ग्रामाद्यनियतस्थायी, सदा वाऽनियतालयः । विविधाभिग्रहैर्युक्तश्चर्यामेकोऽप्यधिश्रयेत् ॥ ९ ॥ श्मशानादिनिषद्यासु, स्त्र्यादिकण्टकवर्जिते । उपसर्गाननिष्टेष्टानेकोऽभीरस्पृहः क्षमेत् ॥ १० ॥ शुभाशुभासु शय्यासु, सुखदुःखे समुत्थिते । सहेत सङ्गं नेयाच्च, श्वस्त्याज्येति च भावयेत् ॥ ११ ॥ नाक्रुष्टो मुनिराक्रोशेत्, साम्याद् ज्ञानाद्यवर्जकः । अपेक्षेतोपकारित्वं, न तु द्वेषं कदाचन ॥ १२ ॥ हतः सहेतैव मुनिः, प्रतिहन्यान्न साम्यवित् । जीवानाशात् क्षमायोगाद्, गुणाप्तेः क्रोधदोषतः ॥ १३ ॥ परदत्तोपजीवित्वाद्, यतीनां नास्त्ययाचितम् । यतोऽतो याचनादुःखं, क्षाम्येन्नेच्छेदगारिताम् ॥ १४ ॥ परकीयं परार्थं च, लभ्येतान्नादि नैव वा । लब्धे न माद्येन्निन्देद्वा, स्वपराण्याप्यलाभतः ॥ १५ ॥ नोद्विजेद् रोगसम्प्राप्तो, न चाभीप्सेच्चिकित्सितम् । विषहेत तथाऽदीनः, श्रामण्यमनुपालयेत् ॥ १६ ॥ अभूतात्पाणुचेलत्वे, कादाचित्कं तृणादिषु । तत्संस्पर्शोद्भवं दुःखं, सहेन्नेच्छेच्च तान् मृदून् ॥ १७ ॥ मलपङ्करजोदिग्धो, ग्रीष्मोष्णक्लेदनादपि । नोद्विजेत् स्नानमिच्छेद्वा, सहेतोद्वर्तयेन्न वा ॥ १८ ॥ उत्थानं पूजनं दानं, स्पृहयेन्नात्मपूजकः । मूर्छितो न भवेल्लब्धे, दीनोऽसत्कारितो न च ॥ १९ ॥ अजानन् वस्तु जिज्ञासुर्न मुह्येत् कर्मदोषवित् । ज्ञानिना ज्ञानमुद्वीक्ष्य, तथैवेत्यन्यथा न तु ॥ २० ॥ विरतस्तपसोपेतश्छद्मस्थोऽहं तथाऽपि च । धर्मादि साक्षान्नेक्षे, नैवं स्यात् क्रमकालवित् ॥ २१ ॥ जिनास्तदुक्तं जीवो वा, धर्माधर्मौ भवान्तरम् । परोक्षत्वात् मृषा नैवं, चिन्तयेत् महतो ग्रहात् ॥ २२ ॥ शारीरमानसानेवं, स्वपरप्रेरितान्मुनिः । परीषहान् सहेताभीः, कायवाङ्मनसा सदा ॥ २३ ॥ ज्ञानावरणवेद्योत्था, मोहनीयान्तरायजाः । कर्मसूदयभूतेषु, सम्भवन्ति परीषहाः ॥ २४ ॥ क्षुत्पिपासा च शीतोष्णे, तथा दंशमशादयः । चर्या शय्या वधो रोगः, तृणस्पर्शमलावपि ॥ २५ ॥ वेद्यादमी अलाभाख्यस्त्वन्तरायसमुद्भवः । प्रज्ञाऽज्ञाने तु विज्ञेयौ, ज्ञानावरणसम्भवौ ॥२६॥ चतुर्दशैते विज्ञेयाः, सम्भवेन परीषहाः । ससूक्ष्मसम्परायस्य, च्छद्मस्थारागिणोऽपि च ॥ २७ ॥ क्षुत् पिपासा च शीतोष्णे, दंशश्चर्या वधो मलः । शय्या रोगतृणस्पर्शौ, जिने वेद्यस्य सम्भवाद् ॥ २८ ॥' इति । एष संक्षेपार्थः ॥ अवयवार्थस्तु परीषहाध्ययनतोऽवसेय इति । एत्थवि दव्वभावविभासा, दव्वपरीसहा इहलोयणिमित्तं जो सहइ परवसो वा बंधणाइसु, तत्थ उदाहरणं जहा चक्के सामाइए इंदपुरे इंददत्तस्स पुत्तो, भावपरीसहा जे संसारवोच्छेयणिमित्तं अणाउलो सहइ, तेहि चेव उवणओ पसत्थो ॥ अधुनोपसर्गद्वारावसरः, तत्रोप—सामीप्येन सर्जनमुपसर्गः, उपसृज्यतेऽनेनेति वा उपसर्गः करणसाधनः, उपसृज्यतेऽसाविति वोपसर्गः कर्मसाधनः, स च प्रत्ययभेदाच्चतुर्विधः—दिव्यमानुषतैर्यग्योन्यात्मसंवेदनाभेदात्, तत्थ दिव्वा चउव्विहा—हासा पदोसा वीमंसा पुढोवेमाया, हासे खुड्डगा अण्णं गामं भिक्खायरियाए गया, वाणमंतरि

१ अत्रापि द्रव्यभावविभाषा—द्रव्यपरीषहा इहलोकनिमित्तं य सहते परवशो वा बन्धनादिभिः, तत्रोदाहरणं यथा चक्रे सामायिके इन्द्रपुरे इन्द्रदत्तस्य पुत्रः, भावपरीषहा यान् संसारव्युच्छेदनिमित्तमनाकुल सहते, तेष्वेव उपनयः प्रशस्तः । २ तत्र दिव्याश्चतुर्विधा—हास्यात् प्रद्वेषात् विमर्शात् पृथग्विमात्रया, हास्ये क्षुल्लका अन्यं ग्रामं भिक्षाचर्यायै गताः, व्यन्तरी—

उवाइंति–जइ फवामो तो वियडिउं डेरगकण्हवण्णएण अच्चणियं देहामो, लद्धं, सा मग्गइ, अन्नमन्नस्स कहणं, मग्गिऊण दिन्नं, एयं ते तंति, ताहे सयं चेव तं पक्खाइया, कंदप्पिया देवया तेसिं रूवं आवरेत्ता रमइ, वियाले मग्गिया, न दिट्ठा, देवयाए आयरियाण कहियं । पओसे संगमओ । वीमंसाए एगत्थ देउलियाए साहू वासावासं वसेत्ता गया, तेसिं च एगो पुव्विं पेसिओ, तओ चेव वरिसारत्तं करेउं आगओ, ताए देउलियाए आवासिओ, देवया चिंतेइ–किं दढधम्मो नवत्ति सड्ढीरूवेण उवसग्गेइ, सो नेच्छइ, तुट्ठा वंदइ । पुढोवेमाया हासेण करेउं पदोसेण करेज्ज, एवं संजोगा । माणुस्सा चउव्विहा–हासा पओसा वीमंसा कुसीलपडिसेवणया, हासे गणियाधूया, खुड्डुगं भिक्खस्स गयं उवसग्गेइ, हया, रण्णो कहियं, खुड्डुगो सद्दाविओ, सिरिघरदिट्ठंतं कहेइ । पओसे गयसुकुमालो सोमभूइणा ववरोविओ, अहवा एगो धिज्जाइओ एगाए अविरइयाए सद्धिं अकिच्चं सेवमाणो साहुणा दिट्ठो, पओसमावण्णो साहुं मारेमित्ति पहाविओ, साहुं पुच्छइ–किं तुमे

१ मुपयाचन्ते–यदि लप्स्यामहे तदा विकटय्य लघुकृष्णवर्णेनार्चनं दास्याम , लब्ध, सा मार्गयति, अन्योऽन्यस्मै कथन, मार्गयित्वा दत्तम्, एतत्ते तदिति, तदा स्वयमेव त प्रखादिता, कान्दर्पिका देवता तेषां रूपमावृत्य रमते, विकाले मार्गिता., न दृष्टाः, देवतयाऽऽचार्याय कथित । प्रद्वेषे सगमक । विमर्शे एकत्र देवकुलिकाया साधवो वर्षारात्रमुषित्वा गता , तेषां चैक पूर्वं प्रेषित , तत्रैव वर्षारात्र कर्तुमागत', तस्यां देवकुलिकायामावासित , देवता चिन्तयति–किं दृढधर्मा नवेति श्राद्धीरूपेणोपसर्गयति, स नेच्छति, तुष्टा वन्दते । पृथग्विमात्रा हास्येन कृत्वा प्रद्वेषेण कुर्यात्, एव सयोगा । मानुष्याश्चतुर्विधा – हास्यात् प्रद्वेषात् विमर्शात् कुशीलप्रतिषेवनया, हास्ये गणिकादुहिता, क्षुल्लक भिक्षायै गतमुपसर्गयति, हता, राज्ञ कथित, क्षुल्लक शब्दित , श्रीगृहदृष्टान्त कथयति । प्रद्वेषे गजसुकुमाल सोमभूतिना व्यपरोपित', अथवा एको धिग्जातीय एकयाऽविरतिकया सार्धमकार्यं सेवमान साधुना दृष्ट , प्रद्वेषमापन्न साधु मारयामीति प्रधावित साधु पृच्छति–किं त्वयाऽद्य

अज्ज दिट्ठंति?, साहू भणइ–बहुं सुणेइ कन्नेहिं सिलोगो । वीमंसाए चंदगुत्तो राया चाणक्केण भणिओ–पारत्तियंपि किंपि करेज्जासि, सुसीसो य किर सो आसि, अंतेउरे धम्मकहणं, उवसग्गिज्जंति, अण्णतित्थिया य विणट्ठा, णिच्छूढा य, साहू सद्दाविया भणंति–जइ राया अच्छइ तो कहेमो, अइगओ राया ओसरिओ, अंतेउरिया उवसग्गेंति, हयाओ, सिरिघरदिट्ठंतं कहेइ । कुसीलपडिसेवणाए ईसालू य भज्जाओ चत्तारि रायसंणायं, तेण घोसावियं–सत्तवइपरिक्खित्तं घरं न लहइ कोइ पवेसं, साहू अयाणंतो वियाले वसहिनिमित्तं अइयओ, सो य पवेसियलओ, तत्थ पढमे जामे पढमा आगया भणइ–पडिच्छ, साहू कच्छं बंधिऊण आसणं च कुम्मबंधं काऊण अहोमुहो ठिओ चीरवेढेणं, न सक्किओ, किसित्ता गया, पुच्छंति–केरिसो?, सा भणइ–एरिसो नत्थि अण्णो मणूसो, एवं चत्तारिवि जामे जामे किसिऊण गयाओ, पच्छा एगओ मिलियाओ साहंति, उवसंताओ सड्ढीओ जायाओ । तेरिच्छा चउव्विहा–भया पओसा आहारहेउं अवच्चलयण-

१ दृष्टमिति ?, साधुर्भणति–बहु शृणोति कर्णाभ्या श्लोक । विमर्शात् चन्द्रगुप्तो राजा चाणक्येन भणित –पारत्रिकमपि किञ्चित् कुरु, सुशिष्यश्च किल स आसीत्, अन्त पुराय धर्मकथनम्, उपसर्ग्यन्तेऽन्यतीर्थिकाश्च विनष्टा , निर्यासिताश्च, साधव शब्दिता भणन्ति–यदि राजा तिष्ठति तदा कथयाम , अतिगतो राजाऽपसृत , अन्त पुरिका उपसर्गयन्ति, हता , श्रीगृहदृष्टान्त कथयन्ति । कुशीलप्रतिषेवनायामीर्ष्यालुश्च भार्याश्चतस्रो राजकुटुम्ब, तेन घोषित–सप्तवृतिपरिक्षिप्त गृह न लभते कोऽपि प्रवेष्टु, साधुरजानानो विकाले वसतिनिमित्तमतिगत., स च प्रवेशित , तत्र प्रथमे यामे प्रथमाऽऽगता भणति–प्रतीच्छ, साधु कच्छ बध्वा आसन च कूर्मबन्ध कृत्वाऽधोमुख स्थितश्चीरवेष्टनेन, न शकित', छिशित्वा गता, पृच्छन्ति–कीदृश' ?, सा भणति–ईदृशो नास्त्यन्यो मनुष्य , एव चतस्रोऽपि यामे यामे छिशित्वा गता , पश्चान्मीलिता एकत्र कथयन्ति, उपशान्ता श्राद्ध्यो जाता । तैरश्चाश्चतुर्विधा –भयात् प्रद्वेषात् आहारहेतो अपत्यालय-

सारक्खणया, भएण सुणगाई डसज्जा, पओसे चंडकोसिओ मक्कडादी वा, आहारहेउं सीहाइ, अवच्चलेणसारक्खणहेउं काकिमाइ । आत्मना क्रियन्त इति आत्मसंवेदनीया, जहा उद्देसे चेतिए पाहुडियाए, ते चउव्विहा–घट्टणया पवडणया थंभणया लेसणया, घट्टणया अच्छिंमि रयो पविट्ठो चमढिउं दुक्खिउमारद्धं अहवा सयं चेव अच्छिंमि गलए वा किंचि सालुगाइ उट्ठियं घट्टेइ, पवडणया ण य पयत्तेणं चंकमइ, तत्थ दुक्खाविज्जइ, थंभणया नाम ताव वइट्ठो अच्छिओ जाव सुत्तो थद्धो जाओ, अहवा हणुयाजंतमाई, लेसणया पायं आउंटित्ता अच्छिओ जाव तत्थ व तत्थ वाएण लइओ, अहवा नट्टं सिक्खामित्ति अइणामियं किंचि अंगं तत्थेव लग्गं, अहवा आयसंवेयणिया वाइया पित्तिया संभिया संनिवाइया एए दव्वोवसग्गा, भावओ उवउत्तस्स एए चेव, उक्तं च–"दिव्वा माणुसगा चेव, तेरिच्छा य वियाहिया । आयसंवेयणीया य, उवसग्गा चउव्विहा ॥ १ ॥ हासप्पओसवीमंसा, पुढोवेमाय दिव्विया । माणुस्सा हासमाईया, कुसीलपडिसेवणा ॥ २ ॥

१ सरक्षणाय, भयेन श्वादिर्दशेत्, प्रद्वेषे चण्डकौशिको मर्कटादिर्वा, आहारहेतो सिंहादि , अपत्यलयनसरक्षणहेतो काक्यादि । यथोद्देशे चैत्ये प्राभृतिकायां, ते चतुर्विधा –घट्टनता प्रपतनता स्तम्भनता श्लेषणता, घट्टनता अक्ष्णि रज प्रविष्ट मर्दयित्वा दु खयितुमारब्ध अथवा स्वयमेव अक्ष्णि गले वा किञ्चित्सालुकादि उत्थित घट्टयति, पतनता न च प्रयत्नेन चङ्क्रम्यते, तत्र दु ख्यते, स्तम्भनता नाम तावदुपविष्ट स्थितो यावत्सुप्त स्तब्धो जात , अथवा हनुयन्त्रादि, श्लेषणता पादमाकृष्य स्थितो यावत्तत्र वा तत्र वातेन लग्न , अथवा नृत्य शिक्ष इति अतिनामित किञ्चिदङ्ग तत्रैव लग्नम्, अथवाऽऽत्मसंवेदनीया वातिका पैत्तिका श्लैष्मिका सान्निपातिका एते द्रव्योपसर्गा , भावत उपयुक्तस्यैत एव, दिव्या मानुष्यकाश्चैव तैरश्चाश्च व्याख्याताः । आत्मसंवेदनीयाश्चोपसर्गाश्चतुर्विधा ॥ १ ॥ हास्यप्रद्वेषविमर्शपृथग्विमात्रा दिव्या । मानुष्या हास्यादय कुशीलप्रतिषेवना ॥ २ ॥

तेरिच्छिगा भया दोसा, आहारट्ठा तहेव य । अवच्चलेणसंरक्खणट्ठाए ते वियाहिया ॥ ३ ॥ घट्टणा पवडणा चेव, थंभणा लेसणा तहा । आयसंवेयणीया उ, उवसग्गा चउव्विहा ॥ ४ ॥" इत्याद्यलं प्रसङ्गेन, एतन्नामयन्तो नमोऽर्हा इति व्याख्यातमयं गाथार्थः ॥ साम्प्रतं प्राकृतशैल्याऽनेकधाऽर्हच्छब्दनिरुक्तसम्भवं निदर्शयन्नाह—

इंदियविसयकसाए परीसहे वेयणा उवस्सग्गे । एए अरिणो हंता अरिहंता तेण वुच्चंति ॥ ९१९ ॥

व्याख्या—इन्द्रियादयः पूर्ववत्, वेदना त्रिविधा–शारीरी मानसी उभयरूपा च, 'एए अरिणो हंता' इत्यत्र प्राकृतशैल्या छान्दसत्वात् 'सुपां सुपो'त्यादिलक्षणतः एतेषामरीणां हन्तारः यतोऽरिहन्तारः 'तेनोच्यन्ते' तेनाभिधीयन्ते, अरीणां हन्तारोऽरिहन्तार इति निरुक्तिः स्यात्, एतदनन्तरगाथायामेत एवोक्ताः पुनरमीषामेवेहोपन्यासोऽयुक्त इति ?, अत्रोच्यते, अनन्तरगाथायां नमस्कारार्हत्वे हेतुत्वेनोक्ताः, इह पुनरभिधाननिरुक्तिप्रतिपादनार्थमुपन्यास इति गाथार्थः ॥ साम्प्रतं प्रकारान्तरतोऽरय आख्यायन्ते, ते चाष्टौ ज्ञानावरणादिसंज्ञाः सर्वसत्त्वानामेवेति, आह च—

अट्ठविहंपिय कम्मं अरिभूअं होइ सव्वजीवाणं । तं कम्ममरिं हंता अरिहंता तेण वुच्चंति ॥ ९२० ॥

व्याख्या—'अष्टविधमपि' अष्टप्रकारमपि, अपिशब्दादुत्तरप्रकृत्यपेक्षयाऽनेकप्रकारमपि, चशब्दो भिन्नक्रमः, स चाव

१ तैरश्चा भयाद्वेषादाहारार्थाय तथैव च । अपत्यलयनसंरक्षणार्थाय ते व्याख्याता ॥ ३ ॥ घट्टना प्रपतनैव स्तम्भन श्लेषण तथा । आत्मसंवेदनीयास्तु उपसर्गाश्चतुर्विधा ॥ ४ ॥

धारणे, ज्ञानावरणादि, ततश्चाष्टविधं कर्मैव 'अरिभूतं' शत्रुभूतं भवति 'सर्वजीवानां' सर्वसत्त्वानामनवबोधादिदुःखहेतुत्वादिति भावः, पश्चार्द्धं पूर्ववत् एवंविधा अरिहन्तार इति गाथार्थः ॥ ९२० ॥ अथवा—

अरिहंति वंदणनमंसणाइं अरिहंति पूअसक्कारं । सिद्धिगमणं च अरिहा अरहंता तेण वुच्चंति ॥ ९२१ ॥

व्याख्या—'अर्ह पूजायाम्' अर्हन्तीति 'पचाद्यच्' कर्तरि अर्हाः, किमर्हन्ति ?–वन्दननमस्करणे, तत्र वन्दनं शिरसा नमस्करणं वाचा, तथाऽर्हन्ति पूजासत्कारं, तत्र वस्त्रमाल्यादिजन्या पूजा, अभ्युत्थानादिसम्भ्रमः सत्कारः, तथा 'सिद्धिगमनं चार्हन्ति' सिद्ध्यन्ति–निष्ठितार्था भवन्त्यस्यां प्राणिन इति सिद्धिः–लोकान्तक्षेत्रलक्षणा, वक्ष्यति च–'इह बोंदिं चइत्ता णं तत्थ गंतूण सिज्झइ' तद्गमनं च प्रत्यर्हा इति, 'अरहंता तेण वुच्चंति' प्राकृतशैल्या अर्हास्तेनोच्यन्ते, अथवा अर्हन्तीत्यर्हन्त इति गाथार्थः ॥ ९२१ ॥

तथा–देवासुरमणुएसुं अरिहा पूआ सुरुत्तमा जम्हा । अरिणो हंता रयं हंता अरिहंता तेण वुच्चंति ॥ ९२२ ॥

व्याख्या—देवासुरमनुजेभ्यः पूजामर्हन्ति–प्राप्नुवन्ति तद्योग्यत्वात्, सुरोत्तमत्वादिति युक्तिः, इत्थमनेकधाऽन्वर्थमभिधाय पुनः सामान्यविशेषाभ्यामुपसंहरन्नाह—'अरिणो हंता' इत्यादि पूर्ववदेव, अरीणां हन्तारः यतः अरिहन्तारस्तेनोच्यन्ते, तथा रजसो हन्तारः यतो रजोहन्तारस्तेनोच्यन्ते इति, रजो वध्यमानकं कर्म भण्यत इति गाथार्थः ॥ ९२२ ॥ इदानीममोघताख्यापनार्थमपान्तरालिकं नमस्कारफलमुपदर्शयति—

अरहंतनमुक्कारो जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ ९२३ ॥

व्याख्या—अर्हतां नमस्कारःअर्हन्नमस्कार,इहार्हच्छब्देन बुद्धिस्थार्हदाकारवती स्थापना गृह्यते,नमस्कारस्तु नमःशब्द एव,

* इह तनु त्यक्त्वा तत्र गत्वा सिध्यति

'जीवम्' आत्मानं 'मोचयति' अपनयति, कुतः ?–भवसहस्रेभ्यः, 'भावेन' उपयोगेन क्रियमाणः, इह च सहस्रशब्दो यद्यपि दशशतसङ्ख्यायां वर्तते तथाऽप्यत्रार्थादनन्तसङ्ख्यायामवगन्तव्यः, अनन्तभवमोचनान्मोक्षं प्रापयतीत्युक्तं भवति, आह–न सर्वस्यैव भावतोऽपि नमस्कारकरणे तद्भव एव मोक्षः, तत्कथमुच्यते–जीवं मोचयतीत्यादि, उच्यते, यद्यपि तद्भव एव मोक्षाय न भवति तथाऽपि भावनाविशेषाद्भवति पुनः 'बोधिलाभाय' बोधिलाभार्थं, बोधिलाभश्चाचिरादविकलो मोक्षहेतुरित्यतो न दोष इति गाथार्थः ॥ ९२३ ॥ तथा चाह—

अरिहंतनमुक्कारो धन्नाण भवक्खयं कुणंताणं । हिअयं अणुम्मुअंतो विसुत्तियावारओ होइ ॥ ९२४ ॥

व्याख्या—अर्हन्नमस्कार इति पूर्ववत्, धन्यानां भवक्षयं कुर्वताम्, तत्र धन्याः–ज्ञानदर्शनचारित्रधनाः साध्वादयः, तेषां भवक्षयं कुर्वतामिति, अत्र तद्भवजीवितं भवः तस्य क्षयो भवक्षयस्तं कुर्वताम्—आचरतां, किम् ?–'हृदयं' चेतः 'अनुन्मुञ्चन्' अपरित्यजन्, हृदयादनपगच्छन्नित्यर्थः, विस्रोतसिकावारको भवति, इहापध्यानं विस्रोतसिकोच्यते, तद्वारको भवति, धर्मध्यानैकालम्बनतां करोतीति गाथार्थः ॥ ९२४ ॥

अरहंतनमुक्कारो एवं खलु वण्णिओ महत्थुत्ति । जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ ९२५ ॥

व्याख्या—अर्हन्नमस्कार एवं खलु वर्णितो 'महार्थ' इति महानर्थो यस्य स महार्थः, अल्पाक्षरोऽपि द्वादशाङ्गार्थसङ्ग्राहित्वान्महार्थ इति, कथं पुनरेतदेवमित्याह–यो नमस्कारो 'मरणे' प्राणत्यागलक्षणे उपाग्रे–समीपभूते 'अभिक्षणम्' अनवरतं क्रियते 'बहुशः' अनेकशः, ततश्च प्रधानापदि समनुस्मरणकरणेन ग्रहणात् महार्थः, प्रधानश्चायमिति । आह च

भाष्यकारः—"जलणाइभए सेसं मोत्तुंऽप्पेगंरयणं महामोल्लं । जुहि वाऽइभए घेप्पइ अमोहसत्थं जह तहेह ॥ १ ॥ मोत्तुंपि बारसंगं स एव मरणंमि कीरए जम्हा । अरहंतनमोक्कारो तम्हा सो बारसंगत्थो ॥ २ ॥ सव्वंपि बारसंगं परिणामविसुद्धिहेउमेत्तायं । तक्कारणभावाओ किह न तदत्थो नमोक्कारो ? ॥ ३ ॥ ण हु तंमि देसकाले सक्को बारसविहो सुयक्खंधो । सव्वो अणुचिंतेउं धंतंपि समत्थचित्तेणं ॥ ४ ॥ तप्पणईणं तम्हा अणुसरियव्वो सुहेण चित्तेणं । एसेव नमोक्कारो कयन्नुयं मन्नमाणेणं ॥ ५ ॥" इति गाथार्थः ॥ ९२५ ॥ उपसंहरन्नाह—

**अरिहंतनमुक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ ९२६ ॥**

व्याख्या—किं बहुना ?, इहार्हन्नमस्कारः, किम् ?—सर्वपापप्रणाशनः, तत्र पांशयतीति निपातनात् पापं, पिबति वा हितमिति पापम्, औणादिकः पः प्रत्ययः, सर्वम्—अष्टप्रकारमपि कर्म—पापं जातिसामान्यापेक्षया, उक्तं च—'पापं कर्मैव तत्त्वत' इत्यादि, तत्प्रणाशयतीति सर्वपापप्रणाशनः, मङ्गलानां च 'सर्वेषां' नामादिलक्षणानां 'प्रथमं' इति प्रधानं प्रधानार्थकारित्वात्, अथवा पञ्चामूनि भावमङ्गलान्यर्हदादीनि, तेषां प्रथमम्—आद्यमित्यर्थः, 'भवति मङ्गल'मिति संपद्यते मङ्गलमिति गाथार्थः

१ ज्वलनादिभये मुक्त्वा अप्येक रत्न महामूल्यम् । युधि वाऽतिभये गृह्यतेऽमोघशस्त्र यथा तथेह ॥ १ ॥ मुक्त्वाऽपि द्वादशाङ्ग स एव मरणे क्रियते यस्मात् । अर्हन्नमस्कारस्तस्मात्स द्वादशाङ्गार्थ ॥ २ ॥ सर्वमपि द्वादशाङ्ग परिणामविशुद्धिमात्रहेतुकम् । तत्कारणभावात् कथ न तदर्थो नमस्कार ? ॥ ३ ॥ नैव तस्मिन् देशकाले शक्यो द्वादशविध श्रुतस्कन्ध । सर्वोऽनुचिन्तयितु बाढमपि समर्थचित्तेन ॥ ४ ॥ तत्प्रणतीनां (सद्भावात्) तस्मादनुसर्तव्य शुभेन चित्तेन । एष एव नमस्कार कृतज्ञत्व मन्यमानेन ॥ ५ ॥ ( गाथेय गाथाचतुष्काद्भिन्नसंबन्धा तत्र ) * पारेण मुद्रिते + ०मत्थ मुद्रिते

॥ ९२६ ॥ उक्तस्तावदर्हन्नमस्कारः, साम्प्रतं सिद्धनमस्कार उच्यते, तत्र सिद्ध इति कः शब्दार्थः ?, उच्यते—'षिधु संराद्धौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये चे'ति, सिध्यति स्म सिद्धः, यो येन गुणेन निष्पन्नः—परिनिष्ठितो न पुनः साधनीयः सिद्धौदनवत् स सिद्ध इत्यर्थः, स च सिद्धः शब्दसामान्याक्षेपतः, अर्थतस्तावच्चतुर्दशविधः, तत्र नामस्थापनाद्रव्यसिद्धान् व्युदस्य शेषनिक्षेपप्रतिपादनायाह—

**कम्मे १ सिप्पे अ २ विज्जाय ३, मंते ४ जोगे अ ५ आगमे ६ ।**
**अत्थ ७ जत्ता ८ अभिप्पाए ९, तवे १० कम्मक्खए ११ इय ॥ ९२७ ॥**

व्याख्या—कर्मणि सिद्धः कर्मसिद्धः—कर्मणि निष्ठां गत इत्यर्थः, एवं शिल्पसिद्धः २ विद्यासिद्धः ३ मन्त्रसिद्धः ४ योगसिद्धः ५ आगमसिद्धः ६ अर्थसिद्धः ७ यात्रासिद्धः ८ अभिप्रायसिद्धः ९ तपःसिद्धः १० कर्मक्षयसिद्ध ११ श्चेति गाथासमासार्थः ॥ ९२७ ॥ अवयवार्थं तु प्रतिद्वारमेव वक्ष्यति, तत्र नामस्थापनासिद्धौ सुखावसेयौ, द्रव्यसिद्धो निष्पन्न ओदनः सिद्ध इत्युच्यते, साम्प्रतं कर्मसिद्धादिव्याचिख्यासया कर्मादिस्वरूपमेव प्रतिपादयन्नाह—

**कम्मं जमणायरिओवएसयं सिप्पमन्नहाऽभिहिअं । किसिवाणिज्जाईयं घडलोहाराइभेअं च ॥ ९२८ ॥**

व्याख्या—इह कर्म यदनाचार्योपदेशजं सातिशयमनन्यसाधारणं गृह्यते, 'शिल्पम्' अन्यथाऽभिहितमिति, कोऽर्थः ?—इह यदाचार्योपदेशजं ग्रन्थनिबन्धाद्वोपजायते सातिशयं कर्मापि तच्छिल्पमुच्यते, तत्र भारवहनकृषिवाणिज्यादि कर्म घटकारलोहकारादिभेदं च शिल्पमिति गाथार्थः ॥ ९२८ ॥ साम्प्रतं कर्मसिद्धं सोदाहरणमभिधित्सुराह—

**जो सव्वकम्मकुसलो जो वा जत्थ सुपरिनिट्ठिओ होइ । सज्झगिरिसिद्धओविव स कम्मसिद्धत्ति विन्नेओ ९२९**

व्याख्या—'यः' कश्चित् सर्वकर्मकुशलो यो वा 'यत्र' कर्मणि सुपरिनिष्ठितो भवत्येकस्मिन्नपि सह्यगिरिसिद्धक इव स कर्मसिद्ध इति विज्ञेयः, कर्मसिद्धो ज्ञातव्य इति गाथाक्षरार्थः॥९२९॥भावार्थः कथानकादवसेयः, तच्चेदम्—कोंकणगदेसे एगंमि दुग्गे सज्झस्स भंड उरुभेइ विलएत्ति य, ताणं च विसमे गुरुभारवाहित्ति काऊण रण्णा समाणत्तं, एएसिं मएवि पंथो दायव्वो न पुण एएहिं कस्सइ । इओ एगो सिंधवओ पुराणो सो पडिभज्जंतो चिंतेइ—तहिं जामि जहिं कम्मे ण एस जीवो भज्जइ सुहं न विंदइ, सो तेसिं मिलिओ, सो गंतुकामो भणइ, कुंदुरुक्क पडिबोहियल्लओ सिद्धओ भणइ—सिद्धियं देहि ममं, जहा सिद्धयं सिद्धया गया सज्झयं, सो य तेसिं महत्तरओ सव्वबड्डुं भारं वहइ, तेण साहूणं मग्गो दिन्नो, ते रुट्ठा राउले कहेंति, ते भणंति—अम्हं रायावि मग्गं देइ भारेण दुक्खाविज्जंताणं ता तुमं समणस्स रित्तस्स रिथक्कस्स मग्गं देसि ?, रण्णा भणियं—दुट्ठु ते कयं, मम आणा लंघियत्ति, तेण भणियं-देव ! तुमे गुरुभारवाहित्तिकाऊणमेयमाणत्तं ?, रण्णा आमंति पडिस्सुयं, तेण भणियं—जइ एवं तो सो गुरुतरभारवाही,

१ कोङ्कणकदेशे एकस्मिन् दुर्गे सह्याद्भाण्डमवसारयति आरोहयति च, तेषां च विषमे गुरुभारवाहिन इतिकृत्वा राज्ञा समाज्ञप्त, एतेभ्यो मयाऽपि पन्था दातव्यो न पुनरेतै कस्मैचित् । इतश्चैक सैन्धवीय पुराण स प्रतिभग्नश्चिन्तयति—तत्र यामि यत्र कर्मणि नैष जीवो भज्यते सुख न विन्दति, स तैर्मिलित', स गन्तुकामो भणति, कुक्कुटरुतप्रतिबोधित सिद्धो भणति—सिद्धिं देहि मह्य, यथा सिद्ध सिद्धा गता सह्यकं, स च तेषां महत्तर सर्वबहु भारं वहति, तेन साधुभ्यो मार्गो दत्त , ते रुष्टा राजकुले कथयन्ति, ते भणन्ति—अस्माकं राजाऽपि मार्गं ददाति भारेण तु दूयमानानां तत्त्वं श्रमणाय रिक्ताय निभाराय मार्गं ददासि ?, राज्ञा भणित—दुष्टु त्वया कृत, ममाज्ञा लङ्घितेति, तेन भणित—देव ! त्वया गुरुभारवाहीतिकृत्वैतदाज्ञप्त ?, राज्ञा ओमिति प्रतिश्रुत, तेन भणित—यद्येव तदा स गुरुतरभारवाही,

कहं ?–जं सो अवीसमंतो अट्ठारससहस्ससीलंगनिब्भरं भारं वहइ, जो मएवि वोढुं ण पारिओत्ति, धम्मकहा यऽणेण कया, हो महाराय !–'वुज्झंति नाम भारा ते पुण वुज्झंति वीसमंतेहिं। सीलभरो वोढवो जावज्जीवं अविस्सामो ॥ १ ॥' राया पडिबुद्धो, सो य संवेगं गओ, अब्भुट्ठिओत्ति, एस कम्मसिद्धोत्ति ॥ साम्प्रतं शिल्पसिद्धं सोदाहरणमेवाभिधातुकाम आह–

**जो सव्वसिप्पकुसलो जो वा जत्थ सुपरिनिट्ठिओ होइ। कोकासवड्ढईविव साइसओ सिप्पसिद्धो सो ॥ ९३० ॥**

व्याख्या—यः कश्चिदनिर्दिष्टस्वरूपः सर्वशिल्पेषु कुशलः सर्वशिल्पकुशलः, यो यत्र वा सुपरिनिष्ठितो भवत्येकस्मिन्नपि कोकाशवर्द्धकिवत् सातिशयः शिल्पसिद्धोऽसौ गाथाक्षरार्थः ॥ ९३० ॥ भावार्थः कथानकादवसेयः, तच्चेदम्–सोपारए रहकारस्स दासीए बंभणेण दासचेडो जाओ, सो य मूयभावेण अच्छइ मा णज्जीहामित्ति, रहकारो अप्पणो पुत्ते सिक्खावेइ, ते मंदबुद्धी न लएंति, दासेण सबं गहियं, रहकारो मओ, रायाए दासस्स सबं दिन्नं जं तस्स घरए सारं। इओ य उज्जेणीए राया सावगो, तस्स चत्तारि सावगा–एगो महाणसिओ सो रंधेइ, जइ रुच्चइ जिमियमेत्तं जीरइ,

---

१ कथ ?–यस्सोऽविश्राम्यन् अष्टादशसहस्रशीलाङ्गनिर्भर भार वहति यो मयापि वोढु न पारित (शक्त) इति, धर्मकथा चानेन कृता–भो महाराजन् !–वहन्ते नाम भारा ते पुनरुह्यन्ते विश्राम्यद्भि'। शीलभरो वोढव्यो यावज्जीवमविश्राम' ॥ १ ॥ राजा प्रतिबुद्ध, स च सवेग गतोऽभ्युत्थित इति, एष कर्मसिद्ध इति। २ सोपारके रथकारस्य दास्यां ब्राह्मणेन दासचेटो जात, स च मूकभावेन तिष्ठति मा ज्ञायिषि इति, रथकार आत्मन' पुत्रान् शिक्षयति, ते मन्दबुद्धयो न गृह्णन्ति, दासेन सर्वं गृहीत, रथकारो मृत, राज्ञा दासाय सर्वं दत्त यत्तस्य गृहस्य सारम्। इतश्चोज्जयिन्यां राजा श्रावक, तस्य चत्वार श्रावका'–एको महानसिक स पचति, यदि रोचते जिमितमात्रेण जीर्यति,

अहवा जामेणं त्रिहिं तिहिं चउहिं पंचहिं, जइ रुच्चइ न चेव जीरइ, विदिओ अब्भंगेइ, सो तेल्लस्स कुलवं २ सरीरे पवेसेइ, तं चेव णीणेइ, ततिओ सेज्जं रएइ, जइ रुच्चइ पढमे जामे विबुज्झइ अहवा वितिए ततिए चउत्थे, अहवा सुवइ चेव, चउत्थो सिरिघरिओ, तारिसो सिरिघरओ कओ जहा अइगओ न किंचि पेच्छइ, एए गुणा तेसिं, सो य राया अपुत्तो निविण्णकामभोगो पवज्जोवायं चिंतेंतो अच्छइ। इओ य पाडलिपुत्ते णयरे जियसत्तू राया, सो य तस्स णयरिं रोहेइ, एत्थंतरंमि य तस्स रण्णो पुवकयकम्मपरिणइवसेण गाढं सूलमुप्पण्णं, तओऽणेण भत्तं पच्चक्खायं, देवलोयं गओ, णागरगेहिं य से णयरी दिन्ना, सावया सद्दाविया पुच्छइ–किंकम्मया ?, भंडारिएण पवेसिओ, किंचिवि न पेच्छइ, अण्णेण दारेण दरिसियं, सेज्जावालेण एरिसा सेज्जा कया जेण मुहुत्ते मुहुत्ते उट्ठेइ, सूएण एरिसं भत्तं कयं जेणं वेलं वेलं जेमेइ, अब्भंगएण एक्कओ पायाओ तेल्लं ण णीणियं, जो मम सरिसो सो नीणेउ, चत्तारिवि पवइया, सो तेण तेल्लेण डज्झंतो कालओ

---

१ अथवा यामेन द्वाभ्या त्रिभिश्चतुर्भि पञ्चभि, यदि रोचते नैव जीर्यति, द्वितीयोऽभ्यङ्गयति, स तैलस्य कुडव २ शरीरे पवेशयति तदेव निष्काशयति, तृतीय शय्या रचयति, यदि रोचते प्रथमे यामे विबुध्यते अथवा द्वितीये तृतीये चतुर्थे, अथवा स्वपित्येव, चतुर्थ श्रीगृहिकस्तादृश श्रीगृह कृत यथाऽतिगतो न किञ्चित्पश्यति, एते गुणास्तेषा, स च राजाऽपुत्रो निर्विण्णकामभोग प्रव्रज्योपाय चिन्तयन् तिष्ठति। इतश्च पाटलीपुत्रे नगरे जितशत्रू राजा, स च तस्य नगरीं रुणद्धि, अत्रान्तरे च तस्य राज्ञ पूर्वकर्मपरिणतिवशेन गाढ शूलमुत्पन्नं, ततोऽनेन भक्त प्रत्याख्यात, देवलोक गत, नागरैश्च तस्मै नगरी दत्ता, श्रावका शब्दिता पृच्छ्यन्ते–किंकर्मका ?, भाण्डागारिकेण प्रवेशित, किञ्चिदपि न पश्यति, अन्येन द्वारा दर्शित, शय्यापालकेनेदृशी शय्या कृता येन मुहूर्त्ते मुहूर्त्ते उत्तिष्ठति, सूदेनेदृश भक्त कृत येन वारं वारं जेमति, अभ्यङ्गकेनैकस्मात् पदस्तैल न निष्काशितं, यो मम सदृश स निष्काशयतु, चत्वारोऽपि प्रव्रजिता, स तेन तैलेन दह्यमान कृष्णो

जाओ, कागवन्नो नामं जायं। इओ य सोपारए दुब्भिक्खं जायं, सो कोकासो उज्जेणिं गओ, रायाणं किह जाणावेमित्ति कवोतेहिं गंधसालिं अवहरइ, कोट्ठागारिएहिं कहियं, मग्गिएण दिट्ठो आणीओ, रण्णा णाओ, वित्ती दिन्ना, तेणागासगामी खीलियापओगनिम्माओ गरुडो कओ, सो य राया तेण कोकासेण देवीए य सम्मं तेण गरुडेण णहमग्गे हिंडइ, जो ण णमइ तं भणइ–अहं आगासेण आगंतूण मारेमि, ते सबे आणाविया, तं देविं सेसियाओ देवीओ पुच्छंति–जाए खीलियाए नियत्तइ जंतं, एगाए वच्चंतस्स इस्साए णियत्तणखीलिया गहिया, तओ णियत्तणवेलाए णायं, ण णियत्तइ, तओ उद्दामं गच्छंतस्स कलिंगे असिलयाए पंखा भग्गा, पंखाविगलोत्ति पडिओ, तओ तस्संघायणाणिमित्तं उवगरणट्ठा कोकासो णयरं गओ, तत्थ रहकारो रहं निम्मवेइ, एगं चक्कं निम्मवियं एगस्स सबं घडियल्लयं किंचि २ नवि, ता मो ताणि उवगरणाणि मग्गइ, तेण भणियं–जाव घराओ आणेमि, राउलाओ न लब्भन्ति निकालेउं, सो गओ, इमेण तं

---

१ जात', काकवर्णो नाम जातम्। इतश्च सोपारके दुर्भिक्ष जात, स कोकाश उज्जयिनीं गत, राजान कथं ज्ञापयामीति कपोतैर्गन्धशालीनपहरति कोष्ठागारिकै कथितं, मार्गयद्भिर्दृष्ट आनीत., राज्ञा ज्ञातो, वृत्तिर्दत्ता, तेनाकाशगामी कीलिकाप्रयोगनिर्मितो गरुडः कृत, स च राजा तेन कोकाशेन देव्या च सम तेन गरुडेन नभोमार्गे हिण्डते, यो न नमति स भणति–अहमाकाशेनागत्य मारयिष्यामि, ते सर्वे आज्ञापिता, तां देवीं शेषा देव्य पृच्छन्ति–यया कीलिकया निवर्त्तते यन्त्रम्, एकया व्रजत ईर्ष्यया निवर्त्तनकीलिका गृहीता, ततो निवर्त्तनवेलाया ज्ञात, न निवर्त्तते, तत उद्दाम गच्छत कलिङ्गेऽसिलतया पक्षौ भग्नौ, पक्षविकल इति पतित, ततस्तत्संघातनानिमित्तमुपकरणार्थं कोकाशो नगर गत', तत्र रथकारो रथ निर्मिमीते, एक चक्रं निर्मितं, एकस्य सर्वं, घटित किञ्चित्किञ्चिन्नैव, तत स तानि उपकरणानि मार्गयति, तेन भणितम्–यावद् गृहाद् आनयामि, राजकुलात् न लभ्यन्ते निष्काशयितुं, स गतः, अनेन

संघाइयं, उड्ढं कयं जाइ, अप्फिडियं नियत्तं पच्छओमुहं जाइ, ठियंपि न पडइ, इयरस्सऽघयं जाइ, अप्फिडियं पडइ, सो आगओ पेच्छइ निम्मायं, अक्खेवेण गंतूण रण्णो कहेइ, जहा-कोकासो आगओत्ति, जस्स बलेणं कागवण्णेण सबे रायाणो वसमाणीया, तो गहिओ, तेण हम्मंतेण अक्खायं, गहिओ सह देवीए, भत्तं वारियं, नागरएहिं अजसभीएहिं कागपिंडी पवत्तिया, कोकासो भणिओ-मम सयपुत्तस्स सत्तभूमियं पासायं करेहि, मम य मज्झे, तो सबे रायाणए आणवेस्सामि, तेण निम्मिओ, कागवण्णपुत्तस्स लेहं पेसियं, एहि जाव अहं एए मारेमि, तो तुमं मायापित्तं ममं च मोएहिसित्ति दिवसो दिन्नो, पासाअं सपुत्तओ राया विलइओ, खीलिया आहया, संपुडो जाओ, मओ य सपुत्तओ, कागवण्णपुत्तेण तं सबं णयरं गहियं, मायापित्तं कोकासो य मोयावियाणि। एसेवंविहो सिप्पसिद्धोत्ति ॥ साम्प्रतं विद्यादिसिद्धं प्रतिपादयन्नादौ तावत् स्वरूपमेव प्रतिपादयति—

---

१ तत्संघटितम्, ऊर्ध्वं कृत याति, आस्फोटित निवृत्तं पश्चान्मुख याति, स्थितमपि ( स्थापितमपि ) न पतति, इतरस्यालयं याति, आस्फोटितं पतति, स आगत. पश्यति निर्मितम्, अक्षेपेण गत्वा राज्ञे कथयति, यथा-कोकाश आगत इति, यस्य बलेन काकवर्णेन सर्वे राजानो वशमानीताः, ततो गृहीत , तेन हन्यमानेनाख्यात, गृहीतः सह देव्या, भक्तं वारितं, नागरैरयशोभीतैः काकपिण्डिका प्रवर्तिता, कोकाशो भणित·—मम शतस्य पुत्राणां सप्तभौमं प्रासाद कुरु, मम च मध्ये, ततः सर्वान् राजकुले आनाययिष्यामि, तेन निर्मितः, काकवर्णपुत्राय लेखः प्रेषितः, एहि यावदहमेतान् मारयामि, ततस्त्वं मातापितरं मां च मोचयेरिति दिवसो दत्तः, प्रासादं सपुत्रो राजा विलग्नः, कीलिकाऽऽहता, संपुटो जातः, मृतश्च सपुत्र., काकवर्णपुत्रेण तत् सर्वं नगरं गृहीतं मातापितरौ कोकाशश्च मोचिताः । एष एवंविधः शिल्पसिद्ध इति ।

**इत्थी विज्जाऽभिहिया पुरिसो मंतुत्ति तव्विसेसोयं । विज्जाससाहणा वा साहणरहिओ अ मंतुत्ति ॥ ९३१ ॥**

व्याख्या—स्त्री विद्याऽभिहिता पुरुषो मन्त्र इति तद्विशेषोऽयं, तत्र 'विद् लाभे' 'विद सत्तायां' वा, अस्य विद्येति भवति, 'मन्त्रि गुप्तभाषणे' अस्य मन्त्र इति भवति, एतदुक्तं भवति—यत्र मन्त्रे देवता स्त्री सा विद्या, अम्बाकुष्माण्ड्यादि, यत्र तु देवता पुरुषः स मन्त्रः, यथा विद्याराजः, हरिणेगमेषिरित्यादि, विद्या ससाधना वा साधनरहितश्च मन्त्र इति सावरादिमन्त्रवदिति गाथार्थः ॥ ९३१ ॥ साम्प्रतं विद्यासिद्धं सनिदर्शनमुपदर्शयन्नाह—

**विज्जाण चक्कवट्टी विज्जासिद्धो स जस्स वेगावि । सिज्झिज्ज महाविज्जा विज्जासिद्धऽज्जखउडुव्व ॥ ९३२ ॥**

व्याख्या—'विद्यानां' सर्वासामधिपतिः—चक्रवर्ती 'विद्यासिद्ध' इति विद्यासु सिद्धो विद्यासिद्ध इति, यस्य वैकाऽपि सिद्ध्येत् 'महाविद्या' महापुरुषदत्तादिरूपा स विद्यासिद्धः, सातिशयत्वात्, क इव ?—आर्यखपुटवदिति गाथाक्षरार्थः ॥ ९३२ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—विज्जासिद्धा अज्जखउडा आयरिया, तेसिं च बालो भाइणिज्जो, तेण तेसिं पासओ विज्जा कन्नाहाडिया, विज्जासिद्धस्स य णमोक्कारेणावि किर विज्जाओ हवंति, सो विज्जाचक्कवट्टी तं भाइणेज्जं भरुकच्छे साहुसगासे ठविऊण गुडसत्थं णयरं गओ, तत्थ किर परिव्वायओ साहूहिं वाए पराजिओ अद्धितीए कालगओ

---

१ विद्यासिद्धा आर्यखपुटा आचार्या , तेषां च बालो भागिनेय , तेन तेषां पार्श्वात् विद्या कर्णाहृता, विद्यासिद्धस्य च नमस्कारेणापि किल विद्या भवन्ति, स विद्याचक्रवर्त्ती त भागिनेय भृगुकच्छे साधुसकाशे स्थापयित्वा गुडशस्त्र नगर गत., तत्र किल परिव्राजक. साधुभिर्वादे पराजितोऽधृत्या कालगत·

तंमि गुडसत्थे णयरे वड्डुकरओ वाणमंतरो जाओ, तेण तत्थ साहूणो सबे पारद्धा, तण्णिमित्तं अज्जखउडा तत्थ गया, तेण गंतूण तस्स कण्णेसु उवाहणाओ ओलइयाओ, देवकुलिओ आगओ पेच्छइ, गओ, जणं घेत्तूण आगओ, जओ जओ उग्घाडिज्जति तओ तओ अहिट्ठाणं, रण्णो कहियं, तेणवि दिट्ठं, कट्ठलट्ठीहिं पहओ, सो अंतेउरे संकामेइ, मुक्को, पट्ठियओ, वड्डुकरओ अन्नाणि य वाणमंतराणि पच्छओ उप्फिडंताणि भमंति, लोगो पायपडिओ विन्नवेइ—मुयाहित्ति, तस्स देवकुले महाविस्संदा दोन्नि महइमहालियाओ पाहाणमईओ दोणीओ, ताओ सो वाणमंतराणि य खडखडाविंताणि पच्छओ हिंडंति, जणेण विन्नविओ, सो वाणमंतराणि य मुक्काणि, ताओ दोणीओवि आरओ आणित्ता छड्डियाणि, जो मम सरिसो आणेहितित्ति मुक्काओ । सो य से भाइणिज्जो आहारगेहीए भरुयकच्छे तच्चणिओ जाओ, तस्स विज्जापहावेण पत्ताणि आगासेणं उवासगाणं घरेसु भरियाणि एंति, लोगो बहुओ तम्मुहो जाओ, संघेण अज्जखउडाण पेसियं, आगआ, अक्खायं

---

१ तस्मिन् गुडशस्त्रे नगरे वृद्धकरो व्यन्तरो जात , तेन तत्र साधव सर्वे प्रारब्धा· (उपसर्गयितु ), तन्निमित्तमार्यखपुटास्तत्र गताः, तेन गत्वा तस्य कर्णयोरुपानहाववलगिती, देवकुलिक आगत पश्यति, गत , जन गृहीत्वाऽऽगत , यतो यत उद्घाट्यते ततस्ततोऽधिष्ठान, राज्ञे कथित, तेनापि दृष्टं, काष्ठयष्टिभिः प्रहत., सोऽन्त पुरे संक्रमयति, मुक्त , पृष्ठतो वृद्धकरोऽन्ये च व्यन्तराः पृष्ठत उत्स्फिटन्तो भ्राम्यन्ति, लोक पादपतितो विज्ञपयति—मुञ्चेति, तस्य देवकुले महाविस्यन्दे द्वे द्रोण्यौ अतिमहत्यौ पाषाणमय्यौ, ते स व्यन्तराश्च खटत्कार कुर्वन्त पश्चात् हिण्डन्ते, जनेन विज्ञप्त , स व्यन्तराश्च मुक्ता , ते द्रोण्यौ अपि अर्वाक् आनीय त्यक्ते, यो मम सदृश आनेष्यतीति मुक्ते । स च तस्य भागिनेय आहारगृद्ध्या भृगुकच्छे तच्चनीको जातः, तस्य विद्याप्रभावेण पात्राणि आकाशेन गृहेषु भृतान्यायान्ति, लोको बहुस्तन्मुखो जात , सङ्घेनार्यखपुटेभ्य प्रेषितम्, आगता , आख्यातम्

एरिसी अकिरिया उट्ठितत्ति, तेसिं कप्पराणं अग्गतो मत्तओ सो तेण वत्थेण उच्छाइयओ जाइ, टोप्परिया गया, सव्वपवरे आसणे ठिया, अन्नत्थ कयाइ एइ, भरिया २ आगया, आयरिएहिं अंतरा आगासे पहाणो ठविओ, सव्वाणि भिण्णाणि, सो चेलओ भीओ नट्ठो, आयरिया तत्थ आगया, तच्चणिया भणंति–एहि बुद्धस्स पाए पडिहित्ति, आयरिया भणंति–एहि पुत्ता! सुद्धोदणसुया वंद ममं, बुद्धो निग्गओ, पाएसु पडिओ, तत्थ थूभो दारे, सोऽवि भणिओ–एहि पाएहिं पडाहित्ति पडिओ, उट्ठेहित्ति भणिओ अद्धोणओ ठिओ, एवं चेव अच्छहित्ति भणिओ ट्ठिओ पासल्लिओ, नियंठणामिओ नामेण सो जाओ। एस एवंविहो विज्जासिद्धोत्ति ॥ साम्प्रतं मन्त्रसिद्धं सनिदर्शनमेवोपदर्शयति—

साहीणसव्वमंतो बहुमंतो वा पहाणमंतो वा। नेओ समंतसिद्धो खंभागरिसुव्व साइसओ ॥ ९३३ ॥

व्याख्या—स्वाधीनसर्वमन्त्रो बहुमन्त्रो वा मन्त्रेषु सिद्धो मन्त्रसिद्धः, प्रधानमन्त्रो वेति प्रधानैकमन्त्रो वेति ज्ञेयः, स मन्त्रसिद्धः, क इव?–स्तम्भाकर्षवत् सातिशय इति गाथाक्षरार्थः ॥ ९३३ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—

१ एतादृशी अक्रियोत्थितेति, तेषां कर्पराणामग्रतो मात्रक स तेन वस्त्रेणाच्छादितो याति, टोप्परिका गता, सर्वप्रवरे आसने स्थिता, अन्यत्र कदाचि यायाति, भृतानि२भागतानि, आचार्यैरन्तराऽऽकाशे पाषाण स्थापित, सर्वाणि भिन्नानि, स क्षुल्लक (शिष्य) भीतो नष्ट, आचार्यास्तत्रागता, तच्चनीका भणन्ति–आयात बुद्धस्य पादयो पततेति, आचार्या भणन्ति–आयाहि पुत्र! शुद्धोदनसुत! वन्दस्व मा, बुद्धो निर्गत, पादयो पतित, तत्र स्तूपो द्वारे, सोऽपि भणित –एहि पादयो पतेति पतित, उत्तिष्ठेति भणित अर्धावनत स्थित, एवमेव तिष्ठेति भणित स्थित पार्श्वावनतो, निर्ग्रन्थनामित इति नाम्ना स जात। एष एवंविधो विद्यासिद्ध इति।

एगंमि णयरे उक्किट्ठसरीरा रण्णा त्रिसयलोलुएण संयई गहिया, संघसमवाए एगेण मंतसिद्धेण रायंगणे खंभा अच्छंति ते अभिमंतिया, आगासेणं उप्पाइया खडखडिंति, पासायखंभावि चलिया, भीएण मुक्का संघो खामिओ। एसेवंविहो मंतसिद्धोत्ति भण्णइ ॥ साम्प्रतं सदृष्टान्तं योगसिद्धं प्रतिपिपादयिषुराह—

सव्वेवि दव्वजोगा परमच्छेरयफलाऽहवेगोऽवि। जस्सेह हुज्ज सिद्धो स जोगसिद्धो जहा समिओ ॥ ९३४ ॥

व्याख्या—'सर्वेऽपि' कार्त्स्न्येन द्रव्ययोगाः 'परमाश्चर्यफलाः' परमाद्भुतकार्याः, अथवैकोऽपि यस्येह भवेत् सिद्धः स योगसिद्धः, योगेषु योगे वा सिद्धो योगसिद्ध इति, सातिशय एव, (यथा) समिता इति गाथाक्षरार्थः ॥ ९३४ ॥ भावार्थः कथानकगम्यः, तच्चेदम्–आभीरविसए कण्हा(ण्णा)ए वेन्नाए य णईए अंतरे तावसा परिवसंति, तत्थेगो पादुगालेवेणं पाणिये चक्कमंतो भमइ एति जाइ य, लोगो आउट्टो, सड्ढा हीलिज्जंति, अज्जसमिया वइरसामिस्स माउलगा विहरंता आगया, सड्ढा उवट्ठिया अकिरियत्ति, आयरिया नेच्छंति, भणंति–अज्जो! किन्न ठाह?, एस जोगेण केणवि मक्खेइ, तेहिं अट्ठापयं रुद्धं, आणीओ, अम्हेऽवि दाणं देमुत्ति, अह सो सावगो भणइ–भगवं! पाया धोवंतु, अम्हेवि अणुग्गहिया होमो

१ एकस्मिन् नगरे उत्कृष्टशरीरा राज्ञा विषयलोलुपेन संयती गृहीता, संघसमवाये एकेन सिद्धमन्त्रेण राजाङ्गणे स्तम्भास्तिष्ठन्ति तेऽभिमन्त्रिता आकाशेनोत्पाटिता खटत्कारं कुर्वन्ति, प्रासादस्तम्भा अपि चलिता, भीतेन मुक्ता संघ क्षामित। एष एवंविधो मन्त्रसिद्ध इति भण्यते। २ आभीरविषये कृष्णा(कन्या)या वेन्नायाश्च नद्योरन्तरा तापसा परिवसन्ति, तत्रैक पादुकालेपेन पानीये चंक्रम्यमाणो भ्राम्यति आयाति याति च, लोक आवर्जित, श्राद्धा हील्यन्ते, आर्यसमिता वज्रस्वामिनो मातुला विहरन्त आगता, श्राद्धा उपस्थिता अक्रियेति, आचार्या नेच्छन्ति, भणन्ति–आर्या! किं न प्रतीक्षध्वम्?, एष योगेन केनापि म्रक्षयति, तैरर्धपद रुद्धम्, आनीत, वयमपि दानं दद्म इति, अथ स श्रावको भणति–भगवन्! पादौ प्रक्षालयत, वयमप्यनुगृहीता भवाम,

अनिच्छंतस्स पाया पाउगाओ य धोयाओ, गओ पाणिए निव्वुड्डो, उक्किट्ठी कया, एवं डंभएहिं लोगो खज्जइत्ति, आयरिया निग्गया, जोगं पक्खित्ता णई भणिया–हे विन्ने! तटा देहि एहि पुत्ता! परिमं कूलं जामि, दोवि तडा मिलिया, गया, ते तावसा पव्वइया बंभदीवगवत्थव्वा बंभदीवगा जाया। एस एवंविहो जोगसिद्धोत्ति ॥ अधुनाऽऽगमार्थसिद्धौ प्रतिपादयति—

आगमसिद्धो सव्वंगपारओ गोअमुव्व गुणरासी। पउरत्थो अत्थपरो व मम्मणो अत्थसिद्धत्ति ॥ ९३५ ॥

व्याख्या—आगमसिद्धः 'सर्वाङ्गपारगः' द्वादशाङ्गविदितभावः, अयं च महातिशयवानिति, यत उक्त–'संखाइए उ भवे साहइ ज वा परो उ पुच्छिज्जा। न य णं अणाइसेसी वियाणई एस छउमत्थो ॥ १ ॥' इत्यादि, अयं च गौतम इव गुणराशिरिति। अत्र च भूयांसि सातिशयचेष्टितान्युदाहरणानीति, तथा 'प्रचुरार्थः' प्रभूतार्थः अर्थपरो वा, तन्निष्ठ इत्यर्थः, अर्थसिद्ध इति तदतिशययोगादेव, मम्मणवदिति गाथाक्षरार्थः ॥ ९३५ ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्–तत्थागमसिद्धो किर सयंभुरमणेऽवि मच्छगाईया। जं चिट्ठंति स भगवं उवउत्तो जाणई तयंपि ॥ १ ॥ अत्थसिद्धो पुण रायगिहे

१ अनिच्छत पादौ पादुके च धौते, गत पानीये निमूडित, उत्कृष्टि (निन्दा) कृता, एव दम्भै लोक खाद्यत इति, आचार्या निर्गता, योग प्रक्षिप्य नदी भणिता–हे बेन्ने! तटमर्पय एहि पुत्रि! पूर्व कूलं यामि, द्वावपि तटौ मिलितौ, गता, ते तापसा प्रव्रजिता ब्रह्मद्वीपवास्तव्या ब्रह्मद्वीपका जाता। एष एवंविधो योगसिद्ध इति। २ संख्यातीतांस्तु भवान्कथयति यद्वा परस्तु पृच्छेत्। नैवानतिशयी विजानाति एष छद्मस्थ ॥ १ ॥ ३ तत्रागमसिद्ध किल स्वयम्भूरमणेऽपि मत्स्याद्या। यच्चेष्टयन्ति स भगवानुपयुक्तो जानाति तकदपि ॥ १ ॥ अर्थसिद्ध पुना राजगृहे * कलकलः + देहीसन्त्र व प्र०

णयरे मम्मणोत्ति, तेण महया किलेसेण अइबहुगं दविणजायं मेलियं, सो तं ण खायइ ण पिवइ, पासाउवरिं चडणेण अणेगकोडिनिम्मायगब्भसारो कंचणमओ दिव्वरयणपज्जत्तो वरवइरसिंगो महंतो एगो वलद्दो काराविओ, बीओ य आढत्तो, सोऽवि बहुनिम्माओ, एत्थंतरंमि वासारत्ते तस्स निम्मावणनिमित्तं सो कच्छोट्टगबिइज्जो णईपूराओ कट्ठविरूढगो कट्ठाणि य उत्तारेइ। इओ य राया देवीए सह ओलोयणगओ अच्छइ, सो तहाविहो अईव करुणालंबणभूओ देवीए दिट्ठो, तओ तीए सामरिसं भणियं—सच्चं सुव्वइ एयं मेहनइसमा हवंति रायाणो। भरियाइं भरेंति दढं रित्तं जत्तेण वज्जेइ॥ १॥ रण्णा भणियं—किह वा?, तीए भणियं—जं एस दमगो किलिस्सइ, रण्णा सद्दाविओ भणिओ य—किं किलिस्ससि?, तेण भणियं—वलद्दसंघाडगो मे ण पूरिज्जइ, रण्णा भणियं—वलद्दसयं गेण्ह, तेण भणियं—ण मे तेहिं कज्जं, तस्सेव बितिज्जं पूरेह, केरिसो सोत्ति घरं नेऊण दरिसिओ, रण्णा भणियं—सव्वभंडारेणवि न पूरिज्जइ इमो, ता एत्तिगस्स विभवस्स अलं ते तिण्हाएत्ति,

१ नगरे मम्मण इति, तेन महता क्लेशेनातिबहुक द्रव्यजात मिलित, स तन्न खादति न पिबति, प्रासादस्योपरि चानेनानेककोटीनिर्मितगर्भसार काञ्चनमयो दिव्यरत्नपर्याप्तो वरवज्रशृङ्गो महान् एको बलीवर्द कारित, द्वितीयश्च आरब्ध, सोऽपि बहुनिर्मात', अत्रान्तरे वर्षारात्रे तस्य निर्माणनिमित्त स कच्छोट्टद्वितीयो नदीपूरात् काष्ठविरूढ काष्ठान्येवोत्तारयति। इतश्च राजा देव्या सहावलोकनगतस्तिष्ठति, स तथाविधोऽतीव करुणालम्बनभूतो देव्या दृष्ट, ततस्तया सामर्ष भणित—सत्य श्रूयते एतत्—मेघनदीसमा भवन्ति राजान। भृतानि भरन्ति दढ रिक्त यत्नेन वर्जयन्ति॥ १॥ राज्ञा भणित—कथ वा?, तया भणित—यदेष द्रमक क्लिश्यते, राज्ञा शब्दितो भणितश्च—किं क्लिश्यसे?, तेन भणित—बलीवर्दसंघाटको मे न पूर्यते, राज्ञा भणित—बलीवर्दशत गृहाण, तेन भणित—न मे तै कार्यं, तस्यैव द्वितीय पूरय, कीदृश स इति गृह नीत्वा दर्शितः, राज्ञा भणित—सर्वभाण्डागारेणापि न पूर्यते अय, तावदेतावतो विभवस्य (स्थान), अल तव तृष्णयेति.

तेणं भणियं—जावेसो न पूरिओ ताव मे न सुहं, आरद्धो य उवाओ पेसियाणि दिसासु भंडाणि आढत्ताओ किसीओ आढत्ताणि गयतुरयसंडपोसणाणि, रण्णा भणियं—जइ एवं ता किं थेवस्स कए किलिस्ससि?, तेण भणियं—किलेससहं मे सरीरं वावारंतरं चेयाणि नत्थि महग्घाणि य वासारत्ते दारुगाणित्ति निव्वहियव्वा य पइण्णत्ति अओ करेमित्ति, रण्णा भणियं—पुज्जंतु ते मणोरहा, तुमं चेव बितिज्जगं पूरिउं समत्थो न पुण अहंति निग्गओ, तेण कालेण पूरिओ। एस एवंविहो अत्थसिद्धोत्ति॥ साम्प्रतं यात्रादिसिद्धप्रतिपादनायाऽऽह—

जो निच्चसिद्धजत्तो लद्धवरो जो व तुंडियाइव्व। सो किर जत्तासिद्धोऽभिप्पाओ बुद्धिपज्जाओ॥ ९३६॥

व्याख्या—यो नित्यसिद्धयात्रः, किमुक्तं भवति?—स्थलजलचारिपथेषु सदैवाविसंवादितयात्र इति, लब्धवरो यो वा तुण्डिकादिवत्, स किल यात्रासिद्ध इति। उत्तरद्वारानुसम्बन्धनायाऽऽह—अभिप्रायः बुद्धिपर्याय इति गाथाक्षरार्थः॥९३६॥ भावार्थस्त्वाख्यानगोचर', तच्चेदम्—पढमं ताव जो किर बारस वाराओ समुद्दं ओगाहित्ता कयकज्जो आगच्छइ सो जत्तासिद्धो, तं अन्नेऽवि जन्तगा जत्तासिद्धिनिमित्तं पेच्छंति। एगंमि य गामे तुंडिगो वाणियगो, तस्स

१ तेन भणित—यावदेष न पूर्यते तावन्न मे सुख, आरब्धश्चोपाय प्रेषितानि दिक्षु भाण्डानि आरब्धा. कृषय आरब्धानि गजतुरगपण्डपोषणानि, राज्ञा भणित यद्येव तत्किं स्तोकस्य कृते क्लिश्यसि?, तेन भणित—क्लेशक्षम मे शरीर व्यापारान्तरं चेदानीं नास्ति महार्घाणि च वर्षारात्रे दारूणीति निर्व्यूहितव्याऽपि च प्रतिज्ञेत्यत करोमि, राज्ञा भणित—पूर्यन्ता ते मनोरथा, त्वमेव द्वितीयक पूरयितु समर्थ न पुनरहमिति निर्गत, तेन कालेन पूरित। एष एवंविधोऽर्थसिद्ध इति। २ प्रथम तावद्य किल द्वादश वारा समुद्रमवगाह्य कृतकार्य आगच्छति स यात्रासिद्ध, तमन्येऽपि यान्त यात्रासिद्धिनिमित्त पश्यन्ति। एकस्मिंश्च ग्रामे तुण्डिको वणिक्, तस्य

सयसहस्सवाराओ वहणं फुट्टं, तहावि न भज्जइ, भणइ य—जले नट्ठं जले चेव लब्भइ, सयणाइएहिवि दिज्जमाणं नेच्छइ, पुणो पुणो तं तं भंडं गहाय गच्छइ, निच्छएण से देवया पसन्ना, खद्धं खद्धं दव्वं दिन्नं, भणिओ य—अन्नंपि किं ते करेमि?, तेण भणियं—जो मम नामेण समुद्दं ओगाहइ सो अविवन्नो एउ, तहत्ति पडिसुयं, एवेस जत्तासिद्धो। अन्ने भणंति—किर निज्जामगस्स वासुलओ समुद्दे पडिओ, सो तस्स कए समुद्दं उलंचिउमाढत्तो, तओ अनिव्विण्णस्स देवयाए वरो दिन्नोत्ति॥ कृतं प्रसङ्गेन, साम्प्रतमभिप्रायसिद्धं प्रतिपादयन्नाह—

विउला विमला सुहुमा जस्स मई जो चउव्विहाए वा। बुद्धीए संपन्नो स बुद्धिसिद्धो इमा सा य॥ ९३७॥

व्याख्या—'विपुला' विस्तारवती एकपदेनानेकपदानुसारिणी 'विमला' संशयविपर्ययानध्यवसायमलरहिता 'सूक्ष्मा' अत्यन्तदु'खावबोधसूक्ष्मव्यवहितार्थपरिच्छेदसमर्था 'यस्य मतिः' इति यस्यैवंभूता बुद्धिः स बुद्धिसिद्ध इति, यश्चतुर्विधया वा औत्पत्तिक्यादिभेदभिन्नया बुद्ध्या सम्पन्नः स बुद्धिसिद्धो वर्तते, इयं च सा चतुर्विधा बुद्धिरिति गाथार्थः॥ ९३७॥

उप्पत्तिआ १ वेणइआ २, कंमिया ३ पारिणामिआ ४। बुद्धी चउव्विहा वुत्ता, पंचमा नोवलब्भए॥ ९३८॥

१ शतसहस्रवारा प्रवहण भग्न, तथाऽपि न विरमति, भणति च—जले नष्ट जले चैव लभ्यते, स्वजनादिभिरपि दीयमान नेच्छति, पुन पुनस्तत्तद्भाण्ड गृहीत्वा गच्छति, निश्चयेन तस्य देवता प्रसन्ना, प्रचुर प्रचुर द्रव्य दत्त, भणितश्च—अन्यदपि किं तव करोमि?, तेन भणित—यो मम नाम्ना समुद्रमवगाहते सोऽविपन्न आयातु, तथेति प्रतिश्रुतं, एवमेष यात्रासिद्ध। अन्ये भणन्ति—किल निर्यामकस्य वासुल समुद्रे पतित, स तस्य कृते समुद्र रिक्तीकर्तुमारब्ध, ततोऽनिर्विण्णाय देवतया वरो दत्त इति।

व्याख्या—उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी, आह-क्षयोपशमः प्रयोजनमस्याः, सत्यं, किन्तु स खल्वन्तरङ्गत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रकर्माभ्यासादिकमपेक्षत इति १, विनयः—गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी २, अनाचार्यकं कर्म साचार्यकं शिल्पं, कादाचित्कं वा कर्म शिल्पं नित्यव्यापारः, 'कर्मजा' इति कर्मणो जाता कर्मजा ३, परि—समन्तान्नमनं परिणामः—सुदीर्घकालपूर्वापरार्थावलोकनादिजन्य आत्मधर्म इत्यर्थः स कारणमस्यास्तत्प्रधाना वा पारिणामिकी ४, बुध्यतेऽनयेति—बुद्धिः—मतिरित्यर्थः, सा च चतुर्विधोक्ता तीर्थकरगणधरैः, किमिति ?, यस्मात् पञ्चमी नोपलभ्यते केवलिनाऽप्यसत्त्वादिति गाथार्थः ॥ औत्पत्तिक्या लक्षणं प्रतिपादयन्नाह—

पुव्वमदिट्ठमस्सुअमवेइअ तक्खणविसुद्धगहिअत्था । अव्वाहयफलजोगिणि बुद्धी उप्पत्तिआ नाम ॥ ९३९ ॥

व्याख्या—'पूर्वम्' इति बुद्ध्युत्पादात् प्राक् स्वयमदृष्टोऽन्यतश्चाश्रुतः 'अवेदितः' मनसाऽप्यनालोचितः तस्मिन्नेव क्षणे विशुद्धः—यथावस्थितः गृहीतः—अवधारितः अर्थः—अभिप्रेतपदार्थो यया सा तथा, इहैकान्तिकमिहपरलोकाविरुद्धं फलान्तराबाधितं वाऽव्याहतमुच्यते, फलं—प्रयोजनम्, अव्याहतं च तत्फलं च अव्याहतफलं योगोऽस्या अस्तीति योगिनी अव्याहतफलेन योगिनी अव्याहतफलयोगिनी, अन्ये पठन्ति—अव्याहतफलयोगा, अव्याहतफलेन योगो यस्याः साऽव्याहतफलयोगा बुद्धिः औत्पत्तिकी नामेति गाथार्थः ॥ साम्प्रतं विनेयजनानुग्रहायास्या एव स्वरूपप्रतिपादनार्थमुदाहरणानि प्रतिपादयन्नाह—

भरहसिल १ पणिअ* २ रुक्खे ३ खुड्डग+ ४ पड ५ सरड ६ काग ७ उच्चारे ८ ।
गय ९ घयण १० गोल ११ खंभे १२, खुड्डग १३ मग्गित्थि १४ पइ १५ पुत्ते १६ ॥ ९४० ॥

---

* पण + मुद्रिका.

भरहसिल १ मिढ २ कुक्कुड ३ तिल ४ वालुअ ५ हत्थि ६ अगड ७ वणसंडे ८ ।
पायस ९ अइआ १० पत्ते ११ खाडहिला १२ पंचपिअरो अ १३ ॥ ९४१ ॥
महुसित्थ १७ मुद्दि १८ अंके १९ अ नाणए २० भिक्खु २१ चेडगनिहाणे २२ ।
सिक्खा य २३ अत्थसत्थे २४ इच्छा य महं २५ सयसहस्से २६ ॥ ९४२ ॥

व्याख्या—आसामर्थः कथानकेभ्य एवावसेयः, तानि चामूनि—उज्जेणीए णयरीए आसन्नो गामो णडाणं, तत्थेगस्स णडस्स भज्जा मया, तस्स य पुत्तो डहरओ, तेण अन्ना आणीया, सा तस्स दारगस्स न वट्टइ, तेण दारएण भणियं—मम लट्ठं न वट्टसि, तहा ते करेमि जहा मे पाएसु पडिसित्ति, तेण रत्तिं पिया सहसा भणिओ—एस गोहो एस गोहोत्ति, तेण नायं—मम महिला विणट्ठत्ति सिढिलो रागो जाओ, सा भणइ—मा पुत्ता ! एवं करेहि, सो भणइ—मम लट्ठं न वट्टसि, भणइ—वट्टीहामि, ता लट्ठं करेमि, सा वट्टिउमारद्धा, अन्नया छाहीए चेव एस गोहो एस गोहोत्ति भणित्ता कहिंति पुट्ठो य छाहिं दंसेइ, तओ से पिया लज्जिओ, सोऽवि एवंविहोत्ति तीसे घणरागो जाओ, सोऽवि विसभीओ पियाए समं जेमेइ। अन्नया

---

१ उज्जयिन्या नगर्या आसन्नो ग्रामो नटाना, तत्रैकस्य नटस्य भार्या मृता, तस्य च पुत्रो लघुः, तेनान्याऽऽनीता, सा तस्मिन् दारके न (सुष्ठु) वर्त्तते, तेन दारकेण भणित—मयि लष्टा न वर्त्तसे, तथा तव करिष्यामि यथा मे पादयो पतिष्यसीति, तेन रात्रौ पिता सहसा भणित —एषोऽधम एषोऽधम (गोध.), तेन ज्ञात—मम महिला विनष्टेति श्लथो रागो जात, सा भणति—मा पुत्र ! एव कार्षी, स भणति—मयि सुन्दरा न वर्त्तसे, भणति—वर्त्स्ये, तदा लष्टं करोमि, सा वर्त्तितुमारब्धा, अन्यदा छायायामेवैष गोध एष गोध इति भणित्वा केति पृष्टश्च छायां दर्शयति, ततस्तस्य पिता लज्जित, सोऽपि एवंविध इति तस्यां घनरागो जात, सोऽपि विषभीत. पित्रा सम जेमति । अन्यदा

पिउणा सह उज्जेणिं गओ, दिट्ठा णयरी, निग्गया पियापुत्ता, पिया से पुणोऽवि अइगओ ठवियगस्स कस्सइ, सोवि सिप्पाणईए पुलिणे उज्जेणीणयरीं आलिहइ, तेण णयरी सच्चच्चरा लिहिया, तओ राया एइ, राया वारिओ, भणइ—मा राउलघरस्स मज्झेणं जाहि, तेण कोउहल्लेण पुच्छिओ—*सच्चच्चरा कहिया, कहिं वससि ?, गामेत्ति, पिया से आगओ । राइणो य एगूणगाणि पंचमंतिसयाणि, एक्कं मग्गइ, जो य सव्वप्पहाणो होज्जत्ति, तस्स परिक्खणनिमित्तं तं गामं भणावेइ, जहा—तुब्भं गामस्स वहिया महल्ली सिला तीए मंडवं करेह, ते अद्दण्णा, सो दारओ रोहओ छुहाइओ, पिया से अच्छइ गामेण समं, ओसूरे आगओ रोयइ—अम्हे छुहाइया अच्छामो, सो भणइ—सुहिओऽसि, किह ?, कहियं, भणइ—वीसत्था अच्छह, हेट्ठओ खणह खंभे य देह थोवं थोवं भूमी कया, तओ उवलेवणकओवयारे मंडवे कए रण्णो निवेइयं, केण कयं ?, रोहएण भरहदारएणं । एसा एयस्स उप्पत्तिया बुद्धी । एवं सव्वेसु जोएज्जा। तओ तेसिं रण्णा मेढओ पेसिओ, भणिया य—एस पक्खेण

---

१ पित्रा सममुज्जयिनीं गत, दृष्टा नगरी, निर्गतौ पितापुत्रौ, पिता तस्य पुनरपि अतिगतो विस्मृताय कस्मैचित्, सोऽपि शिप्रानद्या पुलिने उज्जयिनीं नगरीमालिखति, तेन नगरी स चत्वरा (सान्त पुरा) आलिखिता, तत राजाऽऽयात, राजा निवारित, भणति—मा राजकुलगृहस्य मध्येन यासी, तेन कौतूहलेन पृष्ट—स चत्वरा कथिता, क्व वससि ?, ग्राम इति, पिता तस्यागत । राज्ञश्चैकोनानि पञ्चमन्त्रिशतानि एक मार्गयति, यश्च सर्वप्रधानो भवेदिति, तस्य परीक्षणनिमित्त त ग्राम भाणयति—यथा युष्माक ग्रामस्य बहिष्टात् महती शिला तस्या मण्डप कुरुत, तेऽधृतिमुपगता, स दारको रोहक क्षुधित, पिता तस्य तिष्ठति ग्रामेण सम, उत्सूर्ये आगतो रोदिति—वय क्षुधितास्तिष्ठाम, स भणति—सुखितोऽसि, कथ ?, कथित, भणति—विश्वस्तास्तिष्ठत, अधस्तात् खनत स्तम्भाश्च दत्त स्तोक स्तोक भूमि कृता, तत कृतोपलेपनोपचारे मण्डपे कृते राज्ञे निवेदित, केन कृत ?, रोहकेण भरतदारकेन । एषैतस्यौत्पत्तिकी बुद्धि । एव सर्वेषु योजयेत् । ततस्तेषां राज्ञा मेष प्रेषित, भणिताश्च—एष पक्षेण—* किमेव तए आलिहिय ?, किं वा राउल ?, तेण णगरी ( प्रत्य० अधिकं )

एत्तिओ चेव पच्चप्पिणेयव्वो ण दुव्वलयरो नावि वलियरोत्ति, तेहिं भरहो पुच्छिओ–तेण विरूवेण समं बंधाविओ जवसं दिन्नं, तं चरन्तस्स ण हायइ वलं विरूवं च पेच्छंतस्स भएण ण वहुइ। एवं कुक्कुडओ अद्दाएण समं जुज्झाविओ। तिलसमं तेल्लं दायव्वंति तिला अद्दाएण मविया। वालुगावरहओ–पडिच्छंदं देह। हत्थिमि जुन्नहत्थी गामे छूढो, हत्थी अप्पाउओ मरिहितित्ति अप्पिओ मउत्ति ण निवेइयव्वं, दिवसदेवसिया य से पउत्ती दायव्वत्ति, अदाणेवि निग्गहो, सो मओ, ते अद्दण्णा, भरहसुयवयणेण निवेइयं जहा–सो अज्ज हत्थी ण उट्ठेइ न णिसीयइ ण आहारेइ ण णीहारेइ ण ऊससइ ण नीससइ एवमाई, रण्णा भणियं–किं मओ?, तुब्भे भणहत्ति। अगडे आरण्णओ आगंतु ण तीरइ नागरं देह। वणसंडे पुव्वं पासं गओ गामो। परमन्नं करीसओण्हाए पलालुण्हाए यत्ति। तओ रण्णा एवं परिक्खिऊण पच्छा समाइट्ठं, जहा तेणेव दारएणागंतव्वं, तं पुण ण सुक्कपक्खे ण कण्हपक्खे ण राइं न दिवसे ण छायाए ण उण्हेणं ण छत्तेणं ण आगासेणं ण पाएहिं ण जाणेणं ण

---

१ यन्मान एव प्रत्यर्पणीयो न दुर्बलतरो नापि वलिष्ठ इति, तैर्भारत पृष्टः–तेन विरूपेण (वृकेण) सम वन्धितो यवस दत्त, त चरतो न हीयते वल वृक च पश्यतो भयेन न वर्धते। एव कुर्कुट आदर्शेन सम योधित। तिलसम तैल दातव्यमिति तिला आदर्शेन मापिता। वालुकादवरक.–प्रतिच्छन्द दत्त। हस्तिनि–जीर्णहस्ती ग्रामे क्षिप्त', हस्ती अल्पायुरिति मरिष्यतीत्यर्पितः मृत इति न निवेदितव्य, दिवसदैवसिकी च तस्य प्रवृत्तिर्दातव्येति, अदानेऽपि निग्रह, स मृत, ते अधृतिमुपगता, भरतसुतवचनेन निवेदित यथा–सोऽद्य हस्ती नोत्तिष्ठते न निषीदति नाहारयति न नीहारयति नोच्छ्वसिति न नि श्वसिति एवमादि, राज्ञा भणित–किं मृतः?, यूय भणतेति। अवट आरण्यको नागन्तु शक्नोति नागर दत्त। वनखण्डे पूर्वस्मिन् पार्श्वे गतो ग्राम। परमान्न करीषोष्मणा पलालोष्मणा चेति। ततो राज्ञा एव परीक्ष्य पश्चात्समादिष्ट यथा–तेनैव दारकेणागन्तव्य, तत्पुनर्न शुक्लपक्षे न कृष्णपक्षे न रात्रौ न दिवा न छायया नोष्णेन न छत्रेण नाकाशेन न पादाभ्यां न यानेन न

---

¹पंथेणं ण उप्पहेणं ण ण्हाएणं ण मलिणेणंति, तओ तस्स निवेइयं, पच्छा अंगोहलिं काऊण चक्कमज्झभूमीए एडगारूढो चालणीनिमिउत्तिमंगो, अण्णे भणंति–सगडलट्टणीपएसवद्धओ छाइयपडगेणं संझासमयंमि अमावासाए सन्धीए आगओ नरिंदपासं, रण्णा पूइओ, आसन्नो य सो ठिओ, पढमजामविबुद्धेण य रण्णा सद्दाविओ, भणिओ य–सुत्तो? जग्गसि?, भणइ–सामि! जग्गामि, किं चिंतेसि?, भणइ–असोत्थपत्ताणं किं दंडो महल्लो उयाहु से सिहत्ति? रण्णा चिंतियं–साहु, एवं पच्छा पुच्छिओ भणइ–दोवि समाणि, एवं वीयजामे छगलियाओ लेंडियाओ वाएण, ततिए खाडहिलाए जत्तिया पंडरारेहा तत्तिया कालगा जत्तियं पुच्छं तद्दहमित्तं सरीरं, चउत्थे जामे सद्दाविओ वायं न देइ, तेण कंवियाए छिक्को, उट्ठिओ, राया भणइ–जग्गसि सुयसि?, भणइ–जग्गामि, किं करेसि?, चिंतेमि, किं?, कइहिं सि जाओ, कइहिं?, पंचहि, केण केण?, रण्णा वेसमणेणं चंडालेणं रयएणं विच्छुएणं, मायाए निवंधेण पुच्छिए कहियं, सो पुच्छिओ भणइ–यथा न्यायेन

---

१ पथा नोत्पथेन न स्नातेन न मलिनेनेति, ततस्तस्मै निवेदित, पश्चादङ्गरूक्षण (देशस्नान) कृत्वा चक्रमध्यभूमावेडकारूढश्चालनीनिर्मितोत्तमाङ्ग, अन्ये भणन्ति–शाकटलट्टनी (कट) प्रदेशबद्ध छादित पटेन सध्यासमयेऽमावास्याया सन्ध्यायामागतो नरेन्द्रपार्श्वे, राज्ञा पूजित, आसन्नश्च स स्थित, प्रथमयामविबुद्धेन च राज्ञा शब्दित, भणितश्च–सुप्तो जागर्षि?, भणति–स्वामिन्! जागर्मि, किं चिन्तयसि?, भणति–अश्वत्थपत्राणां किं दण्डो महान् उत तस्य शिखेति, राज्ञा चिन्तित–साधु, एव पश्चात्पृष्टो भणति–द्वे अपि समे, एव द्वितीययामे छागलिका लिण्डिका वातेन, तृतीये खाडहिलाया यावत्य पाण्डुरारेखा तावत्य कृष्णा यावन्मात्र पुच्छ तावन्मात्र शरीर, चतुर्थे यामे शब्दितो वाच न ददाति, तेन कम्बिकया हत, उत्थितो, राजा भणति–जागर्षि स्वपिषि?, भणति–जागर्मि, किं करोषि?, चिन्तयामि, किं?, कतिभिर्जातोऽसि?, कतिभि?, पञ्चभि, केन केन?, राज्ञा वैश्रमणेन चाण्डालेन रजकेन वृश्चिकेन, मात्रा निर्बन्धेन पृष्टया कथित, स पृष्टो भणति–यथा न्यायेन

---

राज्यं पालयसि तो णज्जसि जहा रायपुत्तोत्ति, वेसमणो दाणेणं, रोसेणं चंडालो, सव्वस्सहरणेणं रयओ, जं च वीसत्थसुत्तंपि कंवियाए उट्ठवेसि तेण विच्छुओत्ति, तुट्ठो राया, सव्वेसिं उवरिं ठविओ, भोगा य से दिण्णा। एयस्स उप्पत्तिगा वुद्धित्ति॥ पणियए दोहिं पणियगं वद्धं, एगो भणइ–जो एयाओ लोमसियाओ खाइ तस्स तुमं किं करेसि?, इयरो भणइ–जो णयरदारेण मोयगो ण णीति तं देमि, तेण चक्खिय चक्खिय मवाओ मुक्काओ, जिओ मग्गइ, इयरो रूवगं देइ, सो नेच्छइ, दोन्नि य जाव सएणऽवि ण तूसइ, तेण जूयारा ओलग्गिया, दिन्ना वुद्धी, एगं पुवियावणे मोयगं गहाय इंदखीले ठवेहि, पच्छा भणेज्जासि–निग्गच्छ भो मोयगा! णिगच्छ, सो ण णिगच्छिहिति, तहा कयं पडिजिओ सो। एसा जूइकराणमुप्पत्तिया वुद्धी॥ रुक्खे फलाणि मक्कडा न देंति, पाहाणेहिं हया अम्बया दिन्ना, एसावि लेट्ठुगघेत्तयाणमुप्पत्तियत्ति॥ खुड्डगे पसेणई राया सुओ से सेणिओ रायलक्खणसंपुण्णो, तस्स किंचिवि ण देइ मा मारिज्जिहित्ति, अद्धितीए

---

१ राज्य पालयसि ततो ज्ञायसे यथा राजपुत्र इति, वैश्रमणो दानेन, रोषेण चाण्डाल, सर्वस्वहरणेन रजक, यच्च विश्वस्तसुप्तमपि कम्बिकया (अग्रेण) उत्थापयसि तेन वृश्चिक इति, तुष्टो राजा, सर्वेषामुपरि स्थापित, भोगाश्च तस्मै दत्ता। एषोत्पत्तिकी बुद्धिरिति। पणो–द्वाभ्यां पणो बद्ध, एको भणति–य एना-श्चिर्भटिका खादति तस्मै त्व किं करोषि?, इतरो भणति–यो नगरद्वारेण मोदको न निर्गच्छति त ददामि, तेन दष्ट्वा दष्ट्वा सर्वा मुक्ता, जितो मार्गयति, इतरो रूप्यक ददाति, स नेच्छति, द्वे च यावच्छतेनापि न तुष्यति, तेन द्यूतकारा अवलगिता, दत्ता बुद्धि, एक कान्दविकापणान्मोदक गृहीत्वा इन्द्रकीले स्थापय, पश्चाद् भणे–निर्गच्छ भो मोदक! निर्गच्छ, स न निर्गमिष्यति, तथा कृत, प्रतिजित स। एषा द्यूतकाराणामौत्पत्तिकी बुद्धि॥ वृक्षे फलानि मर्कटा न ददति, पाषाणैर्हता आम्रा दत्ता, एषापि लेष्टुकक्षेपकाणामौत्पत्तिकीति। क्षुद्रके–प्रसेनजित् राजा सुतस्तस्य श्रेणिको राजलक्षणसपूर्णः, तस्मै न किञ्चिदपि ददाति मा मीमरत (मार्येत) इति, अधृत्या

निग्गओ बेन्नायडमागओ कइवयसहाओ, खीणविभवसेट्ठिस्स वीहीए उवविट्ठो, तस्स य तप्पुण्णपच्चयं तद्दिवसं वासदेयभंडाणं विक्कओ जाओ खद्धं खद्धं विढत्तं, अन्ने भणंति—सेट्ठिणा रयणायरो सुमिणंमि घरमागओ नियकण्णं परिणेंतगो दिट्ठो, तओऽणेण चिंतियं—एईए पसाएण महई विभूई भविस्सति, पच्छा सो वीहीए उवविट्ठो, तेण तमणण्णसरिसाए आगईए दट्ठूण चिंतियं एसो सो रयणायरो भविस्सइ, तप्पहावेण याणेण मिलक्खुहत्थाओ अणग्घेज्जा रयणा पत्ता, पच्छा पुच्छिओ—कस्स तुब्भे पाहुणगा ?, तेण भणियं—तुज्झंति, घरं णीओ, कालेण धूया से दिण्णा, भोगे भुंजइ, कालेण य नंदाए सुमिणंमि धवलगयपासणं, आवण्णसत्ता जाया, पच्छा रण्णा से उट्टवामा विसज्जिया, सिग्घं एहित्ति, आपुच्छइ, अम्हे रायगिहे पंडरकुड्डगा पसिद्धा गोवाला, जइ कज्जं एहित्ति, गओ, तीए दोहलओ देवलोगचुयगब्भाणुभावेण वरहत्थिखंधगया अभयं सुणेज्जामित्ति, सेट्ठी दव्वं गहाय रण्णो उवट्ठिओ, रायाणएण गहियं, उग्घोसावियं च, जाओ, अभयओ णामं कयं, पुच्छइ—

१ निर्गत बेन्नातटमागत कतिपयसहाय', क्षीणविभवश्रेष्ठिनो वीथ्यामुपविष्ट, तस्य च तत्पुण्यप्रत्यय तद्दिवसे वर्षदेयभाण्डानां विक्रयो जात, प्रचुर प्रचुरमर्जित, अन्ये भणन्ति—श्रेष्ठिना रत्नाकर स्वप्ने गृहमागतो निजकन्यां परिणयन् दृष्ट, ततोऽनेन चिन्तितम्—एतस्या प्रसादेन महती विभूतिर्भविष्यति, पश्चात् स वीथ्यामुपविष्ट, तेन तमनन्यसदृशयाऽऽकृत्या दृष्ट्वा चिन्तित एष स रत्नाकरो भविष्यति, तत्प्रभावेण चानेन म्लेच्छहस्तात् अनर्घ्याणि रत्नानि प्राप्तानि, पश्चात्पृष्ट — कस्य यूय प्राघूर्णका ?, तेन भणित—युष्माकमिति, गृह नीत, कालेन दुहिता तस्मै दत्ता, भोगान् भुनक्ति, कालेन च नन्दया स्वप्ने धवलगजदर्शन, आपन्नसत्त्वा जाता, पश्चात् राज्ञा तस्मै उष्ट्री प्रेषिता, शीघ्रमेहीति, आपृच्छति, वय राजगृहे पाण्डुरकुड्या प्रसिद्धा गोपाला, यदि कार्यमागच्छेरिति, गत, तस्या दोहदो देवलोकच्युतगर्भानुभावेन वरहस्तिस्कन्धगता अभय शृणोमीति, श्रेष्ठी द्रव्य गृहीत्वा राज्ञ उपस्थितः, राज्ञा गृहीत, उद्घोषित च, जात, अभयो नाम कृत, पृच्छति—

मम पिया कहिंति ?, कहियं तीए, तत्थ वच्चामोत्ति सत्थेण समं (१०५००) वच्चंति, रायगिहस्स वहिया ठियाणि, गवेसओ गओ, राया मंतीं मग्गइ, कूवे खुड्डु (खुंड) गं पाडियं, जो गेण्हइ हत्थेण तडे संतो तस्स राया वित्तिं देइ, अभएण दिट्ठं, छाणेण आहयं, सुक्के पाणियं मुक्कं, तडे संतएण गहियं, रायाए समीवं गओ, पुच्छिओ—को तुमं ?, भणइ—तुज्झ पुत्तो, किह व किं वा ?, सव्वं परिकहियं, तुट्ठो उच्छंगे कओ, माया पवेसिज्जंती मंडेई, वारिया, अमच्चो जाओ, एसा एतस्स उप्पत्तिया बुद्धी ॥ पडे—दो जणा ण्हायंति, एगस्स दढो एगस्स जुन्नो, जुन्नइत्तो दढं गहाय पट्ठिओ, इयरो मग्गेइ, ण देइ, राउले ववहारो, महिलाओ कत्ताविआओ, ¹दिन्नो जस्स सो, अण्णे भणंति—सीसाणि ओलिहियाणि, एगस्स उन्नामओ एगस्स सोत्तिओ। कारणियाणमुप्पत्तिया बुद्धी ॥ सरडो—सन्नं वोसिरंतस्स सरडाण भंडंताण एगो तस्स अहिट्ठाणस्स हेट्ठा विलं पविट्ठो पुंछेण य छिक्को, घरं गओ, अद्धिईए दुब्बलो जाओ, विज्जो पुच्छिओ, जइ सयं देह, घडए सरडो छूढो लक्खाए

१ मम पिता क्वेति, कथित तया, तत्र व्रजाम इति सार्थेन सम व्रजन्ति, राजगृहस्य बहि स्थितानि, गवेषको गत, राजा मन्त्रिण मार्गयति, कूपे मुद्रिका पातिना, यो गृह्णाति हस्तेन तटे सन् तस्मै राजा वृत्तिं ददाति, अभयेन दृष्ट, छगणेन (गोमयेन) आहत, शुष्के पानीय मुक्त, तटे सता गृहीत राज्ञ समीप गत, पृष्ट—कस्त्व ?, भणति—तव पुत्र, कथ वा किं वा ?, सर्वं परिकथित, तुष्ट उत्सङ्गे कृत, माता प्रविशन्ती मण्डयति, वारिता, अमात्यो जात, एषैतस्यौत्पातिकी बुद्धि ॥ पटः—द्वौ जनौ स्नात, एकस्य दृढ एकस्य जीर्ण, जीर्णवान् दृढ गृहीत्वा प्रस्थित, इतरो मार्गयति, न ददाति, राजकुले व्यवहार, महिलाभ्यां कर्त्तन कारित, दत्तो यस्य य', अन्ये भणन्ति—शीर्षे अवलिखिते, एकस्योर्णामय एकस्य सौत्रिक। कारणिकाणामौत्पत्तिकी बुद्धि। सरट—सज्ञां व्युत्सृजत सरटयो कलहायमानयो एकस्तस्याधिष्ठानस्याधस्तात् बिल प्रविष्ट, पुच्छेन च स्पृष्ट, गृह गत, अधृत्या दुर्बलो जात, वैद्य पृष्ट, यदि शत ददासि, घटे सरट क्षिप्त' लाक्षया * सुत्ताणुसारेण जो जस्स पडो सो तस्स दिण्णो (प्र अधिक)। जस्स उण्णामओ पडो तस्स सीसा वण्णातन्तू विभिगाया जस्स सोत्तिओ तस्स सुत्ततन्तू (प्र अधिक)

विलिंपित्ता, विरेयणं दिन्नं, वोसिरियं, लट्ठो जाओ, वेज्जस्स उप्पत्तिया बुद्धी ॥ बितिओ सरडो—भिक्खुणा खुड्डगो पुच्छिओ—एस किं सीसं चालेई?, सो भणइ—किं भिक्खू भिक्खुणी वा ?, खुड्डगस्स उप्पत्तिया बुद्धी ॥ कागे—तच्चणिणएण चेल्लओ पुच्छिओ—अरहंता सव्वण्णू ?, वाढं, केत्तिया इहं काका ?, 'सट्ठि कागसहस्साइं जाइं बेन्नायडे परिवसंति। जइ ऊणगा पवसिया अब्भहिया पाहुणा आया ॥ १ ॥' खुड्डगस्स उप्पत्तिया बुद्धी ॥ बितिओ—वाणियओ निहिंमि दिट्ठे महिलं परिक्खइ—रहस्सं धरेइ न वत्ति, सो भणइ—पंडुरओ मम काको अहिट्ठाणं पविट्ठो, ताए सहज्जियाण कहियं, जाव रायाए सुयं, पुच्छिओ, कहियं, रन्ना से मुक्कं मंती य निउत्तो, एयस्स उप्पत्तिया बुद्धी ॥ ततिओ—विट्ठं विक्खरइ काओ, भागवओ खुड्डगं पुच्छइ—किं कागो विक्खरइ ?, सो भणइ—एस चिंतेति—किं एत्थ विण्हू अत्थि नत्थित्ति ?, खुड्डगस्स उप्पत्तिया बुद्धी ॥ उच्चारे—धिज्जाइयस्स भज्जा तरुणी गामंतरं निज्जमाणी धुत्तेण समं संपलग्गा, गामे ववहारो, विभत्ताणि

१ विलिप्य, विरेचन दत्त, व्युत्सृष्ट लष्टो जात, वैद्यस्य औत्पत्तिकी बुद्धि ॥ द्वितीय सरट—भिक्षुणा क्षुल्लक पृष्ट—एष किं शीर्षं चालयति ?, स भणति—किं भिक्षु भिक्षुकी वा ?, क्षुल्लकस्यौत्पत्तिकी बुद्धि. ॥ काक—तच्चनीकेन क्षुल्लक पृष्ट—आर्हता' सर्वज्ञा ?, बाढ, कियन्त इह काकाः ?,—'षष्टि काकसहस्रा ये बेन्नातटे परिवसन्ति। यदि न्यूना प्रोषिता अभ्यधिका प्राघूर्णका आयाता ॥ १ ॥' क्षुल्लकस्यौत्पत्तिकी बुद्धि। द्वितीयो—वणिक् निधौ दृष्टे महिलां परीक्षते—रहस्य बिभर्त्ति नवेति, स भणति—श्वेत मम काकोऽधिष्ठाने प्रविष्ट, तया सखीनां कथित, यावद्राज्ञा श्रुत, पृष्ट, कथित, राज्ञा तस्मै अर्पित मन्त्री च नियुक्त, एतस्यौत्पत्तिकी बुद्धि ॥ तृतीय—विष्ठां विकिरति काक, भागवत' क्षुल्लक पृच्छति—किं काको विकिरति ?, स भणति—एष चिन्तयति—किमत्र विष्णुरस्ति नास्तीति, क्षुल्लकस्यौत्पत्तिकी बुद्धि ॥ उच्चार—धिग्जातीयस्य नार्या तरुणी ग्रामान्तरं नीयमाना धूर्त्तेन सम संप्रलग्ना, ग्रामे व्यवहार, विभक्ते

जइ किवणत्तणेण कयं न एयस्स रज्जंति नियत्तामि, पच्चूसे भणइ-वच्चह तुब्भे, मम पुण सूलं कज्जइ न सक्कुणामि गंतुं कुमारेण भणियं-न जुत्तं तुमं मोत्तूण गंतुं, किं तु मा कोइ एत्थ मे* जाणेहित्ति तेण वच्चामो, पच्छा कुलपुत्तगघरं णीओ समप्पिओ, तं च सव्वं पेज्जामोल्लं दिन्नं, मंतिपुत्तस्स उवगयं जहा-सोंडीरयाएत्ति, भणियं चऽणेण-अत्थि मे विसेसो अओ गच्छामि, पच्छा गओ, कुमारेण रज्जं पत्तं, भोगावि से दिण्णा, एयस्स पारिणामिगी बुद्धी ॥ चाणक्को-गोल्लविसए चणयग्गामो, तत्थ य चणगो माहणो, सो य सावओ, तस्स घरे साहू ठिया, पुत्तो से जाओ सह दाढाहिं, साहूण पाएसु पाडिओ, कहियं च-राया भविस्सइत्ति, मा दुग्गइं जाइस्सइत्ति दंता घट्ठा, पुणोऽवि आयरियाणं कहियं, भणइ-किं कज्जउ ?, एत्ताहे बिंबंतरिओ भविस्सइ, उम्मुक्कबालभावेण चोद्दस विज्जाट्ठाणाणि आगमियाणि, सो य सावओ संतुट्ठो, एगाओ भद्दमाहणकुलाओ भज्जा से आणिया। अण्णया कम्हिवि कोउते माइघरं भज्जा से गया, केइ भणंति-भाइविवाहे गया,

१ यदि कृपणत्वेन कृत नैतस्य राज्यमिति निवर्त्ते, प्रत्यूषसि भणति-व्रजत यूय, मम पुन शूल क्रियते ( पीडयति ) न शक्नोमि गन्तु, कुमारेण भणित-न युक्त त्वां मुक्त्वा गन्तु, किन्तु मा कोऽप्यत्र मां ज्ञासीत् तेन व्रजाव, पश्चात्कुलपुत्रकगृह नीत समर्पित, तच्च सर्व पेया ( पोषण ) मूल्य दत्त, मन्त्रिपुत्रस्योपगत यथा-शौण्डीर्यणेति, भणित चानेन-अस्ति मे विशेष अतो गच्छामि, पश्चाद्गत., कुमारेण राज्य प्राप्त, भोगा अपि तस्मै दत्ता, एतस्य पारिणामिकी बुद्धि । चाणक्य -गोल्लविषये चणकग्राम, तत्र च चणको ब्राह्मण, स च श्रावक, तस्य गृहे साधव स्थिता, पुत्रस्तस्य जात सह दंष्ट्राभि, साधूनां पादयो पातित, कथित च-राजा भविष्यतीति, मा दुर्गतिं यासीदिति दन्ता घृष्टा, पुनरप्याचार्येभ्य कथित, भणति-किं क्रियताम्?, अधुना ( अत ) बिम्बान्तरितो (राजा) भविष्यति, उन्मुक्तबालभावेन चतुर्दश विद्यास्थानान्यागमितानि ( प्राप्तानि ), स च श्रावक सतुष्ट, एकस्मात् भद्रब्राह्मणकुलात् भार्या तस्यानीता । अन्यदा कस्मिंश्चित् कौतुके मातृगृह भार्या तस्य गता, केचिद्भणन्ति-भ्रातृविवाहे गता, * एगदाणे

तीसे य भगिणीओ अन्नेसिं खद्धादाणियाणं दिण्णेल्लियाओ, ताओ अलंकियविहूसियाओ आगयाओ, सव्वोऽवि परिगणो ताहिं समं संलवणति, सा एगंते अच्छइ, अद्धिई जाया, घरं आगया, ससोगा, निब्बंधे सिट्ठं, तेण चिंतिय-नंदो पाडलिपुत्ते देइ तत्थ वच्चामि, तओ कत्तियपुण्णिमाए पुव्वण्णत्थे आसणे पढमे णिसण्णो, तं च तस्स सव्वोपतियस्स सया ठविज्जइ, सिद्धपुत्तो य णंदेण समं तत्थ आगओ भणइ-एस बंभणो णंदवंसस्स छायं अक्कमिऊण ठिओ, भणिओ दासीए-भगवं! बितीए आसणे णिवेसाहि, अत्थु, बितिए आसणे कुंडियं ठवेइ, एवं ततिए दंडयं, चउत्थे गणित्तियं, पंचमे जण्णोवइयं, धिट्ठोत्ति निच्छूढो, पाओ उक्खित्तो, अण्णया य भणइ-'कोशेन भृत्यैश्च निबद्धमूलं, पुत्रैश्च मित्रैश्च विवृद्धशाखम्। उत्पाट्य नन्दं परिवर्तयामि महाद्रुमं वायुरिवोग्रवेग. ॥ १ ॥' निग्गओ मग्गइ पुरिसं, सुयं चऽणेण बिंबंतरिओ राओ होहामित्ति, नंदस्स मोरपोसगा, तेसिं गामं गओ परिव्वायगलिंगेणं, तेसिं च महत्तरधूयाए चंदपियणे दोहलो, सो

१ तस्याश्च भगिन्योऽन्येभ्यः प्रचुरादानीयाना ( धनाढ्येभ्य ) दत्ता, ता अलकृतविभूषिता आगता, सर्वोऽपि परिजनस्ताभि सम सलपति, सैकान्ते तिष्ठति, अधृतिर्जाता गृहमागता सशोका, निर्बन्धे शिष्ट, तेन चिन्तित-नन्द पाटलीपुत्रे ददाति तत्र व्रजामि, तत (तत्र) कार्त्तिकपूर्णिमायां पूर्वन्यस्ते आसन प्रथमे निषण्ण तच्च तस्य सदापि ( नन्दस्य ) सदा स्थाप्यते, सिद्धपुत्रश्च नन्देन सम तत्रागतो भणति-एष ब्राह्मण नन्दवंशस्य छायामाक्रम्य स्थित, भणितो दास्या-भगवन्! द्वितीय आसने उपविश, अस्तु, द्वितीये आसने कुण्डिकां स्थापयति, एव तृतीये दण्डक, चतुर्थे माला, पञ्चमे यज्ञोपवीत, धृष्ट इति निष्कासित, पाद ( प्रतिज्ञा ) उत्क्षिप्त ( मनसि स्थापिता ), अन्यदा च भणति-निर्गतो मार्गयति पुरुष, श्रुत चानेन बिम्बान्तरितो राजा भविष्यामीति, नन्दस्य मयूरपोषका, तेषां ग्राम गत परिव्राजकवेषेण, तेषां च महत्तरस्य दुहितु चन्द्रपाने दोहद, स * पाओ पढमो

समुदाणिंतो गओ, पुच्छंति, सो भणइ-जइ इमं मे दारगं देह तो णं पाएमि चंदं, पडिसुणेंति, पडमंडवे कए तद्दिवसं पुण्णिमा, मज्झे छिड्डुं कयं, मज्झगए चंदे सव्वरसालूहिं दव्वेहिं संजोएत्ता दुद्धस्स थालं भरियं, सद्दाविया पेच्छइ पियइ य, उवरि पुरिसो अच्छाडेइ, अवणीए जाओ पुत्तो, चंदगुत्तो से नामं कयं, सोऽवि ताव संवड्ढइ, चाणक्को य धाउबिलाणि मग्गइ। सो य दारगेहिं समं रमइ रायणीईए, विभासा, चाणक्को पडिएइ, पेच्छइ, तेणवि मग्गिओ-अम्हवि दिज्जउ, भणइ-गावीओ लएहिं, मा मारेज्जा कोई, भणइ-वीरभोज्जा पुहवी, णातं जहा विण्णाणंपि से अत्थि, पुच्छिओ-कस्सत्ति ?, दारएहिं कहियं-परिव्वायगपुत्तो एसो, अहं सो परिव्वायगो, जामु जा ते रायाणं करेमि, पलाओ, लोगो मिलिओ, पाडलिपुत्तं रोहियं। णंदेण भग्गो परिव्वायगो, आसेहिं पिट्ठीओ लग्गो, चंदगुत्तो पउमसरे निव्वुडो, इमो उपस्पृशति, सण्णाए भणइ-चोलीणोत्ति, अन्ने भणन्ति-चंदगुत्तं पउमिणीसरे छुभित्ता रयओ जाओ, पच्छा एगेण जच्चवल्हीककिसोरगएण-आसवारेण पुच्छिओ भणइ-एस पउमसरे निविट्ठो, तओ आसवारेण दिट्ठो, तओऽणेण घोडगो चाणक्कस्स अल्लितो;

१ भिक्षयन् गत, पृच्छन्ति, स भणति-यदि इम दारक मह्य दत्त तदैना पाययामि चन्द्र, प्रतिशृण्वन्ति, पटमण्डपे कृते तद्दिवसे पूर्णिमा, मध्ये छिद्र कृत मध्यगते चन्द्रे सर्वरसाढ्यैर्द्रव्यै सयोज्य दुग्धस्य स्थालो भृत, शब्दिता पश्यति पिबति च, उपरि पुरुष आच्छादयति, अपनीते ( दोहदे ) जात पुत्र, चन्द्रगुप्तस्तस्य नाम कृत, सोऽपि तावत्संवर्धते, चाणक्यश्च धातुवादान् (स्वर्णरसादिकान्) मार्गयति । स च दारकै सम रमते राजनीत्या, विभाषा, चाणक्य प्रत्येति, प्रेक्षते, तेनापि मार्गित -अस्माकमपि देहि, भणति-गा लाहि, मा मारिषि केनचित्, भणति-वीरभोग्या वसुन्धरा, ज्ञात यथा विज्ञानमप्यस्ति तस्य, पृष्ट -कस्येति?, दारकै कथित-परिव्राजकपुत्र एष, अह स परिव्राजक, याव यावत्त्वां राजान करोमि, पलायित, लोको मीलित, पाटलीपुत्र रुद्ध। नन्देन भग्न परिव्राजक, अश्वै पृष्ठतो लग्न, चन्द्रगुप्त पद्मसरसि ब्रुडित, अयमुपस्पृशति, सञ्ज्ञया भणति-(अश्ववारान्) व्यतिक्रान्त इति॥ अन्ये भणन्ति चन्द्रगुप्त पद्मिनीसरसि क्षिप्त्वा रजको जात, पश्चादेकेन जात्यवाह्लीककिशोरगतेनाश्ववारेण पृष्टो भणति-एष पद्मसरसि ब्रुडित, ततोऽश्ववारेण दृष्ट, ततोऽनेन घोटकश्चाणक्यायार्पित

खग्ग मुक्कं, जाव निगुडिउं जलोयरणट्ठयाए कंचुगं मिलइ, तावऽणेण खग्गं घेत्तूण दुहाकओ, पच्छा चंदगुत्तोहक्कारिय चडाविओ, पुणो पलाना, पुच्छिओऽणेण चंदगुत्तो–जं वेलं तंसि सिट्ठो तं वेलं किं तुमे चिंतियं?, तेण भणियं–धुवं एवमेव सोहणं भवइ, अज्जो चेव जाणइत्ति, तओऽणेण चिंतियं–जोगो एस न विपरिणमइत्ति। पच्छा चंदगुत्तो छुहाइओ, चाणक्को तं ठवेत्ता भत्तस्स अइगओ, बीहेइ य–मा एत्थ नज्जेज्जामो डोडस्स वाहिं निग्गयस्स पोट्टं फालियं, दहिकूरं गहाय गओ, जिमिओ दारओ। अण्णया अण्णत्थ गामे रत्तिं समुयाणेइ, थेरीए पुत्तगभंडाणं विलेवी वट्टिया, एक्केण मज्झे हत्थो छूढो, दड्ढो रोवइ, ताए भण्णइ–चाणक्कमंगलयं, पुच्छियं, भणइ–पासाणि पढमं घेप्पंति, गआ हिमवंतकूडं, पव्वइओ राया, तेण समं मित्तया जाया, भणइ–समं समेण विभजामो रज्जं, उपवेंताणं एगत्थ णयरं न पडइ, पविट्ठो तिदंडी, वत्थूणि जोएइ, इंदकुमारियाओ दिट्ठाओ, तासिं तणएण ण पडइ, मायाए णीणावियाओ, पडियं णयरं, पाडलिपुत्तं

१ राज्ञो मुक्त, यावत् शेष मुक्त्वा जलावतरणार्थाय कञ्चुक (अध परिधान) मुञ्चति, तावदनेन खड्ग गृहीत्वा द्विधाकृत, पश्चाच्चन्द्रगुप्त आहूयारोहित पुन पलायितौ, पृष्टोऽनेन चन्द्रगुप्त–यस्या वेलायां त्वमसि शिष्टस्तस्यां वेलायां किं त्वया चिन्तित?, तेन भणित–ध्रुवमेवमेव शोभन भविष्यति, आर्य एव जानातीति, ततोऽनेन चिन्तित–योग्य एष न विपरिणमत इति। पश्चात् चन्द्रगुप्त क्षुधार्त्त, चाणक्यस्त स्थापयित्वा भक्तायातिगत, बिभेति च–माऽत्र ज्ञायिष्महि महोदरस्य (भट्टस्य) बहिर्निर्गतस्योदरं पाटित, दधिकूर गृहीत्वा गत, जेमितो दारक। अन्यदा अन्यत्र ग्रामे रात्रौ भिक्षयति, स्थविरया पुत्रादीनां रब्बा परिवेषिता, एकेन मध्ये हस्त क्षिप्त, दग्धो रोदिति, तया भण्यते–चाणक्याख्यानकं (चाणक्यसदृश), पृष्ट, भणति–पार्श्वा प्रथम ग्राह्या, गतो हिमवत्कूट, पार्वतिको राजा, तेन सम मैत्री जाता, भणति–सर्वं समेन विभजावो राज्य, उपागच्छतो(लुण्टतो)रेकत्र नगरं न पतति, प्रविष्टस्त्रिदण्डी, वस्तूनि पश्यति, इन्द्रकुमार्यो दृष्टा, तासा सत्केन (प्रभावेण) न पतति, मायया अपनायिता, पतित नगर, पाटलीपुत्र † मोढोढ्वस्स

रोहियं, नंदो धम्मवारं मग्गइ, एगेण रहेण जं तरसि तं नीणाहि, दो भज्जाओ एगा कण्णा दव्वं च णीणेइ, कण्णा चंदगुत्तं पलोएइ, भणिया–जाहित्ति, ताहे विलग्गंतीए चंदगुत्तरहे णव अरगा भग्गा, तिदंडी भणइ–मा वारेहि, नवपुरिसजुगाणि तुज्झ वंसो होहित्ति, अइयओ, दोभागीकयं रज्जं। एगा कण्णगा विसभाविया, तत्थ पव्वयगस्स इच्छा जाया, सा तस्स दिण्णा, अग्गिपरियंचणे विसपरिगओ मरिउमारद्धो भणइ–वयंस! मरिज्जइ, चंदगुत्तो रुंभामित्ति ववसिओ, चाणक्केण भिउडी कया, णियत्तो, दोवि रज्जाणि तस्स जायाणि। नंदमणुसा चोरियाए जीवंति, चोरग्गाहं मग्गइ, तिदंडी वाहिरियाए नलदामं मुइंगमारणे दट्ठुं आगओ, रण्णा सद्दाविओ, आरक्खं दिण्णं, वीसत्था कया, भत्तदाणेण सकुडुंबा मारिया। आणाए–वंसीहिं अंवगा परिक्खित्ता, विवरीए रुट्ठो, पलीविओ सव्वो गामो, तेहिं गामीलएहिं कप्पडियत्ते भत्तं न दिण्णंतिकाउं। कोसनिमित्तं पारिणामिया बुद्धी–जूयं रमइ कूडपासएहिं, सोवण्णं थालं दीणाराणं भरियं, जो जिणइ तस्स एयं, अहं जीणामि एगो दीणारो दायव्वो। अइचिरंति अन्नं उवायं चिंतेइ, णागराण भत्तं देइ मज्जपाणं च, मत्तेसु

१ रुद्ध, नन्दो धर्मद्वार मार्गयति, एकेन रथेन यत् शक्नोषि तन्नय, द्वे भार्ये एका कन्या द्रव्य च नयति, कन्या चन्द्रगुप्त प्रलोकयति, भणिता–याहीति, तदा विलगन्त्या चन्द्रगुप्तरथे नवारका भग्ना, त्रिदण्डी भणति–मा निवारी, नव पुरुषयुगानि तव वशो भविष्यतीति, अतिगत, द्विभागीकृत राज्य। एका कन्या विषभाविता, तत्र पर्वतकस्येच्छा जाता, सा तस्मै दत्ता, अग्निप्रदक्षिणायां परिगतविषो मर्त्तुमारब्धो भणति–वयस्य! मरामि, चन्द्रगुप्तो रुणध्मि इति व्यवसित, चाणक्येन भृकुटीकृता, निवृत्त, द्वे अपि राज्ये तस्य जाते। नन्दमनुष्याश्चौरिकया जीवन्ति, चौरग्राह मार्गयति, त्रिदण्डी शाखापुरे नलदाम मत्कोटकमारक दृष्ट्वाऽऽगत, राज्ञा शब्दित, आरक्ष्य दत्त, विश्वस्ता कृता, भक्तदानेन सकुटुम्बा मारिता। आज्ञाया–वशीभिराम्रा परिक्षेप्तव्या, विपरीते रुष्ट, प्रदीपितो ग्राम समग्र, तैर्ग्रामेयकै कार्पटिकत्वे भक्त न दत्तमितिकृत्वा। कोशनिमित्त पारिणामिकी बुद्धि–द्यूत रमते कूटपाशकै, सौवर्ण स्थालो दीनारभृत, यो जयति तस्यैष, अह जयामि एको दीनारो दातव्य। अतिचिरमिति अन्यमुपाय चिन्तयति, नागरेभ्यो भक्त ददाति मद्यपान च, मत्तेषु

पणच्चिओ, भणइ–'दो मज्झ धाउरत्ता कंचणकुंडिया तिदंडं च रायावि य वसवत्ती एत्थवि ता मे होलं वाएहिं' अण्णो असहमाणो भणति–गयपोययस्स मत्तस्स उप्पइयस्स जोअणसहस्सं पए पए सयसहस्सं एत्थवि ता मे होलं वाएहिं। अन्नो भणइ–तिलआढयस्स वुत्तस्स निप्फण्णस्स बहुसइयस्स तिले तिले सयसहस्सं ता मे हालं वाएहि अण्णो भणइ–नवपाउसंमि पुण्णाए गिरिणईयाए सिग्घवेगाए एगाहमहियमेत्तेण नवणीएण पालिं बंधामि एत्थवि ता मे होलं वाएहि, अन्नो भणइ–जच्चाण नवकिसोराण तद्दिवसेण जायमेत्ताण केसेहिं नहं छाएमि एत्थवि ता मे होलं वाएहि, अन्नो भणइ–दो मज्झ अत्थि रयणा सालि पसूई य गद्दभिया य छिन्ना छिन्नावि रुहंति एत्थवि ता मे होलं वाएहि, अन्नो भणइ–*सयसुक्किलनिच्चसुयंधो भज्ज अणुवय नत्थि पवासो निरिणो य दुपचसओ एत्थवि ता मे होलं वाएहिं, एवं णाऊण रयणाणि मग्गिऊण कोट्ठाराणि सालीण भरियाणि, गद्दभियाए पुच्छिओ छिन्नाणि २ पुणो पुणो जायंति, आसा एगदिवस जाया मग्गिया एगदिवसियं णवणीयं, एस पारिणामिया चाणक्कस्स बुद्धी॥ थूलभद्दस्स पारिणामिया–पिइम्मि मारिए णंदेण भणिओ–

१ प्रणर्त्तित, भणति–द्वे मम धातुरक्ते काञ्चनकुण्डिका त्रिदण्ड च राजाऽपि च वशवर्त्ती अत्रापि तन्मे झल्लरीं वादय, अन्योऽसहमानो भणति–गजपोतस्य मत्तस्योत्पतितस्य योजनसहस्र पदे पदे शतसहस्र अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति–उप्तस्य तिलाढकस्य निष्पन्नस्य बहुशतिकस्य तिले तिले शतसहस्र तन्मे झल्लरीं वादय, अन्यो भणति–नवप्रावृषि पूर्णाया गिरिनद्या शीघ्रवेगाया एकाहमथितमात्रेण नवनीतेन पालीं बध्नामि अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति–जात्याना नवकिशोराणां तद्दिवसजातमात्राणां केशैर्नभश्छादयामि अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति–द्वे ममास्ति शालिरत्ने–प्रसूतिश्च गर्दभिका च, छिन्ना छिन्ना अपि रोहन्ति, अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति–सदाशुक्लो नित्यसुगन्धो भार्या अनुवर्त्तिनी नास्ति प्रवासो निर्ऋणश्च द्विपञ्चशतिक अत्रापि तन्मम झल्लरीं वादय, एव ज्ञात्वा रत्नानि मार्गयित्वा कोष्ठागाराणि शालीभिर्भृतानि गर्दभिकया पुच्छिको (धान्यभाजनविशेष) छिन्ना छिन्ना पुन पुनर्जायन्ते ॰ ति, अश्वा एकदिवसजाता मार्गिता, एकदिवसज नवनीत, एषा पारिणामिकी चाणक्यस्य बुद्धि। स्थूलभद्रस्य पारिणामिकी-पितरि मृते नन्देन भणित –*सुय०प्र०

अमच्चो होहित्ति, असोगवणियाए चिंतेइ-केरिसा भोगा वाउलाणंति पव्वइओ। रण्णा भणिया-पेच्छह मा कवडेण गणियाघरं जाएज्जा, नितस्स सुणगमडेण वावण्णेण णासं ण गेण्हइ, पुरिसेहिं रण्णो कहियं, विरत्तभोगोत्ति सिरिओ ठविओ, थूलभद्दसामिस्स पारिणामिया रण्णो य ॥ णासिक्कं णयरं, णंदो वाणियगो, सुंदरी से भज्जा, सुंदरिनंदो से नामं कयं, तस्स भाया पव्वइयओ, सो सुणेइ-जहा सो तीए अज्झोववन्नो, पाहुणओ आगओ, पडिलाभिओ, भाणं तेणं गहियं, *इह पत्थवियउत्ति उज्जाणं नीणिओ, लोगेण य भायणहत्थो दिट्ठो, तओ णं उवहसंति-पव्वइओ सुंदरीनंदो, तओ सो तहवि गओ उज्जाणं, साहुणा से देसणा कया, उक्कडरागोत्ति न तीरइ मग्गे लाइउं, वेउव्वियलद्धिमं च भगवं साहू, तओऽणेण चिंतियं-न अण्णो उवाओत्ति अहिगयरेणं उवलोभेमि, पच्छा मेरू पयट्टाविओ, न इच्छइ, †अविओगिओ, मुहुत्तेण आणेमि, पडिसुए पयट्टो, मक्कडजुयलं विउव्वियं, अन्ने भणंति-सच्चकं चेव दिट्ठं, साहुणा भणिओ-सुंदरीए वानरीओ य का लट्ठयरी[1];

---

१ अमात्यो भवेति, अशोकवनिकायां चिन्तयति-कीदृशा भोगा व्याक्षिप्तानामिति प्रव्रजित। राज्ञा भणिता (पुरुषा)-पश्यत मा कपटेन गणिकागृह यासीत्, निर्गच्छन् श्वमृतकेन व्यापन्नेन नासिका न वृणयति, पुरुषै राज्ञ कथित, विरक्तभोग इति श्रीयक स्थापित, स्थूलभद्रस्वामिन पारिणामिकी राज्ञश्च ॥ नासिक्य नगरं, नन्दो वणिग्, सुन्दरी तस्य भार्या, सुन्दरीनन्दस्तस्य नाम कृतं, तस्य भ्राता प्रव्रजित, स शृणोति-यथा स तस्यामध्युपपन्न, प्राघूर्णक (साधु) आगत, प्रतिलम्भित, भाजन तेन ग्राहितं, एहि अत्र प्रस्थापयेत्युद्यान नीत, लोकेन च भाजनहस्तो दृष्ट, ततस्त उपहसन्ति-प्रव्रजित सुन्दरीनन्द, तत स तथापि गत उद्यान, साधुना तस्मै देशना कृता, उत्कटराग इति न शक्यते मार्गे आनेतु, वैक्रियलब्धिकश्च भगवान् साधु, ततोऽनेन चिन्तित-नान्य उपाय इति अधिकतरेणोपलोभयामि, पश्चात मेरु प्रवर्त्तित, नेच्छति, अवियोगिक, मुहूर्त्तेनानयामि, प्रतिश्रुते प्रवृत्त, मर्कटयुगल विकुर्वित, अन्ये भणन्ति-सत्यमेव दृष्ट, साधुना भणित-सुन्दरीवानर्यो का लष्टतरा ?, *अप्पणा सम चालिओ सो जाणइ एत्थ विसज्जेहित्ति † अविवेगिओ

सो भणइ-भगवं! अघडंती सरिसव मेरुवमत्ति, पच्छा विज्जाहरमिहुणं दिट्ठं, तत्थ पुच्छिओ भणइ-तुल्ला चेव, पच्छा देवमिहुणगं दिट्ठं, तत्थवि पुच्छिओ भणति-भगवं! एईए अग्गओ वानरी सुंदरित्ति, साहुणा भणियं-थोवेण धम्मेण एसा पाविज्जइत्ति, तओ से उवगयं, पच्छा पव्वइओ। साहुस्स परिणामिया बुद्धी ॥ वइरसामिस्स पारिणामिया-माया णाणुवत्तिया, मा संघो अवमन्निजिहितित्ति, पुणो देवेहिं उज्जेणीए वेउव्वियलद्धी दिन्ना, पाडलिपुत्ते मा परिभविहित्ति वेउव्वियं कयं, पुरियाए पवयणओहावणा मा होहितित्ति सव्वं कहेयव्वं ॥ चलणाहए-राया तरुणेहिं वुग्गाहिज्जइ, जहा थेरा कुमारमच्चा अवणिज्जंतु, सो तेसिं परिक्खणणिमित्तं भणइ-जो रायं सीसे पाएण आहणइ तस्स को दंडो ?, तरुणा भणंति-तिलं तिलं छिंदियव्वओ, थेरा पुच्छिया-चिंतेमोत्ति ओसरिया, चिंतेंति-नूणं देवीए को अण्णो आहणइत्ति आगया भणंति-सक्कारेयव्वो। रण्णो तेसिं च पारिणामिया ॥ आमंडेत्ति-आमलगं, कित्तिमं एगेण णायं अइकढिणं

---

१ स भणति-भगवन्! अघटमाना सर्षप इव मेरूपमेति, पश्चाद्विद्याधरमिथुन दृष्ट, तत्र पृष्टो भणति-तुल्यैव, पश्चाद्देवमिथुन दृष्ट, तत्रापि पृष्टो भणति-भगवन्! एतस्या अग्रतो वानरी सुन्दरीति, साधुना भणित-स्तोकेन धर्मेणैषा प्राप्यत इति, ततस्तेनोपगत, पश्चात्प्रव्रजित। साधो पारिणामिकी बुद्धि ॥ वज्रस्वामिन पारिणामिकी-माता नानुवर्त्तिता, मा सङ्घोऽवमानीति, पुनर्देवैरुज्जयिन्या वैक्रियलब्धिर्दत्ता, पाटलीपुत्रे मा पराभूदिति वैक्रिय कृत, पुरिकाया प्रवचनापभ्राजना मा भूदिति सर्वं कथयितव्य ॥ चरणाहती-राजा तरुणैर्व्युद्ग्राह्यते, यथा स्थविरा कुमारामात्या अपनीयन्ता, स तेषा परीक्षानिमित्त भणति-यो राजान शीर्षे पादेन आहन्ति तस्य को दण्ड ?, तरुणा भणन्ति-तिलशश्छेत्तव्य, स्थविरा पृष्टा-चिन्तयाम इत्यपसृता, चिन्तयन्ति-नून को देव्या अन्य आहन्ति इत्यागता भणन्ति-सत्कारयितव्य। राज्ञस्तेषां च पारिणामिकी ॥ आमलकमिति आमलक, कृत्रिममेकेन ज्ञातमतिकठिन.

अकाले विवो होइत्ति। तस्सवि पारिणामिया ॥ मणित्ति-सप्पो पक्खिणं अंडगाणि खाइ रुक्खे विलग्गित्ता, तत्थ गिद्धेण आलयं विलग्गिय मारिओ, मणी तत्थ पडिओ, हेट्ठा कूवो, तस्स पाणियं रत्तिभूयं, णीणियं कूवाओ साभावियं होइ, दारएण थेरस्स कहियं, तेण विलग्गिऊण गहिओ। थेरस्स परिणामिया ॥ सप्पो-चंडकोसिओ चिंतेइ-एरिसो महप्पा इच्चाइ विभासा, एयस्स पारिणामिगी ॥ खग्गीति-सावयपुत्तो जोव्वणवलुम्मत्तो धम्मं न गिण्हइ, मरिऊण खग्गिसु उववण्णो, पिट्ठिस्स दोहिंवि पासेहिं जहा पक्खरा तहा चम्माणि लंबंति, अडवीए च उप्पहे जणं मारेइ, साहुणो य तेणेव पहेण अइक्कमंति, वेगेण आगओ, तेएण ण तरइ अल्लिउं, चिंतेइ, जाई संभरिया, पच्चक्खाणं, देवलोगगमनं। एयस्स पारिणामिगी ॥ थूभे-वेसालाए णयरीए णाभीए मुणिसुव्वयस्स थूभो, तस्स गुणेण कूणियस्स ण पडइ, देवया आगासे कूणियं भणइ-'समणो जइ कूलवालए मागहियं गणियं लभिस्सति। लाया य असोगचंदए वेसालिं नगरिं गहेस्सइ ॥ १ ॥' सो

---

१ अकालेऽप्याम्ल भवतीति। तस्यापि पारिणामिकी ॥ मणिरिति-सर्प पक्षिणामण्डानि खादति वृक्ष विलग्य, तत्र गृध्रेणालय विलग्य मारित, मणिस्तत्र पतित, अधस्तात्कूप, तस्य पानीय रक्तीभूत, निष्काशित कूपात् स्वाभाविक भवति, दारकेण स्थविराय कथित, तेन विलग्य गृहीत। स्थविरस्य पारिणामिकी ॥ सर्प-चण्डकौशिकश्चिन्तयति-ईदृशो महात्मा इत्यादि विभाषा, एतस्य पारिणामिकी ॥ खड्गी-श्रावकपुत्रो यौवनबलोन्मत्तो धर्मं न गृह्णाति, मृत्वा खड्गिषूत्पन्न, पृष्ठेऽस्य द्वयोरपि पार्श्वयो यथा पक्षौ तथा चर्मणी लम्बेते, अटव्या चोत्पथे जन मारयति, साधवश्च तेनैव पथा व्यतिक्रमन्ति, वेगेनागत, तेजसा न शक्नोति अभिद्रोतु, चिन्तयति, जाति स्मृता, प्रत्याख्यान, देवलोकगमन। एतस्य पारिणामिकी ॥ स्तूप-विशालाया नगर्या मध्ये मुनिसुव्रतस्य स्तूप, तस्य गुणेन कूणिकस्य (वप्रमेऽपि) न पतति, देवताऽऽकाशे कूणिक भणति-'श्रमणो यदा कूलवालको मागधिकां गणिका लप्स्यते (गमिष्यति)। राजा च अशोकचन्द्र (कौणिकः) वैशाली नगरीं ग्रहीष्यति ॥ १ ॥'। स

मग्गिज्जइ । तस्स का उप्पत्ती?–एगस्स आयरियस्स चेल्लओ अविणीओ, तं आयरिओ अंबाडेइ, सो वेरं वहइ । अन्नया आयरिया सिद्धसिलं तेण समं वंदगा विलग्गा, उत्तरंताण वधाए सिला मुक्का, दिट्ठा आयरिएण, पाया ओसारिया इहरा मारिओ होंतो, सावो दिण्णो–दुरात्मन् ! इत्थीओ विणस्सिहिसित्ति, मिच्छावाई एसो भवउत्तिकाउं तावसासमे अच्छइ, नईए कूले आयावेइ, पंथब्भासे जो सत्थो एइ तओ आहारो होइ, णईए कूले आयावेमाणस्स सा णई अण्णओ पवूढा, तेण कूलवारओ नामं जायं, तत्थ अच्छंतो आगमिओ, गणियाओ सद्दावियाओ, एगा भणइ–अहं आणेमि, कवडसाविया जाया, सत्थेण गया, वंदइ उद्दाणे होइयम्मि चेइयाइं वंदामि तुब्भे य सुया, आगयामि, पारणगे मोदगा संजोइया दिन्ना, अइसारो जाओ, पओगेण ठविओ, उव्वत्तणाईहिं संभिन्नं चित्तं, आणिओ, भणिओ–रण्णो वयणं करेहि, कहं ?, जहा वेसाली घेप्पइ, थूभो नीणाविओ, गहिया । गणियाकूलवालगाणं दोण्हवि पारिणामिगी । इंदपाउयाओ चाणक्केण पुव्वभणियाओ, एसा पारिणामिया ॥ उक्तोऽभिप्रायसिद्ध , साम्प्रत तपःसिद्धप्रतिपिपादयिषयाऽऽह—

१ मार्ग्यते । तस्य कोत्पत्ति ?–एकस्याचार्यस्य क्षुलक ( शिष्य ) अविनीत , तमाचार्यो निर्भर्त्सयति, स वैरं वहति । अन्यदा आचार्या सिद्धशैल तेन सम वन्दितु विलग्ना , अवतरतां वधाय शिला मुक्ता, दृष्टाऽऽचार्येण, पादौ प्रसारितौ इतरथा मृता अभविष्यन् , शापो दत्त –दुरात्मन् ! स्त्रीतो विनङ्क्ष्यसीति, मिथ्यावादी एष भवत्वितिकृत्वा तापसाश्रमे तिष्ठति, नद्या कूले आतापयति, पन्थाभ्यासे य सार्थ आयाति तत आहारो भवति, नद्या कूले आतापयत सा नद्यन्यतो व्यूढा, तेन कूलवारको नाम जात, तत्र तिष्ठन् आगमित , गणिका शब्दिता , एका भणति–अहमानयामि, कपटश्राविका जाता, सार्थेन गता, वन्दते, विधवायां जातायां चैत्यानि वन्दे यूय च श्रुता , आगताऽस्मि, पारणके मोदका सांयोगिका दत्ता , अतिसारो जात , प्रयोगेण स्थापित ( नीरोगीकृत ), उद्वर्त्तनादिभि सभिन्न चित्त, आनीत , भणित –राज्ञो वचन कुरु, कथ ?–यथा वैशाली गृह्यते, स्तूपो निष्काशित ( पातित ), गृहीता । गणिकाकूलवालकयोर्द्वयोरपि पारिणामिकी ॥ इन्द्रपादुका ( इन्द्रकुमार्य ) चाणक्येन पूर्वभणिता , एषा पारिणामिकी ॥ ‡ उद्दाणे

न किलम्मइ जो तवसा सो नवसिद्धो दढप्पहारिव्व । सो कम्मक्खयसिद्धो जो सव्वक्खीणकम्मंसो ॥९५२॥

व्याख्या—'न क्लामति' न क्लमं गच्छति यः सत्त्वस्तपसा–बाह्याभ्यन्तरेण स एवंभूतस्तपःसिद्धः, अग्लानित्वाद्, दृढप्रहारिवदिति गाथाक्षरार्थः ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—एगो धिज्जाइयओ दुद्दंतो अविणयं करेइ, सो ताओ थाणाओ नीणिओ हिंडंतो चोरपल्लिमल्लिणो, सेणावइणा पुत्तो गहिओ, तंमि मयंमि सोच्चेव सेणावई जाओ, निक्किवं पहणइत्ति दढप्पहारी से णामं कयं । सो अन्नया सेणाए समं एगं गामं हंतुं गओ, तत्थ य एगो दरिद्दो, तेण पुत्तभंडाण मग्गंताणं दुद्धं जाएत्ता पायसो सिद्धो, सो य ण्हाइउं गओ, चोरा य तत्थ पडिया, एगेण सो तस्स पायसो दिट्ठो, छुहियत्ति तं गहाय पहाविओ, ताणि खुड्डुगरूवाणि रोवंताणि पिउमूलं गयाणि, हिओ पायसोत्ति, सो रोसेणं मारेमित्ति पहाविओ, महिला अवयारेउ अच्छइ, तहवि जाइ जहिं सो चेव चोरसेणावई गाममज्झे अच्छइ, तेण गंतूण महासंगामो कओ, सेणावइणा चिंतियं–एएण मम चोरा परिभविज्जन्ति, तओ असिं गहाय निद्दयं छिण्णो, महिला से भणइ–हा णिक्किव !

१ एको धिग्जातीयो दुर्दान्तोऽविनय करोति, स तत स्थानात् निष्काशितो हिण्डमानश्चौरपल्लीमाश्रित , सेनापतिना पुत्रो गृहीत , तस्मिन् मृते स एव सेनापतिर्जात , ( निष्कृप प्रहन्तीति दृढप्रहारी तस्य नाम कृत । सोऽन्यदा सेनया सम एक ग्राम हन्तु गत , तत्र चैको दरिद्र , तेन पुत्रपोतेभ्यो मार्गयद्भ्य दुग्ध याचित्वा पायस साधित, स च स्नातु गत , चौराश्च तत्र पतिता , एकेन तस्य तत्पायस दृष्ट, क्षुधार्त्त इति तद्गृहीत्वा प्रधावित , तानि क्षुल्लकरूपाणि रुदन्ति पितृमूल गतानि, हृत पायसमिति, स रोषेण मारयामीति प्रधावित , महिला निवारयितु तिष्ठति, तथापि याति यत्र स एव चौरसेनापतिर्ग्राममध्ये तिष्ठति, तेन गत्वा महासग्राम कृत , सेनापतिना चिन्तित–एतेन मम चौरा परिभूयन्ते ततोऽसि गृहीत्वा निर्दय छिन्न , महिला तस्य भणति–हा निष्कृप !

किमेय कयंति?, पच्छा सावि मारिया, गब्भोऽवि दोभाए कओ फुरुफुरेइ, तस्स किवा जाया–अहम्मो कओ, चेडरूवेहिंतो दरिद्दत्ति पउत्ती उवलद्धा, दढयरं निव्वेयं गओ, को उवाओत्ति, साहू दिट्ठा, पुच्छिया यऽणेण–भगवं ! को एत्थ उवाओ ?, तेहिं धम्मो कहिओ, सो य से उवगओ, पच्छा चारित्तं पडिवज्जिय कम्माण समुग्घायणट्ठाए घोरं खंतिअभिग्गहं गिण्हिय तत्थेव विहरइ, तओ हीलिज्जइ हम्मति य, सो सम्मं अहियासेइ, घोराकारं च कायकिलेसं करेइ, असणाइ व अलंभतो सम्मं अहियासेइ, जावऽणेण कम्मं निग्घाइयं, केवलं से उप्पण्णं, पच्छा सो सिद्धत्ति ॥ उक्तस्तपःसिद्धः, साम्प्रतं कर्मक्षयसिद्धप्रतिपादनाय गाथाचरमदलमाह–'सो कम्म' इत्यादि, स कर्मक्षयसिद्धः, यः किंविशिष्ट इत्यत आह–'सर्वक्षीणकर्मांशः' सर्वे–निरवशेषाः क्षीणाः कर्मांशाः–कर्मभेदा यस्य स तथाविध इति गाथार्थः ॥ साम्प्रतं कर्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयन्नाह—

दीहकालरयं जं तु कम्मं से सिअमट्ठहा । सिअं धंतंति सिद्धस्स सिद्धत्तमुवजायइ ॥ ९५३ ॥

व्याख्या—दीर्घः सन्तानापेक्षयाऽनादित्वात् स्थितिबन्धकालो यस्य तद्दीर्घकालं, निसर्गनिर्मलजीवानुरञ्जनाच्च कर्मैव

१ किमेतत्कृतमिति, पश्चात्साऽपि मारिता, गर्भोऽपि द्विधाकृत स्फुरति, तस्य कृपा जाता–अधर्म कृत , चेटरूपेभ्यो दरिद्र इति प्रवृत्तिरुपलब्धा, दृढतरं निर्वेद गत , क उपाय इति, साधवो दृष्टा , पृष्टाश्चानेन–भगवन् ! कोऽत्रोपाय ?, तैर्धर्मं कथित , स च तस्योपगत , पश्चाच्चारित्र प्रतिपद्य कर्मणा समुद्घातनार्थाय घोरं क्षान्त्यभिग्रह गृहीत्वा तत्रैव विहरति, ततो हील्यते हन्यते च, स सम्यक् अध्यासयति घोराकार च कायक्लेश करोति, अशनादि वाऽलभमान सम्यगध्यास्ते, यावदनेन कर्म निर्घातित ( निहत ), केवल तस्योत्पन्न, पश्चात्स सिद्ध इति ॥

भण्यते ततश्च दीर्घकालं च तद्रजश्चेति दीर्घकालरजः, यच्छब्दः सर्वनामत्वादुद्देशवचनः, यत्कर्मेत्यर्थप्रकारं, तुशब्दो भव्यकर्मविशेषणार्थः, यतो नाभव्यकर्म मर्वथा ध्मायत इति, ततश्च यद्भव्यकर्मेति 'शेषितम्' इति शेषं कृतं शेषितं—स्थित्यादिभिः प्रभूतं सत् स्थितिसङ्ख्यानुभावापेक्षयैवानाभोगसद्दर्शनज्ञानचरणाद्युपायतः शेषम्—अल्पं कृतमिति भावः, प्राक् किंभूतं सच्छेषितम्? इत्याह—'अष्टधा सितम्' अष्टप्रकारं ज्ञानावरणादिभेदेन सितं 'सित वर्णबन्धनयो'रिति वचनात् सितं—बद्धमुच्यते। इदानीं निरुक्तिमुपदर्शयति—तच्छेषितं सितं कर्म ध्मातं, 'ध्मा शब्दाग्निसंयोगयो'रिति वचनात् ध्यानानलेन दग्धं महाग्निना लोहमलवदस्येति सिद्ध इति, एवं कर्मदहनानन्तरं सिद्धस्यैव सतः किं?—सिद्धत्वमुपजायते, नासिद्धस्य, 'भव्योऽसिद्धो न सिध्यती'ति वचनाद्, उपजायत इत्यपि तदात्मनः स्वाभाविकमेव सदनादिकर्मावृतं तदावरणविगमेनाऽऽविर्भवति तत्त्वतः तथाऽपि लौकिकवाचोयुक्त्या व्यवहारदेशनयोपजायत इत्युच्यते, अथवा सिद्धस्य सिद्धत्वं भावरूपमुपजायते, न तु प्रदीपनिर्वाणकल्पमभावरूपमिति नयमतान्तरव्यवच्छेदार्थमेतत्, तथा चाऽऽहुरेके—'दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम्। दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात् केवलमेति शान्तिम् ॥ १ ॥' इत्यादि, एवंविधसिद्धत्वभावे दीक्षादिप्रयासवैयर्थ्यात् निरन्वयक्षणभङ्गस्य चायुज्यमानत्वात्, प्रदीपदृष्टान्तस्याप्यसिद्धत्वात्, तथाहि—तत्र त एव पुद्गला भास्वरं रूपं परित्यज्य तामसं रूपान्तरमासादयन्तीत्यलं विस्तरेण, अथवाऽन्यथा व्याख्यायते 'दीर्घकालरयं' इति रयः—वेगः चेष्टाऽनुभवः फलमित्यनर्थान्तरं, ततश्च दीर्घकालो रयोऽस्येति

१ भवे-संसारे भवो भव्य. अभव्य इत्यर्थं

दीर्घकालरयं, सन्तानोपभोग्यत्वादिति भावना, यद्भव्यकर्म 'सेसित' मिति श्लेषितमिति संश्लिष्टं लेश्यानुभावात् अष्टधा सितमित्यादि पूर्ववत्, अथवाऽन्यथा व्याख्यायते—दीर्घकालरज इति, तत्र रज इव रजः सूक्ष्मतया स्नेहबन्धनयोग्यत्वाद्वा रज इत्युच्यते, यद्भव्यकर्मेति च नैवं व्याख्यायते, साक्षात्कर्माभिधानेन सर्वनाम्नो निरर्थकत्वात्, प्रकरणादेव भव्यस्यावगम्यमानत्वात्, अभव्यस्य सिद्धत्वानुपपत्तेः, ततश्च जन्तुकर्म इति व्याख्यायते, जन्तुः—जीवस्तस्य कर्म जन्तुकर्म, अनेनाबद्धकर्मव्यवच्छेदमाह, तच्च 'से' तस्य जन्तोः 'असितम्' असितमिति कृष्णमशुभं संसारानुबन्धित्वात्, एवंविधस्यैव च क्षयः श्रेयानिति, न तु शुभस्य स्वरूपस्येति भावना, अष्टधा सितमिति पूर्ववदिति गाथार्थः॥ प्रथमव्याख्यापक्षमधिकृत्य सम्बन्धमाह—तत्कर्मशेषं तस्य समस्थित्यसमस्थिति वा स्यात्?, न तावत् समस्थिति विषमनिबन्धनत्वात्, नाप्यसमस्थिति चरमसमये युगपत् क्षयासम्भवादिति, एतदयुक्तम्, उभयथाऽप्यदोषात्, तथाहि—विषमनिबन्धनत्वे सत्यपि विचित्रक्षयसम्भवात् कालतः समस्थितित्वाविरोध एव, चरमपक्षेऽपि समुद्घातगमनेन समस्थितिकरणभावाददोषः, न चैतत् स्वमनीषिकयैवोच्यते, यत आह निर्युक्तिकारः—

**नाऊण वेअणिज्जं अइबहुअं आउअं च थोवागं। गंतूण समुग्घायं खवंति कम्मं निरवसेसं ॥ ९५४ ॥**

व्याख्या—'ज्ञात्वा' केवलेनावगम्य, किं?—वेदनीयं कर्म, किंभूतं?—'अतिबहु' शेषभवोपग्राहिकर्मापेक्षयाऽतिप्रभूतमित्यर्थः, तथाऽऽयुष्कं च कर्म 'स्तोकम्' अल्पं, तदपेक्षयैव ज्ञात्वेति वर्तते, अत्रान्तरे 'गत्वा' प्राप्य 'समुद्घातम्' इति सम्यग्अपु[र्नर्भा]वेनोत्—प्राबल्येन कर्मणो हननं घातः—प्रलयो यस्मिन् प्रयत्नविशेषेऽसौ समुद्घात इति तम्, 'क्षपयन्ति' विनाशयन्ति 'कर्म' वेदनीयादि 'निरवशेषम्' इति निरवशेषमिव निरवशेषं प्रभूततमक्षपणाच्छेषस्य चान्तर्मुहूर्त्तमात्रकालावधित्वात्, किञ्चिच्छेषत्वादसत्कल्पनेति भावना, अत्राऽऽह—'ज्ञात्वा वेदनीयमतिबह्वि'त्यत्र को नियमः? येन तदेव बहु (ग्रं० ११०००) तथाऽऽयुष्कमेवाल्पमिति, अत्रोच्यते, वेदनीयस्य सर्वकर्मभ्यो बन्धकालबहुत्वात् केवलिनोऽपि तद्बन्धकत्वादायुष्कस्य चाल्पत्वात्, उक्तं च—'जाव णं अयं जीवे एयइ वेयइ चलइ फंदइ ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एगविहबंधए वा णो णं अबंधए' आयुष्कस्य त्वान्तर्मुहूर्तिक एव बन्धकाल इति, उक्तं च—"सियं तिभागे सिय तिभागतिभागे" इत्याद्यलं प्रसङ्गेनेति गाथार्थः॥ ९५४ ॥ इदानीं समुद्घातादिस्वरूपप्रतिपादनायैवाऽऽह—

**दंड कवाडे मंथंतरे अ साहरणया सरीरत्थे। भासाजोगनिरोहे सेलेसी सिज्झणा चेव ॥ ९५५ ॥**

व्याख्या—इह समुद्घातं प्रारभमाणः प्रथममेवावर्जीकरणमभ्येति, आन्तर्मौहूर्तिकमुदीरणावलिकायां कर्मपुद्गलप्रक्षेपव्यापाररूपमित्यर्थः, ततः समुद्घातं गच्छति, तस्य चायं क्रमः—इह प्रथमसमय एव स्वदेहविष्कम्भतुल्यविष्कम्भमूर्ध्वमधश्चाऽऽयतमुभयतोऽपि लोकान्तगामिनं जीवप्रदेशसङ्घातं दण्डं दण्डस्थानीयं केवली ज्ञानाभोगतः करोति, द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामिनं कपाटमिव कपाटं करोति, तृतीयसमये तदेव कपाटं दक्षिणोत्तर-

१ यावदयं जीव एजते व्येजते चलति स्पन्दते तावदष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा नाबन्धक। २ त्रिभागे स्यात्त्रिभागत्रिभागे

दिग्द्वयप्रसारणान्मन्थसदृशं मन्थानं करोति लोकान्तप्रापिणमेव, एवं च लोकस्य प्रायो बहु परिपूरितं भवति, मन्थान्तराण्यपूरितानि भवन्ति, अनुश्रेणिगमनात्, चतुर्थे तु समये तान्यपि मन्थान्तराणि सह लोकनिष्कुटैः पूरयति, ततश्च सकलो लोकः पूरितो भवतीति, तदनन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोमं मन्थान्तराणि संहरति—जीवप्रदेशान् सकर्मकान् सङ्कोचयति, षष्ठे समये मन्थानमुपसंहरति घनतरसङ्कोचात्, सप्तमे समये कपाटमुपसंहरति दण्डात्मनि सङ्कोचात्, अष्टमसमये दण्डमुपसंहृत्य शरीरस्थ एव भवति । अमुमेवार्थं चेतसि निधायोक्तं दण्डकपाटं मन्थान्तराणि संहरणता प्रतिलोममिति गम्यते, शरीरस्थ इति वचनात्, न चैतत् स्वमनीषिकाव्याख्यानं, यत उक्तम्—प्रथमे समये दण्डं कपाटमथ चोत्तरे तथा समये । मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु ॥ १ ॥ संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे । सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् ॥ २ ॥" इति । तस्येदानीं समुद्घातगतस्य योगव्यापारश्चिन्त्यते—योगाश्च—मनोवाक्कायाः, अत्रैषां कः कदा व्याप्रियते ?, तत्र हि मनोवाग्योगयोरव्यापार एव, प्रयोजनाभावात्, काययोगस्यैव केवलस्य व्यापारः, तत्रापि प्रथमाष्टमसमययोरौदारिककायप्राधान्यादौदारिकयोग एव, द्वितीयषष्ठसप्तमे समये पुनरौदारिके तस्माच्च बहिः कार्मणे वीर्यपरिस्पन्दादौदारिककार्मणमिश्रः, त्रिचतुर्थपञ्चमेषु तु बहिरेवौदारिकात् बहुतरप्रदेशव्यापारादसहायः कार्मणयोग एव, तन्मात्रचेष्टनादिति, अन्यत्राप्युक्तम्—"औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च । समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ २ ॥" इति, कृतं प्रसङ्गेन । भाषायोगनिरोध इति, कोऽर्थः ?—परित्यक्तसमुद्घातः कारणवशात् योगत्रयमपि व्यापारयेत्, तदर्थं मध्यवर्तिनं योगमाह—भाषेति, अत्रान्तरेऽनुत्तरसुरपृष्टो मनोयोगं सत्यं वाऽसत्यामृषं वा प्रयुङ्क्ते, एवमामन्त्रणादौ वाग्योगमपि, नेतरौ द्वौ भेदौ द्वयोरपि, काययोगमप्यौदारिकं फलकप्रत्यर्पणादाविति, ततोऽन्तर्मुहूर्तमात्रेणैव कालेन योगनिरोधं करोति, अत्र केचिद् व्याचक्षते—जघन्येनैतावता कालेन उत्कृष्टतस्तु षड्भिर्मासैरिति, एतच्चायुक्तं, 'क्षपयन्ति कर्म निरवशेष'मिति वचनात् फलकादीनां च प्रज्ञापनायां प्रत्यर्पणस्यैवोक्तत्वात्, एवं च सति ग्रहणमपि स्याद्, अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः—स हि योगनिरोधं कुर्वन् प्रथममेव याऽसौ प्रथममेव शरीरप्रदेशसम्बद्धा मनःपर्याप्तिनिर्वृत्तिर्यया पूर्वं मनोद्रव्यग्रहणं कृत्वा भावमनः प्रयुक्तवान् तत्कर्मसंयोगविघटनाय मन्त्रसामर्थ्येन विषमिव स भगवाननुत्तरेणाचिन्त्येन निरावरणेन करणवीर्येण तद्व्यापारं निरुध्य च 'पज्जत्तमित्तसन्निस्स जत्तियाइं जहन्नजोगिस्स । होंति मणोदव्वाइं तव्वावारो य जम्मत्तो ॥ १ ॥ तदसंखगुणविहीणं समए २ निरुंभमाणो सो । मणसो सव्वनिरोहं करेज्जऽसंखेज्जसमएहिं ॥ २ ॥ पज्जत्तमेत्तबेंदियजहन्नवयजोगपज्जया जे य । तदसंखगुणविहीणे समए समए निरुंभंतो ॥ ३ ॥ सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं । तत्तो य सुहुमपणगस्स पढमसमयोववन्नस्स ॥ ४ ॥ जो किर जोगो तदसंखेज्जगुणहीणमेक्किक्के । समए निरुंभमाणो देहतिभागं च मुचंतो ॥ ५ ॥ रुंभइ स कायजोगं संखाईएहि चेव समएहिं ।

१ पर्याप्तमानसञ्ज्ञिनो यावन्ति जघन्ययोगस्य । भवन्ति मनोद्रव्याणि तद्व्यापारश्च यावन्मात्र ॥ १ ॥ तदसङ्ख्यगुणविहीनं समये समये निरुन्धन् स । मनसः सर्वनिरोधं कुर्यादसङ्ख्येयसमयैः ॥ २ ॥ पर्याप्तमात्रद्वीन्द्रियस्य जघन्यवचःपर्यवा यावन्तः । तदसङ्ख्येयगुणविहीनान् समये समये निरुन्धन् ॥ ३ ॥ सर्ववचोयोगरोधं सङ्ख्यातीतैः करोति समयैः । ततश्च सूक्ष्मपनकस्य प्रथमसमयोपपन्नस्य ॥ ४ ॥ यः किल जघन्यो योगस्तदसङ्ख्येयगुणहीनमेकैकस्मिन् । समये निरुन्धन् देहत्रिभागं च मुञ्चन् ॥ ५ ॥ रुणद्धि स काययोगं सङ्ख्यातीतैरेव समयैः ।

तो कयजोगनिरोहो सेलेसी भावणामेइ ॥ ६ ॥ त्ति' ततः शैलेशीं प्रतिपद्यते, तत्र शिलाभिर्निर्वृत्तः शिलानां वाऽयमित्यण् शैलः—पर्वतस्तेषामीशः—प्रभुः शैलेशः, स च मेरुः, तस्येवेयं स्थिरतासाम्यादवस्थेति शैलेशी, अथवा—अशैलेशः सन्नभूततद्भावाच्छैलेशवदाचरति शैलेशीभवतीत्यध्याहारः, अथवा सर्वसंवरः शीलं तस्येशः शीलेशः तस्येयं योगनिरोधावस्थेति शैलेशी, इयं च मध्यमप्रतिपत्त्या ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं भवति, स च काययोगनिरोधारम्भात् प्रभृति ध्यायति सूक्ष्मक्रियाऽनिवृत्तिध्यानं, ततः सर्वनिरोधं कृत्वा शैलेश्यवस्थायां व्युच्छिन्नक्रियमप्रतिपातीति, ततो भवोपग्राहिकर्मजालं क्षपयित्वा ऋजुश्रेणिप्रतिपन्नः अस्पृशद्गत्या सिध्यतीति, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति गाथार्थः ॥ ९५५ ॥ अनन्तरगाथोपन्यस्तसमुद्घातमात्रापेक्षः संबन्धः । आह—समुद्घातगतानां विशिष्टकर्मक्षयो भवतीति काऽत्रोपपत्तिरिति?, उच्यते, प्रयत्नविशेषः, किं निदर्शनम्? इत्यत आह—

जह उल्ला साडीआ आसुं सुक्कइ विरल्लिआ संती । तह कम्मलहुअसमए वच्चंति जिणा समुग्घायं ॥ ९५६ ॥

व्याख्या—'यथा' इत्युदाहरणोपन्यासार्थः, आर्द्रा शाटिका, जलेनेति गम्यते, 'आशु' शीघ्रं 'शुष्यति' शोषमुपयाति, 'विरलिता' विस्तारिता सती भवति, तथा तेऽपि प्रयत्नविशेषात् कर्मोदकमधिकृत्य शुष्यन्तीति शेषः, यतश्चैवमतः 'कर्मलघुतासमये व्रजन्ति जिनाः समुद्घात'मिति तत्र कर्मणः—आयुष्कस्य लघुता कर्मलघुता, लघोर्भावो लघुता—स्तोकतेत्यर्थः, तस्याः समयः—कालः कर्मलघुतासमयः, स च भिन्नमुहूर्तप्रमाणस्तस्मिन्, अथवा कर्मभिर्लघुता कर्मलघुता, जीवस्येति

१ ततः कृतयोगनिरोधः शैलेशीभावनामेति ॥ ६ ॥

हृदयं, सा च समुद्घातानन्तरभाविन्येव भूतोपचारं कृत्वाऽनागतैव गृह्यते, तस्याः समयस्तस्मिन्, भिन्नमुहूर्त एवेत्यर्थः, व्रजन्ति–गच्छन्ति जिनाः–केवलिनः 'समुद्घातं' प्राक्प्ररूपितस्वरूपमिति गाथार्थः ॥ ९५६ ॥ साम्प्रतं यदुक्तं 'शैलेशीं प्रतिपद्यते सिध्यति चे' ति, तत्रासावेकसमयेन लोकान्ते सिध्यतीत्यागमः, इह च कर्ममुक्तस्य तद्देशनियमेन गतिर्नोपपद्यते इति मा भूदव्युत्पन्नविभ्रम इत्यतस्तन्निरासेनेष्टार्थसिद्ध्यर्थमिदमाह—

लाउअ एरंडफले अग्गी धूमे उसू धणुविमुक्के । गइपुव्वपओगेणं एवं सिद्धाणवि गईओ ॥ ९५७ ॥

व्याख्या—अलाबु एरण्डफलम्, अग्निधूमौ, इषुर्धनुर्विमुक्तः, अमीषां यथा तथा गमनकाले स्वभावतस्तन्निबन्धनाभावेऽपि देशादिनियतैव गतिः पूर्वप्रयोगेण प्रवर्तते, एवमेव व्यवहिततुशब्दस्यैवकारार्थत्वात् सिद्धानामपि गतिरित्यक्षरार्थः ॥ ९५७ ॥ अधुना भावार्थः प्रयोगैर्निदर्श्यते–तत्र कर्मविमुक्तो जीवः सकृदूर्ध्वमेवाऽऽलोकाद्गच्छति, असङ्गत्वेन तथाविधपरिणामत्वादष्टमृत्तिकालेपलिप्ताधोनिमग्नक्रमापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथाविधालाबुवत् तथा छिन्नबन्धनत्वेन तथाविधपरिणतेस्तद्विधैरण्डफलवत् तथा स्वाभाविकपरिणामत्वादग्निधूमवत् तथा पूर्वप्रयुक्तक्रियातथाविधसामर्थ्याद्धनुःप्रयत्नेरितेषुवद्, इषुः–शर इति गाथार्थः ॥ ९५७ ॥ एवं प्रतिपादिते सत्याह—

कहिं पडिहया सिद्धा, कहिं सिद्धा पइट्ठिया । कहिं बोंदिं चइत्ता णं, कत्थ गंतूण सिज्झई ? ॥ ९५८ ॥

व्याख्या—'क्व प्रतिहताः' क्व प्रतिस्खलिता इत्यर्थः 'सिद्धाः' मुक्ताः, तथा 'क्व सिद्धाः प्रतिष्ठिताः' क्व व्यवस्थिता इत्यर्थः, तथा 'क्व बोन्दिं त्यक्त्वा' क्व तनुं परित्यज्येत्यर्थः, इह बोन्दिः तनुः शरीरमित्यनर्थान्तरं, तथा क्व गत्वा 'सिध्यन्ति' निष्ठितार्था भवन्ति, इत्यनुस्वारलोपोऽत्र द्रष्टव्यः, अथवैकवचनतोऽप्येवमुपन्यासः सूत्रशैल्याऽविरुद्ध एव, यतोऽन्यत्रापि प्रयोगः–'वत्थगंधमलंकारं इत्थीओ सयणाणि य । अच्छंदा जे ण भुंजंति ण से चाइत्ति वुच्चई ॥ १ ॥' इत्यादि गाथार्थः ॥ ९५८ ॥ इत्थं चोदकपक्षमधिकृत्याऽऽह—

अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ । इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥ ९५९ ॥

व्याख्या—'अलोके' केवलाकाशास्तिकाये 'प्रतिहताः' प्रतिस्खलिताः सिद्धा इति, इह च तत्र धर्मास्तिकायाद्यभावात् तदानन्तर्यवृत्तिरेव प्रतिस्खलनं, न तु सम्बन्धिविघातः, प्रदेशानां निष्प्रदेशत्वादिति सूक्ष्मधिया भावनीयं, तथा 'लोकाग्रे च' पञ्चास्तिकायात्मकलोकमूर्धनि च प्रतिष्ठिताः, अपुनरागत्या व्यवस्थिता इत्यर्थः, तथा 'इह' अर्धतृतीयद्वीपसमुद्रान्तः 'बोन्दिं' तनुं 'त्यक्त्वा' परित्यज्य सर्वथा किम् ?–'तत्र' लोकाग्रं 'गत्वा' अस्पृशद्गत्या समयप्रदेशान्तरमस्पृशन्नित्यर्थः, 'सिध्यन्ति' निष्ठितार्था भवन्ति सिद्ध्यति वेति गाथार्थः ॥ ९५९ ॥ तत्र 'लोकाग्रे च प्रतिष्ठिता' इति यदुक्तं तदङ्गीकृत्याऽऽह–क्व पुनर्लोकान्त इत्यत्रान्तरमाह—

ईसीपब्भाराए सीआए जोअणंमि लोगंतो । बारसहिं जोअणेहिं सिद्धी सव्वट्ठसिद्धाओ ॥ ९६० ॥

व्याख्या—ईषत्प्राग्भारा–सिद्धिभूमिस्तस्याः 'सीताया' इति द्वितीयं भूमेर्नामधेयं योजने लोकान्त ऊर्ध्वमिति गम्यते, अध-

१ लोकान्तालोकाधो. सगतत्वात् सिद्धाना च लोकान्तावस्थाननियमात् अलोकप्रदेशेष्ववशेन गत्वा निवर्त्तनरूप स्खलन प्रदेशानां निष्प्रदेशत्वात् मगवम्, अग्रे तु धर्माद्यभावान्न स्यादेव गमन * सयन्धे विघात

स्तिर्यक् चैतावति क्षेत्रे तदसम्भवात्, तथा चाऽऽह–द्वादशभिर्योजनैः सिद्धिः ऊर्ध्वं भवति, कुतः ?–सर्वार्थसिद्धाद् विमानवरात्, अन्ये तु 'सिद्धिं' लोकान्तक्षेत्रलक्षणामेव व्याचक्षते, तत्त्वं तु केवलिनो विदन्तीति गाथार्थः ॥ ९६० ॥ साम्प्रतमस्या एव स्वरूपव्यावर्णनायाह—

निम्मलदगरयवण्णा तुसारगोखीरहारसरिवन्ना । उत्ताणयछत्तयसंठिआ य भणिया जिणवरेहिं ॥ ९६१ ॥

व्याख्या—निर्मलदगरजोवर्णाः, तत्र दगरजः–श्लक्ष्णोदककणिकाः, तुषारगोक्षीरहारतुल्यवर्णाः, तुषारः–हिमं, गोक्षीरादयः प्रकटार्थाः । संस्थानमुपदर्शयन्नाह–उत्तानच्छत्रसंस्थिता च भणिता जिनवरैरिति, उत्तानच्छत्रवत् संस्थितेति गाथार्थः ॥ ९६१ ॥ अधुना परिधिप्रतिपादनेनास्या एवोपायतः प्रमाणमभिधित्सुराह—

एगा जोअणकोडी बायालीसं च सयसहस्साइं । तीसं चेव सहस्सा दो चेव सया अउणवन्ना ॥ ९६२ ॥

व्याख्या—निगदसिद्धा, नवरं पञ्चचत्वारिंशद्योजनलक्षप्रमाणक्षेत्रस्याल्पमन्यन् परिध्याधिक्यं प्रज्ञापनातोऽवसेयम्, इहोघत इदमिति ॥ ९६२ ॥ इदानीमस्या एव बाहुल्यं प्रतिपादयन्नाह—

बहुमज्झदेसभागे अट्ठेव य जोअणाणि बाहल्लं । चरमंतेसु अ तणुई अंगुलऽसंखिज्जइभागं ॥ ९६३ ॥

व्याख्या—मध्यदेशभाग एव बहुमध्यदेशभागस्तस्मिन्नष्टैव योजनानि बाहुल्यम्–उच्चैस्त्वं 'चरिमान्तेषु' पश्चिमान्तेषु तन्वी, कियता तनुत्वेन ? इत्यत्राह—अङ्गुलासङ्ख्येयभागं यावत् तन्वीति गाथार्थः ॥ ९६३ ॥ सा पुनरनेन क्रमेणेत्थं तन्वीति दर्शयति—

**गंतूण जोअणं जोअणं तु परिहाइ अंगुलपुहुत्तं । तीसेऽविअ पेरंता मच्छिअपत्ताउ तणुअयरा ॥ ९६४ ॥**

व्याख्या—गत्वा योजनं योजनं तु वीप्सा 'परिहायइ'त्ति परिहीयते 'अङ्गुलपृथक्त्वं' पृथक्त्वं पूर्ववत्, 'एवम्' अनेन प्रकारेण हानिभावे सति तस्या अपि च पर्यन्ताः, किं ?—मक्षिकापत्रात् तनुतरा घृतपूर्णतथाविधकरोटिकाकारेति गाथार्थः ॥९६४॥ स्थापना चेयं । अस्याश्चोपरि योजनचतुर्विंशतिभागे सिद्धा भवन्तीति ॥ अत एवाऽऽह—

**ईसीपब्भाराए सीआए जोअणंमि जो कोसो । कोसस्स य छब्भाए सिद्धाणोगाहणा भणिआ ॥ ९६५ ॥**

व्याख्या—ईषत्प्राग्भारायाः सीताया इति पूर्ववत्, 'योजने' उपरिवर्तिनि यः क्रोश उपरिवर्त्येव, क्रोशस्य च तस्य 'षड्भागे' उपरिवर्तिन्येव सिद्धानामवगाहना भणिता, लोकाग्रे च प्रतिष्ठिता इति वचनाद्, अयं गाथार्थः ॥ ९६५ ॥ अमुमेवार्थं समर्थयन्नाह—

**तिन्नि सया तित्तीसा धणुत्तिभागो अ कोसछब्भाओ । जं परमोगाहोऽयं तो ते कोसस्स छब्भाए ॥ ९६६ ॥**

व्याख्या—त्रीणि शतानि धनुषां त्रयस्त्रिंशदधिकानि धनुस्त्रिभागश्च क्रोशषड्भागो वर्तते 'यत्' यस्मात् परमावगाहोऽयं सिद्धानामिति वर्तते, ततस्ते क्रोशस्य षड्भाग इति गाथार्थः ॥ ९६६ ॥ अथ कथं पुनस्तत्र तेषामुपपातोऽवगाहना वेत्यत्रोच्यते—

**उत्ताणउव्व पासिल्लउव्व अहवा निसन्नओ चेव । जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥ ९६७ ॥**

व्याख्या—उत्तानको वा पृष्ठतो वा अर्धावनतादिस्थानतः पार्श्वस्थितो वा तिर्यक्स्थितो वा, अथवा निषण्ण(ण्ण)कश्चैव इति प्रकटार्थं, किं बहुना ?, यो 'यथा' येन प्रकारेणावस्थितः सन् करोति कालं स 'तथा' तेन प्रकारेणोपपद्यते सिद्ध इति गाथार्थः ॥ ९६७ ॥ किमित्येतदेवम् ? इत्यत आह—

**इहभवभिन्नागारो कम्मवसाओ भवंतरे होइ । न य तं सिद्धस्स जओ तंमी तो सो तयागारो ॥ ९६८ ॥**

व्याख्या—इहभवभिन्नाकारः 'कर्मवशात्' कर्मवशेन 'भवान्तरे' स्वर्गादौ भवति, तदाकारभेदस्य कर्मनिबन्धनत्वात्, न च कर्म सिद्धस्य, यतः 'तस्मिन्' अपवर्गे ततोऽसौ सिद्धः 'तदाकारः' पूर्वभवाकार इति गाथार्थः ॥ ९६८ ॥ तथा किं च—

**जं संठाणं तु इहं भवं चयंतस्स चरमसमयंमि । आसी अ पएसघणं तं संठाणं तहिं तस्स ॥ ९६९ ॥**

व्याख्या—यत् संस्थानमत्रैव 'भवं' संसारं मनुष्यभवं वा त्यजतः सतश्चरमसमये आसीत् प्रदेशघनं तदेव संस्थानं तत्र तस्य भवति, त्रिभागेन रन्ध्रापूरणादिति गाथार्थः ॥ ९६९ ॥ तथा चाऽऽह—

**दीहं वा हस्सं वा जं चरमभवे हविज्ज संठाणं । तत्तो तिभागहीणा सिद्धाणोगाहणा भणिआ ॥ ९७० ॥**

व्याख्या—'दीर्घं वा' पञ्चधनुःशतप्रमाणं 'ह्रस्वं वा' हस्तद्वयप्रमाणं, वाशब्दात् मध्यमं वा विचित्रं यत् 'चरमभवे' पश्चिमभवे भवेत् संस्थानं 'ततः' तस्मात् संस्थानात् त्रिभागहीना, कुतः ?—त्रिभागेन शुषिरपूरणात्, सिद्धानामवगाहना, अवगाहन्तेऽस्यामवस्थायामित्यवगाहना—स्वावस्थैवेति भावः, 'भणिता' उक्ता तीर्थकरगणधरैरिति गाथार्थः ॥ ९७० ॥ साम्प्रतमुत्कृष्टादिभेदभिन्नामवगाहनामभिधित्सुराह—

**तिन्नि सया तित्तीसा धणुत्तिभागो अ होइ बोद्धव्वो । एसा खलु सिद्धाणं उक्कोसोगाहणा भणिआ ॥ ९७१ ॥**

**चत्तारि अ रयणीओ रयणितिभागूणिआ य बोद्धव्वा । एसा खलु सिद्धाणं मज्झिमओगाहणा भणिआ ॥९७२॥**

**एगा य होइ रयणी अट्ठेव य अंगुलाइ साहीआ । एसा खलु सिद्धाणं जहन्नओगाहणा भणिआ ॥ ९७३ ॥**

व्याख्या—एतास्तिस्रोऽपि निगदसिद्धाः, नवरमाक्षेपपरिहारौ भाष्यकृतोक्तौ, तौ चेमौ—'किहं मरुदेवीमाणं ? नाभीओ जेण किंचिदूणा सा । तो किर पंचसयं चिय अहवा संकोयओ सिद्धा ॥ १ ॥ सत्तूसिएसु सिद्धी जहन्नओ किहमिहं विहत्थेसु ? । सा किर तित्थकरेसुं सेसाणं सिज्झमाणाणं ॥ २ ॥ ते पुण होज्ज विहत्था कुम्मापुत्तादओ जहन्नेणं । अन्ने संवट्टियसत्तहत्थसिद्धस्स हीणत्ति ॥ ३ ॥ बाहुल्लतो य सुत्तंमि सत्त पंच य जहन्नमुक्कोसं । इहरा हीणब्भहियं होज्जंगुलधणुपुहुत्तेहिं ॥ ४ ॥ अच्छेरयाइ किंचिवि सामन्नसुए ण देसियं सव्वं । होज्ज व अणिबद्धं चिय पंचसयादेसवयणं व ॥ ५ ॥'[1] इत्यादि कृतं प्रसङ्गेन । साम्प्रतमुक्तानुवादेनैव संस्थानलक्षणं सिद्धानामभिधातुकाम आह—

**ओगाहणाइ सिद्धा भवत्तिभागेण हुंति परिहीणा । संठाणमणित्थंत्थं जरामरणविप्पमुक्काणं ॥ ९७४ ॥**

---

[1] कथं मरुदेवीमानं ?, नाभितो येन किञ्चिदूना सा । ततः किल पञ्चशतमेव अथवा सङ्कोचतः सिद्धा ॥ १ ॥ सप्तोच्छ्रितेषु सिद्धिः जघन्यतः कथमिह द्विहस्तेषु ? । सा किल तीर्थकराणां शेषाणां सिध्यताम् ॥ २ ॥ ते पुनर्भवेयुर्द्विहस्ता कूर्मापुत्रादयो जघन्येन । अन्ये संवर्तितसप्तहस्तसिद्धस्य हीनेति ॥ ३ ॥ बाहुल्यतश्च सूत्रे सप्त पञ्च ( शतानि ) च जघन्या उत्कृष्टा ( च )। इतरथा हीनमभ्यधिकं ( क्रमशः ) भवेदङ्गुलधनुःपृथक्त्वैः ॥ ४ ॥ आश्चर्यादि (आश्चर्यतया) किञ्चिदपि सामान्यश्रुते न देशितं सर्वम् । भवेद्वाऽनिबद्धमेव पञ्चशतादेशवचनवत् ॥ ५ ॥

व्याख्या—निगदसिद्धा, नवरम् 'अनित्थंस्थम्' इतीदंप्रकारमापन्नमित्थम् इत्थं तिष्ठतीति इत्थस्थं न इत्थंस्थं अनित्थस्थमिति केनचित् प्रकारेण लौकिकेनास्थितमित्यर्थः ॥ ९७४ ॥ आह–ओघत एते किं देशभेदेन स्थिता ? उत नेति ?, नेत्याह—कुत इति ?, अत्रोच्यते, यस्मात्—

**जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नुन्नसमोगाढा पुट्ठा सव्वे अ लोगंते ॥ ९७५ ॥**

व्याख्या—यत्रैव देशे चशब्दस्यैवकारार्थत्वात् एकः 'सिद्धः' निर्वृतः, तत्रानन्ताः किं ?,–'भवक्षयविमुक्ता' इति भवक्षयेण विमुक्ताः भवक्षयविमुक्ताः, अनेन पुनः स्वेच्छया भवावतरणशक्तिमत्सिद्धव्यवच्छेदमाह, अन्योऽन्यसमवगाढाः, तथाविधाचिन्त्यपरिणामवत्त्वात्, धर्मास्तिकायादिवत् , 'पुट्ठा सवे य लोगंते'त्ति स्पृष्टाः–लग्नाः सर्वे च लोकान्ते, अथवा स्पृष्टः सर्वैश्च लोकान्त इति, लोकाग्रे च प्रतिष्ठिता इति वचनाद्, अयं गाथार्थः ॥ ९७५ ॥ तथा—

**फुसइ अणंते सिद्धे सव्वपएसेहि निअमसो सिद्धो । तेऽवि असंखिज्जगुणा देसपएसेहिं जे पुट्ठा ॥ ९७६ ॥**

व्याख्या—स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैः आत्मसम्बन्धिभिः 'नियमात्' नियमेन सिद्ध इति, तथा तेऽप्यसंख्येयगुणा वर्तन्ते देशप्रदेशैर्ये स्पृष्टाः, तेभ्यः सर्वदेशप्रदेशस्पृष्टेभ्यः, कथं ?–सर्वात्मप्रदेशैरनन्ताः स्पृष्टाः, तथैकैकप्रदेशेनाप्यनन्ता एव, स चासङ्ख्येयप्रदेशात्मकः, ततश्च मूलानन्तकं सकलजीवप्रदेशासङ्ख्येयानन्तकैर्गुणितं यथोक्तमेव भवतीति गाथार्थः ॥ ९७६ ॥ स्थापना चेयं— साम्प्रतं सिद्धानेव लक्षणतः प्रतिपादयन्नाह—

**असरीरा जीवघणा उवउत्ता दंसणे अ नाणे अ । सागारमणागारं लक्खणमेअं तु सिद्धाणं ॥ ९७७ ॥**

व्याख्या—अविद्यमानशरीराः, औदारिकादिपञ्चविधशरीररहिता इत्यर्थः, जीवाश्चेति घनाश्चेति विग्रहः, घनग्रहणं शुषिरापूरणाद्, उपयुक्ताः, क्व ?, 'दर्शने च' केवलदर्शने 'ज्ञाने च' केवल एवेति, इह च सामान्यसिद्धलक्षणमेतदिति ज्ञापनार्थं सामान्यालम्बनदर्शनाभिधानमादावदुष्टमिति, तथा च सामान्यविषयं दर्शनं विशेषविषयं ज्ञानमिति, ततश्च साकारानाकारं सामान्यविशेषरूपमित्यर्थः, 'लक्षणं' तदन्यव्यावृत्तं स्वरूपमित्यर्थः 'एतद्' अनन्तरोक्तं, तुशब्दो वक्ष्यमाणनिरुपमसुखविशेषणार्थः, 'सिद्धाना' निष्ठितार्थानामिति गाथार्थः ॥ ९७७ ॥ साम्प्रतं केवलज्ञानदर्शनयोरशेषविषयतामुपदर्शयति—

**केवलनाणुवउत्ता जाणंती सव्वभावगुणभावे । पासंति सव्वओ खलु केवलदिट्ठीहिऽणंताहिं ॥ ९७८ ॥**

व्याख्या—केवलज्ञानेनोपयुक्ताः केवलज्ञानोपयुक्ताः न त्वन्तःकरणेन, तदभावादिति,किं ?, 'जानन्ति' अवगच्छन्ति'सर्वभावगुणभावान्' सर्वपदार्थगुणपर्यायानित्यर्थः, प्रथमो भावशब्दः पदार्थवचनः द्वितीयः पर्यायवचन इति, गुणपर्यायभेदस्तु सहवर्तिनो गुणाः क्रमवर्तिनः पर्याया इति, तथा 'पश्यन्ति सर्वतः खलु' खलुशब्दस्यावधारणार्थत्वात् सर्वत एव, 'केवलदृष्टिभिरनन्ताभिः' केवलदर्शनैरनन्तैरित्यर्थः, अनन्तत्वात् सिद्धानामिति, इह चाऽऽदौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्थाः सिद्ध्यन्तीति ज्ञापनार्थमिति गाथार्थः ॥ ९७८ ॥ आह–किमेते युगपज्जानन्ति पश्यन्ति च ? इत्याहोश्विद्युगपदिति, अत्रोच्यते, अयुगपत् , कथमवसीयते ?, यत आह—

**नाणंमि दंसणंमि अ इत्तो एगयरयंमि उवउत्ता । सव्वस्स केवलिस्सा जुगवं दो नत्थि उवओगा ॥ ९७९ ॥**

व्याख्या—ज्ञाने दर्शने च 'एत्तो'त्ति अनयोरेकतरस्मिन्नुपयुक्ताः,किमिति ?,यतः सर्वस्य केवलिनः सत्त्वस्य 'युगपद्' एकस्मिन् काले द्वौ न स्तः उपयोगौ, तत्स्वाभाव्यात्, क्षायोपशमिकसंवेदने तथादर्शनात्, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति गाथार्थः ॥ ९७९ ॥ साम्प्रतं निरुपमसुखभाजश्च त इत्येतदुपदर्शयन्नाह—

**नवि अत्थि माणुसाणं तं सुक्खं नेव सव्वदेवाणं । जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं ॥ ९८० ॥**

व्याख्या—नैवास्ति 'मानुषाणां' चक्रवर्त्यादीनामपि तत् सौख्यं, नैव 'सर्वदेवानाम्' अनुत्तरसुरपर्यन्तानामपि, यत् सिद्धानां सौख्यम्, 'अव्याबाधामुपगताना'मिति तत्र विविधा आबाधा व्याबाधा न व्याबाधा अव्याबाधा तामुपसामीप्येन गतानां–प्राप्तानामिति गाथार्थः ॥ ९८० ॥ यथा नास्ति तथा भङ्ग्योपदर्शयति—

**सुरगणसुहं समत्तं सव्वद्धापिंडिअं अणंतगुणं । न य पावइ मुत्तिसुहंऽणंताहिवि वग्गवग्गूहिं ॥ ९८१ ॥**

व्याख्या—'सुरगणसुखं' देवसङ्घातसुखं 'समस्तं' सम्पूर्णम् अतीतानागतवर्तमानकालोद्भवमित्यर्थः, पुनश्च 'सव्वद्धापिंडिअं' सर्वकालसमयगुणितं, तथाऽनन्तगुणमिति, तदेवंप्रमाणं किलासद्भावकल्पनयैकैकाकाशप्रदेशे स्थाप्यते, इत्येवं सकललोकालोकाकाशानन्तप्रदेशपूरणेनानन्तं भवति, न च प्राप्नोति तथाप्रकर्षगतमपि 'मुक्तिसुखं' सिद्धिसुखम्, अनन्तैरपि वर्गवर्गैर्वर्गितमिति गाथार्थः ॥ ९८१ ॥ तथा चैतदभिहितार्थानुवाद्येवाऽऽह ग्रन्थकारः—

**सिद्धस्स सुहो रासी सव्वद्धापिंडिओ जइ हविज्जा । सोऽणंतवग्गभइओ सव्वागासे न माइज्जा ॥ ९८२ ॥**

व्याख्या—सिद्धस्य सम्बन्धिभूतः सुखराशिः, सुखसङ्घात इत्यर्थः, 'सर्वाद्धापिण्डितः' सर्वकालसमयगुणितः यदि भवेदित्यनेन कल्पनामात्रतामाह, सः 'अनन्तवर्गभक्तः' अनन्तवर्गापवर्तितः सन् समीभूत एवेति भावार्थः, 'सर्वाकाशे' लोकालोकाकाशे न मायात्, अयमत्र भावार्थः—इह किल विशिष्टाह्लादरूपं सुखं गृह्यते, ततश्च यत आरभ्य शिष्टानां सुखशब्दप्रवृत्तिः तमाह्लादमवधीकृत्यैकैकगुणवृद्धितारतम्येन तावदसावाह्लादो विशेष्यते यावदनन्तगुणवृद्ध्या निरतिशय-गुणनिष्ठां गतः, ततश्चासावत्यन्तोपमातीतैकान्तौत्सुक्यविनिवृत्तिस्तिमितनिसकल्पश्चरमाह्लाद एव सदा सिद्धानामिति, तस्मा-च्चारतः प्रथमाच्चोर्ध्वमपान्तरालवर्तिनो ये गुणतारतम्येनाह्लादविशेषास्ते सर्वाकाशप्रदेशादिभ्योऽपि भूयांस इत्यतः कि-लोक्तं—'सव्वागासे ण माएज्ज'त्तीत्यादि, अन्यथा नियतदेशावस्थितेः तेषां कथमिति सूक्ष्मोऽभिधर्मानि, तथा चैतत्तन्-वाद्यार्थवेदेऽप्युक्तम्, इत्यलं व्यासङ्गेनेति गाथार्थः ॥९८२॥ साम्प्रतमस्यैवाभाग्याणि सतः निरुपमतां प्रतिपादयन्नाह—

**जह नाम कोइ मिच्छो नगरगुणे बहुविहे वियाणंतो । न चएइ परिकहेउं उवमाइ तहिं असंतीए ॥ ९८३ ॥**

व्याख्या—यथा नाम कश्चित् म्लेच्छः 'नगरगुणान्' गृहादिरामादीन् 'बहुविधान्' अनेकप्रकारान् विजानन्नवगच्छन् सन्नन्यम्लेच्छेभ्यो न शक्नोति परिकथयितुं, कुतो निमित्तात् ?, इत्यत आह—उपमायां तत्रासत्यामिति गाथाक्षरार्थः ॥ ९८३ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—एगो महारण्णवासी मिच्छो रण्णे चिट्ठइ, इओ य एगो राया आसेण अवहरिउं तं अडविं पवेसिओ, तेण दिट्ठो, सक्कारेऊण जणवयं णीओ, रण्णावि सो णयरं, पच्छा उवयारित्ति गाढमुवचरिओ

१ एको महारण्यवासी म्लेच्छोऽरण्ये तिष्ठति, इतश्चैको राजाऽश्वेनापहृत्य तामटवीं प्रवेशितः, तेन दृष्टः, सत्कार्य जनपदं नीतः, राज्ञापि स नगरं, पश्चादुपकारीति गाढमुपचरितः,

जहा राया तहा चिट्ठइ धवलघराईभोगेणं, विभासा, कालेण रण्णं सरिउमारद्धो, रण्णा विसज्जिओ गओ, रण्णिगा पुच्छंति-केरिसं णयरंति ?, सो वियाणंतोऽवि तत्थोवमाऽभावा ण सक्कइ णयरगुणे परिकहिउं । एस दिट्ठंतो, अयमत्थोवणओत्ति—

**इअ सिद्धाणं सुक्खं अणोवमं नत्थि तस्स ओवम्मं । किंचि विसेसेणित्तो सारिक्खमिणं सुणह वुच्छं ॥९८४॥**

व्याख्या—'इय' एवं सिद्धानां सौख्यमनुपमं वर्तते, किमित्यत आह—यतो नास्ति तस्यौपम्यमिति, तथाऽपि बालज-नप्रतिपत्तये किञ्चिद्विशेषेण 'एत्तो'त्ति आर्षत्वादस्य सादृश्यमिदं—वक्ष्यमाणलक्षणं शृणुत, वक्ष्य इति गाथार्थः ॥

**जह सव्वकामगुणिअं पुरिसो भोत्तूण भोअणं कोइ । तण्हाछुहाविमुक्को अच्छिज्ज जहा अमिअतित्तो ॥९८५॥**

व्याख्या—'यथा' इत्युदाहरणोपन्यासार्थः 'सर्वकामगुणितं' सकलसौन्दर्यसंस्कृतं पुरुषो भुक्त्वा भोजनं कश्चित्, भुज्यत इति भोजनं, तृट्क्षुद्विमुक्तः सन् आसीत यथाऽमृततृप्तः, अबाधारहितत्वात्, इह च रसनेन्द्रियमेवाधिकृत्येष्टवि-षयप्राप्त्यौत्सुक्यविनिवृत्त्या सुखप्रदर्शनं सकलेन्द्रियार्थावाप्त्याऽशेषौत्सुक्यनिवृत्त्युपलक्षणार्थम्, अन्यथा बाधान्तरसम्भवात् सुखाभाव इति, उक्तं च—"वेणुवीणामृदङ्गादिनादयुक्तेन हारिणा । श्लाघ्यस्वरकथाबद्धगीतेन स्तिमितः सदा ॥१॥ कुट्टिमादौ विचित्राणि, दृष्ट्वा रूपाण्यनुत्सुकः । लोचनानन्ददायीनि, लीलावन्ति स्वकानि हि ॥ २ ॥ अम्बरागुरुकर्पूरधूपगन्धानि तस्ततः । पटवासादिगन्धांश्च, व्यक्तमाघ्राय निःस्पृहः ॥ ३ ॥ नानारससमायुक्तं, भुक्त्वाऽन्नमिह मात्रया । पीत्वोदकं च

१ यथा राजा तथा तिष्ठति धवलगृहादिभोगेन, विभाषा, कालेनारण्यं स्मर्तुमारब्धः, राज्ञा विसृष्टो गतः, आरण्यकाः पृच्छन्ति—कीदृशं नगरमिति ?, स विजानन्नपि तत्रोपमाऽभावान्न शक्नोति नगरगुणान् परिकथयितुं । एष दृष्टान्तः, अयमत्रोपनय इति ।

तृप्तात्मा, स्वादयन् स्वादिमं शुभम् ॥ ४ ॥ मृदुतूलीसमाक्रान्तदिव्यपर्यङ्कसंस्थितः । सहसाऽम्भोदसंशब्दश्रुतेर्भयघनं भृशम् ॥ ५ ॥ इष्टभार्यापरिष्वक्तस्तद्रतान्तेऽथवा नरः । सर्वेन्द्रियार्थसम्प्राप्त्या, सर्वबाधानिवृत्तिजम् ॥ ६ ॥ यद्वेदयति शं हृष्टं, प्रशान्तेनान्तरात्मना । मुक्तात्मनस्ततोऽनन्तं, सुखमाहुर्मनीषिणः ॥ ७ ॥" इति गाथार्थः ॥ ९८५ ॥

**इअ सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा । सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ता ॥ ९८६ ॥**

व्याख्या—'इअ' एवं सर्वकालतृप्ताः स्वस्वभावावस्थितत्वात्, अतुलं निर्वाणमुपगताः सिद्धाः, सर्वदा सकलौत्सुक्यविनि-वृत्तेः, यतश्चैवमतः 'शाश्वतं' सर्वकालभावि 'अव्याबाधं' व्याबाधापरिवर्जितं सुखं प्राप्ताः सुखिनः सन्तस्तिष्ठन्तीति योगः । सुखं प्राप्ता इत्युक्ते सुखिन इत्यनर्थकं, न, दुःखाभावमात्रमुक्तिसुखनिरासेन वास्तवसुखप्रतिपादनार्थत्वादस्य, तथाहि—अशेषदोषक्षयतः शाश्वतमव्याबाधं सुखं प्राप्ताः सुखिनः सन्तस्तिष्ठन्ति न तु दुःखाभावमात्रान्विता एवेति गाथार्थः ॥ ९८६ ॥ साम्प्रतं वस्तुतः सिद्धपर्यायशब्दान् प्रतिपादयन्नाह—

**सिद्धत्ति अ बुद्धत्ति अ पारगयत्ति अ परंपरगयत्ति । उम्मुक्ककम्मकवया अजरा अमरा असंगा य ॥ ९८७ ॥**

व्याख्या—'सिद्धा इति च' कृतकृत्यत्वात् 'बुद्धा इति च' केवलेन विश्वावगमात् 'पारगता इति च' भवार्णवपारग-मनात् 'परम्परागता इति च' पुण्यबीजसम्यक्त्वज्ञानचरणक्रमप्रतिपत्त्युपायमुक्तत्वात् परम्परया गताः परम्परागता उच्यन्ते,

* परित्यक्त० + प्रतिपत्त्योपाय०

उन्मुक्तकर्मकवचाः सकलकर्मवियुक्तत्वात्, तथा अजरा वयसोऽभावात्, अमरा आयुषोऽभावात्, असङ्गाश्च सकलक्ले-शाभावादिति गाथार्थः ॥ ९८७ ॥ साम्प्रतमुपसंहरन्नाह—

**निच्छिन्नसव्वदुक्खा जाइजरामरणबंधणविमुक्का । अव्वाबाहं सुक्खं अणुहुंती सासयं सिद्धा ॥ ९८८ ॥**

व्याख्या—वस्तुतो व्याख्यातैवेति न प्रतन्यते ॥

**सिद्धाण नमोक्कारो जीवं० ॥ ९८९ ॥ सिद्धाण नमुक्कारो धन्नाण० ॥ ९९० ॥ सिद्धाण नमुक्कारो एवं० ॥ ९९१ ॥ सिद्धाण नमुक्कारो सव्व० पिढमं होइ मंगलं ॥ ९९२ ॥**

गाथासमूहः सामान्यतोऽर्हन्नमस्कारवदवसेयः, विशेषतस्तु सुगम एवेति ॥ उक्तः सिद्धनमस्काराधिकारः, साम्प्रत-माचार्यनमस्कारः, तत्राचार्य इति कः शब्दार्थः, उच्यते,—'चर गतिभक्षणयोः' इत्यस्य ( चरेः ) आङि वा गुरा ( पा० ३-१-१०० वार्त्तिके ) विति ण्यति आचार्य इति भवति, आचर्यतेऽसावित्याचार्यः, कार्यार्थिभिः सेव्यत इत्यर्थः, अयं च नामादिभेदाच्चतुर्विधः, तथा चाऽऽह—

**नामंठवणादविए भावंमि चउव्विहो उ आयरिओ । दव्वंमि एगभविआई लोइए सिप्पसत्थाई ॥ ९९३ ॥**

व्याख्या—नामाचार्यः स्थापनाचार्यः द्रव्याचार्यो भावाचार्य इति, तत्र नामस्थापनाचार्यौ सुगमौ, द्रव्याचार्य-मागमनोआगमादिभेदं प्रायः सर्वत्र तुल्यविचारत्वादनादृत्य ज्ञशरीरादिव्यतिरिक्तं द्रव्याचार्यमभिधातुकाम आह—'द्रव्य' इति द्रव्याचार्यः, 'एकभविकादिः' एकभविकः बद्धायुष्कः अभिमुखनामगोत्रश्चेति, अथवा आदिशब्दाद्-द्रव्यभूत आचार्य द्रव्याचार्यः, भूतशब्द उपमावाची, द्रव्यनिमित्तं वा य आचारवानित्यादि, भावाचार्यः—लौकिको लोकोत्तरश्च, तत्र लौकिकः शिल्पशास्त्रादि', तत्परिज्ञानात् तदभेदोपचारेणैवमुच्यते, अन्यथा शिल्पादिग्राहको गृह्यते, अन्ये त्वेवं भेदमकृत्वौघत एवैनमपि द्रव्याचार्यं व्याचक्षत इति गाथार्थः ॥ ९९३ ॥ अधुना लोकोत्तरान् भावा-चार्यान् प्रतिपादयन्नाह—

**पंचविहं आयारं आयरमाणा तहा पभासंता । आयारं दंसंता आयरिया तेण वुच्चंति ॥ ९९४ ॥**

व्याख्या—'पञ्चविधं' पञ्चप्रकारं—ज्ञानदर्शनचारित्रतपोवीर्यभेदात्, 'आचार' मिति आङ् मर्यादायां चरणं चारः—मर्यादया कालनियमादिलक्षणया चार आचार इति, उक्तं च—'काले विणए बहुमाणे' इत्यादि, तमाचरन्तः सन्तः अनु-ष्ठानरूपेण, तथा प्रभाषमाणाः अर्थाद् व्याख्यानेन, तथाऽऽचारं दर्शयन्तः सन्तः प्रत्युपेक्षणादिक्रियाद्वारेण, मुमुक्षुभिः सेव्यन्ते येन कारणेनाचार्यास्तेनोच्यन्त इति गाथार्थः ॥ ९९४ ॥ अमुमेवार्थं स्पष्टयन्नाह—

**आयारो नाणाई तस्सायरणा पभासणाओ वा । जे ते भावायरिया भावायारोवउत्ता य ॥ ९९५ ॥**

व्याख्या—'आचारः' पूर्ववत् ज्ञानादिपञ्चप्रकारः, तस्य आचारस्याऽऽचरणात् प्रभाषणाद्वा, वाशब्दाद् दर्शनाद्वा हेतोर्ये मुमुक्षुभिर्गुणैर्वा ज्ञानादिभिराचर्यन्ते ते भावाचार्या उच्यन्ते, एतच्चाऽऽचरणाद्यनुपयोगतोऽपि सम्भवति यतः अत आह—'भावाचारोपयुक्ताश्च' भावार्थमाचारो भावाचारः तदुपयुक्ताश्चेति गाथार्थः ॥ ९९५ ॥ **आयरियणमोक्कारो ४** इत्यादिगाथाप्रपञ्चः सामान्येनार्हन्नमस्कारवदवसेयः विशेषतस्तु सुगम एवेति ॥

उक्त आचार्यनमस्काराधिकारः ॥ साम्प्रतमुपाध्यायनमस्काराधिकारः, तत्रोपाध्याय इति कः शब्दार्थः?, उच्यते—'इङ् अ-ध्ययने' इत्यस्य 'इङश्चे'ति ( पा० ३-३-२१ ) घञ् उपाध्यायः, उपेत्याधीयतेऽस्मात् साधवः सूत्रमित्युपाध्यायः, स च नामादिभेदाच्चतुर्विध इति, आह च—

**नामठवणादविए भावंमि चउव्विहो उवज्झाओ । दव्वे लोइअ सिप्पाइ निण्हगा वा इमे भावे ॥ ९९६ ॥**

व्याख्या—इयं हि तत्त्वत आचार्यगाथातुल्ययोगक्षेमैवेति न प्रतन्यते, नवरं निह्नवा वेति यदुक्तं तत्र ते ह्यभिनिवे-शदोषेणैकमपि पदार्थमन्यथा प्ररूपयन्तो मिथ्यादृष्टय एव इत्यतो द्रव्योपाध्याया इति ॥

**बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहेहिं । तं उवइसंति जम्हा उवज्झाया तेण वुच्चंति ॥ ९९७ ॥**

व्याख्या—द्वादशाङ्ग आचारादिभेदात् 'जिनाख्यातः' अर्हत्प्रणीतः स्वाध्यायः वाचनानिबन्धनत्वात् इह सूत्रमेव गृह्यते, कथितः 'बुधैः' गणधरादिभिः, य इति गम्यते, 'तं' स्वाध्यायमुपदिशन्ति वाचनारूपेण यस्मात् कारणादुपाध्या-यास्तेनोच्यन्ते, उपेत्याधीयतेऽस्मादित्यन्वर्थोपपत्तेरिति गाथार्थः ॥ ९९७ ॥ साम्प्रतमागमशैल्याऽक्षरार्थमविकृत्योपाध्या-यशब्दार्थं निरूपयन्नाह—

**उत्ति उवओगकरणे ज्झत्ति अ झाणस्स होइ निद्देसे । एएण हुंति उज्झा एसो अन्नोऽवि पज्जाओ ॥ ९९८ ॥**

व्याख्या—उ इत्येतदक्षरं उपयोगकरणे वर्तते, ज्झ इति चेदं ध्यानस्य भवति निर्देशे, ततश्च प्राकृतशैल्या एतेन कार-णेन भवति उज्झा, उपयोगपुरस्सरं ध्यानकर्तार इत्यर्थः, एषोऽन्योऽपि पर्याय इति गाथार्थः ॥ ९९८ ॥ अथवा—

**उत्ति उवओगकरणे वत्तिअ पावपरिवज्जणे होइ । झत्ति अ झाणस्स कए उत्ति अ ओसक्कणा कम्मे ॥ ९९९ ॥**

व्याख्या—निगदसिद्धा, नवरमुपयोगपूर्वकं पापपरिवर्जनतो ध्यानारोहणेन कर्माण्यपनयन्तीत्युपाध्याया इत्यक्षरार्थः, अक्षरार्थाभावे च पदार्थाभावप्रसङ्गात्पदस्य तत्समुदायरूपत्वादक्षरार्थः प्रतिपत्तव्य इत्यलं विस्तरेण ॥९९९॥ 'उवज्झायनमोक्कारो' ४ इत्यादिगाथापूगः सामान्येनार्हन्नमस्कारवदवसेयः, विशेपस्तु सुगम एवेति ॥

उक्त उपाध्यायनमस्काराधिकारः ॥ साम्प्रतं साधुनमस्काराधिकारः, तत्र 'राध साध संसिद्धौ' वित्यस्य उणूप्रत्ययान्तस्य साधुरिति भवति, अभिलषितमर्थं साधयतीति साधुः, स च नामादिभेदतः, तथा चाऽऽह—

**नामं १ ठवणासाहू २ दव्वसाहू अ ३ भावसाहू अ ४ । दव्वंमि लोइआई भावंमि अ संजओ साहू ॥१०००॥**

व्याख्या—वस्तुतो गतार्थैवेति न विव्रियते ॥ द्रव्यसाधून् प्रतिपादयन्नाह—

**घडपडरहमाईणि उ साहंता हुंति दव्वसाहुत्ति । अहवावि दव्वभूआ ते हुंती दव्वसाहुत्ति ॥ १००१ ॥**

व्याख्या—निगदसिद्धा, नवरमथवाऽपि 'द्रव्यभूता' इति भावपर्यायशून्याः ॥ भावसाधून् प्रतिपादयन्नाह—

**निव्वाणसाहए जोए, जम्हा साहंति साहुणो । समा य सव्वभूएसु, तम्हा ते भावसाहुणो ॥ १००२ ॥**

व्याख्या—निर्वाणसाधकान् 'योगान्' सम्यग्दर्शनादिप्रधानव्यापारान् यस्मात् साधयन्ति साधवः विहितानुष्ठानपरत्वात्, तथा समाश्च सर्वभूतेष्विति योगप्राधान्यख्यापनार्थमेतत्, तस्मात्ते भावसाधव इति गाथार्थः ॥ १००२ ॥

**किं पिच्छसि साहूणं तवं व निअमं व संजमगुणं वा । तो वंदसि साहूणं? एअं मे पुच्छिओ साहू ॥ १००३ ॥**

व्याख्या—निगदसिद्धा ॥

**विसयसुहनिअत्ताणं विसुद्धचारित्तनिअमजुत्ताणं । तच्चगुणसाहयाणं सदायकिच्चुज्जयाण नमो ॥ १००४ ॥**

व्याख्या—निगदसिद्धैव,

**असहाइ सहायत्तं करंति मे संजमं करिंतस्स । एएण कारणेणं नमामिऽहं सव्वसाहूणं ॥ १००५ ॥**

व्याख्या—परमार्थसाधनप्रवृत्तौ सत्यां जगत्यसहाये सति प्राकृतशैल्या वाऽसहायस्य सहायत्वं कुर्वन्ति मम संयमं कुर्वतः सतः, अनेन प्रकारेण नमाम्यहं सर्वसाधुभ्य इति गाथार्थः ॥ १००५ ॥ 'साहूण नमोक्कारो ४ इत्यादिगाथाविस्तरः सामान्येनार्हन्नमस्कारवदवसेयः, विशेपस्तु सुखोन्नेय इति कृतं प्रसङ्गेन ॥ उक्तं वस्तुद्वारम्, अधुनाऽऽक्षेपद्वारावयवार्थप्रचिकटिपयेदमाह—

**णवि[3] संखेवो व वित्थारु संखेवो दुविहु सिद्धसाहूणं । वित्थारओऽणेगविहो पंचविहो न जुज्जई तम्हा ॥१००६॥**

व्याख्या—इहास्या गाथाया अंशकक्रमनियमाच्छन्दोविचितौ लक्षणमनेन पाठेन विरुध्यते 'न संखेवो' इत्यादिना, यत इहाद्य एव पञ्चमात्रोऽंशकः इत्यतोऽपपाठोऽयमिति, ततश्चापिशब्द एवात्र विद्यमानार्थो द्रष्टव्यः, 'णवि संखेवो' इत्यादि, इह किल सूत्रं संक्षेपविस्तरद्वयमतीत्य न वर्तते, तत्र संक्षेपवत् सामायिकसूत्रं, विस्तरवच्चतुर्दश पूर्वाणि, इदं

१ सव्व० २ साहूण० ३ इत प्राक् 'एसो पचनमुक्कारो' इत्यादिश्लोकः पस्तकादर्शेषु, न च वृत्तौ व्याख्यातः सूचितो वा स. ।

पुनर्नमस्कारसूत्रमुभयातीतं, यतोऽत्र न संक्षेपो नापि विस्तर इत्यपिशब्दस्य व्यवहितः सम्बन्धः, 'संक्षेपो द्विविध' इति यद्ययं संक्षेपः स्यात् ततस्तस्मिन् सति द्विविध इति—द्विविध एव नमस्कारो भवेत्, सिद्धसाधुभ्यामिति, कथं ?, परिनिर्वृतार्हदादीना सिद्धशब्देन ग्रहणात् संसारिणां च साधुशब्देनेति, तथा च नैते संसारिणः सर्वे एव साधुत्वमतिलङ्घ्य वर्तन्त इति, तदभावे शेषगुणाभावात्, अतस्तन्नमस्कार एवेतरनमस्कारभावात्, अथायं विस्तरः, इत्येतदप्यचारु, यस्माद् विस्तरतोऽनेकविधः प्राप्नोति, तथा च—ऋषभाजितसम्भवाभिनन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभेत्यादिमहावीरवर्द्धमानस्वामिपर्यन्तेभ्यश्चतुर्विंशत्यर्हद्भ्यः, तथा सिद्धेभ्योऽपि विस्तरेण—अनन्तरसिद्धेभ्यः परम्परसिद्धेभ्यः प्रथमसमयसिद्धेभ्यः द्वितीयतृतीयसमयादिसङ्ख्येयासङ्ख्येयानन्तसमयसिद्धेभ्यः, तथा तीर्थलिङ्गचारित्रप्रत्येकबुद्धादिविशेषणविशिष्टेभ्यः तीर्थकरसिद्धेभ्यः अतीर्थकरसिद्धेभ्यः तीर्थसिद्धेभ्यः इत्येवमादिरनन्तशो विस्तरः, यतश्चैवमत आह—पक्षद्वयमप्यङ्गीकृत्य पञ्चविधः—पञ्चप्रकारो न युज्यते यस्मान्नमस्कार इति गाथार्थः ॥ १००६ ॥ गतमाक्षेपद्वारम्, अधुना प्रसिद्धिद्वारावयवार्थ उच्यते—तत्र यत्तावदुक्तं 'न संक्षेप' इति, तन्न, संक्षेपात्मकत्वात्, ननु स कारणवशात् कृतार्थाकृतार्थापरिग्रहेण सिद्धसाधुमात्रक एवोक्तः, सत्यमुक्तोऽयुक्तस्त्वसौ, कारणान्तरस्यापि भावात्, तच्चोक्तमेव, अथवा वक्ष्यामः 'हेतुनिमित्त'मित्यादिना, सति च द्वैविध्ये सकलगुणनमस्कारासम्भवादेकपक्षस्य व्यभिचारित्वात्, तथा चाऽऽह—

**अरहंताई निअमा साहू साहू अ तेसु भइअव्वा । तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥ १००७॥**

व्याख्या—इहार्हदादयो नियमात् साधवः, तद्गुणानामपि तत्र भावात्, साधवस्तु 'तेषु' अर्हदादिषु 'भक्तव्याः' विकल्प-

नीयाः, यतस्ते न सर्वेऽर्हदादयः, किं तर्हि?, केचिदर्हन्त एव ये केवलिनः, केचिदाचार्याः सम्यक् सूत्रार्थविदः, केचिदुपाध्यायाः सूत्रविद एव, केचिदेतद्व्यतिरिक्ताः शिष्यकाः साधव एव, नार्हदादय इति, ततश्चैकपदव्यभिचाराच्च तुल्याभिधानता, तन्नमस्करणे च नेतरनमस्कारफलमिति, प्रयोगश्च—साधुमात्रनमस्कारो विशिष्टार्हदादिगुणनमस्कृतिफलप्रापणसमर्थो न भवति, तत्सामान्याभिधाननमस्कारत्वात्, मनुष्यमात्रनमस्कारवत् जीवमात्रनमस्कारवद्वेति, तस्मात् पञ्चविध एव नमस्कारः, खलुशब्दस्यावधारणार्थत्वात्, विस्तरेण च व्यक्त्यपेक्षया कर्तुमशक्यत्वात्, तथा—'हेतुनिमित्तं भवति सिद्ध' इति, तत्र हेतुर्नमस्कारार्हत्वे य उक्तः 'मग्गे अविप्पणासो'त्ति इत्यादि तन्निमित्तं चोपाधिभेदाद्भवति सिद्धः पञ्चविध इति गाथार्थः ॥ १००७ ॥ गतं प्रसिद्धिद्वारम्, अधुना क्रमद्वारावयवार्थं प्रतिपादयन्नाह—

**पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्वि एस भवे। सिद्धाईआ पढमा बीआए साहुणो आई ॥ १००८ ॥**

व्याख्या—इह क्रमस्तावद् द्विविधः—पूर्वानुपूर्वी च पश्चानुपूर्वी चेति, अनानुपूर्वी तु क्रम एव न भवति, असमञ्जसत्वात्, तत्रायमर्हदादिक्रमः पूर्वानुपूर्वी न भवति, सिद्धाद्यनभिधानाद्, एकान्तकृतकृत्यत्वेनार्हन्नमस्कार्यत्वेन च सिद्धानां प्रधानत्वात्, प्रधानस्य चाभ्यर्हितत्वेन पूर्वाभिधानादिति भावार्थः, तथा नैव च पश्चानुपूर्व्येष क्रमो भवेत्, साध्वाद्यनभिधानात्, इह सर्वपाश्चात्याः अप्रधानत्वात् साधवः, ततश्च तानभिधाय यदि पर्यन्ते सिद्धाभिधानं स्यात् स्यात् पश्चानुपूर्वीति, तथा चामुमेवार्थं प्रतिपादयन्नाह—सिद्धाद्या प्रथमा—पूर्वानुपूर्वी, भावना प्रतिपादितैव, 'द्वितीयायां' पश्चानुपूर्व्यां साधव आदौ, युक्तिः पुनरप्यत्राभिहितैवेति गाथार्थः ॥ १००८ ॥ साम्प्रतं पूर्वानुपूर्वीत्वमेव प्रतिपादयन्नाह—

**अरहंतुवएसेणं सिद्धा नज्जंति तेण अरिहाई। नवि कोई परिसाए पणमित्ता पणमई रण्णो ॥ १००९ ॥**

व्याख्या—इह 'अर्हदुपदेशेन' आगमेन सिद्धाः 'ज्ञायन्ते'-अवगम्यन्ते प्रत्यक्षादिगोचरातिक्रान्ताः सन्तो यतस्तेनार्हदादिपूर्वानुपूर्वी क्रम इति गम्यते, अत एव चार्हतामभ्यर्हितत्वं, कृतकृत्यत्वं चाल्पकालव्यवहितत्वात् प्रायः समानमेव, तथा अर्हन्नमस्कार्यत्वमप्यसाधनम्, अर्हन्नमस्कारपूर्वकसिद्धत्वयोगेनार्हतामपि वस्तुतः सिद्धनमस्कार्यत्वात् प्रधानत्वादिति भावना, आह—यद्येवमाचार्यादिस्तर्हि क्रमः प्राप्तः, अर्हतामपि तदुपदेशेन संवित्तेरिति, अत्रोच्यते, न, इहार्हत्सिद्धयोरेवायं वस्तुतस्तुल्यबलयोर्विचारः श्रेयान्, परमनायकभूतत्वाद्, आचार्यास्तु तत्परिषत्कल्पा वर्तन्ते, नापि कश्चित् परिषदं 'प्रणम्य' प्रणामं कृत्वा ततः प्रणमति राज्ञ इत्यतोऽचोद्यमेतदिति गाथार्थः ॥ १००९ ॥ उक्तं क्रमद्वारम्, अधुना प्रयोजनफलप्रदर्शनायेदमाह—

**इत्थ य पओअणमिणं कम्मखओ मंगलागमो चेव। इहलोअपारलोइअ दुविह फलं तत्थ दिट्ठंता ॥ १०१० ॥**

व्याख्या—'अत्र च' नमस्कारकरणे प्रयोजनमिदं—यदुत करणकाल एवाक्षेपेण 'कर्मक्षयः' ज्ञानावरणीयादिकर्मापगमः, अनन्तपुद्गलापगममन्तरेण भावतो नकारमात्रस्याप्यप्राप्तेरित्यादि भावितं, तथा मङ्गलागमश्चैव यः करणकालभावीति, तथा कालान्तरभावि पुनरैहलौकिकपारलौकिकभेदभिन्नं 'द्विविधं फलं' द्विप्रकारं फलं, 'तत्र दृष्टान्ताः' वक्ष्यमाणलक्षणा इति गाथार्थः ॥ १०१० ॥

**इह लोइ अत्थकामा२आरुग्गं३अभिरई४ अ निप्फत्ती५। सिद्धी अ६सग्ग७सुकुलप्पचायाई८अ परलोए॥१०११॥**

व्याख्या—इह लोकेऽर्थकामौ भवतः, तथाऽऽरोग्यं भवति नीरुजत्वमित्यर्थः, एते चार्थादयः शुभविपाकिनोऽस्य भवन्ति, तथा चाह—अभिरतिश्च भवति, आभिमुख्येन रतिः—अभिरतिः इह लोकेऽर्थादिभ्यो भवति, परलोके च तेभ्य एव शुभानुबन्धित्वान्निष्पत्तिः, पुण्यस्येति गम्यते, अथवाऽभिरतेश्च निष्पत्तिरित्येकवाक्यतैव, तथा 'सिद्धिश्च' मुक्तिश्च, तथा स्वर्गः सुकुलप्रत्यायातिश्च परलोक इत्यामुष्मिकं फलं॥ इह च सिद्धिश्चेत्यादिक्रमः प्रधानफलापेक्ष्युपायस्यापनश्च (नार्थः), तथाहि—विरला एवैकभवेन सिद्धिमासादयन्ति, अनासादयन्तश्चाविराधकाः स्वर्गसुकुलोत्पत्तिमन्तरेण नावस्थान्तरमनुभवन्तीति गाथार्थः ॥ १०११ ॥ साम्प्रतं यथाक्रममेवार्थादीनधिकृत्योदाहरणानि प्रतिपादयन्नाह—

**इहलोगंमि तिदंडी १ सादिव्वं २ माउलिंगवण ३ मेव। परलोइ चंडपिंगल ४ हुंडिअ जक्खो ५ अ दिट्ठंता।१०१२।**

व्याख्या—अक्षरगमनिका सुज्ञेया, भावार्थः कथानकेभ्योऽवसेयः, तानि चामूनि—[1]नमोकारो अत्थावहो, कहंति?, उदाहरणं—जहा एगस्स सावगस्स पुत्तो धम्मं न लएइ, सोऽवि सावओ कालगओ, सो विवहाराहओ एवं चेव विहरइ। अन्नया तेसिं घरसमीवे परिव्वायओ आवासिओ, सो तेण समं मित्तिं करेइ, अन्नया भणइ—आणेहि निरुवहयं अणाहमडयं जओ ते ईसरं करेमि, तेण मग्गिओ लद्धो उबद्धओ मणुस्सो, सो मसाणं णीओ, जं च तत्थ पाउग्गं। सो य दारओ

---

1 नमस्कारोऽर्थावह, कथमिति?, उदाहरणम्—यथैकस्य श्रावकस्य पुत्रो धर्मं नाश्रयति, सोऽपि श्रावक कालगत, स व्यवहाराहत एवमेव विहरति। अन्यदा तेषां (श्रावकजनानां) गृहसमीपे परिव्राजक आवासित, स तेन समं मैत्रीं करोति, अन्यदा भणति—आनय निरुपहतं अनाथमृतक यतस्त्वां ईश्वरं करोति, तेन मार्गित लब्ध बद्धो मनुष्य, स श्मशानं नीत', यच्च तत्र प्रायोग्य। स च दारक * ०ऽवि बाहिराहओ (व्यसनोपहत)।

पिंयर्रि नमोकारं सिक्खाविओ, भणिओ य–जाहे बीहेज्जसि ताहे एयं पढिज्जसि, विज्जा एसा, सो तस्स मयगस्स पुरओ ठविओ, तस्स य मयगस्स हत्थे असी दिन्नो, परिवायओ विज्जं परियत्तेइ, उट्ठिउमारद्धो वेयालो, सो दारओ भीओ हियए नमोकारं परियट्टेइ, सो वेयालो पडिओ, पुणोऽवि जवेइ, पुणोवि उट्ठिओ, सुट्ठुतरागं परियट्टेइ, पुणोऽवि पडिओ, तिदंडी भणइ–किंचि जाणसि ?, भणइ–नत्थि, पुणोऽवि जवइ, ततियवारा, पुणोऽवि पुच्छिओ, पुणो णवकारं करेइ, ताहे वाणमंतरेण रुसिएण तं खग्गं गहाय सो तिदंडी दो खंडीकओ, सुवन्नकोडी जाओ, अंगोवंगाणि य से जुत्तजुत्ताणि काउं सव्वरत्तिं [1]वूढं ईसरो जाओ नमोकारफलेणं, जइ ण होन्तो नमोकारो तो वेयालेण मारिज्जंतो, सो सुवन्नं होंतो ॥ कामनिप्फत्ती,–कहं ?, एगा साविगा तीसे भत्ता मिच्छादिट्ठी अन्नं भज्जं आणेउं मग्गइ, तीसे तणएण न लहइ से सवत्तगंति, चिंतेइ–किह मारेमि?, अण्णया कण्हसप्पो घडए छुभित्ता आणीओ, संगोविओ, जिमिओ भणइ–आणेहि पुप्फाणि अमुगे घडए ठवियाणि, सा

1 पित्रा शिक्षितो नमस्कारं, भणितश्च–यदा बिभीयास्तदैनं पठेः, विद्यैषा, स तस्य मृतकस्य पुरतः स्थापित., तस्य च मृतकस्य हस्तेऽसिर्दत्त , परिव्राजको विद्यां परिवर्त्तयति, उत्थातुमारब्धो वैताळः, स दारको भीतो हृदि नमस्कारं परावर्त्तयति, स वैताळः पतित', पुनरपि जपति, पुनरप्युत्थित , सुष्ठुतर परिवर्त्तयति पुनरपि पतित , त्रिदण्डी भणति–किञ्चित् जानीषे ?, भणति–न, पुनरपि जपति, तृतीयवारं, पुनरपि पृष्ट , पुनर्नमस्कार करोति (परावर्त्तयति), तदा व्यन्तरेण रुष्टेन तं खड्ग गृहीत्वा स त्रिदण्डी द्विखण्डीकृत', सुवर्णकोटिकः (सुवर्णपुरुष.) जात., अङ्गोपाङ्गानि च तस्य युक्तयुक्तानि ( पृथक् पृथक् ) कृत्वा सर्वरात्रौ व्यूढ. ईश्वरो जातो नमस्कारफलेन, यदि नाभविष्यन्नमस्कारस्तदा वैतालेनामारिष्यत् स ( च ) सौवर्णोऽभविष्यत् ॥ कामनिष्पत्ति ,–कथम् ?, एका श्राविका तस्या भर्त्ता मिथ्यादृष्टिरन्यां भार्यां आनेतु मार्गयति, तस्या. सम्बन्धेन न लभते तस्याः सापत्न्यमिति, चिन्तयति–कथ मारयामि ?, अन्यदा कृष्णसर्पो घटे क्षिप्त्वाऽऽनीत , सगोपित , जिमितो भणति–आनय पुष्पाणि अमुकस्मिन् घटे स्थापितानि, सा * खोडी + जाया † छड

पविट्ठा, अंधकारंति नमोकारं करेइ, जइवि मे कोइ खाएज्जा तोवि मे मरंतीए नमोकारो ण नस्सहितित्ति, हत्थो छूढो, सप्पो देवयाए अवहिओ, पुप्फमाला कया, सा गहिया, दिन्ना य से, सो संभंतो चिंतेइ–अन्नाणि, कहियं, गओ पेच्छइ घडगं पुप्फगंधं च, णवि इत्थ कोइ सप्पो, आउट्टो पायपडिओ सव्वं कहेइ खामेइ य, पच्छा सा चेव घरसामिणी जाया, एवं कामावहो ॥ आरोग्गाभिरई–एगं णयरं, णईए तडे खरकम्मिएणं सरीरचिंताए निग्गएणं णईए वुज्झंतं माउलिंगं दिट्ठं, रायाए उवणीयं, सूयस्स हत्थे दिन्नं, जिमियस्स उवणीयं, पमाणणं अइरित्तं वन्नेण गंधेणं अइरित्तं, तस्स मणुसस्स तुट्ठो, भोगो दिण्णो, राया भणइ–अणुणईए मग्गह, जाव लद्धं, पत्थयणं गहाय पुरिसा गया, दिट्ठो वणसंडो, जो गेण्हइ फलाणि सो मरइ, रण्णो कहियं, भणइ–अवस्सं आणेयव्वाणि, अक्खपडिया वच्चंतु, एवं गया आणेन्ति, एगो पविट्ठो सो बाहिं उच्छुब्भइ, अन्ने आणंति, सो मरइ, एवं काले वच्चंते सावगस्स परिवाडी जाया, गओ तत्थ, चिंतेइ–मा विराहियसामन्नो

1 प्रविष्टा, अन्धकारमिति नमस्कारं करोति ( गुणयति ), यद्यपि मां कोऽपि खादेत् तथापि मम म्रियमाणाया नमस्कारो न नङ्क्ष्यतीति, हस्त क्षिप्त, सर्पो देवतयाऽपहृत , पुष्पमाला कृता, सा गृहीता, दत्ता च तस्मै, स सभ्रान्तश्चिन्तयति–अन्यानि, कथित, गत. पश्यति घटं पुष्पगन्धं च, नैवात्र कोऽपि सर्पः, आवर्जित पादपतित सर्वं कथयति क्षमयति च, पश्चात्सैव गृहस्वामिनी जाता, एवं कामावह ॥ आरोग्याभिरति.–एक नगर, नद्यास्तीरे खरकर्मिकेण शरीरचिन्तायै निर्गतेन नद्यामुह्यमान बीजपूरकं दृष्ट, राज्ञ उपनीत, सूदस्य हस्ते दत्तं, जिमत उपनीतं, प्रमाणेनातिरिक्त वर्णेन गन्धेनातिरिक्त तस्मै मनुष्याय तुष्ट', भोगो दत्त , राजा भणति–अनुनदि मार्गयत यावल्लब्ध ( भवति ), पथ्यदन गृहीत्वा पुरुषा गताः, दृष्टो वनखण्डः, यो गृह्णाति फलानि स म्रियते, राज्ञे कथित, भणति–अवश्यमानेतव्यानि, अक्षपतिताः ( अक्षपातनिकया ) व्रजन्तु, एवं गता आनयन्ति, एकः प्रविष्ट. स बहिर्निक्षिपति, अन्ये आनयन्ति, स म्रियते, एव काले व्रजति श्रावकस्य परिपाटी जाता, गतस्तत्र, चिन्तयति–मा विराधितश्रामण्यः

कोइ होज्जत्ति निसीहिया नमोकारं च करेंतो ढुक्कइ, वाणमंतरस्स चिंता, संबुद्धो, वंदइ, भणइ–अहं तत्थेव साहरामि, गओ, रण्णो कहियं, संपूइओ, तस्स ओसीसे दिणे दिणे ठवेइ, एवं तेण अभिरई भोगा य लद्धा, जीवयाओ य, किं अन्नं आरोग्गं ?, रायावि तुट्ठो ॥ परलोए नमोकारफलं–वसंतपुरे णयरे जियसत्तू राया, तस्स गणिया साविया, सा चंडपिंगलेण चोरेण समं वसइ । अन्नया कयाइ तेण रण्णो घरं हयं, हारो णीणिओ, भीएहिं संगोविज्जइ । अन्नया उज्जाणियागमणं, सव्वाओ विभूसियाओ गणियाओ वच्चंति, तीए सव्वाओ अइसयामित्ति सो हारो आविद्धो, जीसे देवीए सो हारो तीसे दासीए सो नाओ, कहियं रण्णो, सा केण समं वसइ ?, कहिए चंडपिंगलो गहिओ, सूले भिन्नो, तीए चिंतियं–मम दोसेण मारिओत्ति सा से नमोकारं देइ, भणइ य–नीयाणं करेहि जहा–एयस्स रण्णो पुत्तो आयामित्ति, कयं, अग्गमहिसीए उदरे उववण्णो, दारओ जाओ, सा साविया कीलावणधावीया जाया । अन्नया चिंतेइ–कालो समो गब्भस्स य मरणस्स य,

1 कश्चित् भूदिति नैषेधिकीं नमस्कार च कुर्वन् गच्छति, व्यन्तरस्य चिन्ता, संबुद्ध , वन्दते, भणति–अह तत्रैवानेष्ये, गतः, राज्ञः कथित, संपूजितः तस्य उच्छीर्षे दिने दिने स्थापयति, एव तेनाभिरतिर्भोगाश्च लब्धा , जीवितव्यांश्च, किमन्यद् आरोग्य ?, राजापि तुष्टः ॥ परलोके नमस्कारफल–वसन्तपुरे नगरे जितशत्रू राजा, तस्य गणिका श्राविका, सा चण्डपिङ्गलेन चौरेण सम वसति । अन्यदा कदाचित् तेन राज्ञो गृह हृत, हार आनीत , भीताभ्यां सगोप्यते । अन्यदोद्यानिकागमन, सर्वा विभूषिता गणिका व्रजन्ति, तया सर्वाभ्योऽतिशायिनी स्यामिति ( सर्वा अतिशये इति ) स हार आविद्धः, यस्या देव्या स हारस्तस्या दास्या स ज्ञात', कथित राज्ञे सा केन सम वसति ?, कथिते चण्डपिङ्गलो गृहीत., शूले भिन्नः, तया चिन्तित–मम दोषेण मारित इति सा तस्मै नमस्कार ददाति, भणति च–निदान कुरु यथा–एतस्य राज्ञ पुत्र उत्पद्य इति, कृत, अग्रमहिष्या उदरे उत्पन्नः, दारको जात , सा श्राविका क्रीडनधात्री जाता । अन्यदा चिन्तयति–काल. समो गर्भस्य च मरणस्य च,

होऊं कयाइ, रमावेंती भणइ—मा रोव चंडपिंगलत्ति, संबुद्धो, राया मओ, सो राया जाओ, सुचिरेण कालेण दोवि पव्वइयाणि, एवं सुकुलपच्चायाई तम्मूलागं च सिद्धिगमणं ॥ अहवा बितियं उदाहरणं—महुराए णयरीए जिणदत्तो सावओ, तत्थ हुंडिओ चोरो, णयरं मुसइ, सो कयाइ गहिओ सूले भिन्नो, पडिचरह त्तितिज्जयावि से नज्जिहिंति, मणूसा पडिचरंति, सो सावओ तस्स नाइदूरेण वीईवयइ, सो भणइ—सावय! तुमंसि अणुकंपओ तिसाइओऽहं, देह मम पाणियं जा मरामि, सावओ भणइ—इमं नमोक्कारं पढ जा ते आणेमि पाणियं, जइ विस्सारेहिसि तो आणीयंपि ण देमि, सो ताए लोलयाए पढइ, सावओवि पाणियं गहाय आगओ, एवेलं पाहामोत्ति नमोक्कारं घोसंतस्सेव निग्गओ जीवो, जक्खो आयाओ। सावओ तेहिं माणुस्सेहिं गहिओ चोरभत्तदायगोत्ति, रण्णो निवेइयं, भणइ—एयंपि सूले भिंदह, आघायणं निज्जइ, जक्खो ओहिं पउंजइ, पेच्छइ सावयं, अप्पणो य सरीरयं, पव्वयं उप्पाडेऊण णयरस्स उवरिं ठाऊण भणइ—सावयं भट्टारयं न

१ भवेत्कदाचित्, रमयन्ती भणति—मा रोदी चण्डपिङ्गल इति, सबुद्धो, राजा मृत , स राजा जात , सुचिरेण कालेन द्वावपि प्रव्रजितौ । एव सुकुलप्रत्याजाति' तन्मूल च सिद्धिगमन ॥ अथवा द्वितीयमुदाहरण—मथुरायां नगर्यां जिनदत्त श्रावक', तत्र हुण्डिकश्चौर , नगर मुष्णाति, स कदाचित् गृहीत शूले भिन्न , प्रतिचरत सहाया अपि तस्य ज्ञायन्त इति मनुष्या प्रतिचरन्ति, स श्रावकस्तस्य नातिदूरेण व्यतिव्रजति, स भणति—श्रावक! त्वमसि अनुकम्पक तृषितोऽहं देहि मह्यं पानीय यन्म्रिये, श्रावको भणति—इम नमस्कार पठ यावत्तुभ्यमानयामि पानीय, यदि विस्मरिष्यसि तदाऽऽनीतमपि न दास्यामि, स तया लोलुपतया पठति श्रावकोऽपि पानीय गृहीत्वाऽऽगत , अधुना पास्यामीति नमस्कार घोषयत एव निर्गतो जीव , यक्ष आयात । श्रावकस्तैर्मनुष्यैर्गृहीतश्चौरभक्तदायक इति, राज्ञे निवेदित, भणति—एनमपि शूले भिन्त, आघातं नीयते, यक्षोऽवधिं प्रयुक्ते, पश्यति श्रावकमात्मनश्च शरीरक, पर्वतमुत्पाट्य नगरस्योपरि स्थित्वा भणति— श्रावकं भट्टारकं म

याणेह!, खामेह, मा भे सव्वे चूरेहामि, देवणिम्मियस्स पुव्वेण से आययणं कयं, एवं फलं लब्भइ नमोक्कारेणेति गाथार्थः ॥ ॥१०१२॥ उक्ता नमस्कारनिर्युक्तिः, साम्प्रतं सूत्रोपन्यासार्थं प्रत्यासत्तियोगाद् वस्तुतः सूत्रस्पर्शनिर्युक्तिगतामेव गाथामाह—

नंदिअणुओगदारं विहिवदुवुग्घाइयं च नाऊणं। काऊण पंचमंगल आरंभो होइ सुत्तस्स ॥ १०१३ ॥

व्याख्या—नन्दिश्चानुयोगद्वाराणि चेत्येकवद्भावाद् नन्दिअनुयोगद्वारं, 'विधिवद्' यथावद् 'उपोद्घातं च' उद्देसे इत्यादिलक्षणं 'ज्ञात्वा' विज्ञाय, भणित्वेति वा पाठान्तरं, तथा कृत्वा 'पञ्चमङ्गलानि' नमस्कारमित्यर्थः, किम्?, आरम्भो भवति सूत्रस्य, इह च पुनर्नन्द्याद्युपन्यासः किल विधिनियमख्यापनार्थः, नन्द्यादि ज्ञात्वैव भणित्वैव वा, नान्यथेति. उपोद्घातभेदोपन्यासोऽपि सकलप्रवचनसाधारणत्वेन तस्य प्रधानत्वात्, प्रधानस्य च सामान्यग्रहणेऽपि भेदेनाभिधानदर्शनाद्, यथा ब्राह्मणा आयाता वशिष्टोऽप्यायात इति, कृतं चसूर्येति गाथार्थः ॥ १०१३ ॥ सम्बन्धान्तरप्रतिपादनायैवाऽऽह—

कयपंचनमुक्कारो करेइ सामाइयंति सोऽभिहिओ। सामाइअंगमेव य जं सो सेसं तओ वुच्छं ॥ १०१४ ॥

व्याख्या—कृतः पञ्चनमस्कारो येन स तथाविधः शिष्यः सामायिकं करोतीत्यागमः, सोऽभिहितः पञ्चनमस्कारः, सामायिकाङ्गमेव च यदसौ, सामायिकाङ्गता च प्रागुक्ता, 'शेषं' सूत्रं 'ततः' तस्माद्वक्ष्यत इति गाथार्थः ॥ १०१४॥ तच्चेदम्—

करेमि भंते! सामाइयं, सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं, मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि, तस्स भन्ते! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि

१ जानीथ?, क्षामयत, मा भयत सर्वांश्चूर्णयामि, देवनिर्मितेन ( तात् चैत्यात ) पूर्वस्यां तस्यायतन कृत । एव फल लभ्यते नमस्कारेणेति । * नयरस्स

इह च सूत्रानुगम एव (सूत्रं) अहीनाक्षरादिगुणोपेतमुच्चारणीयं, तद्यथा—अहीनाक्षरमनत्यक्षरमव्याविद्धाक्षरमस्खलितम मिलितमव्यत्याम्रेडितं प्रतिपूर्णं परिपूर्णघोषं कण्ठोष्ठविप्रमुक्तं वाचनोपगतम्, इत्यमूनि प्राग् व्याख्यातत्वान्न व्याख्यायन्ते, ततस्तस्मिन्नुच्चरिते सति केषाञ्चिद्भगवतां साधूनां केचनार्थाधिकारा अधिगता भवन्ति, केचन त्वनधिगताः, ततश्चानधिगताधिगमनाय व्याख्या प्रवर्त्तते इति, तल्लक्षणं चेदं—'संहिता च पदं चैव, पदार्थः पदविग्रहः। चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा ॥ १ ॥' इति, तत्रास्खलितपदोच्चारणं संहिता, अथवा—परः सन्निकर्षः संहिता, यथा करेमि भंते! सामाइयमित्यादि जाव वोसिरामित्ति। पदं च पञ्चधा, तद्यथा—नामिकं नैपातिकम् औपसर्गिकम् आख्यातिकं मिश्रं चेति, तत्र अश्व इति नामिकं खल्विति नैपातिकं परीत्यौपसर्गिकं धावतीत्याख्यातिकं संयत इति मिश्रम्, अथवा सुबन्तं तिङन्तं च, 'सुप्तिङन्तं पदं' ( पा० १-४-१४ ) मिति वचनात्, तत्र करोमि भयान्त! सामायिकं, सर्वं सावद्यं योगं प्रत्याख्यामि यावज्जीवया त्रिविधं त्रिविधेन, मनसा वाचा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजाने, तस्य भयान्त! प्रतिक्रमामि निन्दामि गर्हामि आत्मानं व्युत्सृजामीति पदानि । अधुना पदार्थः—स च चतुर्विधः, तद्यथा—कारकविषयः समासविषयस्तद्धितविषयो निरुक्तिविषयश्च, तत्र कारकविषयः—पचतीति पाचकः, समासविषयः—राज्ञः पुरुषो राजपुरुष इति, तद्धितविषयः—वसुदेवस्यापत्यं वासुदेवः, निरुक्तिविषयः—भ्रमति च रौति च भ्रमरः, अत्रापि, 'डुकृञ् करणे' इत्यस्य लट्प्रत्ययान्तस्य 'तनादिकृञ्भ्य उ (पा० ३-१-७९) रिति उत्वे गुणे रपरत्वे च कृते करोमीति भवति अभ्युपगमश्चास्यार्थः, एवं प्रकृतिप्रत्ययविभागः सर्वत्र वक्तव्यः, इह तु ग्रन्थविस्तरभयान्नोक्त इति, भयं प्रतीतं, तथा

वक्ष्यामश्चोपरिष्टादिति, अन्तो–विनाशः, भयस्यान्त इत्ययमेव पदविग्रहः, पदपृथक्करणं पदविग्रह इति, सामायिकपदार्थः पूर्ववत्, सर्वमित्यपरिशेषवाची शब्दः, अवद्यं–पापं सहावद्येन सावद्यः–सपाप इत्यर्थः, युज्यत इति योगः–व्यापारस्तं, प्रत्याख्यामीति, प्रतिशब्दः प्रतिषेधे आङ् आभिमुख्ये ख्या प्रकथने, ततश्च प्रतीपमभिमुखं ख्यापनं सावद्ययोगस्य करोमि प्रत्याख्यामीनि अथवा प्रत्याचक्ष इति 'चक्षिङ् व्यक्तायां वाचि' अस्य प्रत्याङ्पूर्वस्यायमर्थः प्रतिषेधस्यादरेणाभिधानं करोमि प्रत्याचक्षे, 'यावज्जीवये' त्यत्र यावच्छब्दः परिमाणमर्यादावधारणवचनः, तत्र परिमाणे यावत् मम जीवनपरिमाणं तावत् प्रत्याख्यामीति, मर्यादायां यावज्जीवनमिति, मरणमर्यादाया आराम मरणकालमात्र एवेति, अवधारणे यावज्जीवनमेव तावत् प्रत्याख्यामि, न तस्मात् परत इत्यर्थः, जीवनं जीवेत्ययं क्रियाशब्दः परिगृह्यते तया, अथवा प्रत्याख्यानक्रिया गृह्यते, यावज्जीवो यस्यां सा यावज्जीवा तया, 'त्रिविध' मिति तिस्रो विधा यस्य सावद्ययोगस्य स त्रिविधः, स च प्रत्याख्येयत्वेन कर्म संपद्यते, कर्मणि च द्वितीया विभक्तिः, अतस्तं त्रिविधं योगं–मनोवाक्कायव्यापारलक्षणं, 'कायवाङ्मनः कर्मयोगः' ( तत्वा० अ० ६ सू० १ ) इति वचनात्, त्रिविधेनेति करणे तृतीया, 'मनसा वाचा कायेन' तत्र 'मन ज्ञाने' मननं मन्यते वाऽनेनेति असुन्प्रत्यये मनः, तच्चतुर्द्धा–नामस्थापनाद्रव्यभावैः, द्रव्यमनस्तद्योग्यपुद्गलमयं, भावमनो मन्ता जीव एव, 'वच परिभाषणे' वचनम् उच्यते वाऽनयेति वाक्, साऽपि चतुर्विधैव नामादिभिः, तत्र द्रव्यवाक् शब्दपरिणामयोग्यपुद्गला जीवपरिगृहीता भाववाक् पुनस्त एव पुद्गलाः शब्दपरिणाममापन्नाः, 'चिञ् चयने' चयनं चीयते वाऽनेनेति "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" ( पा० ३–३–४१ ) इति कायः, जीवस्य निवासात् पुद्गलानां चितेः पुद्गलानामेव केषाञ्चित् शरणात् तेषामेवावयवसमाधानात् कायः–शरीरं, सोऽपि चतुर्द्धा नामादिभिः, तत्र द्रव्यकायो ये शरीरत्वयोग्याः अगृहीतास्तत्स्वामिना च जीवेन ये मुक्ता यावत्तं परिणामं न मुञ्चन्ति तावद् द्रव्यकायः भावकायस्तु तत्परिणामपरिणता जीवबद्धा जीवसम्प्रयुक्ताश्च, अनेन त्रिविधेन करणभूतेन, त्रिविधं पूर्वाधिकृतं सावद्यं योगं न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि–नानुमन्येऽहमिति, तस्येत्यधिकृतो योगः संबध्यते, भयान्त इति पूर्ववत्, प्रतिक्रमामि–निवर्तेऽहमित्युक्तं भवति, निन्दामीति जुगुप्से इत्यर्थः, गर्हामीति च स एवार्थः, किन्त्वात्मसाक्षिकी निन्दा गुरुसाक्षिकी गर्हेति, किं जगुप्से ?–'आत्मानम्' अतीतसावद्ययोगकारिणं, 'व्युत्सृजामी'ति विविधार्थो विशेषार्थो वा विशब्दः उच्छब्दो भृशार्थः सृजामि–त्यजामीत्यर्थः, विविधं विशेषेण वा भृशं त्यजामि व्युत्सृजामि, एवं तावत्पदार्थपदविग्रहौ यथासम्भवमुक्तौ, अधुना चालनाप्रत्यवस्थाने वक्तव्ये, तदत्रान्तरे सूत्रस्पर्शनिर्युक्तिरुच्यते, स्वस्थानत्वात्, आह च निर्युक्तिकारः—

**अक्खलिअसंहिआई वक्खाणचउक्कए दरिसिअंमि । सुत्तप्फासिअनिज्जुत्तिवित्थरत्थो इमो होइ ॥ १०१५ ॥**

व्याख्या—'अक्खलिआइ'त्ति अस्खलितादौ सूत्र उच्चरिते, तथा संहितादौ व्याख्यानचतुष्टये दर्शिते सति, किं ?–सूत्रस्पर्शनिर्युक्तिविस्तरार्थः अयं भवतीति गाथार्थः ॥ १०१५ ॥

**करणे १ भए अ २ अंते ३ सामाइअ ४ सव्वए अ ५ वज्जे अ ६ ।**
**जोगे ७ पच्चक्खाणे ८ जावज्जीवाइ ९ तिविहेणं १० ॥ १०१६ ॥**

व्याख्या—करणं भयं च अन्तः सामायिकं सर्वं च वर्जं च योगः प्रत्याख्यानं यावजीवया त्रिविधेनेति पदानि, पदार्थं तु भाष्यगाथाभिर्न्यक्षेण प्रतिपादयिष्यतीति गाथासमासार्थः ॥ १०१६ ॥ साम्प्रतं करणनिक्षेपं प्रदर्शयन्नाह—

**नामं १ ठवणा २ दविए ३ खित्ते ४ काले ५ तहेव भावे अ ६ ।**
**एसो खलु करणस्सा निक्खेवो छव्विहो होइ ॥ १५२ ॥ ( भा० )+**

व्याख्या—अक्षरगतं पदार्थमात्रमधिकृत्य निगदसिद्धा, साम्प्रतं द्रव्यकरणप्रतिपादनायाऽऽह—

**जाणगभविअइरित्तं सन्ना नोसन्नओ भवे करणं । सन्ना कडकरणाई नोसन्ना वीससपओगे ॥ १५३ ॥ (भा०)**

व्याख्या—इह यथासम्भवं द्रव्यस्य द्रव्येण द्रव्ये वा करणं द्रव्यकरणं, तच्च नोआगमतो ज्ञभव्यातिरिक्तं संज्ञा नोसंज्ञातो भवेत् करणं, एतदुक्तं भवति–ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यकरणं द्विधा–संज्ञाकरणं नोसंज्ञाकरणं च, तत्र संज्ञाकरणं कटकरणादि, आदिशब्दात् पेलुकरणादिपरिग्रहः, पेलुशब्देन रुतपूणिकोच्यते, अयमत्र भावार्थः–कटनिर्वर्तकमयोमयं चित्रसंस्थानं पोलकादि तथा रुतपूणिकानिर्वर्तकं शलाकाशल्यकाङ्करुहादि संज्ञाद्रव्यकरणमन्वर्थोपपत्तेरिति, आह–इदं नामकरणमेव पर्यायमात्रतः संज्ञाकरणमिति न कश्चिद्विशेष इति, उच्यते, इह नामकरणमभिधानमात्रं गृह्यते, संज्ञाकरणं त्वन्वर्थतः संज्ञायाः करणं २, द्रव्यस्य संज्ञया निर्दिश्यमानत्वात्, तथा च भाष्यकारेणाप्येतदेवाभ्यधायि–"सन्ना णामंति मई

---

१ संज्ञा नामेति मति । + निर्युक्तिगाथा इत्यपि * पादलकादि ।

तं णो णामं जमभिधाणं ॥१॥ जं वा तदत्थविकले कीरइ दवं तु दवणपरिणामं । पेलुक्करणाइ न हि तं तयत्थसुण्णं ण वा सद्दो ॥ २ ॥ जइ ण तदत्थविहीणं तो किं दवकरणं ? जओ तेणं । दवं कीरइ सण्णाकरणंति य करणरूढिओ ॥ ३ ॥" 'नोसंज्ञे'ति नोसंज्ञाद्रव्यकरणं, तच्च द्विधा-प्रयोगतो विश्रसातश्च, अत एवाह-वीससपओगेत्ति गाथार्थः ॥ तत्र विश्रसाकरणं द्विप्रकारं-साद्यनादिभेदात्, अत एवाह ग्रन्थकारः—

**वीससकरणमणाईं धम्माईण परपच्चयाजो(यज्जो)गा। साईं चक्खुप्फासिअमब्भाइमचक्खुमणुमाईं ॥१५४॥ भा०**

व्याख्या—विश्रसा स्वभावो भण्यते तेन करणं विश्रसाकरणम्, इह च 'कृत्यल्युटो बहुल' (पा० ३-३-११३) मिति वचनात् करणादिषु यथाप्रयोगमनुरूपार्थः करणशब्दोऽत्रसेय इति, 'अनादि' आदिरहितं 'धर्मादीना'मिति धर्माधर्माकाशास्तिकायानामन्योऽन्यसमाधानं करणमिति गम्यते, आह-करणशब्दस्तात्रदपूर्वप्रादुर्भावे वर्तते, ततश्च करणं चानादि चेति विरुद्धम्, उच्यते, नावश्यमपूर्वप्रादुर्भाव एव, कि तर्हि ?, अन्योऽन्यसमाधानेऽपीति न दोषः, अथवा 'परप्रत्यययोगा'दिति परवस्तुप्रत्ययभावाद्धर्मास्तिकायादीनां तथा तथा योग्यताकरणमिति, एवमप्यनादित्वं विरुध्यत इति चेत्, न, अनन्तशक्तिप्रचितद्रव्यपर्यायोभयरूपत्वे सति वस्तुनो द्रव्यादेशेनाविरोधादित्यत्र बहु वक्तव्यं तत्तु नोच्यते, गमनिकामात्रत्वात् प्रारम्भस्येति, अथवा परप्रत्यययोगात् तत्तत्पर्यायभवनं साद्येव करणं, देवदत्तादिसंयोगाद्धर्मादीनां विशिष्ट-

---

१ तन्नो नाम यदभिधानम् ॥१॥ यद्वा तदर्थविकले क्रियते द्रव्य तु द्रवणपरिणामः । पेलुकरणादि न हि तत्तदर्थशून्य न वा शब्दः ॥२॥ यदि न तदर्थं विहीन तदा किं द्रव्यकरण ? यतस्तेन । द्रव्द क्रियते संज्ञाकरणमिति च करणरूढे ॥ ३ ॥

पर्याय इत्यर्थः, एवमरूपिद्रव्याण्यधिकृत्योक्तं साद्यमनाद्यं च विश्रसाकरणम्, अधुना रूपिद्रव्याण्यधिकृत्य साद्येव चाक्षुपेतरभेदमाह-सादि चक्षुःस्पर्शं चाक्षुपमित्यर्थः, अभ्रादि, आदिशब्दात् शक्रचापादिपरिग्रहः, 'अचक्खु'त्ति अचाक्षुपमण्वादि, आदिशब्दात् द्व्यणुकादिपरिग्रहः, करणता चेह कृतिः करणमितिकृत्वा, अन्यथा वा स्वयं बुद्ध्या योजनीयेति गाथार्थः ॥ चाक्षुपाचाक्षुपभेदमेव विशेषेण प्रतिपादयन्नाह—

**संघायभेअतदुभयकरण इंदाउहाइ पच्चक्खं । दुअअणुमाईणं पुण छउमत्थाईणऽपच्चक्खं ॥ १५५ ॥ (भा०)**

व्याख्या—सङ्घातभेदतदुभयैः करणं संघातभेदतदुभयकरणम् इन्द्रायुधादिस्थूलमनन्तपुद्गलात्मकं प्रत्यक्षं, चाक्षुपमित्यर्थः, द्व्यणुकादीनाम्, आदिशब्दात्तथाविधानन्ताणुकान्तानां पुनः करणमिति वर्तते, किं ?, छद्मस्थादीनाम् ? आदिशब्दः स्वगतानेकभेदप्रतिपादनार्थं इति, अप्रत्यक्षम्-अचाक्षुपमिति गाथार्थः ॥ उक्तं विश्रसाकरणम्, अधुना प्रयोगकरणं प्रतिपादयन्नाह—

**जीवमजीवे पाओगिअं च चरमं कुसुंभरागाई । जीवप्पओगकरणं मूले तह उत्तरगुणे अ ॥ १५६ ॥ (भा०)**

व्याख्या—इह प्रायोगिकं द्वेधा-जीवप्रायोगिकमजीवप्रायोगिकं च, प्रयोगेन निर्वृत्तं प्रायोगिकं, चरमम्-अजीवप्रयोगकरणं कुसुम्भरागादि, आदिशब्दाच्छेपवर्णादिपरिग्रहः ॥ एवं तावदल्पवक्तव्यत्वादभिहितमोघतोऽजीवप्रयोगकरणमिति, अधुना जीवप्रयोगकरणमाह-जीवप्रयोगकरणं द्विप्रकारं-'मूल' इति मूलगुणकरणं, तथा 'उत्तरगुणे[ति]च' उत्तरगुणकरणं

---

१ करणता २ छद्मस्थगताना

चेति गाथासमासार्थः ॥ व्यासार्थं तु ग्रन्थकार एव वक्ष्यति, तत्राल्पवक्तव्यत्वादेवाजीवप्रयोगकरणमादावेवाभिधित्सुराह—

**जं जं निज्जीवाणं कीरइ जीवप्पओगओ तं तं । वण्णाइ रूवकम्माइ वावि अज्जीवकरणं तु ॥ १५७ ॥ (भा०)**

व्याख्या—यद् यन्निर्जीवानां पदार्थानां क्रियते-निर्वर्त्यते 'जीवप्रयोगतो' जीवप्रयोगेण तत्तद्वर्णादि कुसुम्भादेः रूपकर्मादि वा कुट्टिमादौ अजीवविषयत्वात्तदजीवकरणमिति गाथार्थः ॥

**जीवप्पओगकरणं दुविहं मूलप्पओगकरणं च । उत्तरपओगकरणं पंच सरीराइं पढमंमि ॥ १५८ ॥ (भा०)**

व्याख्या—जीवप्रयोगकरणं 'द्विविधं' द्विप्रकारं-मूलप्रयोगकरणमुत्तरप्रयोगकरणं च, चशब्दस्य व्यवहित उपन्यासः, पञ्च शरीराणि 'प्रथमं' मूलप्रयोगकरणमिति गाथार्थः ॥

**ओरालियाइआइं ओहेणिअरं पओगओ जमिह । निप्फण्णा निप्फज्जइ आइल्लाणं च तं तिण्हं ॥१५९॥ (भा०)**

व्याख्या—औदारिकादीनि, आदिशब्दाद्वैक्रियाहारकतैजसकार्मणशरीरपरिग्रहः, 'ओघेन' इति सामान्येन, 'इतरत्' उत्तरप्रयोगकरणं गृह्यते, तल्लक्षणं चेदं-'प्रयोगतः' प्रयोगेणैव यद् 'इह' लोके निष्पन्नाः, मूलप्रयोगेण निष्पद्यत इति 'तद्' उत्तरकरणं, आद्यानां च तत् त्रयाणाम्, एतदुक्तं (ग्रं ११५००) भवति-पञ्चानामौदारिकादिशरीराणामाद्यं सङ्घातकरणं मूलप्रयोगकरणमुच्यते, अङ्गोपाङ्गादिकरणं तूत्तरकरणमौदारिकादीनां त्रयाणां, न तु तैजसकार्मणयोः, तदसम्भवादिति गाथार्थः ॥ १५९ ॥ तत्रौदारिकादीनामष्टाङ्गानि मूलकरणानि, तानि चामूनि—

सीस १ मुरो २ अर ३ पिट्ठी ४ दो बाहू ६ ऊरुआ य ८ अट्ठंगा।
अंगुलिमाइ उवंगा अंगोवंगाणि सेसाणि ॥ १६० ॥ ( भाष्यम् )

व्याख्या—निगदसिद्धा, नवरमङ्गोपाङ्गानि 'शेषाणि' करपादादीनि गृह्यन्ते ॥ किञ्च—

केसाईउवरयणं उरालविउव्वि उत्तरं करणं । ओरालिए विसेसो कन्नाइविणट्ठसंठवणं ॥ १६१ ॥ ( भा० )

व्याख्या—'केशाद्युपरचनं' केशादिनिर्माणसंस्कारौ, आदिशब्दान्नखदन्ततद्रागादिपरिग्रहः औदारिकवैक्रिययोरुत्तरकरणं, यथासम्भवं चेह योजना कार्येति, तथौदारिके विशेष उत्तरकरणे इति, कर्णादिविनष्टसंस्थापनं, नेदं वैक्रियादौ, विनाशाभावाद्, विनष्टस्य च सर्वथा विनाशेन संस्थापनाभावादिति गाथार्थः ॥ इत्थंभूतमुत्तरकरणमाहारके नास्ति, गमनागमनादि तु भवति, अथवेदमन्यादृक् त्रिविधं करणं, तद्यथा—सङ्घातकरणं परिशाटकरणं सङ्घातपरिशाटकरणं च, तत्राऽऽद्यानां शरीराणां तैजसकार्मणरहितानां त्रिविधमप्यस्ति, द्वयोस्तु चरमद्वयमेवेति, आह च—

आइल्लाणं तिण्हं संघाओ साडणं तदुभयं च । तेआकम्मे संघायसाडणं साडणं चावि ॥ १६२ ॥ ( भा० )

व्याख्या—वस्तुतो व्याख्यातैवेति न व्याख्यायते ॥ साम्प्रतमौदारिकमधिकृत्य सङ्घातादिकालमानमभिधित्सुराह—

संघायमेगसमयं तहेव परिसाडणं उरालंमि । संघायणपरिसाडण खुड्डागभवं तिसमऊणं ॥ १६३ ॥ ( भा० )

व्याख्या—'सङ्घातम्' इति सर्वसङ्घातकरणमेकसमयं भवति, एकान्तादानस्यैकसामयिकत्वात्, घृतपूपदृष्टान्तोऽत्र, यथा—घृतपूर्णप्रतप्तायां तापिकायां सम्पानकप्रक्षेपात् स पूपः प्रथमसमय एवैकान्तेन स्नेहपुद्गलानां ग्रहणमेव करोति, न त्यागम्, अभावाद्, द्वितीयादिषु तु ग्रहणमोक्षौ, तथाविधसामर्थ्ययुक्तत्वात्, पुद्गलानां च सङ्घातभेदधर्मत्वात्, एवं जीवोऽपि तत्प्रथमतयोत्पद्यमानः सन्नाद्यसमये औदारिकशरीरप्रायोग्याणां द्रव्याणां ग्रहणमेव करोति, न तु मुञ्चति, अभावाद्, द्वितीयादिषु तु ग्रहणमोक्षौ, युक्तिः पूर्ववत्, अतः सङ्घातमेकसमयमिति स्थितं, तथैव 'परिशाटन'मिति परिशाटनाकरणमेकसमयमिति वर्तते, सर्वपरिशाटस्याप्येकसामयिकत्वादेवेति, 'औदारिक' इत्यौदारिकशरीरे 'संघायणपरिसाडण'त्ति सङ्घातनपरिशाटनकरणं तु क्षुल्लकभवग्रहणं त्रिसमयोनं, तत् पुनरेवं भावनीयं—जघन्यकालस्य प्रतिपादयितुमभिप्रेतत्वात् विग्रहेणोत्पाद्यते, ततश्च द्वौ विग्रहसमयावेकः सङ्घातसमय इति, तैर्न्यूनं, तथा चोक्तम्—'[1]दो विग्गहंमि समया समयो संघायणाए तेहूणं । खुड्डागभवग्गहणं सव्वजहन्नो ठिई कालो ॥ १ ॥' इह च सर्वजघन्यमायुष्कं क्षुल्लकभवग्रहणं प्राणापानकालस्यैकस्य सप्तदशभाग इति, उक्तं च भाष्यकारेण—'[2]खुड्डागभवग्गहणा सत्तरस हवंति आणपाणूंमि'त्ति गाथार्थः ॥

एयं जहन्नमुक्कोसयं तु पलिअत्तिअं तु समऊणं । विरहो अंतरकालो ओराले तस्सिमो होइ ॥ १६४ ॥ (भा०)

व्याख्या—इदं जघन्यं सङ्घातादिकालमानम् उत्कृष्टं तु सङ्घातपरिशाटकरणकालमानमौदारिकमाश्रित्य पल्योपमत्रितयमेव समयोनम्, इयमत्र भावना—इहोत्कृष्टकालस्य प्रतिपाद्यत्वादयमविग्रहसमापन्नः इह भवात् परभवं गच्छन्निहभवशरीरशाटं कृत्वा परभवायुषस्त्रिपल्योपमकालस्य प्रथमसमये शरीरसङ्घातं करोति, ततो द्वितीयसमयादारभ्य सङ्घातपरि-

१ द्वौ विग्रहे समयौ समयश्च सघातनाया, तैरूनम् । क्षुल्लकभवग्रहण सर्वजघन्यः स्थितिकाल ॥ १ ॥ २ क्षुल्लकभवग्रहणानि सप्तदश भवन्ति आनप्राणे ॥

शाटोभयकाल इति, तेन सङ्घातनासमयेन ऊनं पल्योपमत्रयमिति, उक्तं च—"[1]उक्कोसो समऊणो जो सो संघातणासमयहीणो । चोयग—किह न दुसमयविहूणो साडणसमएऽवणीयंमि ? ॥ १ ॥ भण्णइ भवचरिमंमिवि समये संघातसाडणा चेव । परभवपढमे साडणमओ तदूणो ण कालोत्ति ॥ २ ॥ चो०—जइ परपढमे साडो णिव्विग्गहदो य तंमि संघातो । णणु सव्वसाडसंघातणाओं समए विरुद्धाओ ॥ ३ ॥ आ०—जम्हा विगच्छमाणं विगयं उप्पज्जमाणमुप्पण्णं । तो परभवाइसमए मोक्खादाणाणमविरोहो ॥४॥ चुइसमए णेहभवो इहदेहविमोक्खओ जहातीए । जइ परभवोवि ण तहिं तो सो को होउ संसारी ? ॥ ५ ॥ णणु जह विग्गहकाले देहाभावेऽवि परभवग्गहणं। तह देहाभावंमिवि होज्जेहभवोऽवि को दोसो ? ॥ ६ ॥ आ०—जं चिय विग्गहकालो देहाभावेवि तो परभवो सो । चुइसमएऽवि ण देहो न विग्गहो जइ स को होइ ? ॥७॥" एवमौदारिके जघन्येतरभेदः सङ्घातपरिशाटकाल उक्तः । सङ्घातपरिशाटयोस्त्वेक एव (समयः), द्वितीयस्यासम्भवाद्,

१ उत्कृष्ट समयोनो य स सघातनासमयहीन । चोदक —कथ न द्विसमयविहीन शाटनसमयेऽपनीते ? ॥ १ ॥ भण्यते भवचरमेऽपि समय सघातशाटो एव । परभवप्रथमे शाटनमतस्तदूनो न काल इति ॥ २ ॥ चोदक —यदि परभवप्रथमे शाटो निर्विग्रहतश्च तस्मिन् सघातः । ननु सर्वशाटसघातने समये विरुद्धे ॥ ३ ॥ आचार्य —यस्माद्विगच्छत् विगतमुत्पद्यमानमुत्पन्नम् । तत परभवादिसमये मोक्षादानयोर्न विरोध ॥ ४ ॥ च्युतिसमये नेहभव इहदेहविमोक्षतो यथाऽतीते । यदि परभवोऽपि न तत्र तदा स को भवतु ससारी ? ॥ ५ ॥ ननु यथा विग्रहकाले देहाभावेऽपि परभवग्रहणम् । तथा देहाभावेऽपि भवेदिह भवोऽपि को दोष ? ॥ ६ ॥ २ आ०—यस्मादेव विग्रहकालो देहाभावेऽपि तत (एव) परभव स । च्युतिसमयेऽपि न देहो न विग्रहो २ स को भवेत् ? ॥ ७ ॥

अधुना सङ्घातादिविरहो जघन्येतरभेदोऽभिधीयते, तथा चाऽऽह—विरहः कः ?, उच्यते, अन्तरकालः, औदारिके तस्य सङ्घातादेरयं भवतीति गाथार्थः ॥

**तिसमयहीणं खुड्डं होइ भवं सव्वबंधसाडाणं । उक्कोस पुव्वकोडी समओ उअही अ तित्तीसं ॥ १६५॥ (भा०)**

व्याख्या—त्रिसमयहीनं क्षुल्लं भवति, 'भवम्' इति भवग्रहणं, सर्वबन्धशाटयोरन्तरकाल इति, तत्र त्रिसमयहीनं सर्ववन्धस्य क्षुल्लं तु सम्पूर्णं सर्वशाटस्येति, उत्कृष्टः पूर्वकोटिसमयः, तथा 'उदधीनि च (धयश्च)' सागरोपमाणि च त्रयस्त्रिंशत् सर्वबन्धस्य, समयोनस्त्वयमेव शाटस्येति गाथाक्षरार्थः ॥ भावार्थस्तु भाष्यगाथाभ्योऽवसेयस्ताश्चेमाः—"संघायंतरकालो जहन्नओ खुड्डयं तिसमऊणं । दो विग्गहंमि समया तइओ संघायणासमओ ॥ १ ॥ तेहूणं खुड्डभवं धरिउं परभवमविग्गहेणेव । गंतूण पढमसमए संघाययओ स विण्णेओ ॥ २ ॥ उक्कोसं तेत्तीसं समयाहियपुव्वकोडिअहिआइं। सो सागरोवमाइं अविग्गहेणेह संघायं ॥३॥ काऊण पुव्वकोडिं धरिउं सुरजेट्ठमाउयं तत्तो। भोच्चूण इहं तइए समए संघाययंतस्स ॥४॥' इदं पुनः सर्वशाटान्तरं जघन्यं क्षुल्लकभवमानं, कथम् ?, इहानन्तरातीतभवचरमसमये कश्चिदौदारिकशरीरी सर्वशाटं कृत्वा वनस्पतिष्वागत्य सर्वजघन्यं क्षुल्लकभवग्रहणायुष्कमनुपाल्य पर्यन्ते सर्वशाटं करोति, ततश्च क्षुल्लकभवग्रहणमेव भवति,

---

१ सघातान्तरकालो जघन्यत क्षुल्लकभवग्रहणं त्रिसमयोनम् । द्वौ विग्रहे समयौ तृतीय सघातनासमय' ॥ १ ॥ तैरूनं क्षुल्लकभव धृत्वा परभवमविग्रहेणैव । गत्वा प्रथमसमये सघातयत. स विज्ञेय ॥ २ ॥ उत्कृष्ट' त्रयस्त्रिंशत् समयाधिकपूर्वकोट्यधिकानि । स सागरोपमाणि अविग्रहेणेह सघातम् ॥ ३ ॥ कृत्वा पूर्वकोटीं धृत्वा सुरज्येष्ठमायुष्क तत । भुक्त्वा इह तृतीये समये सघातयत ॥ ४ ॥

---

उत्कृष्टं तु त्रयस्त्रिंशत् सागरोपमाणि पूर्वकोट्याऽधिकानि, कथम् ?, इह कश्चित् संयतमनुष्य औदारिकसर्वशाटं कृत्वाऽनुत्तरसुरेषु त्रयस्त्रिंशत्सागरोपमाण्यतिवाह्य पुनर्मनुष्येष्वौदारिकसर्वसङ्घातं कृत्वा पूर्वकोट्यन्ते औदारिकसर्वशाटं करोतीति, उक्तं च भाष्यकारेण—"खुड्डागभवग्गहणं जहन्नमुक्कोसयं च तित्तीसं। तं सागरोवमाइं संपुन्ना पुव्वकोडी उ ॥ १ ॥' गुरवस्तु व्याचक्षते—तदारम्भसमयस्य पूर्वभवशाटेनावरुद्धत्वात् समयहीनं क्षुल्लकभवग्रहणं जघन्यं शाटान्तरमिति, तथा च किलैवमक्षराणि नीयन्ते—त्रिसमयहीनं क्षुल्लकमित्येतदपि न्याय्यमेवास्माकं प्रतिभाति, किन्त्वतिगम्भीरधिया भाष्यकृता सह विरुध्यत इति गाथार्थः ॥ इदानीं सङ्घातपरिशाटान्तरमुभयरूपमप्यभिधित्सुराह—

**अंतरमेगं समयं जहन्नमोरालगहणसाडस्स । सतिसमया उक्कोसं तित्तीसं सागरा हुंति ॥ १६६ ॥ ( भा० )**

व्याख्या—'अन्तरम्' अन्तरालम्, एकं समयं 'जघन्यं' सर्वस्तोकम् औदारिकग्रहणशाटयोरिति, सत्रिसमयान्युत्कृष्टं त्रयस्त्रिंशत् सागरोपमाणि भवन्तीति गाथाक्षरार्थः ॥ भावार्थस्तु भाष्यगाथाभ्यामवसेयः, ते चेमे—"उभयंतरं जहण्णं समओ निविग्गहेण संघाए । परमं सतिसमयाइं तित्तीसं उदहिनामाइं ॥ १ ॥ अणुभविउं देवाइसु तेत्तीसमिहागयस्स तइयंमी । समए संघायतओ नेयाइं समयकुसलेहिं ॥ २ ॥" उक्तौदारिकमधिकृत्य सर्वसङ्घातादिवक्तव्यता, साम्प्रतं वैक्रियमधिकृत्योच्यते, तत्रेयं गाथा—

---

१ क्षुल्लकभवग्रहण जघन्यमुत्कृष्ट च त्रयस्त्रिंशत् । तत् सागरोपमाणि सपूर्णानि पूर्वकोटी तु ॥ १ ॥ २ त्रिभिरून सर्वबन्धस्य समयोन सर्वशाटस्येति भावार्थ । ३ उभयान्तरं जघन्यं समयो निर्विग्रहेण सघाते । परम सत्रिसमयानि त्रयस्त्रिंशत् उदधिनामानि ॥ २ ॥ अनुभूय देवादिषु त्रयस्त्रिंशतमिहागतस्य तृतीये । समये सघातयत एव ज्ञेयानि समयकुशलै ॥ २ ॥ * सघाययओ दुविह साडतर वोच्छ ( इति वि० भा० )

---

**वेउव्विअसंघाओ जहन्नु समओ उ दुसमउक्कोसो । साडो पुण समयं चिअ विउव्वणाए विणिद्दिट्ठो ॥१६७॥(भा०)**

अस्या व्याख्या—वैक्रियसङ्घातः कालतो 'जघन्यः' सर्वस्तोकः समय एव, तुशब्दस्यैवकारार्थत्वेनावधारणार्थत्वाद्, अयं चौदारिकशरीरिणां वैक्रियलब्धिमतां विकुर्वणारम्भे देवनारकाणां च तत्प्रथमतया शरीरग्रहण इति, तथा 'द्विसमय' इति द्विसमयमान उत्कृष्टः वैक्रियसङ्घात इति वर्तते कालश्चेति गम्यते, स पुनरौदारिकशरीरिणो वैक्रियलब्धिमतस्तद्विकुर्वाणारम्भ एव वैक्रियसङ्घातं समयेन कृत्वाऽऽयुष्कक्षयात् मृतस्याविग्रहगत्या देवेषूपपद्यमानस्य वैक्रियमेव सङ्घातयतोऽवसेय इति भावना, शाटः पुनः समयमेव कालतः 'विकुर्वणायां' वैक्रियशरीरविषयो विनिर्दिष्ट इति गाथाक्षरार्थः ॥ अधुना सङ्घातपरिशाटकालमानमभिधित्सुराह—

**संघायणपरिसाडो जहन्नओ एगसमइओ होइ । उक्कोसं तित्तीसं सायरणामाइं समऊणा ॥ १६८ ॥ ( भा० )**

व्याख्या—इह वैक्रियस्यैव सङ्घातपरिशाटः खलूभयरूपः कालतो जघन्य एकसामयिको भवति, उत्कृष्टस्त्रयस्त्रिंशत सागरोपमाणि सागरनामानि समयोनानीति गाथाक्षरार्थः ॥ भावार्थस्त्वयम्—उभयं जहण्ण समओ सो पुण दुसमयविउव्वियमयस्स । परमतराइं संघातसमयहीणाइं तेत्तीसं ॥ १ ॥' इदानीं वैक्रियमेवाधिकृत्य सङ्घाताद्यन्तरमभिधित्सुराह—

**सव्वग्गहोभयाणं साडस्स य अंतरं विउव्विस्स । समओ अंतमुहुत्तं उक्कोसं रुक्खकालीअं ॥ १६९ ॥ (भा०)**

---

१ उभयस्मिन् जघन्य समय स पुनर्द्विसमयवैक्रियमृतस्य । परमतराणि सघातसमयहीनानि त्रयस्त्रिंशत् ॥ १ ॥

व्याख्या—इह 'सर्वग्रहोभययोः' सङ्घातसंघातपरिशाटयोरित्यर्थः, शाटस्य च 'अन्तरं' विरहकालः 'वैक्रियस्य' वैक्रियशरीरसम्बन्धिनः समयः सङ्घातस्योभयस्य च, अन्तर्मुहूर्तं शाटस्य, इदं तावज्जघन्यं त्रयाणामपि कथं ज्ञायत इति चेत्? यत आह–उत्कृष्टं 'वृक्षकालिकं' वृक्षकालेनानन्तेन निर्वृत्तं वृक्षकालिकमिति गाथाक्षरार्थः ॥ भावार्थस्त्वयं–'संघातंतर समयो दुसमयविउव्वियमयस्स तइयंमि । सो दिवि संघातयतो तइए व मयस्स तइयंमि ॥ १ ॥' अविग्रहेण सङ्घातयतः द्वितीयसङ्घातपरिशाटस्य समय एवान्तरमिति, 'उभयस्स चिरविउव्वियमयस्स देवे सविग्गह गयस्स । साडस्संतोमुहुत्तं तिण्हवि तरुकालमुक्कोसं ॥ १ ॥' उक्ता वैक्रियशरीरमधिकृत्य सङ्घातादिवक्तव्यता, साम्प्रतमाहारकमधिकृत्यैनां प्रतिपादयन्नाह—

**आहारे संघाओ परिसाडो अ समयं समं होइ । उभयं जहन्नमुक्कोसयं च अंतोमुहुत्तं तु ॥ १७० ॥ ( भा० )**

व्याख्या—'आहार' इत्याहारकशरीरे सङ्घातः–प्राथमिको ग्रहः परिशाटश्च–पर्यन्ते मोक्षश्च, कालतः 'समयं' कालविशेषं 'समं' तुल्यं भवति, सङ्घातोऽपि समयं शाटोऽपि समयमित्यर्थः, 'उभयं' सङ्घातपरिशाटोभयं गृह्यते, तज्जघन्यत उत्कृष्टतश्चान्तर्मुहूर्तमेव भवतीति वर्तते, अन्तर्मुहूर्तमात्रकालावस्थायित्वादस्येति गर्भार्थः, उत्कृष्टात्तु जघन्यो लघुतरो वेदितव्य इति गाथार्थः ॥ साम्प्रतमाहारकमेवाधिकृत्य सङ्घाताद्यन्तरमभिधातुकाम आह—

**बंधणसाडुभयाणं जहन्नमंतोमुहुत्तमंतरणं । उक्कोसेण अवड्ढं पुग्गलपरिअट्टदेसूणं ॥ १७१ ॥ ( भा० )**

---

१ सघातान्तर समयो द्विसमयवैक्रियमृतस्य तृतीये । स दिवि सघातयत तृतीये वा मृतस्य तृतीये ॥ १ ॥ २ उभयस्य चिरविकुर्वितमृतस्य देवे सविग्रह गतस्य । शाटस्यान्तर्मुहूर्त त्रयाणामपि तरुकालमुत्कृष्टम् ॥ १ ॥

व्याख्या—बन्धनं–सङ्घातः शाटः–शाट एव उभयं सङ्घातशाटौ अमीषां बन्धनशाटोभयानां 'जघन्यं' सर्वस्तोकम् 'अन्तर्मुहूर्तमन्तरणम्' अन्तर्मुहूर्तविरहकालः. सकृत्परित्यागानन्तरमन्तर्मुहूर्तेनैव तदारम्भादिति भावना, उत्कर्षतः अर्द्धपुद्गलपरावर्तो देशोनोऽन्तरमिति, सम्यग्दृष्टिकालस्योत्कृष्टस्याप्येतावत्परिमाणत्वादिति गाथार्थः ॥ उक्ताऽऽहारकशरीरमधिकृत्य सङ्घातादिवक्तव्यता, इदानीं तैजसकार्मणे अधिकृत्याऽऽह—

**तेआकम्माणं पुण संताणाणाइओ न संघाओ । भव्वाण हुज्ज साडो सेलेसीचरमसमयंमि ॥ १७२ ॥ (भा०)**

व्याख्या—तैजसकार्मणयोः पुनर्द्वयोः शरीरयोः सन्तानानादितः कारणात्, किं ?, न सङ्घातः–न तत्प्रथमतया ग्रहणं, प्रागेव सिद्धिप्रसङ्गात्, भव्यानां भवेत् शाटः केषाञ्चित्, कदेति ?, अत आह—शैलेशीचरमसमये, स चैकसामायिक एवेति गाथार्थः ॥

**उभयं अणाइनिहणं संतं भव्वाण हुज्ज केसिंचि । अंतरमणाइभावा अच्चंतविओगओ नेसिं ॥ १७३ ॥ (भा०)**

व्याख्या—'उभयम्' इति सङ्घातपरिशाटोभयं प्रवाहमङ्गीकृत्य सामान्येन 'अनाद्यनिधनम्' अनाद्यपर्यवसितमित्यर्थः, 'सान्तं' सपर्यवसानमुभयं भव्यानां भवेत् केषाञ्चित्, न तु सर्वेषामिति, अन्तरमनादिभावादत्यन्तवियोगतश्च नानयोरिति गाथार्थः ॥ १७३ ॥ अथवेदमन्यजीवप्रयोगनिर्वृत्तं चतुर्विधं करणमिति, आह च—

**अहवा संघाओ १ साडणं च २ उभयं ३ तहोभयनिसेहो ४ । पड १ संख २ सगड ३ थूणा ४ जीवपओगे जहासंखं १७४**

व्याख्या—अथवाशब्दः प्रकारान्तरप्रदर्शनार्थः, 'सङ्घात' इति सङ्घातकरणं, 'सातनं च' शातनकरणं च 'उभयं' सङ्घातशातनकरणं 'तथोभयनिषेध' इति सङ्घातपरिशाटशून्यम् । अमीषामेवोदाहरणानि दर्शयन्नाह–पटः शङ्खः शकटं स्थूणा, 'जीवप्रयोग' इति जीवप्रयोगकरणे तत्कायव्यापारमाश्रित्य यथासङ्ख्यमेतान्युदाहरणानि समवसेयानि, तथाहि–पटस्तन्तुसङ्घातात्मकत्वात् सङ्घातकरणं शङ्खस्त्वेकान्तसाटकरणादेव शाटकरणं शकटं तक्षणकीलिकादियोगादुभयकरणं स्थूणा पुनरूर्ध्वतिर्यक्करणयोगात् संघातशाटविरहादुभयशून्या इति गाथार्थः ॥ उक्तं जीवप्रयोगकरणम्, आह–'जं जं निज्जीवाणं कीरइ जीवप्पओगओ तं तं' इत्यादिनाऽस्याजीवकरणतैव युक्तियुक्तेति, अत्रोच्यते, न, अभिप्रायापरिज्ञानाद्, इहादावेवाथवाशब्दप्रयोगतः प्रकारान्तरमात्रप्रदर्शनार्थमेतदुक्तं, ततश्चात्र व्युत्पत्तिभेदमात्रमाश्रीयते, जीवप्रयोगात् करणं जीवप्रयोग करणमिति, ज्यायांश्चान्वर्थ इत्यलं प्रसङ्गेन ॥ उक्तं द्रव्यकरणं, साम्प्रतं क्षेत्रकरणस्यावसरः, तत्रेयं निर्युक्तिगाथा—

**खित्तस्स नत्थि करणं आगासं जं अकित्तिमो भावो । वंजणपरिआवन्नं तहावि पुण उच्छुकरणाई ॥ १०१७ ॥**

अस्या व्याख्या–इह 'क्षेत्रस्य' नभसः 'नास्ति करणं' निर्वृत्तिकारणाभावान्न विद्यते करणं मुख्यवृत्त्या 'आकाशं' क्षेत्रं 'यद्' यस्मात् 'अकृत्रिमो भावः' अकृतकः पदार्थः, अकृतकस्य च सतो नित्यत्वात् करणानुपपत्तिरिति भावः । आह–यद्येवं किमिति निर्युक्तिकारेण निक्षेपगाथायामुपन्यस्तमिति ?, अत्रोच्यते, व्यञ्जनपर्यायापन्नं तथापि पुनरिक्षुकरणाद्यस्त्येवेति, इह व्यञ्जनशब्देन क्षेत्राभिव्यञ्जकत्वात् पुद्गलाः गृह्यन्ते, तत्सम्बन्धात् पर्यायः कथञ्चित् प्रागवस्थापरित्या- [illegible] ऽपरित्यर्थः, तमापन्नं पुनस्तथाऽपि यदा विवक्ष्यते तदा पर्यायो द्रव्यादनन्य इति पर्यायद्वारेण क्षेत्रकरण-

मस्तीति सभावार्थोऽक्षरगमनिका ॥ उपचारमात्राद्वेक्षुकरणादि, यथेक्षुक्षेत्रकरणं शालिक्षेत्रकरणम्, अथवाऽऽदिशब्दाद् यत्र प्ररूप्यते क्रियते वेति गाथार्थः ॥ १०१७ ॥ उक्तं क्षेत्रकरणम्, इदानीं कालकरणस्यावसरः, तत्रेयं गाथा—

कालेवि नत्थि करणं तहावि पुण वंजणप्पमाणेणं । बवबालवाइकरणेहिंऽणेगहा होइ ववहारो ॥ १०१८ ॥

अस्या व्याख्या—कलनं कालः कलासमूहो वा कालस्तस्मिन् कालेऽपि, न केवलं क्षेत्रस्य, किं ?, नास्ति करणं—न विद्यते कृतिः, कुतः ?—तस्य वर्तनादिरूपत्वाद्, वर्तनादीनां च स्वयमेव भावात्, समयाद्यपेक्षायां च परोपादानत्वादिति भावना, आह—यद्येवं किमिति निर्युक्तिकृतोपन्यस्तमिति ?, अत्रोच्यते, तथाऽपि पुनर्व्यञ्जनप्रमाणेन भवतीति शेषः, इह व्यञ्जनशब्देन विवक्षया वर्तनाद्यभिव्यञ्जकत्वाद् द्रव्याणि गृह्यन्ते, तत्प्रमाणेन—तन्नीत्या तद्बलेन भवतीति, तथाहि—वर्तनादयस्तद्वृतां कथञ्चिदभिन्ना एव, ततश्च तद्वता करणे तेषामपि करणमेवेति भावना, समयादिकालापेक्षायामपि व्यवहारनयादस्ति कालकरणमिति, आह च—ववबालवादिकरणैरनेकधा भवति व्यवहार इति, अत्रादिशब्दात् कौलवादीनि गृह्यन्ते, उक्तं च—'[1]बवं च बालवं चेव, कोलवं थीविलोयणं । गराइ वणियं चेव, विट्ठी भवइ सत्तमा ॥ १ ॥ एयाणि सत्त करणाणि चलाणि वट्टंति, अवराणि सउणिमाईणि चत्तारि थिराणि, उक्तं च—'सउणि चउप्पय णागं किंछुग्घं च करणं थिरं चउहा । बहुलचउद्दसिरत्ती सउणी सेसं तियं कमसो ॥ १ ॥ एस एत्थ भावणा—बहुलचउद्दसिराईए सउणी हवनि,

[1] बव च बालव चैव कौलव स्त्रीविलोचनम् । गरादि वणिङ् चैव विष्टिर्भवति सप्तमी ॥ १ ॥ एतानि सप्त करणानि चलानि वर्तन्ते, अपराणि शकुन्यादीनि चत्वारि स्थिराणि,—शकुनिश्चतुष्पद् नाग किंस्तुघ्नं च करणानि स्थिराणि चतुर्धा । कृष्णचतुर्दशीरात्रौ शकुनि. शेष त्रिक क्रमश ॥ १ ॥ एषाऽत्र भावना—कृष्णचतुर्दशीरात्रौ शकुनिर्भवति

[1]सेसं तियं चउप्पयाई करणं अमावासाए दिया राओ य तो पडिवयदियाय, तओ सुद्धपडिवयणिसादौ ववाईणि हवंति, एएसिं च परिजाणणोवाओ—पक्खतिहओ दुगुणिया दुरूवहीणा य सुक्कपक्खंमि । सत्तहिए देवसियं तं चिय रूवाधियं रत्तिं ॥ १ ॥ एसेत्थ भावणा—अहिगयदिणंमि करणजाणणत्थं पक्खतिहिओ दुगुणियत्ति—अहिगयतिहिं पडुच्च अइगआ दुगुणा कज्जंति, जहा सुद्धचउत्थीए दुगुणा अट्ठ हवंति 'दुरूवहीण'त्ति तओ दोण्णि रूवाणि पाडिज्जंति, सेसाणि छ सत्तहिं भागे देवसियं करणं भवइ, एत्थ य भागाभावा छच्चेव, तओ ववाइकमेण चादुप्पहरिगकरणभोगेणं चउत्थीए दिवसओ वणियं हवइ, 'तं चिय रूवाहियं रत्तिं'ति रत्तीए विट्ठी, कण्हपक्खे पुणो दो रूवा ण पाडिज्जंति, एवं सव्वत्थ भावणा कायव्वा, भणियं च—'किण्हनिसि तइय दसमी सत्तमी चाउद्दसीय अह विट्ठी । सुक्कचउत्थेकारसि निसि अट्ठमि पुन्निमा य दिवा ॥ १ ॥ सुद्धस्स पडिवयनिसि पंचमिदिण अट्ठमीए रत्तिं तु । दिवसस्स बारसी पुन्निमा य रत्तिं ववं होइ ॥ २ ॥

[1] शेष त्रय चतुष्पदादिकरण अमावास्याया दिवा रात्रौ च तत प्रतिपद्दिवसे च, तत शुद्धप्रतिपन्निशादौ ववादीनि भवन्ति, एतेषां च परिज्ञानोपाय —पक्षतिथयो द्विगुणिता द्विरूपहीनाश्च शुक्लपक्षे । सप्तहृते दैवसिक तदेव रूपाधिक रात्रौ ॥ १ ॥ एषाऽत्र भावना—अधिकृतदिने करणज्ञानार्थं पक्षतिथयो द्विगुणिता इति अधिकृततिथिं प्रतीत्य अतिगता द्विगुणा क्रियन्ते, यथा शुक्लचतुर्थ्यां द्विगुणा अष्ट भवन्ति, द्विरूपहीना इति ततो द्वे रूपे पात्येते, शेषाणि षट् सप्तभिर्भागे दैवसिक करण भवति, अत्र च भागाभावात् षडेव, ततो ववादिक्रमेण चातुष्प्राहरिककरणभोगेन चतुर्थ्यां दिवसे वणिक् भवति, 'तदेव रूपाधिकं रात्रा' विति रात्रौ विष्टि, कृष्णपक्षे पुनर्द्वे रूपे न पात्येते, एव सर्वत्र भावना कर्त्तव्या, भणित च—कृष्णे निशि तृतीयाया दशम्यां सप्तम्या चतुर्दश्यां अह्नि विष्टि । शुक्ले चतुर्थ्यां एकादश्यां निशि अष्टम्यां पूर्णिमायां च दिवा ॥ १ ॥ शुक्लस्य प्रतिपन्निशि पञ्चमीदिने अष्टम्या रात्रौ तु । द्वादश्या दिवसे पूर्णिमायाश्च रात्रौ ववं भवति ॥ २ ॥

[1]बहुलस्स चउत्थीए दिवा य तह सत्तमीइ रत्तिंमि । एक्कारसीय उ दिवा ववकरणं होइ नायव्वं ॥ ३ ॥ इत्यलं प्रसङ्गेनेति गाथार्थः ॥ १०१८ ॥ उक्तं कालकरणम्, अधुना भावकरणमभिधीयते, तत्र भावः पर्याय उच्यते, तस्य च जीवाजीवोपाधिभेदेन द्विभेदत्वात् तत्करणमप्योघतो द्विविधमेवेति, अत आह—

जीवमजीवे भावे अजीवकरणं तु तत्थ वन्नाई । जीवकरणं तु दुविहं सुअकरणं नो अ सुअकरणं ॥ १०१९ ॥

व्याख्या—इहानुस्वारस्यालाक्षणिकत्वाज्जीवाजीवयोः सम्बन्धि 'भाव' इति भावविषयं करणमवसेयमिति, अल्पवक्तव्यत्वादजीवभावकरणमेवादावुपदर्शयति—'अजीवकरणं तु' तुशब्दस्य विशेषणार्थत्वादजीवभावकरणं परिगृह्यते, 'तत्र' तयोर्मध्ये वर्णादि, इह परप्रयोगमन्तरेणाभ्रादेर्नानावर्णान्तरगमनं तदजीवभावकरणम्, आदिशब्दाद् गन्धादिपरिग्रहः, तत्राऽऽह—ननु च द्रव्यकरणमपि विश्रसाविषयमित्थंप्रकारमेवोक्तं, को न्वत्र भावकरणे विशेष इति ?, उच्यते, इह भावाधिकारात् पर्यायप्राधान्यमाश्रीयते तत्र तु द्रव्यप्राधान्यमिति विशेषः, जीवकरणं तु पुनः 'द्विविधं' द्विप्रकारं—श्रुतकरणं नोश्रुतकरणं च, श्रुतकरणमिति श्रुतस्य जीवभावत्वाच्छ्रुतभावकरणं, नोश्रुतभावकरणं च गुणकरणादि, चशब्दस्य व्यवहितः सम्बन्ध इति गाथार्थः ॥ १०१९ ॥ साम्प्रतं जीवभावकरणेनाधिकार इति तदेव यथोद्दिष्टं तथैव भेदतः प्रतिपिपादयिषुराह—

बद्धमबद्धं तु सुअं बद्धं तु दुवालसंग निद्दिट्ठं । तव्विवरीअमबद्धं निसीहमनिसीह बद्धं तु ॥ १०२० ॥

[1] कृष्णस्य चतुर्थ्यां दिवा च तथा सप्तम्यां रात्रौ । एकादश्यास्तु दिवसे ववकरण भवति ज्ञातव्यम् ॥ ३ ॥

व्याख्या—इह बद्धमबद्धं तु श्रुतं, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?-लौकिकलोकोत्तरभेदमिदमेवमिति, तत्र पद्य-गद्यबन्धनाद् बद्धं शास्त्रोपदेशवत्, अत एवाह—बद्धं तु द्वादशाङ्गम्—आचारादि गणिपिटकं निर्दिष्टं, तुशब्दस्य विशेषणार्थत्वाल्लोकोत्तरनिदं, लौकिकं तु भारतादि विज्ञेयमिति, तद्विपरीतमबद्धम् लौकिकलोकोत्तरभेदमेवावसेयमिति, 'निसीहमनिसीह बद्धं तु'त्ति इह बद्धश्रुतं निषीथमनिषीथं च, तुशब्दः पूर्ववत्, तत्र रहस्ये पाठाद् रहस्योपदेशाच्च प्रच्छन्नं निषीथमुच्यते, प्रकाशपाठात् प्रकाशोपदेशत्वाच्चानिषीथमिति गाथार्थः ॥ १०२० ॥ साम्प्रतमनिषीथनिषीथयोरेव स्वरूपप्रतिपादनायाह—

**भूआपरिणयविगए सद्दकरणं तहेव न निसीहं । पच्छन्नं तु निसीहं निसीहनामं जहऽज्झयणं ॥ १०२१ ॥**

व्याख्या—भूतम्—उत्पन्नम् अपरिणतं—नित्यं विगतं—विनष्टं, ततश्च भूतापरिणतविगतानि, एतदुक्तं भवति-'उप्पण्णे इ वा विगए इ वा धुवे इ वा' इत्यादि, शब्दकरणमित्यनेनोक्तिमाह, तथा चोक्तम्-'उत्ती तु सद्दकरणे' इत्यादि, तदेवं भूतादिशब्दकरणं 'न निषीथ'मिति निषीथं न भवति, प्रकाशपाठात् प्रकाशोपदेशत्वाच्च, प्रच्छन्नं तु निषीथं रहस्यपाठाद् रहस्योपदेशाच्च निषीथनाम यथाऽध्ययनमिति गाथार्थः ॥ १०२१ ॥ अथवा निषीथं गुप्तार्थमुच्यते, "जहा—अग्गाणीए विरिए अत्थिनत्थिप्पवायपुव्वे य पाठो—जत्थेगो दीवायणो भुंजइ तत्थ दीवायणसयं भुंजइ जत्थ दीवायणसयं भुंजइ तत्थ

१ उक्तिस्तु शब्दकरणे २ यथाऽऽग्रायणीये वीर्ये अस्तिनास्तिप्रवादपूर्वे च पाठः—यत्रैको द्वीपायनो भुङ्क्ते तत्र द्वीपायनशतं भुङ्क्ते, यत्र द्वीपायनशतं भुङ्क्ते तत्रैको

एगो दीवायणो भुंजइ, एवं हम्मइ वि जाव जत्थ दीवायणसयं हम्मइ तत्थेगो दीवायणो हम्मइ," तथा चामुमेवार्थमभिधातुकाम आह—

**अग्गेणीअंमि य जहा दीवायण जत्थ एग तत्थ सयं । जत्थ सयं तत्थेगो हम्मइ वा भुंजए वावि ॥ १०२२ ॥**

व्याख्या—सम्प्रदायाभावान्न प्रतन्यत इति ॥

**एवं बद्धमबद्धं आएसाणं हवंति पंचसया । जह एगा मरुदेवी अच्चंतत्थावरा सिद्धा ॥ १०२३ ॥**

व्याख्या—'एवम्' इत्यनन्तरोक्तप्रकारं 'बद्धं' लोकोत्तरं, लौकिकं त्वत्रारण्यकादि द्रष्टव्यम्, अबद्धं पुनरादेशानां भवन्ति पञ्च शतानि, किम्भूतानि ?, अत आह—यथैका—तस्मिन् समयेऽद्वितीया 'मरुदेवी' ऋषभजननी 'अत्यन्तस्थावरा' इत्यनादिवनस्पतिकायादुद्धृत्य 'सिद्धा' निष्ठितार्था सञ्जातेति, उपलक्षणमेतदन्येषामपि स्वयम्भूरमणजलधिमत्स्यपद्मपत्राणां वलयव्यतिरिक्तसकलसंस्थानसम्भवादीनामिति, लौकिकमप्यङ्गिकाप्रत्यङ्गिकादिकरणं ग्रन्थानिबद्धं वेदितव्यमिति गाथार्थः ॥ १०२३ ॥ अत्र वृद्धसम्प्रदायः—आरुहए पवयणे पंच आएसमयाणि जाणि अणिबद्धाणि, तत्थेगं मरुदेवा णवि अंगे ण उवंगे पाठो अत्थि जहा—अच्चंतं थावरा होइऊण सिद्धत्ति, बिइयं सयंभुरमणे समुद्दे मच्छाणं पउमपत्ताण य सव्वसंठाणाणि

१ द्वीपायनो भुङ्क्ते, एव हन्यतेऽपि यावत् यत्र द्वीपायनशत हन्यते तत्रैको द्वीपायनो हन्यते २ आर्हते प्रवचने पञ्चादेशशतानि यान्यनिबद्धानि, तत्रैक मरुदेवा नैवाङ्गे नोपाङ्गे पाठोऽस्ति यथा—अत्यन्तं स्थावरा ( भू ) भूत्वा ( अनादिवनस्पतेरागत्य ) सिद्धेति, द्वितीयं स्वयम्भूरमणे समुद्रे मत्स्यानां पद्मपत्राणां च सर्वसंस्थानानि

अत्थि वलयसंठाणं मोत्तुं, तइयं विण्हुस्स सातिरेगजोयणसयसहस्सविउव्वणं, चउत्थं करडओकुरुडा *दोसट्टियरुवज्झाया, कुणालाणयरीए निद्धमणमूले वसही, वरिसासु देवयाणुकंपणं, नागरेहि निच्छुहणं, करडेण रूसिएण वुत्तं—'वरिस देव ! कुणालाए,' उक्कुरुडेण भणियं—'दस दिवसाणि पंच य' पुणरवि करडेण भणियं—'मुट्ठिमेत्ताहिं धाराहिं' उक्कुरुडेण भणियं—'जहा रत्तिं तहा दिवं' एवं वोत्तूणमवक्कंता, कुणालाएवि पण्णरसदिवसअणुबद्धवरिसणेणं सजाणवया (सा) जलेण उक्कंता तओ ते तइयवरिसे साएए णयरे दोऽवि कालं काऊण अहे सत्तमाए पुढवीए काले णरगे बावीससागरोवमट्ठिईआ णेरइया संवुत्ता । कुणालाणयरीविणासकालाओ तेरसमे वरिसे महावीरस्स केवलणाणसमुप्पत्ती । एयं अनिबद्धं, एवमाइ पंचाएससयाणि अवद्धाणि ॥ एवं लोइयं अबद्धकरणं बत्तीसं अड्डियाओ बत्तीसं पच्चड्डियाओ सोलस करणाणि, लोगप्पवाहे पंचट्ठाणाणि तंजहा—आलीढं पच्चालीढं वइसाहं मंडलं समपयं, तत्थालीढं दाहिणं पायं अग्गओहुत्तं काउं

१ सन्ति वलयसम्स्थान मुक्त्वा, तृतीय विष्णो सातिरेकयोजनशतसहस्रं वैक्रिय, चतुर्थं कुरुटोत्कुरुटौ दोषार्त्ततरोपाध्यायौ कुणालायां नगर्यां निर्धमन ( जलनिर्गमनमार्ग ) मूले वसति ( तयो ), वर्षासु ( वर्षावासे ) देवतानुकम्पन, नागरैर्निष्काशनं, करटेन रुष्टेनोक्तं—'वर्ष देव ! कुणालायां,' उत्कुरुटेन भणितं—'दश दिवसान् पञ्च च' पुनरपि करटेन भणित—मुष्टिमात्राभिर्धाराभि:' उत्कुरुटेन भणितं—'यथा रात्रौ तथा दिवा' एवमुक्त्वाऽपक्रान्तौ, कुणालायामपि पञ्चदशदिवसानुबद्धवर्षणेन सजनपदा ( कुणाला ) जलेनापक्रान्ता, ततस्तौ तृतीये वर्षे साकेते नगरे द्वावपि कालं कृत्वाऽध सप्तम्यां पृथिव्यां काले नरके द्वाविंशतिसागरोपमस्थितिकौ नैरयिकौ संवृत्तौ । कुणालानगरीविनाशकालात्त्रयोदशे वर्षे महावीरस्य केवलज्ञानसमुत्पत्ति । एतदनिबद्ध, एवमादीनि पञ्चादेशशतानि अबद्धानि ॥ एवं लौकिकमबद्धकरण द्वात्रिंशदड्डिका द्वात्रिंशत्प्रत्यड्डिका षोडश करणानि, लोकप्रवाहे पञ्च स्थानानि, तद्यथा—आलीढं प्रत्या-

। वैशाखं मण्डलं समपाद, तत्रालीढ दक्षिणं पादमग्रतोमूतं कृत्वा * दोसडियरुव०

वामपायं पच्छओहुत्तं ओसारेइ, अंतरं दोण्हवि पायाणं पंचपाया, एवं चेव विवरीयं पच्चालीढं, वइसाहं पण्हीओ अब्भिं-तराहुत्तीओ समसेढीए करेइ, अग्गिमयलो बहिराहुत्तो, मंडलं दोवि पाए दाहिणवामहुत्ता ओसारेत्ता ऊरुणोवि आउं-टावेइ जहा मंडलं भवइ, अंतरं चत्तारि पया, समपायं दोवि पाए समं निरंतरं ठवेइ, एयाणि पंचट्ठाणाणि, लोगप्पवाए(हे) सयणकरणं छट्ठं ठाणं, इत्यलं विस्तरेण ॥ उक्तं श्रुतकरणम्, अधुना नोश्रुतकरणमभिधित्सुराह—

**नोसुअकरणं दुविहं गुणकरणं तह य जुंजणाकरणं । गुणकरणं पुण दुविहं तवकरणे संजमे अ तहा ॥१०२४॥**

व्याख्या—श्रुतकरणं न भवतीति नोश्रुतकरणम्, 'अमानोनाः प्रतिषेधवाचका' इति वचनात्, 'द्विविधं' द्विप्रकारं 'गुणकरणम्' इति गुणानां करणं गुणकरणं, गुणानां कृतिरित्यर्थः, 'तथा' इति निर्देशे 'चः' समुच्चये व्यवहितश्चास्य योगः, कथं ?, 'योजनाकरणं च' मनःप्रभृतीनां व्यापारकृतिश्चेत्यर्थः, गुणकरणं पुनः 'द्विविधं' द्विप्रकारं, कथं ?, 'तपकरणम्' इति तपसः अनशनादेर्बाह्याभ्यन्तरभेदभिन्नस्य करणं तपःकरणं, तपःकृतिरिति हृदयं, तथा 'संजमे अ'त्ति संयमविषयं च पञ्चाश्रवविरमणादिकरणमिति भाव इत्ययं गाथार्थः ॥ १०२४ ॥ इदानीं योजनाकरणं व्याचिख्यासुराह—

**जुंजणकरणं तिविहं मण १ वय २ काए अ ३ मणसि सच्चाई । सट्ठाणि तेसि भेओ चउ १ चउहा २ सत्तहा ३ चेव १०२५**

---

१ वामपादं पश्चात्कृत्यापसारयति, अन्तरं द्वयोरपि पादयोः पञ्च पादाः, एवमेव विपरीतं प्रत्यालीढं, वैशाखं पार्ष्णी अभ्यन्तरे समश्रेण्या करोति, अग्रतलौ बाह्यतः, मण्डलं द्वावपि पादौ दक्षिणवामतः अपसार्य ऊरू अपि आकुञ्चति यथा मण्डलं भवति, अन्तरं चत्वारः पादाः, समपादं द्वावपि पादौ समं निरन्तरं स्थापयति, एतानि पञ्च स्थानानि, लोकप्रवादे (हे) शयनकरणं षष्ठं स्थानम्।

व्याख्या—योजनाकरणं 'त्रिविधं' त्रिप्रकारं 'मणवइकाए य'त्ति मनोवाक्कायविषयं, तत्र 'मनसि सत्यादि' मनोविषयं सत्यादियोजनाकरणं तद्यथा—सत्यमनोयोजनाकरणम्, असत्यमनोयोजनाकरणं, सत्यमृषामनोयोजनाकरणम्, असत्या-मृषामनोयोजनाकरणमिति, 'स्वस्थाने' प्रत्येकं मनोवाक्कायलक्षणे 'तेषां' योजनाकरणानां 'भेदः' विभागः 'चउ चउहा सत्तहा चेव'त्ति अयमत्र भावार्थः—मनोयोजनाकरणं चतुर्भेदं सत्यमनोयोजनाकरणादि दर्शितमेव, एवं वाग्योजनाकरणमपि चतुर्भेदमेव द्रष्टव्यं, काययोजनाकरणं तु सप्तभेदं, तद्यथा—औदारिककाययोजनाकरणम्, एवमौदारिकमिश्रम्, एवं वैक्रियकायः एवं वैक्रियमिश्रम्, एवमाहारककायः एवमाहारकमिश्रम्, एवं कार्मणकाययोजनाकरणमिति गाथार्थः ॥ १०२५ ॥ इत्थं तावद् व्यावर्णितं यथोद्दिष्टं करणम्, अधुनाऽत्र येनाधिकार इति तद्दर्शनायाऽऽह—

**भावसुअसद्दकरणे अहिगारो इत्थ होइ कायव्वो । नोसुअकरणे गुणजुंजणे अ जहसंभवं होइ ॥ १०२६ ॥**

व्याख्या—भावश्रुतशब्दकरणे 'अधिकारः' अवतारो भवति कर्तव्यः श्रुतसामायिकस्य, न तु चारित्रसामायिकस्य, तस्य अन्ते यथासम्भवाभिधानाद्, इह च भावश्रुतं सामायिकोपयोग एव, शब्दकरणमप्यत्र तच्छब्दविशिष्टः श्रुतभाव एव विवक्षितो न तु द्रव्यश्रुतमिति, तत्र वस्तुतोऽस्यानवतारात्, तथा नोश्रुतकरणमधिकृत्य 'गुणजुंजणे य'त्ति गुणकरणे योजनाकरणे च यथासम्भवं भवति, अधिकरणमिति गम्यते, तत्र यथासम्भवमिति गुणकरणे चारित्रसामायिकस्यावतारः, तपःसंयमगुणात्मकत्वाच्चारित्रस्य, योजनाकरणे च मनोवाग्योजनायां सत्यासत्यामृषाद्वये द्वयस्यापि भावनीयः, काययोजनायामपि द्वयस्याद्यस्यैवेति गाथार्थः ॥ १०२६ ॥ साम्प्रतं सामायिककरणमेवाव्युत्पन्नविनेयवर्गव्युत्पादनार्थं सप्तभिरनु-योगद्वारैः कृताकृतादिभिः निरूपयन्नाह—

**कयाकयं १ केण कयं २ केसु अ दव्वेसु कीरई वावि ३ ।**
**काहे व कारओ ४ नयओ ५ करणं कइविहं ६ (च) कहं ७ ? ॥ १०२७ ॥**

व्याख्या—'कयाकयं'ति सामायिकस्य करणमिति क्रियां श्रुत्वा चोदक आक्षिपति—एतत्सामायिकमस्याः क्रियायाः प्राक् किं कृतं क्रियते ? आहोस्विदकृतमिति, उभयथाऽपि दोषः, कृतपक्षे भावादेव करणानुपपत्तेः, अकृतपक्षेऽपि वान्ध्ये-यादेरिव करणानुपपत्तिरेवेति, अत्र निर्वचनं, कृतं चाकृतं च कृताकृतं, नयमतभेदेन भावना कार्या, केन कृतमिति वक्तव्यं, तथा केषु द्रव्येष्विष्टादिषु क्रियते ?, कदा वा कारकोऽस्य भवतीति वक्तव्यं, 'नयत' इति केनालोचनादिना नये-नेति, तथा करणं 'कइविहं' कतिभेदं 'कथं' केन प्रकारेण लभ्यत इति वक्तव्यमयं गाथासमासार्थः ॥ १०२७ ॥ अवय-वार्थं तु प्रतिद्वारं भाष्यकार एव वक्ष्यति, तत्राऽऽद्यद्वारावयवार्थाभिधित्सयाऽऽह—

**उप्पन्नाणुप्पन्नं कयाकयं इत्थ जह नमुक्कारे । दा० १ । केणंति अत्थओ तं जिणेहिं सुत्तं गणहरेहिं ॥१७२॥ (दा० २) भा०**

व्याख्या—इहोत्पन्नानुत्पन्नं कृताकृतमभिधीयते, सर्वमेव च वस्तूत्पन्नानुत्पन्नं क्रियते, द्रव्यपर्यायोभयरूपत्वाद्वस्तुन इति, अत्र नैगमादिनयैर्भावना कार्येति, अत एवाऽऽह—अत्र यथा नमस्कारे नयभावना कृता तथैव कर्तव्येति गम्यते,

सा पुनर्नमस्कारानुसारेणैव भावनीयेति द्वारम् । सा पुण भावणा—इह केइ उप्पन्नं इच्छंति, केइ अणुप्पन्नं इच्छंति, ते य णेगमाई सत्त मूलणया, तत्थ णेगमोऽणेगविहो, तत्थाइणेगमस्स अणुप्पन्नं कीरइ णो उप्पण्णं, कम्हा ?, जहा पंच अत्थिकाया णिच्चा एवं सामाइयंपि ण कयाइ णासि ण कयाइ ण भवदि ण कयाइ ण भविस्सइ, भुविं च भवइ अ भविस्सइ, धुवे णिइए अक्खए अव्वए अवट्ठिए णिच्चे ण एस भावे केणइ उप्पाइए-त्तिकट्टु, जदावि भरहेरवएहिं वासेहिं वोच्छिज्जइ तयावि महाविदेहे वासे अवोच्छित्ती तम्हा अणुप्पन्नं । सेसाणं णेगमाणं छण्ह य संगहाईण नयाणं उप्पन्नं कीरइ, जेणं पण्णरससुवि कम्मभूमीसु पुरिसं पडुच्च उप्पज्जइ, जइ उप्पन्नं कहं उप्पन्नं ?, तिविहेण सामित्तेण उप्पत्ती भवइ, तंजहा—समुट्ठाणेणं वायणाए लद्धीए, तत्थ को णओ कं उप्पत्तिं इच्छइ ?, तत्थ जे पढमवज्जा णेगमा संगहववहारा य ते तिविहंपि उप्पत्तिं इच्छंति, समुट्ठाणेणं जहा तित्थगरस्स सएणं उवट्ठाणेणं, वायणाए वायणायरियणिस्साए जहा भगवया गोयमसामी वाइओ, लद्धीए वा अभवियस्स

१ सा पुनर्भावना—इह केचिदुत्पन्नमिच्छन्ति, केचिदनुत्पन्नमिच्छन्ति, ते च नैगमादयः सप्त मूलनया, तत्र नैगमोऽनेकविध, तत्रादिनैगमस्यानुत्पन्नं क्रियते नोत्पन्न, कस्मात्?, यथा पञ्चास्तिकाया नित्या एवं सामायिकमपि न कदाचिन्नासीत् न कदाचिन्न भवति न कदाचिन्न भविष्यति, भूत च भवति च भविष्यति, ध्रुव नैत्यिक अक्षयमव्यय अवस्थित नित्य नैष भावः केनचिदुत्पादित इतिकृत्वा, यदापि भरतैरवतेषु वर्षेषु व्युच्छिद्यते तदाऽपि महाविदेहेषु वर्षेषु अव्यवच्छित्ति तस्मादनुत्पन्न। शेषाणां नैगमानां षण्णा च सग्रहादीनां नयानामुत्पन्न क्रियते, यत पञ्चदशस्वपि कर्मभूमिषु पुरुष प्रतीत्योत्पद्यते, यद्युत्पन्नं कथमुत्पन्न ?, त्रिविधेन स्वामित्वेनोत्पत्तिर्भवति, तद्यथा—समुत्थानेन वाचनया लब्ध्या, तत्र को नयः कामुत्पत्तिमिच्छति ?, तत्र ये प्रथमवर्जा नैगमा सग्रहव्यवहारौ च ते त्रिविधामप्युत्पत्तिमिच्छन्ति, समुत्थानेन यथा तीर्थकरस्य स्वकेनोत्थानेन, वाचनया वाचनाचार्यनिश्रया यथा भगवता गौतमस्वामी वाचित, लब्ध्या वाऽभव्यस्य

णत्थि, भवियस्स पुण उवएसगमंतरेणावि पडिमाइ दट्ठूणं सामाइयावरणिज्जाण कम्माण खओवसमेणं सामाइयलद्धी समुप्पज्जइ, जहा सयंभूरमणे समुद्दे पडिमासंठिया य मच्छा पउमपत्तावि पडिमासंठिदा साहुसंठिया य, सव्वाणि किर तत्थ संठाणाणि अत्थि मोत्तूण वलयसंठाणं, एरिसं णत्थि जीवसंठाणंति, ताणि संठाणाणि दट्ठूण कस्सइ संमत्तसुयचरित्ताचरित्तसामाइयाइ उप्पज्जेज्जा । उज्जुसुओ पढमं समुट्ठाणेणं नेच्छइ, किं कारणं ?, भगवं चेव उट्ठाणं, स एव वायणायरिओ गोयमप्पभिईणं, तेण दुविहं—वायणासामित्तं लद्धिसामित्तं च, जं भणियं—वायणायरियणिस्साए सामाइयलद्धी जस्स उप्पज्जइ, तिण्णि सद्दणया लद्धिमिच्छंति, जेण उट्ठाणे वायणायरिए य विज्जमाणेवि अभवियस्स ण उप्पज्जइ, लब्धेरभावात्, एवं उप्पण्णं अणुप्पण्णं वा सामाइयं कज्जइ, कयाकयंति दारं गतं, अधुना द्वितीयद्वारमधिकृत्याऽऽह—'केन' इति, केन कृतमित्यत्र निर्वचनम्, 'अर्थतः' अर्थमङ्गीकृत्य 'तत्' सामायिकं

१ नास्ति, भव्यस्य पुनरुपदेशकमन्तरेणापि प्रतिमादि दृष्ट्वा सामायिकावरणीयानां कर्मणां क्षयोपशमेन सामायिकलब्धि समुत्पद्यते, यथा स्वयम्भूरमणे समुद्रे प्रतिमासस्थिताश्च मत्स्याः पद्मपत्राण्यपि प्रतिमासस्थितानि साधुसस्थितानि च, सर्वाणि किल तत्र सस्थानानि सन्ति मुक्त्वा वलयसस्थान, ईदृश नास्ति जीवसस्थानमिति, तानि सस्थानानि दृष्ट्वा कस्यचित्सम्यक्त्वश्रुतचारित्राचारित्रसामायिकादिरुत्पद्येत । ऋजुसूत्र प्रथमां समुत्थानेन (इति) नेच्छति, किं कारण ?, भगवानेवोत्थान, स एव वाचनाचार्यो गौतमप्रभृतीनां, तेन द्विविध वाचनास्वामित्व लब्धिस्वामित्व च, यद्भणित—वाचनाचार्यनिश्रया सामायिकलब्धिर्यस्योत्पद्यते, त्रय शब्दनया लब्धिमिच्छन्ति, येन उत्थाने वाचनाचार्ये च विद्यमानेऽपि अभव्यस्य नोत्पद्यते, एवमुत्पन्न अनुत्पन्नं वा सामायिक क्रियते, कृताकृतमिति द्वारं गत ।

'जिनैः' तीर्थकरैः, सूत्रं त्वङ्गीकृत्य गणधरैरिति, व्यवहारमतमेतत्, निश्चयमतं तु व्यक्त्यपेक्षया यो यत्स्वामी तत्तेनैवेति, व्यक्त्यपेक्षश्चेह तीर्थकरगणधरयोरुपन्यासो वेदितव्यः, प्रधानव्यक्तित्वाद्, अन्यथा पुनरुक्तदोषप्रसङ्ग इति, उक्तं च भाष्यकारेण—'णणु णिग्गमे गयं चिय केण कयंति त्ति का पुणो पुच्छा? । भण्णइ स वज्झकत्ता इहंतरंगो विसेसोऽयं ॥१॥'' बाह्यकर्ता सामान्येनान्तरङ्गस्तु व्यक्त्यपेक्षयेति भावना, अयं गाथार्थः ॥ साम्प्रतं केषु द्रव्येषु क्रियत इत्येतद् विवृण्वन्नाह—

तं केसु कीरई तत्थ नेगमो भणइ इट्ठदव्वेसु । सेसाण सव्वदव्वेसु पज्जवेसुं न सव्वेसुं ॥१७६॥ (दा० ३)(भा०)

व्याख्या—'तत्' सामायिकं 'केषु' द्रव्येषु स्थितस्य सतः 'क्रियते' निर्वर्त्यत इति द्रव्येषु प्रश्नः, नयप्रविभागेनेह निर्वचनं तत्र 'णेगमो भणइ' नैगमनयो भाषते—'इष्टद्रव्येषु' इति मनोज्ञपरिणामकारणत्वान्मनोज्ञेष्वेव शयनाशनादिद्रव्येष्विति, तथाहि—'मणुण्णं भोयणं भोच्चा, मणुण्णं सयणासणं । मणुण्णंसि अगारंसि, मणुण्णं झायए मुणी ॥ १ ॥' इत्यागमः, 'शेषाणां' सङ्ग्रहादीना सर्वद्रव्येषु, शेषनया हि परिणामविशेषात् कस्यचित् किञ्चिन्मनोज्ञमिति व्यभिचारात्, सर्वद्रव्येषु स्थितस्य क्रियते यत्र मनोज्ञ परिणाम इति मन्यन्ते, पर्यायेषु न सर्वेष्ववस्थानाभावात्, तथाहि—यो यत्र निषद्यादौ स्थितः न स तत्र तत्सर्वपर्यायेषु, एकभाग एव स्थितत्वात्, इत्थं चैतदङ्गीकर्तव्यम्, अन्यथा पुनरुक्तदोषप्रसङ्गः, तथा चोक्तं

१ ननु निर्गमे गतमेव केन कृतमितीति का पुन पृच्छा ? । भण्यते स बाह्यकर्ता इहान्तरङ्गो विशेषोऽयम् ॥ १ ॥ २ मनोज्ञ भोजन भुक्त्वा मनोज्ञ शयनासन । मनोज्ञेऽगारे मनोज्ञ ध्यायति मुनि ॥ १ ॥

भाष्यकारेण–"णणु भणियमुवग्घाए केसुत्ति इहं कओ पुणो पुच्छा?। केसुत्ति तत्थ विसओ इह केसु ठियस्स तल्लाहो ॥१॥ तो किह सव्वद्दव्वावत्थाणं? णणु जाइमेत्तवयणाओ। धम्माइसव्वदव्वाहारो सव्वो जणोऽवस्सं ॥ २ ॥" अथवोपोद्घाते सर्वद्रव्याणि विषयः सामायिकस्य, इह तान्येव सर्वद्रव्याणि सामायिकस्य हेतुः, श्रद्धेयज्ञेयक्रियानिबन्धनत्वात्, अथवाऽन्यथा पुनरुक्तपरिहारः–कृताकृतादिगाथायां कृतमकृतं वा सामायिकं कार्यं कर्म, कर्तुरीप्सिततमत्वात्, केन कृतमिति कर्तुः प्रश्नः, केषु द्रव्येष्विति साधकतमकरणप्रश्नः, प्राकृते तृतीयाबहुवचनं सप्तमीबहुवचनतुल्यं तृतीयार्थे वा सप्तमीं कृत्वा निर्देशः, न चैतदपि स्वमनीषिकाव्याख्यानं, यतो भाष्यकारेणाप्यभ्यधायि–"विसओवि उवग्घाए केसुत्तीहं स एव हेउत्ति। सद्धेयणेयकिरियाणिबंधणं जेण सामइयं ॥ १ ॥' अहवा कयाकयाइसु कज्जं केण व कयं च कत्तत्ति। केसुत्ति करणभावो ततियत्थे सत्तमीं काउं ॥ २ ॥' इत्यलं प्रसङ्गेनेति गाथार्थः ॥ १७६ ॥ द्वारं ॥ साम्प्रतं कदा कारकोऽस्य भवतीत्येतन्नयैर्निरूपयन्नाह—

काहु? उद्दिट्ठे नेगम उवट्ठिए संगहो अ ववहारो। उज्जुसुओ अक्कमंते सद्दु समत्तंमि उवउत्तो॥१७७॥(दा०४)(भा०)

व्याख्या—कदाऽसौ सामायिकस्य कारको भवतीति प्रश्नः, इह नयैर्निर्वचनं 'उद्दिट्ठे णेगम'त्ति उद्दिष्टे सति नैगमो

१ ननु भणितमुपोद्घाते केष्विति इह कुतः पुनः पृच्छा?। केष्विति तत्र विषय इह केषु स्थितस्य तल्लाभः ॥ १ ॥ तदा कथं सर्वद्रव्यावस्थानं? ननु जातिमात्रवचनात्। धर्मादिसर्वद्रव्याधारः सर्वो जनोऽवश्यम् ॥ २ ॥ २ विषयोऽप्यु (यो वो) पोद्घाते केष्विति इह स एव हेतुरिति। श्रद्धेयज्ञेयक्रियानिबन्धनं येन सामायिकम् ॥ १ ॥ अथवा कृताकृतादिषु कार्यं केन वा कृतं च कर्त्तेति। केष्विति करणभावः तृतीयार्थे सप्तमीं कृत्वा ॥ २ ॥

मन्यते, इयमत्र भावना–सामान्यग्राहिणो नैगमनयस्योद्दिष्टमात्र एव सामायिके गुरुणा शिष्योऽनधीयानोऽपि तत्क्रियाऽननुष्ठायी सन् सामायिकस्य कर्ता वनगमनप्रस्थितप्रस्थककर्तृवत्, यस्मादुद्देशोऽपि तस्य कारणं सामायिकस्य, तस्मिंश्च कारणे कार्योपचारः, 'उवट्ठिए संगहो य ववहारो'त्ति सङ्ग्रहो व्यवहारश्च मन्यते–उपस्थितः सन् कारको भवतीति, इयमत्र भावना–इहोद्देशानन्तरं वाचनाप्रार्थनाय यदा वन्दनं दत्त्वोपस्थितो भवति तदा प्रत्यासन्नतरकारणत्वात् सङ्ग्रहव्यवहारयोः कारक इति, ऋजुसूत्र आक्रामन् कारको भवतीति मन्यते, एतदुक्तं भवति–उद्देशानन्तरं गुरुपादमूले वन्दित्वोपस्थितः–सामायिकं पठितुमारब्धः कारकः, वृद्धास्तु व्याचक्षते–न पठन्नेव, किन्तु समासेः कारक इति सामायिकक्रियां वा प्रतिपद्यमानस्तदुपयोगरहितोऽपि कारकः, यस्मात् सामायिकार्थस्य सामायिकशब्दक्रिये असाधारणं कारणम्, असाधारणकारणेन च व्यपदेश इति, 'सद्दु समत्तंमि उवउत्तो'त्ति शब्दादयो नया मन्यन्ते–समाप्ते सत्युपयुक्त एव कारको भवति, त्रयाणां च शब्दादीनां नयानां शब्दक्रियावियुक्तोऽपि सामायिकोपयुक्तः कारकः, मनोज्ञतथापरिणामरूपत्वात् सामायिकस्येति भावना, अयं गाथार्थः ॥ १७७ ॥ कदा कारक इति गतं, नयतो–नयप्रपञ्चत इत्यर्थः, अथवा कदा कारक इत्येतावद् द्वारं गतं, नयत इत्येतत्तु द्वारान्तरमेव, अतस्तदभिधित्सयाऽऽह—

आलोअणा य १ विणए २ खित्त ३ दिसाऽभिग्गहे अ ४ काले ५।
रिक्ख ६ गुणसंपया वि अ ७ अभिवाहारे अ ८ अट्ठमए ॥ १७८ ॥ (दा० ५) (भा०)

व्याख्या—इहाऽऽभिमुख्येन गुरोरात्मदोषप्रकाशनम्–आलोचनानयः, तथा विनयश्च पदधात्रनानुरागादिः, तथा 'क्षेत्रम्' इक्षुक्षेत्रादि, तथा दिगभिग्रहश्च वक्ष्यमाणलक्षणः, कालश्चाहरादिः, तथा रिक्षसम्पत्–नक्षत्रसंपत् गुणसंपच्च गुणाः–प्रियधर्मादयः, अभिव्याहरणम् अभिव्याहारश्चाष्टमो नय इति गाथासमासार्थः ॥ १७८ ॥ व्यासार्थं तु प्रतिपदं भाष्यकार एव सम्यग् न्यक्षेण वक्ष्यति, तथा चाऽऽद्यद्वारव्याचिख्यासयाऽऽह—

पव्वज्जाए जुग्गं तावइ आलोअणं गिहत्थेसुं। उवसंपयाइ साहुसु सुत्ते अत्थे तदुभए अ ॥१७९॥ (प०१)(भा०)

व्याख्या—प्रव्रज्यायाः–निष्क्रमणस्य यत् प्राणिजातं स्त्रीपुरुषनपुंसकभेदं 'योग्यम्' अनुरूपं तदन्वेषणं, यदिति वाक्यशेषः, तावत्येवाऽऽलोचनाऽवलोकना वा, केषु?–'गृहस्थेषु' गृहस्थविषय इति, एतदुक्तं भवति–योग्यं हि सर्वोपाधिशुद्धमेव भवति, ततश्च तदन्वेषणेन सर्वस्यैव विधेः कस्त्वं? को वा ते निर्वेदः? इत्यादिप्रश्नादेराक्षेप इति, ततश्च प्रयुक्तालोचनस्य योग्यताऽवधारणानन्तरं सामायिकं दद्यात्, न शेषाणां प्रतिषिद्धदीक्षाणामिति नयः। एवं तावद् गृहस्थस्याकृतसामायिकस्य सामायिकार्थमालोचनोक्ता, साम्प्रतं कृतसामायिकस्य यतेः प्रतिपादयन्नाह–उपसम्पदि साधुषु आलोचनेति वर्तते, सूत्रे अर्थे तदुभये च, इयमत्र भावना–सामायिकसूत्राद्यर्थं यदा कश्चिदुपसम्पदं प्रयच्छति यतिस्तदाऽसावालोचनां ददाति, अत्र विधिः सामाचार्यामुक्त एव, आह–अल्पं सामायिकसूत्रं, तत्कथं तदर्थमपि यतेरुपसम्पत्?, तदभावे वा कथं यतिः? कथं वा प्रतिक्रमणमन्तरेण शुद्धिरिति?, अत्रोच्यते, मन्दग्लानादिव्याघाताद् विस्मृतसूत्रस्य यतेः सूत्रार्थमप्युपसम्पदविरुद्धैव, एष्यत्कालं वा दुष्षमान्तमालोक्यानागतामपेक्ष्य सूत्रमिति, तदभावेऽपि च तदा चारित्रपरि

णामोनेतत्वादसौ यतिरेव, शुद्धिश्चास्य यावत् सूत्रमधीतं तावत् तेनैव प्रतिक्रमणं कुर्वत इत्यलं विस्तरेणेति गाथार्थः ॥ ॥ १७९ ॥ द्वारम् ॥ अधुनैकगाथयैव विनयादिद्वारत्रयं व्याचिख्यासुराह—

आलोइए विणीअस्स दिज्जए तं ( पडि २ ) पसत्थखित्तंमि । ( प० ३ )
अभिगिज्झ दो दिसाओ चरंतिअं वा जहाकमसो ॥ १८० ॥ ( प० ४ ) ( भा० )

व्याख्या—आलोचिते सति विनीतस्य, पादधावनानुरागादिविनयवत इत्यर्थः, उक्तं च भाष्यकारेण—'अणुरत्तो भत्तिगओ अमुई अणुयत्तओ विसेसण्णू । उज्जुत्तगऽपरितंतो इच्छियमत्थं लहइ साहू ॥ १ ॥' दीयते 'तत्' सामायिकं, तस्यापि न यत्र तत्र क्वचित्, किं तर्हि?, 'प्रशस्तक्षेत्रे' इक्षुक्षेत्रादाविति, अत्राप्युक्तं—'उच्छुवणे सालिवणे पउमसरे कुसुमिए य वणसंडे। गंभीरसाणुणाए पयाहिणजले जिणघरे वा ॥ १ ॥ देज्ज ण उ भग्गझामियसुसाणसुण्णासु संणगेहेसु । छारंगारकयारामेज्झाईदव्वदुट्ठे वा ॥ २ ॥' तथा 'अभिगृह्य' अङ्गीकृत्य द्वे 'दिशौ' पूर्वां वोत्तरां वा दीयत इति वर्तते, तथा चरन्तीं वा, तत्र चरन्ती नाम यस्यां दिशि तीर्थकरकेवलिमनःपर्यायज्ञान्यवधिज्ञानिचतुर्दशपूर्वधरादयो यावद् युगप्रधाना इति विहरन्ति, यथाक्रमश इति गुणापेक्षया तासु दिक्षु यथाक्रमेण दीयत इति, उक्तं च—पुंवाभिमुहो उत्तरमुहो व देज्जाऽहवा पडिच्छिज्जा।

१ अनुरक्तो भक्तिगतोऽमोची अनुवर्त्तको विशेषज्ञः । उद्यतकोऽपरितान्त इष्टमर्थं लभते साधुः ॥ १ ॥ २ इक्षुवने शालीवने पद्मसरसि कुसुमिते च वनखण्डे । गम्भीरसानुनादे प्रदक्षिणजले जिनगृहे वा ॥ १ ॥ दद्यात् न तु भग्नध्यामितश्मशानशून्येषु संज्ञागेहेषु । क्षाराङ्गारकचवरामेध्यादिद्रव्यदुष्टे वा ॥२॥ ३ पूर्वाभिमुख उत्तरमुखो वा दद्यादथवा प्रतीच्छेत् ।* ०ण्णामणुण्ण० प्र.

जाए जिणादओ वा दिसाए जिणचेइयाइं वा ॥ १ ॥' इति गाथार्थः ॥ १८० ॥ द्वारत्रयं गतम्, अधुना कालादिद्वारत्रयमेकगाथयैवाभिधित्सुराह—

पडिकुट्ठदिणे वज्जिअ रिक्खेसु अ मिगसिराइ भणिएसुं । पियधम्माई गुणसंपयासु तं होइ दायव्वं ॥१८१॥ भा०)

व्याख्या—प्रतिकुष्टानि—प्रतिषिद्धानि दिनानि—वासराः, प्रतिकुष्टानि च तानि दिनानि चेति विग्रहः, तानि चतुर्दश्यादीनि वर्जयित्वाऽप्रतिकुष्टेष्वेव पञ्चम्यादिषु दातव्यमिति योगः, उक्तं च—"चाउद्दसिं पण्णरसिं वज्जेज्जा अट्ठमिं च नवमिं च । छट्ठिं च चउत्थिं बारसिं च दोण्हंपि पक्खाणं ॥ १ ॥" एतेष्वपि दिनेषु प्रशस्तेषु मुहूर्तेषु दीयते, नाप्रशस्तेषु, तथा 'ऋक्षेषु' नक्षत्रेषु च मृगशिरादिषु, 'उक्तेषु' ग्रन्थान्तराभिहितेषु, न तु प्रतिषिद्धेषु, उक्तं च—"मियसिरअद्दापूसो तिण्णि य पुव्वाइ मूलमस्सेसा । हत्थो चित्ता य तहा दस वुड्ढिकराइं णाणस्स ॥ १ ॥" तथा—'संझागयं रविगयं विड्डेरं सग्गहं विलंबिं च । राहुहयं गहभिन्नं च वज्जए सत्त नक्खत्ते ॥ २ ॥' तथा प्रियधर्मादिगुणसम्पत्सु सतीषु 'तत्' सामायिकं भवति दातव्यमिति, उक्तं च—"पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो य । खंतो दंतो गुत्तो थिरव्वय जिइंदिओ उज्जू ॥१॥" विनीतस्याप्येता गुणसम्पदोऽन्वेष्टव्या इति गाथार्थः॥१८१॥(प.५-६-७)साम्प्रतं चरमद्वारव्याचिख्यासयाऽऽह—

१ यस्यां जिनादयो वा दिशि जिनचैत्यानि वा ॥ १ ॥ २ चतुर्दशीं पञ्चदशीं वर्जयेत् अष्टमीं च नवमीं च । षष्ठीं च चतुर्थीं द्वादशीं च द्वयोरपि पक्षयोः ॥ १ ॥ ३ मृगशिर आर्द्रा पुष्य तिस्रश्च पूर्वा मूलमश्लेषा । हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥ १ ॥ सन्ध्यागत रविगत विड्वर सग्रह विलम्बि च । राहुहत ग्रहभिन्न च वर्जयेत् सप्त नक्षत्राणि ॥ १ ॥ ४ प्रियधर्मा दृढधर्मा संविग्नोऽवद्यभीरुरशठश्च । क्षान्तो दान्तो गुप्त स्थिरव्रतो जितेन्द्रिय ऋजुः ॥१॥

अभिवाहारो कालिअसुअंमि सुत्तत्थतदुभएणं ति । दव्वगुणपज्जवेहि अ दिट्ठीवायंमि बोद्धव्वो॥१८२॥(प०८)भा०

व्याख्या—'अभिव्याहरणम्' आचार्यशिष्ययोर्वचनप्रतिवचने अभिव्याहारः, स च 'कालिकश्रुते' आचारादौ 'सुत्तत्थतदुभएणं'ति सूत्रतः अर्थतस्तदुभयतश्चेति, इयमत्र भावना—शिष्येणेच्छाकारेणेदमङ्गाद्युद्दिशत इत्युक्ते सतीच्छापुरस्सरमाचार्यवचनम्—अहमस्य साधोरिदमङ्गमध्ययनमुद्देशं वोद्दिशामि—वाचयामीत्यर्थः, आप्तोपदेशपारम्पर्यख्यापनार्थं क्षमाश्रमणानां हस्तेन, न स्वोत्प्रेक्षया, सूत्रतोऽर्थतस्तदुभयतो वाऽस्मिन् कालिकश्रुते अ(त)थोत्कालिके, दृष्टिवादे कथमिति?, तदुच्यते—'दव्वगुणपज्जवेहि य दिट्ठीवायंमि बोद्धव्वो' द्रव्यगुणपर्यायैश्च 'दृष्टिवादे' भूतवादे बोद्धव्योऽभिव्याहार इति, एतदुक्तं भवति—शिष्यवचनानन्तरमाचार्यवचनमुद्दिशामि सूत्रतोऽर्थतश्च द्रव्यगुणपर्यायैः अनन्तगमसहितैरिति, एवं गुरुणा समादिष्टेऽभिव्याहारे शिष्याभिव्याहारः—ब्रवीति शिष्यः—उद्दिष्टमिदं मम, इच्छाम्यनुशासनं क्रियमाणं पूज्यैरिति, एवमभिव्याहारद्वारमष्टमं नीतिविशेषैर्नयैर्गतमिति गाथार्थः ॥ १८२ ॥ व्याख्याता प्रतिद्वारगाथा, साम्प्रतमधिकृतमूलद्वारगाथायामेव करणं कतिविधमिति व्याचिख्यासुराह—

उद्देस१समुद्देसे२वायण३मणुजाणणं च ४ आयरिए। सीसम्मि उद्दिसिज्जंतमाइ एअं तु जं कइहा ॥१८३॥ भा०दा०६

व्याख्या—इह गुरुशिष्ययोः सामायिकक्रियाव्यापारणं करणं, तच्चतुर्द्धा—'उद्देस समुद्देसे'ति उद्देशकरणं समुद्देशकरणं 'वायणमणुजाणणं च'त्ति वाचनाकरणमनुज्ञाकरणं च, छन्दोभङ्गभयादिह वाचनाकरणमत्रोपन्यस्तम्, अन्यथाऽमुना क्रमेण इह—उद्देशो वाचना समुद्देशोऽनुज्ञा चेति गुरोर्व्यापारः, 'आयरिए'त्ति गुराविदं करणं गुरुविषयमित्यर्थः, 'सीसम्मि

उद्दिसिज्जंतमाइ' शिष्ये-शिष्यविषयम् उद्दिश्यमानादि-उद्दिश्यमानकरणं वाच्यमानकरणं समुद्दिश्यमानकरणम् अनुज्ञायमानकरणं च, 'एयं तु जं कइह'त्ति एतदेव चतुर्विधं तद् यदुक्तं कतिविधमिति गाथार्थः ॥ १८३ ॥ आह-पूर्वमनेकविधं नामादिकरणमभिहितमेव, इह पुनः किमिति प्रश्नः', उच्यते, तत् पूर्वगृहीतस्य करणमनेकविधमुक्तम्, इह पुनरस्मिन् गुरुशिष्यदानग्रहणकाले चतुर्विधं करणमिति, पूर्वं वा करणमविशेषेणोक्तम्, इह गुरुशिष्यक्रियाविशेषाद् विशेषितमिति न पुनरुक्तम्, अथवाऽयमेव करणस्यावसरः, पूर्वत्रानेकान्तद्योतनार्थं विन्यासः कृत इति विचित्रा सूत्रस्य कृतिरित्यलं विस्तरेण, द्वारं ६। कथमिति द्वारमिदानीं, तत्रेयं गाथा—

**कह सामाइअलंभो? तस्सव्वविघाइदेसघाईं। देसविघाईफड्डुगअणंतवुड्ढीविसुद्धस्स ॥ १०२८ ॥**

**एवं ककारलंभो सेसाणवि एवमेव कमलंभो(दा०)। एअं तु भावकरणं करणे अ भए अ जं भणिअं ॥१०२९॥**

अस्या व्याख्या-'कथं' केन प्रकारेण सामायिकलाभ इति प्रश्नः, अस्योत्तरं-तस्य-सामायिकस्य सर्वविघातीनि देशविघातीनि च स्पर्द्धकानि भवन्ति, इह सामायिकावरणं-ज्ञानावरणं दर्शनावरणं [मिथ्यात्व]मोहनीयं च, अमीषां द्विविधानि स्पर्द्धकानि-देशघातीनि सर्वघातीनि च, तत्र सर्वघातिषु सर्वेषूद्घातितेषु सत्सु देशघातिस्पर्द्धकानामप्यनन्तेषूद्घातितेष्वनन्तगुणवृद्ध्या प्रतिसमयं विशुद्ध्यमानः शुभशुभतरपरिणामो भावतः ककारं लभते, तदनन्तगुणवृद्ध्यैव प्रतिसमयं विशुद्ध्यमानः सन् रेफमित्येवं शेषाण्यपि, अत एवाऽऽह-देशघातिस्पर्द्धकानन्तवृद्ध्या विशुद्धस्य सतः ॥ किं?—'एव'मित्यादि,—पूर्वार्द्धं गतार्थम्. आह—उपक्रमद्वारेऽभिहितमेतत्-क्षयोपशमात् जायते, पुनश्चोपोद्घातेऽभिहितमेतत्-कथं लभ्यत इति तत्रोक्तम्, इह किमर्थं प्रश्न इति पुनरुक्तता, उच्यते, त्रयमप्येतदपुनरुक्तं, कुतः?, यस्मादुपक्रमे क्षयोपशमात् सामायिकं लभ्यत इत्युक्तम्, उपोद्घाते स एव क्षयोपशमस्तत्कारणभूतः कथं लभ्यत इति प्रश्नः, इह पुनर्विशेषिततरः प्रश्न.-केषां पुनः कर्मणां स क्षयोपक्षम इति प्रत्यासन्नतरकारणप्रश्न इत्यलं प्रसङ्गेन। द्वारमेवोपसंहरन्नाह—एतदेव-अनन्तरोदितं सामायिककरणं यत्तद्भावकरणं 'करणे य'त्ति उपन्यस्तद्वारपरामर्शः। 'भए य'त्ति भयमपि 'यद् भणितं' यदुक्तमिति गाथाद्वयार्थः ॥ १०२८–२९ ॥ मूलद्वारगाथायां करणमित्येतद् द्वारं व्याख्यातम्, एतद्व्याख्यानाच्च सूत्रेऽपि करोमीत्ययमवयव इति, अधुना द्वितीयावयवव्याचिख्यासयाऽऽह—

**होइ भयंतो भयअंतगो अ रयणा भयस्स छब्भेआ। सव्वंमि वन्निएऽणुक्कमेण अंतेवि छब्भेआ॥१८४॥ (भा०)**

व्याख्या—भवति भदन्त इत्यत्र 'भदि कल्याणे सुखे च' अर्थद्वये धातुः 'जृविशिभ्यां झच्' (उ. पा. ४१३) औणादिकप्रत्ययो दृष्टः, तं दृष्ट्वा प्रकृतिरुह्यते, भदि कल्याण इति अनुनासिकलोपश्चेति, तस्यौणादिकविधानात्, ततश्च भदन्त इति भवति, भदन्तः—कल्याणः सुखश्चेत्यर्थः, प्राकृतशैल्या वा भवति भवान्त इति, अत्र भवस्य-संसारस्यान्तस्तेनाऽऽचार्येण क्रियत इति भवान्तकरत्वाद् भवान्त इति, तथा—भयान्तश्चेत्यत्र भयं-त्रासः तमाचार्यं प्राप्य भयस्यान्तो भवतीति भयान्तो-गुरुः, भयस्य वाऽन्तको भयान्तक इति, तस्याऽऽमन्त्रणं,'रचना' नामादिविन्यासलक्षणा, भयस्य 'षड्भेदाः' षट्प्रकाराः-नामस्थापनाद्रव्यक्षेत्रकालभावभेदभिन्नाः, तत्र पञ्च प्रकाराः प्रसिद्धाः, षष्ठं भावभयं सप्तधा-इहलोकभयं परलोकभयमादानभयमकस्माद्भयमश्लोकभयमाजीविकाभयं मरणभयं चेति, तत्रापीहलोके भयं स्वभवाद् यत् प्राप्यते परलोकभयं परभवात्, किञ्चनद्रव्यजातमादानं तस्य नाशहरणादिभ्यो भयम् आदानभयं, यत्तु बाह्यनिमित्तमन्तरेणाहेतुकं भयम् अकस्माद् भवति तदाकस्मिकं, 'श्लोक श्लाघायां' श्लोकनं श्लोकः श्लाघा-प्रशंसा तद्विपर्ययोऽश्लोकस्तस्माद् भयमश्लोकभयम्, आजीविकाभयं-दुर्जीविकाभयं, प्राणपरित्यागभयं मरणभयमिति, एवं सर्वस्मिन् वर्णिते 'अनुक्रमेण' उक्तलक्षणेनान्तेऽपि षड् भेदा इति, तत्र 'अम गत्यादिषु' अमनमन्तः-अवसानमित्यर्थः, अस्मिन्नपि षड् भेदाः, तद्यथा—नामान्तः स्थापनान्तः द्रव्यान्तः क्षेत्रान्तः कालान्तः भावान्तश्चेति, नामस्थापने क्षुण्णे, द्रव्यान्तो घटाद्यन्तः, क्षेत्रान्त ऊर्ध्वलोकादिक्षेत्रान्तः, कालान्तः समयाद्यन्तः, भावान्तः औदयिकादिभावान्तः ॥

**एवं सव्वंमिऽवि वन्निअंमि इत्थं तु होइ अहिगारो। सत्तभयविप्पमुक्के तहा भवंते भयंते अ ॥१८५॥ (भा०)**

व्याख्या—'एवम्' उक्तेन प्रकारेण 'सर्वस्मिन्' अनेकभेदभिन्ने भयादौ वर्णिते सति 'अत्र तु' प्रकृते भवत्यधिकारः-प्रकृतयोजना सप्तभयविप्रमुक्तो यस्तेन, तथा भवान्तो यः भदन्तश्चेति, पश्चानुपूर्व्या ग्रन्थ इति गाथाद्वयार्थः ॥ १८५ ॥ मूलद्वारगाथायां व्याख्यातं भयान्तद्वारद्वयं, तद्व्याख्यानाच्च भदन्तभवान्तभयान्त इति गुर्वामन्त्रणार्थः सूत्रावयव इति, उक्तं च—भाष्यकारेण 'आमंतेइ करेमी भदंत! सामाइयंति सीसोऽयं। आहामंतणवयणं गुरुणो किंकारणमिणंति? ॥१॥ भण्णइ-गुरुकुलवासोवमंगहत्थं जहा गुणत्थीह। णिच्चं गुरुकुलवासी हवेज्ज सीसो जओऽभिहियं ॥२॥ नाणस्स होइ भागी

१ आमन्त्रयति करोमि भदन्त! सामायिकमिति शिष्योऽयम्। आह आमन्त्रणवचनं गुरो किंकारणमिदमिति? ॥ १ ॥ भण्यते-गुरुकुलवासोपग्रहार्थं यथा गुणार्थीह। नित्यं गुरुकुलवासी भवेद् शिष्यो यतोऽभिहितम् ॥ २ ॥ ज्ञानस्य भवति भागी

थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ ३ ॥ आवस्सयंपि णिच्चं गुरुपामूलंमि देसियं होइ । वीसुंपि हि संवसओ कारणओ जयइ सेज्जाए ॥ ४ ॥ एवं चिय सव्वावस्सयाइ आपुच्छिऊण कज्जाइं । जाणावियमामंतणवयणाओ जेण सव्वेसिं ॥ ५ ॥ सामाइयमाईयं भदंतसद्दो य जं तयाईए । तेणाणुवत्तइ तओ करेमि भंतेत्ति सव्वेसु ॥ ६ ॥ किच्चाकिच्चं गुरुवो विदंति विणयपडिवत्तिहेउं च । ऊसासाइ पमोत्तुं तयणापुच्छाय पडिसिद्धं ॥ ७ ॥ गुरुविरहंमिवि ठवणागुरुवि सेवोवदंसणत्थं च । जिणविरहंमिऽवि जिणबिंबसेवणामंतणं सफलं ॥ ८ ॥ रन्नो व परोक्खस्सवि जह सेवा मंतदेवयाए वा । तह चेव परोक्खस्सवि गुरुणो सेवा विणयहेउं ॥ ९ ॥" इत्यादि, कृतं विस्तरेण ॥ साम्प्रतं सामायिकद्वारव्याचिख्यासयाऽऽह—

**सामं १ समं च २ सम्मं ३ इग ४ मवि सामाइअस्स एगट्ठा । नामं ठवणा दविए भावंमि अ तेसि निक्खेवो ॥१०३०**

**महुरपरिणाम सामं १ समं तुला २ संम खीरखंडजुई ३ । दोरे हारस्स चिई इग ४ मेआइं तु दव्वंमि ॥१०३१॥**

---

१ स्थिरतरो दर्शने चारित्रे च । धन्या यावत्कथं गुरुकुलवास न मुञ्चन्ति ॥ ३ ॥ आवश्यकमपि नित्यं गुरुपादमूले देशितं भवति । विष्वगपि हि सवसत कारणतो यतते शय्यायाम् ॥ ४ ॥ एवमेव सर्वावश्यकानि आपृच्छय कार्याणि । ज्ञापितमामन्त्रणवचनात् येन सर्वेषाम् ॥ ५ ॥ सामायिकमादौ भदन्तशब्दश्च यत्तदादौ । तेनानुवर्त्तते तत करोमि भदन्त इति सर्वेषु ॥ ६ ॥ कृत्याकृत्य गुरवो विदन्ति विनयप्रतिपत्तिहेतवे च । उच्छ्वासादि प्रमुच्य तदनापृच्छया प्रतिषिद्धम् ॥ ७ ॥ गुरुविरहेऽपि स्थापनागुरुरपि सेवोपदर्शनार्थं च । जिनविरहेऽपि जिनबिम्बसेवनामन्त्रण सफलम् ॥ ८ ॥ राज्ञ इव परोक्षस्यापि यथा सेवा मन्त्रदेवताया वा । तथैव परोक्षस्यापि गुरोः सेवा विनयहेतवे ॥ ९ ॥ * रूवदेसोवद० ( वि० )

व्याख्या—इह सामं समं च सम्यक् 'इगमवि' देशीपदं क्वापि प्रदेशार्थे वर्तते, सम्पूर्णशब्दावयवमेत्राधिकृत्याऽऽह—सामायिकस्यैकार्थिकानि । अमीषां निक्षेपमुपदर्शयन्नाह—नामस्थापनाद्रव्येषु भावे च नामादिविषय इत्यर्थः, 'तेषां' सामप्रभृतीनां निक्षेपः, कार्य इति गम्यते, स चायं—नामसाम स्थापनासाम द्रव्यसाम भावसाम च, एवं समसम्यक्पदयोरपि द्रष्टव्यः ॥ तत्र नामस्थापने क्षुण्णे एव, द्रव्यसामप्रभृतींश्च प्रतिपादयन्नाह—

'महुरे'त्यादि,—इहौघतो मधुरपरिणामं द्रव्यं—शर्करादि द्रव्यसाम समं 'तुला' इति भूतार्थालोचनायां समं तुलाद्रव्यं, सम्यक् 'क्षीरखण्डयुक्तिः' क्षीरखण्डयोजनं द्रव्यसम्यगिति, तथा 'दोरे' इति सूत्रदवरके मौक्तिकान्येवाधिकृत्य भाविपर्यायापेक्षया 'हारस्य' मुक्ताकलापस्य चयनं चितिः—प्रवेशनं द्रव्येकम्, अत एवाह—'एयाइं तु दव्वंमि'त्ति एतान्युदाहरणानि द्रव्यविषयाणीनि गाथाद्वयार्थः ॥ १०३१ ॥ साम्प्रतं भावसामादि प्रतिपादयन्नाह—

**आओवमाइ परदुक्खमकरणं १ रागदोसमज्झत्थं । नाणाइतिगं ३ तस्साइ पोअणं ४ भावसामाई ॥ १०३२॥**

व्याख्या—आत्मोपमया—आत्मोपमानेन परदुःखाकरणं भावसामेति गम्यते, इह चानुस्वारोऽलाक्षणिकः, एतदुक्तं भवति-आत्मनीव +परदुःखाकरणपरिणामो भावसाम, तथा 'रागद्वेषमाध्यस्थ्यम्' अनासेवनया रागद्वेषमध्यवर्तित्वं समं, सर्वत्राऽऽत्मनस्तुल्यरूपेण वर्तनमित्यर्थः, तथा ज्ञानादित्रयमेकत्र सम्यगिति गम्यते, तथाहि—ज्ञानदर्शनचारित्रयोजनं सम्यगेव, मोक्षप्रसाधकत्वादिति भावना, 'तस्य' इति सामादि सम्बध्यते, 'आत्मनि प्रोतनम्' आत्मनि प्रवेशनम् इकमुच्यते, अत एवाऽऽह‡—

---

+ देशीपदे *परदु खाकरण प० ‡ इत्यत एवाह—'भावसामाई' भावसामादीनि प्रतिपत्तव्यानीति प्र

'भावसामाई' भावसामादावेतान्युदाहरणानीति गाथार्थः ॥ १०३२ ॥ सामायिकशब्दयोजना चैवं द्रष्टव्या—इहाऽऽत्मन्येव साम्न इकं निरुक्तनिपातनात् [ यद् यल्लक्षणेनानुपपन्नं तत् सर्वं निपातनात् सिद्धमिति ] साम्नो नकारस्याऽऽय आदेशः, ततश्च सामायिकम्, एवं समशब्दस्याऽऽयादेशः, समस्य वा आयः समायः स एव सामायिकमिति, एवमन्यत्रापि भावना कार्येति कृतं प्रसङ्गेन ॥ साम्प्रतं सामायिकपर्यायशब्दान् प्रतिपादयन्नाह—

**समया सम्मत्त पसत्थ संति सुविहिअ सुहं अनिंदं च । अदुगुंछिअमगरिहिअं अणवज्जमिमेऽवि एगट्ठा॥१०३३**

व्याख्या—निगदसिद्धैव । आह—अस्य निरुक्तावेव 'सामाइयं समइय' मित्यादिना पर्यायशब्दाः प्रतिपादिता एव तत् पुनः किमर्थमभिधानमिति?, उच्यते, तत्र पर्यायशब्दमात्रता, इह तु वाक्यान्तरेणार्थनिरूपणमिति, एवं प्रतिशब्दमर्थभेदतोऽनन्ता गमा अनन्ताः पर्याया इति चैकस्य सूत्रस्येति ज्ञापितं भवति, अथवाऽसम्मोहार्थं तत्रोक्तावप्यभिधानमदुष्टमेव इत्यत एवोक्तम्—'इमेऽवि एगट्ठ'त्ति एतेऽपि तेऽपीत्यदोषः ॥ साम्प्रतं कण्ठतः स्वयमेव चालनां प्रतिपादयन्नाह ग्रन्थकारः—

**को कारओ ?, करंतो किं कम्मं ?, जं तु कीरई तेण । किं कारयकरणाण य अन्नमणन्नं च? अक्खेवो ॥ १०३४ ॥**

व्याख्या—इह 'करोमि भदन्त ! सामायिकम्' इत्यत्र कर्तृकर्मकरणव्यवस्था वक्तव्या, यथा करोमि राजन् ! घटमित्युक्ते कुलालः कर्ता घट एव कर्म दण्डादि करणमिति, एवमत्र कः कारकः कुलालसंस्थानीयः ? इत्यत आह—'करेंतो'त्ति तत् कुर्वन्नात्मैव, अथ किं कर्म घटादिसंस्थानीयम् ? इत्यत्राऽऽह—यत्तु 'क्रियते' निर्वर्त्यते 'तेन' कर्त्रा तच्च तद्गुणरूपं सामा-

यिकमेव, तुशब्दः करणप्रश्ननिर्वचनसङ्ग्रहार्थः, यथा कर्म निर्दिष्टमेवं किं करणमित्युद्देशादिचतुर्विधमिति निर्वचनम्, एवं व्यवस्थिते सत्याह–'किं कारगकरणाण य'त्ति किं कारककरणयोः ?, चशब्दात् कर्मणश्च परस्परतः कुलालघटदण्डादीनामिवान्यत्वम्, आहोस्विदनन्यत्वमेवेति ?, उभयथाऽपि दोषः, कथम् ?, अन्यत्वे सामायिकवतोऽपि तत्फलस्य मोक्षस्याभावः, तदन्यत्वाद्, मिथ्यादृष्टेरिव, अनन्यत्वे तु तस्योत्पत्तिविनाशाभ्यामात्मनोऽप्युत्पत्तिविनाशप्रसङ्ग इति, अनिष्टं चैतत्, तस्यानादिमत्त्वाभ्युपगमादित्याक्षेपश्चालनेति गाथार्थः ॥ १०३४ ॥ विजृम्भितं चात्र भाष्यकारेण–"अन्नत्ते ममभावाभावाओ तप्पओयणाभावो । पावइ मिच्छस्स व से सम्मामिच्छाऽविसेसो य ॥ १ ॥ अह व मई–भिन्नेणवि धणेण सधणोत्ति होइ ववएसो । सधणो य धणाभागी जह तह सामाइयस्सामी ॥ २ ॥ तं ण जओ जीवगुणो सामइयं तेण विफलता तस्स । अन्नत्तणओ जुत्ता परसामइयस्स वाऽफलता ॥ ३ ॥ जइ भिन्नं तब्भावेऽवि नो तओ तस्सभावरहिओत्ति । अण्णाणिच्चिय णिच्चं अंधो न समं पईवेणं ॥ ४ ॥ एगत्ते तन्नासे नासो जीवस्स संभवे भवणं । कारगसंकरदोसो तदेकयाकप्पणा वावि ॥ ५ ॥" इत्यादि, इत्थं चालनामभिधायाधुना प्रत्यवस्थानं प्रतिपादयन्नाह–

१ अन्यत्वे ममभावाभावात् तत्प्रयोजनाभावः । प्राप्नोति मिथ्यादृष्टेरिव तस्य सम्यक्त्वमिथ्यात्वाविशेषश्च ॥ १ ॥ अथ च मतिः–भिन्नेनापि धनेन सधन इति भवति व्यपदेशः । सधनश्च धनाभागी यथा तथा सामायिकस्वामी ॥ २ ॥ तन्न यतो जीवगुणः सामायिकं तेन विफलता तस्य । अन्यत्वात् युक्ता परसामायिकस्य वाऽ (स्पेवा) फलता ॥ ३ ॥ यदि भिन्नं तद्भावेऽपि न सक ( सामायिकयुक्त ) तत्स्वभावरहित इति । अज्ञान्येव नित्यं अन्धो यथा समं प्रदीपेन ॥ ४ ॥ एकत्वे तन्नाशे नाशो जीवस्य संभवे भवनम् । कारकसंकरदोषस्तदेकताकल्पना वापि ॥ ५ ॥

**आया हु कारओ मे सामाइय कम्म करणमाया य । परिणामे सइ आया सामाइयमेव उ पसिद्धी ॥१०३५॥**

व्याख्या–इहाऽऽत्मैव कारको मम, तस्य स्वातन्त्र्येण प्रवृत्तेः, तथा सामायिकं कर्म तद्गुणत्वात्, करणं चोद्देशादिलक्षणं तत्क्रियत्वादात्मैव, तथाऽपि यथोक्तदोषाणामसम्भव एव, कुत इत्याह–यस्मात् परिणामे सत्यात्मा सामायिकं, परिणमनं–परिणामः कथञ्चित् पूर्वरूपापरित्यागेनोत्तररूपापत्तिरिति. उक्तं च–"नार्थान्तरगमो यस्मात्, सर्वथैव न चाऽगमः । परिणामः प्रमासिद्ध, इष्टश्च खलु पण्डितैः ॥ १ ॥" इत्यादि, तस्मिन् परिणामे सति, अयमत्र भावार्थः–परिणामे सति तस्य नित्यानित्याद्यनेकरूपत्वाद् द्रव्यगुणपर्यायाणामपि भेदाभेदसिद्धेः, अन्यथा सकलसंव्यवहारोच्छेदप्रसङ्गाद्, एकान्तपक्षेणान्यत्वानन्यत्वयोरनभ्युपगमाद्, इत्थं चैकत्वानेकत्वपक्षयोः कर्तृकर्मकरणव्यवस्थासिद्धेः 'आत्मा' जीवः सामायिकमेव तु प्रसिद्धिः, तथाहि–न तदेकान्तेन अन्यत् †तद्गुणत्वान्न चानन्य(त्त)द्गुणत्वादेवेति, इत्थं चैतदङ्गीकर्तव्यम्, अन्यथा गुणगुणिनोरेकान्तभेदे विप्रकृष्टगुणमात्रोपलब्धौ प्रतिनियतगुणिविषय एव संशयो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषात्, दृश्यते च यदा कश्चिद्धरिततरुतरुणशाखाविसररन्ध्रोदरान्तरतः किमपि शुक्लं पश्यति तदा किमियं पताका किं वा बलाकेत्येवं प्रतिनियतगुणिविषय इति, अभेदपक्षे तु संशयानुत्पत्तिरेव, गुणग्रहणत एव तस्यापि गृहीतत्वादित्यलं विस्तरेणेति गाथार्थः ॥ १०३५ ॥ भाष्यकारदूषणानि त्वमूनि–"आया हु कारओ मे सामाइय कम्म करणमाआ य । तम्हा आया

१ आत्मैव कारको मे सामायिकं कर्म करणमात्मैव । तस्मादात्मैव * इहात्मनैव † तद्ग्रहणत्वा०

सामाइयं च परिणामओ एक्कं ॥ १ ॥ जं णाणाइसहावं सामाइय जोगमाइकरणं च । उभयं च स परिणामो परिणामाणण्णया जं च ॥२॥ तेणाया सामइयं करणं च चसद्दओ अभिण्णाइं । णणु भणियमणण्णत्ते तण्णासे जीवणासोत्ति ॥ ३ ॥ जइ तप्पज्जयनासो को दोसो होउ ? सव्वहा नत्थि । जं सो उप्पायव्वयधुवधम्माणंतपज्जाओ ॥४॥ सव्वं चिय पइसमयं उप्पज्जइ णासए य णिच्चं च । एवं चेव य सुहदुक्खबंधमोक्खाइसब्भावो ॥ ५ ॥ एगं चेव य वत्थुं परिणामवसेण कारगंतरयं । पावइ तेणादोसो विवक्खया कारगं जं च ॥ ६ ॥ कुंभोऽवि सज्जमाणो कत्ता कम्मं स एव करणं च । णाणाकारगभाव लहइ जहेगो विवक्खाए ॥ ७ ॥ जह वा नाणाणण्णो नाणी नियओवओगकालंमि । एगोऽवि तस्सभावो सामाइयकारगो चेवं ॥ ८ ॥" साम्प्रतं परिणामपक्षे सत्येकत्वानेकत्वपक्षयोरविरोधेन कर्तृकर्मकरणव्यवस्थामुपदर्शयन्नाह–

**एगत्ते जह मुट्ठिं करेइ अत्थंतरे घडाईणि । दव्वत्थंतरभावे गुणस्स किं केण संबद्धं ? ॥ १०३६ ॥**

व्याख्या–'एकत्वे' कर्तृकर्मकरणाभेदे कर्तृकर्मकरणभावो दृष्टः, यथा मुष्टिं करोति, अत्र देवदत्तः कर्ता तद्धस्त एव

१ सामायिकं च परिणामत ऐक्यम् ॥ १ ॥ यस्माज्ज्ञानादिस्वभावं सामायिकं योगादि ( कर्मादि ) करणं च । उभयं च स परिणामः परिणामानन्यता यच्च ॥ २ ॥ तेनात्मा सामायिकं करणं च चशब्दतोऽभिन्नानि । ननु भणितमनन्यत्वे तन्नाशे जीवनाश इति ॥ ३ ॥ यदि तत्पर्यायनाशः ( सामायिकरूपप० ) को दोषो भवतु ? सर्वथा नास्ति । यस्स ( आत्मा ) उत्पादव्ययध्रौव्यधर्माऽनन्तपर्यायः ॥ ४ ॥ सर्वमेव प्रतिसमयमुत्पद्यते नश्यति च नित्यं च । एवमेव च सुखदुःखबन्धमोक्षादिसद्भावः ॥ ५ ॥ एकमेव च वस्तु परिणामवशेन कारकान्तरताम् । प्राप्नोति तेनादोषः–विवक्षया कारकाणि यत् ॥ ६ ॥ कुम्भोऽपि सृज्यमानः कर्ता कर्म च स एव करणं च । नानाकारकभावं लभते यथैको विवक्षया ॥ ७ ॥ यथा वा ज्ञानानन्यो ज्ञानी निजोपयोगकाले । एकोऽपि तत्स्वभावः सामायिककारकश्चैवम् ॥ ८ ॥

कर्म तस्यैव च प्रयत्नविशेषः करणमिति, तथाऽर्थान्तरे—कर्तृकर्मकरणानां भेदे दृष्ट एव तद्भावः, तथा चाऽऽह—घटादीनि यथा करोतीति वर्तते, तत्रापि कुलालः कर्ता घटः कर्म दण्डादि करणमिति । इह च सामायिकं गुणो वर्तते, स च गुणिनः कथञ्चिदेव भिन्न इति । विपक्षे बाधामुपदर्शयति—द्रव्यात् सकाशाद्, गुणिन इत्यर्थः, एकान्तेनैवार्थान्तरभावे—भेदे सति, कस्य ?—गुणस्य, किं केन सम्बद्धमिति?, न किञ्चित् केनचित् सम्बद्धं, ज्ञानादीनामपि गुणत्वात्तेषामपि चाऽऽत्मादिगुणिभ्य एकान्तभिन्नत्वात्, संवेदनाभावतः सर्वव्यवस्थानुपपत्तेरिति भावना, एवमेकान्तेनानर्थान्तरभावेऽपि दोषा अभ्यूह्या इति गाथार्थः ॥ १०३६ ॥ कण्ठतस्तावदुक्ते चालनाप्रत्यवस्थाने, अत एव चात्र पुनरुक्तदोषोऽपि नास्ति, अनुवादद्वारेण चालनाप्रत्यवस्थानप्रवृत्तेरित्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, तत्र सर्वं सावद्यं योगमित्याद्यवशिष्यते, तदिह सर्वशब्दनिरूपणायाऽऽह—

**नामं १ ठवणा २ दविए ३ आएसे ४ निरवसेसए ५ चेव । तह सव्वधत्तसव्वं च ६ भावसव्वं च सत्तमयं ७॥**

व्याख्या—इह सर्वमिति कः शब्दार्थः?, उच्यते, 'सृ गतौ' इत्यस्य औणादिको वप्रत्ययः सर्वशब्दो वा निपात्यते स्रियते स इति श्रियते वाऽनेनेति सर्वः, तदिदं च नामसर्वं स्थापनासर्वं द्रव्यसर्वम् आदेशसर्वं निरवशेषसर्वं, तथा सर्वधत्तसर्वं च भावसर्वं च सप्तममिति समासार्थः ॥ १०३७ ॥ व्यासार्थं तु भाष्यकारः स्वयमेव वक्ष्यति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य शेषभेदव्याचिख्यासया पुनराह—

**दविए चउरो भंगा सव्व१मसव्वे अ २ दव्व १ देसे अ २ । आएस सव्वगामो नीसेसे सव्वगं दुविहं ॥१८५॥ (भा०)**

व्याख्या—'द्रव्य' इति द्रव्यसर्वे चत्वारो भङ्गा भवन्ति, तानेव सूचयन्नाह—'सव्वमसव्वे अ दव्व देसे य'त्ति—अयमत्र भावार्थः—इह यद्विवक्षितं द्रव्यमङ्गुल्यादि तत् कृत्स्नं—परिपूर्णम् अनूनं स्वैरवयवैः सर्वमुच्यते, सकलमित्यर्थः, एवं तस्यैव द्रव्यस्य कश्चित्स्वावयवो देशः कृत्स्नतया—स्वावयवपरिपूर्णतया यदा सकलो विवक्ष्यते तदा देशोऽपि सर्वः, एवमुभयस्मिन् द्रव्ये तद्देशे च सर्वत्वं, तयोरेव यथास्वमपरिपूर्णतायामसर्वत्वं, ततश्चतुर्भङ्गी—द्रव्यं सर्वं देशोऽपि सर्वः १ द्रव्यं सर्वं देशोऽसर्वः २ देशः सर्वः द्रव्यमसर्वं ३ देशोऽसर्वः द्रव्यमप्यसर्वम् ४, अत्र यथाक्रममुदाहरणं—सम्पूर्णमङ्गुलि द्रव्यसर्वं तदेव देशोनं द्रव्यमसर्वं, तथा देशः- पर्व तत्सम्पूर्णं देशसर्वम् पर्वैकदेशः देशासर्वम्, एवं द्रव्यसर्वम् । अथाऽऽदेशसर्वमुच्यते—आदेशनम् आदेश उपचारो व्यवहारः, स च बहुतरे प्रधाने वाऽऽदिश्यते देशेऽपि, यथा विवक्षितं घृतमभिसमीक्ष्य बहुतरे भुक्ते स्तोके च शेषे उपचारः क्रियते—सर्वं घृतं भुक्तं भक्तं वा, प्रधानेऽप्युपचारः, यथा ग्रामप्रधानेषु पुरुषेषु गतेषु ग्रामो गत इति व्यपदिश्यते, तत्र प्रधानपक्षमेवाधिकृत्याऽऽह ग्रन्थकारः—'आएस सव्वगामो'त्ति आदेशसर्वं सर्वो ग्रामो गत इत्यायात इति वेति क्रियाभावनोक्तैव । एवमादेशसर्वमुक्तम्, अथ निरवशेषसर्वमभिधीयते, तत्राऽऽह—'निस्सेसे सव्वगं दुविहं'ति निरवशेषसर्वं 'द्विविधं' द्विप्रकारं ( ग्रन्थाग्रम्० १२००० ) सर्वापरिशेषसर्वं तद्देशापरिशेषसर्वं चेति गाथार्थः ॥ १८५ ॥ अत्रोदाहरणमाह, तत्र—

**अणिमिसिणो सव्वसुरा सव्वापरिसेससव्वगं एअं १ । तद्देसापरिसेसं सव्वे काला जहा असुरा २॥१८६॥ (भा०)**

व्याख्या—'अनिमेषिणः सर्वसुराः' अनिमिषनयनाः सर्वे देवा इत्यर्थः, सर्वापरिशेषसर्वमेतत्, यस्मान्न कश्चिद्देवानां मध्येऽनिमिषत्वं व्यभिचरतीति, तथा तद्देशापरिशेषमिति—तद्देशपरिशेषसर्वं सर्वे काला यथा असुरा इति, इयमत्र भावना-तेषामेव देवानां देश एको निकायः असुराः, ते च सर्व एवासितवर्णा इति गाथार्थः ॥१८६॥ सर्वधत्तसर्वप्रतिपादनायाऽऽह—

**सा हवइ सव्वधत्ता दुपडोआरा जिआ य अजिआ य । दव्वे सव्वघडाई सव्वद्धत्ता पुणो कसिणं॥१८७॥ (भा०)**

व्याख्या—सा भवति 'सव्वधत्ता' इत्यत्र सर्व—जीवाजीवाख्यं वस्तु धत्तं—निहितमस्यां विवक्षायामिति सर्वधत्ता, ननु दधातेर्हि' ( पा०७-४-४२ ) ति हिशब्दादेशाद्धितमिति भवितव्यं कथं धत्तमिति ?, उच्यते, प्राकृते देशीपदस्याविरुद्धत्वान्न दोषः, अथवा धत्त इति डित्थवदव्युत्पन्न एव यदृच्छाशब्दः, अथवा सर्वं दधातीति सर्वधं—निरवशेषवचनं सर्वधमात्तं—आगृहीतं यस्यां विवक्षायां सा सर्वधात्ता, एवमपि निष्ठान्तस्य पूर्वनिपातः, 'जातिकालसुखादिभ्यः परवचन-( पा०६-२-१७० ) मिति परनिपात एव, अथवा सर्वधेन आत्ता सर्वधात्ता तया यत् सर्वं तत् सर्वधात्तासर्वमिति, सा च भवति सर्वधात्ता 'दुपडोयार'त्ति द्विप्रकारा—जीवाश्चाजीवाश्च, यस्मात् यत् किञ्चनेह लोकेऽस्ति तत् सर्वं जीवाश्चाजीवाश्च, न ह्येतद्व्यतिरिक्तमन्यदस्ति, अत्राऽऽह—द्रव्यसर्वस्य सर्वधत्तासर्वस्य च को विशेष इति?, अयमभिप्रायः—द्रव्यसर्वमपि विवक्षयाऽशेषद्रव्यविषयमेव, अत्रोच्यते, 'दव्वे सव्वघडाई' इह द्रव्यसर्वे सर्वे घटादयो गृह्यन्ते, आदिशब्दादङ्गुल्यादिपरिग्रहः, सर्वधत्ता पुनः कृत्स्नं वस्तु व्याप्य व्यवस्थितेति विशेष इत्ययं गाथार्थः ॥ १८७ ॥ अधुना भावसर्वमुच्यते—

**भावे सव्वोदइओदयलक्खणओ जहेव तह सेसा । इत्थ उ खओवसमिए अहिगारोऽसेससव्वे आ॥१८८॥ (भा०)**

व्याख्या—'भाव' इति द्वारपरामर्शः, सर्वो द्विप्रकारोऽपि शुभाशुभभेदेन औदयिकः—उदयलक्षणः कर्मोदयनिष्पन्न इत्यर्थः यथैवायमुक्तस्तथा शेषा अपि स्वलक्षणतो वाच्या इति वाक्यशेषः, तत्र मोहनीयकर्मोपशमस्वभावतः शुभः सर्व

एवौपशमिकः, कर्मणां क्षयादेव शुभः सर्वः क्षायिकः, शुभाशुभश्च मिश्रः सर्वः क्षायोपशमिकः, परिणतिस्वभावः सर्वः शुभाशुभश्च पारिणामिकः एवं व्युत्पत्त्यर्थप्ररूपणां कृत्वा प्रकृतयोजनामुपदर्शयन्नाह—'एत्थ उ'इत्यादि, अत्र तु 'क्षायोपशमिक' इति क्षायोपशमिकभावसर्वेण अधिकारः, अवतार उपयोग इत्यर्थः, 'अशेषसर्वेण च' निरवशेषसर्वेण चेति गाथार्थः ॥ १८८ ॥ व्याख्यातः सौत्रः सर्वावयवः, साम्प्रतं सावद्यावयवव्याचिख्यासयाऽऽह—

कम्ममवज्जं जं गरिहिअंति कोहाइणो व चत्तारि। सह तेण जो उ जोगो पच्चक्खाणं हवइ तस्स ॥ १०३८ ॥

व्याख्या—'कर्म' अनुष्ठानमवद्यं भण्यते, किमविशेषेण ?, नेत्याह—'यद् गर्हितम्' इति यन्निन्द्यमित्यर्थः, क्रोधादयो वा चत्वारः, अवद्यमिति वर्तते, सर्वावद्यहेतुत्वात् तेषां कारणे कार्योपचारात्, सह तेन–अवद्येन 'यस्तु योगः' य एव व्यापारः असौ सावद्य इत्युच्यते, 'प्रत्याख्यानं' निषेधलक्षणं भवति 'तस्य' सावद्ययोगस्य, पाठान्तरं वा—'कम्मं वज्जं जं गरहियं'ति इह तु 'वृजी वर्जने' इत्यस्य वर्जनीयं वर्ज्यं त्यजनीयमित्यर्थः, शेषं पूर्ववत्, नवरं सह वर्ज्येन सवर्ज्यः प्राकृते सकारस्य दीर्घादेशात् सावज्जमिति गाथार्थः॥१०३८॥ अधुना योगोऽभिधीयते, स च द्विधा—द्रव्ययोगो भावयोगश्च, तथा चाऽऽह—

दव्वे मणवयकाए जोगा दव्वा दुहा उ भावंमि। जोगा सम्मत्ताई पसत्थ इअरो उ विवरीओ ॥ १०३९ ॥

व्याख्या—'द्रव्य' इति द्वारपरामर्शः, 'मणवइकाए जोगा दव्वे'ति मनोवाक्काययोग्यानि द्रव्याणि द्रव्ययोगः, एतदुक्तं भवति—जीवेनागृहीतानि गृहीतानि वा स्वव्यापाराप्रवृत्तानि द्रव्ययोग इति, द्रव्याणां वा हरीतक्यादीनां योगो द्रव्ययोगः, 'दुहा उ भावंमि'त्ति द्विधैव द्विप्रकार एव, 'भाव' इति भावविषयः 'जोगो'त्ति योगोऽधिकृतः–प्रशस्तोऽप्रशस्तश्च, तत्र 'सम्मत्ताई पसत्थ'त्ति सम्यक्त्वादीनाम्, आदिशब्दाद् ज्ञानचरणपरिग्रहः, प्रशस्तः युज्यतेऽनेन करणभूतेनाऽऽत्माऽपवर्गेणेतिकृत्वा, 'इयरो उ विवरीओ'त्ति इतरस्तु मिथ्यात्वादियोगः, 'विपरीत' इत्यप्रशस्तो वर्तते, युज्यतेऽनेनाऽऽत्माऽष्टविधेन कर्मणेतिकृत्वाऽयं गाथार्थः ॥ १०३९ ॥ सावद्यं योगमिति व्याख्यातौ सूत्रावयवाविति, अधुना प्रत्याख्यामीत्यवयवप्रस्तावात् प्रत्याख्यानं निरूप्यते, इह प्रत्याख्यामीति वा प्रत्याचक्षे इति वा उत्तमपुरुषैकवचने द्विधा शब्दौ, तत्राऽऽद्यः प्रत्याख्यामीति, प्रतिशब्दः प्रतिषेधे आङ् आभिमुख्ये ख्या प्रकथने, प्रतीपं आभिमुख्येन ख्यापनं सावद्ययोगस्य करोमि प्रत्याख्यामीति, अथवा 'चक्षिङ् व्यक्तायां वाचि' प्रतिषेधस्याऽऽदरेणाभिधानं करोमि प्रत्याचक्षे, प्रतिषेधस्याख्यानं प्रत्याख्यानं निवृत्तिरित्यर्थः, इदं च षट्प्रकारं नामस्थापनाद्रव्यक्षेत्रातीच्छाभावभेदभिन्नमिति, *तत्र च नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यप्रत्याख्यानादि प्रतिपादयन्नाह—

दव्वंमि निण्हगाई ३ निव्विसयाई अ होइ खित्तंमि ४। भिक्खाईणमदाणे अइच्छ ५ भावे पुणो दुविहं ६॥१०४०॥

व्याख्या—द्रव्यमिति द्वारपरामर्शः, 'निण्हगाइ'त्ति निह्नवादिप्रत्याख्यानम्, आदिशब्दाद् द्रव्ययोर्द्रव्याणां द्रव्यभूतस्य द्रव्यहेतोर्वा यत् प्रत्याख्यानं तद् द्रव्यप्रत्याख्यानमिति, 'निव्विसयाई य होइ खित्तंमि'त्ति निर्विषयादि च भवति क्षेत्र इति, तत्र निर्विषयस्याऽऽदिष्टस्य क्षेत्रप्रत्याख्यानम्, आदिशब्दान्नगरादिप्रतिषिद्धपरिग्रहः, 'भिक्षादीनामदानेऽति[ग]च्छे'ति भिक्षणं–भिक्षा प्राभृतिकोच्यते, आदिशब्दाद् वस्त्रादिपरिग्रहः, तेषामदाने सत्यतिगच्छेति वचनमतीच्छेति वेति

* तथा चाह–नाम ठवणा दविए खित्तमदिच्छा य भावओ त च। नामामिहाणमुत्त ठवणागारकुलनिक्खेवो ॥ १ ॥ इति गाथा क्वचित् ॥ ०दिच्छेति वा अतिगच्छप्रत्या०

प्रत्याख्यानं, 'भावे पुणो दुविहं'ति भाव इति द्वारपरामर्शः, भावप्रत्याख्यानं पुनर्द्विविधं, तत्र भावप्रत्याख्यानमिति भावस्य–सावद्ययोगस्य प्रत्याख्यानं भावतो वा–शुभात् परिणामोत्पादाद् भावहेतोर्वा–निर्वाणार्थं वा भाव एव वा–सावद्ययोगविरतिलक्षणः प्रत्याख्यानं भावप्रत्याख्यानमिति गाथार्थः ॥ १०४० ॥ साम्प्रतं द्वैविध्यमेवोपदर्शयन्नाह—

सुअ णोसुअ सुअ दुविहं पुव्व १ मपुव्वं २ तु होइ नायव्वं। नोसुअपच्चक्खाणं मूले १ तह उत्तरगुणे अ २ ॥१०४१॥

व्याख्या—'सुयणोसुय'त्ति श्रुतप्रत्याख्यानं नोश्रुतप्रत्याख्यानं च, 'सुयं दुविहं'ति श्रुतप्रत्याख्यानं द्विविधं, द्वैविध्यमेव दर्शयति–'पुव्वमपुव्वं तु होइ णायव्वं'ति पूर्वश्रुतप्रत्याख्यानमपूर्वश्रुतप्रत्याख्यानं च भवति ज्ञातव्यमिति, तत्र पूर्वश्रुतप्रत्याख्यानं प्रत्याख्यानसंज्ञितं पूर्वमेव, अपूर्वश्रुतप्रत्याख्यानं त्वातुरप्रत्याख्यानादिकमिति, तथा 'नोसुयपच्चक्खाणं'ति नोश्रुतप्रत्याख्यानं श्रुतप्रत्याख्यानादन्यदित्यर्थः, 'मूले तह उत्तरगुणे य'त्ति मूलगुणप्रत्याख्यानमुत्तरगुणप्रत्याख्यानं च, तत्र मूलगुणप्रत्याख्यानं देशसर्वभेदं, देशतः श्रावकाणां सर्वतस्तु संयतानामिति, इहाधिकृतं सर्वं, सामायिकानन्तरं सर्वशब्दोपादानादिति गाथार्थः॥१०४१॥ इह च वृद्धसम्प्रदायः 'पच्चक्खाणे उदाहरणं रायधूयाए–वरिसं मंसं न खाइयं, पारणए अणेगाणं जीवाणं घाओ कओ, साहूहिं संबोहिया, पव्वइया, पुव्वं दवपच्चक्खाणं पच्छा भावपच्चक्खाणं जातमिति कृतं प्रसङ्गेन। प्रत्याख्यामीति व्याख्यातः सूत्रावयवः, अधुना यावज्जीवतयेति व्याख्यायते—इह चाऽऽदौ भावार्थमेवाभिधित्सुराह—

१ प्रत्याख्याने उदाहरण राजदुहितु –वर्षं मांसं न खादितं, पारणकेऽनेकेषां जीवानां घात कृत, साधुभि संबोधिता, प्रव्रजिता, पूर्वं द्रव्यप्रत्या-

जावदवधारणंमि जीवणमवि पाणधारणे भणिअं। आपाणधारणाओ पावनिवित्ती इहं अत्थो ॥ १०४२ ॥

व्याख्या—यावद् इत्ययं शब्दोऽवधारणे वर्तते, जीवनमपि प्राणधारणे भणितं, 'जीव प्राणधारण' इति वचनात्, ततश्चाप्राणधारणात्—प्राणधारणं यावत् पापनिवृत्तिरित्यर्थः, परतस्तु न विधिर्नापि प्रतिषेधो, विधावाशंसादोषप्रसङ्गात् प्रतिषेधे तु सुरादिषूत्पन्नस्य भङ्गप्रसङ्गादिति गाथार्थः ॥१०४२॥ इह च जीवनं जीव इति क्रियाशब्दोऽयं, न जीवतीति जीव आत्मपदार्थः, जीवनं तु प्राणधारणं, जीवनं जीवितं चेत्येकोऽर्थः, तत्र जीवितं दशधा वर्तते, तदेव तावदादौ निरूपयन्नाह—

नामं १ ठवणा २ दविए ३ ओहे ४ भव ५ तब्भवे अ ६ भोगे अ ७।
संजम ८ जस ९ कित्तीजीविअं च १० तं भण्णई दसहा ॥ १०४३ ॥

व्याख्या—नामजीवितं स्थापनाजीवितं द्रव्यजीवितम् ओघजीवितं भवजीवितं तद्भवजीवितं भोगजीवितं च तथा संयमजीवितं यशोजीवितं कीर्तिजीवितं च तद्भण्यते दशधेति गाथासमासार्थः ॥ १०४३ ॥ अवयवार्थं तु भाष्यकारः स्वयमेव वक्ष्यति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य शेषभेदव्याचिख्यासयाऽऽह—

दव्वे सचित्ताई ३ आउअसद्दव्वया भवे ओहे ४। नेरइयाईण भवे ५ तब्भव तत्थेव उववत्ती ६ ॥ १८९॥ (भा०)

व्याख्या—'द्रव्य' इति द्वारपरामर्शः, द्रव्यजीवितं सचित्तादि, आदिशब्दान्मिश्राचित्तपरिग्रहः, इह च कारणे कार्योपचाराद् येन द्रव्येण सचित्तचित्तमिश्रभेदेन पुत्रहिरण्योभयरूपेण यस्य यथा जीवितमायत्तं तस्य तथा तद्द्रव्यजीवितमिति, *द्विपदादिद्रव्यस्य चान्ये, उक्तं द्रव्यजीवितं, 'आउयसद्दवया भवे ओहे'त्ति आयुरिति प्रदेशकर्म तद्द्रव्यसहचरितं जीवस्य प्राणधारणं सदैव संसारे भवेदोघ इति द्वारपरामर्शः ओघजीवितं, सामान्यजीवितमित्यर्थः, इदं चाङ्गीकृत्य यदि परं सिद्धा मृताः, न पुनरन्ये कदाचन इत्युक्तमोघजीवितं, 'णेरइयाईण भवे'त्ति नारकादीनामिति, आदिशब्दात् तिर्यङ्नरामरपरिग्रहः, भव इति द्वारपरामर्शः, स्वभवे स्थितिर्भवजीवितमिति, उक्तं भवजीवितं, 'तब्भव तत्थेव उववत्ति'त्ति तस्मिन् भवे जीवितम् तद्भवजीवितं, इदं चौदारिकशरीरिणामेव भवति, यत आह—तत्रैवोपपत्तिः, तत्रैवोपपात इत्यर्थः, भवश्च तदायुष्कबन्धस्य प्रथमसमयादारभ्य यावच्चरमसमयानुभवः, स चौदारिकशरीरिणां तिर्यङ्मनुष्याणां,तद्भवोपपत्तिमागतानां तद्भवजीवितं भवति, ननु च भवजीवितमनन्तरं चतुर्द्धा वर्णितं नारकादिगतिसमापन्नानां याऽवस्था, तत्र स्वायुष्कबन्धकालात् प्रभृति सर्वैव भवस्थितिः यथास्वमबाधासहिता भवजीवितम्, इह तु तद्भवजीविते आबाधोनिका कर्मस्थितिः, तद्भवोदयात् प्रभृति कर्मनिषेकः तद्भवजीवितमिति महान् विशेषः, तत् किमर्थमौदारिकाणामेव?, उच्यते!, तेषां हि गर्भकालव्यवहितं योनिनिःसरणं जन्मोच्यते, तेन च गर्भकालेन सहैव तद्भवजीवितं, वैक्रियशरीरिणां तूपपातादेव कालान्तराव्यवहितं जन्मेति जीवितं स्वाबाधाकालसहितमितिकृत्वा तद्भवजीवितमौदारिकाणामेव सुप्रतिपादमिति, तेषां चेदं स्वकायस्थित्यनुसारतो विज्ञेयमिति गाथार्थः ॥ १८९ ॥ उक्तं तद्भवजीवितं,

भोगंमि चक्किमाई ७ संजमजीअं तु संजयजणस्स ८। जस ९ कित्ती अ भगवओ १० संजमनरजीव अहिगारो १०४४

व्याख्या—भोगंमित्ति द्वारपरामर्शः, भोगजीवितं च चक्रवर्त्यादीनाम्, आदिशब्दाद्बलदेववासुदेवादिपरिग्रहः, उक्तं च

* पारदारिद्रव्यावस्थेत्यन्ये

भोगजीवितं, 'संजमजीयं तु संजयजणस्स'त्ति संयमजीवितं तु 'संयतजनस्य' साधुलोकस्य, उक्तं संयमजीवितं, 'जयकित्ती य भगवओ'त्ति यशोजीवितं भगवतो महावीरस्य, कीर्तिजीवितमपि तस्यैव, अयं चानयोर्विशेषः—दानपुण्यफला कीर्त्तिः, पराक्रमकृतं यशः' इति, अन्येत्विदमेकमेवाभिदधति, असंयमजीवितं चाविरतिगतं संयमप्रतिपक्षतो गृह्णन्तीति, 'संजमनरजीव अहिगारो'त्ति—संयमनरजीवितेनेहाधिकार इति गाथार्थः ॥ १०४४ ॥ यावज्जीवता चेह 'जीव प्राणधारण' इत्यस्याव्ययीभावे समासे 'यावदवधारण' ( पा० २-१-८ ) इत्यनेन निर्वृत्ते भावप्रत्यय उत्पादिते यावजीवं भावः षष्ठ्या अव्ययादाप्सुपः ( पा० २-४-८२ ) इति सुपलुक्, तस्य 'भावस्त्वतला' ( पा० ५-१-११९ ) विति तलि स्त्रीलिङ्गता यावज्जीवता तया यावज्जीवतया, तत्रालाक्षणिकवर्णलोपात् 'जावज्जीवाए' इति सिद्धम्, अथवा प्रत्याख्यानक्रिया अन्यपदार्थ इति तामभिसमीक्ष्य समासो बहुव्रीहिः, यावज्जीवो यस्यां सा यावज्जीवा तयेत्यलं प्रसङ्गेन, तिस्रो विधा यस्य योगस्य स त्रिविधः सावद्ययोगः, स च प्रत्याख्येय इति कर्म संपद्यते, कर्मणि च द्वितीया विभक्तिः, तं त्रिविधं योगं, त्रिविधेनैव करणेन, करणे तृतीयेति, मनसा वाचा कायेन चेति, अत्र मनःप्रभृतीनां पूर्वं स्वरूपं दर्शितमेवेति न प्रतन्यते, नवरं भावार्थ उच्यते—तत्र 'त्रिविधं त्रिविधेन'त्यत्रानन्तरस्य करणस्य विवरणसूत्रमेवेदं, यदुत—मनसा वाचा कायेनेति, तस्य च करणस्य कर्म प्रत्याख्येयो योगस्तमपि सूत्र एव विवृणोति—न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि—नानुमन्येऽहमिति। अत्राऽऽह—किं पुनः कारणमुद्देशकममतिलङ्घ्य व्यत्यासेन निर्देशः कृत इति?, अत्रोच्यते, योगस्य करणतन्त्रो(न्त्रतो)पदेशनार्थं, तथाहि—योगः करणवश एव, करणानां भावे योगस्यापि भावादभावे चाभावादिति. करणाना-

मेव तथा क्रियारूपेण परिणतेरित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति, अपरस्त्वाह—न करोमि न कारयामि कुर्वन्तं न समनुजानामीत्येतावता ग्रन्थेन गतेऽन्यमपीत्यतिरिच्यते, तथा चातिरिक्तेन सूत्रेण नार्थः, उच्यते, साभिप्रायकमिदम्, अनुक्तस्याप्यर्थस्य सङ्ग्रहार्थं, यस्मात् सम्भावनेऽपिशब्दोऽयं, सोऽयमपिशब्दः उभयशब्दमध्यस्थ एतत् करोति—यथा कुर्वन्तं नानुजानामि एवं कारयन्तमप्यनुज्ञापयन्तमप्यन्यं नानुजानामि, तथा यथा वर्त्तमानकाले कुर्वन्तमन्यं न समनुजानामीति एवमपिशब्दादतीतकाले कृतवन्तमपि कारितवन्तमपि तथाऽनागतेऽपि काले करिष्यन्तमपि कारयिष्यन्तमपीति त्रिकालोपसङ्ग्रहो वेदितव्य इति, न क्रियाक्रियावतोर्भेद एव अतो न केवला क्रिया सम्भवतीति ख्यापनार्थमन्यग्रहणम्, अत्रापि बहु वक्तव्यं तत्तु नोच्यते मा भूत् मुग्धमतिविनेयसम्मोह इति, किञ्चित्तु सूत्रस्पर्शनिर्युक्तौ वक्ष्याम इति । एवं तावदिदमेतावत् सूत्रस्य व्याख्यातम् ॥ इह च सर्वं सावद्यं योगं प्रत्याख्यामीत्यत्र प्रत्याख्यानं गृहस्थान् साधूंश्चाधिकृत्य भेदपरिणामतो निरूपयन्नाह—

**सीआलं भंगसयं तिविहं तिविहेण समिइगुत्तीहिं । सुत्तप्फासिअनिज्जुत्तिवित्थरत्थो गओ एवं ॥ १०४५ ॥**

व्याख्या—गुरवस्तु व्याचक्षते—तदिदमेतावत् सूत्रस्य व्याख्यातं, साम्प्रतं त्रिविधं त्रिविधेनेत्येतदेव किल व्याचष्टे, तत्र त्रिविधं सावद्यं योगं प्रत्याख्येयं कृतकारितानुमतिभेदभिन्नं त्रिविधेन मनसा वाचा कायेनेति करणेन प्रत्याख्याति यतः अतस्तद्भेदोपदर्शनायैवाऽऽह—सिआलं भंगसयं गाहा ॥ अत्राऽऽह—यद्येवमिह सर्वसावद्ययोगप्रत्याख्यानाधिकारात् सप्तचत्वारिंशदधिकशतं प्रत्याख्यानभेदानां गृहस्थप्रत्याख्यानभेदत्वादयुक्तमेतदिति, अत्रोच्यते, न, प्रत्याख्यानसामान्यतो गृहस्थप्रत्याख्यानभेदाभिधानेऽप्यदोषत्वादित्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, तत्र 'सीयालं भंगसयं'ति—एतद्भाव्यते, 'सीयालं भंगसयं गिहिपच्चक्खाणभेयपरिमाणं । तं च विहिणा इमेणं भावेयव्वं पयत्तेणं ॥ १ ॥ तिन्नि तिया तिन्नि दुगा तिन्निक्किक्का य होंति योगेसुं । तिदुएक्कं तिदुएक्कं तिदुएक्कं चेव करणाइं ॥ २ ॥ पढमे लब्भइ एगो सेसेसु पएसु तिय तिय तियं च । दो नव तिय दो नवगा तिगुणिय सीयालभंगसयं ॥ ३ ॥' का पुनरत्र भावना ?, उच्यते—ण करेइ ण कारवेइ करेंतमपि अण्णं ण समणुजाणइ मणेणं वायाए काएणं एस एक्को भेओ १ । चो०—न करेईच्चाइतिगं गिहिणो कह होइ देसविरअस्स ? । आ०—भन्नइ विसयस्स बहिं पडिसेहो अणुमईएवि ॥४॥ केई भणंति गिहिणो तिविहंतिविहेण नत्थि संवरणं । तं ण जओ णिद्दिट्ठं पन्नत्तीए विसेसेउं ॥ ५ ॥ तो कह निज्जुत्तीएऽणुमइणिसेहोत्ति ? सो सविसयंमि । सामण्णेणं नत्थि उ तिविहं तिविहेण को दोसो ? ॥६॥ पुत्ताईसंतइणिमित्तमित्तमेक्कारसिं पवण्णस्स । जंपंति केइ गिहिणो दिक्खाभिमुहस्स तिविहंपि ॥७॥

---

१ सप्तचत्वारिंशं शतं भङ्गानां गृहिप्रत्याख्यानभेदपरिमाणम् । तच्च विधिनैतेन भावयितव्यं प्रयत्नेन ॥ १ ॥ त्रयस्त्रिकास्त्रयो द्विकास्त्रय एककाश्च भवन्ति योगेषु । त्रयो द्वावेकस्त्रयो द्वावेकस्त्रयो द्वावेकश्चैव करणानि ॥२॥ प्रथमे लभ्यते एक शेषेषु पदेषु त्रिकं त्रिकं त्रिक च । द्वौ नवकौ त्रिकं द्वौ नवकौ त्रिगुणिते सप्तचत्वारिंश भङ्गशतम् ॥ ३ ॥ न करोति न कारयति कुर्वन्तमप्यन्य न समनुजानाति मनसा वाचया कायेनैष एको भेद. । चोदक –न करोतीत्यादित्रिकं गृहिण कथ भवति देशविरतस्य? । आचार्य आह–भण्यते विषयाद्बहि प्रतिषेधोऽनुमतेरपि ॥ ४ ॥ केचिद् भणन्ति गृहिणस्त्रिविधंत्रिविधेन नास्ति संवरणम् । तन्न यतो निर्दिष्टं प्रज्ञप्तौ विशिष्य ॥ ५ ॥ तत्कथ निर्युक्तौ अनुमतिनिषेध इति?, स स्वविषये । सामान्येन नास्त्येव त्रिविधत्रिविधेन को दोष ?॥ ६ ॥ पुत्रादिसंततिनिमित्तमात्रेणैकादशीं प्रपन्नस्य । जल्पन्ति केचिद्गृहिणो दीक्षाभिमुखस्य त्रिविधमपि ॥ ७ ॥

---

ऑह कहं पुण मणसा करणं कारावणं अणुमई य । जह वयतणुजोगेहिं करणाई तह भवे मणसा ॥ ८ ॥ तदहीणत्ता वइतणुकरणाईणं अहव मणकरणं । सावज्जजोगमणणं पन्नत्तं वीयरागेहिं ॥ ९ ॥ कारवणं पुण मणसा चिंतेइ य करेउ एस सावज्जं । चिंतेई य कए पुण सुट्ठु कयं अणुमई होइ ॥ १० ॥ एस एक्को भेओ गओ ॥ इयाणिं बितिओ भेओ–ण करेइ ण कारवेइ करेंतंपि अण्णं ण समणुजाणइ मणेण वायाए एस एक्को १, तहा मणेणं काएण य बितिओ २, तहा वायाए काएण य ततिओ ३, एस बितिओ मूलभेओ गओ ॥ इयाणिं तइओ–ण करेइ न कारवेइ करेंतंपि अण्णं ण समणुजाणइ मणेण एक्को १ वायाए बितिओ २ काएण ततिओ ३ एस तइओ मूलभेओ गओ । इयाणिं चउत्थो–ण करेइ ण कारवेइ मणेण वायाए काएणं एक्को १ ण करेइ करेंतंपि णाणुजाणइ बितीओ २ ण कारवेइ करेंतं णाणुजाणइ ३ तइओ एस चउत्थो मूलभेओ, इयाणिं पंचमो–ण करेइ ण कारवेइ मणेणं वायाए एस एक्को १ ण करेइ करेंतं

---

१ आह–कथं पुनर्मनसा करण कारणमनुमतिश्च । यथा वाक्तनुयोगाभ्यां करणादयस्तथा भवेयुर्मनसा ॥ ८ ॥ तदधीनत्वात् वाक्तनुकरणादीनामथवा मन.करणं । सावद्ययोगमनन प्रज्ञप्तं वीतरागै ॥ ९ ॥ कारण पुनर्मनसा चिन्तयति च करोत्वेष सावद्यम् । चिन्तयति च कृते पुन सुष्ठु कृतमनुमतिर्भवति ॥ १० ॥ एष एको भेदो गत १ । इदानीं द्वितीयो भेद –न करोति न कारयति कुर्वन्तमप्यन्य न समनुजानाति मनसा वाचा एष एक १ तथा मनसा कायेन च द्वितीय २ तथा वाचा कायेन च तृतीय' ३ एष द्वितीयो मूलभेदो गत. २ । इदानीं तृतीय –न करोति न कारयति कुर्वन्तमपि अन्य न समनुजानाति मनसैक १ वाचा द्वितीय २ कायेन तृतीय ३ एष तृतीयो मूलभेदो गत ३ । इदानीं चतुर्थो–न करोति न कारयति मनसा वाचा कायेनैक १ न करोति कुर्वन्तमपि नानुजानाति द्वितीयो २ न कारयति कुर्वन्त नानुजानाति तृतीय ३ एष चतुर्थो मूलभेद ४ । इदानीं पञ्चम –न करोति न कारयति. मनसा वाचा एष एकः १ न करोति कुर्वन्त

णाणुजाणइ एस बितिओ २ ण कारवेति णाणुजाणइ एस तइओ ३ एए तिन्नि भंगा मणेण वायाए लद्धा, अन्नेऽवि तिन्नि, मणेणं काएण य एमेव लब्भंति ३, तहाऽवरेवि वायाए काएण य लब्भंति तिन्नि तिन्नि ३, एवमेव एए सव्वे णव, एवं पञ्चमोऽप्युक्तो मूलभेद इति। इयाणिं छट्ठो—ण करेइ ण कारवेइ मणेणं एस एक्को, तह य ण करेइ करेंतं णाणुजाणइ मणेणं एस बितिओ, ण कारवेइ करेंतं णाणुजाणइ मणसैव तृतीयः, एवं वायाए काएणवि तिन्नि तिण्णि भंगा लब्भंति, उक्तः षष्ठोऽपि मूलभेदः, अधुना सप्तमोऽभिधीयते इति—ण करेइ मणेणं वायाए काएण य एक्को, एवं ण कारवेइ मणादीहिं एस बितिओ, करेंतं णाणुजाणइत्ति तइओ, सप्तमोऽप्युक्तो मूलभेद इति। इदानीमष्टमः—ण करेइ मणेणं वायाए एक्को तहा मणेण काएण य एस बितिओ, तहा वायाए काएण य एस तइओ, एवं ण कारवेइ एत्थवि तिन्नि भंगा एवमेव लब्भंति, करेंतं णाणुजाणइ एत्थ वि तिण्णि, एष उक्तोऽष्टमः। इदानीं नवमः—न करेइ मणेण एक्को १ ण कारवेइ बितिओ २ करेंतं णाणुजाणइ एस तइओ, एवं वायाए

१ नानुजानाति एष द्वितीय २ न कारयति नानुजानाति एष तृतीयः ३ एते त्रयो, भङ्गा मनसा वाचा लब्धा अन्येऽपि त्रयो, मनसा कायेन चैवमेव लभ्यन्ते ३तथाऽपरेऽपि वाचा कायेन च लभ्यन्ते त्रय. २, ३, एवमेते सर्वे नव, एव पञ्चमोऽप्युक्तो मूलभेद ५ इति। इदानीं षष्ठो—न करोति न कारयति मनसा एष एक, तथैव न करोति कुर्वन्त नानुजानाति मनसा एष द्वितीय, न कारयति कुर्वन्त नानुजानाति मनसैव तृतीय, एव वाचा कायेनापि त्रयस्त्रयो भङ्गा लभ्यन्ते ६। न करोति मनसा वाचा कायेन चैकः, एव न कारयति मनआदिभिरेष द्वितीय., कुर्वन्त नानुजानातीति तृतीय ७। न करोति मनसा वाचा एक तथा मनसा कायेन च एष द्वितीय तथा वाचा कायेन च एष तृतीय, एव न कारयति अत्रापि त्रयो भङ्गा एवमेव लभ्यन्ते, कुर्वन्तं नानुजानाति अत्रापि त्रयः ८। न करोति मनसा एकः न कारयति द्वितीय. कुर्वन्त नानुजानाति एष तृतीय, एव वाचा

बितियं काएणवि होइ तितयमेव, नवमोऽप्युक्तः इदानीमागतगुणनं क्रियते—'लद्धफलमाणमेअं भंगा उ हवंति अउणपण्णासं। तीयाणागयसंपइगुणियं कालेण होइ इमं ॥ १ ॥ सीयालं भंगसयं कह ? कालतिएण होइ गुण्णाओ। तीयस्स पडिक्कमणं पच्चुप्पन्नस्स संवरणं ॥ २ ॥ पच्चक्खाणं च तहा होइ य एसस्स एव गुणणाओ। कालतिएणं भणियं जिणगणहरवायएहि च ॥ ३ ॥ एवं तावद् गृहस्थप्रत्याख्यानभेदाः प्रतिपादिताः, साम्प्रतं साधुप्रत्याख्यानभेदान् सूचयन्नाह—'तिविहं तिविहेणं'ति अयमत्र भावार्थः—त्रिविधं त्रिविधेनेत्यनेन सर्वसावद्ययोगप्रत्याख्यानादर्थतः सप्तविंशतिभेदानाह—ते चैवं भवन्ति—इह सावद्ययोगः प्रसिद्ध एव हिंसादिः, तं स्वयं सर्वं न करोति न कारयति कुर्वन्तमप्यन्यं न समनुजानाति, एकैकं करणत्रिकेन—मनसा वाचा कायेनेति नव भेदाः, अतीतानागतवर्तमानकालत्रयसम्बद्धाश्च सप्तविंशतिरिति, इदं च प्रत्याख्याने भेदजालं 'समिइगुत्तीहि'ति समितिगुप्तिषु सतीषु भवति, समितिगुप्तिभिर्वा निष्पद्यते, तत्रेर्यासमितिप्रमुखाः प्रवीचाररूपाः समितयः पञ्च गुप्तयश्च प्रवीचाराप्रवीचाररूपा मनोगुप्त्याद्यास्तिस्र इति, उक्तं च—'समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भइयव्वो। कुसलवइमुदीरंतो जं वइगुत्तोऽवि समिओऽवि ॥ १ ॥' अन्ये तु व्याचक्षते—

१ द्वितीय कायेनापि भवति त्रितयमेव ९। १ लब्धफलमानमेतत् भङ्गास्तु भवन्त्येकोनपञ्चाशत्। अतीतानागतसम्प्रतिगुणित कालेन भवतीदम् ॥ १ ॥ सप्तचत्वारिंश भङ्गशत, कथ ? कालत्रिकेण भवति गुणनात्। अतीतस्य प्रतिक्रमण प्रत्युत्पन्नस्य सवरणम् ॥ २ ॥ प्रत्याख्यान च तथा भवति चैष्यस्य एव गुणनात्। कालत्रिकेन भणित ( सप्तचत्वारिंश शत ) जिनगणधरवाचकैश्च ॥ ३ ॥ २ समितो नियमाद्गुप्तो गुप्त समितत्वे भक्तव्य। कुशल वच उदीरयन् यद्वचोगुप्तोऽपि समितोऽपि ॥ १ ॥

किलैता अष्टौ प्रवचनमातरः सामायिकसूत्रसङ्ग्रहः, तत्र 'करेमि भंते ! सामाइयं'ति पंच समिईओ गहिआओ, 'सव्वं सावज्जं जोगं पच्चक्खामि'त्ति तिण्णि गुत्तीओ गहियाओ, एत्थ समिईओ पवत्तणे निग्गहे य गुत्तीओत्ति, एयाओ अट्ठ पवयणमायाओ जाहिं सामाइयं चोद्दसय पुव्वाणि मायाणि, माउगाओत्ति मूलं भणियति होइ ॥ इहैव प्रायः सूत्रस्पर्शनिर्युक्तिवक्तव्यताया उक्तत्वात् मध्यग्रहणे च तुलादण्डन्यायेनाऽऽद्यन्तयोरप्याक्षेपादिदमाह—'सुत्तप्फासियणिज्जुत्तिवित्थरत्थो गओ एवं'ति सूत्रस्पर्शनिर्युक्तिविस्तरार्थो गतः, 'एवम्' उक्तेन प्रकारेणेति गाथार्थः ॥ १०४'१ ॥ साम्प्रतं सूत्र एवातीतादिकालग्रहणं त्रिविधमुक्तमिति दर्शयन्नाह—

✓ सामाइअं करेमी पच्चक्खामी पडिक्कमामित्ति। पच्चुप्पन्नमणागयअईअकालाण गहणं तु ॥ १०४६ ॥

व्याख्या—सामायिकं करोमि तथा प्रत्याख्यामि सावद्यं योगमिति, तथा प्रतिक्रमामीति प्राकृतस्य, इदं हि यथासङ्ख्यमेव प्रत्युत्पन्नानागतातीतकालानां ग्रहणमिति, उक्तं च—'अईयं णिंदइ पडुप्पन्नं संवरेइ अणागयं पच्चक्खाइ'त्ति गाथार्थः ॥ १०४६ ॥ साम्प्रतं तस्य भदन्त ! प्रतिक्रमामीत्येतद् व्याख्यायते—तत्र 'तस्ये' त्यधिकृतो योगः संबध्यते, ननु च प्रतिक्रमामीत्यस्याः क्रियायाः सोऽधिकृतो योगः कर्म, कर्मणि च द्वितीया विभक्तिरतस्तमित्यभिधेये तस्येत्यभिधीयते

१ करोमि भदन्त ! सामायिकमिति पञ्च समितयो गृहीता, सर्वं सावद्य योग प्रत्याचक्ष इति तिस्रो गुप्तयो गृहीता, अत्र समितय प्रवर्त्तने निग्रहे च गुप्तय इति, एता अष्ट प्रवचनमातरो याभि (यासु वा) सामायिक चतुर्दश च पूर्वाणि मातानि, मातर इति मूल इति भणित भवति। २ अतीत निन्दति प्रत्युत्पन्न सवृणोति अनागत प्रत्याख्याति

किमर्थमिति ?, आह-प्रयोजनार्थे षष्ठी विवक्षातः प्रयुक्ता सम्बन्धलक्षणाऽवयवलक्षणा वा, योऽसौ योगस्त्रिकालविषयस्तस्यातीतं सावद्यमंशमवयवं प्रतिक्रमामि न शेषं वर्तमानमनागतं वा, केचित् पुनरविभागज्ञाः अविशिष्टमेव सामान्यं योगं सम्बन्धयन्ति, तन्न युज्यते, अविशिष्टस्य त्रिकालविषयस्य प्रतिक्रमणप्रयोजनाभावात्, ग्रन्थगुरुत्वापत्तेश्च, अविशिष्टमपि संबध्य पुनर्विशेषेऽवस्थापनीयस्तच्छब्द इति ग्रन्थगुरुता, यदेतत् प्रतिक्रमणमेतत् प्रायश्चित्तमध्ये पठितमतः प्रायश्चित्तमासेवितेऽतीतविषयमिति गतत्वादतीतप्रतिक्रमणमिति न वक्तव्यम्, इह पुनरुक्तत्वप्रसङ्गात्, यस्मादस्य प्रतिक्रमामीतिशब्दस्य कर्मणा भवितव्यमवश्यं, तच्च भूतं सावद्ययोगं मुक्त्वा नान्यत् कर्म भवितुमर्हति, तस्मात्तस्येत्यवयवलक्षणया षष्ठ्या सम्बन्धः ॥ आह-यद्येवं पुनरुक्तादिभयादभिधीयते तत इदमपरमाशङ्कापदमिति दर्शयति—

तिविहेणंति न जुत्तं पडिपयविहिणा समाहिअं जेण । अत्थविगप्पणयाए गुणभावणयत्ति को दोसो ? ॥१०४७॥

व्याख्या—'त्रिविधं त्रिविधेने'त्यत्र त्रिविधेनेत्ययुक्तमिति, अत आह—'प्रतिपदविधिना समाहितं येन' यस्मात् प्रतिपदमभिहितमेव,'मनसा वाचा कायेने'ति, अत्रोच्यते, अर्थविकल्पनया गुणभावनयेति वा को दोषः ?, एतदुक्तं भवति—अर्थविकल्पसङ्ग्रहार्थं न पुनरुक्तम्, अथवा गुणभावना पुनः पुनरभिधानाद्भवतीति न दोषः, अथवा मनसा वाचा कायेनेत्यभिहिते प्रतिपदं न करोमि न कारयामि नानुजानामीति 'यथासङ्ख्यमनुदेशः समानाना' मिति यथासङ्ख्यक्रमनिष्टं मा प्रापदिति त्रिविधेनैकैकमुच्यते, त्रिविधमित्यत्राप्ययमेव प्रायः परिहार इति गाथार्थः ॥ १०४७ ॥ इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, 'तस्य भदन्त ! प्रतिक्रमामी'त्यत्र भदन्तः पूर्ववद् अतिचारनिवृत्तिक्रियाभिमुखश्च तद्विशुद्ध्यर्थमामन्त्रयत इति

अत्राऽऽह—ननु पूर्वमुक्त एव भदन्तः स एवानुवर्तिष्यते, एवमर्थं चादौ प्रयुक्त इत्यतः किं पुनरनेनेति?, अत्रोच्यते, अनुवर्तनार्थमेव अयं पुनरनुस्मरणाय प्रयुक्तः, यतः परिभाषा-अनुवर्तन्ते च नाम विधयो, न चानुवर्तनादेव भवन्ति, किं, तर्हि ?, यत्नाद्भवन्ति, 'स चार्य यत्नः पुनरुच्चारण'मिति, अथवा सामायिकक्रियाप्रत्यर्पणवचनोऽयं भदन्तशब्दः, अनेन चैतत् ज्ञापितं भवति—सर्वक्रियावसाने गुरोः प्रत्यर्पणं कार्यमिति,उक्तं च भाष्यकारेण—'सामाइयपच्चप्पणवयणो वाऽयं भदंतसद्दोत्ति । सव्वकिरियावसाणे भणियं पच्चप्पणमणेणं ॥ १ ॥" इति कृतं प्रसङ्गेन, प्रतिक्रमामीत्यत्र प्रतिक्रमणं मिथ्यादुष्कृतमभिधीयते, तच्च द्विधा—द्रव्यतो भावतश्च, तथा चाह निर्युक्तिकारः—

दव्वंमि निण्हगाई कुलालमिच्छंति तत्थुदाहरणं । भावंमि तदुवउत्तो मिआवई तत्थुदाहरणं ॥ १०४८ ॥

व्याख्या—द्रव्य इति द्वारपरामर्शः, द्रव्यप्रतिक्रमणं तदभेदोपचारात् तद्वदेवोच्यते, अत एवाह—निह्नवादि, आदिशब्दादनुपयुक्तादिपरिग्रहः; कुलालमिथ्यादुष्कृतं तत्रोदाहरणं, तच्चेदम्—ऐगस्स कुंभकारस्स कुडीए साहुणो ठिया, तत्थेगो चेल्लओ तस्स कुंभगारस्स कोलालाणि अंगुलिधणुहएणं पाहाणएहिं विंधइ, कुंभगारेण पडिजग्गिउं दिट्ठो, भणिओ य-कीस मे कोलालाणि काणेसि ?, खुड्डुओ भणइ-मिच्छामि दुक्कडंति, एवं सो पुणोऽवि विंधिऊण मिच्छामिदुक्कडंति,

१ सामायिकप्रत्यर्पणवचनो वाऽय भदन्तशब्द इति । सर्वक्रियावसाने भणित प्रत्यर्पणमनेन ॥१॥ २ एकस्य कुम्भकारस्य कुट्यां (गृहे) साधव स्थिता', तत्रैक' क्षुल्लकस्तस्य कुम्भकारस्य भाजनानि अङ्गुलधनुषा पाषाणै काणीकरोति, कुम्भकारेण प्रतिजागर्य दृष्ट , भणितश्च-कथ मम भाजनानि काणयसि?, क्षुल्लको भणति-मिथ्या मे दुष्कृतमिति, एव स पुनरपि काणयित्वा मिथ्या मे दुष्कृतमिति ( करोति ),

पच्छा कुंभगारेण तस्स खुड्डगस्स कण्णामोडओ दिण्णो, सो भणइ-दुक्खाविओऽहं, कुंभगारो भणइ-मिच्छामि दुक्कडं, एवं सो पुणो पुणो कण्णामोडियं दाऊण मिच्छादुक्कडंति करेइ, पच्छा चेल्लओ भणइ-अहो सुंदरं मिच्छामिदुक्कडंति, कुंभगारो भणइ-तुज्झवि एरिसं चेव मिच्छा दुक्कडंति, पच्छा ठिओ विंधियव्वस्स । 'जं दुक्कडंति मिच्छा तं चेव णिसेवई पुणो पावं । पच्चक्खमुसावाई मायाणियडिप्पसंगो य ॥ १ ॥ एयं दव्वपडिक्कमणं ॥ भावप्रतिक्रमणं प्रतिपादयति—भाव इति द्वारपरामर्श एव, 'तदुपयुक्त एव' तस्मिन्-अधिकृते शुभव्यापारे उपयुक्तस्तदुपयुक्तो यत् करोति, मृगापतिः तत्रोदाहरणं, तच्चेदम्—भगवं वद्धमाणसामी कोसंबीए समोसरिओ, तत्थ चंदसूरा भगवंतं वंदगा सविमाणा ओइण्णा, तत्थ मियावई अज्जा उदयणमाया दिवसोत्तिकाउं चिरं ठिया, सेसाओ साहुणीओ तित्थयरं वंदिऊण सनिलयं गयाओ, चंदसूरावि तित्थयरं वंदिऊण पडिगया, सिग्घमेव वियालीभूयं, मियावई संभंता, गया अज्जचंदणासगासं ।

१ पश्चात् कुम्भकारेण तस्य क्षुल्लकस्य कर्णामोटको दत्त , स भणति-दु खितोऽहं, कुम्भकारो भणति-मिथ्या मे दुष्कृत, एव स पुन पुन कर्णामोटक दत्वा मिथ्यादुष्कृतमिति करोति, पश्चात्क्षुल्लको भणति-अहो सुन्दरं मिथ्यामेदुष्कृतमिति, कुम्भकारो भणति-तवापि ईदृशमेव मिथ्यामेदुष्कृतमिति, पश्चास्थित काणनात्-। यद्दुष्कृतमिति मिथ्या ( कृत्वा ) तदेव निषेवते पुन· पापम् । प्रत्यक्षमृषावादी मायानिकृतिप्रसङ्गश्च ॥ १ ॥ एतद्द्रव्यप्रतिक्रमण । २ भगवान् वर्धमानस्वामी कौशाम्ब्यां समवसृत , तत्र चन्द्रसूर्यौ भगवन्त वन्दितुं सविमानाववतीर्णौ, तत्र मृगावती आर्योदयनमाता दिवस इतिकृत्वा चिर स्थिता, शेषा साध्व्यस्तीर्थकर वन्दित्वा स्वनिलय गता , चन्द्रसूर्यावपि तीर्थकरं वन्दित्वा प्रतिगतौ, शीघ्रमेव विकालीभूत, मृगावती सम्भ्रान्ता, गता आर्यचन्दनासकाश ।

ताओ य ताव पडिक्कंताओ, मियावई आलोएउं पवत्ता, अज्जचंदणाए भण्णइ—कीस अज्जे ! चिरं ठियासि ?, न जुत्तं नाम तुमं उत्तमकुलप्पसूयाए एगागिणीए चिरं अच्छिउंति, सा सब्भावेण मिच्छामिदुक्कडंति भणमाणी अज्जचंदणाए पाएसु पडिया, अज्जचंदणा य ताए वेलाए संथारं गया, ताहे निद्दा आगया, पसुत्ता, मियावईएवि तिव्वसंवेगमावण्णाए पायपडियाए चेव केवलणाणं समुप्पण्णं । सप्पो य तेणंतेणमुवागओ, अज्जचंदणाए य संथारगाओ हत्थो ओलंबिओ, मियावईए मा खज्जिहितित्ति सो हत्थो संथारगं चडाविओ, सा विउद्धा भणइ—किमेयंति?, अज्जवि तुमं अच्छसित्ति मिच्छामि दुक्कडं, निद्दप्पमाएणं ण उट्ठावियासि, मियावई भणइ—एस सप्पो मा भे खाहिइत्ति अतो हत्थो चडाविओ, सा भणइ—कहिं ? सो, सा दाएइ, अज्जचंदणा अपेच्छमाणी भणइ—अज्जे ! किं ते अइसओ ?, सा भणइ—आमं, तो किं छाउमत्थिओ केवलिओत्ति ?. भणइ—केवलिओ, पच्छा अज्जचंदणा पाएसु पडिऊण भणइ—मिच्छामि दुक्कडंति,

१ साश्च तावत्प्रतिक्रान्ता', मृगावत्यालोचयितु प्रवृत्ता, आर्यचन्दनया भण्यते—कथमार्ये ! चिरं स्थिताऽसि ?, न युक्तं नाम तव उत्तमकुलप्रसूताया एकाकिन्या चिरं स्थातुमिति, सा सद्भावेन मिथ्या मे दुष्कृतमिति भणन्ती आर्यचन्दनाया' पादयो' पतिता, आर्यचन्दना च तस्यां वेलायां संस्तारके स्थिता, तदा निद्राऽऽगता, प्रसुप्ता, मृगावत्या अपि तीव्रसंवेगमापन्नाया पादपतिताया एव केवलज्ञानं समुत्पन्न । सर्पश्च तेन मार्गेणोपागत , आर्यचन्दनायाश्च हस्त. संस्तारकादवलम्बितः, मृगावत्या मा खादीदिति स हस्त संस्तारके चटापित', सा विबुद्धा भणति—किमेतदिति, अद्यापि त्वं तिष्ठसीति मिथ्यामेदुष्कृत, निद्राप्रमादेन नोत्थापिताऽसि, मृगावती भणति—एप सर्पो मा भवन्त खादीदिति भावत्को (अतो) हस्तश्चटापितः, सा भणति—क स'?, सा दर्शयति, आर्यचन्दना अपश्यन्ती भणति—आर्ये किं तवातिशय ?, सा भणति—ओम्, तर्हि किं छाद्मस्थिक' कैवलिक इति ?, भणति—कैवलिक , पश्चादार्यचन्दना पादयो पतित्वा भणति—मिथ्या मे दुष्कृतमिति

केवली आसाइओत्ति, इयं भावपडिक्कमणं । एत्थ गाहा—'जइ य पडिक्कमियव्वं अवस्स काऊण पावयं कम्मं । तं चेव न कायव्वं तो होइ पए पडिक्कंतो ॥ १ ॥' त्ति गाथार्थः ॥ १०४८ ॥ इह च प्रतिक्रमामीति भूतात् सावद्ययोगान्निवर्तेऽह—मित्युक्तं भवति, तस्माच्च निवृत्तिर्यत्तदनुमतेर्विरमणमिति, तथा निन्दामीति गर्हामि, अत्र निन्दामीति जुगुप्सेत्यर्थः गर्हामीति च तदेवोक्तं भवति, एवं तर्हि को भेद एकार्थत्वे ?, उच्यते, सामान्यार्थाभेदेऽपीष्टविशेषार्थो गर्हाशब्दः, यथा सामान्ये गमनार्थे गच्छतीति गौः, सर्पतीति सर्पः, तथाऽपि गमनविशेषोऽवगम्यते, शब्दार्थादेव, एवमिहापि निन्दागर्ह्योरिति ॥ तं चार्थविशेषं दर्शयति—

**सचरित्तपच्छयावो निंदा तीए चउक्कनिक्खेवो । दव्वे चित्तयरसुआ भावेसु बहू उदाहरणा ॥ १०४९ ॥**

व्याख्या—सचरित्रस्य सत्त्वस्य पश्चात्तापो निन्दा, स्वप्रत्यक्षं जुगुप्सेत्यर्थः, उक्तं च—"आत्मसाक्षिकी निन्दा" 'तीए चउक्कनिक्खेवो'त्ति तस्यां तस्या वा नामादिभेदचतुष्को निक्षेप इति, तत्र नामस्थापने अनादृत्याऽऽह—'दव्वे चित्तकरसुया भावेसु बहू उदाहरण'त्ति द्रव्यनिन्दायां चित्रकरसुतोदाहरणं, सा जहा रण्णा परिणीया अप्पाणं णिंदियाइयत्ति, भावनिन्दायां सुबहून्युदाहरणानि योगसङ्ग्रहेषु वक्ष्यन्ते, लक्षणं पुनरिदं—'हा ! दुट्ठु कयं हा ! दुट्ठु कारियं दुट्ठु अणुमयं इ'त्ति । अंतो अंतो डज्झइ पच्छातावेण वेवंतो ॥ १ ॥' त्ति गाथार्थः ॥ १०४९ ॥

१ केवल्याशातित इति, इद भावप्रतिक्रमणं । अत्र गाथा—यदि च प्रतिक्रान्तव्यमवश्य कृत्वा पापक कर्म । तदेव न कर्तव्य तदा भवति पदे प्रतिक्रान्त ॥१॥ इति २ सा यथा राज्ञा परिणीताऽऽत्मान निन्दितवतीति । ३ हा दुष्टु कृत हा दुष्टु कारित दुष्टुनुमत इति । अन्तरन्तर्दह्यते पश्चात्तापेन चैवान्त (वेपन्)॥१॥इति ।

**गरहावि तहाजाईअमेव नवरं परप्पगासणया । दव्वंमि मरुअनायं भावेसु बहू उदाहरणा ॥ १०५० ॥**

व्याख्या—गर्हाऽपि 'तथाजातीयैवे'ति निन्दाजातीयैव, नवरमेतावान् विशेषः—परप्रकाशनया गर्हा भवति, या गुरोः प्रत्यक्षं जुगुप्सा सा गर्हेति, 'परसाक्षिकी गर्हे'ति वचनाद्, असावपि चतुर्विधैव, तत्र नामस्थापने अनादृत्यैवाह—'दव्वंमि मरुअणायं भावेसु बहू उदाहरण'त्ति । तत्र द्रव्यगर्हायां मरुकोदाहरणं, तच्चेदम्—आणंदपुरे मरुओ ण्हुसाए समं संवासं काऊण उवज्झायस्स कहेइ जहा सुविणए ण्हुसाए समं संवासं गओमित्ति । भावगर्हाए साधू उदाहरणं—'गंतूण गुरुसगासे काऊण य अंजलिं विणयमूलं । जह अप्पणो तह परे जाणावण एस गरहा उ ॥ १ ॥' त्ति गाथार्थः ॥१०४९॥ तत्र निन्दामि गर्हामीत्यत्र गर्हा जुगुप्सोच्यते, तत्र किं जुगुप्से ?, 'आत्मानम्' अतीतसावद्ययोगकारिणमश्लाघ्यम्, अथवाऽत्राणम्—अतीतसावद्ययोगत्राणविरहितं जुगुप्से, सामायिकेनाधुना त्राणमिति, अथवा 'अत सातत्यगमने' अतनमतीतं—सावद्ययोगं सततभवनप्रवृत्तं निवर्तयामीति, 'व्युत्सृजामी'ति विविधार्थो विशेषार्थो वा विशब्दः उच्छब्दो भृशार्थः सृजामि—त्यजामीत्यर्थः, विविधं विशेषेण वा भृशं त्यजामि व्युत्सृजामि, अतीतसावद्ययोगं व्युत्सृजामीति वा, अवशब्दोऽधःशब्दस्यार्थे विशेषेणाधः सृजामीत्यर्थः, नन्वेवं सावद्ययोगपरित्यागात् करोमि भदन्त ! सामायिकमिति सावद्ययोगनिवृत्तिरुच्यते, तस्य व्यवसृजामि शब्दप्रयोगे वैपरीत्यमापद्यते, तन्न, यस्मात् मांसादिविरमणक्रियानन्तरं व्यवसृजामीति प्रयुक्ते तद्विपक्षत्यागो मांसभक्षणनिवृत्तिरभिधीयते, एवं सामायिकानन्तरमपि प्रयुक्ते व्यवसृजामिशब्दे तद्विपक्ष-

१ आनन्दपुरे मरुक स्नुषया सम संवास कृत्वा उपाध्यायाय कथयति, यथा स्वप्ने स्नुषया समं सवास गतोऽस्मीति । भावगर्हायां साधुरुदाहरणम्—गत्वा गुरुसकाश कृत्वा चाञ्जलिं विनयमूलम् । यथाऽऽत्मनस्तथा परेषां ज्ञापनमेषा गर्हा तु ॥ १ ॥

त्यागोऽवगम्यते, स च तद्विपक्षः सुगम एवेत्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तरभयाद्, गमनिकामात्रप्रधानत्वात् प्रारम्भस्य ॥ साम्प्रतं व्युत्सर्गप्रतिपादनायाऽऽह ग्रन्थकारः—

**दव्वविउस्सग्गे खलु पसन्नचंदो हवे उदाहरणं। पडिआगयसंवेगो भावंमिवि होइ सो चेव ॥ १०५१ ॥**

व्याख्या—इह द्रव्यव्युत्सर्गः—गणोपधिशरीरान्नपानादिव्युत्सर्गः, अथवा द्रव्यव्युत्सर्गः आर्तध्यानादिध्यायिनः कायोत्सर्ग इति, अत एवाऽऽह—द्रव्यव्युत्सर्गे खलु प्रसन्नचन्द्रो भवत्युदाहरणं, भावव्युत्सर्गस्त्वज्ञानादिपरित्यागः, अथवा धर्मशुक्लध्यायिनः कायोत्सर्ग एव, तथा चाऽऽह—प्रत्यागतसंवेगो 'भावेऽपि' भावव्युत्सर्गेऽपि भवति स एव—प्रसन्नचन्द्र उदाहरणमिति गाथाक्षरार्थः ॥ १०५१ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—खिइपइट्ठिए णयरे पसन्नचंदो राया, तत्थ भगवं महावीरो समोसढो, तओ राया धम्मं सोऊण संजायसंवेगो पव्वइओ, गीयत्थो जाओ। अण्णया जिणकप्पं पडिवज्जिउकामो सत्तभावणाए अप्पाणं भावेइ, तेणं कालेणं रायगिहे णयरे मसाणे पडिमं पडिवन्नो, भगवं च महावीरो तत्थेव समोसढो, लोगोऽवि वंदगो णीइ, दुवे य वाणियगा खिइपइट्ठियाओ तत्थेव आयाया, पसन्नचंदं पासिऊण एगेण भणिय—एस अम्हाणं सामी रायलच्छिं परिच्चइय तवसिरिं पडिवन्नो, अहो से धन्नया, बितिएण भणियं—कुओ एयस्स धण्णया ?,

१ क्षितिप्रतिष्ठिते नगरे प्रसन्नचन्द्रो राजा, तत्र भगवान् महावीर समवसृत, ततो राजा धर्मं श्रुत्वा सजातसवेग. प्रव्रजित, गीतार्थो जात । अन्यदा जिनकल्प प्रतिपत्तुकाम सत्त्वभावनयाऽऽत्मान भावयति, तस्मिन् काले राजगृहे नगरे श्मशाने प्रतिमां प्रतिपन्न, भगवांश्च महावीरस्तत्रैव समवसृत, लोकोऽपि वन्दको निर्गच्छति, द्वौ च वणिजौ क्षितिप्रतिष्ठितात् तत्रैवागतौ, प्रसन्नचन्द्र दृष्ट्वा एकेन भणित—एषोऽस्माकं स्वामी राज्यलक्ष्मीं परित्यज्य तप श्रिय प्रतिपन्न, अहो अस्य धन्यता, द्वितीयेन भणितं—कुत एतस्य धन्यता ?,

जो असंजायबलं पुत्तं रज्जे ठविऊण पव्वइओ, सो तवस्सी दाइगेहिं परिभविज्जइ, णयरं च उत्तिमक्खयं पवण्णं ताव, एवमणेण बहुओ लोगो दुक्खे ठविओत्ति अदट्ठव्वो एसो, तस्स तं सोऊण कोवो जाओ, चिंतियं चऽणेण—को मम पुत्तस्स अवकरेइत्ति ?, नूणममुगो, ता किं तेण ?, एयावत्थगओ णं वावाएमि, माणससंगामेण रोद्दज्झाणं पवन्नो, हत्थिणा हत्थिं विवाएइत्ति, विभासा। एत्थंतरे सेणिओ भगवं वंदओ णीइ, तेणवि दिट्ठो वंदिओ य, अणेण ईसिंपि न य निज्झाइंतओ, सेणिएण चिंतियं—सुक्कज्झाणोवगओ एस भगवं, ता एरिसंमि झाणे कालगयस्स का गइ भवइत्ति भगवंतं पुच्छिस्सं, तओ गओ वंदिऊण पुच्छिओऽणेण भगवं—जंमि झाणे ठिओ मए वंदिओ पसन्नचंदो तंमि मयस्स कहिं उववाओ भवइ ?, भगवया भणियं—अहे सत्तमाए पुढवीए, तओ सेणिएण चिंतियं—हा ! किमेयंति?, पुणो पुच्छिस्सं। एत्थंतरंमि अ पसन्नचंदस्स माणसे संगामे पहाणनायगेण सहावडियस्स असिसत्तिचक्ककप्पणिप्पमुहाइं खयं गयाइं पहरणाइं, तओऽणेण सिरत्ताणेणं

१ योऽसजातबल पुत्र राज्ये स्थापयित्वा प्रव्रजित, स तपस्वी दायादै परिभूयते, नगर चोत्तम क्षय प्रपन्न तावत्, एवमनेन बहुको लोको दु खे स्थापित इत्यद्रष्टव्य एष, तस्य तत् श्रुत्वा कोपो जात', चिन्तित चानेन—को मम पुत्रमपकरोतीति ?, नूनममुक., तत् कि तेन ?, एतदवस्थागतो (ऽपि) त व्यापादयामि, मानससंग्रामेण रौद्र ध्यान प्रपन्न, हस्तिना हस्तिन व्यापादयतीति विभाषा। अत्रान्तरे श्रेणिको भगवन्त वन्दितु निर्गच्छति, तेनापि दृष्टो वन्दितश्च, अनेनेषदपि न च निर्ध्यात', श्रेणिकेन चिन्तित—शुक्लध्यानोपगत एष भगवान्, तदीदृशे ध्याने कालगतस्य का गतिर्भवतीति भगवन्त प्रक्ष्यामि, ततो गतो वन्दित्वा पृष्टोऽनेन भगवान्—यस्मिन् ध्याने स्थितो मया वन्दित प्रसन्नचन्द्रस्तस्मिन्मृतस्य क्वोपपातो भवति ?, भगवता भणित—अध सप्तम्यां पृथिव्यां, तत श्रेणिकेन चिन्तित—हा किमेतदिति ?, पुन प्रक्ष्यामि। अत्रान्तरे च प्रसन्नचन्द्रस्य मानसे सग्रामे प्रधाननायकेन सहापतितस्यासिशक्तिचक्रकल्पनीप्रमुखानि क्षय गतानि प्रहरणानि, ततोऽनेन शिरस्त्राणेन

वावाएमित्ति परामुसियमुत्तिमंगं, जाहे लोयं कयंति, तओ संवेगमावण्णो महया विसुज्झमाणपरिणामेण अत्ताणं निंदिउं पयत्तो, समाहियं चणेण पुणरवि सुक्कं झाणं। एत्थंतरंमि सेणिएणवि पुणोऽवि भगवं पुच्छिओ—भगवं! जारिसे झाणे संपइ पसन्नचंदो वट्टइ तारिसे मयस्स कहिं उववाओ ?, भगवया भणियं—अणुत्तरसुरेसुंति, तओ सेणिएण भणियं—पुव्वं किमन्नहा परूवियं उआहु मया अन्नहा अवगच्छियंति ?, भगवया भणियं—न अन्नहा परूवियं, सेणिएण भणियं—किं वा कहं वत्ति ?, तओ भगवया सव्वो वुत्तंतो साहिओ। एत्थंतरंमि य पसन्नचंदसमीवे दिव्वो देवदुंदुहिसणाहो महन्तो कलयलो उद्धाइओ, तओ सेणिएण भणियं—भगवं! किमेयंति ?, भगवया भणियं—तस्सेव विसुज्झमाणपरिणामस्स केवलणाणं समुप्पण्णं, तओ से देवा महिमं करेंति। एस एव दव्वविउस्सग्गभावविउस्सग्गेसु उदाहरणं ॥ साम्प्रतं समाप्तौ यथाभूतोऽस्य कर्ता भवति सामायिकस्य तथाभूतं संक्षेपतोऽभिधित्सुराह—

**सावज्जजोगविरओ तिविहं तिविहेण वोसिरिअ पावं। सामाइअमाईए एसोऽणुगमो परिसमत्तो ॥ १०५२ ॥**

१ व्यापादयामीति परामृष्टमुत्तमाङ्ग, यदा लोच कृत इति, तत सवेगमापन्न महता विशुध्यमानपरिणामेनात्मान निन्दितु प्रवृत्त, समाहित चानेन पुनरपि शुक्ल ध्यान। अत्रान्तरे श्रेणिकेनापि पुनरपि भगवान् पृष्ट —भगवन्! यादृशे ध्याने सम्प्रति प्रसन्नचन्द्रो वर्त्तते तादृशे मृतस्य क्वोपपात ?, भगवता भणित—अनुत्तरसुरेष्विति, तत श्रेणिकेन भणित—पूर्वं किमन्यथा प्ररूपितमुताहो मयाऽन्यथाऽवगतमिति ?, भगवता भणितं—नान्यथा प्ररूपित, श्रेणिकेन भणित—किं वा कथ चेति ?, ततो भगवता सर्वो वृत्तान्त कथित। अत्रान्तरे च प्रसन्नचन्द्रसमीपे दिव्यो देवदुन्दुभिसनाथो, महान् कलकल उत्थित, तत श्रेणिकेन भणित—भगवन्! किमेतदिति ?, भगवता भणित—तस्यैव विशुध्यमानपरिणामस्य केवलज्ञान समुत्पन्न, ततस्तस्य देवा महिमान कुर्वन्ति। एष एव द्रव्यव्युत्सर्गभावव्युत्सर्गयोरुदाहरण।

व्याख्या—सावद्ययोगविरतः, कथमित्याह—त्रिविधं त्रिविधेन व्युत्सृज्य पापं न तु सापेक्ष एवेत्यर्थः, पाठान्तरं वा सावद्ययोगविरतः सन् त्रिविधं त्रिविधेन व्युत्सृजति पापमेष्यं, 'सामायिकादौ' सामायिकारम्भसमये एषोऽनुगमः परिसमाप्तः, अथवा सामायिकादौ सूत्र इति, आदिशब्दात् सर्वमित्याद्यवयवपरिग्रह इति गाथार्थः ॥१०५२॥ उक्तोऽनुगमः, सम्प्रति नयाः, ते च नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवम्भूतभेदभिन्नाः खल्वोघतः सप्त भवन्ति, स्वरूपं चैतेषामधः सामायिकाध्ययने न्यक्षेण प्रदर्शितमेवेति नेह प्रतन्यते, इह पुनः स्थानाशून्यार्थमेते ज्ञानक्रियानयद्वयान्तर्भावद्वारेण समासतः प्रोच्यन्ते, ज्ञाननयः क्रियानयश्च, तथा चाऽऽह—

**विज्जाचरणनएसुं सेससमोआरणं तु कायव्वं । सामाइअनिज्जुत्ती सुभासिअत्था परिसमत्ता ॥ १०५३ ॥**

व्याख्या—'विज्जाचरणनएसुं'ति विद्याचरणनययोः ज्ञानक्रियानययोरित्यर्थः, 'सेससमोयारणं तु कायव्वं'ति शेषनयसमवतारः कर्तव्यः, तुशब्दो विशेषणार्थः. किं विशिनष्टि ?—तौ च वक्तव्यौ, सामायिकनिर्युक्तिः सुभाषितार्था परिसमाप्तेति प्रकटार्थमिति गाथार्थः ॥ १०५३ ॥ साम्प्रतं स्वद्वार एव शेषनयान्तर्भावेनाधिकृतमहिमानौ अनन्तरोपन्यस्तगाथागततुशब्देन चावश्यवक्तव्यतया विहितौ ज्ञानचरणनयावुच्येते, तत्र ज्ञाननयदर्शनमिदं—ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चाऽऽह—

**नायंमि गिण्हिअव्वे अगिण्हिअव्वंमि चेव अत्थंमि । जइअव्वमेव इअ जो उवएसो सो नओ नामं ॥१०५४॥**

व्याख्या—'नायंमि'त्ति ज्ञाते सम्यक्परिच्छिन्ने 'गिण्हियव्वे'त्ति ग्रहीतव्ये उपादेये 'अगिण्हियव्वंमि'त्ति अग्रहीतव्ये अनुपादेये हेय इत्यर्थः, चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थः, उपेक्षणीयसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः—ज्ञात एव ग्रहीतव्ये तथाऽग्रहीतव्ये तथोपेक्षणीये च ज्ञात एव नाज्ञाते 'अत्थंमि'त्ति अर्थे ऐहिकामुष्मिके, तत्रैहिकः ग्रहीतव्यः स्रक्चन्दनाङ्गनादिः अग्रहीतव्यो विषशस्त्रकण्टकादिरुपेक्षणीयस्तृणादिः आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिः अग्रहीतव्यो मिथ्यात्वादिः उपेक्षणीयो विवक्षयाऽभ्युदयादिरिति, तस्मिन्नर्थे 'जइअव्वमेव'त्ति अनुस्वारलोपाद् यतितव्यम् 'एवम्' अनेन क्रमेणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन यतितव्यमेव, प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः, इत्थं चैतदङ्गीकर्तव्यं, सम्यगज्ञाते प्रवर्तमानस्य फलविसंवाददर्शनात्, तथा चान्यैरप्युक्तम्—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता । मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात् ॥१॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिनाऽपि ज्ञात एव यतितव्यं, तथा चागमोऽप्येवमेव व्यवस्थितः, यत उक्तम्—"पढमं णाणं[1] तओ दया, एव चिट्ठइ सव्वसंजए । अन्नाणी किं काहिति किं वा णाहिति छेय पावगं ? ॥ १ ॥" इतश्चैतदेवमङ्गीकर्तव्यं यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलाना विहारक्रियाऽपि निषिद्धा, तथा चागमः—"गीयत्थो[2] य विहारो बितिओ गीयत्थमीसओ भणिओ । एत्तो तइयविहारो णाणुण्णाओ जिणवरेहिं ॥ १ ॥" न यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यत इत्यभिप्रायः । एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षां प्रतिपन्नस्योत्कृष्टतपश्चरणवतोऽपि न तावदपवर्गप्राप्तिः संजा-

१ प्रथमं ज्ञानं ततो दया एवं तिष्ठति सर्वसंयतः । अज्ञानी किं करिष्यति ? किं वा ज्ञास्यति छेकं पापकं (वा) ? ॥ १ ॥ २ गीतार्थश्च विहारो द्वितीयो गीतार्थमिश्रको भणितः । अस्मात् तृतीयो विहारो नानुज्ञातो जिनवरैः ॥ १ ॥

यते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति, तस्माज्ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम् । 'इति जो उवएसो सो नयो नामं'ति 'इति' एवमुक्तेन न्यायेन यः उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः । अयं च चतुर्विधे सम्यक्त्वादिसामायिके सम्यक्त्वसामायिकश्रुतसामायिकद्वयमेवेच्छति, ज्ञानात्मकत्वादस्य, देशविरतिसर्वविरतिसामायिके तु तत्कार्यत्वात् तदायत्तत्वान्नेच्छति, गुणभूते चेच्छतीति गाथार्थः ॥ १०५४ ॥ उक्तो ज्ञाननयः, अधुना क्रियानयावसरः, तद्दर्शनं चेदं—क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चायमप्युक्तलक्षणामेव स्वपक्षसिद्धये गाथामाह—'णायंमि गिण्हियव्वे'त्यादि, अस्याः क्रियानयदर्शनानुसारेण व्याख्या—ज्ञाते ग्रहीतव्येऽग्रहीतव्ये चैव अर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिर्दृश्यते, तथा चान्यैरप्युक्तम्—"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥ १ ॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिना क्रियैव कर्तव्या, तथा च मुनीन्द्रवचनमप्येवमेव व्यवस्थितं, यत उक्तम्—"चेइय[1]कुलगणसंघे आयरिआणं च पवयण सुए य । सव्वेसुवि तेण कयं तवसंजममुज्जमंतेणं ॥ १ ॥" इतश्चैतदेवमङ्गीकर्तव्यं यस्मात् तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तं, तथा चाऽऽगमः—"सुबहुंपि[2] सुयमहीयं किं काहि चरणविप्पमुक्कस्स ? । अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥ १ ॥"

१ चैत्यकुलगणसङ्घेषु आचार्ये प्रवचने श्रुते च । सर्वेष्वपि तेन कृतं तपःसंयमे उद्यच्छता ॥ १ ॥ २ सुबह्वपि श्रुतमधीतं किं करिष्यति विप्रमुक्तचरणस्य ? । अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोट्यपि ॥ १ ॥

दृशिक्रियाविकलत्वात् तस्येत्यभिप्रायः, एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं, चारित्रं क्रियेत्यनर्थान्तरं, क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्या एव विज्ञेयं, यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावन्मुक्त्यवाप्तिः संजायते यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात् क्रियैव प्रधाना ऐहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम्, 'इति जो उवएसो सो नओ नामं'ति 'इति' एवमुक्तेन न्यायेन य उपदेशः क्रियाप्राधान्यख्यापनपरः स नयो नाम, क्रियानय इत्यर्थः, अयं च सम्यक्त्वादौ चतुर्विधे सामायिके देशविरतिसर्वविरतिसामायिकद्वयमेवेच्छति क्रियात्मकत्वादस्य, सम्यक्त्वसामायिकश्रुतसामायिके तु तदर्थमुपादीयमानत्वादप्रधानत्वान्नेच्छति, गुणभूते चेच्छतीति गाथार्थः ॥ १०५४ ॥ उक्तः क्रियानयः, इत्थं ज्ञानक्रियानयस्वरूपं ज्ञात्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह—किमत्र तत्त्वं ?, पक्षद्वयेऽपि युक्तिसम्भवात्, आचार्यः पुनराह—सव्वेसिंपि गाहा, अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह—

**सव्वेसिंपि नयाणं बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥१०५५॥**

व्याख्या—सर्वेषामपि मूलनयानाम्, अपिशब्दात् तद्भेदानां च 'नयानां' द्रव्यास्तिकादीनां 'बहुविधवक्तव्यतां' सामान्यमेव विशेषा एव उभयमेत्र वाऽनपेक्षमित्यादिरूपाम् अथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां 'निशम्य' श्रुत्वा तत् 'सर्वनयविशुद्धं' सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात् सर्वनया एव भावनिक्षेपमिच्छन्तीति गाथार्थः ॥१०५५॥ इत्याचार्यहरिभद्रकृतौ शिष्यहितायामावश्यकटीकायां सामायिकाध्ययनं समाप्तम् ॥

सामायिकस्य विवृतिं कृत्वा यदवाप्तमिह मया कुशलम् । तेन खलु सर्वलोको लभतां सामायिकं परमम् ॥ १ ॥
यस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ २ ॥

ग्रन्थाग्रम् १२३४३ ॥ आवस्सयपुवद्धं सम्मत्तं ॥

इति याकिनीमहत्तरासूनुभवविरहश्रीमद्हरिभद्राचार्यविरचितवृत्त्या कलितं सभाष्यनिर्युक्तिकमावश्यकपूर्वार्धं समाप्तम् ॥

॥ सामायिकाध्ययनमयः प्रथमो विभागः समाप्तः ॥